महामहोपाध्यायश्रीभवनाथमिश्रविरचितः

# मीमांसानयविवेकः

( आदितः द्वितीयाध्यायान्तो भागः )

## तर्कपादस्य विवेकतत्त्वव्याख्यया, उपरितनस्य दीपिकाख्यव्याख्यया च संवलितः

पण्डितराजेत्यादिविरुदाङ्कितेन, एम. ए. पदभाजा
एस्. सुब्रह्मण्यशास्त्रिणा संशोध्य प्रकाशं नीतः



राष्ट्रियसंस्कृतसंस्थानम्
नई दिल्ली
1977

महामहोपाध्यायश्रीभवनाथमिश्रविरचितः

# मीमांसानयविवेकः

( आदितः द्वितीयाध्यायान्तो भागः )

तर्कपादस्य विवेकतत्त्वव्याख्यया, उपरितनस्य
महामहोपाध्यायश्रीवरदराजविरचितया
दीपिकाख्यव्याख्यया च संवलितः

पण्डितराजेत्यादिविरुदाङ्कितेन, एम. ए. पदभाजा
एस्. सुब्रह्मण्यशास्त्रिणा संशोध्य प्रकाशं नीतः



राष्ट्रियसंस्कृतसंस्थानम्
नई दिल्ली
1977

# MIMAMSANAYAVIVEKA

OF

MAHAMAHOPADHYAYA BHAVANATHA

*with Ravideva's Vivekatatva for Pada I*

*and up to Chapter II, Dipika Commentary*

By

MAHAMAHOPADHYAYA VARADARAJA

*Edited by*

Panditaraja

S. SUBRAHMANYA SHASTRI, M. A.

RASHTRIYA SAMSKRIT SAMSTHAN

NEW DELHI

1977

# INTRODUCTION

## NAYAVIVEKA WITH DIPIKA COMMENTARY

Nayaviveka is a very ancient standard work in the Prabhakara School of Purvamimamsa. It has been handled and profusely quoted by ancient authors like Chitsukhacharya, Appaya Dikshita and others. It is a brief resume of the two commentaries of Brhati and Laghvi written by Prabhakara otherwise called Guru on the Bhashya of Sabaraswamin on the Sutras of Jaimini. It is an accepted fact that Prabhakara was a student of Kumarila who differed from his master in the interpretation of Mimamsa. He condemns Kumarila's vartikas without mentioning the name of the author. Salikanatha the commentator of Guru's works exposes the drawbacks of the vartikas, in his Rjuvimala and Dipasikha. But vartikas being the products of Kumarila who is believed to be an avatar of Kartikeya who came down to the world to save Hinduism from the onslaught of the Buddhists took root in the Bharat while Prabhakara's works fell into oblivion. This is the cause why Prabhakara's Brhati is available only upto Pada 2 of Ch. VI while his Laghvi has disappeared altogether. Brhati as far as available was edited by the present editor and published through the Madras University in the sixties.

Nayaviveka while putting forth the purports of Brhati and Laghvi of each Adhikarana condemns the views of Kumarila in each section. The first pada of Chapter I is called Tarka pada wherein ( 1 ) the necessity for the study of Mimamsa ( 2 ) the definition of Dharma ( 3 ) Pramanas acceptable to Mimamsakas ( 4 ) the nature of atmans ( 5 ) the eternality of letters ( varnas ) ( 6 ) the nature of verbal cognitions and ( 7 ) the eternal nature of the vedas are explained.

From Pada II the examination of the purport of vedic texts begins. Brhati and Laghvi also differ in commenting upon the Bhashya though they are by the same author. Brhati attaches importance to the word-senses and so is called 'अर्थबलमत' while Laghvi attaches importance to Sabda ( words ) and hence came to the called 'शब्दबलमत'. Nayaviveka discusses both the tikas and faithfully records their purport. He says that he could have interpreted the tikas in a quite different way but being recognised by the public he was following Salikanatha[1].

## PRABHAKARA'S INFLUENCE IN OTHER SASTRAS

In Nyaya, Vyakarana and Vedanta, Prabhakara's views are examined under each topic. But vedanta alone accepts some of Prabhakara's views as authentic.

Sarvajnatman takes pride in interpreting the Mahavakyas according to Prabhakara's view about verbal congnition in Samkashepa sariraka. The author of Vivarana accepts Anvitabhidhanavada propounded by Prabhakara. Sri Sankaracharya and his commentators Vachaspati and Padmapada approve of Bhatta's view in regard to prohibitory injunctions, by which one is only to abstain from the prohibited activities; they breakaway from Prabhakara who says that prohibitive injunction too enjoins a mental activity namely a determination not to indulge in killing etc.

## BHAVANATHA'S ROLE IN PRABHAKARA SCHOOL

Sri Krishna Misra the author of Prabodhachandrodaya Nataka refers to many authors who wrote great works in this school. Mahavrata and Mahodadhi seem to have been big authors. It seems that when the study and discussions over this school became rare because of the prestige of the other

१. महता प्रणिधानेन शक्यमेव विधान्तरम् ।
लोकानुमतमित्येव शालिकोक्तं प्रसाध्यते ॥ ( N. V. 1. 1. )

school, Bhavanatha wrote his Nayaviveka summarising the views of all his predecessors in this school. He refers, in addition to the two authors, to Chandra, Dhira, Srikara and others. It is because of Nayaviveka that we are able to find out the views of Prabhakara regarding the subject matter of the this school beyond Pad 2 of Ch. VI. He is brief but his commentator Varadaraja explains the text very clearly. Appaya Dixita often quotes from Varadaraja to substantiate the Prabhakara view points he is dealing with. Vivaranacharya and others take pains to show that the views of the Vedantins in regard to generation of verbal cognition do not militate against the Prabhakara system.

## DATE OF PRABHAKARA

According to MM Kuppuswami Sastri's views expressed in his scholarly introduction to Brahma siddhi the following are the dates of Prabhakara, Kumanila and other authors.

| | | | |
|---|---|---|---|
| Gaudapada | 520–620 AD. | Kumarila | 600–660 |
| Dharmakirti | 600–650 | Prabhakara | 610–690 |
| Sankaracharya | 632–664 | Mandana | 615-695 |
| Padmapada | 625–705 | Salikanatha | 650–730 |

Bhavanatha is quoted by Chitsukhacharya of the 12th cen. He quotes Vachaspati Misra of the 9th cen. So we can presume that the probable date of Bhavanatha might be 1100 AD. Varadaraja comes later. He can be placed in the middle of the 14th cent. Parthasarathy Misra must have lived before Varadaraja ( 1390 ) who quotes him. His probable date might be 1300 AD.

The first pada of Nayaviveka with the commentary of Ravideva was published by the Madras University in 1933. As the Samsthan was bent upon publishing the whole of Nayaviveka from the beginning I edited the first pada also along

with some notes. From pada II onwards the commentary of Varadaraja alone is available upto Ch. VIII and since it is accepted as authentic by great scholars I chose to edit and print it along with the Nayaviveka text.

## MANUSCRIPT MATERIALS

1. The manuscripts of :
   Adyar MSS Library Madras, Nayaviveka upto Ch. IX.
2. Madras Govt. Oriental MSS Library Madras Nayaviveka Dipika for Ch. 4, 6, 7 & 8.
3. Mysore University MSS Library–Nayaviveka Dipika for Ch. V only.
4. Trivandrum University MSS Library—Nayaviveka upto Ch. 10.
5. Baroda University MSS Library—text and commentary for Ch. 1 to 3.

My thanks are due to the curators of these libraries for giving me access to their manuscripts and to the Director, Rashtriya Sanskrit Samsthan for getting the manuscripts printed.

**S. Subrahmanya Sastri**

# उपोद्घातः

सुप्रसिद्धमिदं यत् प्रभाकरो नाम मीमांसकसार्वभौमः स्वतन्त्रं प्राभाकरप्रस्थानं प्रवर्तयामासेति । यतः अनधीतमीमांसाः तर्कव्याकरणवेदान्ताध्यायिनोऽपि स्वाधीत-ग्रन्थेषु खण्डनायानूदितं प्रभाकरपक्षं पठेयुरेव । अख्यातिवादः, अन्विताभिधानवादः, अर्थाध्याहारवादः इत्यादयो वादाः तत्र तत्र दर्शनकारैः विमृश्यन्त एव । परंतु तदीयग्रन्थानामध्ययनाध्यापने बहोः कालात् प्रागेव लुप्तसम्प्रदाये अभूताम् । अत एव तद्ग्रन्था अपि पण्डितैः न संरक्षिता इति तर्कयामि । प्रभाकरलिखिते बृहती-लघ्वीति द्वे व्याख्ये श्रीशबरस्वामिभाष्यस्याभूताम् । तयोर्मध्ये बृहती षष्ठाध्याय-द्वितीयपादान्तमुपलब्धा ऋजुविमलाटीकया सह अनेन संशोधकेन सम्पाद्य मुद्रापिता मद्रासविश्वविद्यालयद्वारा । ततः परस्तात् प्रभाकरमतं ज्ञातुं तदीयग्रन्थयोरुभतोरपि लुप्तत्वात् श्रीभवनाथमिश्रविरचितनयविवेक एकएव दर्पणायते ।

अयं च नयविवेकः यद्यपि संक्षिप्तो गम्भीरश्च तथापि टीकाद्वयार्थस्यापि संक्षेपेण विवरणात् तदर्थावबोधे महान्तमुपकारं जनयति । अस्याः यथावदर्थ-बोधाय महोपकारजनन्यौ प्रथमपादस्य विवेकतत्त्वटीका ततः परस्तात् श्रीवरद-राजविरचिता नयविवेकदीपिका च । टीकासहायेन पठने नयविवेकः सुबोधो भवतीति निश्चप्रचम् ।

## नयविवेकस्य कालः

अयं च नयविवेकः आनन्दबोधाचार्यैः स्वीये शाब्दनिर्णयव्याख्याने बहुलमनूद्यते[१] । तस्य समयः एकादशशतक इति विमर्शकाः । तथा तत्त्वप्रदीपि-कायाम् । नयविवेकतत्त्वं तावत् प्रथमपादमात्रस्योपलभ्यते । ततः परं अर्थवादपाद-मारभ्याष्टमाध्यायान्तं श्रीवरदराजविरचिता दीपिकैव शरणीकरणीया प्राभाकर-मततत्त्वजिज्ञासुभिः । नवमदशमाध्याययोस्तु नयविवेक एव शरणम् न कापि तयोर-ध्याययोः टीकासमुपलभ्यते ।

## कुमारिलभट्टमतस्य प्राचीनत्वम् ।

अनयोः भट्टप्रभाकरप्रस्थानयोः भट्टप्रस्थानमेव प्राचीनम् । तत्र यद्यपि बृहत्यां कण्ठोक्त्या न किमपि गमकं विद्यते तथापि ऋजुविमलायां जिज्ञासा-

---

शाब्दनिर्णयटीकायामानन्दबोधाः —

१. यद्यपि पक्षधर्मताबलान्मेयसिद्धिः तथापि प्रमित्साप्रकारभेदादनि तत्सिद्धिरिति भवनाथः।

२. तत्त्वप्रदीपिका—कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ( न. वि. पृ. ५२; )

सूत्रारम्भे "अथ शब्ददूषणार्थमौचित्यानुभाषणपरं लोक इत्यादिभाष्यं इति वार्तिककारेण व्याख्यातं" तत्तु मन्दप्रयोजनमिति मत्वा टीकाकारः प्रयोजनं दर्शयति इति वचनात्, तथा नयविवेके आदौ "अत्र च परमते यद्यपि लोक इत्यादिभाष्यस्य षडर्थानुक्त्वा दशपक्षी चापरा उक्ता.......तदपि मन्दं मत्वा गुरुः सप्तदशमर्थमाह" इत्यवतरणाद्गम्यते ।

## नयविवेकगता विशेषाः

यद्यपि गुरुभट्टयोः एकभाष्यव्याख्यातृत्वात् न सिद्धान्तभेदः ताभ्यामुररीकृत इति वक्तुं शक्यते विशेषतश्च वार्तिके दुरुक्तिचिन्तनस्याप्यवकाशोऽस्ति न तु टीकायां प्रभाकरोपज्ञायां तथापि तर्कपादे प्रदर्शिताः दार्शनिकसिद्धान्ताः भिद्यन्त एव । अनुष्ठानभेदोऽपि क्वचिद् सिद्धान्तित एव । स तु क्वाचित्कः—यथा "उद्गातृचमसमेकस्य श्रुतिसंयोगात्" इति तृतीयपञ्चमाधिकरणे प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां इत्यत्र ससुब्रह्मण्यानां भक्ष इति प्रभाकरेण सिद्धान्तितं "अपसुब्रह्मण्यवादिनोऽपन्यायवादिन" इति वदता । भट्टैस्तु उद्गातप्रस्तोता-प्रतिहर्तॄति त्रयाणामेव भक्ष इति सिद्धान्तितम् ।

## तर्कपादगता विशेषाः

प्रथमाधिकरणे अध्यापनविधिप्रयुक्तमध्ययनं न स्वविधिप्रयुक्तमिति-प्रभाकरः ।स्वविधिप्रयुक्तमिति भट्टाः ।

१—"अपि च पौरुषेयाद्वाक्यात् "एवमयं पुरुषो वेद" इति भवति प्रत्ययः नैवमयमर्थं" इति भाष्यवाक्यं सूलीकृत्य लौकिकवाक्यानामनुमानविधयैव प्रामाण्यं न तु प्रमाणशब्दत्वेन । वेदवाक्यानामेव तु पृथक्प्रामाण्यमिति प्रभाकरः, भाट्टास्तु लौकिकानां वैदिकानां च सममेव प्रामाण्यमिच्छन्ति ।

२—श्येनयागः न निषिद्धः विहितत्वात् । तत्फलं तु हिंसा सा निषेधविषय इति भट्टमतम् ।

प्राभाकरमते तु श्येनोऽपि निषिद्ध एव मरणानुकूलव्यापारत्वात् । अग्नीषो-मीयपशुहिंसा तु न निषेधविषयः, यतः यत्र फलेच्छया प्रवृत्तिः हिंसायां तत्र निषेधः प्रवर्तते । अग्नीषोमीयाद्यङ्गेषु तु वैधी प्रवृत्तिः अतो न तत्र निषेधप्रवृत्तिरित्याहुः ।

३—अनुभूतिमात्रं प्रमा इति प्रभाकरः अनधिगताबाधितार्थविषयकंज्ञानं प्रमा-इति भट्टः प्रभाकरसम्मता अख्यातिः । मतान्तरे तु विपरीतख्यातिरेव सम्मता ।

४—यागादिरेव धर्म इति भाट्टाः । अपूर्वमेव धर्म इति प्राभाकराः ।

५—सिद्धेऽर्थे व्युत्पत्तिर्नास्ति । कार्यान्वित एव पदानां शक्तिः अथवा अन्विते शक्तिरिति प्राभाकराः । भाट्टास्तु सिद्धेप्यर्थे व्युत्पत्तिमिच्छन्ति ।

६—भट्टमते कर्म प्रत्यक्षं, प्रभाकरमते कर्म अनुमेयमेव।

७—अभावः प्रमाणान्तरमिति भट्टमतं—अभावो न प्रमाणान्तरमिति प्राभाकराः।

८—अभिहितान्वयवादः भट्टसम्मतः अन्विताभिधानवादः प्रभाकरसम्मतः।

९—शब्दो गुण इति प्राभाकराः शब्दो द्रव्यमिति भाट्टाः।

१०—प्रभाकरः ज्ञानं स्वप्रकाशं सर्वज्ञानेषु आत्मापि प्रकाशत इति सः न ज्ञानकर्म।

भट्टमते आत्मा जडः ज्ञानं च विषयगतज्ञाततया अनुमेयमित्याहुः।

११—ब्राह्मणत्वादिजातिं नाङ्गीकुर्वन्ति प्राभाकराः अपितु ब्राह्मणत्वादिकमखण्डो धर्म इति वदन्ति।

भाट्टास्तु जातिं स्वीकुर्वन्ति।

१२—प्रतिषेधवाक्यानि मा हिंस्यात्सर्वाभूतानि इत्यादीनि। तैः निवर्तनाऽभिधीयते। तस्य व्रतं इत्यनुष्ठेयपदार्थनिरूपणप्रकरणे तु नेक्षेतोद्यन्तमादित्यं इत्यादौ उद्यदादित्येक्षणाभावसंकल्पः कृतिसाध्यो लक्ष्यते—इति भाट्टाः।

प्रभाकरास्तु सर्वत्रैव निषेधवाक्ये संकल्पलक्षणैव। यदा यस्य हननादौ प्रवृत्तिः तदा विधिना हननं न कुर्यामिति संकल्पे नियुञ्जानो विधिः पुरुषं निवर्तयतीत्याहुः।

१३—विकृतौ प्राकृतपदार्थानामुपकारमुखेनातिदेश इति भाट्टाः। प्राभाकरास्तु तत्तच्छास्त्राणामतिदेश इत्याहुः।

१४—भावनाभेदः द्वितीयाध्यायार्थ इति भाट्टाः शास्त्रभेदस्तदर्थ इति प्राभाकराः—इत्यादयः।

## मोक्षसाधनं मोक्षश्च

प्राभाकरास्तावत् बन्धहेतुभूतेभ्यो निषिद्धेभ्यः अभ्युदयसाधनेभ्यश्च निवृत्तः उत्पन्नपूर्वौ धर्माधर्मौ भोगेन क्षपयन् शमदमब्रह्मचर्याद्यङ्गसहितेनात्मज्ञानेन उपासनात्मकेन निश्शेषकर्माशयं नाशयन् मुच्यते। आत्मोपासनं च मानसं कर्म, आत्यन्तिकदेहोच्छेदोपलक्षितः आत्यन्तिकदुःखोच्छेदो मोक्षः—इत्याहुः। आत्मा च न ज्ञानानन्दादिरूपः अपि तु जड एव। तद्भावो मोक्षः। भट्टमते तु न्यायसुधाकारः आत्मा चैतन्यानन्दरूपः स्वभावात् संसारदशायामानन्दः तीव्रवातेनेव विक्षिप्तः मोक्षेतु निश्चलः विक्षेपहेतुकर्माभावात् ज्ञानकर्मसमुच्चयसाध्यश्च मोक्षः। कर्म च फलाभिसन्धिवर्जितमेव ज्ञानेन समुच्चेयम् इति। पार्थसारथिमिश्रैस्तु

दुःखस्यात्यन्तिकी निवृत्तिर्मुक्तिः, मोक्षार्थिना काम्यनिषिद्धे वर्जनीये नित्यनैमित्तिके तु कर्तव्ये इत्युक्तम् ।

## ईश्वरः

भट्टमते ईश्वरः खण्डितः मीमांसकमतं निरीश्वरवाद इति च स्थापितम् । यद्यपि भट्टः स्वीयमङ्गलश्लोके नमस्सोमार्धधारिणे इति अर्धचन्द्रधारिपरमेश्वरं नमस्करोति तथापि मङ्गलं स्वेष्टदेवताविषयः शास्त्रं तु निरीश्वरमेवेत्यभिमन्यते । भवनाथस्तु ईश्वरानुमानखण्डनं तत्प्रस्तावे सम्यक् कृत्वा "एतेन ईश्वरे परोक्तमेवानुमानं निरस्तं नत्वीश्वरोपि" इति स्वाभिप्रायं दर्शयन्ति । ( पृ० १९९ ) ।

## यजेत स्वर्गकाम इत्यस्य मतभेदेन शाब्दबोधप्रकारः

भट्टमते अर्थभावनामुख्यविशेष्या । तत्र स्वर्गकामपदलक्ष्यस्वर्गस्य साध्यत्वेनान्वयः, यागस्य करणत्वेन, सन्निहितपठितान्यङ्गानि इतिकर्तव्यतात्वेनान्वीयन्ते स्वर्गोद्देश्यिका यागकरणिका यत्किञ्चिदितिकर्तव्यताका अर्थभावना शब्दभावना प्रयोज्येति बोधः । शब्दभावनाया यदंशत्रयं शास्त्रेषूक्तं तत्स्वरूपकथनमात्रम् न तु विशिष्टशब्दभावनायाः शाब्दबुद्धौ भानं इति अनन्तदेवादयः । श्रीमधुसूदनसरस्वत्यस्तु शब्दभावनाया अंशत्रयस्यापि शाब्दबोधे भानमुपपादयन्ति स्वीयगीताटीकायां "ज्ञानं ज्ञेयं" इत्यादि श्लोके (१६-१७) प्राभाकरमते तु नियोगः कार्यमित्यादिपदैः बोध्यमानमपूर्वं लिङर्थः । स एव च मुख्यविशेष्यतया भाति, तत्र च स्वर्गकामो नियोज्यतयाऽन्वेति यागः विषयतया । विषयं चेदमवच्छेदक मात्रमिति विवेकः ।

## शास्त्रदीपिकाटीकायां नयविवेकस्य तट्टीकायाश्च विमर्शः

शास्त्रदीपिकाव्याख्यायां श्रीसोमनाथविरचितायां तत्र तत्र नयविवेकतट्टीकयोः विमर्शः उपलभ्यते । तथाहि—विधिर्वास्यात् इत्यधिकरणे ( पृ० ९९ ) भवनाथेन तु—अनध्यवसायो नोपपादितः इत्युक्त्वा तदप्ययुक्तमिति खण्डितम् । एवं प्रायः प्रत्यधिकरणं भट्टाचार्यमतव्यवस्थापनं दृश्यते ।

श्री अप्पयदीक्षितग्रन्थेषु च नयविवेकस्य दीपिकायाश्चोद्धारः बहुलमुपलभ्यते ।

## मातृकाविवरणम्

अस्मिन् संस्करणे प्रथमपादस्य तर्कपादाख्यस्य मुद्रणे मद्रपुरीविश्वविद्यालय मुद्रापितमेव पुस्तकं सहायतया स्वीकृतम् । द्वितीयस्यार्थवादपादस्यारम्भात् प्रभृति निम्ननिर्दिष्टलिखितपुस्तकावलम्बनेन संशोध्य मुद्रणं प्रारब्धम् ।

| | | |
|---|---|---|
| तत्र च | A—अडयारलिखितपुस्तकभण्डार | मातृका |
| | B—बडोदा ( वटोदर ) ,, ,, | मातृका |
| | V—वाराणसी सरस्वतीभवन् ,, | मातृका |

M—मैसूर विश्वविद्यालय ,, मातृका
T—अनन्तशयनविश्वविद्यालय ,, मातृका
R—मद्रपुरीय संस्कृतलिखितपुस्तक ,, मातृका

एषु वटोदरमातृका, तथा अनन्तशयनमातृका च अत्यन्तशुद्धे। इतराश्च यथासम्भवं मूलशोधनायोपयोजिताः। पञ्चमाध्यायस्य नयविवेकदीपिकामातृका मैसूरविश्वविद्यालयलिखितपुस्तकभाण्डारादेव लेखयित्वा समासादिता। षष्ठसप्तमाष्टमाध्यायानां टीका तु मद्रपुरीलिखितपुस्तकालयादेव समासादिता। नवमदशमयोः मूलग्रन्थः अनन्तशयनस्थलिखितपुस्तकालयादेव समासादितः। दशमाध्यायस्य अष्टमपादप्रभृति द्वादशाध्यायान्तं नयविवेको वा तट्टीका वा कुत्रापि नोपलभ्यते। एकादशाध्यायमात्रस्य प्राभाकरानुसारिचन्द्राचार्यव्याख्या दृश्यते साप्यस्मिन् संस्करणे मुद्रापयिष्यते।

प्रथमपादे १९९ पृष्ठे टिप्पण्यां दृश्यमानशिवस्तुतिवृत्तान्तः—शिवमहिम्नः स्तोत्रस्य व्याख्यायां लक्ष्मीधरपण्डितशिष्य—देशयामात्यकृतायां दृश्यते। पूर्वं भारतवर्षे बिल्हणनामकेन राज्ञा परिपालिते बौद्धमतस्य भूयान् प्रचारो बभूव। देवास्संभूय श्रीशिवं अस्य प्रचारस्य निवृत्तये प्रार्थयांबभूवुः। भगवानपि स्वपुत्रौ श्रीगणपतिकार्तिकेयौ आज्ञापयामास भारतभुवं प्राप्य दुर्मतमिदं निरस्यतां भवद्भ्यामिति। तयोश्च कार्तिकेयः कुमारिलभट्टात्मना गणपतिश्च प्रभाकरात्मना भारते अवतीर्य राज्ञः बिल्हणस्य सभांगत्वा श्रीशिवं तुष्टुवतुः कुमारिलः शिवमहिम्नः स्तवेन, प्रभाकरश्च जयजनकरहित—इत्यादिगद्यस्तुत्या। तत्काले च साक्षादेवभगवानाविर्भूय राजानमनुजग्राह—इति। इदं स्तोत्रं अनन्तशयनस्थमातृकामात्रे उपलभ्यते। तद्वृत्तान्तश्च पूर्वोक्ते महिम्नः स्तोत्रव्याख्याने दृश्यते।

महामहोपाध्याय
श्रीवैद्यनाथशास्त्रिवरशिष्यः
S. सुब्रह्मण्यशास्त्री

# विषयसूचिका

## प्रथमाध्यायस्य प्रथमस्तर्कपाद

॥ श्रीः ॥

# मीमांसानयविवेकः

महामहोपाध्याय-

श्रीभवनाथमिश्रप्रणीतः

## प्रथमाध्याये प्रथमः पादः

गणाधिपं ग्रहान् वन्दे हरिं हरमुमां गुरून् ।
वाग्देवीं स्वर्धुनीं विप्रान् कर्तुं गुरुनये कृतिम् ॥ १ ॥
विहाय विस्तरं शब्दसौन्दर्यपरनिन्दने ।
व्यज्यते भवदेवेन तत्त्वं नयविवेकतः ॥ २ ॥

---

## विवेकतत्त्वम्

नयविवेकव्याख्या

( रविदेवकृता )

संसिद्धगुरुभावस्य भवस्य पदगोचरे ।
निवेशयन्वाङ्मनसे सुकृती स्यामहं चिरम् ॥ १ ॥
ग्रन्थेऽल्पे विततेऽर्थे व्याख्या नोचेच्छ्रुतैषिणः केचित् ।
गुरुकुल एव जरेयुः श्रुतमर्थं विस्मरेयुर्वा ॥ २ ॥

ननु गणाधिपं ग्रहान्वन्द इत्येतद्वाचिकवन्दनं किं स्वार्थं क्रियते उप परज्ञापनार्थं किमुभयथापीति चेत्; स्वार्थवन्दनत्वेऽन्यं प्रति ज्ञापकत्वाभावात् किमर्थमिति तस्यापेक्षाभावात् अपेक्षिततत्समर्पकतया 'कर्तुं गुरुनये कृतिम्' इत्यस्यानन्वयापत्तिः । ज्ञापकत्वपक्षे तज्ज्ञापनानर्थक्यम् । शिष्याणामपि तत्क्रियानियमार्थमर्थवदिति चेत्, तर्हि लाघवात् स्वकीयस्य वाचिकवन्दनस्य ग्रन्थ-

---

प्रणम्य स्वगुरून् भक्त्या मीमांसांभोजभास्करान् ।
कुर्वे नयविवेकाख्यगुरुग्रन्थस्य टिप्पणम् ॥

अतिगम्भीरं प्रभाकरगुरुमतं प्रत्यधिकरणं विषयादिनिर्देशेन संक्षिप्य निरूपयितुम् आदौ देवान् गुरून् विप्रांश्च नमस्यति— गणेति ॥ १ ॥ यद्यपि भट्टमतं प्रायः प्रत्यधिकरणं खण्ड्यतेऽत्र तथापि न कुत्रापि परनिन्दा वर्तते इति बोध्यम् ॥ २ ॥

महता प्रणिधानेन शक्यमेव विधान्तरम् ।
लोकानुमतमित्येव शालिकोक्तं प्रसाध्यते ॥ ३ ॥

निवेशमात्रं करणीयम्, तदनुकीर्तनेनैव तेषामपि मङ्गलसिद्धेः तदनुकीर्तनान्महामङ्गलाभ्युपगमात् फलाधिक्याच्च । स्वोक्तिविरुद्धं च स्वानुष्ठानमन्यथा स्यात् । उच्यते—किमर्थमित्यपेक्षापूरकतया कर्तुमित्यस्यान्वयो नाङ्गीक्रियते । तदपि ग्रन्थकरणप्रतिज्ञापरं वाक्यान्तरमेव तात्पर्यतः । वस्तुतो हि वन्दनस्य तत्प्रयोजनत्वादनुवादमात्रतया तुमुनन्वयः सौर्यादौ निर्वपत्याद्यन्वयवत् इति वाचिकवन्दनत्वान्न स्वोक्तिविरोधोऽपि । नन्वेवं ग्रन्थविवरणहीननयतत्त्वविवेकमात्रविषयग्रन्थकरणप्रतिज्ञा 'कर्तुं गुरुनये कृतिम्' इत्येनेनैव कृतेति कं विशेषं वक्तुमुत्तरश्लोकारम्भः ? उच्यते—विस्तरशब्दसौन्दर्यपरनिन्दनहानरूपं वक्तुमिति ब्रूमः । तदयुक्तम्, विस्तरस्यापेक्षिकतया हेयविशेषाप्रतिपत्तेः सौन्दर्यस्य च काव्यादिवर्तिनोऽत्राप्रसक्तेः तन्निवृत्तिपरिभाषानर्थक्यात् प्रसक्तानाञ्चानुगुणतया अहेयत्वात् व्यङ्ग्यार्थतायाश्च व्यज्यत इति स्वीकृतत्वाद्विवक्षितार्थाभिव्यक्त्याञ्जस्यरूपस्य चाहेयत्वात् परनिन्दनस्य च विप्रतिपन्नार्थनिर्धारणार्थमवर्जनीयत्वात् । न; विवक्षितार्थाभिव्यक्त्याञ्जस्यरूपग्रन्थसौन्दर्यार्थं यो ग्रन्थविस्तरः प्राप्तः तद्धानोक्तेर्न विशेषाप्रतिपत्तिदोषः । स्वपक्षस्थापनोपयोग्यधिकपरदोषाविष्करणप्रयुक्तविस्तरहानञ्च विवक्षितम् । एकवाक्येन हि प्रतिविशेषणमवान्तरवाक्यभेदापेक्षया बह्वर्थप्रतिपादने ग्रन्थसौन्दर्याभावो व्यक्तः । प्रत्यर्थं वाक्यभेदेन तत्प्रतिपादने तत्सौन्दर्यं च व्यक्तम् । विस्तरस्तु तदा आवश्यकः । स च महान्दोषः । तद्धारणसमर्थपुरुषहीने काले ग्रन्थस्थितिभङ्गापत्तेः । तेन तत्परिहारार्थं तत्सौन्दर्यपरनिन्दनत्यागेनापि न्यायविवेकमात्रमत्र क्रियत इत्युच्यते । न च तत्सौन्दर्याभावेऽर्थाप्रतिपत्तेर्ग्रन्थारम्भवैयर्थ्यापत्तिः, तदर्थानुपपत्त्यभिज्ञश्रोतृजिज्ञासासहायापेक्षयापि विस्तरापेक्षयैवास्यैव ग्रन्थस्य सर्वानुपपत्तिहीनार्थनिर्णयोपायत्वसम्भवात् । एवञ्च तदर्हश्रोतॄन् प्रति तदर्हजिज्ञासा कर्तव्या इत्येतदर्थमेतत्परिभाष्यते; पराधीनतदपेक्षया त्वितरान् प्रति तत्समर्थासमर्थसाधारणत्वात् ग्रन्थस्य, सर्वस्याप्यधीतवेदस्य न्यायज्ञानापेक्षार्थज्ञानाधीनानुष्ठानस्याध्ययनविधिसिद्धत्वात् । एवञ्च सति ग्रन्थविस्तरे यादृगवधारणं तादृगवधारणं तत्तदधिकरणव्युत्पाद्यन्यायानां निबन्धनविवरणभेदेन पूर्वपक्षसिद्धान्तभेदेन च यावन्न स्यात् तावद्वाक्यवृत्त्यनार्जवेनापि ग्रन्थजिज्ञासापरैरेव तदर्थिभिः शिष्यैर्भवितव्यम् । तेनैव तदवधारणं स्यात् इत्येतदर्थैवैषा परिभाषा द्रष्टव्या ।

ननु गुरुग्रन्थे ग्रन्थगतिरपि दुर्ज्ञानेति तद्विवरणमुखमेव तदर्थतत्त्वं वचनार्हमिति कथं तत्त्वमात्रविषयग्रन्थकरणप्रतिज्ञा इत्याशङ्क्य गुरुग्रन्थस्य बहुमुखतया गत्यन्तरार्हत्वेऽपि शालिकोक्तगत्यभिमुखत्वाच्छिष्याणां तदपेक्षितार्थानुपपत्तिपरिहारार्थोऽयं यत्न इति युक्तं तत्त्वमात्रविषयत्वमित्याह—महता प्रणिधानेनेति ।

ग्रन्थेऽस्मिन् विस्मयो भावी नवा किं तस्य दुष्करम् ।
यो ददाति हि सर्वस्वं सहस्रोत्पत्तिशासनम् ॥ ४ ॥

## अथातो धर्मजिज्ञासा ॥ १ ॥

देवगुरुपूजास्तुतिनमस्कारादिरूपं मङ्गलमुच्यते ।
"मङ्गलाचारयुक्तानां विनिपातो न विद्यते" ॥

इत्यादिस्मृतेश्चाभिमताविनिपातोऽस्य फलम् । ग्रन्थारम्भे च पक्षप्राप्त-

---

सौन्दर्यादिविरहे ग्रन्थापरिग्रहाशङ्कां निरस्यति—ग्रन्थेऽस्मिन्निति । विस्मयः शुश्रूषा, सा भवत्येवेत्यभिप्रायः । नवेत्यसंशये संशयोक्तिः "शास्त्राणि चेत्प्रमाणम्" इतिवत्, यो ददातीति कृत्स्नशास्त्रवर्त्यपेक्षिताशेषार्थव्यञ्जकत्वरूपविस्मयहेतुवचनात् । तेन ह्येकैकाधिकरणप्रतिपाद्यान्योन्यव्यावृत्तसहस्रन्यायप्रतिपादकाधिकरणसहस्रव्यापिशासनपदोक्तशास्त्रात्मकाभीष्टभोगयोग्यधनदातृत्वं स्वग्रन्थस्योच्यते । तथाविधगृहादिदाने यथा तद्योग्यानेकावयवान् सम्पाद्य सर्वावयवसम्पूर्णमेव तदर्थिभ्यो ददाति तथायमपीति सर्वस्वमपीत्युक्तम् । स्वीयाशेषावयवयुक्तमिति सर्वेषां तदर्थिनां स्वं यथेष्टव्यवहारयोग्यम् इदं शास्त्राख्यं धनम्, नेतरवदेकोपभोगमात्रोपक्षीणमिति च सर्वस्वमित्यनेन सूच्यते । तेन सर्वकालं सर्वैरपि अर्थोपन्यासव्याख्यानादिभिरुपभोगयोग्यमिति सर्वशुश्रूषोत्पत्तिसिद्धिः ।

पञ्चिकोपक्रमस्थदेवगुरुस्तुतिनमस्कारसमर्थनार्थं शिष्टाचारसमर्थनात् स्मृतिमूलतया समर्थनस्य सौकर्यं मन्वानः तस्य मङ्गलेऽन्तर्भावं तावदाह—देवगुरुपूजेति । मङ्गलस्य च विघ्ननिरासफलत्वं स्मृतिसिद्धमित्याह—मङ्गलाचारेति । नन्वेवं ग्रन्थादौ मङ्गलाचारो नापेक्षितः, विनिपातप्रसङ्गाभावात्; पुरुषान्तराभिलषणीयधनादिलाभार्थप्रवृत्तौ हि तदापाद्यविनिपातप्रसङ्गः इत्याशङ्क्य पाक्षिकविनिपातशङ्कयापि तदाचारो युक्तः, फलनियमस्यापेक्षितत्वादिति परिहरति—ग्रन्थारम्भे चेति । नन्वदृष्टद्वारफलकमङ्गलाचारप्रवृत्तेर्वैधत्वान्निवृत्तिफलकविधेश्च प्रायश्चित्तविधाविव प्रसक्तविघ्नविशेषनिवृत्त्यर्थ्यधिकारित्वादतादृशग्रन्थकर्तुरनधिकारात्

विघ्नहेतुपापक्षयापेक्षया यन्मङ्गलं युक्तम्, तन्निवेशनं च ग्रन्थे युक्तम्, महापुरुषकृतस्तुत्याद्यनुकीर्तनाच्छिष्याणां महामङ्गलार्थम्। तदिह सूत्रभाष्यटीकासु न निवेशितम्। तद् दृष्ट्वा न कृतमित्यपि भाति। नैवम्, नित्यं मङ्गलाचारयुक्तत्वात् सूत्रकारादीनाम्। सूत्रे चाथादिपदं तत्कालमङ्गलमपि सूत्रकृतः; तन्निवेशनानुकीर्तनाच्छिष्याणां भाष्यकारादीनामपि मङ्गलं सिद्धम्।

विषयप्रयोजनपरमिदं सूत्रमिति परमतम्। तन्मन्दम्; वेदाध्ययनस्याविवक्षितार्थतया हि नाध्ययनविध्याक्षिप्तं शास्त्रमित्यारम्भहेत्वभावादनारभ्य-

---

न मङ्गलार्था प्रवृत्तिर्युक्तेति शङ्काहानार्थं—पापक्षयापेक्षयेत्युक्तम्। प्रसक्तविघ्नविशेषस्यापि हि स्वरूपनाशो नेच्छाविषयतयाऽधिकारहेतुः, सहकार्यलाभादविघातकत्वमात्रेणापि इष्टफलप्राप्त्यविरोधात् तदाक्षेपकपापाविनाशेऽन्याक्षेपेणापि विघातापत्तेरिति तत्पापक्षय एवेष्टतयाधिकारहेतुः, पापस्य च विशेषतः प्रसक्त्यवगमायोगात् शङ्कितविघ्नहेतुपापक्षयार्थ्येवाधिकारीति ग्रन्थारम्भेऽपि तत्क्रिया युक्तेत्यर्थः। नन्वेवमपि तदाचारः किमर्थं ग्रन्थे निवेशित इत्यत्राह—तन्निवेशनञ्चेति। ननु महापुरुषकृतस्तुत्याद्यनुकीर्तनान्महामङ्गलं स्यादिति किंप्रमाणकमेतत्? उच्यते—"महापुरुषकीर्तितमनुकीर्तयेच्छ्रेयस्कामः" इति विधिरेवात्र प्रमाणम्, मानान्तरानर्हत्वादाप्ताचरितत्वाच्च। द्वैपायनवचनञ्चात्र लिङ्गम्। स हि "व्यासेन कीर्तितम्। पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च"। इत्यवोचत्। एतच्च विशेषनिष्ठं सामान्यविध्यपेक्षम्, विशेषनिष्ठस्येदंप्रथमतया विधित्वभङ्गप्रसङ्गात्। नन्वेवं सूत्रादिष्वपि तदाचारः प्राप्तः; तदभावादकार्य इत्याशङ्क्य स्वतः प्राप्तग्रन्थनिवेशादर्शनात् तदभावशङ्कामात्रं स्यात्, न तदभावनिश्चयः शक्य इति परिहरति—तदिहेति। ग्रन्थानिवेशः शङ्काहेतुरपि न स्यात्सूत्रकारादिषु इत्याह—नित्यं मङ्गलाचारेति। ग्रन्थनिवेशौचित्यं हि तन्मात्रार्थागन्तुकस्यैव, न नित्यस्येत्यन्यथासिद्धस्तन्निवेशाभाव इत्यर्थः। ग्रन्थनिविष्टमङ्गलाभावमभ्युपेत्य तथापि स्वरूपाभावो नास्तीत्युक्तम्; वस्तुतस्तु ग्रन्थानिवेशोऽपि नास्तीत्याह—सूत्रे चेति। आत्मतुष्ट्यवधिकत्वान्मङ्गलस्य पञ्चिकादावधिकाचारोऽप्युचित एवेत्यभिप्रायः।

पूर्वव्याख्ययैव व्याख्यातार्थस्य भाष्यस्य व्याख्यान्तरानपेक्षत्वात् गुरुकृतेरनारभ्यतां निवर्तयितुं प्रथमं तदनुवादेन तन्मान्द्यं च दर्शयति—विषयप्रयोजनेति। शास्त्रारम्भविरोध्युपस्थितन्यायाभासनिवर्तकतया तत्साधकत्वमधिकप्रयोजनं परोक्तप्रकारादित्यर्थः। ननु परमतेऽपि विषयप्रयोजनपरत्वं तदभावव्यावृत्त्यैवेति तद-

तां निवर्तयितुं युक्तम्; विषयस्त्वापातप्रतीतोऽपि वेदार्थोऽस्तु; प्रयोजनं चाननुष्ठानरूपमेवास्तु। न चाननुष्ठानमाद्यपूर्वपक्षनयमात्रादिति न शास्त्रारम्भः, अविवक्षाया अपि विनियोगोपादानादिलक्षणापेक्षत्वात्। यथारिप्सितमप्रयोजनमिति चेत्, तन्न शास्त्रारम्भस्तावदाक्षेप्तुमशक्यः।

'बहुविद्यान्तराश्रितत्वान्मीमांसायाः प्रयोजनापेक्षा शुश्रूषूणाम्' इत्यपि

---

भावापादकपूर्वपक्षन्यायनिरासकत्वमस्त्येवेति कथं प्रयोजनमान्द्यमित्यत्राह— विषयस्त्विति। तन्मते स्वाध्यायस्यार्थपरत्वोक्तचाऽर्थानुष्ठानं शास्त्रारम्भफलमाद्यसूत्रसाध्यमिष्यते; न स्वमत इव स्वपरिगृहीतार्थज्ञानसहायत्वेनार्थविचारस्याध्ययनविधिप्रयोज्यत्वम्। ततश्चापातसिद्धिमात्रेणाद्यविचारविषयत्वमर्थस्य न निश्चिततात्पर्यतया इति तथैव कृत्स्नविचारविषयत्वसम्भवात् न विषयसाधकत्वमाद्यस्य; तात्पर्यसंशयप्रयुक्तविचारप्रयोजनत्वं च तत्संशयनिरासमात्रसाध्यम, तद्भेदमात्रमनुष्ठानाननुष्ठानविधाद्वयेनेति तदपि न सूत्रसाध्यमिति न तदभावव्यावर्तकत्वमपीत्यर्थः। नन्वाद्यविचारांशमात्रस्यायं विषयप्रयोजनलाभो न शास्त्रस्य, तस्यानेकाध्यायसमुदायात्मकत्वात्। तेन परमतेऽपि शास्त्रारम्भविरोधिन्यायनिवर्तकत्वमस्त्येवाद्यसूत्रस्येत्यत्राह—न चाननुष्ठानमिति। न शास्त्रारम्भनिरोधसमर्थोऽयं पूर्वपक्षः, स्वयमारब्धशास्त्रसाध्यत्वात्। विध्यवरुद्धाया भावनायाः पुरुषार्थो भाव्य इत्येतदधिकारलक्षणसिद्धम्। आर्थवादिकफलस्य भाव्यत्वमुपादनलक्षणसिद्धम्। स्वाध्यायस्याध्ययनशेषत्वं शेषलक्षणसिद्धम्। अध्ययनविध्यन्तरादर्थवादातिदेशः सामान्यविशेषातिदेशलक्षणसिद्धः। तच्चाध्ययनविध्यनन्तरं प्रकरणान्तरादभ्यासाद्वा नानाकर्मलक्षणसिद्धमित्यविवक्षापि शास्त्रसाध्यैवेत्यर्थः। नन्वनुष्ठानमेव सूत्रकृदभिलषितं प्रयोजनम, तदभावे निष्प्रयोजनत्वात्। प्रयोजनसाधनार्थमेव सूत्रमित्याशङ्क्य परिहरति—यथारिप्सितमिति। एवं हि शास्त्रारम्भोपोद्घातत्वं त्यक्त्वा तत्प्रकारविशेषोपोद्घातत्वाङ्गीकारात् प्रयोजनमान्द्यमेवाश्रितं स्यात्। स्वपक्षे तु अध्ययनविधिप्रयुक्तमेव शास्त्रं न पुरुषजिज्ञासामात्रप्रयुक्तमिति शास्त्रोपोद्घातत्वसिद्धिरिति भावः। पुरुषार्थोत्तमभूतधर्मप्राप्तिप्रयोजनोक्तिः शुश्रूषोत्पादनेन बहुप्रयाससाध्यशास्त्रश्रवणप्रवृत्त्यपेक्षिता चेत्येतदपि अयुक्तमित्याह—बहुविद्यान्तरेति। सर्वेषामपि तावदध्येतॄणामध्ययनानन्तरमर्थविचारप्रवृत्तिः सूत्रे विवक्षिता। तदुपक्रमात्प्रागभावि

---

१. निराकर्तुं. ख. २. दानाधिकारादि. ख.

३. तावत्सिद्धत्वादा. ख.

मन्दम्, आप्तप्रवर्त्यत्वादेव प्रयोजनवत्त्वनिश्चयात्तेषाम्। अथ विषयप्रयोजनोक्तयैव तत्प्रवर्त्यता, तन्न; साङ्गवेदाध्येतुः स्वोपयुक्तार्थधीर्मनाक् इति तत्सम्यक्त्वेच्छोस्तदुपायोन्मुखस्यानर्थपरत्वधिया विमुखतापत्तावर्थपरत्वोक्तया च तन्निवृत्त्यर्थं विषयप्रयोजनज्ञं प्रत्येव सूत्रम्, न त्वाद्यप्रवृत्त्यर्थम्। अस्तु वाऽनुषङ्गाद्विषयप्रयोजनधीः; अतो न विषयप्रयोजनपरमिदं सूत्रम्।

---

च तज्ज्ञानं प्रवृत्त्यङ्गम्; सूत्रोत्थज्ञानं च तदा नास्तीति न तदधीनस्तदुपक्रमः। ततः पित्राद्याप्तप्रवर्त्यास्ते; ततस्तत्प्रेरणालिङ्गकस्तदा प्रयोजनसामान्यनिश्चयस्तेषामिति न तदुक्त्युपयोग इत्यर्थः। नन्वध्ययनादिप्रवृत्तेः प्रायेण तथात्वेऽपि अर्थविचारप्रवृत्तिः प्रायेण फलविशेषधीपूर्विकैवेति तत्प्रवर्त्यतापि सूत्रितप्रयोजनज्ञापनेनैवेत्यर्थवती तदुक्तिः इति शङ्कते—अथ विषयप्रयोजनेति। परिहरति—तन्न साङ्गवेदाध्येतुरिति। अधीतसाङ्गवेदो विचाराधिकारीति तावत्त्वन्मतेऽपि सम्मतम्। तस्य च नानाकार्यत्वान्नित्यनैमित्तिकतया च स्वानुष्ठेयकर्मरूपार्थधीः वेदादेव बहुविधसंशयग्रस्ताप्यस्त्येवेति तन्निर्णयेच्छोस्तदुपायन्यायविचारोन्मुखस्य "अधीत्य स्नायात्" इति स्मृतिप्राप्तगुर्वधीनत्वनिवृत्तिसामर्थ्यसिद्धानर्थपरत्वधिया तत्प्रवृत्त्युपरमप्रसङ्गेऽर्थपरत्वोक्त्या तदुपरमनिवृत्त्यर्थं सूत्रमिति विषयप्रयोजनोक्तिर्नाधिकार्यपेक्षितेत्यर्थः। ननु ग्रन्थारम्भे वृद्धसम्मता विषयप्रयोजनोक्तिरिति कथमिह तन्निरास इत्याशङ्क्य विषयान्तरे तत्सम्मतिः नात्रेत्येतदर्थं तदुक्त्यपेक्षप्रवर्तकत्वमस्य नास्तीत्याह—न त्वाद्यप्रवृत्त्यर्थमिति। प्रवृत्तिप्रतिबन्धकन्यायाभासधीबाधनेनैवास्य प्रवर्तकत्वमिति नास्य प्रवर्तकत्वे प्रयोजनादिज्ञापनं द्वारं प्रथमप्रवृत्तिहेतोरेव तद्द्वारमिति तत्परग्रन्थारम्भे तदुक्तिरर्थवती नात्रेत्यर्थः। ननु धर्मो जिज्ञासितव्य इति विषयप्रयोजनोक्तिः सूत्रसामर्थ्यसिद्धा प्रवृत्त्यनुवृत्त्युपयोगेनापेक्षिता चेति कथमविवक्षिता स्यादित्यत्राह—अस्तु वाऽनुषङ्गादिति। अजिज्ञास्यत्वनिषेधानुषङ्गसिध्या तदुक्तिरस्तु फलवती; तत्परतैव सूत्रस्य निवार्यत इत्यर्थः। उपसंहरति—अतो न विषयेति।

---

१. विरुद्धता, क.

२. Omitted. ख.

लोकइत्यादिभाष्यविवरणम्

अत्र च यद्यपि परमते 'लोके' इत्यादिभाष्यस्य षडर्थानुक्त्वा दशपक्षी[1] चापरोक्ता; तथाप्यथशब्ददूषणार्थमौचित्यानुभाषणपरत्वमेव स्वीकृतम्। तदपि मन्दं मत्वा गुरुः सप्तदशमर्थमाह। मन्दता चोचितानुवादमात्रपरत्वाद्वाक्यान्तरार्थत्वात् अथपदमात्रदोषपरत्वात् अतःपदस्य लौकिकार्थताननुकीर्तनात्। अत उक्तम्—"अथात इत्येतस्मिन् पदद्वयेऽलौकिकार्थाशङ्कानिवृत्तिः प्रयोजनम्" इति। "नाध्याहारादिभिरेषां कल्पनीयोऽर्थ.—" इति। अस्यार्थः—शब्दशक्तिर्न कल्प्या, न त्वध्याहारादि सूत्रे वार्यते। न चैतावन्मात्राच्छङ्का न निवृत्तेत्येतावता नास्य निवृत्त्यर्थता। शङ्का चेत्थम्—

भाष्यतात्पर्यमपि परोक्तं मन्दमिति दर्शयितुं तद्व्याख्याप्रकारमाह—अत्र चेति। परव्याख्यानमथशब्ददूषणार्थमिति पञ्चिकोक्तं दर्शयितुमुक्तम्—तथाप्यथशब्ददूषणार्थमिति। तन्मन्दतानिमित्तं गुरोरर्थान्तरपरत्वव्याख्यानमित्याह—तदपि मन्दं मत्वेति। तन्मान्द्यं विवृणोति—मन्दता चेति। व्याख्येयानुपपत्तिशङ्कानिवृत्तिपरत्वसम्भवे सति न स्वतः प्राप्तानुवादपरता युक्ता, दूष्यानुवादार्थतया दूषणोपयोगोऽपि नास्तीत्येतदर्थं मात्रपदम्। "तत्र लोकेऽयम्" इत्यनेनैवानुवादसिद्धेरिति मान्द्यातिशयो दर्शितः। स्वार्थपरत्वसम्भवे वाक्यान्तरार्थता चायुक्ता। पदद्वये तुल्यशङ्केऽन्यतरदूषणार्थता चायुक्ता तन्मात्रदूषणताभिप्रायोऽन्यानुक्तिगम्य इत्येवं मान्द्यदूषिता पूर्वव्याख्येत्यर्थः। तत्प्रकटनार्थं प्रयोजनमुखमेव व्याख्यान्तरमारभ्यत इत्याह—अत उक्तमिति। ननु "नाध्याहारादिभिरेषां कल्पनीयोऽर्थः" इत्यध्याहाराद्यपेक्षार्थकल्पनानिषेधोऽनुपपन्नः, विवक्षितैकदेशोक्त्या सूचकेषु सूत्रेषु तदपेक्षितार्थविवरणस्यानिषेध्यत्वात्; यथासम्भवे सति चाप्रसक्तत्वात्, पदार्थस्वरूपकल्पना त्वप्रसक्ता; तत्र चाध्याहारादेः हेतुत्वञ्चाप्रसक्तमित्यप्रतिपत्तिशङ्कायामाह—अस्यार्थ इति। नाध्याहारादयो निषेध्यकोटितया ग्राह्याः; अर्थकल्पनोक्त्या तद्विषयशक्तिकल्पना निषिध्यते। तत्कल्पनाप्रसङ्गहेतुतया चाध्याहाराद्यन्वय उपेयः। अध्याहारादिहानार्थं न शक्तिः कल्प्येति। तेनाध्याहाराद्यपेक्षयापि प्रसिद्धार्थग्रह एव न्याय्य इत्यर्थः। भाष्यस्यैवमलौकिकार्थत्वनिषेधसामर्थ्ये सत्यपि तच्छङ्कोत्पादकहेत्वनिवृत्तौ तन्निवृत्त्यसिद्धेः कथमस्य तदर्थतेत्यत्राह—न चैतावन्मात्रादिति। सर्वत्र प्रतिज्ञायाः साध्यसिध्यनङ्गत्वप्रसङ्गात् इति प्रसिद्धोऽत्र हेतुः। केन हेतुना तच्छङ्केत्यत्राह—शङ्का चेत्थमिति। स्वाध्यायस्याविवक्षितार्थत्वमाशङ्कमानस्य प्रसिद्धार्थत्वा-

१. दशपक्षी बृहट्टीकायां स्थिता नेदानीमुपलभ्यते।

स्वाध्यायाध्ययनविधेराचार्यकविध्यधिकारपरत्वेनाध्ययनस्यानर्थपरत्वाद- विवक्षितार्थो वेद इति नाध्ययनानन्तरा तद्धेतुका वेदार्थजिज्ञासा युक्तेति सामयिकार्थं पदद्वयमिति। दृष्टश्च पाणिनिपिङ्गलादिग्रन्थे समयः। अनुक्ते च कस्मिंश्चित्किमपेक्ष्य "अथातः" इति ? न चार्थादुपस्थितं वेदाध्ययनमपेक्ष्येति वाच्यम्; अनर्थपरत्वाद्वेदस्येति तन्निवृत्त्यर्थं लोक इत्यादि यत्नगौरवं प्रसज्येतेत्येवमन्तं भाष्यम्। अध्ययनविधेरर्थबोधाधिकारपरत्वादर्थबोधस्य च मीमांसाधीनत्वाद[१]ध्ययनविधिरेवानन्त[२]रं शास्त्रारम्भाक्षेपक इति लौकिकार्थं पदद्वय-

सम्भवशङ्कामूलालौकिकार्थत्वशङ्का स्यादित्यर्थः। नन्वेवमप्यानर्थक्यशङ्कैव स्यात् कथमलौकिकार्थत्वशङ्केत्यत्राह—दृष्टश्चेति। ननु ग्रन्थान्तरे शब्दान्तरस्य समयदर्शनेऽपि इहादर्शनादविवक्षितार्थत्वशङ्कयाप्यसम्यङ्न्यायमूलतैवाधिकरणान्तरेष्विव शङ्कार्हा, किमितीह सामयिकार्थता शङ्क्यते इत्यत्राह—अनुक्ते च कस्मिंश्चिदिति। व्युत्पन्नार्थधीपूर्विका हि असम्यङ्न्यायमूलताशङ्का; सैवेह नास्ति, सापेक्षार्थशब्दादपेक्षितानुक्तौ श्रुत्यैव तदवोधादध्याहारापेक्षयाप्यर्थसामर्थ्यासिद्धावसम्भवात्। तेनागत्यार्थवत्तासमयाद्यपेक्षयैव शङ्कार्हेति युक्ता तच्छङ्केत्यर्थः। ततस्तन्निवृत्त्यर्थता युक्तेत्याह—तन्निवृत्त्यर्थमिति। तन्निवृत्त्यर्थत्वमेव भाष्यसामर्थ्यप्राप्तम्, नोचितानुवादमात्रमित्येतद्दर्शयितुमेव मन्दमित्युक्तम्। अनुवादमात्रत्वे "तदर्थानीत्यवगन्तव्यम्" इत्येतदन्तमेव स्यात्; नाध्याहारादिभिरिति व्यावर्त्यं प्रदर्श्य तदुपगमे सूत्रकरणप्रयोजनाभिमतपरप्रतिपत्त्यन्यथानुपपत्तिमूलस्वपदार्थव्याख्यानरूपयत्नगौरवापत्तिरूप-बाधकावसायि न स्यात् इति। नन्वन्तालोचनया तन्निवृत्त्यर्थत्वभानेऽपि तावतैव विवक्षितार्थत्वानुक्तेः वाक्यापरिपूर्तिस्तुल्येति तदर्पकभाष्यान्तरशेषतोपगमस्यावश्यकत्वात् तत्समर्थनस्य चानन्तरवर्तिनो भावात् अगत्या अनन्तरभाष्याक्षेपकशेषत्वं पारिशेष्यसिद्धमित्याशङ्क्यान्यशेषत्वमेवास्य नास्ति; स्वातन्त्र्यासम्भवे हि तत्स्यात् न त्वस्य तदसम्भवः। विपक्षे बाधकं प्रदर्श्य लौकिकार्थत्वमावश्यकमित्युक्त्यैव तदुपपादकार्थावबोधाधिकारपर्यवसाय्यध्ययनविधिप्रदर्शिताध्ययनानन्तरत्वस्य तद्विध्याक्षेपहेतोश्चावगतत्वात्तन्मुखेन सूत्रवाक्यतात्पर्यविषयोऽपि प्रदर्शित इति स्वतन्त्रार्थमेवेदं भाष्यमिति परिहरति—अध्ययनविधेरिति। ननु

१. तादिति० क० २. तदध्ययन० ख०

३. अनन्तरशास्त्रा० ख०

मिति शास्त्रारम्भप्रतिज्ञासूत्रं लोक इत्यादिना लौकिकार्थत्वमुक्त्वोपपादितम्। धर्मजिज्ञासापदे तु नालौकिकार्थताशङ्का, अदृष्टार्थतयापि कथंचित्तदुपपत्तेः। यद्यपि प्रतिज्ञामुखेन शास्त्रान्तर्गतो न्याय एवोच्यते, तथापि शास्त्रारम्भसिध्यर्थत्वाच्छास्त्रोपोद्घातेनाद्यम्।

नन्वेवं तर्हि कृत्स्नमेव प्रमाणलक्षणमुपोद्घातः स्यात्; प्रामाण्ये हि शास्त्रारम्भोऽर्थवान्। मैवम्; शास्त्रारम्भो ह्यध्ययनविधेः; ततोऽनाक्षेपेऽनारम्भो युक्तः; प्रामाण्यादिभिस्तु न साक्षादाक्षेप इति तेषां शास्त्रतैव। नन्वर्थाविवक्षायामध्ययनमपि नानुष्ठेयम्। सत्यम्; मुखमात्रं शास्त्रानारम्भः। ननु अस्वाध्यायरूप[१]नित्यानुमेयवेदार्थविचारार्थं शास्त्रं युक्तम्। मैवम्;

---

पूर्वपक्षाभिप्रायेण धर्मजिज्ञासापदेऽप्यलौकिकार्थत्वं तुल्यम्, आपातप्रतीतिमात्रविषयस्याविचार्यत्वादित्यत्राह—धर्मजिज्ञासापदे त्विति। तत्तात्रत्र सापेक्षार्थमिति नेतरवदगमकम्; निर्णयफलासम्भवात्तु लक्षणयाप्यदृष्टार्थविचारविधिपरमस्त्वित्यर्थः। ननु प्रमाणज्ञानमेवाध्ययनप्रयोजनतया विधिग्राह्यमिति तत्प्रामाण्यसाधकोऽध्यायः कृत्स्नोऽप्युपोद्घातः स्यात्; नाद्यमात्रम्, अनुष्ठानार्थत्वाच्छास्त्रारम्भस्येति चोदयति—नन्वेवं तर्हीति। परिहरति—मैवमिति। यद्यप्यनुष्ठानान्त एवार्थावबोधोऽध्ययनप्रयोजनतया विध्यनुज्ञातः, तथापि तत्प्रामाण्यनिश्चयात्प्रागेव तस्य विधिस्वीकारः, तत्स्वीकारप्राप्ततात्पर्याधीनत्वात्प्रामाण्यस्य। तेन प्रथमभावी विधिरेव सर्वविचाराक्षेपक इति विधिस्वीकारसाधकविचार एव शास्त्रानन्तर्गतः। प्रामाण्यतद्भूदाधिकारविचाराणामपि अनुष्ठानस्थापकतया तन्निर्वाहोपयोगेऽपि स्वयं विचारानाक्षेपकत्वात् विध्याक्षिप्तविचारान्तर्गतिरेव तदनुवृत्तिनिमित्तता चेति न तेषामुपोदघाततेत्यर्थः। ननु पूर्वपक्षेऽध्ययनस्याप्यनारभ्यत्वसाम्ये केन विशेषेणाद्यस्य शास्त्रोपोद्घाततैवोक्तेति चोदयति—नन्वर्थाविवक्षायामिति। परिहरति—सत्यमिति। प्रथमं ह्यध्ययनविध्यतिरिक्तवाक्यवर्त्यविवक्षितार्थत्वं स्फुरति, तद्विधिपूर्वकत्वात्तत्प्रसक्तेः; पश्चात्तस्यापि स्वाध्यायान्तर्भावधिया तद्धीरित्युपक्रममात्रं तदित्यर्थः। ननु नास्त्याद्यस्य शास्त्रोपोद्घातत्वम्, अध्ययनस्यार्थज्ञानप्रयोजनत्वाभावात् स्वाध्यायेऽनर्थपरेऽपि स्मृत्यनुमेयवेदस्यार्थपरत्वाविघातान्न्यायापेक्षत्वाच्च स्मृत्यर्थनिर्णयस्य तदर्थं शास्त्रारम्भप्राप्तेरिति चोदयति—नन्वस्वाध्यागरूपेति। एतद्वाद्धान्तपूर्वकं स्मृतिमूलवेदानुमानमिति परिहरति—मैवमिति। पुराणादेरपि धर्मस्थानत्वमेतत्पूर्वक-

---

१. स्वाध्यायरूपं नित्या० क.

प्रत्यक्षवेदेऽनर्थपरे नार्थपरवेदानुमा स्मृतितोऽपि युक्ता, अयोग्यस्याननुमानात् । वेदे चानर्थपरे तन्मूलानीतिहासपुराणादीनि धर्मस्थानान्यपि नार्थपराणीति न तदर्थमपि शास्त्रं युक्तम् । ननु मानान्तरविषयार्थे लौकिकवाक्येऽर्थपरे न्यायापेक्षे शास्त्रमर्थवत् । मैवम्; अभिप्रायाधीने वाक्यार्थे नातीव शास्त्रापेक्षा । अथवा नाध्ययनविध्याक्षेपाच्छास्त्रारम्भ इत्येतावन्मात्रमत्र निरस्यते, हेत्वन्तरादारम्भोऽत्र न चिन्त्यते ।

### भट्टमतनिरूपणम्

अत्र परैरेवं चिन्तितम्—विध्यवरुद्धाया भावनाया नापुरुषार्थमध्ययनं भाव्यम्; स्वाध्यायार्थबोधौ च विध्यानर्थक्यापत्तेरभाव्यौ । अतोऽतिदेशागतार्थवादोक्तपितृतृप्तिद्वारकं सार्वकाम्यं भाव्यं कल्प्यम् । नच शास्त्रातिदेशानुपगमादर्थवादानतिदेशः, शब्दभावनायाः स्तुतिरूपोपकारजनकतया तदतिदेशात् । अतः फलभावनाकरणाध्ययनार्थत्वात् स्वाध्यायस्यानर्थपरतया विषयप्रयोजनाभावादनारभ्यं शास्त्रम्—इति पूर्वः पक्षः ।

---

मित्याह—वेदे चानर्थपर इति । ननु मानान्तरगम्यार्थलौकिकवाक्यमपि न्यायाधीनवचनव्यक्तिकमिति तन्निर्णयार्थं शास्त्रमस्तु इति चोदयति—ननु मानान्तरेति । वक्त्रभिप्रायपूर्वकेऽर्थबोधे तदुचितान्वयव्यतिरेकानुसन्धानं प्रधानहेतुः, वाक्यवृत्त्यनुसन्धानन्त्वप्रधानमिति न तदर्थमारभ्यमित्यारम्भहेत्वभावादनारभ्यतां निराकर्तुं युक्तमित्युक्तमिति परिहरति—मैवमिति । एतच्च परमताङ्गीकारेणोक्तम्; वस्तुतस्तु अध्ययनविध्याक्षिप्तशास्त्रारम्भमात्रमत्र साध्यते तदनाक्षेपनिराकरणेन, हेत्वन्तराधीनारम्भो न चिन्ताविषय इत्याह—अथवेति ।

न्यायोक्तावपि परपक्षे मान्द्यं दर्शयितुं तदीयां गतिमाह—अत्र परैरेवमिति । तत्रार्थवादातिदेशोक्तिः दशमाद्ये शास्त्रातिदेशनिरासान्न सिद्धान्ततया पञ्चिकाकारेण तन्मुखं तत्पूर्वपक्षोपपादनम्—इति केनचिदुक्तम्, तत्परिहारार्थमाह—नच शास्त्रातिदेशानुपगमादिति । उपकारजनकतयैव मन्त्रवत्तदतिदेशवर्णनं नान्यथेति न तद्विरोध इति । एवमार्थवादिकफलस्य भाव्यत्वेऽध्ययनस्य तदर्थत्वात् स्वाध्यायोऽध्ययनशेष इति अर्थपरत्वाभावेन पूर्वपक्षिते तव्यश्रुत्यवगतकर्मस्वभावस्य स्वाध्यायस्य व्युत्पत्तिसिद्धार्थपरत्वबलाद्भाव्यत्वे शीघ्रलब्धे तदुपस्थापितक्रत्वनुप्रवेशकल्पनया नियमविधिविषयत्वसम्भवादार्थवादिकफलकल्पनानवकाशादर्थपरतैवेति ।

सिद्धान्तस्तु तव्यावगतकर्मत्वस्य स्वाध्यायस्यैव भाव्यता । व्युत्पन्नार्थप[1]रत्वानुरोधात् क्रत्वनुप्रवेश[2]कल्पनया भावनाया विधेरर्थव[3]त्त्वात् । एवमर्थपरतया विषयप्रयोजनलाभादारभ्यं शास्त्रम्—इति ।

भट्टमतनिराकरणम् ।

तदयुक्तम्; लिङाद्यर्थो हि भावना अपूर्वभाव्यैव श्रुतेति न पूर्वपक्षे भाव्या[4]न्तरकल्पना । राद्धान्तेऽप्यनीप्सितकर्मणः स्वाध्यायस्य न भाव्यता; अपूर्वस्य भाव्यत्वात् स्वाध्यायस्यानीप्सितता । नच दूरस्थविध्यनुवादः । नचानारभ्याधीतत्वेऽपि कर्मबोधकतया कर्माव्यभिचारात् कर्मविध्यनुवादः,

तदयुक्तमिति । स्वमतसिद्धेन विधितत्त्वेन दूषयति । भावना हि कृत्यात्मिका अपूर्वभाव्यैव श्रुता इत्याकाङ्क्षाऽभावान्न पूर्वपक्षे भाव्यकल्पना । सिद्धान्तेऽपि इत्यपिशब्द आकाङ्क्षाऽभावानुषङ्गार्थः । अनीप्सितकर्मण इति दूषणान्तरम् । तदुपपादयति—अपूर्वस्य भाव्यत्वादिति । "सुवर्णं भार्यम्" इतिवत् इत्यर्थः । ननु हन्त्यादाविवापूर्वानुवादेन कर्मण ईप्सितत्वमेवास्तु इत्यत्राह—न च दूरस्थेति । साधिकारविधिसन्निधानात्तत्र तदर्थत्वावगतेस्तदनुवादेन तद्द्वारतया कर्मेप्सितं गम्यते; दूरस्थत्वादिहानुवादायोगान्न तत्साम्यमित्यर्थः । पर्णतादावस्त्येव विधिसन्निधिः पदार्थमुखेनेत्येतावान्विशेषः । तथाऽऽधानेऽपि "अर्द्धोदिते सूर्य आहवनीयमादधीत" इत्यादिवाक्यान्तरसमभिव्याहारादग्निपदस्याहवनीयाद्यर्थत्वावगमात्, तेषां चेप्सिततयैवान्वयार्हत्वादगत्या भाविविनियोगप्रतिसन्धानेनेप्सितत्वावगमे तत्साध्यक्रतुविधीनां तदुपायाधानप्रयोजकत्वेन सन्निधानात्तद्विध्यनुवाद इति भावः । नन्वेवं जुह्वादिमुखेनेव स्वाध्यायमुखेन क्रतुविधिसन्निधेस्तदनुवादसम्भवाद् ईप्सितत्वं स्वाध्यायस्य स्याद् इत्यत्राह—न चानारभ्याधीतत्वेऽपीति । बोधकत्वेनैव हि स्वाध्यायस्य क्रतुसंस्पर्शः; तत्र च हुमादीनामबोधकत्वेन व्यभिचारात् जुह्वादिवैषम्यात् स्वाध्यायस्य न विध्युपस्थापकत्वम् । नच तेषां सामान्तर्भावात्तद्द्वारेण क्रतुसम्बन्धसिद्धेरव्यभिचारः, सामान्तर्भावेऽपि तेषां सामकार्यस्पर्शो नास्ति; सामपरिच्छेदमात्रकार्यतया तेषां नवमप्रसिद्धत्वात् तस्य च दृष्टत्वाद् अध्ययनगृहीतैरेव कार्यं इति नियमविधिविषयत्वं नास्तीत्यध्ययनेप्सितत्वानुपपत्तेः स्तोभेतरमात्रस्य च तद्व्याप्याध्ययनेप्सितत्वायोगात् स्वाध्यायस्येप्सितत्वनिवृत्ति-

१. रा. क.
२. कं भावना ख.
३. परत्वात्. क.
४. भाव्यकल्पना. क.

हुमित्येवमादीनां स्तोभाक्षराणामकर्मबोधकत्वेन व्यभिचारात्। तात्पर्यसन्देहे चार्थपरत्वस्यानुरोध्यत्वान्न शास्त्रारम्भः। तन्मते च क्रतुविधिप्रयुक्तमध्ययन-

रेवेति स्वसम्बन्धिविध्युपस्थापकत्वमपि नास्तीति अभिप्रायः। एवं तव्यावगतेप्सितत्वबलात् क्रत्वनुप्रवेशकल्पनेत्येतदयुक्तम्, अनीप्सितत्वनिश्चयादित्युक्तम्। व्युत्पन्नार्थानुरोधादित्येतदप्ययुक्तमित्याह—तात्पर्यसन्देहे चेति। प्रतिवाक्यावसेयतात्पर्यनिर्णयोपाधिकमेव च लोकेऽर्थबोधकत्वं शब्दानां व्युत्पन्नम्; न सर्ववाक्यसाधारणपदशक्तिमात्रात्, अत्यन्तव्यावृत्तवाक्यार्थविषयत्वादभिधानस्य। तच्च तात्पर्यं वेदे सिद्धान्तस्थितेः प्राक् सन्दिग्धम्, पूर्वपक्षिणाध्ययनस्यान्यार्थतोक्त्यापादिताविवक्षितार्थत्वशङ्कानुवृत्तेः। तेन सन्दिग्धतात्पर्यनिर्वाहार्थं क्रत्वनुप्रवेशकल्पनाद्ययुक्तम्, "सुवर्णं भार्यम्" इत्यत्रापि तदापत्तेः इति परोक्तविधया शास्त्रारम्भो दुस्साध इत्यर्थः।

केनचित् क्रत्वनुप्रवेशकल्पनां विना नियमविधिपरत्वासंभवेऽपि तत्फलमध्ययनव्यतिरिक्तोपायेन स्वाध्यायग्रहणरूपमुपायान्तरेण ग्रहणे प्रत्यवायकल्पनया समर्थितम्; तत् निरासादरमपि नार्हति, कल्पकाभावात्। सत्यामपि कल्पनायां क्रत्वसिद्धिरूपश्चेत्प्रत्यवायः सोऽध्ययनस्य क्रत्वङ्गत्वं विना दुरुपगम इति न विधान्तरं स्यात्। नरकादिप्राप्तिरूपश्चेत्तत्प्रापकक्रियानिषेध एव ततो वाक्यार्थः स्यात, नाध्ययनविधिरिति न तदनन्तरं जिज्ञासाहेतुस्तद्वाक्यार्थ इति नेयं चिन्ता स्यादिति अनादृत्यमेव तत्। अपशूद्राधिकरणव्याघाताच्च परसिद्धान्तो न सूत्रभाष्यानुमत इत्याह—तन्मते चेति। ननु स्वमतेऽप्युपनयनप्रक्रमेणाम्नातोऽध्ययनविधिरुपनीतकर्तृकाध्ययनविषय इत्यनुमतमेवेत्यनुपनीतशूद्रस्य यथाश्रुतमशक्यमिति क्रतुविधयोऽपि न प्रयुञ्जत इति तेऽपि विद्वत्त्रैवर्णिकविषया एव स्युरिति शङ्कानिवृत्त्यर्थमनुपनीतस्यापीत्युक्तम्। अयमर्थः—आचार्यकरणविधिप्रयुक्ताध्ययनपक्ष एवाध्ययनविधेरुपनीतकर्तृकाध्ययनविषयत्वसिद्धिः। तदाहि तदङ्गमुपनयनं स्वाधिकारसिद्ध्यर्थमाचार्यः करोति; तदङ्गत्वं च सामर्थ्यादुपनेयासत्तिद्वारकमित्युपनेयस्याध्ययनोपयोगिक्रियापेक्षास्तीति तद्बलादेव प्रक्रमावगतोपनीतकर्तृकत्वधीः न श्रुतिबलादेव; न ह्युपनेयस्य कर्मणोऽचेतनसमस्यान्यतन्त्रस्याविदुषः स्वकर्तृकक्रियापेक्षास्ति। न चाध्ययनस्यापि गुणकर्मणो गुणिवशेनान्यार्थस्य तत्कर्त्रनुष्ठेयतयोपस्थितस्य स्वनिष्ठकर्त्रपेक्षेति साक्षाच्छ्रुतिमन्तरेणान्योन्यसम्बन्धो न स्यादिति; तन्मतेऽनुपनीतस्यापि क्रतुविधिप्रयुक्तमध्ययनमनिवार्यमिति।

---

१. र्यस्य सं. क.

मनुपनीतस्यापीति शूद्रस्याप्यधिकारो विद्यासाध्ये कर्मणि स्यात्। उपनेयस्यैव ह्यनुपनीतावस्थस्य निषेधः, नानुपनेयस्यापि शूद्रस्य। यस्तु शूद्रोल्लेखेन[1] निषेधः, नासौ क्रत्वधीनप्रवृत्तिविषयः। गुरुनये त्वाचार्यकरणविधिप्रयुक्त-विद्वत्त्रैवर्णिकलाभे क्रतु[2]प्रयुक्त्युपरतेर्निर्विद्यः शूद्रः; रागाधीनप्रवृत्तिस्तु निषिद्धेति न शूद्राधिकारप्रसङ्ग इत्याचार्यकरणविधिप्रयुक्तिपूर्वकमेव पूर्वोत्तर-पक्षवर्णनम् ॥

अध्यापनविधेः अपूर्वत्वम्।

ननूपनीयाध्यापके लोक आचार्यपदप्रयोगात्तत्कर्तृतैव लोकसिद्धाचार्य-

---

नन्वेवमनुपनीतस्य वेदाभिव्याहरणनिषेधाच्छूद्रस्याध्ययननिवृत्तिरित्यत्राह—उपनेयस्यैवेति। यं हि भावो विशिनष्टि तमेव तदभावोऽपि श्रुत्या इति त्रैवर्णिकविषय एव सः; अकिशोरशब्दात् अनश्वाप्रतिपत्तेरित्यर्थः। नन्वेवमपि शूद्रशब्दप्रयुक्तनिषेधात्तन्निवृत्तिरित्यत्राह — यस्तु शूद्रोल्लेखेनेति। वैधप्रवृत्तिविषयत्वं हि निषेधस्य स्वतो न युक्तमिति रागप्राप्तविषयत्वसम्भवे तद्विषय एव सः; प्रायश्चित्तश्रुत्यनुरोधाच्चेति भावः। स्वमतेऽपि तर्ह्ययं विरोधो निरधिकाराध्ययनविधेः क्रतुविधिप्रयुक्त्यनिवारणात् तुल्य इत्यत्राह—गुरुनये त्विति। तत्रोपनयनस्याचार्यकरणाध्यापनाङ्गत्वात् स्वाङ्गोपनयनद्वारभूताध्ययनस्याचार्यकरणविधिरेव प्रयोजकः; स चोपनीताध्ययनमेव प्रयुङ्क्ते; तत्प्रयुक्तविद्याधिकारिलाभान्न क्रतुविधयोऽध्ययनप्रयोजकत्वगुरुव्यापारेण शूद्रादित्रिषया इति तेषां न तद्विधिप्रयुक्ताध्ययनप्राप्तिः। रागप्रवृत्तेश्च निषिद्धत्वादविद्वत्तया विद्यासाध्ये कर्मण्यशक्तास्ते इत्यपशूद्राधिकरणविरोधाभावादाचार्यकरणविधिप्रयुक्तिपूर्विकैव सूत्रगतिर्भाष्यकाराद्यभ्युपगतेत्यर्थः। पूर्वोत्तरपक्षवर्णनमित्यनेन तत्प्रयुक्त्यनङ्गीकारेण कथञ्चित्पूर्वपक्षसम्भवेऽपि विधिवृत्त्यसम्भवात् उत्तरपक्षासम्भवो व्यक्त इति दर्शितम् ॥

नन्वाचार्यत्वस्याहवनीयादिवदलौकिकत्वे सति तत्करणाध्यापनविधिः स्यात्; तस्य तु लौकिकत्वान्न तद्विधिरित्याक्षिपति—ननूपनीयाध्यापक इति। तदभिप्रायो विवृतः—

"लोके क्वाप्यप्रयुक्तत्वाद्विधिसाध्ये प्रयोगतः।
अलौकिकार्थं यूपादिपदं कामं प्रसिध्यतु ॥
नालौकिकार्थमाचार्यपदमेतद्द्वयात्ययात् ।
मुखं गुरुमतस्येत्थं खण्डितं किल पण्डितैः ॥" इति।

---

१. उल्लेखेनैव. क.    २. क्रतुविधिप्र. क.

तेति न तत्र विध्यपेक्षा । मैवम्, स्मृतौ "उपनीयाध्यापयेत्" इति विधिमुक्त्वा विधिप्रसिद्धमर्थं "यस्तु" इति निर्दिश्याचार्यलक्षणं कृतम् । अतो वचोभङ्ग्या विहितानेकनियमकोपनयनयुक्ताध्यापने कृत आचार्य इत्युक्तम् ।

---

परिहरति—मैवमिति । श्रुतिस्मृतिप्रयुक्ताचार्यपदार्थसंशयनिवर्तकमाप्तैस्तल्लक्षणमिदं कृतमिति तावदास्थेयम् "उपनीय तु यश्शिष्यम्" इत्यादि । तत्र लक्ष्यलक्षणतद्वाचिवाक्यस्वभावालोचने यदि विध्यनपेक्षमेव तल्लक्षणं सुवचं स्यात्, तदा माभूत्तद्विधिः । तद्वाक्ये तावदध्यापयेदिति विधिरुक्तः, नच सोऽनुपयोगी, तल्लभ्यत्वाल्लक्षणभूतस्यार्थस्य । न ह्यध्ययनानुष्ठानानुपपत्त्या तावत्तदाक्षेपमात्राद्विनापि विधिं तदनुष्ठानसिद्धिः, निरधिकारतया स्वविषयानुष्ठानेऽपि तद्विधेरशक्तत्वात् क्रत्वनुप्रवेशकल्पनायाश्चापाकृतत्वात्, विश्वजिद्वदधिकारकल्पनायाश्चार्थपरत्वभङ्गेन विधेरेवासिद्ध्यापत्तेः, अर्थबोधार्थितायाश्च द्रव्यार्थितया द्रव्यार्जनविधाविव तात्पर्यसिद्धेः प्रागयोगात् । सति त्वध्यापनविधौ तस्य चाचार्यभावफलावसायित्वाद् अध्ययनप्रयोजकत्वसम्भवात् तत्प्रयुक्ताध्ययनविधेश्च वक्ष्यमाणन्यायेनार्थज्ञानाधिकारपर्यवसायितयाध्येत्रर्थतयाऽऽचार्यदक्षिणादानादिकरत्वात्तल्लाभार्थं तदर्थ्यध्यापयेदितिअध्यापनविधिसिद्धिः । लक्षणमात्रविवक्षायाञ्चासंशयार्थम्–'उपनीय तु यश्शिष्यं द्विजोऽध्यापयति श्रुतिम्'इति लक्षणमवक्ष्यत् । तदनुपयोगिविध्युक्तेरनाञ्जसत्वादनाप्ततां च वक्तुरापादयेत् । विधेयस्य तु लक्षणत्वे विवक्षिते विध्युक्तिराञ्जसीति विधिसिद्धमेवाध्यापनरूपन्निर्दिश्य यस्तु इत्यादिना लक्षणमपि कृतमित्युपेयम् । नच वाक्यभेदापत्तेरुभयविवक्षानुपपत्तिः, वक्तृतन्त्रे वाक्ये वाक्यभेदस्य चोदनालक्षणसूत्रेऽर्थपदं प्रयुञ्जता सूत्रकारेणैवादोषतया ख्यापितत्वात् । लक्षणञ्चेहोपाध्यायलक्षणात् केवलाध्यापनरूपाद्यस्तीति तुशब्देन व्यावर्त्योपनयनसमानकर्तृकत्वमुक्तम् । समानकर्तृकता च विध्यविवक्षायां च न स्यात्, स्वतन्त्रयोस्तदनर्हत्वेनाङ्गाङ्गिभावापेक्षत्वात् । एवंलक्षणतद्वाक्यात्तावत्तद्विधिरवभाति ।

लक्ष्यमुखेनापि विधिं वक्तुं लक्षणस्यानेकनियमापेक्षतया अभूततया च लक्ष्ययोगं दर्शयति-अतो वचोभङ्ग्येति । यतो विधिप्रसिद्धं लक्षणं कृतम्; अतोऽविहितस्यानेकनियमायोगात्तद्युक्तमेव लक्षणं गम्यते । तेन क्रमभावित्वादुपनयनवेदकल्परहस्याध्यापनानां सहत्वासम्भवात् अकृतस्य च शब्दवाच्यत्वानुपयोगाद भूततयैव तद्धेतुत्वमुक्तं स्यात् । न ह्येकफलावच्छिन्नैकधातूपात्तक्रियाणामेकदेशोपयोगेऽपि तत्फलोपनीतकृत्स्ननिमित्तव्यपदेशवदनेकधातूपात्तानेकक्रियाणामप्रसिद्धैकफलानामेकयोगमात्रेऽपि तत्फलोपनीतकृत्स्ननिमित्तव्यपदेशसिद्धिरिति भूततयैव सर्वं तदुत्तरकालानुवर्तमानसर्वसाध्यफलव्यवधानेन तन्निमित्तमित्युक्तं स्यादित्यर्थः । ननु

तद्यदि क्रियागर्भोऽध्येत्रध्यापकसम्बन्धोऽप्यनुवर्तते, तथापि न तावन्मात्रे शब्दः, दृष्टस्यानियमे नियमे चाभेदाददृष्टादेव भेद इत्यलौकिके शब्दः; तदलौकिकं विध्यर्हं फलम्; इयमेव यूपाहवनीयादिविधौ । उपाध्यायशब्दस्तु नियमानपेक्षोऽध्यापकमात्रे स्मृत इति लौकिकार्थो न विध्यर्हार्थ इति भेदः ।

### अध्यापनविधौ विधान्तरम्

इयं वा विधा--अध्यापनक्रियातिवृत्तौ तत्कारकत्वेऽतीत एव "आचार्याय वरो देयः" इत्यादिश्रुतेस्तदासावाचार्यो वाच्यः । न च भूतपूर्वगत्योपलक्षणेन तदासावाचार्यः[1] । नच लौकिकं किञ्चित्तद्गतं रूपमुपलभ्यते । अतोऽलौकिके तद्गते रूपे सति दानविध्यर्थः श्रौत इत्यलौकिकार्थता भाति । सा च तदुत्पत्ति-

गतिक्रियाफलसंयोगवदध्यापनोत्थः संबन्धः प्रसिद्ध एवानुवृत्त्यर्ह इति नेह विधिकृतः समस्तीत्यत्राह—तद्यदि क्रियागर्भ इति । सकर्मकक्रियामात्रं तावन्न गतिक्रियादृष्टान्तेन कर्तृकर्मसम्बन्धकरमिति अनुमानार्हम्, भूतादिसकर्मकक्रियास्वसम्भवात् । तेनानन्यथासिद्धफलान्तरविशिष्टसकर्मकक्रियानुवर्तिन्येव तत्फलकत्वव्याप्तिर्ग्राह्येति इह तद्विशेषणसत्त्वैव न निश्चिता । यद्यपि तद्भावात्सम्बन्धानुवृत्तिः स्यात् तथापि नाचार्यशब्दस्तन्निर्वचननिमित्तः स्यात्, तदवृत्तेरुपनयनाध्यापनवर्त्यशेषनियमनिमित्ततया स्मृतिसिद्धत्वात् । अनुमितसम्बन्धस्य च तदभावेऽपि भावात् । तेन तदतिक्रमेण तन्नियमसाध्यादृष्टनिमित्ता तद्वृत्तिरुपेया इत्यर्थः । तेन तदर्थो विधिरुपेय इत्याह—तदलौकिकमिति । संप्रतिपन्नादृष्टार्थाहवनीयादावपि विधिप्राप्तिनियमातिक्रमेण तत्तत्क्रियामात्रे पदप्रयोगाभाव एवादृष्टार्थत्वहेतुरित्याह—इयमेव यूपाहवनीयेति । नियमानपेक्षत्वमुपाध्यायपदे विशेष इत्याह—उपाध्यायशब्दस्त्विति ।

कार्यैक्यात् कर्मणो योगो योगश्चेत् कल्प्यमेव तत् ।
दृष्टाभावेऽप्यदृष्टं स्यादिष्टं चेत्तद्विधेः फलम् ॥ इति सङ्ग्रहः ।

यद्यपि लक्षणस्मृतेरविधिपरतयाप्यन्विताार्थता संभवेत् तथाप्यतीत एव तल्लक्षणे तल्लक्ष्यार्थसंप्रदानकदानादिविधिस्तदा तत्सत्तां ज्ञापयंस्तत्कारकत्वातिरिक्तादृष्टार्थतां शब्दस्यापादयन् तज्जनकताञ्च लक्षणस्य कल्पयन् तद्विधिपरतामपि गमयेदित्याह—इयं वा विधेति । स्मृतेश्च लोकव्यवहारमात्रफलानर्हत्वात् आचार्यपदार्थनिर्णयापेक्षवरदानाद्यनुष्ठानफलतैवोपेयेति तद्विधिवाक्यवर्त्याचार्यपदार्थज्ञापनपरत्वनिश्चयात्तस्य च संप्रदानावस्थार्थत्वसिद्धेस्तदवस्थस्य चोपलक्षणयोगाभावाद-

1. Added वाच्यः क.

विधेर्निर्वहतीत्युत्पत्तिविध्यपेक्षायां स्मृतेरपेक्षितविधिपरता लक्षणान्वाख्यानरूपाया अपि निश्चीयते। "योऽध्यापयेत्" इति च यत्पदस्यावधृते तात्पर्ये न विध्युपघातकता "यदाग्नेयः" इतिवत्। एवमुपनीय वेदाध्यापनेनाचार्यकं भावयेत्—इत्येवंरूपवेदानुमानसिद्धिः। यूपाहवनीयादावप्येवमेव; तत्र[1] विहिततक्षणाभ्यञ्जनादिकारकतातिवृत्तावपि यूपाहवनीयादि-

---

नवगतस्य च तदुपलक्ष्यानर्हत्वात्तज्ज्ञापनप्रवृत्तायाः स्वोपस्थाप्यलक्षणसाध्यतदवस्थानुवृत्यर्हफलापेक्षयैव तज्ज्ञापनार्थत्वात्तद्विधिपरत्वं विना च तदयोगात् तदर्थं विधिपरतापि स्पष्टैव; अन्यथास्य व्याख्येयश्रुत्यर्थबाधकत्वापत्तेश्चेत्यभिप्रायः। यथोक्ततात्पर्यसिद्धेर्विधौ यच्छब्दोऽपि न तद्विरोधीत्याह—योऽध्यापयेदिति चेति। यत्पदगतिरुक्ता—

"समासाद्यन्तरेणापि वाक्यार्थस्य पदार्थताम्।
कर्तुं वाक्यान्तरे श्रुत्या प्रसिद्धे यत्पदं स्मृतम्"॥ इति।

नन्वाचार्यकरणविधिप्रयुक्तत्वमध्ययनस्य साधयितुं आचार्यत्वकामोऽध्यापयेदिति अधिकारविधिरूपवेदानुमानं साधयितव्यम्, किमिति विनियोगमात्ररूपवेदानुमानमुक्तमिति शङ्कामुक्तोपजीवनेन परिहरति—एवमुपनीयेति। वरदानादिविधिगताचार्यपदार्थान्वाख्यानार्थं तदपेक्षितविधितात्पर्यकस्मृत्यनुमेयत्वमाचार्यकरणविधेरेवमित्युक्तम्; तदनुमेयस्य साधिकारदानाविध्यवगाहित्वावगमात्तदपेक्षितालौकिकाचार्यपदार्थोत्पादकक्रियाविनियोगोपक्षीणता स्मृतेर्न्याय्या; न तद्विषयाधिकारविधिपरता, गौरवादपेक्षाभावाच्च; तन्मात्रपरता प्रत्यक्षवेदेऽप्याधानादिविधेः सिद्धैवेति नानुमेये काचिदनुपपत्तिः। स्मृतिवाक्यस्थापि विधिश्रुतिर्नार्पूर्वनियतेति नाधिकारापेक्षा। न चैवमाधानवदध्यापनस्यापि दानविधिप्रयोज्यत्वापत्तेरध्ययनप्रयोजकत्वासिद्धिः विनियोगमात्रविषयस्याप्याचार्यकस्य दक्षिणादिलाभकरतयाध्यापकाभीष्टत्वादध्यापकाधिकारापादकत्वं वस्तुवृत्यास्त्येवेति तदर्थमध्ययनप्रयुक्त्यवसायितापि युक्तैवेति न काचित्क्षतिः। न चैवमृत्विक्त्वस्यापि क्रतुप्रयोजकत्वापत्तिः, तस्य यजमानाधिकाराधीनतत्कर्तृकवरणादिसाध्यतया स्वातन्त्र्याभावादिति भावः। भावस्त्वयं ग्रन्थे न प्रकटीकृतः, अधिकारपर्यन्तत्वेऽपि स्वसिद्धान्ताविरोधादिति मन्तव्यम्। प्रकरणोक्तयूपाहवनीयादिसाम्यं विधाद्वयेऽपि तुल्यमित्येतदर्थमाह—यूपाहवनीयादावपीति। ननु स्मृत्यादौ लोकाप्रसिद्धपदार्थलक्षणतयोक्तस्यापि विधियोग्यार्थस्य तदर्थविधिविषयत्वोपगमे 'यस्योपनयनकालोऽतिपतेत् स व्रात्यः' 'य आ तृतीयात्पुरुषात् सोमं न पिबेत्स दुर्ब्राह्मणो व्रात्यः' इत्यत्रापि

---

१. तत्रापि तक्षणाभ्या(ञ्ज)नादि. ख.

पदप्रयोगस्य वेदे दृष्टरूपाविशेषेऽपि कदाचिद्दर्शनादलौकिकार्थता। व्रात्यता तु निन्दिता न विध्यर्हा सोमपानश्रुतिविरुद्धा चेति न तत्स्मृतेर्विध्यनुमा। उपाध्यायपदे तु यदि कारकतातिवृत्तावपि वेदे निर्देशोऽस्ति, तदा तत्पदमप्यलौकिकार्थं यूपादिवत्; अथ न, तदा लौकिकार्थम्। लोके तु तत्पदप्रयोगोऽभिप्रायवशात् भूतपूर्वगत्यापि युक्त, अवेदाध्यापकेऽप्युपाध्यायपदप्रयोगवत्। एवमाचार्यपदमपि लोके भूतपूर्वगत्या। भ्रान्तिमूलश्च कौलादावपि तत्पदप्रयोगः।

यत्तु विधित एवालौकिकार्थाश्रयणम्, तथाङ्गान्वयात्; तन्मन्दम्, प्राग्विधित्वासिद्धेः। सिद्धावपि संस्कारविधिमात्रता प्रोक्षणादिविधेरिव व्रीह्यादौ;

---

तदर्थविधिः स्यादित्यत्राह—व्रात्यता तु निन्दितेति। ननु लक्षणवाक्यस्य विधिपरत्वं विना स्वतात्पर्यविषयासिद्धिः, अतो विधिपरत्वे हेतुरुक्तः; व्रात्यलक्षणवाक्यस्य तदभावात् कथं तत्परत्वापत्तिः शङ्क्यते? उच्यते—तद्भावोऽगमेनापि निन्दाविषयत्वेन विध्यनर्हत्वान्न विधिपरतोच्यतेत्येतदर्थं तद्द्रष्टव्यम्। तर्ह्युपाध्यायलक्षणवाक्यस्य विधिपरतापत्तिरित्याशङ्क्य अस्त्वस्मिन् प्रकारे, पूर्वोक्तप्रकार एव तन्निवृत्तिरिति विशेषमाह—उपाध्यायपदे त्विति। तत्र तत्र तत्स्मृतेः स्यात् विध्यनुमा; कारकत्वातिवृत्तावपि वेदे तत्पदप्रयोगे सति तद्वददृष्टार्थत्वाहानादित्यर्थः। ननु कारकत्वेऽतीते लोकप्रयोगोऽप्यदृष्टार्थगमक एव, केन विशेषेण वेद इति विशेषग्रहणमित्यत्राह—लोके त्विति। तत्राभिप्रायव्यवहितः प्रयोगस्यार्थयोगः, वेदे त्वव्यवहित इति तत्रैव स्वतोऽर्थतन्त्रता; लोके त्वनन्यथासिद्धचा—इति विभागाद्विशेषोक्तिरित्यर्थः। लौकिकप्रयोगस्याभिप्रायतन्त्रतयार्थाऽनपेक्षत्वमपि पारम्पर्येण दृष्टमिति दृष्टान्तच्छलेनाह—अवेदाध्यापक इति। एतदाचार्यपदेऽपि तुल्यमित्याह—एवमाचार्यपदमपीति। निमित्तान्तरमप्याचार्यादेऽस्तीत्याह—भ्रान्तिमूलश्च कौलादावपीति। "यद्रोचते तत् सेव्यं लोकवर्जितं न वर्जयेत्, आनन्दरूपमात्मानं भोगाभ्यासेन पश्यन्ति" इत्येवंजातीयकग्रन्थार्थनिष्ठाः कौलादयो वेदबाह्याः; तेषु वैदिकप्रयोगस्य मूलतयाप्यस्पर्शाद्विप्रलम्भार्थंप्रणीतग्रन्थतदुक्तकुमन्त्रग्रस्तचित्तेषु तदुत्थापितभ्रान्तिमूलस्तत्पदप्रयोग इत्यर्थः।

एवं विधाद्वयेनालौकिकार्थत्वं समर्थ्य परमतमनूद्य दूषयति—यत्तु विधित एवेति। "अध्यापयेत्" इति विधेयाध्यापनकर्तर्याचार्यपदप्रयोगाद् अदृष्टकार्यार्थितया

---

१. Omitted अपि. क.

न हि व्रीहिपदमप्यलौकिकार्थम्। अङ्गान्वयोऽप्यसिद्ध एव, लौकिके हि पुरुषार्थता प्राङ्मुखतादेरिव भोजनाद्यन्वयेऽपि इत्यभिसन्धायोक्तम्—आचार्यत्वस्य यूपादिवदलौकिकत्वात्तदुत्पत्तिविधानं युक्तम्—इति।

आचार्यकरणविधेः श्रुतिसिद्धत्वम्

श्रौतो वा आचार्यकरणविधिः उपनयने आचार्यकरणप्रयोजनके आत्मनेपदस्मृतेरध्यापनविधिरपेक्षिताचार्यकरणविधिरेव, न त्वयं प्रयोज्यव्यापाररूपाध्ययनविधिः। "एतयान्नाद्यकामं याजयेत्" इति तु कामिन एव विद्ध्यपेक्षेति याजनमनुवादो युक्त एवेत्युपनयनाङ्गकश्रौताचार्यकविधिसिद्धिः।

---

च विधिसम्भवात् तज्जन्यमदृष्टं तत्पदवाच्यमित्येकं मतम्, "उपनीय" इति क्त्वातोऽध्यापनाङ्गत्वावगमाद् अदृष्टकार्यार्थमेवाङ्गापेक्षेत्यदृष्टमेव साङ्गाध्यापनसाध्यमाचार्यत्वमिति मतान्तरम्। तत्र चाद्यमदृष्टार्थत्वनिश्चयात् प्राक्विध्यसिद्धेरयुक्तम्, वृत्त्यर्थतया प्राप्तस्य फलान्तरानिश्चये विध्यवगमायोगात्। तदवगमेऽपि तज्जन्यादृष्टवाचिताऽऽचार्यपदस्य न स्यात् प्रोक्षणादिविधाविव व्रीहिपदस्य, कर्तृवाचितयैव प्रसिद्धत्वात्। द्वितीयमप्यविधेयेऽध्यापनेऽङ्गत्वासिद्धेरयुक्तम्, भोजनाद्याश्रितप्राङ्मुखत्वादेरिव पुरुषार्थतापत्तेः। तेनालौकित्वसाधनपूर्वककत्वात्तदर्थाध्यापनविधेर्युक्तं ग्रन्थे तथैव तत्प्रसाधनमित्याह —इत्यभिसन्धायोक्तमिति।

एवं प्रकरणोक्तमुपपाद्य विवरणमतानुसारतोऽपि आचार्यकविधिसमर्थनार्थमाह—श्रौतो वेति। सम्माननसूत्रगताचार्यकरणपदेनोपनयनमेवाचार्यकरणप्रयोजनकं निर्दिश्यते; तत्र वर्तमानान्नयतेरात्मनेपदं स्मृतमित्यात्मनेपदयुक्तोपनयनविधिना आचार्यत्वफलकोपनयनविध्यवगमे "तमध्यापयेत्" इति तदुपरितनवाक्यं तदपेक्षितस्मृत्यवगतस्वद्वारभूताचार्यकरणाध्यापनविधायकमेव स्यात्, नाध्यापनमात्रविधायकम् "तम्" इति तदेकवाक्यत्वावगमादित्यर्थः। ननु "एतयान्नाद्यकामं याजयेत्" इतिवत् प्रयोज्यव्यापारविधिनैवार्थप्राप्तत्वात्प्रयोजकव्यापारस्याविधेयत्वादित्याह—न त्वयमिति। अयमिति पूर्वोक्तापेक्षितविधिरूपविशेषपरः। तत्राप्यपेक्षितविधिबलेनैव श्रुतत्यागेनाश्रुतविधिः, श्रुतस्यैवापेक्षितत्वे तत्त्यागशङ्कापि नेत्याह—एतयान्नाद्येति। ननु अध्यापकफलाध्यापनविधौ "णिचश्च" इत्यात्मनेपदापत्तेः परस्मैपदश्रुतिरतत्फलतां गमयेदिति शङ्कानुवादेन तत्स्मृतेरतद्विषयतां तदपवादक-

---

१. पुरुषधर्मता. क.
२. Omitted याजयेत्. ख.
३. सिद्धचपेक्षेति. ख.
४. र्यकरणविधि. क.

न च "अध्यापयेत्" इति परस्मैपदान्नाचार्यकफलता, कर्त्रभिप्राये "णिचश्च" इत्यात्मनेपदापत्तेः इति वाच्यम्, कर्त्रभिप्रायेऽपि ण्यन्तादिङः "बुधयुध" इत्यादिना विशेषतः परस्मैपदविधेः। वृत्तिश्च 'अणावकर्मकात्" इति प्राप्तेरकर्मकेष्वचित्तवत्कर्तृकार्थतामाह, नेङि। न च इङि गत्यर्थे सूत्रम्, "माणवकमध्यापयति" इत्युदाहरणात्, चलनार्थसूत्राच्च प्राप्तेः। ननु क्त्वातोऽङ्गता कथञ्चिदस्तु, न त्वात्मनेपदादङ्गता; आचार्यकरणे ह्यात्मनेपदमकर्त्रभिप्राये स्मृतम्। आचार्यकविध्यङ्गं चोपनयनं कर्तृरूपाचार्यगतफलजनकं स्यात्। मैवम्; क्रियाफलं तदुच्यते, यत्कारकावस्थायां जात-

---

प्रदर्शनेन प्रदर्श्य परस्मैपदाविरोधमाह—न चाध्यापयेदिति। ननु "अचित्तवत्कर्तृकार्थोऽयमारम्भः" इति वृत्तिग्रन्थविरोधात् न चित्तवत्कर्तृकाध्ययनार्थेङ्विषयापवादार्थता बुधयुधस्मृतेरित्याह—वृत्तिश्चेति। सा वृत्तिरण्यन्तावस्थायां चित्तवदचित्तवत्कर्तृयोग्यनश्यत्याद्यकर्मकधातुष्वेवाचित्तवत्कर्तृकार्थतामाह; चित्तवत्कर्त्रवस्थायाम् "अणावकर्मकाच्चित्तवत्कर्तृकात्" इत्यनेनैव सूत्रेण परस्मैपदप्राप्तेरस्मिन् सूत्रे तत्पाठानर्थक्यापत्तेस्तत्परिहारार्थमचित्तवत्कर्तृविषयतोक्तेः। तेन सकर्मकाध्ययनार्थेङि बुधयुधसूत्रेण परस्मैपदप्राप्त्युक्तेः न वृत्तिविरोध इत्यर्थः। ननु बुधयुधसूत्रपठितेङ्धातुर्गत्यर्थः कस्मान्न स्यादित्यत्राह—न च इङि गत्यर्थे सूत्रमिति। गत्यर्थस्य आययतीति रूपमिति व्याख्यातृसङ्ग्रहोऽध्ययनार्थस्यैवेति नान्यः शङ्कनीय इत्यर्थः। "निगरणचलनार्थेभ्यश्च" इति सूत्रान्तराद्गत्यर्थात्तत्प्राप्तेश्चेहान्य एव ग्राह्य इत्याह—चलनार्थेति। समानकर्तृकतादिव्यवधानेन क्त्वोऽङ्गतोपस्थापकत्वमङ्गीकृत्य आचार्यकरणस्मृतात्मनेपदस्य तदशक्तिमकर्त्रभिप्रायविषयतया परोद्भावितां चोदयति—ननु क्त्वातोऽङ्गतेति। परिहरति—मैवमिति। आचार्यत्वफलापेक्षया तावदुपनयनस्य कर्त्रभिप्रायफलत्वं न शङ्कार्हम्, कारकावस्थागतस्यैवेप्सिततया श्रमादिविलक्षणस्य कर्त्रभिप्रायतया विवक्षितत्वादुपनयनकारकत्वस्य च तत्कालेऽतीतत्वात् न चैवमपि कर्तृनियतकर्माश्रितफलजनकाधानादिवदुपनयोऽप्यङ्गत्वादुपनेतृनियताङ्गच्यनुगुणकर्मासक्तिफलत्वात्तत्कर्त्रभिप्रायफलक इति वाच्यम्, दृष्टमात्रस्य तस्य भङ्गित्वात्स्वरूपमात्रेण दीर्घकालानुवृत्त्यङ्गच्युत्पत्त्यननुगुणत्वात् तदुत्थसंस्कारस्यैव स्थिरस्याङ्गच्यनुगुणतयोपेयत्वात् स एव कारकावस्थागतोऽनुज्ञेयः; स तूपनेयवर्त्येव, नाहवनीयादिवत् कर्तृनियतः; उपनेयनियतोपकारस्यापि भूयसो वक्ष्यमाणत्वात्; तेनाकर्त्रभि-

मीप्सितं च । न चोपनयनात्कारकावस्थायामाचार्यकरूपफलोत्पत्तिः । उपनेये तु कारकावस्थायामेव संस्कारः, ईप्सितश्चासौ इति कर्मगतमेवात्र फलमित्यकर्त्रभिप्रायतैव । "स्वर्गकामो यजेत" इत्यत्राप्याख्यातोपसन्दानात् ब्राह्मणतर्पणादिपर्यन्तस्य यज्यर्थस्य फलमपूर्वं कारकावस्थायां जातमेव । स्वर्गः परं न क्रियाफलमिष्यते । एवं लोकप्रयोगे सर्वत्रानुसन्धेयम् ।

यत्तु—एकस्यैव "उपनयीत" इत्यस्य वैदिकपदस्य साधुत्वं कर्त्रभिप्रायाकर्त्रभिप्रायलक्षणद्वयेन—इति, तन्मन्दम्; यदि उपनेत्रुपनेययोः स्वफलार्थम्—यदा माणवकोपयोगेनोपनयने प्रयुज्यते, तदा कर्त्रभिप्रायलक्षणतः साधुता; यदा त्वाचार्योपयोगेन, तदा अकर्त्रभिप्रायलक्षणतः—तर्हि

---

प्रायता युक्तैवेत्यर्थः । ननु कारकावस्थागतस्यैवात्मनेपदनियन्तृत्वे यजेतेत्यात्मनेपदं न स्यात्; स्वर्गादेस्तावत्तदवस्थत्वं नास्ति; न च नियोगस्य, यागोत्तरकालाङ्गसाध्यतया यागानन्तर्यायोगादिति लोकवेदव्यवहारोच्छेदः स्यादिति शङ्कां परिहरति स्वर्गकामो यजेतेत्यत्रापीति । आख्यातप्रयोगे कृतिविषयावस्थधात्वर्थधीनियमादिष्टफलावच्छेदेन च तद्विषयत्वधीरिति तज्जनकावस्थसाङ्गधात्वर्थवृत्तिस्तत्र धातुरित्यङ्गानन्तरजस्यापि कारकावस्थाश्रितत्वं स्यादेव; स्वर्गस्यैव तदभावात्तन्नियन्तृत्वासिद्धिरित्यनयैव दिशा लोके वेदे चोहनीयमित्यर्थः । केचित्तु कारकाकारकदशोत्पत्तिभेदानुद्भावनेन फलद्वयापेक्षया लक्षणद्वयेनाप्यस्य साधुत्वं द्वितीयाया इवेप्सितानीप्सितलक्षणद्वयेनाहुः । तदनुवदति—यत्त्वेकस्यैवेति । एकस्य सकृत्प्रयुक्तस्येत्यर्थः । प्रयोगभेदेनैव लक्षणद्वयविषयत्वं स्यात् नान्यथेति विरोधसूचनार्थस्तदनुवादः । वैदिकत्वं तदुपपादकम् । तन्मन्दमिति दूषयति—यद्युपनेत्रुपनेययोः स्वफलार्थमिति । प्रयोक्तृत्वावस्थाभेदापेक्षया व्यवस्थया लक्षणद्वयं साधुत्वे हेतुः तदा सकृत्प्रयुक्तं पदं तत्कालावस्थाभेदेन भिन्नार्थं व्युत्पत्तिविरुद्धमाश्रितं स्यात्, पदप्रवृत्तिभेदं विना साधुत्वे व्यवस्थानुपपत्तेः । यदि पुनर्व्युत्पत्त्यबाधार्थं नित्यमेवोभयप्रयोजनमिति सहैव लक्षणद्वयस्य साधुत्वं नियच्छेत्, तदा बहुविषयतयावश्यंभावित्रिकर्त्रभिप्रायलक्षणेनैव साधुत्वसिद्धौ लक्षणान्तरारम्भानर्थक्यापत्तिरित्यर्थः । अधिकारशास्त्रस्यैव तन्निमित्ताऽऽवृत्तिकस्य वैकल्पिकाङ्क्षापेक्षया कर्त्रशक्त्यपेक्षया च नानार्थत्वम्, नावृत्तिहीनविनियोगशास्त्रस्य; तस्याप्यौपादानिकप्रयुक्तवृत्त्यपेक्षया, नाभिधानावस्थापेक्षेति नेह तदाश्रयणी-

---

१. लोकवेदप्रयोगे. क.

सकृत्प्रयुक्तं पदं कालावस्थाभेदेन नानार्थं स्यात्। अथ नित्यमेवोभयार्थम्, तदा[1] कर्त्रभिप्रायतयैव सिद्धमात्मनेपदमिति व्यर्थं[2] लक्षणान्तरं स्यात्। शाब्दप्रक्रियाविरुद्धश्चायं प्रकारः। नन्वङ्गत्वे सत्युपनयनजन्यसंस्कारः प्रयोगापवर्गी स्यात्; पुरुषार्थसंस्कारान्तर्भावश्च संहितासु न दृश्येत। मैवम्; "द्विजातीनामध्ययनमिज्यादानम्" इत्यादिस्मृतेः पुन-

यमीति भावः। सूत्रव्याख्यातृसम्मत्यभावाच्च लक्षणद्वयसमावेशो नोपेय इत्याह—शाब्दप्रक्रियाविरुद्धश्चेति। ननु स्वपक्षेऽप्यङ्गजन्यः संस्कारः कर्माश्रितोऽप्यग्न्यादिसंस्कारवत् प्रयोगापवर्गी स्यादिति कर्त्रभिप्राय एवेत्यतद्विषयतोक्तिर्मानहीनेति चोदयति—नन्वङ्गत्वे सतीति। गर्भाधानादिपुरुषार्थसंस्कारमध्यपाठश्च श्रुतिषूपनयनस्याङ्गत्वेऽनुपपन्न इत्यङ्गत्वपक्षे दूषणान्तरमाह—पुरुषार्थसंस्कारेति। परिहरति—मैवम्; द्विजातीनामिति। स्यादेतदेवं प्रयोगापवर्गित्वे, तत्तु स्मृतिबलाद्यावज्जीवानुवृत्त्यवगमान्नास्तीत्यर्थः।

ननु कथं स्मृतेः श्रौताङ्गत्वानुषङ्गयर्थविरोधित्वम्, मूलप्रमाणाभावात्? उक्तं च—श्रौतप्रयोग एवाचार्याद्यर्थस्येतरकालानुवृत्तौ हेतुः, न लौकिक इति। उच्यते - अधिकारश्रुतिस्तावदध्यापनविधावपि नास्ति, अनियोगफलत्वादाचार्यत्वस्येत्युक्तम्। तेनार्थबललब्धस्तत्राप्यधिकार इति स्थितम्। स चार्थो दक्षिणादिलाभान्ताचार्यत्वम्; अर्थलाभश्च अर्थबोधाधिकारान्ताध्ययनविध्यधिकार्यध्येत्रधीनः; अर्थबोधश्च स्वाध्यायार्थविषयस्वकर्तव्यप्रमितिरूपोऽधिकारकर इति तदनुष्ठानान्तः; तेन तत्सर्वोपकारकत्वधीगर्भमेवोपनयनस्याध्यापनशेषत्वमवधार्यते; न श्रुतिमात्रात्, साधिकारनिरधिकारबुद्ध्यधीनत्वाच्छेषतायाः। न चैवमन्तरङ्गाध्ययनशेषत्वमेवास्तूपनयनस्येति वाच्यम्, श्रुत्यवगताध्यापनसम्बन्धद्वारतयैवाध्ययनसम्बन्धोपस्थितेः, अध्यापनाधिकारप्रयुक्ताध्ययनानुष्ठानधीपूर्वकत्वाच्चाध्ययनविध्यधिकारस्य; न हि द्रव्यार्जननियमविधाविव द्रव्यार्थप्रवृत्तस्य, अर्थज्ञानार्थप्रवृत्तस्याधिकारलाभोऽध्ययनविधौ, विधिज्ञाप्यार्थतात्पर्यावधारणात् प्राक् तदर्थप्रवृत्त्ययोगात्। विधिश्च तात्पर्यज्ञापकोऽन्यो नास्तीति अध्यापनाधिकारधीरेव पूर्वभाविनीति तदङ्गमेवोपनयनमुपेयम्। नन्वेवमध्ययनादिक्रियानिर्वृत्तिमात्रेणास्तु तदुपकारकत्वमुपनयनस्य, तदुत्थसंस्कारस्तु शेष्यपवर्गान्त एवाङ्गत्वे स्यात्। मैवम्; शेषिनिर्वृत्तिद्वारतयापि अध्ययनस्योपनयनसम्बन्धे ह्युपनेयगतसंस्कारस्यापि तद्द्वारकमेव तन्निर्वर्तकत्वमिति संस्कृतकर्तृकाध्ययनसाध्यमेवाध्ययनापूर्वं स्ववाक्येनावगतमिति संस्कारस्यापि तदपूर्वनिष्पादकत्वमनिवार्यम्; 'ममेदं कर्त-

1. तथा. क. 2. अनर्थकं विधानान्तरं, क.

रुपनयनान्तरास्मृतेश्चोपनयनसंस्कार इज्याद्यधिकारानुवृत्तावनुवर्तत इति कल्प्यते। [1]अत एव पुरुषसंस्कारैस्तुल्यत्वात्तदन्तर्भावः। आचार्यकविध्यर्थता तु तदुपकारजननोत्तरकालमनुवृत्तावपि न विरुद्धा।

नन्वध्यापने धनायन्नधिकारी, नाचार्यीबुभूषुः। मैवम्; धनायन्नध्यापनोपाये[2]नाचार्यीबुभूषतीति तदवस्थस्यैवाधिकारान्तरम्, धनमनिच्छन्नपि

---

व्यम्' इत्येवंरूपस्वाध्यायार्थयागाद्यपूर्वविषयप्रमितिरूपार्थज्ञानञ्चाध्ययनापूर्वस्याध्येत्रधिकारमापादयतीति यावज्जीवमुपनयनसंस्कारानुवृत्तिरध्यापनाधिकारसिद्धैव; अन्योपकारकत्वमन्यशेषस्यापि प्रसङ्गविषये प्रसिद्धमेव; तदुपरितनेज्यादिष्वप्यग्नीषोमीयार्थानुष्ठितयूपधर्माणां सवनीयादिष्विव नानुपपन्नम्। न चाधिकारभेदादिहानुपपत्तिः, क्रत्वर्थकृतवरणस्य याजनापूर्वनिष्पत्ताविवाविरोधात्। एवं न्यायप्राप्तिसूचनार्थं न्यायवित्स्मृतिवचनमुदाहृतमिति मन्तव्यम्। पुनरुपनयनान्तरास्मृतेश्चेति। परस्मैपदयुक्तोपनयनाभाव उक्तः। यदि तादृशो विधिः स्यात्, तदा तत्संस्कारविनियोगार्थेयं स्मृतिः स्यात्; तदभावान्न्यायप्राप्तिसूचनार्थैवेत्यर्थः। अथवा अन्यार्थोत्पन्नसंस्कारस्य कार्यान्तरविनियोगपरश्रुत्यनुमापकतया विध्यर्थैवास्तु। तत एव स्थिरत्वसिद्धिः। एवं संस्कारान्तरसहपाठश्चोपपन्न इत्याह—अत एव पुरुषसंस्कारैरिति। ननु संस्कारस्य स्वभावप्राप्तशेष्युपकारावधित्वबाधापत्तेः तदुत्तरकालानुवृत्त्याश्रयणमयुक्तम्; तत एव स्मृतेर्विधिपरत्वाश्रयणमप्ययुक्तमिति संस्कारमुखेन स्मृतिः स्वयमेवोपनयनान्तरविध्यर्थाऽऽश्रीयतामित्यत्राह—आचार्यकविध्यर्थता त्विति। तदवधित्वस्वभावत्वं न प्रमाणसिद्धम्; अनुवृत्त्युपलब्ध्यभावादेवाङ्गान्तरेषु तद्विनाश्यत्वमिष्यते; न तदभावेऽङ्गत्वविरोधात्, दृष्टकार्येष्वनुवृत्तिदर्शनात्। तेनेहोपनयनसंस्कारवदध्येतृगतानुष्ठानान्तार्थबोधाध्ययनफलदर्शनात् स्वाधिकारनिर्वाहकतया तस्याचार्यकविध्यपेक्षितत्वाच्चेहानुवृत्तिरविरुद्धेत्यर्थः। ननु श्रुताधिकारधनार्जनविधिप्रयुक्ताध्यापनप्रतीतौ नाधिकारान्तरकल्पनया तद्विधिरिति नोपनयनस्याङ्गतापीति चोदयति—नन्वध्यापने धनायन्निति। परिहरति—मैवम्; धनायन्निति। यथोक्तविधया विधेरवर्जनीयत्वादधिकारान्तरकल्पनायाश्चावश्याश्रयणीयत्वात् प्राप्ताधिकारप्रतीतिर्गुणफलाधिकार इवाश्रयतयानुगृह्यताम्, "आचार्याय प्रियं धनमाहृत्य" इत्यादिना तद्विषयहेतुतया तदन्तर्भावसम्भवात्। "आचार्यदेवो भव" इत्यादिविधिसिद्धोपास्यत्वकामस्यार्जनाधिकारनिरपेक्षाधिकारपरतया वा तदुपपत्तिः; आचार्यस्य "नाश्लीलं कीर्तयेत्" इत्यादिविधिप्राप्तयशःकामनयाप्यधिकारान्तरोपपत्तिः, तेनाङ्ग

---

१. तस्य च पुरुष. क. २. धनायन्न(न्ना)ध्यापनोपायेन नाचार्यी. ख.

वा शिष्योपास्यतामिच्छन्नाचार्यीबुभूषुरेव; यशस्यन्नप्याचार्यीबुभूषुतात्रस्थोऽन्य एवाधिकारीत्युक्तम् "अर्थादाचार्यीबुभूषोरेवाधिकारः" इति ।

अध्ययनस्याचार्यकरणविधिमूलत्वोपपत्तिः

एवमुपनयनस्य स्थिते साधिकाराचार्यकविध्यङ्गत्वे दृष्टोपनेयासत्तिद्वारेण[1]ाध्यापनोपयोगिकर्मापेक्षायां सन्निधिश्रुतं स्वाध्यायाध्ययनं कर्मावगतम्; अध्ययनादेवाध्यापनरूपतासिद्धेस्तदुपयोगिद्वारलाभः । एवं च स्वाङ्गोपनयनप्रयुक्तिद्वारभूताध्ययनप्रयुक्तिपूर्विका, न तु तत्पूर्विकाऽध्ययनप्रयुक्तिरिति नाङ्गेन स्वद्वारं प्रयुक्तं स्यात् इत्यनुयोगः । न चाध्ययनाङ्गप्रयुक्त्यनुयोगः[2], विहिताध्ययनविशेषदेहनिवेशादध्ययनसन्निपातिनामनध्यायादरादीनां[3] प्रयुक्त्यन्तर्भावो दुर्वारः । आरादुपकारि त्वध्ययने नास्त्येव । किञ्च स्मृतौ "शिष्यम्" इत्युक्तेः साङ्गाध्ययनप्रयुक्तिः । शासनाद्धि शिष्यः, हिते प्रेरणं च शासनम्; हितं च साङ्गमिति साङ्ग[4]प्रयुक्त्या विधिप्रयुक्तिः । स्मृत्यन्तरे च व्यक्तो[5] विधिः, साङ्गादाचार्यकं च व्यक्तम्—

तापीत्यर्थः । यथोक्ताधिकारभेदपरः प्रकरणग्रन्थोऽपीत्याह—इत्युक्तमर्थादाचार्यीबुभूषोरेवाधिकार इति । उक्ताधिकारभेदफलभूताङ्गत्वफलमनङ्गाध्ययनप्रयुक्तिप्रतिपादनार्थमाह—एवमुपनयनस्येति । यथोक्ताधिकारिभेदफलमुपनयनाङ्गत्वं तत्फलं तद्द्वारापेक्षाबलोपस्थाप्यं विहिताध्ययनस्याध्यापनशरीरनिवेशित्वमित्यर्थः । तच्छरीरनिवेशित्वाच्च परापादितानुपपत्तिनिरासस्सिद्धिरित्याह–एवञ्च स्वाङ्गोपनयनेति । सा त्वनुपपत्तिः–उपनयनस्याध्यापनाङ्गत्वाङ्गीकारादध्ययनस्य तदनङ्गीकारादतत्प्रयोज्यत्वेऽङ्गत्वार्थमुपनयनप्रयोज्यत्वं स्यादिति साधनस्य साध्यप्रयोक्तृत्वं स्वपक्षे विपरीतं स्यादिति । तन्निरासस्तु—अध्ययनस्वरू.प्रयोक्तृत्वं तावदध्यापनस्य स्वभावसिद्धम्, अत्र द्वाराकाङ्क्षायां विहिताध्ययनविशेषे द्वारतया गृहीते तस्यैव स्वरूपान्तर्भावोऽपीति करणप्रयुक्त्यन्तर्भूतैव विहिताध्ययनप्रयुक्तिः; तदुत्तरकाला तूपनयनप्रयुक्तिरिति । नन्वेवमप्यध्ययनाङ्गानां तदन्तर्भावासिद्धेस्तत्प्रयुक्तत्वभावाद्द्विध्यसिद्धिरिति चोद्यं परिहरति–न चाध्ययनाङ्गेति । सर्वस्यापि तदङ्गस्य करणोत्पत्तिमात्रोपक्षीणत्वाद्यथाश्रुतोत्पत्तिनियतत्वाच्चादृष्टार्थोत्पत्तेर्नाङ्गाप्रयुक्तिशङ्कापि इत्यर्थः । शिष्यशब्देन स्पष्टीकृतं चैतदित्याह–किञ्चेति । उदाहृतस्मृतेर्लक्षणपरमुखत्वादस्पष्टं विधिपरत्वम्; स्पष्टविधिकञ्च स्मृत्यन्तरमस्ति, तत्राङ्गप्रयुक्तिश्च स्पष्टेत्याह—स्मृत्यन्तरे चेति ।

१. द्वारानुसारेणासन्नस्या. क.　२. प्रवृत्ति. क.　३. अनध्यायादादीनां. ख.
४. साङ्गाध्ययन. क.　५. व्यक्तोऽपि. क.

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥" इति ।

इहोपनीयाध्यापको गुरुभेद आचार्य एवोक्तः, "आचार्यः श्रेष्ठो गुरूणाम्" इति स्मृतेः । शौचाचारानिति च भिक्षादिशिक्षकताप्याचार्यकहेतुरुक्त इति ।

परोक्तदोषनिराकरणम्

एवं साङ्गाध्ययनप्रयुक्तिः; तत्प्रयुक्तिरेव तद्विधिप्रयुक्तिः । एतेन परोक्तं निरस्तम्—विधेरध्यापनानुपायस्याप्रयुक्तेः साधकनरापेक्षायामधीतादर्थबोधोत्पत्तेरर्थबोधार्हो नियोज्यः—इति; अर्थपरत्वे ह्यर्थबोधार्हो नियोज्यः, ततश्चार्थपरता—इत्यन्योन्याश्रयम् । न च करणान्वयार्था

---

ननु विधिमात्रस्य व्यक्तत्वेऽप्याचार्यसम्बन्धानुक्तेः कथं साङ्गादाचार्यकं च व्यक्तमित्युक्तमित्यत्राह—इहोपनीयेति । गुरुपदस्य बह्वर्थत्वात्तद्विशेषाकाङ्क्षायां विधेयबलोपनेयाचार्यार्थता व्यक्तैवेत्यर्थः । गुरुत्वाधिक्याच्च तद्धीरेव स्वत इत्याह—आचार्यः श्रेष्ठ इति । साङ्गप्रयुक्तेर्व्यक्ततामुपपादयति—शौचाचारानिति । आचार्यकसाधनोक्तवेदाध्यापनवत् "शिक्षयेत्" इति विध्युक्तेराचारशिक्षणसहितस्यैवाध्यापनस्य साधनत्वं गम्यत इत्यर्थः । एवं साङ्गाध्ययनप्रयुक्तिः, तावतैव विधिप्रयुक्तिः सिद्धेत्याह—एवं साङ्गाध्ययनेति । एवं चाङ्गाप्रयुक्तिमूलविध्यप्रयुक्त्या द्रव्यार्जनवद्विषयभेदोपस्थाप्यार्थबोधार्हनियोज्यकल्पनापादनेनाध्ययनविधेः विध्यन्तरप्रयोज्यत्वासम्भवः परापादितो निरस्त इत्याह—एतेनेति । यथोक्तनियोज्यप्राप्तिरन्योन्याश्रयदुष्टेत्याह—अर्थपरत्वे हीति । नन्ववश्याश्रयणीयोऽत्र नियोज्यः करणान्वयाङ्गीकारात्, तस्य च कार्यशेषतोपगमात्; न हि साधनमात्रं करणम्, कार्यार्थिप्रवृत्तकर्तृव्यापारविषयस्यैव करणत्वान्नियोज्याधीनत्वाच्च तस्य । न चान्योन्याश्रयापत्तिः । निषेधविधेर्निषेध्यानुष्ठाननिमित्तप्रत्यवायाकल्पकत्वेऽपि तत्परिहारार्थिनः प्रायश्चित्तविधौ नियोज्यत्वमभ्युपेत्य तद्बलात्तत्कल्पनाङ्गीकारात्तत्तुल्यत्वाच्चार्थबोधार्हाङ्गीकारस्येत्याशङ्क्य करणत्वं तावन्न नियोज्यनिर्वाह्यमित्याह—न च करणान्वयार्थेति । नियोज्यानङ्गीकारेऽप्यधिकारिणोऽङ्गीकारात्तावतैव करणस्य कार्यार्थत्वनिर्वाहात् न नियोज्यापेक्षेत्यर्थः । प्रत्यवाय-

---

१. नितिभिचा. ख. २. प्रवृत्ति. क.

सनियोज्यता, साधिकारतयापि हि तदन्वयात् । पापमोक्षार्थिनस्तु श्रुतौ निषेध्यात् पापोत्पत्तियुक्ततेत्याचार्यकविधिप्रयुक्तोऽध्ययनविधिः । क्रतुविधयस्तु विद्याङ्गकाः स्वाङ्गोपायेऽध्ययने द्राङ्न प्रयोजकाः; उपायात् कार्यस्याभ्यर्हितत्वादङ्गकार्यत एव द्राक् प्रयुक्तिः । तथा प्रयोज्यापेक्षयैवाध्यापनविधेः प्रयुक्तिः । प्रयोज्यफलाद्यपेक्षया[१] क्रतुविधीनां विलम्बितता । नन्वेवमाचार्यकविध्यङ्गमध्ययनं स्यात्, विधिप्रयोज्यतया विधेयत्वात् । मैवम्; विधिगृहीतं सद्विनियोगादङ्गम्; न च प्रयोज्यतया विधिस्पर्शो ग्रहणम्, आधानादेरपि ग्रहणापत्तेः । पश्वेकत्वमपि विधिना गृहीतं साधनाव-[२]

---

परिहारार्थिप्रायश्चित्तविधिनियोज्यवैषम्यमाह—पापमोक्षार्थिनस्त्विति । निषेध्यक्रियाकर्त्रनुवादेन तावत्सर्वत्र प्रायश्चित्तविधिः । तत्कर्ता च तत्र नियोज्यः; प्रायश्चित्तपदं च प्रत्यवायनिवर्तककर्मवाचीति तन्नियोज्यस्तन्निवृत्त्यर्थ्येवार्थादिति निषेध्यक्रियोत्थप्रत्यवायहानार्थिपरस्तत्कर्त्रनुवाद इति निषेध्यानुष्ठानस्य प्रत्यवायकरत्वमप्याक्षिप्यैव तद्विधिर्विश्राम्यति । इह त्वर्थपरत्वकल्पकं किञ्चिन्नास्तीति वैषम्यमित्यर्थः । तेनान्यप्रयुक्तत्वं युक्तमित्याह—इत्याचार्यकविधिप्रयुक्त इति । नन्वन्यप्रयोज्यत्वे क्रतुविधिप्रयोज्यत्वं किमिति नाश्रीयत इत्याशङ्क्याचार्यविधेः शीघ्रत्वमाह—क्रतुविधयस्त्विति । नन्वाचार्यकविधिप्रयोज्यत्वे तदङ्गतापि स्यात्; स्वोद्देशप्रवृत्तकृतिसाध्यत्वापादनं हि तस्य तत्प्रयोक्तृत्वम्, तत्साध्यतया तदुपकारकत्वमेव चाङ्गत्वमित्यङ्गतया प्रयोजनान्तरानर्हत्वादर्थपरत्वहानिश्चेति चोदयति—नन्वेवमिति । विधेयत्वादिति । विध्यापाद्यस्वकृतिजन्यत्वादित्यर्थः । परिहरति—मैवं विधिगृहीतमिति । विधिसाधनत्वाधीनमङ्गत्वम्; तच्च विधिग्रहणपूर्वकविनियोगप्रमाणकम्; विधिग्रहणं चेह नास्तीति नाङ्गत्वमित्यर्थः । ननु प्रयोज्यत्वसिद्धौ विधिग्रहणमवश्यम्भावीत्यत्राह—न च प्रयोज्यतयेति । क्रतुविधिप्रयोज्यत्वं ह्याधानारम्भणीययोरप्यङ्गीक्रियते, नाङ्गत्वम्; क्रतूपयोग्यग्न्यादिस्वरूपप्रयोज्यत्वमेव हि तत्र क्रतुप्रयोज्यत्वम्, न साक्षात्क्रतुकृतिसङ्क्रान्त्या; तथैवाचार्यकविधिप्रयुक्तिरपीति नाङ्गत्वापत्तिरित्यर्थः । ननु पश्वेकत्वादौ विनियोगो नास्ति, विनियुक्तप्रातिपदिकार्थगतत्वात् । तच्च करणत्वैकत्वयोर्युगपद्विभक्त्युक्तत्वेनान्योन्यानन्वयात् । ततश्च विनियोगनिर्वाह्यग्रहणमपि नास्तीत्यभिधानावगतसंख्यावच्छिन्नप्रयोगविधिमात्रकृतं तदङ्गत्वमित्यध्ययनस्यापि प्रयुक्तिमात्रेणाङ्गत्वापत्तिरित्यत्राह—पश्वेकत्वमपीति । विभक्त्यर्थस्याप्यन्वयातिरिक्तस्य कार्यान्वया-

---

१. फलाद्यपेक्षयैव. ख. २. साधनस्थतां. ख.

स्थास्थतां नीतं वस्तु लिङ्गसचिवेनोपादानेनाङ्गं कृतम्। न चेदमपि विध्यगृहीतं लिङ्गमात्रादङ्गम्। न च णिच्छ्रुत्याङ्गम्, प्रयोज्यव्यापारस्यैव तच्छ्रुत्या साध्यत्वावगतेः। न चानधिकारं साधिकारादन्वयादङ्गम्; "अध्यापयेत्" इति द्वयानवगतेर्न द्वयान्वय इत्यनङ्गमध्ययनमध्यापनस्य। अस्मिन् प्रक्रमे पञ्चिका "मैवम्" इति। ऐक्येऽपि परिहारः—इति तदर्थः। पारार्थ्यमेवाङ्गता—इत्येवमैक्येऽप्युक्ते विनियोगात् पारार्थ्ये चोद्यवादिनोऽप्यनुमते प्रयुक्तितोऽङ्गत्वपरिहारसिद्धिरिति, "अतः प्रयोज्यं न चाङ्गम्" इत्यनङ्गत्वे स्थित एव विचारो गुरोरभिमतः; "सर्वो हि विधिरधिकारपर्यवसायी"—इत्यपि स्थिते।

नन्वनुष्ठानार्थमधिकारापेक्षा; तच्च विध्यन्तरप्रयुक्त्यलब्धम्। मैवम्; विधौ

---

काङ्क्षिणो ग्राहकग्रहणमस्त्येव; तन्निर्वाहोऽपि विधिनैव साधनीभूतप्रातिपदिकार्थाश्रिततां नीत्वा विनियोज्यलिङ्गसचिवेन तदङ्गत्वापादनात् स्यादिति न क्वचिदपि प्रयुक्तितोऽङ्गत्वमित्यर्थः। नन्वेवमिहापि तद्वल्लिङ्गादेवास्त्वित्यत्राह—न चेदं विध्यगृहीतमिति। तद्ग्रहहेतोः सान्निध्यादेरभावान्न तत्साम्यमित्यर्थः। श्रुतिस्तर्हिहेतुरित्यत्राह—न च णिच्छ्रुत्येति। तस्याः सत्या अपि विपरीतसाध्यसाधनभावार्पकतयाऽध्ययनस्याध्यापनाङ्गत्वापादनसामर्थ्यं नास्तीत्यर्थः। नन्वन्वयावगमे साधिकारनिरधिकारव्यवस्थाप्यमस्तु शेषत्वमित्याशङ्क्य णिजर्थविशेषणतया तदेकतापन्नोऽत्र धात्वर्थः, पृथगुक्तयोरन्वयोक्त्यधीनं च श्रौतं शेषत्वमिति इह वस्तुतः शेषत्वार्पिका श्रुतिरेव नास्तीति परिहरति—न चानधिकारमिति। पञ्चिकाग्रन्थस्यार्थाप्रतिपत्तेः तदनुवादेनार्थमाह—अस्मिन् प्रक्रम इति। इहाङ्गत्वं पूर्वपक्ष्यभिमतं राद्धान्ती निराकरोति—इत्येकदेशिमतम्, तन्न स्वाभिमतमिति प्रकटयितुम्—अनङ्गत्वे स्थित एवेत्युक्तम्। अनङ्गत्वेऽपि पूर्वपक्षसम्भावनार्थं सर्वविधीनामधिकारपर्यवसायित्वस्थितिरपि विचारविषयापादकतयोक्ता राद्धान्तहेतुतया च।

नन्वनुष्ठानार्थोऽधिकाराकाङ्क्षा इत्यन्यप्रयुक्तिविषये न स्यादिति पृच्छति—नन्वनुष्ठानार्थमिति। परिहरति—मैवं विधौ हीति। स्यादेवमनुष्ठानमात्रार्थत्वे, विधिस्वभावभूतपुरुषार्थत्वप्रयुक्तात्वत्र तदाकाङ्क्षेत्यन्यप्रयुक्तिविषयेऽपि स्यादेवेत्यर्थः। ननु ग्रन्थस्थाधिकारपर्यवसायिपदस्य लोकप्रसिद्धविधिस्वभावभूतपुरुषार्थत्वपरत्वाङ्गीकारेण तत्पर्यवसायित्वस्यान्यप्रयुक्तविषयव्यापित्वोपगमेऽधिकारदोषापत्तिरनिवार्या;

---

१. व्यवहार. क. २. रिति प्रयोज्यं. ख. "अतः प्रयोज्यं न चाङ्गम्" इति बृहती.

हि लिङादयः; विधिश्च पुरुषार्थ एव प्रथितो लोके। अयं भावः—विधिर्हि प्रवृत्तिहेतुः कार्यरूपः; कार्यं च कृतिप्रयोजनं न पुरुषार्थः; तत्प्रयोजनता च स्वसाधने नरैश्वर्यहेतुतया; तद्धेतुतैव प्रवृत्तिशक्तिरिति विधित्वाद्याधिकारापेक्षान्यप्रयुक्तेऽपि। क्रियाकार्ये च लौकिके विधौ पुरुषार्थता

---

लोकप्रसिद्धं हि विधेः पुरुषार्थत्वमिष्टसाधनत्वमेवेति नापूर्वस्य विधित्वं स्यात्। 'अपूर्वस्यापि लोकवत्फलसाधनतापेक्षे प्रवर्तकत्वे प्राधान्याभ्युपगमहानिः, परप्रयुक्तानुष्ठानस्य तदाकाङ्क्षाहानिश्च' इत्येवं वदतो ग्रन्थकारस्य कोऽभिप्राय इत्यपेक्षयाह—अयं भाव इति। प्रवृत्तिहेतुतया लिङाद्यर्थभूतस्य यदि स्वरूपतया पुरुषार्थत्वमुपगतं स्यात्, तदेष्टसाधनरूपतापत्त्या अपूर्वत्वहानिः, तत्स्वरूपन्तु कार्यमित्येव; तेन न तद्धानिरित्यर्थः। एवं तर्हि तदधिकपुरुषार्थत्वहानिरित्यत्राह—कार्यञ्चेति। कृतिरनेन प्रयुज्यत इति कृतिप्रयोजनम्, कार्यरूपस्यापि कृत्युत्पत्तिहेतुत्वार्थं पुरुषार्थत्वमाश्रीयत इत्यर्थः। तत्र कः पुरुषार्थतोपयोग इत्यत्राह—तत्प्रयोजनतेति। यद्यपि कृत्युद्देश्यतया श्रुतिप्रमाणसिद्धत्वात् उद्देश्यान्तरं नापेक्षते, तथाप्यव्यापारतया साक्षात्कृत्यगोचरत्वात् स्वसाधने पुरुषं प्रवर्तयितुं स्वस्य पुरुषार्थत्वमापादयन् स्वयं सुखादिवत् पुरुषाश्रिततया 'मत्प्रयोजनसाधनत्वात् मदर्थम्' इत्येवंरूपं स्वसाधनैश्वर्यमापाद्यैव शक्नोतीत्यस्त्येवोपयोग इत्यर्थः। ननु प्रवर्तकत्वे सत्येवेदं स्वसाधनैश्वर्यापादनं विधिना कार्यम्, नान्यप्रयुक्तेनेति नाध्ययनविधिना तत्कार्यमित्याशङ्क्य अन्यतः प्रवृत्तिफललाभेऽपि तच्छङ्कितरस्यापि लिङाद्यर्थतोपाधिः तदभिधेयतार्थमपेक्षिता, पुरुषविशेषं प्रति स्वसाधनैश्वर्यापादनमेव चाव्यापारात्मनो विधेः प्रवृत्तिशक्तिरित्यस्त्येवास्यापि तदापादनाकाङ्क्षेत्याह—तद्धेतुतैवेति। ननु लोकप्रसिद्धमेव विधेः पुरुषार्थत्वं ग्रन्थेऽभिहितम्; विधिश्च पुरुषार्थ एव प्रथितो लोके इति न त्विदं लोकप्रसिद्धमित्यत्राह—क्रियाकार्ये चेति। कार्यमित्येतद्विधेः प्रवृत्तिहेतुस्वरूपमुभयत्रानुगतम्; तस्य पुरुषार्थत्वञ्चानुगतम्, तदधिष्ठाननानात्वकृतं तद्वैषम्यम्; लोके क्रियाधिष्ठानतया तदनुसारिफलसाधनत्वरूपं तत्; वेदे त्वपूर्वं तदधिष्ठानमिति प्रमाणमुखं वस्तुमुखं वा फलसाधनत्वं नान्तर्भवतीति उद्देश्यत्वरूपं कृतिप्राधान्यं साधनानुष्ठानापाद्यमिति तदनुष्ठातुस्तद्विषयपुरुषार्थसाधनत्वाधीनकार्यविधिसम्पादनशक्तं स्वयमेव सुखदुःखनिवृत्तितुल्यस्वभावं श्रुतिप्रसिद्धं तदाश्रितं स्यादिति स्वसाधनद्वारमेव तत्। एवं प्रकारभेदेऽपि प्रवृत्त्युपयोगिपुरुषार्थत्वं तुल्यमेवेत्यर्थः। यदि विधित्वाद्याधिकारापेक्षा,

---

१. हेतुकतया ख.　　　　२. प्रवृत्तिः शक्तिरिति. क. ख.

फलसाधनतया; वेदे त्वफलसाधनेऽपूर्वे कार्ये स्वप्रधाने स्वसाधनद्वारेणैव पुरुषैश्वर्यापादनात् पुरुषार्थतालाभः विध्यन्तरेषु चानुष्ठानार्थेऽधिकारे लब्धे विधितासिद्धिः। इह त्वन्यतोऽनुष्ठाने लब्धे विधितार्थमेव पुरुषविशेषपर्यवसानाकाङ्क्षा।

विधिः कमधिकरोति—इति विचारः

तत्राचार्यमाणवकरूपनरद्वयैश्वर्यदर्शनादेकनरैश्वर्यपर्यवसाने च विधितासिद्धेः[1] कतरनरपरता—इति चिन्ता; न तु विधेः कार्यस्य सम्बन्धिरूपत्वात् सम्बन्ध्यन्तरनरपर्यवसायित्वं मतम्। यदि हि स्वकार्ये बोद्धा[3] सम्बन्धी, तर्हि नियोज्यपर्यवसानं स्यात्; अथ कृतिसमवायी सम्बन्धी, तर्हि कर्तृपर्यवसानं स्यात्। न चान्यतः कृतिसाध्यत्वे सिद्धेऽपि कृतिप्रधानत्वायाधिकारापेक्षा,[2]

तर्हि विधीनामपूर्वरूपत्वाविशेषे सति केन विशषेणाध्ययनविधावेव तद्व्युत्पत्तिरुक्तेत्यत्राह—विध्यन्तरेष्विति। विध्यन्तरेषु कृत्याश्रयविशेषस्यापि कृत्युद्देश्यधीसिद्धत्वात्तत्प्रयोजनत्वसिद्धेः पृथक् तदाकाङ्क्षा नास्ति; इह तु कृत्युद्देश्यत्वोक्तौ कृत्याश्रयविशेषानुक्तेः प्रवृत्तिशक्तकार्याभिधानार्थमेव पुरुषविशेषापेक्षोक्तिर्युक्तेत्यर्थः।

एवं विषयं परिशोध्य तत्र संशयमाह—तत्राचार्यमाणवकेति। नरद्वयकृत्यधीनसिद्धेऽध्ययने द्वयोरपि स्वातन्त्र्यसम्भवात् विधेश्चैकाकाङ्क्षत्वात् विधिः कमधिकरोति इति संशय इत्यर्थः। केचित्त्वन्यथाधिकारपर्यवसानाकाङ्क्षामाहुः—विधेः कार्यत्वं तद्वाचिलिङादिसिद्धम्; कार्यञ्च पुरुषसम्बन्धीति तद्विशेषाकाङ्क्षीति। तन्मतं निरस्यति—न तु विधेः कार्यस्येति। कृतिनिरूप्यस्य तस्य कृतिगर्भ एव तावत्पुरुषसम्बन्धः। तत्र स्वकृतिसाध्यकार्यबोद्धृतया तत्सम्बन्धाभ्युपगमे सनियोज्यं कार्यमभिहितं स्यात्, नाधिकारान्वितम्; निष्पत्त्युपक्षीणसमवायिविशिष्टतयाभिधाने कर्त्रन्वितमिति नाधिकारान्वयोक्तिसिद्धिरित्यर्थः। ननु द्वेधाऽस्ति कार्यस्य कृतिसम्बन्धः—कृतिजन्यतया कृतिप्रधानतया च। तत्रान्यविधिप्रयुक्त्या जन्यत्वमात्रं लब्धम्। तत्र मा भूत्पुरुषविशेषणाकाङ्क्षा, प्रधानत्वं तु नान्यप्रयुक्तिलब्धमिति तद्विशेषार्थमध्ययनविधेरधिकाराकाङ्क्षेति शङ्कां परिहरति—न चान्यतः कृतिसाध्यत्वे सिद्धेऽपीति। प्रयोजकविधिस्तावत्साक्षादध्यापककृतिप्रेरकः तद्व्यवधानेनार्थान्माणवककृतिनिष्पत्त्यन्तः। तेन तत्प्रयुक्तकृतिसाध्यतया धीस्थोऽध्ययनविधिः स्वतोऽध्यापककृतिसाध्यतया भातीति उद्देश्यतापि तत्कृत्यैव शीघ्रं भानार्हा,

१. सिद्धे क। २. नापेक्षा क। ३. यदि कार्यबोद्धा क।

विधेराचार्यकृतिप्रधानत्वसिद्धेः । साधिकारविध्यतिक्रमाद्व्रात्यतेति तन्मुक्तिरधिकारान्तरपूर्विकेति न ततः साधिकारता । नन्वैश्वर्यपर्यवसानं स्वसाधनेऽप्यध्ययने सिद्धम् । सत्यम्; तदेव तु कस्य नरस्येति चिन्ता । ननु यन्नरैश्वर्यं प्रकारान्तरेणाध्ययने दृष्टम्, तदनुज्ञायात्मसाधनतयापि तन्नरैश्वर्यं लाघवादनुजानातु, न नरभेदबुभुत्सा । सत्यम्; प्रतीतत्वादुपनेयेऽर्थबोधस्य उपनेतर्यध्यापनसिद्धेर्दृष्टस्यैव नरद्वयगतेः सन्देहः ।

---

न तदुत्थाप्यान्यकृत्या; स्वज्ञात्रैव चोद्देश्यं स्यात्, नाज्ञेन माणवकेन—इत्याचार्यकृतिप्रधानत्वसिद्धेर्न तत्राकाङ्क्षेत्यर्थः । ननु वेदाध्ययननिवृत्तेर्व्रात्यतादोषकरतोक्तेः तत्परिहारफलत्वमध्ययनस्य सिद्धमिति तदर्थिनोऽधिकारसिद्धेर्न तज्जिज्ञासेत्यत्राह—साधिकारविध्यतिक्रमादिति । विधिप्राप्तानुष्ठानस्यातिक्रमस्यैव दोषकरत्वम्, अनधिकारविधेश्च न तत्प्रापकत्वमिति साधिकाराध्ययनविधिना तत्प्राप्ति पूर्वभाविनीमपेक्ष्यैव तदतिक्रमोक्तदोषविशेषोक्तिर्नेयेत्ययनलभ्यदोषनिवृत्तिरध्येत्रधिकारापादनशक्तापि पूर्वप्राप्ताधिकारापेक्षतया न स्वयमेव तदधिकारापादनार्हेत्यर्थः । ननु स्वोक्तविधयापि संशयो दुष्करः; अध्ययनमेव ह्यध्ययनविधेः साधनम्; तत्सम्बन्धिनरवर्त्येव सः स्वनिमित्तमैश्वर्यमावादयेत्; माणवकसमवायि च तत्फलमिति तदधिकारपर्यवसायित्वसिद्धेरित्याक्षिपति—नन्वैश्वर्यपर्यवसानमिति । यावदुक्तं गृहीत्वा परिहरति—सत्यमिति । पुनराक्षेप्ता स्वाभिप्रायं विवृणोति—ननु यन्नरैश्वर्यमिति । क्रियोत्पत्त्यपेक्षयाध्येत्रध्यापकनरद्वययोगेऽपि तदुत्थफलमध्येतृवर्त्येव वेदग्रहणपूर्वकतदर्थाधिगमरूपम्; स्वाश्रयाधिकारोपस्थापकविधिप्रयुक्ताधिकारजिज्ञासायां च दृष्टफलाधीनाधिकारानुवर्त्येवा[व]दृष्टफलाधीनाधिकारश्च सुगमः गतपूर्वमार्गगमनवत्; तदभावे तु कस्यात्राधिकारयोग्यतेति न्यायैरन्विष्यानेकपुरुषयोगे तद्विशेषपरीक्षया विशेषं निर्धार्यान्यतराध्यवसायः प्रयाससाध्यः; तद्भावात्त्विहानायासेनैवाध्येत्रधिकारावगम इति न संशयावकाश इत्यर्थः । समाधत्ते—सत्यं प्रतीतत्वादिति । यद्यप्यध्ययनमात्रमालोच्यमानं नरद्वयगतफलं नोपस्थापयति तथाप्युपनीतकर्तृकत्वात्तस्योपनयनस्याप्यध्यापकवशत्वात्तदीप्सिताध्यापनसिद्धिरप्युपनयनमुखेन तत्फलमुपनीयते, तथोपनेयगतमपीति संशयोपपत्तिरित्यर्थः । ननूपनयनस्याध्यापनाङ्गत्वे सतीत्थं संशयः स्यात्, तत्तु त्रैवर्णिकस्य नित्यकर्तव्यतया स्मृतिप्राप्तमिति न काम्यविध्यङ्गमुपेयम्; तत्प्राप्तिः तदभावे वैदिककर्मभ्यः पतनस्मृतेः;

---

१. नेऽध्ययने. क. २. तया तत्रैश्वर्यं. क. तत्रैश्वर्यं. ख.

नन्वसत्युपनयने पातस्मृतेस्तन्नित्यम् ; न काम्यविध्यङ्गम्, नित्यानित्यसंयोगदोषात् । मैवम् । तदङ्गतयैवोपनीतकर्तृकाध्ययनेऽर्थबोधाधिकारात्

---

तेनोपनेता परार्थ इति न स्वतन्त्रतयान्वयार्ह इति उपनयनमुखेनापि न संशयः । ततश्चोपनीतकर्तृकाध्ययनस्य "यस्य वेदश्च वेदी च" इत्यादिस्मृत्या वेदविच्छेदहेतुकदुर्ब्राह्मणत्वप्रसिद्धेः नित्यत्वमाश्रित्य तदङ्गतयोपनयनस्यापि नित्यत्वमुपेयमित्यभिप्रायेण चोदयति—नन्वसत्युपनयने पातस्मृतेरिति । परिहरति—मैवं तदङ्गतयैवेति । यद्युपनयनं काम्याध्यापनविध्यङ्गं न स्यात्, तदोपनीतकर्तृकमध्ययनमित्यत्र न किञ्चित्प्रमाणमस्ति; तदङ्गत्वे तु तद्द्वारतयाध्ययनं संबध्यत इति तत्कर्तृकमेवेति प्रागेवोक्तम्; तत्कर्तृकत्वे चाध्यापनविधिप्रयुक्तिलाभमूलकार्थबोधाधिकारापेक्षया नित्यत्वसिद्धिरिति नाङ्गत्वं नित्यत्वबाध्यम्; अर्थबोधाधिकारात्स्वाध्यायस्यार्थपरत्वे श्रुतिस्मृतिप्रामाण्यसिद्धौ तद्बलात्स्वाध्यायान्तर्गतगायत्र्यादिग्रहणनित्यतापत्तिः, तदन्यथानुपपत्त्योपनयनस्यापि साचार्यकफलस्याध्ययनविधिनैवार्थबोधाधिकारपर्यवसितेनाक्षेपप्राप्तिरिति नित्यत्वाविरोधः ।

ननु गायत्र्यादिग्रहणविषयनित्यविधिर्नोपनयननित्यतापादकः, तस्योपनयनसम्बन्धाभावादुपनयनं विना अनुपपत्त्यभावात्; स्वाध्यायाध्ययनस्य ह्युपनीतः कर्तावगतः; ततोऽस्यान्यत्वात्—इति शङ्कानिवृत्त्यर्थं स्वाध्यायान्तर्गतेत्युक्तम् । तत्रापि तावद्ग्रहणमुखेन ग्रहणोपायाध्ययनमेव विवक्षितम्; तेन स्वाध्यायाध्ययनान्नान्यत्वमस्य, तदेकदेशमात्रविषयत्वेनान्यत्वभानेऽपि ग्राह्यमुखेन तदंशप्रत्यभिज्ञया विध्यन्तरप्रतीत्यभावात् । यद्यपि नित्यत्वधर्मवत्तया विधेयत्वमस्ति, तथापि सकर्मकक्रियायाः कर्मप्रत्यभिज्ञायां स्वरूपभेदो नास्तीति प्रसिद्धम्, सोमक्रये बहुभिर्वाक्यैः नानाद्रव्यगुणविशिष्टक्रयविधानेऽपि क्रयैक्योक्तेः; तेन स्वाध्यायवाक्यविहितस्यैव विषयविशेषावच्छेदेन नित्यत्वमात्रमत्र विधेयमित्यस्त्येवोपनयनं विनानुपपत्तिरित्यर्थः ।

ननु तदंशमात्रनित्यत्वं न कृत्स्ननित्यताक्षेपकम्, ततश्चाचार्यकविध्याक्षेपासिद्धेस्तदङ्गोपनयनविध्याक्षेपोऽपि नेति कथं तन्नित्यतापादकत्वम्? उच्यते—मा भूत् कृत्स्नाध्ययनस्य नित्यताक्षेपकः; तदवच्छिन्नाध्ययनार्थमेव तदाक्षेपः स्यात् । तथाहि—कृत्स्नशाखाविषयस्याध्ययनस्याध्यापनस्य चैकत्वं तावन्नास्ति, वक्ष्यमाणशास्त्रभेदात् कर्मभेदे क्रियाभेदस्यावर्जनीयत्वात्; तेन यावत्कर्मभेदं भिन्नानामेवाध्ययनाध्यापनक्रियाणामुभयत्र विधिविषयत्वम्, तथैव च स्वकार्यकरत्वम्; तत्र चाध्येत्रधीनाध्यापकाभीष्टप्राप्तिरिति क्रियाफलनिरूपणमप्यध्ययनक्रियानुसारीति ब्राह्मणे शास्त्रभेदाभेदाभ्यामध्यापनेऽपि भेदाभेदावुपेयौ; विनियोज्यमन्त्रेषु यथाविनियोगं मन्त्रस्वरूपभेदाभेदाभ्याम्; तत्र स्वाध्यायशब्देन कृत्स्न-

स्वाध्यायान्तर्गतगायत्र्यादिग्रहणविधेर्नित्यत्वादुपनयनं नित्यमङ्गं सदेवेत्याचार्यकविधेरप्यध्ययनाधिकारतः प्रयुक्तेर्मूलमाचार्यकविधेरेव प्रयुक्तिरुक्ता। न च पावनार्था मीमांसा—"यश्च मीमांसतेऽध्वरम्" इति स्मृतेर्वाच्या; न्यायमूलमीमांसायाः कार्यान्तरमिदमिति न तद्विधिप्रयुक्ता मीमांसा युक्ता।

स्वशाखाविषयाध्ययनप्रतीतेरेकैकशास्त्रार्थबोधस्य चानुष्ठानार्थस्यानारभ्याधीतप्रकरणान्तराधीताद्युपसंहारानुपसंहारविचारपूर्वकावधारणाधीनत्वाच्च स्वतः कृत्स्नशाखाविषयाध्ययनक्रियाचय एवाध्येत्रधिकारसाधनमित्यध्यापनमपि तदनुसार्येव स्वफलसाधनं स्यात्; ततश्चार्थज्ञानोपयोग्यङ्गपर्यन्ततदनुष्ठानोपयोगिकल्पादिविनियुक्तस्वशाखानन्तर्गतरहस्यमन्त्राध्यापनान्तञ्च तत्स्वतः स्यात्; तदशक्तिविषयेऽपि यथाशक्त्युपनयनानन्तरप्राप्तावश्यकर्तव्यसन्ध्याग्निपरिचरणाद्युपयुक्तगायत्र्यादिग्रहणान्ताध्ययनस्यावश्यकत्वं विधीयते; सोमाशक्तौ पूतीकानुष्ठानवत् तेनैव चाध्ययनापूर्वसिद्धिरपि तत्र स्यात्।

कृत्स्नसाध्यस्य च कार्यस्य कदाचिदल्पसाध्यत्वमसान्नाय्यिन इव नानुपपन्नम् तेन क्रियानिरूपकं दृष्टरूपकार्यांशमात्रमेव तत्र न भवति, परमकार्यन्तु शास्त्रसिद्धमविशिष्टमेवेत्यध्यापनकार्यमपि तथैव स्यात्; तदपेक्षितार्थबोधपर्यवसायित्वं त्वितरत्रापि तत्कालेऽङ्गाध्ययनाभावात् स्वतन्त्राचार्यवाक्याक्षेपापेक्षमुपेयम्; तच्च "शौचाचारान्" इति स्मृत्युदाहरणेनैव सूचितम्; तत्रावान्तरभेदभिन्नाध्यापनक्रियाचयजन्यादृष्टसमुदायस्याचार्यपदार्थत्वेऽपि एकैकातिरिक्तसमुदायवस्त्वसिद्धेरेकैकस्यैव शब्दशक्तिविषयत्वान्निरुपाधिकप्रयोगविषयत्वमात्रं सर्वजन्यसमुदायस्य; निमित्तबलादल्पाध्यापनकरणेऽप्याचार्यपदवाच्यत्वमस्त्येव, यथा पवमानेष्टिषु "आहवनीये जुहोति" इति शास्त्रार्थसिद्धिः स्वजन्यसंस्काराभावेऽपीति। अध्ययनापूर्वसिध्यैवाचार्यत्वकराध्यापनरूपशेषित्वसिद्धेरुपनयनाक्षेपोऽपीति तन्नित्यतेत्यभिप्रायः। एवमध्ययनविधेरप्याचार्यकरणविधिप्रयोजकत्वसम्भवे तत्प्रयोज्यत्वोक्तिग्रन्थेऽर्थबोधाधिकारपर्यवसानापादनेन तत्प्रयोजकत्वमूलत्वाभिप्रायेणेति मन्तव्यम्, न वाजिनादितुल्यताभिप्रायेणेत्यविरोधः।

नन्वनर्थकमिदं संशयसमर्थनम्, पंक्तिपावनत्वफलकस्मृत्यनुमितमीमांसाविधिप्रयुक्तत्वाद्विचारप्रवृत्तेः; तदनुषङ्गसिद्धस्त्वर्थनिर्णयः; तन्निर्णयप्रयुक्तत्वे संशयपूर्वकत्वात् तत्प्रवृत्तेस्तत्समर्थनमर्थवत्, न त्वानुषङ्गिकत्वे; तदानुषङ्गिकत्वं तूक्तप्रकारविधिमूलप्रवृत्तेः शीघ्रभावित्वादिति पार्श्वस्थशङ्कां परिहरति—न च पावनार्था

१. पंक्तिपावनार्था० क०

आचार्याधिकारपरत्वपूर्वपक्षः

तत्र पूर्वः पक्षः—पूर्वमेवाध्यापनसिद्धेराचार्यनराधिकारपरता विधेः, अनर्थपरता च वेदाध्ययनस्य। नन्वध्ययनकर्तृगतमैश्वर्यमन्तरङ्गत्वादध्ययनानन्तरं बुद्धमपि विधिरनुजानातु। मैवम्, अध्ययनविध्यवगमसमये नोपनेयैश्वर्यधीरित्यन्तरङ्गमप्यधीस्थं दुर्बलम्। अतो वेदाध्ययनस्यानर्थपरत्वे नार्थनिश्चयार्थो गुरुगेहवास इति तन्निवृत्तौ सकलब्रह्मचारिधर्मास्नानादिनिवृत्तिरेव स्नानमुखेन स्मृता। दृष्टे च पूर्वपक्षनये मूले सति नादृष्टार्था स्नानस्मृतिः

मीमांसेति। पंक्तिपावनत्वफलमध्वरकर्ममीमांसासाध्यतया स्मृतमिति अर्थनिर्णयार्थप्रवृत्तमीमांसाया वेदतदर्थसंपर्कलब्धपूजितावस्थाया इतरतर्कसाधारणार्थनिर्णयोपजीवनेन तत्पूजाप्रयुक्तफलान्तरमेतदिति स्मृतिसामर्थ्यसिद्धमित्यर्थनिर्णयार्थैव तत्प्रवृत्तिरित्यर्थः।

एवं संशयं संशोध्य पूर्वपक्षमाह—तत्रेति। पूर्वसिद्धा तावदवगतिरध्यापनरूपविषयफलस्याध्ययनप्रवृत्तिप्रयोजकतया सम्मतैवेति तत्प्रयुक्ताध्येतुः परतन्त्रस्य स्वफलावगत्यपेक्षा नास्तीति तदुपजीवनेन विध्यधीनोऽप्यधिकारोऽध्यापकस्यैवेति नार्थपरता अध्ययनस्येत्यर्थः। ननु क्रियाफलं तत्कर्तुरेव स्वतो युक्तम्, ऋत्विक्क्रियास्वप्यङ्गत्वाद्यजमानस्यैव व्यवधानेनापि कर्तृतेत्यध्येतुरेवानङ्गाध्ययनफलं युक्तम्; नातत्कर्तुरध्यापयितुरिति पश्चात्प्रतीतमपि कर्तृगतमर्थबोधमेव विधिरनुवर्तत इति चोदयति—नन्वध्ययनकर्तृगतमिति। परिहरति—मैवमिति। विधिपरिकरस्य स्वविषयैश्वर्यापादनस्य विध्यवगमकाल एवापेक्षितत्वात् प्रवृत्तेः प्रागेव च कर्तव्यमित्यवगमकाल इत्याचार्यस्यैव तत्कालेऽधिकारयोग्यता नोपनेयस्येति तत्स्थफलस्यान्वयानर्हत्वादनङ्गत्वेऽपि वस्तुशक्त्यान्यार्थंतैवाध्येतुरित्यर्थः। ततश्च "अधीत्य स्नायात्" इति स्मृतेर्यथावगतार्थहानमित्याह—अतो वेदाध्ययनस्येति। "ब्रह्मचारी न स्नायात्" इति गन्धस्नानप्रतिषेधे कृते प्रतिषेधविषयकालानन्तरकालावच्छिन्नं स्नानमुच्यमानं प्रकृततद्विशेषनिष्ठमेव भातीति नाप्राप्तस्नानविध्यर्हमिति तदनुवृत्त्यनुज्ञापरं वाक्यं सर्वब्रह्मचारिधर्मावधिपरं प्रथमप्रतिषिद्धस्नानेनोपलक्ष्य सर्वावधिवाच्येव स्वतो युक्तमिति गुरुकुलस्थितेरप्यवधिरध्ययनसमाप्तिरनेनावगम्यत इति तदनुग्रह एव स्यादित्यर्थः। नन्वेवं मुख्यवृत्तिबाधापत्तेस्तदबाधार्थं विध्याश्रयणमेवोचितमित्यत्राह—दृष्टे च पूर्वपक्षनय इति। गत्यन्तराभाव एवात्यन्तादृष्टविधिमूलकल्पना, न न्याय-

१. नादनन्तरं ख०  २. नियमनिवृत्ति क०

[1]श्रुतार्थानुरोधाद्युक्ता। दृष्टा च पूर्वपक्षनयमूला[2]पि पितृयज्ञस्य दर्शाङ्गता-स्मृतिरिति नाध्ययनविध्याक्षिप्तं शास्त्रम् ॥

राद्धान्तस्तु—अन्यप्रयुक्तस्य पश्चादवगतफलद्वाराप्यैश्वर्यधीपूर्वकमधिकारपरत्वमित्यतुल्यकालत्वेऽप्यन्तरङ्गं बलीय इत्यर्थपरत्वमध्ययनविधेर्युक्तम्।

विवरणटीकाभिप्रायः

विवरणे तु प्रयोजकविधेः प्रयोज्यविधेश्च शाखान्तर्गतत्वादनर्थपरता स्यात्; तत्पर्यवसाने च पूर्वावगतप्रयोज[3]कत्वविरोधान्न तत्पर्यवसानं युक्तम्; अतः पश्चाद्भाव्यर्थावबोधपर्यवसानम्। अर्थपरत्वव्युत्पत्तिनिर्वाहार्थं त्वर्थबोध-

मूलत्वसम्भवेऽपीत्यर्थः। ननु न पूर्वपक्षन्यायमूलता युक्तेत्यत्राह—दृष्टा चेति। स्पष्टे क्वचित्तन्मूलत्वेऽन्यत्रापि तत्सम्भवे तदनादरेणादृष्टवमूलादृष्टार्थविध्याश्रयणमन्याय्यम्। तेनाध्ययनविधिर्न शास्त्राक्षेपक इत्यर्थः।

सिद्धान्तमाह—राद्धान्तस्त्विति। प्रयोजकविधिः स्वापेक्षितप्रयोज्यस्वरूपविशेषप्रतीत्यतिरिक्तं तदीयाधिकारपर्यवसानं तत्प्रयुक्त्यर्थं नापेक्षते; प्रयोज्यविधिरपि स्वापेक्षिताधिकारं कथञ्चिदप्यलभमानः स्वप्रयोजकविध्यन्तरलाभे तत्प्रयोज्यत्वार्थं न तदपेक्षीत्यपेक्षाबलमात्रोपनेयाधिकारधीः प्रयोज्यत्वधीकाले तावन्नास्तीति न तत्काले तत्पर्यवसानत्वसिद्धिः। तदुत्तरकालभाविप्रयोज्यविध्यधिकारापेक्षाकाले कर्तृगतफलातिरिक्तफलधीरेव नास्तीति विषयमात्रोपस्थाप्यार्थबोधाधिकारपर्यवसानं निष्प्रतिबन्धकमिति विध्यधीनोऽप्यधिकारः तदनुसार्यवेत्यध्ययनविधेः हेतोरर्थपरत्वमेव स्वाध्यायस्य स्यादित्यर्थः।

लघ्व्यां पूर्वप्राबल्यमेव सिद्धान्तयुक्तिरिति विशेषमाह—विवरणे त्विति। निबन्धने तु अध्यापनविधिस्वीकारपूर्वकत्वादनर्थपरत्वस्यापि, न स्वत एवात्मनोऽनर्थपरत्वधीः, तदन्तर्भावप्रतिसन्धानात् पश्चादेव तद्धीः। विवरणे तु आचार्यकविधेरपि शाखान्तर्भावात् प्रथममेव तस्यार्थपरत्वहानिधीरिति पूर्वप्राबल्ययुक्तिरभ्यर्हिता, इतरत्रान्तरङ्गत्वयुक्तिरिति भेदः। नन्वेवं ततोऽपि पूर्वतरान्विताभिधानव्युत्पत्त्यबाध एव कस्मादर्थबोधाधिकारपर्यवसानहेतुतया नाङ्गीक्रियत इत्यत्राह– अर्थपरत्वेति। तद्व्युत्पत्तेर्निरुपाधिकत्वसिद्धौ हि स हेतुः स्यात्, प्रतिवाक्यावधारणीयतात्पर्योपाधितस्तु तद्व्युत्पत्तिः; न हि सुप्तोच्चरितानां वाक्यानामुन्मत्ताद्युच्चरितानां गानविशेषाभिव्यक्त्यर्थं गायकोच्चरितानां प्रकरणाद्यनवधारितार्थविशेषवृत्तीनामनेकार्थाभिधानसमर्थानां शक्तिविषयार्थबोधकत्वं दृश्यते। तेन तदुपाधित्वनिश्चयादर्थबोधाधिकारपर्यवसानात् प्राक् सन्देहानुवृत्तेस्तदनङ्गीकार इत्यर्थः।

१. श्रौतार्थान्तरोपाधियुक्ता. ख. २. मूला पितृ. क. ३. प्रयोक्तृत्व. ख.
४. सान..........र्थबोध. क.

पर्यवमानं नोक्तम् । तात्पर्यतो ह्यर्थपरत्वव्युत्पत्तिः; तदेव चेत् सन्दिग्धम्, कथं तद्बलेनार्थबोधपर्यवसानम् ?

एवं च विधिपर्यवसानार्थमध्ययनात्परतो मीमांसातः पूर्वमवगतस्य

---

यथोक्तसिद्धान्तिगति विधयैव परापादितानुपपत्तिपरिहारोऽपि सिद्ध इत्याह—एवञ्च विधिपर्यवसानार्थमिति । यदुक्तम् "अध्ययनमीमांसाश्रवणयोर्मध्येऽधिकारः" इति प्रकरणे[1], तत्रानुपपत्तिरुद्भाविता वृथा अनुष्ठानोत्तरकाले विधेरधिकारापादनायास इति; नानुष्ठानार्थं तदिति तावत्सम्मतम्, न चार्थपरत्वार्थम्, तदनपेक्षार्थपरत्वैवाध्ययनविधेस्तत्प्रयोजकविधेश्च कृतानुष्ठानत्वात्तद्वदेवान्येषामपि तत्सम्भवात्; न च स्वोत्तरकालमीमांसाश्रवणहेतुतयार्थवत्त्वसंशयनिवृत्त्यर्थम्, सर्वविधीनामपि तद्धेतुत्वसम्भवात् तत्तदर्थधीहेतोर्लोकव्युत्पत्तेश्च सर्वसाधारणत्वादिति ।

सा परिह्रियते । तत्र "एवम्" इत्यनन्तरोक्तव्युत्पत्त्यतन्त्रत्वमर्थपरत्वस्योक्तम्; तेन विध्यधीनार्थबोधाधिकारो न वृथा । न चाध्ययनविधेरध्यापनविधेश्च पूर्वभावितया तदनपेक्षार्थपरत्वलाभ इति शङ्कनीयम्; माणवकप्रवृत्तौ तावद्विधिर्न साक्षाद्धेतुः, तस्याचार्यप्रवर्त्यत्वात्; आचार्यप्रवृत्तेश्चार्थबोधाधिकारपर्यवसानधीपूर्वकत्वात्; विचारकाले त्वध्येतुः स्वप्रवृत्तेरपि विधिमूलत्वावगमेऽपि तस्य मिथ्यात्वशङ्काग्रस्ततया तदशक्तत्वम् "विधिपर्यवसानार्थम्" इत्यनेनोक्तमिति न तदनपेक्षप्रवर्तकत्वं क्वचिदपि विधेरिति दर्शितम्; मध्याधिकारोक्तया च लब्धाधिकारस्याध्ययनविधेः साक्षादेव मीमांसाप्रवृत्तिहेतुतया आनर्थक्यपरिहारो दर्शितः ।

ननु तात्पर्यं नाम वाक्योच्चारणस्यार्थबोधप्रयोजनत्वं प्रामाण्यहेतुतया लोकसिद्धम्; तत्कथमध्ययनविधिज्ञाप्यं स्यात् ? विधिर्हि स्वगृहीतस्य द्वाराकाङ्क्षिणः स्वसाधनोपकारकत्वगर्भं तदर्थत्वमापादयेत्, न तु स्वकरणीभूतस्याध्ययनस्य स्वोत्पत्त्यसाधनार्थबोधार्थत्वमिति न विधिप्रमाणकं तात्पर्यं युक्तम्; न च स्वापेक्षितपुरुषविशेषावच्छेदकतया व्युत्पत्तिमात्रसिद्धार्थबोधस्य सङ्ग्रहमात्रं तात्पर्यापादकम्, तस्य सर्ववाक्यसाधारणपदशक्तिमात्रनिमित्ततया तात्पर्यबाह्यत्वात् - इति शङ्कानिवृत्त्यर्थम् "अवगतस्य स्वीकारात्" इत्युक्तम् । लोकेऽधिकारधीजननोद्देशेन वाक्योच्चारणात् तदर्थत्वसिद्धावपि पुमायासस्वभावप्रयुक्तं तदिति तन्मूलको वाक्यविषयाधिकारधियः तत्प्रमितिशक्तिग्रह एव सर्वव्यापी तात्पर्यावगम इति अध्ययनविधिनापि अर्थबोधकरत्वमध्ययनस्य दर्शयता तात्पर्यं प्रमितमेव स्यात् । यद्यपि पदव्युत्पत्तिमात्रं निमित्तम्, संनिहितविशेषोपसंहृतं योग्यान्वयस्मृतिमात्रमध्ययनानन्तरभावि स्वापेक्षितपुरुषविशेषावच्छेदकतया विधिग्राह्यं न तात्पर्यस्पृक्, तथापि तदुपसंहृत-

---

१, प्र० पत्रिकायां

स्वीकारान्मध्येऽधिकारो न वृथा । एवं च न यदा आचार्यीबुभूषुः, तदा माणवकः स्वसंस्कारं द्विजातिकर्मानुगुणं प्रबुद्धः प्रयुंक्ते तद्धितार्थी वेत्याचार्यकविधि-

विषयस्मृतिग्रहे तात्पर्यविषयोऽपि स एवेति स्मृतिमात्रावस्थायां वाक्याध्ययनास्पृष्टतया विध्यस्पृष्टोऽपि सोऽर्थस्तदग्रहावस्थायामधीतस्वाध्यायमेयतया स्वीकृतः स्वीयतया कृतः स्वविषयाध्ययनमेयतया ज्ञापितः । सर्वत्रापि हि पदव्युत्पत्तिमात्रनिमित्ताभिधानयोग्यार्थस्मृतिविषयस्यैव वाक्यतात्पर्यविषयतया ग्रहणनियमात् नेह स्मृतिविषयत्वं तद्विरोधि । विधिवाक्येषु चानुष्ठानोपाधिसम्पूर्तिकाल एवाधिकारिविशेषनिष्ठकर्तव्यताप्रमितिः; ततः प्राक् तत्प्रतिसन्धायि सामान्यस्मृतिमात्रम्; तस्य तत्प्रमितिकरसामान्याभिधानतुल्याकारतयेहाध्ययनसाध्यत्वव्यवहारः फलतश्च विशेषाभावात् तस्य विधिग्रहो विधिप्रमितिकालानुवृत्त्या तत्करत्वज्ञापनं तदर्थाभिधेयत्वान्तम् । लोकेऽपि हि कालव्यवहितानुष्ठानविधिपरवाक्यानां प्राक् स्मर्यमाणार्थानामेव तत्काले तदभिधानम्; तन्निमित्तासिद्धौ सामान्यमात्राभिधानस्य निष्फलतया तात्पर्यहीनत्वात स्मृतिमात्रस्य च तत्फलत्वासम्भवादिति—इहापि वाक्ययोग्यार्थस्मृतिमात्रं पूर्वोत्पन्नं तत्कालप्रमितिकरमध्यय फलतयाधिकारिविशेषणतया विधिग्राह्यं राद्धान्तिनोच्यत इति तत्स्मृतेरपि तच्छक्तिर्विधिज्ञापिता लौकिकवाक्यवत्र्यवगततादर्थ्याभावेऽपि स्यादिति । यावदर्थमध्ययनभेदापत्त्या पूर्वोक्तानेकविधिभेदापादनेनैवार्थस्य विध्यवच्छेदकत्वं स्वतन्त्रम्, तन्निरूप्यतयाध्ययनस्येति तत्स्वीकारोक्त्या निरूपणेऽपि तत्प्राधान्यमुक्तम् । तथा च तत्तत्क्रतुविधिरूपार्थाविच्छिन्नाध्ययनविध्यधिकार एव तत्तत्क्रत्वधिकारोऽपीति मध्याधिकारस्य वृथात्वशङ्का दूरनिरस्तेत्यर्थः ।

यत्पुनरध्ययनविधिप्रयोज्यतयाप्याचार्यविधिस्पर्शानाश्रयणेन केवलाध्ययनार्थमुपनयानुष्ठानम् "इममेव तावदधिकारमालोच्य" इत्यादिना प्रकरणे उक्तम्, तदनुपपत्तिरप्युक्ताध्ययनविधिस्वीकारपरतन्त्रार्थपरत्वेनैव परिहृता इत्याह— एवञ्च न यदाचार्यीबुभूषुरिति । प्रयोज्यत्वे त्वप्याचार्यालाभे स्वाध्यायाध्ययनविधिः तदशक्तिविषयोक्ततदंशगायत्र्यादिविषयविधिश्च तत्प्रयोजकः, उपनीतकर्तृकोक्ताध्ययनरूपप्रयोज्यसिद्धये स्वानङ्गत्वेऽपीति नानुपपन्नम्; स्वाध्यायस्य स्वतोऽर्थपरत्व एव हि उपनयनस्याध्यापनाङ्गत्वेऽध्ययनं तदनपेक्षं स्यात्; विधिस्वीकारापेक्षे त्वध्यापनविधिप्रयुक्तिमूलस्तत्स्वीकार इति उपनीतकर्तृकाध्ययनानुवर्तित्वम्, सर्वविधीनामपि तदपेक्षत्वाद्विधित्वस्येति द्विजातीनामिज्या अध्ययनं दानमित्यादि स्मृतिसिद्धम् । तेन तदर्थमप्युपनयनप्रयुक्त्यवगमो युक्त इत्यर्थः । नन्वाचार्यकरण-

१. Omitted. न क ।

प्रयुक्तिमूलकः शास्त्रार्थ इत्युक्तम् । यदाचार्यविध्यप्रयुक्तं सोपनयनमध्ययनम्, तदा साधिकाराध्ययनविधिप्रयोज्यमिति न कामश्रुतिप्रयोज्यम् । अतो न शूद्रस्याप्यध्ययनप्रयुक्तेर्विद्यासाध्येष्वधिकारापत्तिः । ननु येषामेवाध्ययनं श्रुतं तेषामेव तच्छास्त्रप्रसङ्गादधिकारः क्रतौ युक्ता ह्यलौकिकार्त्विज्ये स्वशास्त्राद्वर्णभेदाश्रुतौ शास्त्रप्रसङ्गापेक्षा; क्रत्वधिकारस्तु न तथा । एवं च धर्मजिज्ञासया यत् प्रक्रियते शास्त्रं तद्धर्मजिज्ञासाप्रकरणमारभ्यम् ॥

इति प्रथमसूत्रं समाप्तम् ॥

---

विधिप्रयुक्तिबलेनैवापशूद्राधिकरणविरोधः पूर्वं परिहृतः । तस्य पाक्षिकत्वेऽपि तन्निवृत्त्यवस्थायां स्वपक्षेऽपि विरोधः परपक्ष इव स्यादित्याशङ्क्य परिहरति—यदाचार्यविध्यप्रयुक्तमिति । स्वाध्यायस्य स्वत एवार्थपरत्वोपगमेनाध्ययनस्य क्रतुविधिप्रयुक्तत्वाङ्गीकार एव तद्विरोध उक्तः, तस्याध्ययनविधिस्वीकारापेक्षत्वे तु साधिकाराध्ययनविधिप्रयुक्तं तदिति न क्रतुविधिप्रयोज्यत्वम्, तेषां तत्प्रयुक्तविद्योपजीवनेनोपनीतत्रैवर्णिकविषयताश्रयणेनाध्ययनप्रयोजकत्वं विनापि स्वविषयाध्ययनानुष्ठापकत्वोपपत्तौ गुरुव्यापारेण तत्प्रयुक्त्या वर्णान्तरविषयत्वं न स्यादित्यर्थः । क्रतुविधिप्रयुक्तत्वेऽपि तद्घुपनयनश्रुतवर्णानामेव "तमध्यापयेत्" इत्यध्ययनकर्तृत्वश्रुतेस्तदुपजीवनेन क्रतुविधयोऽपि तच्छास्त्रप्रसङ्गात्तद्वर्णनिर्णायकाः स्युरित्याशङ्कते—नन्विति । परिहरति—युक्तेति । द्रव्यार्जनश्रुतवर्णनियतं शास्त्रैकमेयाश्रयमिति तत्र शास्त्रप्रसङ्गो युक्तः; क्रत्वधिकारे तु तद्वदन्यापेक्षायां न हेतुरिति तद्विधायकवाक्योपात्तविशेषणाधिकसङ्कोचहेतुर्विद्याप्रयुक्तिगौरवपरिहारातिरिक्तो नास्तीति परपक्षे तदव्याप्तिरित्यर्थः । वेदवाक्यार्थनिर्णयसहायन्यायपरत्वाविशेषात् प्रथमसूत्रस्यापि शास्त्रान्तर्भावः परापादितोऽप्येवं सूत्रेणैव निरस्त इत्याह—एवञ्च धर्मजिज्ञासयेति । धर्मपदेन हि वेदार्थः सूत्रे उक्तः, अर्थजिज्ञासा च तात्पर्यनिर्णयात् प्राङ्नास्ति, ज्ञेयविषयत्वाज्जिज्ञासायाः तात्पर्यविषयस्यैव च ज्ञेयत्वात् । तेन नार्थनिर्णयार्थं प्रथमसूत्रप्रणयनम्; सर्वस्वाध्यायविषयतात्पर्यजिज्ञासायां तन्निर्णयार्थन्तु तदुपेयम्; तदुत्तराण्येवार्थनिर्णयार्थानीति तत्तुल्यत्वाभावान्न तदन्तर्भावः । ततस्तदनन्तरभाविन्या अर्थविषयजिज्ञासया शिष्यवर्तिन्या यत्तद्विषयसर्वसंशयनिरासमर्थं तन्निरासार्थिनाचार्येण प्रस्तुतं सूत्रजातं शास्त्रपदोक्तं तदारभ्यमित्यनेन सूत्रेण समर्थितमित्यर्थः ॥

इति प्रथमसूत्रव्याख्या ।

---

१. यदा च सोपनयन क । २. Omitted श्रुतं क । ३. ज्ञासाया यत्क्रियते क ।

# चोदनालक्षणोऽर्थो धर्मः ॥ १-१-२ ॥

"तदभिधीयते" इति । यदारभ्यतया साधितम्, तच्छास्त्रमभिधीयत इत्यर्थः । अत्रान्तरङ्गत्वात् प्रथमं वेदार्थजिज्ञासा—इति तत्स्वरूपमेव प्रतिज्ञारूपेण सूत्रयितुं चोदनाप्रमाणकताद्वारा शक्यमित्यर्थात् तत्प्रमाणतापि सूत्रिता । प्रतिज्ञासम्भवार्थं च कार्यव्युत्पत्त्यर्थसंस्पर्शित्वे अपीहान्तर्भूते ।

---

चोदना । "तदभिधीयते-चोदनालक्षणोऽर्थो धर्मः" इति भाष्येणोक्तार्थपरत्वं सूत्रस्योच्यत इति प्रतिभाति, तच्चायुक्तमसामर्थ्यादिति कोऽस्यार्थ इत्यपेक्षायामाह—यदारभ्यतयेति । पूर्वसूत्रतात्पर्यविषयस्य तत्पदोपादानम्; तदिदानीमारभ्यत इत्युच्यते । सूत्रपाठस्तत्रनन्तरपदविवरणविवक्षयेति भावः । कथमेतन्मुखत्वं शास्त्रस्य कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयतीत्यर्थद्वयपरत्वाङ्गीकारप्राप्तवाक्यभेदपरिहारश्च कथमित्यत्राह—अत्रान्तरङ्गत्वादिति । बहुविषयत्वेऽपि शास्त्रस्य वेदार्थजिज्ञासयैव सर्वेषां तद्विषयत्वमिति प्रधानतया तदर्थस्य प्रथमोक्तचर्हत्वम्, न तद्विशेषणतया तदन्तर्भूतानामिति कार्यरूपं तदिति चोदनालक्षणपदेन प्रथममुच्यते । न च गौरवात् तत्पदोक्तिरयुक्ता, तत्पदेनैव स्वरूपोक्तेः शक्यत्वात; तत्पदोपलक्ष्यव्युत्पाद्याभिमतकार्यरूपं हि न कार्यपदोक्त्यर्हम्, लौकिककार्यधिया तद्व्यावृत्तस्वरूपसूत्रणासिद्धेरिति पदद्वयोक्तिरदुष्टा; लक्षणमुखेनैव स्वरूपोक्तावर्थात्तत्प्रामाण्यस्यापि विवक्षितत्वापत्तेः गुरुपदोक्तिकृतः सूत्रदोषोऽपि परिहृतः, प्रामाण्योक्तेरार्थत्वात सूत्रे वाक्यभेददोषश्च परिहृतः । न चेदानीं चोदनाप्रामाण्यस्यासिद्धत्वात तल्लक्ष्यवस्त्वप्रतिपत्तेः स्वरूपोक्त्यनुपपत्तिः शङ्कनीया, प्रतिज्ञारूपेण तत्सूत्रणसम्भवात्;विप्रतिपन्नार्थनिर्धारणस्य पक्षप्रतिपक्षवर्त्यशेषसाधनदूषणसामर्थ्यानुसन्धानाधीनतया दीर्घकालसाध्यस्यैकैकधीवृत्त्या निराकाङ्क्षसिद्ध्यभावेऽपि तदनुगुणा काचित्सिद्धिः सर्वसम्मतेति प्रतिज्ञामात्रेणापि तत्स्वरूपोक्तिर्भाविनिर्धारणसमर्थेवेति युक्तमर्थस्वरूपपरतया शास्त्रादित्वमस्येत्यर्थः । नन्वेवमुभयत्रापि प्रतिज्ञोपक्षीणमेवैतत्सूत्रं न न्यायोपदर्शकमिति तदुपदर्शकसूत्रान्तरैकवाक्यत्वमस्याश्रयणीयम्, न्यायपरत्वनियमान्मीमांसासूत्राणाम्; तच्चाशक्यम्, तदर्हस्वानन्तरभाविनोऽभावादित्याशङ्क्य प्रतिज्ञोपयोगिन्यायद्वयपरतास्यैवास्तीति परिहरति-प्रतिज्ञासम्भवार्थं चेति । प्रवर्तकवाक्यज्ञाप्यं तत्स्वरूपमित्येतावत्युक्ते तज्ज्ञाप्यविशेषनिर्णयसमर्थन्यायनिरूपणाधीनस्तन्निर्णय इति तत्परत्वमपि स्वरूपनिष्ठस्य स्यात्;चोदनालक्षणपदयोरन्योन्यान्वितार्थधीश्वार्थसंस्पर्शित्वनिरासापेक्षेति तन्न्यायपरत्वं चेति नान्यशेषतापेक्षेत्यर्थः । ततश्चैकस्य

तदेवम् "को धर्मः, कथंलक्षणश्च" इत्येतद्द्वय[1]स्येदमुत्तरं सूत्रम्। धर्मशब्दश्च पूर्वत्रात्र च वेदार्थमात्रपरः, तद्विशेषा[2]निषिद्धफलपरश्च। यस्य च वाक्यस्यार्थमवगम्य क्रियाप्रवृत्तिः, तद्वाक्यमपि स्वार्थद्वारा प्रवर्तकत्वात् प्रवर्तनारूपविवक्षया चोदनेत्युच्यते। सा च कार्यार्थैव। तच्चेत् कार्यमलौकिकम्, तत्प्र[3]माणकमेवेत्युक्तम्—"कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति" इति॥

कार्यज्ञानस्यैव प्रवर्तकत्वम्

ननु यदि कार्यधीतः प्रवृत्तिः, तदा चोदना कार्यार्था भवेत्; सा त्विष्टोपायताधीत एवेति परमतम्। कार्यधीतोऽपि प्रवृत्तौ न कार्यमेव वेदार्थः, "आनन्दं ब्रह्म" इत्येवमादिवेदा[5]न्तवाक्यानां सिद्धार्थावगतेः। मैवम्; कार्यधीत एव[4] प्रवृत्तिः। वेदान्तानामपि कार्यपरतैवेष्टोपायता; [6]इष्टोपायताधिया हि 'ममेदं कार्यम्' इति बुद्ध्या स्वतन्त्रः प्रवर्तते। इष्टोपायताधीमा-

---

सूत्रस्यार्थद्वयपरत्वं भाष्योक्तमपि समर्थितमित्याह—तदेवमिति। नन्वर्थपदसमभिव्याहाराच्छ्रुचोनाद्यन्यपर एवेह धर्मशब्द इति कथं वेदार्थस्वरूपोक्तिपर इत्यत्राह—धर्मशब्दश्चेति। पूर्वसूत्रे तावत् अर्थपरत्वव्युत्पत्त्यर्थत्वाद्वेदार्थमात्रपरत्वं व्यक्तम्। तत एवात्रापि तत्स्वरूपोक्तचर्थत्वात्तत्परत्वमावश्यकमित्युभयपरत्वसिद्धेः पूर्वत्रापि जिज्ञासोत्थापकतया मुख्यार्थपरत्वमप्युपेयमेवेत्यर्थः। ननु चोदनापदं भावव्युत्पत्तिनियतमिति कथं प्रवर्तकवाक्यवाचितया तदर्थपरमित्यत्राह—यस्य च वाक्यस्येति। "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः" इति भाष्ये वाक्यविषयो वृद्धप्रयोगो दर्शितः। क्रियाप्रवर्तकत्वं च प्रवर्तमानपुरुषस्यैव दृष्टम्, तदुत्पादकत्वात्; तत्र वाक्योत्थधीपूर्वकक्रियाप्रवृत्तौ परम्परया वाक्यमपि प्रवर्तकम्, क्रियोत्पादकत्वादेव; तद्विषयैव चोदनापदवृत्तिः प्रयोगसिद्धा; तेन भावव्युत्पत्तिर्वैवक्षिकीहोपेया, वाक्यद्वारेण चोदकाचार्यादिव्यापारतया विवक्षार्हत्वात्—इति तदुक्तिरविरुद्धेत्यर्थः। केन सामर्थ्येनैतद्भाष्यम् "कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति" इति गुरुणोक्तमित्याह—सा च कार्यार्थैवेति। कार्यार्थत्वं तावन्न्यायसिद्धम्; तस्य वक्ष्यमाणमलौकिकत्वमपेक्ष्य प्रामाण्योक्तिरित्यर्थः। न्यायसिद्धत्वं तस्य नास्तीति परमतावलम्बनेन चोदयति—ननु यदीति। तदुपेत्य तन्नियतं वेदप्रामाण्यमित्ययुक्तमिति दूषणान्तरं चाह—कार्यधीतोऽपीति। एतदद्वयनिरासाभिप्रायेण तद्भाष्याभिप्रायाभिधानं गुरोरित्याह—मैवमिति। तत्र प्रथमनिरासे हेतुमाह—इष्टोपायता-

---

१. द्वयस्येतदुत्तरं. क. २. षादनिषिद्ध. ख. ३. तत्प्रमाणमेवे. ख.
४. Omitted. एव. क. ५. वेदान्तानां. ख. ६. Omitted इष्टोपायता.क.

त्रात् प्रवृत्त्यनुज्ञानेऽतीतानागतेष्टोपायताधीतोऽपि प्रवृत्तिः स्यात् । नन्वयमनुयोग इष्टोपायतायाः कार्यधीजननेऽपि समः । मैवम्; कृत्युद्देश्यतयेष्टोपायस्यातीतादिव्यावर्तिका; द्वयी ह्युपायधीः--अतीताद्याकारा, कार्याकारा च । तत्र कार्याकारातः प्रवृत्तेः कार्यधीतः प्रवृत्तिरित्युच्यते ।

इष्टसाधनताज्ञानं कार्यज्ञानजनकम्

नन्वेवमिष्टोपायताधीवेद्यमेव कार्यं स्यात्, नेष्टोपायताज्ञाप्यम् । मैवम्; इष्टोपायताकारोल्लेखादेव कार्यपर्यन्तं वेद्यमिति तज्ज्ञाप्यत्वमुक्तम्, यथैकधीवेद्यत्वेऽप्याकृतितो व्यक्तिधीरुक्ता । कृत्या भावी इष्टोपायः--इत्येवंधिया

धिया हीति । यद्यपीष्टोपायता लोके प्रवृत्त्यव्यभिचारिणी, तथापि कार्यधीव्यवधानेनैव सा तद्धेतुः; साक्षाद्धेतुत्वोपगमेऽतीतादावपि तदापत्तेरित्यव्यवहितहेतोः कार्यस्यैव लिङाद्यर्थतेत्यर्थः । ननु तद्व्यवधानोपगमेऽपि यथा कार्यधीजनने तदापत्तिस्त्वया निवार्यते, तथा परैरपि प्रवृत्तिजनने निवार्या इति समत्वान्नेदं तन्निरासक्षममिति चोदयति--नन्वयमनुयोग इति । समत्वनिरासेन परिहरति--मैवमिति । कार्यधीजननार्थमिष्टोपायताया अतीतादिव्यावर्तकविशेषोपगमेन कार्यस्य प्रवर्तकत्वोपगमे हि साम्यं शक्यापादनम्; न तु तथाभ्युपेतम्, कार्यशरीरान्तर्भूतकृत्युद्देश्यतयैवातीतादिव्यावृत्त्युपगमादिति न साम्यमित्यर्थः। ननु कार्यमेव कारणव्यावर्तकतया कारणमपीत्युन्मत्तभाषितमिदमित्याशङ्क्य धीभेदेन कार्यकारणभावोपगमे ह्ययं विरोधः, एकधीस्थयोरेव तदुपगमान्न विरोध इत्याह--द्वयी ह्युपायधीरिति । लोके हीष्टोपायधीरेव तस्य कृतिजन्यत्वावमर्शे कार्यधीत्वेन प्रवृत्तिहेतुः, अतीतादिरूपधियान्यथा वा तदनवमर्शे कार्यग्राहित्वाभावान्न--इत्येवं व्यभिचाराव्यभिचाराभ्यां हेतुत्वाहेतुत्वव्यवस्था, न धीभेदेनेति न व्यावर्तकापेक्षेत्यर्थः । नन्वेकधीस्थतोपगमे हेतुहेतुमत्तोक्तिर्विरुद्धेति चोदयति--नन्वेवमिति । परिहरति--मैवमिति । लोके ह्यन्वयव्यतिरेकावगम्यो हेतुहेतुमद्भावः । तत्रेष्टोपायत्वकार्यत्वयोरेकधर्मिधर्मयोरेकधीस्थत्वेऽपि कार्यत्वस्येष्टोपायत्वव्यतिरेकेण भानाभावात्तद्भानोपाधिकं कार्यत्वभानं निश्चीयते, कृतिजन्यत्वमात्रावमर्शेऽपि तदुद्देश्यत्वाभानात् इति, एकधीस्थत्वेऽपि व्यक्तेराकृतिज्ञाप्यत्वादशाब्दत्वोपगमवत्, एकधीस्थत्वेऽपि ज्ञाप्यज्ञापकभावो न विरुध्यत इत्यर्थः । नन्वाकृतेर्व्यक्तिव्यतिरेकेण भानायोग्यत्वात्तदाक्षेपकत्वं युक्तम्; इष्टोपायता कार्यव्यतिरेकेणापि भानार्हेति कथमेकधीस्थतया तद्भानहेतुरित्यत्राह--कृत्या भावीष्टोपाय इत्येवंधियेति । न केवलेष्टोपाय-

१. अतीतवर्तमानानागत. ख. २. कार्यान्तरा. क. ३. इत्येवसिद्धा. क.

कृत्युद्देश्यताबुद्ध्युत्पादादिष्टोपायताधीतः कार्यधीः । न च 'कृत्या भावी इष्टोपायः' इत्येवंधिया प्रवृत्तिरस्तु, अलं कृत्युद्देश्यतया इति वाच्यम्; इष्टकोटाविष्टोपाये हि कृतियोगस्तदुद्देश्यतयैव धीस्थ, नान्यथा; कार्यता च कृतीप्सितकर्मता इत्युक्तम्—"कृत्यधीनसिद्धि यत्कृतेः प्रधानम्, तत् कार्यम्" इति । "कृतिभावाभावानुविधानाच्च कृत्यधीनसिद्धित्वमनुमानवेद्यम्, कृतिप्रयोजनता च प्रधानत्वं मानसवेद्यम् ।" ननूत्पन्नायां कृतौ तद्भावभाविता मानसवेद्यता चेति न तद्धीतः प्रवृत्तिः । मैवम्; मूलभूतमानद्वयमिदमुक्तम्, प्रवृत्तिहेतुस्तु कार्यतास्मृतिरेव । नन्विमं व्यक्तिभेदमुररीकृत्य प्रवृत्तिः, न तत्कार्यतास्मृतेः । मैवम् । मानसानुमानाभ्यामन्यव्यक्तिष्वपि कार्यतामनु-

---

तद्धेतुरङ्गीक्रियते, कृतिजन्यत्वसहितैवेत्याकृतितुल्यतया हेतुत्वमविरुद्धमित्यर्थः । नन्वेवं कृत्युद्देश्यतैवेष्टोपायस्यातीतादिव्यावर्तिकेति हेतुत्वोपपादनं बाधितं स्यात्; कृतिसाध्यत्वस्याप्यङ्गीकारे तेनैवातीतादिव्यावृत्तिसिद्धेस्तत्सहितमिष्टोपायत्वमेव प्रवृत्तिहेतुः स्यात्; तदतिरिक्तोद्देश्यतोपगम एवानर्थक इत्याशङ्कां निराकरोति—न च कृत्या भावीति । यद्युद्देश्यत्वं विनापि इष्टोपायस्य कृतिसाध्यत्वधीः स्यात्, तदा एतच्चोद्यं भवेत्, तत्सहत्वनियमात्तु विशेषणानपेक्षत्वलाघवात्तदेव प्रवृत्तिहेतुरुपेय इत्यर्थः । ननु तदपि सविशेषणमेवोक्तं प्रकरणे "कृत्यधीनसिद्धि यत् कृतेः प्रधानं तत्कार्यम्" इत्यनेनेत्यत्राह—कार्यता चेति । नोद्देश्यत्वस्य कृतिजन्यत्वविशेषणापेक्षत्वं प्रवृत्तिजनने वक्तुं तदुक्तम्, किन्तु कार्यपदार्थस्य कृतिजन्यरूपस्यानीप्सितश्रमादावप्यनुगतत्वात्तद्व्यवच्छेदेन विवक्षितेप्सितकर्मप्रतिपत्त्यर्थमित्यविशिष्टस्य प्रवृत्तिहेतुत्वोपगमो न तद्विरुद्ध इत्यर्थः । कार्यग्राहकप्रमाणसामर्थ्यविरुद्धं कार्यस्य प्रवर्तकत्वमित्याक्षेप्तुं ग्रन्थोक्तं तद्ग्राहकप्रमाणद्वयमनुवदति—कृतिभावाभावेति । तदाक्षेपमाह—ननूत्पन्नायामिति । परिहरति—मैवमिति । मानविषयावस्थं न कार्यं प्रवृत्तिहेतुर्लौकिकप्रवृत्ताविष्यते, स्मर्यमाणतयैव तद्धेतुत्वात्; तन्मूलानुभवहेतुतया मानद्वयमुक्तम्; पृथगनुभूतयोरपि सहत्वस्मृतिरविरुद्धेत्यभिप्रायः । ननु स्मृतिरतीतव्यक्तिविषया इति प्रवृत्त्युत्पाद्यापूर्वव्यक्तिविषयप्रवृत्तिहेतुर्न युक्तेति चोद्यपूर्वकं तदुपपत्तिमाह—नन्विमं व्यक्तिभेदमिति । व्यक्त्यन्तरवर्त्यनुभूतकार्यत्वस्याननुभूतव्यक्तिसम्बन्धितयापि स्मृतिस्तज्जातीयत्वावमर्शानुषङ्गसिद्धानु-

---

१. कृत्यानुभावी ख०　　२. प्रधानमानस क०　　३. नन्विदं व्यक्ति क, ख०

भूय तज्जातीयतां[1]मवधारयतोऽनागतव्यक्तिभेदेऽपि स्मृतिर्युक्ता। नन्वाद्यप्रवृत्तावनुभवाभावान्न स्मृतिहेतुता। मैवम्, तस्यामपि प्राग्भवीयवासनोद्बोधो जीवनादृष्टादिष्टोपाश्ये[2]ऽपि—इत्युपेयत्वात्। कृतिकर्मतावस्था चेयं कृतियोगकालमात्रे न प्राङ् न पश्चादित्यस्थिरत्वात् सिद्धावस्था नास्त्येवेति कदा साध्यता इति नायमनुयोगः ॥

---

भूतांशस्पर्शान्ता नानुपपन्ना, वाक्यार्थावगमोपायभूतव्यक्त्यन्तरनिष्ठान्वययोग्यतास्मृतिवदित्यर्थः। नन्वेषापि गतिः जातमात्रस्य स्तनपानादिप्रवृत्तावसिद्धेति परिचोद्य तन्निर्वाहकं मतान्तरानुवर्तनमाह—नन्वाद्यप्रवृत्ताविति। यत्पुनरिष्टसाधनधीरेव प्रवृत्तिहेतुरिति परिशेषयितुं मतान्तरनिरासाभिप्रायेणोक्तम्—

"अर्थिता व्यापृतिः पुंसो नियमः किंनिबन्धनः।
फलसाधनता कर्म निश्चेया साध्यता कदा ॥" इति।

तत्र फलकार्ययोस्तन्त्रेण निरासमभिप्रेत्य "साध्यता कदा" इत्युक्तम्। कृत्या अन्येन वा साध्यता हि विधाद्वयेऽपि प्रवृत्तिहेतुः सा न तत्समर्था। न तावत्साध्यवस्तूत्पत्तेः प्राक् सा तद्धेतुः, धर्मिण्यसति तदाश्रितधर्मानुत्पत्तेः; असत्याश्च हेतुत्वासम्भवात्; न च पश्चात्, तदा सिद्धत्वाद्धर्मिणः साध्यत्वास्पर्शात्; सहोत्पत्तौ च धर्मधर्मिभावानुपपत्तिः—इति साधनत्वमेव साध्यजननशक्तिमत्त्वं प्रवृत्तिहेतुः; साध्यपदन्तु धीस्थतामात्रेण साधनशक्तिनिरूपकतया साधनव्यावर्तकमात्रं नाम; न तु तन्नाम किञ्चित्सत्तया स्वनिरूपितत्वमस्तीति तत्कार्यनिरासे न क्षमत इत्याह—कृतिकर्मतावस्था चेयमिति। तत्स्वरूपं विवृतं कृतिकर्मतावस्थेति जन्यजनकत्वयोगगर्भकृतिविशिष्टत्वात्मकम्। इयमित्यनन्तरोक्तप्रमाणद्वयप्रसिद्धत्वपरम्। कृतियोगेत्यादिना सहस्थितेरेकक्षमाणमात्रवर्तित्वेन प्रसिद्धत्वात् "कदा" इति प्रश्नानवकाशो दर्शितः। तस्य भाविन एव स्मृतिविषयतया प्रवृत्तिहेतुत्वप्रकारः प्रागेव दर्शित इति न परोक्तदूषणस्पर्श इत्यर्थः। ननु कृतिप्रधानत्वं मानसमित्ययुक्तम्; कृतेर्मानसत्वेऽपि तत्साध्यवर्तिप्रधानत्वं न मानसत्वार्हम्; कृतिसमानकालतापि नास्ति कृतिजन्यभावार्थव्यवहितस्यापूर्वस्य फलस्य चेति दूरापेतं तत्प्राधान्यस्य मानसत्वमिति चोद्यपूर्वकं

---

१. जातीयत्व. क. २. पायेऽप्युपेय क.

ननु न कृतिकालेऽपूर्वादिप्रधानतेति न मानसता । मैवम्; तस्यापि प्रधानता कृतेरेव धर्मः; तन्निरूपणीयतया 'तस्य' इति व्यपदिश्यते ॥

कार्यज्ञानस्यैव प्रवर्तकता

ननु 'ममेदं कार्यम्' इति न धीः; किन्तु सङ्कल्पोऽयं चिकीर्षारूपः । मैवम्; यावदियं धीर्नोत्पद्यते, तावद्बुद्धिपूर्वकारिणश्चिकीर्षैव नोत्पादिता

---

तदुपपत्तिमाह—ननु न कृतिकाल इति । 'कृतिसाध्यं प्रधानम्' इति व्यपदेशमात्रम्; विषयवर्तितया प्रधानत्वसिद्धिस्तु कृतिधियैव, कृतिविषयत्वानन्यत्वात् प्राधान्यस्य; ज्ञानेच्छाविषयत्वमपि अर्थधर्मतयैव व्यपदिश्यते; तथापि विषयिसिद्ध्यविभक्तैव तत्सिद्धिः, तदर्थयत्नान्तराभावस्य प्रसिद्धत्वात् । विषयधर्मत्वे हि व्यवहितविषयत्वे तदुत्पत्त्युत्तरकालं विषयविशेषपरिच्छेदार्थं यत्नान्तरं स्यात्; तेनानुभवसिद्धमेव विषयत्वस्य विषयिसिद्धिमात्राधीनत्वं ज्ञानादिष्विति कृतिविषयत्वं मानसप्रत्यक्षमेव । कृतेस्तु स्वजन्यायासदुःखविदुत्पाद्यत्वाद्विषयस्यानुकूलत्वमनुसन्धायैव तदुत्पाद्यतेति स्मर्यमाणविषयप्राधान्यान्ता विषयत्वसिद्धिरिति युक्ता मानसतेत्यर्थः । यथोक्तं मानसत्वं कृतिप्रधानत्वस्य कृत्यभेदापादकमिति तस्य लिङर्थतोक्तिर्भावनाया एव तदर्थत्वं नयेदिति स्वोक्तकार्यार्थत्वविरोधीति केचिदाक्षिपन्ति, तत्तूक्तमानसत्वप्रकाराविवेकनिमित्तमित्यनादृत्यम् । तत्प्रकारस्तु "न चेष्टोपायतैव कार्यता" इत्यनन्तरग्रन्थार्थोक्त्योच्यते । तत्र ह्यनुकूलतया स्मर्यमाणं साध्यं मानसप्रत्यक्षकृत्यवच्छेदकमित्युच्यत इत्यवच्छेद्यावसायित्वरूपं तद्विषयत्वमपेक्ष्य मानसत्वोक्तिः, न कृत्यभेदापेक्षयेति नोक्तदोषः; तत्साध्यत्वानुवादेन तद्विनिवेशोक्तावभेदापादनं चातिबालतयेत्यनवद्यम् । ननु कृतिविषयस्यानुकूलत्वमिष्टोपायत्वमेवेति तद्विफलेच्छाविषयत्वान्तं कृतिविषयत्वं कृतिप्रधानरूपं कार्यत्वं स्यादिति चिकीर्षाविषयत्वमेव तत्, न मेयरूपमिति न शाब्दमिति परिचोद्य तदाह—ननु ममेदं कार्यमितीति । बुद्धिपूर्वं कृतिजन्मेति तावत्प्रसिद्धम्; सा च बुद्धिः कृतिसमानविषया; कृतिश्च साध्यविषयेति कृतिसाध्यत्वधीपूर्विकैव कृत्युत्पत्तिः; तदुत्पादिका चिकीर्षा च कृतिसाध्यत्वधीपूर्विका, नेष्टसाधनत्वधीमात्राधीना; कृतिविषयत्वहीनेच्छामात्रस्य चिकीर्षारूपत्वाभावात्—इतीष्टसाधनत्वकृतिसाध्यत्वधीपूर्विका चिकीर्षा कार्यत्वप्रतीतिपूर्विकैव, कृतिसाध्यत्वधिय एवेष्टोपाय-

स्यात्, इष्टोपायताधीमात्राच्चिकीर्षानुत्पत्तेरित्युक्तम् । सङ्कल्पकार्यधियो-स्तुल्याभिलापादभेदाभिमानः । न चेष्टोपायतैव कार्यता, उपायोपेययो-र्भेदादिष्टस्यापि कार्यतादृष्टेः; इष्टोपायताधीत एव क्लेशरूपस्य कार्यतेति नित्यप्रत्यासत्तेरभेदाभिमानः । बालस्य च स्तनपानान्तरप्रवृत्त्यनुसन्धाने शब्दतद्व्यापारमित्यसम्भवान्न तयोर्हेतुता शङ्किता । शब्दवाच्यतार्थं च प्रवृत्तिहेतुनिरूपणे सङ्कल्परूपेच्छानन्तरत्वेऽपि प्रयत्नस्य नेच्छायाः प्रवृत्ति-हेतुतोक्ता । उत्पन्ना हि सा तद्धेतुः, न बोधिता । तदेवं पार्श्वस्थो-

---

विषयाया उद्देश्यत्वग्राहित्वादिति न तदसिद्धिरित्यर्थः । कृतिसाध्यत्वधिया विनैव चिकीर्षोत्पत्त्युपगमे चातीतादौष्टोपायधियापि सा स्यादित्युक्तमित्यभिलापैक्य-मात्रनिमित्तोऽयमभेदभ्रम इत्याह—इष्टोपायताधीमात्रादिति । ननु चिकीर्षायाः कृति-साध्यत्वधीपूर्वकत्वनियमेन कार्यतायास्तदन्यत्व इष्टोपायताव्यतिरेको दुर्लभः, तदा हि तदुद्देश्यतार्थं तदुपायत्वस्यावश्यकत्वात् । न चोद्देश्यत्वहेतुतया प्रवृत्त्यहेतु-त्वम्; न ह्युद्देश्यत्वं कृतिस्वभावप्रयुक्तं न च साध्यप्रयुक्तमिति तन्निरूपकतयेष्टोपा-यत्वस्यावश्यकत्वे तद्धेतुत्वानिवृत्तेरति नामान्तरेणेष्टोपायत्वमेवाभ्युपगतं स्यादिति शङ्कां परिहरति—न चेष्टोपायतैवेति । उपायत्वस्यापि तन्निरूपकत्वायोगादुपेयभूतेष्ट-स्यैवोपायताद्वारेण तन्निरूपकतेत्युपायत्वं न तन्निरूपकतयापि कार्यशरीरानुप्रवेशि, तदव्यतिरेकेणोपेयभूतेष्टस्यैव कार्यत्वदृष्टेश्च । तेन कर्मस्वभावप्रयुक्ता तत्रोपायतानु-वृत्तिः, न कार्यप्रयुक्तेति वेदे तदन्यकार्यसिद्धौ तत्प्रामाण्यादनुकूलस्वभावमात्राधीना तत्कार्यतेति फलितं स्यात् । लोके तु शब्दस्य स्वातन्त्र्याभावात् मानान्तरानुसारितेति न शब्दस्य साधनत्वस्पर्श इत्यर्थः । हेतुशक्तिविवेकासमर्थानामुपायत्वव्यतिरे-कादर्शनमात्रमूलोऽयमभेदभ्रम इत्याह इष्टोपायताधीत एवेति । शब्दतद्व्यापारयोः प्रवृत्तिहेतुतया परोक्तयोरप्यनिरासे बृहत्युक्तनिरासस्मरणार्थं यथाबृहत्येव कारणमाह—बालस्य चेति । नन्विष्टोपायतायाः कार्यताव्यवहितत्वात् प्रवृत्त्य-हेतुत्वे कार्यताया अपि चिकीर्षाव्यवहितत्वेन तत्तुल्यत्वाद्यत्नरूपप्रवृत्त्यनन्तरकारणे-च्छैव हेतुरिति वक्तव्यम्, न कार्यतेति शङ्कां परिहरति शब्दवाच्यतार्थमिति । शब्दबोधिततया हेतुत्वार्हप्रवृत्तिहेतोरेवेह प्रस्तुतत्वाद्युक्ता तदुक्तिरित्यर्थः । प्रवृत्ति-

---

१. सा प्रवृत्तिहेतुः. ख.

व्युत्पित्सुः शब्दश्रुत्यनन्तरं चेष्टां दृष्ट्वा तद्विषयां प्रयोज्यगतां शब्दजां कार्यधियमवधारयन्नावापोद्धारभेदात् कार्यान्वितस्वार्थाभिधानेऽन्येषाम्, लिङादेस्तु कार्याभिधाने व्युत्पद्यते। वेदे च प्रसिद्धार्थनियोज्यपरकामिपदसमभिव्याहारात् स्थायिकार्ये मानान्तरागोचरे[1] व्युत्पद्यते। तेन कार्येऽर्थे वेदस्य प्रामाण्यं युक्तम्।

### सिद्धार्थे व्युत्पत्तिनिराकरणम्

यदुक्तम् वेदान्तानां सिद्धार्थपरतेति[2], तन्न; नाद्या व्युत्पत्तिः सिद्धार्थे युक्ता। ननु 'पुत्रस्ते जातः' इति[3] पदनिचयसमधिगममनु परनरगतविदितवदनविकसनगमकगमितसमभिलषिततनयभवनमितिमनु वचनजनितमतिरियमिति सुखमनुभवति। तन्न, सुतजन्मैवानेनावगतम्—इति विशेषानवधारणात्। न च 'तदेवास्य प्रियम्' इति पारिशेष्यादनुमानाद्विशेषधीः; न हि कस्यचिज्जन्तोरेकमेव प्रियम्। न च स्वाधिगततत्प्रिये

हेतुविचारोपसंहारमुखेन तत्फलभूतां कार्यव्युत्पत्तिं विविच्य दर्शयति—तदेवं पार्श्वस्थ इति। 'कार्येऽर्थे वेदस्य प्रामाण्यम्' इत्येतदर्थं तदपेक्षितापूर्वव्युत्पत्तिमाह—वेदे चेति।

'कार्यमात्रे वेदस्य प्रामाण्यम्' इत्यस्य पूर्वोक्तविरोधमनूद्य आद्यव्युत्पत्तेः कार्यैकविषयतया परिहरति—यत्तु वेदान्तानामिति। तदेकविषयत्वं नास्तीति चोदयति—ननु पुत्रस्ते जात इति। परिहरति—तन्नेति। मुखविकासलिङ्गस्य सुखोत्पत्तिमात्रगमकत्वात्तदुत्पादकविशेषाप्रतिपत्तेः न विशिष्टार्थवाचित्वव्युत्पत्तिस्ततः स्यात्; प्रियधीकरत्वधीर्न व्युत्पत्तिः, प्रियाप्रिययोः देशकालभेदेनानियतत्वात् अर्थविशेषवाचित्वासिद्धेः अनियतधीहेतुत्वस्य च स्मृतिकरतया सर्वविषयतया सर्वस्य सम्भवान्न व्युत्पत्तिरूपतेत्यर्थः। ननु निवृत्तप्रियान्तरपुरुषान्तरवर्तित्वविशेषणापेक्षया मुखविकासस्य प्रियविशेषलिङ्गत्वसम्भवात् अर्थविशेषविषयव्युत्पत्तिर्भवेदिति शङ्कां निवर्तयति—न च तदेवास्येति। संनिकृष्टविप्रकृष्टप्रीतिकराणामियत्तानवधारणादन्यनिवृत्तिनिश्चयायोगान्न विशेष-

१. अगोचरेऽपि उत्प. क, ख. २. सिद्धार्थत्वम्. क, ख.
३. इतिवदनियमसमधिगममनुवरनरतेविदित. क. ४. लषितेनय. ख.

तद्धीरिति क्लृप्तत्वादवधृतिः तत्रैवानेकस्य सम्भवात्—सुतो जातः, मृता ते सुखं प्रिया—इत्येवमादेः क्लृप्तत्वात्, क्लृप्ताचातीतादेरपि स्वहर्षहेतुतेति परहर्षेऽपि तद्धीर्भवति[1]; चेष्टा तु नियतैव दृष्टेति भेदः। न च चेष्टाधीरपि न शब्दजा[2] इति शङ्का, दृष्टे हेतौ कल्पनानुपपत्तेः। अतः सूक्तं व्यवहारत एवाद्या व्युत्पत्तिरिति। ननु व्यवहारतोऽपि[3] व्युत्पत्तौ न कार्यार्थतासिद्धिः, निधिमानेष भूभागः—इति श्रुत्वा निध्यर्थितया तद्ग्रहणकार्यतां बुध्वा कार्यार्थशब्दाभावेऽपि प्रवृत्तेः। तन्न; शब्दादस्य धीः[4]—इति बुध्वा कार्यार्थशब्दाश्रुतेरध्याहृत्य कार्यं शब्दस्य तत्परतामवधारयति। निधिमत्ताकथाविवक्षाया-

विषयत्वसिद्धिरित्यर्थः। ननु विशेषजिज्ञासा स्वावगतप्रियविशेषे पर्यवस्यतीति तद्विषयत्वसिद्धिरित्यत आह न च स्वाधिगततत्प्रिय इति। स्वोदाहृतविशेषे तावदनेकप्रसक्तिरपरिहृता; तदर्होदाहरणान्तरेऽपि अतीतानागतानन्तप्रियार्थनिमित्तसुखोपपत्तेः स्वस्मिन्ननुभवसिद्धत्वात् पुरुषान्तरेऽपि तच्छङ्कानिरासेन विशेषावधारणमशक्यम्; तेन सिद्धार्थवाक्ये व्युत्पत्तिर्दुर्लभा; कार्येऽर्थे तु सुलभेति तदनुसार्येव निर्णय इत्यर्थः। ननु चेष्टायाः स्वकार्यधीहेतुकत्वनियमेऽपि तद्धियः स्ववृत्तौ हेत्वन्तरोत्थत्वदर्शनादशब्दजत्वशङ्कया व्युत्पत्त्यसिद्धिः तुल्यैवेति शङ्कां परिहरति—न च चेष्टाधीरिति। तस्यापि हेतुत्वमन्वयव्यतिरेकावगम्यमिति शब्दस्याप्यत्रान्वयव्यतिरेकसिद्धे हेतुत्वे तावतैव कार्योपपत्तावनुपलब्धहेत्वन्तरशङ्कानवकाशान्न साम्यमित्यर्थः। उपसंहरति—अतः सूक्तमिति। तथापि कार्यार्थत्वनियमः शब्दार्थस्य न सिध्येदिति चोदयति—ननु व्यवहारतोऽपीति। वाक्यानन्तरभाविविशिष्टार्थविषयप्रवृत्तिमात्रं हि व्युत्पत्त्युपयोगि तावतैव प्रवृत्तिविषयार्थधीशक्तत्त्ववगमसिद्धेः, कार्यधीस्त्वशब्दोत्थापि प्रवृत्तिहेतुः स्यात् स्वतन्त्रप्रवृत्ताविवेति तद्विषयधीमात्रं शाब्दमस्तु कार्यार्थशब्दाभावादित्यर्थः। परिहरति—तन्न शब्दादस्येति। तत्रापि बालः प्रवृत्त्यनुमितधीकरत्वं शब्दस्य कल्पयन् विशिष्टकार्यधीशक्तिमेवावधारयेत्; तदंशमात्रधीशक्तिम्, तन्मात्रधियः प्रवृत्त्यहेतुत्वात्। पश्चात्प्रतिपदव्युत्पत्त्यनन्तरं तद्विरोधानुसन्धानेऽपि अध्याहारेण तदविरोधमेव कल्पयेत्, न पूर्वावगत-

१. भवत्येव ख। २. पि शब्दजा क।
३. तोऽपि न कार्यार्थ क। ४. दथधीः ख।

मपि वक्तुः कार्यार्थस्यैव सिद्धार्थपरतालक्षणेति धीः ।

अन्वितबोधेनापि प्रवृत्तिसिद्धिशङ्काव्युदासः

नन्वर्थान्तरान्वितपरत्वकल्पनयापि कार्यपरताधीसिद्धेर्मया कार्यरूपविशेषे शक्तिगौरवं च। मैवम् ; कार्यान्विते धीनियमात्तत्रैव शक्तिः, न त्वर्थान्तरान्विते; महाविषयत्वे हि गौरवमुक्तं स्यात् । न हि वह्निजातीयनियते पाकफले द्रव्यमात्रे

---

विपरीतमित्यर्थः । यदि तु मानान्तरेण वक्तुः कथामात्रविवक्षामवधारयेत तथापि पूर्वावगत्यबाधेन प्रयोगविशेषनिष्ठलक्षणोपकल्पनया तदुपपत्तिं नयेत् कार्यार्थशून्यार्थविशेषधीमात्रस्य शब्दकार्यतावगत्यशक्त्यनुसन्धानेनेत्याह —निधिमत्ताकथाविवक्षायामपीति । ननु सान्निध्याद्युपाधिमदन्यान्वितस्वार्थाभिधानशक्त्युपगमेनापि कार्यसन्निधौ तदन्वयधीसिद्धे कार्यान्वितार्थशक्तिकल्पना मानशून्या गौरवदूषिता च सिद्धार्थप्रयोगलक्षणाकल्पनान्ता कथमाश्रीयत इति चोदयति—नन्वर्थान्तरान्वितेति । परिहरति—मैवम्, कार्यान्विते धीनियमादिति । शक्तिकल्पकशाब्दधीकार्यस्य व्युत्पत्तिभूमिवर्तिनः कार्यान्वितनियतत्वान्न सामान्यमात्रे शक्तिकल्पनावकाशः । न च कार्यांशत्यागेनान्वितधीशक्त्युपगमे शक्तिलाघवं तद्धेतुः गौरवकरत्वात्तदुपगमस्य; विषयाधिक्यं हि गौरवापादकम्; कार्याकार्यान्वितोक्तौ च तदाधिक्यमिति गौरवहानायैव कार्यान्विते शक्तिराश्रितेत्यर्थः । एतदेव दृष्टान्तोक्त्योपपादयति—न हि वह्निजातीयेति । ननु पाककार्यनियमस्य प्रत्यक्षत्वात्तच्छक्तिरपि तत्र नियतैवोपेया, न तथा शक्तिकार्याभिधाननियमः प्रसिद्ध इति न दृष्टान्तसाम्यम् ; तत्कार्यव्याप्तिरेव चेह प्रसिद्धा; न च कार्यव्याप्तिः शक्तिकल्पनापेक्षा, सर्वपदानां कार्यान्वयावस्थायामन्वयशक्तेः क्लृप्तत्वादन्यान्वयेऽपि पदानां भेदाभावात् तद्गतिशक्त्यनुवृत्तेरवारणीयत्वात; ततश्च कार्यानुत्पत्तिपक्ष एव कल्पनागौरवम् , शक्तिप्रतिबन्धककल्पनापेक्षत्वात्तन्निवृत्त्युपगमस्येति कार्यान्विते धीनियमादित्यादिग्रन्थो न प्रेक्षापूर्वक इति प्रतिभाति । उच्यते–"सिद्धापदेशेषु वक्त्रभिप्रायादेव वाक्यार्थधीः, नान्विताभिधानात्" इति ग्रन्थेनानन्तरमेव कार्यान्वितनियततयैवाभिधानोक्तेः न दृष्टान्तसाम्यासिद्धिः । न च पदाभेदमात्रात् क्लृप्तशक्तित्वं सिद्धापदेशकवाक्यस्य, प्रतिवाक्यावधारणीयतात्पर्यशक्तेरभिधानेऽन्तरङ्गहेतोर-

---

१. परतासिद्धेः क । २. Omitted च क ।

शक्तिः। होळाकमूलवेदस्य तु यन्न प्राच्यविषयत्वम्, तत्तत्रैव वाच्यम्। कार्यपरत्वद्वारतयैव परस्परान्वयोऽपि व्युत्पन्न इति न प्रतिपदं धर्मः। न च लोकवद्वेदान्तेषु परस्परान्वयमात्रपरता लक्षणया युक्ता, विवक्षाभावात्। अतः कार्यपरता[१]नुपगमेऽबोधकतैव तेषां स्यात्। ननु यदि लोके लक्षणया सिद्धान्वयपरता, तदाऽनभिधानं वाक्यस्य स्यात्; मुख्यार्थस्यैव हि वाक्येऽन्विताभिधानमिष्यते। मैवम्; सिद्धापदेशेषु वक्त्रभिप्रायादेव वाक्यार्थधीः,

---

क्लृप्तत्वात्तत्कल्पनापत्त्या गौरवदोषोऽपि व्यक्त एव; तदसिध्यैवाभिधाननिवृत्तिरपि युक्तेत्यभिप्रायः। ननु सङ्कुचितदृष्टकार्यकल्प्यकारणस्य तदधिकव्याप्त्यसम्भवे प्राच्यमात्रानुष्ठितहोलाककर्मविधेस्तदाचारकल्प्यस्य सर्वविषयत्वाश्रयणमयुक्तमित्याशङ्क्य तदुपपत्तिस्तत्रैव वाच्येत्याह— होलाकमूलवेदस्येति। ननु कार्यान्विताभिधानपक्षे सर्वेषामपि तदन्वयाद्विषयत्वापत्तेः प्रतिपदं कर्मभेदः स्यादित्यत्राह— कार्यपरत्वद्वारतयेति। परस्परान्वयोक्त्यविरोध्येव कार्यपरत्वं व्यवहारव्युत्पन्नम्, न साक्षादेवेति यथाविनियोगमेव तदित्यर्थः। ननु कार्यं विनापि लक्षणया लौकिकवाक्यानामर्थबोधाङ्गीकाराद्वेदान्तवाक्येष्वपि तदा ततः 'कार्येऽर्थे वेदस्य प्रामाण्यम्' इति नियमोक्त्यनुपपत्तिरिति शङ्कां परिहरति— न च लोकवद्वेदान्तेष्विति। वक्तृविवक्षानुमानोपक्षीणा सा लक्षणा, नाभिधानानुप्रविष्टेति न वेदप्रामाण्यापादनक्षमेत्यर्थः। ततस्तेष्वपि कार्यपरतैव प्रामाण्यनिर्वाहिकेत्याह— अतः कार्यपरतानुपगम इति। ननु विवक्षानुमानमप्यभिधानान्तरमेव, व्युत्पत्तिसिद्धाभिधानविरोधहानार्थत्वाद्विवक्षानुमानस्येति कार्यनियतशक्त्युपगमेन लक्षणया लौकिकवाक्यगत्युपगमोऽप्यशक्यः, मुख्यार्थनियताभिधानभङ्गापत्तेरिति कार्यनियतशक्त्युपगम एव हेय इति चोदयति— ननु यदि लोक इति। परिहरति— मैवं सिद्धापदेशेष्विति। विवक्षानुमानस्याभिधानपर्यवसायित्वनियमो नाभ्युपेयते, सिद्धापदेशानामनुमानमात्रोपनेयार्थत्वादिति न कार्यनियतत्वं सिद्धान्तान्तरविरोधीत्यर्थः। ननु लौकिकवाक्येषु अभिधाननियमाभ्युपगमसूचकम् "वाक्ये सर्वाण्येवामुख्यार्थानि न प्रयुज्यन्ते" इति अभिधानोपयोगिमुख्यार्थपदसद्भावनियमप्रसाधन-

---

१. नुगमे. क.

नान्विताभिधानात् सङ्केतपदेभ्य इव। "न च वाक्ये सर्वाण्येवामुख्यार्थानि" इति यदुक्तम्, तदन्विताभिधायके कार्यार्थे वाक्ये, न तु सिद्धार्थे'ऽपि। लिङादिरेव तु कार्यार्थो लाक्षणिकः। न चामुख्यार्थपरे लिङादावन्येषामन्विताभिधानाभावः; न ह्यपूर्वकार्यान्विते स्वार्थेऽन्येषां व्युत्पत्तिः, लोकवेदव्यापितया मुख्यामुख्यकार्यान्वितस्वार्थ एवं व्युत्पत्तेः। सिद्धार्थे तु प्रसिद्धार्थाभिव्याहारात् व्युत्पत्तिर्व्युत्पत्तिपूर्विकैव, नाद्या व्युत्पत्तिः।

---

मित्याशङ्क्य तदपि कार्यार्थवाक्याभिप्रायम्, न सिद्धार्थाभिप्रायमिति परिहरति— न च वाक्ये सर्वाण्येवेति। ननु लोके कार्यार्थशब्दस्य लक्षणावृत्त्युपगमात् कार्यार्थाभिप्रायमपि तत्समर्थनमशक्यमित्याशङ्क्य लिङादिमात्रं तत्र लक्ष्यार्थम्, पदान्तराणि मुख्यार्थानीति नाभिधानानुपपत्तिरिति परिहरति—लिङादिरेवेति। ननु तत्तन्त्रतोपगमवदन्येषामप्यमुख्यार्थतेत्यत्राह—न चामुख्यार्थपरे लिङादाविति। नान्येषां लोकसिद्धव्युत्पत्तेर्विचलनहेतुरस्तीति तेषां मुख्यामुख्यकार्यान्वितस्वार्थशक्तिरविहतेति तेषां लोकेऽप्यन्वितार्थाभिधानं स्थितमेवेत्यर्थः। नन्वन्येषां सिद्धार्थप्रयोगेऽपि समभिव्याहारमूला व्युत्पत्तिरस्तीति कथं कार्यान्वयनियमाङ्गीकार इत्यत्राह—सिद्धार्थे त्विति। आद्यव्युत्पत्तेः कार्यान्वितविषयत्वनियमे तद्व्युत्पन्नपदसमभिव्याहृतानां तत्समानस्वभावत्वावगमात्तन्नियतविषयत्वाच्च व्युत्पत्तेर्विषमस्वभावाप्रतिपत्तेस्तेषामपि शक्तिः कार्यान्वितनियतैवेत्यर्थः। यत एवम् "चोदनेति क्रियायाः प्रवर्तकम्" इति भाष्यं वक्ष्यमाणानपेक्षत्वार्थकार्यैकविषयप्रामाण्यसाधनपरम्, तस्मात्कार्यैकविषयत्वरोधितया सिद्धरूपेणावभासमानस्य मन्त्रार्थवादार्थस्यापि कार्यार्थविधिभागैकवाक्यत्वप्राप्तकार्यान्वितरूपापेक्षया कार्यत्वाहानादन्वितरूपमेव च शब्दमेयत्वादतात्पर्यविषयस्वरूपमात्रस्य तद्विरोधित्वं नास्तीति तदर्थोऽपि कार्य एव; तात्पर्यबहिष्ठस्य सिद्धरूपस्य मानान्तरग्राह्यत्वेऽपि अन्वितरूपस्य नेन्द्रियादिग्राह्यतेत्युक्तार्थसमर्थनार्थमेव "चोदना हि भूतम्" इत्यादिभाष्यम्; "नान्यत्किञ्चनेन्द्रियम्" इति चार्थवदेव, न परपक्षव-

---

१. Omited अपि. क.     २. Omited एव. क.

अतो मन्त्रार्थवादार्थः स्वरूपतः सिद्धोऽपि कार्यान्वितरूपेण कार्य एव, नच तद्रूपे मानान्तरगम्यतेति "चोदना हि" इति भाष्यम्, "नान्यत् किञ्चन नेन्द्रियम्" इति च; अतो न प्रतिज्ञाहानिः कार्यरूप एव वेदार्थ इति ॥

शब्दस्यार्थास्पर्शित्वशङ्का

"नन्वतथाभूतम्" इति भाष्यं प्रतिज्ञादोषमाह—न चोदनालक्षणं किञ्चिदिति, पुंवाक्ये व्यभिचारदर्शनोत्थं संशयरूपमर्थासंस्पर्शित्वं शब्दस्य ब्रुवत्। न च प्रत्यक्षादिवत् भेदाग्रहसमाधेयो व्यभिचारः; तत्र हि दोषादग्रहः, इह तु शाब्दधीहेतोः शब्दस्य न दोषः, नरगतस्तु दोषो न धीहेतुः; किन्तु शब्दव्यक्तिहेतुदोष इति। इदमेवोक्तं गुरुणा— 'अन्तरा बाधकेऽप्य-

---

दित्याह—अतो मन्त्रार्थवादार्थ इति। प्रकृतमुपसंहरति—अतो न प्रतिज्ञाहानिरिति।

"नन्वतथाभूतम्" इति चोदनाया अर्थव्यभिचारशङ्का न युक्ता, मानान्तरगम्यव्यभिचारस्यातद्गोचरार्थस्य चोदनायामशङ्कनीयत्वादित्याशङ्क्य तदभिप्रायमाह—नन्वतथाभूतमिति। न चोदनामात्रस्यार्थव्यभिचारोऽनेन चोद्यते; पुंवाक्यव्यभिचारदर्शनमूलं शब्दमात्रस्य अर्थनिश्चयजननासामर्थ्यमाशङ्क्यत इति चोदनालक्षणप्रतिज्ञादोषपरं भाष्यमिति नानुपपत्तिरित्यर्थः। ननु क्वचिद्व्यभिचारेऽप्यन्यत्र प्रामाण्यं प्रत्यक्षादाविवास्तु इत्यत्राह—न च प्रत्यचादिवदिति। न च तत्रापीन्द्रियादिजज्ञानस्य व्यभिचारमङ्गीकृत्यान्यत्र प्रामाण्यमिष्यते; व्यभिचारविषये हि शुक्तिरजतादौ विवेकाग्रहादन्येच्छयान्यविषयप्रतिपत्तिमात्रं भवति; तच्च भेदग्रहान्निवर्तत इति प्रवृत्तेस्तदुद्देश्याभीष्टार्थप्राप्तिफलनिवृत्तिमात्रं व्यभिचारः, न ज्ञानस्यार्थव्यभिचार इति न प्रामाण्यहानिः; शब्दोत्थज्ञानव्यभिचारे तु विवेकाग्रहः प्रवृत्तिहेतुर्न युक्तः, तदग्रहस्य ज्ञानहेतुदोषनिमित्तत्वाच्छब्दे च दोषस्वभावत्वायोगात्। शब्दप्रयोक्तृनिष्ठस्तु दोषो न शाब्दधीहेतुदोष इति प्रत्यक्षाद्यतुल्यत्वाद्विषयशून्यज्ञानहेतुदोषत्वमेव शब्दस्यापादयेद्व्यभिचारदर्शनमिति प्रतिज्ञानुपपत्तिरुक्तेत्यर्थः। ननु बाधितविषयेऽपि शाब्दबोधानुवृत्तिः व्यभिचारहेतुरुक्तो गुरुणा, न दोषाभाव इत्याशङ्क्य दोषाभावफलोक्त्या दोषभावद्वारकाग्रहसमाध्यसम्भव एव विवक्षित इत्याह—इदमेवोक्तमिति। नन्वाप्तवाक्यमूलकलोकव्यवहारबाधितमिदमनिश्चाय-

---

१. बाधकेऽपि दृष्टे श. ख.

दुष्टशब्दोत्था धीर्व्यभिचरत्येवेति नाग्रहोऽयम्" इति । आप्तवाक्याद्व्यवहारः सन्देहान्मानान्तराद्वा । वेदार्थे तु मानान्तरानुमानादपि न निश्चय, मानान्तरामेये वेदार्थे वक्तुरनुपगमात् ।

[पौरुषेयवाक्यानां पुरुषाभिप्रायानुमापकतयैव प्रामाण्यम् ।

उच्यते—न हि ज्ञानं व्यभिचरति वेद्यम्, तदारूढस्यैव वेद्यत्वात् । नरगिरान्त्वियं गतिः । अबुद्धबोधनायापि हि वाक्यं प्रयोक्तुं शक्यम् । अतो नराभिप्रायानुविधायि नरवाक्यमिति न स्वतोऽर्थधीः । तथा च नरानसत्यप्यर्थे भूयोवाक्यरचकान् दृष्ट्वा न वाक्यमात्रादर्थनिश्चयः; यदा तु 'मानान्तरादर्थं बुद्ध्वा तद्विवक्षया निजशक्त्यप्रमादाभ्यां तद्वाचकमुच्चारितवान्' इति धीः; तदार्थनिश्चयः । नन्वेवमपि वक्तुरेवंरूपतां बुद्ध्वा तद्वाक्यादेवार्थनिश्चयोऽस्तु । तन्न; एवंरूपताबोधे हि मानान्तरान्तर्भावो

कत्वोपपादनमित्याशङ्क्य तदविरोधोक्त्या वेदमात्रवर्त्यैवेदमिति परिहरति—आप्तवाक्यादिति । उच्यत इत्यादिना समाधानमाह । क्वचिज्ज्ञानस्य विषयव्यभिचारसिद्धौ हि वाक्यजन्यस्य तच्छङ्का स्यात्, तदवच्छेदकतया स्फुरत एव वेद्यत्वात्तद्विधुरस्य च ज्ञानस्याभावान्न तत्सिद्धिरिति शाब्देऽपि न तच्छङ्केत्यर्थः । ननु शाब्दे व्यभिचारो दर्शित इत्याशङ्क्य पुंवाक्ये व्यभिचाराभावमुपपादयति—नरगिरामिति । गृहीतशक्त्यपि हि पुंवाक्यं तदग्रहानन्तरमेवासदर्थवाक्यप्रयोगशक्त्यवमर्शजतत्संशयप्रतिबद्धशक्तिकं न श्रुतमात्रमर्थधीकरम्; भूयोऽर्थशून्यवाक्यप्रयोगदर्शनाच्च वाक्ययोग्यार्थविषयवक्तृप्रमित्यनुमाननिवारिते प्रतिबन्धके पश्चाद्वाक्याभिधानमिति न व्यभिचारावकाश इत्यर्थः । ननु वक्तृप्रमित्यनुमानं विनापि प्रतिबन्धकनिवृत्तिर्व्यभिचारप्रयोजकभ्रमादिचतुष्टयनिवृत्त्यवगत्यैव सिद्धेति वाक्यमेवार्थनिश्चायकमस्त्विति पृच्छति—नन्वेवमपीति । परिहरति—तन्न; एवंरूपताबोधेहीति । वक्तुरसदर्थवाक्यप्रयोगप्रयोजकशून्यत्वमेव प्रमितिकारणत्वनिश्चयाधीननिश्चयमिति नार्थविषयं तत्र वाक्यस्य स्वातन्त्र्यमस्तीत्यर्थः । तदेवोपपादयति—

१. मानानुमानादपि क. २. Omitted. वेदार्थे ख. ३. वेद्यं तदारूढम्, तस्यैव क.
४. सङ्गतिः, क. ५. Omitted. हि. ख. ६. Omitted. च. ख.

दुर्वारः; यदर्थधीयोग्यं यद्वाक्यम्, तन्मानधीर्हि तद्वाक्याद्यावन्न जाता[1], तावद्व्यभिचारशङ्का नास्ति; तच्छङ्का हि 'अमानबुद्धार्थविषयं वाक्यम्' इत्येवम्; सा च तन्मानतद्विवक्षातदुच्चारणाविसंवादादपैतीति बलान्मानान्तरान्तर्भावः । नन्वेवमाप्ततावधारणान्तर्गता मानान्तरधीरिति नाप्तवाक्याल्लिङ्गाद्गम्यमवशिष्यते । मैवम्; वाक्ययोग्यार्थे निरस्तभ्रमादिचतुष्टयोऽयम्—इत्येवंरूपमाप्तत्वमवधार्य, 'तत्प्रयुक्तमिदं वाक्यम्'[2] इति चानुसन्धाय मूलमाननिश्चयः ।

ननु वाक्यं बुद्ध्वैव तद्योग्यतां च, आप्तत्वानुसन्धानमिति नाप्ततां

---

यदर्थधीयोग्यमिति । यदि व्यभिचारशङ्कायामर्थसाधकप्रमाणाभावस्य व्यभिचारप्रयोजकतयान्तर्भावो न स्यात्, तदा तन्निवृत्तौ तत्प्रमाणान्तर्भावोऽपि न भवेत्, शङ्काहेतुनिवृत्तिमात्रस्यापेक्षितत्वात् । तच्छङ्का तु न तद्रहिता, व्यभिचारहेतूनां बहुत्वादर्थसद्भावप्रयोजकविपरीतरूपेणैकीकृत्य व्यभिचारप्रयोजकतया शङ्काहेतुत्वादर्थसत्तासाधकप्रमाणेतररूपेणैव भ्रमादीनां व्यभिचारशङ्कानिवेश इति तत्प्रमाणनिश्चयादेवावगमार्हता; व्यभिचारप्रयोजकेयत्तानिश्चयाधीनश्च सर्वनिवृत्तिनिश्चयः; तदियत्ताधीश्च प्रमाणमेवैतद्व्यतिरिक्तं वाक्यप्रयोगकारणमिति निश्चयपूर्विका; तन्निश्चये व्यभिच्चारहेतुनिवृत्तिधीरेव प्रमाणनिश्चयान्तेति प्रतिबन्धकनिवृत्त्यपेक्षया वाक्यमेवार्थनिश्चायकमित्यसम्भावितमेतदित्यर्थः । नन्वेवं वक्तृज्ञानलिङ्गत्वमपि वाक्यस्य न स्यात्; तदुपगमे च यादृशं लिङ्गमिष्टं तादृशमपेतान्यकारणशङ्कमभिधायकमस्त्वित्यभिप्रायेण चोदयति—नन्वेवमिति । परिहरति—मैवमिति । योग्यार्थस्मृत्यनन्तरं तदभिधानार्थमेवार्थशून्यत्वशङ्कानिवर्तकमूलमाननिश्चयापेक्षा; तदनुमानार्थन्तु तदितरकारणनिवृत्तिधीमात्रमपेक्षितम्; तावतैवावशिष्टकारणानुमानाविरोधादित्याप्तताद्वैविध्योपगमान्न विरोध इत्यर्थः । उक्ताभिप्रायमेव स्पष्टयितुमनुमानसामग्रीलाभात् प्रागेवाभिधानसामग्रीलाभान्न लिङ्गतेति चोदयति—ननु वाक्यं बुद्ध्वैवेति । दोषनिवृत्त्यनुसन्धानानन्तरमेवाभिधानसामग्रीसिद्धेः तदेवास्तु, मा भूत्पुनर्निवृत्तदोषवक्तृप्रयुक्ततानुसन्धानापे-

---

१. ता. न तावद्व्यभिचारशङ्कापैति तच्छङ्का हि मान. ख.

२. Omitted इदं वाक्यम्. क.

बुद्ध्या पुनर्वाक्यलिङ्गानुसन्धानम्। मैवम्; नाप्तता नरधर्मो मानस्य कार्यम्; किन्तु वाक्यप्रयोग इति कार्यं वाक्यमनुसन्धाय तत्कारणमानानुमा, ततो निःशङ्काद्वाक्यादर्थधीः। या च मानात्तन्मेयानुमोक्ता, सा मानमात्रस्यैव, तत्कारणत्वात्; मानादेव तु मेयसिद्धिः। यद्यपि पक्षधर्मताबलान्मे[1]यसिद्धिः, तथापि प्रमित्साप्रकारभेदादपि तत्सिद्धिरित्युभयथा व्यवहारः;

---

क्षमनुमानमित्यर्थः। परिहरति—मैवं नाप्तता नरधर्म इति। वक्तृप्रमित्यनुमानात् प्राक् दोषविषयबाधकावगमेऽपि वाक्यप्रयोगस्यान्यथासिध्यनवगमात् दोषवत्त्वसंशयो न निवर्तेत, तत्कारणस्यावश्यकत्वात्। प्रमितिकारणे बाधकाभावानुसन्धानेन तज्जन्यतयान्यथासिद्धचवमर्शोत्तरकाले वा इतरबाधकाधीना प्रतिबन्धकनिवृत्तिः; तत्र यद्यनन्तरावगतदोषविषयबाधकाधीनदोषनिवृत्तिरूपाप्तता मानकार्यतया मानानुमानसमर्था स्यात्, तदैव दोषनिवृत्त्यनुसन्धानानन्तरं तद्विशिष्टवक्तृप्रयुक्तत्वानुसन्धानविलम्बं नापेक्षेतार्थाभिधानम्; सा तु न मानकार्यमिति न तदनुमानशक्ता; तेन तत्कार्यतया तच्छक्तवाक्यप्रयोगं दोषनिवृत्तिविशिष्टवक्तृकार्यतयानुसन्धायापि वक्तृप्रमित्यनुमानमुत्पाद्यैव वाक्येन वाक्यार्थं प्रतिबन्धकहीनं प्रतीयादित्यर्थः। वाक्यलिङ्गकं मूलमानानुमानमुक्त्वा यन्मानलिङ्गकं मेयानुमानमुक्तं प्रकरणे तदयुक्तम्, मानस्य मेयावच्छिन्नतया मेयस्यापि मानानुमानविषयत्वादित्याशङ्क्य तदभिप्रायमाह—या च मानात्तन्मेयानुमेति। कार्यकारणभावपुरःसरेऽनुमाने मेयस्य वाक्यप्रयोगकारणत्वाभावान्मानमेव तदनुमेयम्। मेयं तु श्रुतिस्मृतिविषयतया तदवच्छेदकमात्रम्, पश्चाद्व्याप्त्यन्तरात्तदनुमानमिति। ननु निवृत्तभ्रमादिकारणकवाक्यप्रयोगकारणानुमानं पक्षधर्मताबलान्मेयमपि विषयीकुर्यादित्याशङ्क्य कारणविशेषजिज्ञासायां मानावच्छेदकतया मेयस्यापि कारणत्वाविशेषादेवं भवेत्; यदा तु वक्त्राश्रितकारणविशेषजिज्ञासा, तदोक्तप्रकारेणानुमानभेद इत्युभयथा व्यवहारश्चोपपन्न इति परिहरति—यद्यपि पक्षधर्मताबलादिति। एवं मानानुमानान्तर्भावेनैव मेयनिश्चयः सामर्थ्यसिद्धः; क्वचिज्जिज्ञासाभेदाद्भेदमात्रसिद्धावपि अर्थस्य ज्ञानावच्छेदकत्वेन भाननियमादसिद्धत्वव्यवहारस्तत्रापि नास्तीति

---

१. मानसिद्धिः, क.

एवं च मेयनिश्चयात् पूर्वं वाक्यादर्थधीरस्त्विति न वाच्यम् । न चैवं व्यवहारावसितशक्तिबाधः; शक्तिविषय एवार्थे व्यभिचाराशङ्का निश्चयश्च, लिङ्गता च शक्तिमत एव, वाक्यस्यानुवादकता च ।

अस्य प्रमात्वनिरूपणम्

नन्वनुवादकधीर्न मितिः । न च स्मृतिः, न च विधान्तरमनुज्ञातमिति न निरूप्यते । मैवम्; मितिरेवेयम्; किन्तु अस्यां दशायां मितिरूपानभिव्यक्तेर्न 'मितिः' इति व्यपदिश्यते । अनभिव्यक्तिश्च शङ्कोत्थाननिरसनाय मानान्तरधीपूर्वकतापत्तेरौपाधिकसापेक्षताभिमानात् । शब्दशक्तिस्तु मितिजनन एवावधृता लोके, वेदे तु उपाधिविरहात् फलिता । संस्कार-

मानानुमानस्य पूर्वभावित्वेऽपि मेयानुमानात्पूर्वमेवाभिधानमस्त्विति चोद्यमप्यनवकाशमित्याह—एवं च मेयनिश्चयादिति । नन्वेवमभिधानशक्त्यभाव एवोक्तः स्यात्, अनुमानेनैवार्थज्ञानसिद्धौ तत्कल्पनाहेत्वभावात् इति तद्बाधकमनुमानाश्रयणमित्यत्राह—न चैवं व्यवहारावसितेति । प्रथमं तावत्प्रवृत्तिविषयज्ञानकरतैव वाक्यस्यावधारितेति तद्योग्यशक्तिरेव कल्पिता; तदनन्तरं तत्प्रयोगस्वातन्त्र्यशङ्कया व्यभिचारशङ्का तदुपजीविनी न तन्निवृत्तिशङ्कावसायिनी; व्यभिचारदर्शनोत्थस्तन्निश्चयश्च तदुपजीव्येव; तदनन्तरभावि लिङ्गत्वमपि पूर्वसिद्धार्थशक्त्युपजीव्येव, शक्तिविषयार्थविषयज्ञानं प्रत्येव लिङ्गत्वात् । न च लिङ्गतयैवार्थनिश्चायकत्वावधारणात् पूर्वकल्पितार्थाभिधानशक्तिबाधः, तदनन्तरार्थानुवादात् तदबाधसिद्धेरित्यर्थः । शक्तिमत एवानुवादकता चेत्येतत्समर्थनार्थमनुवादस्वरूपमेव दुर्निरूपं स्वपक्ष इति चोदयति—नन्वनुवादकधीरिति । परिहरति—मैवं मितिरेवेति । ननु 'तत्' इति स्मृतितुल्याकारा कथमनपेक्षप्रमितितार्हेत्याशङ्क्य तदनवभासहेतुमाह—किन्त्वस्यां दशायामिति । कथमनवभासमानस्य तात्त्विकत्वं अवभासमानस्यौपाधिकत्वं च निश्चीयत इत्यत आह—शब्दशक्तिस्त्विति । लोके स्मृतितुल्यरूपत्वभाननियमेऽपि शाब्दधीहेतुः शब्दशक्तिग्रहस्तद्विपरीतरूपस्य स्वाभाविकत्वं गमयति । न च कार्यानुभवविरोधात्तद्भावबाध उपेयः; तदनुभवानुगतोपाधिवियोगेन वेदे शक्तिविषयतावगतरूपानुभवादिति तदेव स्वाभाविकमिति निश्चीयते । स्मृतिहेतो-

१. वाक्यार्थधी. क. २. वादता. ख. ३. सापेक्षत्वा. क. ४. फलितसंस्कार. ख.

मात्रस्य तु नापरिच्छिन्ने शक्तिः क्लृप्ता[1], न च क्वचित् फलितेऽपि स्वभावत एव तस्य सापेक्षधीजनकतेति तज्ज[2]ापि धीः सापेक्षस्वभावा स्मृतिः प्रमोषेऽनभिव्यक्तस्वरूपापि हेतुशक्तिनिरूपणात्; एवमिहापि शब्द-शक्तिधीतः प्रमितितैव निरूप्यते। एवं वैदिकानुवादेऽपि द्रष्टव्यम्। यदि तु 'स्मृतिरियम्, संस्कारोद्बोधकाच्छब्दात्' इत्युपेयते, तदाशङ्काप-गमेऽपि मित्यनुत्पत्तेस्तच्छक्त्यनुपगमोऽपि निर्बीज इति वेदादपि मितिर्न स्यात्; अन्वितविशेषे च स्मृतिरिति नान्विताभिधानव्युत्पत्तिः स्यात्।

---

स्तुल्यत्वाभावात् कार्येऽप्यसाम्यमिति प्रमोषविषये सापेक्षत्वानुभवाभावेऽपि हेतु-शक्त्या तदुपगम एव न्याय्यः। एवं शाब्दबोधेऽनपेक्षत्वानुभवाभावेऽपि तदुपगम इत्यर्थः। उक्तामनुवादगतिं वेदानुवृत्त्युक्त्या स्थिरीकरोति एवं वैदिकानुवादे-ऽपीति। विधान्तरोपगमे तत्रानुपपत्तिः स्यादित्यर्थः। शब्दस्य संस्कारोद्बोधकमात्र-हेतुत्वेनानुवादस्य स्मृतित्वाश्रयणं परकीयमनूद्य दूषयति—यदि तु स्मृति-रियमिति। तदुपगमे लोके शब्दस्य प्रमितिजनकत्वासिद्धेः तदनुमेयशक्तेरप्य-सिद्ध्यापत्तेर्वेदप्रामाण्यासिद्धिरित्यर्थः। ननु व्युत्पत्तिकाले तत्पक्षेऽप्यन्वितार्थ-प्रमितिशक्तिरेव गृहीतेति पश्चादनुमानान्तर्भावावगमादभिधानकार्यनिवृत्त्यवग-मेऽपि पूर्वगृहीतशक्त्युपजीवनेन तद्विषयेऽन्वितार्थे ज्ञानानुमानमिति तच्छक्त्य-बाधादभिधानप्रतिबन्धकहीनाद्वेदादभिधानमुखेनैवार्थधीरिति न तत्प्रामाण्यासिद्धि-रित्यत्राह—अन्वितविशेषे च स्मृतिरिति। न तद्विषयज्ञानानुमानार्थमेव पूर्वगृहीत-शक्त्यबाधो युक्तः; आवापोद्धाराभ्यां पदपदार्थभेदसिद्धावाकाङ्क्षादिमत्प्रतियोग्य-न्वितार्थविशेषस्यैकैकपदबोध्यतया पूर्वग्रहात्तद्रूपे तावत्स्मृतिः शक्तिविषयतया शक्त्यबाधेऽपि इष्टेति सैव संनिहितविशेषनिष्ठा तद्योग्यतानुसन्धानोपकारिणी तदन्विताभिधाननिवृत्त्या तच्छक्तिबाधेऽप्यनुमानोपकारिणी स्यादिति लोकेऽभि-धानाभावनिश्चये तत्कल्पिता शक्तिर्न परिशेषार्हेत्यर्थः। ननु स्वपक्षेऽपि लोकव्यु-त्पत्तिप्राप्तं वेदस्यार्थाभिधानमिति तदभिधानतुल्यार्थाभिधानार्थं वाक्यत्वलिङ्गानुमि-तवेदकर्तृज्ञानानुमानपूर्वकमेवाभिधानं स्यादित्यनपेक्षत्वाधीनप्रामाण्यासिद्धिस्तुल्ये-

---

१. सासु न. क. २. स्वत एव. ख.
३. Omitted. अपि क. ४. शक्त्युप. ख.

न च कर्त्रनुमानतो वेदादप्यव्यक्तमितिरूपा धीः, पूर्वमपूर्वकार्यस्य बुद्धावारोपयितुमशक्तेः, कर्त्रयोग्ये वेदे कर्तुरननुमानात्। यत्तु "अपि च पौरुषेयाद्वचनात्" इति भाष्यं व्याख्यातम् 'पूर्वं मानान्तरपूर्विका पुंवाक्यादर्थधीरुक्ता; अधुनानुमानादेवार्थधीरित्याह' इति, तदनुवादानादरात्; न त्वनुवादाभावात्। तदेवं पुंवाक्यमव्यभिचारि, लिङ्गाभासादनुमाव्यभिचाराभिमानः—इति न प्रतिज्ञा दुष्टा ॥

नन्वतथाभूतमित्यादेः भट्टकृतव्याख्यानुवादः

"नन्वतथाभूतम्" इति भाष्यं परैरेवं व्याख्यातम्—प्रामाण्याप्रामाण्ये द्वे स्वतः, द्वे परतः, अप्रामाण्यं स्वतः प्रामाण्यं परतः इति पक्षत्रयेऽप्यतथाभूतताशङ्का; प्रामाण्यं स्वतः अप्रामाण्यं परतः इति पक्षेणोत्तरम्। यदा द्वे स्वतो निश्चयाकारे, तदा चिह्नाभावादविवेक इति चोदनार्थे

---

त्याशङ्क्य मानान्तरायोग्यार्थत्वात् कर्त्रनुमानासिद्धेः तद्योग्यार्थवाक्यनियतपौरुषेयत्वाप्राप्तेरनपेक्षस्वाधीनप्रामाण्यच्युतिर्नास्तीत्याह—न च कर्त्रनुमानत इति। ननु "अपि च" इति भाष्यं व्याचक्षाणेन गुरुणा पुंवाक्यस्यार्थाभिधायकत्वनिवृत्तिपरतयैव तद्व्याख्यातम्, तद्विरुद्धोऽयमभिधानोपगम इत्याशङ्क्य अविरोधमाह—यत्त्वित्यादिना। एवं "नन्वतथाभूतम्" इति भाष्यं प्रतिज्ञाक्षेपतत्समर्थनपरतया व्याख्यायोपसंहरति—तदेवमिति।

परव्याख्याप्रकारं तन्मान्द्यकथनार्थमाह—नन्वतथाभूतमिति भाष्यमिति। कथं पक्षत्रये चोदनार्थस्यातथात्वमित्याशङ्क्य तदुपपादयति—यदा द्वे स्वत इति। लोके तावन्निश्चयाकारमेव ज्ञानं किञ्चिदयथार्थं किञ्चिच्च यथार्थं प्रसिद्धमेव; तेन चोदनार्थेऽपि तत्संशयनिरासापेक्षो व्यवहारः; तदर्थं तद्द्वयप्रयोजकं विवेक्तव्यम्; तत्र साकारज्ञानपक्षे निश्चयाकारत्वं नार्थकृतमिति तदाकारज्ञानस्यापि द्वयसाधारणत्वात् द्वयोरपि स्वतः प्राप्तेः संवादविसंवादनिमित्ताद्व्यवस्थेति तदयोग्यचोदनार्थे व्यवस्थापादकाभावान्न संशयनिवृत्तिः। निराकारज्ञानपक्षे अर्थापेक्षं तदिति स्वरूपेण ज्ञानं द्वयास्पृष्टमिति द्वयोरपि परप्रयुक्तत्वे ज्ञानस्य द्वयसाधारणत्वेन

---

१. रूपधीः. ख.    २. नुमानव्यभि. क.

सन्देहः यदा द्वे परतः, तदा गुणवत्सामग्रीजन्यत्वान्निश्चयः दोषवत्त्वाद्-निश्चय इति गुणदोषानवगमाच्चोदनार्थे सन्देहः। यदा परतः प्रामाण्यम् स्वतो ज्ञानस्य सन्देहग्रस्तत्वम् तदा पराभावाद्वेदार्थे सन्देहः। स्वतः प्रामाण्यात्तु वेदार्थे निश्चय एव, ज्ञानस्य स्वतोनिश्चयाकारत्वात्; परतस्तु शङ्कया सन्देहः। न च सर्वत्र शङ्का; किंतु यादृशे व्यभिचारदर्शनम्,

कारणगुणदोषप्रयुक्ता द्वयव्यवस्थेति चोदनार्थे साधारणधर्मप्रयुक्तः संशय एव स्यात्, शाब्दज्ञानार्हगुणदोषयोर्वक्तृनिष्ठत्वाद्वक्तृहीनचोदनार्थे निर्णयहेत्वभावात्त-दविवृत्तेः; तत्र दोषोत्थमिथ्याज्ञानस्यैकाकारावच्छिन्नतया संशयासाम्ये निश्चय-साम्ये च सत्यपि गुणप्रयुक्तनिश्चयासिद्ध्यपेक्षनिश्चयवचनं द्रष्टव्यम्। यदा तु ज्ञानस्यार्थसत्तातदभावानुवृत्तिदर्शनात् स्वतः संशयग्रस्तत्वम् कारणगुणकृतस्त्वर्थ-निश्चय इति पक्षः, तदापि गुणाभावादनिश्चय इति पक्षत्रयापेक्षनतथाभूतत्वा-पादनमित्यर्थः। कथं चतुर्थपक्षेण तन्निरास इत्यत्राह—स्वतः प्रामाण्यात्त्विति। यदा प्रामाण्यमुत्पत्त्यर्थं ज्ञप्त्यर्थं वा ज्ञानाधिकहेत्वपेक्षं न भवति, तदानपेक्षवेदो-क्तेऽर्थे नियतो निश्चयः संशयहेत्वभावादित्यर्थः। ज्ञानस्याप्रामाण्यसहचारसिद्धौ कथं निश्चय एवेत्यत्राह—ज्ञानस्य स्वत इति। विषयसत्तावच्छिन्ने ज्ञाने तद्वि-रुद्धतदसत्तास्पर्शस्य स्वतोऽसम्भवात् तदाकारज्ञानान्तरे तद्बाधदर्शनात्तन्मूलक एव तावत्संशयस्तदर्हः; न ह्यूर्ध्वत्वमपि स्थाणुपुरुषान्यतरदर्शनदृष्टं तद्बाधशङ्कां विनैव तत्संशयकरमित्यप्रामाण्यसंशयोऽपि बाधसंशयमूल एव स्यादित्यर्थः। भवतु ज्ञानान्तरदृष्टव्यभिचारमूलशङ्कावगमप्रामाण्यम्, तथापि संशयस्तुल्य इत्याह—न च सर्वत्र शङ्केति। क्वचिद्व्यभिचारं निश्चित्यैव ह्यन्यत्र व्यभिचारः शङ्कनीयः; तन्निश्चयविषये च सर्वत्र तद्व्यवस्थापकैकरूपोपलब्धेस्तन्नियतैव तच्छङ्का, न ज्ञानमात्रव्यापिनीत्यर्थः। कुत इत्यत्राह—सर्वत्रेति। परतः प्रामाण्य-मपि स्वतः प्रामाण्योपजीव्येव, व्यभिचारनिश्चयस्य तदपेक्षत्वात्तत्पूर्वकत्वाच्चान्यत्र तत्संशयस्य; संशयनिवर्तकाभिमतसंवादकज्ञानस्य च स्वतः प्रामाण्यापेक्षमेव परतया प्रामाण्यापादकत्वमिति व्यभिचारिज्ञानमात्रवर्तिदृष्टदोषप्रयुक्तमेवाप्रामाण्यमुपेय-

१. Omttied किन्तु. क.

तादृशे; सर्वत्र शङ्कायां हि परतोऽपि प्रामाण्यं न स्यात् । न च चोदनार्थे शङ्काहेतुरस्तीति ततो निश्चय एव इति ।

भट्टाचार्यमतनिराकरणम्

परव्याख्यानमिदं मन्दम्, वृत्तिकारग्रन्थे स्वतःप्रामाण्यस्थितेः। अर्थासंस्पर्शिता तु न क्वचिन्निरस्तेति गुरुरर्थासंस्पर्शितानिरासार्थं भाष्यमाह ।

अपूर्वस्यैव धर्मत्वनिर्धारणम्

ननु कार्यरूपो न धर्मः, तीर्थिकविमतेः--शुभा चित्तवासनेति सौगताः, पुण्याः पुद्गला इत्यार्हताः, बुद्धिगुण इति सांख्याः, सिद्धरूप एवात्मगुण इति योगाः । मैवम्; श्रेयस्करो धर्म इति सर्वसिद्धम् । श्रेयस्करं चापूर्वं

---

मित्यर्थः । नन्वेवमपि परप्रयुक्तसंशयनिरासः कथमित्याशङ्क्य परस्य शङ्काहेतोरपौरुषेयचोदनार्थेऽवताराभावात् तन्नियतं प्रामाण्यमित्याह---न च चोदनार्थ इति ।

तद्व्याख्यादोषमाह—परव्याख्यानमिदमिति । अनुक्तार्थपरतया गुरुव्याख्यानस्य सम्यक्त्वमाह—अर्थासंस्पर्शिता त्विति । भाष्ये "तस्माच्चोदनालक्षणः श्रेयस्करः" इत्युपसंहृत्य पुनश्च "एवं तर्हि श्रेयस्करो जिज्ञासितव्यः; किं धर्मजिज्ञासया ?" इति चोद्यपूर्वकमभेदोपपादनप्रयत्नगौरवाश्रयणं किमर्थमिति शङ्कां निवर्तयितुं प्रथमं सूत्रगतपदद्वयस्य सामानाधिकरण्यानुपपत्तिं चोदयति—ननु कार्यरूपो न धर्म इति। पुरुषार्थावतारस्थानतया पृथक्पृथग्वादिपरिगृहीतान्योन्यविरुद्धार्थग्रन्थपरस्तीर्थशब्दः; तत्परिग्रहीतृवादिविप्रतिपत्तेः न सामानाधिकरण्यसिद्धिरित्यर्थः । विप्रतिपत्तिप्रकारमाह शुभा चित्तवासनेति । इष्टफलचित्तवासनेत्येके; तद्भोगास्पददेहेन्द्रियारम्भका अवयवा इत्यन्ये; बुध्यवस्थान्तःकरणधर्म इत्यपरे; निष्पन्नावस्थ आत्मगुण इति वैशेषिकादयः । एवं विवादे तन्निरासार्थः पदान्तरोपक्षेप इति दर्शयंस्तामनुपपत्तिं परिहरति—मैवं श्रेयस्कर इति । दुःखनिवृत्तिसुखप्राप्तिकार्यको धर्म इत्यत्र विवादाभावात्तद्रूपोक्तिमुखेन विप्रतिपन्नस्वरूपनिर्णयार्थं गौरवाश्रयणमिति भाष्याभिप्रायोऽनेन दर्शितः । कथं तर्हि विप्रतिपत्तिनिरासापेक्षस्वरूपनिर्णयसिद्धिरित्यत्राह—श्रेयस्करं चेति । तत्तदभिमतस्वरूपस्य श्रेयस्साधनत्वं तत्प्रमितिसमर्थप्रमाणापेक्षमेव तावन्निर्धार्यम्; तत्कारणं तु

1. Omitted इदम् क

कार्यमेव नानानयसिद्धमित्यस्यैव धर्मता । अधिकृतकर्तृकयागादपूर्वसिद्धे- र्यागकर्तरि धार्मिकव्यपदेशादप्यपूर्वमेव धर्मः[२] ॥

सूत्रस्थार्थपदस्य विवरणम्

वेदार्थोऽपि श्येनाद्यपूर्वं निषिद्धफलत्वादधर्म इति वक्तुमर्थपदं सूत्रे कृतम्; तद्धि कार्यत्वेन पुरुषार्थमपि सन्निषिद्धफलहेतुतया विपरीतमपीति द्विरूपम् । अर्थपदं च पुरुषार्थपरमिति तदतद्रूपमर्थपदादानान्निवर्त्य धर्मपदे- नोक्तं वेदार्थमेव द्विधा विवेक्तुम् । परानुमतं तु निषिद्धक्रियाया अधर्मत्वं

---

चोदनातिरिक्तं तच्छक्तं नास्ति; तस्यास्तु वक्ष्यमाणानेकन्यायापेक्षया सिद्धं तत्सामर्थ्यमिति तत्प्रतिसन्धानेन तन्निर्णय इति धर्मपदेन वेदार्थाभिधानप्रयोजन- प्रकटनं भाष्यप्रयोजनमित्यर्थः । ननु पदार्थनिर्णयकरवृद्धप्रयोगप्रदर्शनेन क्रियाया एव वाच्यतोक्ता, यागकर्तरि धार्मिकपदप्रयोगदर्शनादिति कथमपूर्वकार्यस्यैव धर्मतेत्यत्राह—अधिकृतकर्तृकयागादिति । यागमात्रनिमित्ते तत्पदप्रयोगेऽनधि- कृतेऽपि यागकर्तरि प्रयोगः स्यादित्यधिकृतनियतप्रयोगदर्शनात्तत्कर्तृकयागादपूर्व- सिद्धिरेव तत्पदप्रयोगनिमित्तम्, न यागमात्रसिद्धिरिति कर्तृनिष्ठप्रयोगोक्त्यापि तद्वाचितैव दर्शितेत्यर्थः ॥

उभयमिह चोदनया लक्ष्यते वेदार्थस्य सुखादिवत् कृत्युद्देश्यस्वभावं स्वरूप- मिति चोदनालक्षणपदेन ज्ञाप्यते—इत्युक्ते, धर्मपदेन तद्ग्रहणात् सर्ववादिसम्मतश्रेयः- साधनत्वरूपमपि तस्यैव, चोदनाया एव तल्लक्षणत्वसम्भवात्-इति सूत्रतात्पर्य उक्ते, श्येनाद्यपूर्वस्यापि रूपद्वयप्रसङ्गे श्रेयःसाधनत्वरूपं धर्मपदाभिप्रेतं व्यावर्तयितुं सूत्रेऽर्थपदमुपात्तमिति तत्प्रयोजनमाह—वेदार्थोऽपीति । ननु सुखादितुल्ये स्वरूप- प्रयुक्ते पुरुषार्थत्वे सति तेनैवाधिकारिणं धारयत्यनुकूलरूपतयेति धर्मत्व- सिद्धेः कथमधर्मतया व्यावर्त्यतेत्यत्राह—तद्धि कार्यत्वेनेति । स्वतः पुरुषार्थत्वेऽपि फलापेक्षया विपरीतरूपसंस्पृष्टत्वात् केवलपुरुषार्थार्थपदोक्त्यनर्हमिति व्यावर्त्यते शुद्धाशुद्धार्थत्वेन चोदनार्थस्य द्वैविध्यज्ञापनार्थमित्यर्थः । पराभ्युपेतां क्रियामात्रव्या- वृत्तिं दूषयति—परानुमतं त्विति । तस्य चोदनालक्षणपदेनाप्रसक्तत्वान्नार्थपदव्या- वर्त्यतेत्यर्थः । ननु निषिद्धक्रिया निषेधशास्त्रविषयतया वेदार्थ इति प्रसक्तेर्व्या-

---

१. कशब्दप्रयोगाद क.

२. उज्जहारागमाम्भोधेर्यो धर्मामृतमञ्जसा । न्यायैर्निर्मथ्य भगवान् स प्रसीदतु जैमिनिः ॥ ख.

वक्तुमर्थपदमि'त्ययुक्तम्, तस्या अवेदार्थत्वेनैव विवेकात्। न[2]च निषेध्यस्यापूर्वकार्यतानालीढस्य वेदार्थता। न च नञ्विधेः प्रत्यवायपरिहारकल्पनया निषिद्धफलस्याप्यपुरुषार्थतेति वाच्यम्; नञर्थे नरैश्वर्यसिद्धेरेव नरार्थता यथा श्येनापूर्वसाधनैश्वर्यमेव नरार्थता। ज्योतिष्टोमादावपीयमेव निःश्रेयससिद्धिरनुज्ञाता; सैव हि कामिनियोज्यान्वयात् फलपर्यन्ता;

वर्त्यतेत्यत्राह—न च निषेध्यस्येति। निवृत्तिविषयापूर्वप्रतिपादकं निषेधशास्त्रं तदपूर्वकृतिविषयनिवृत्तिमात्रविषयम्, निषेध्यस्य तत्कृत्यस्पृष्टत्वाल्लोकसिद्धनिवृत्त्यवच्छेदमात्रोपक्षीणत्वान्न शास्त्रस्पर्श इत्यर्थः। ननु निवृत्त्यवच्छेदमात्राद्वेद्यमेयत्वाभावेऽपि पुरुषार्थत्वपर्यवसानार्थं निषेधविधेः स्वोचितप्रत्यवायपरिहारफलावसायित्वात् प्रत्यवायकरतया निषेध्यक्रियाविषयतापि स्यात्; तदपेक्षमेव च निषिद्धफलश्येनादेरप्यपुरुषार्थतयार्थपदव्यावर्त्यत्वमुपेयम्, अनिष्टफलत्वाभावे विहितस्य पुरुषार्थत्वाहानात्; ततश्च साक्षादनिष्टफला निषिद्धक्रियैव द्रागर्थपदव्यावृत्त्या गम्येत, न व्यवहितश्येनादीति परमतमाशङ्क्य निरस्यति—न च नञ्विधेरिति। स्यादेवं फलायत्ते विधेः पुरुषार्थत्वे, निरुपाधिककृत्युद्देश्यं तु तत्स्वरूपमुक्तमिति न फलायत्तं तत्। अतः स्वयं पुरुषाश्रिततया स्वविषये नञर्थे पुरुषैश्वर्यसाधकतयैव निषेधविधेः पुरुषार्थता, न फलापेक्षेति प्रत्यवायपरिहारकल्पकता नेत्यर्थः। एतदेवावश्यं श्येनादिविधावुपेयम्, फलस्य प्रत्यवायकरत्वात् तदपेक्षत्वे विधिव्याघातापत्तेरित्यभिप्रेत्य दृष्टान्तमाह—यथा श्येनापूर्वेति। किमिति तर्हि ज्योतिष्टोमादौ फलापेक्षं तदाश्रितमित्यत्राह—ज्योतिष्टोमादावपीति। प्रधानतया श्रुत्यभिप्रेतं पुरुषार्थत्वं तत्राप्यपूर्वकार्यायत्तम्; तदधिकफलान्तत्वं नियोज्यविशेषणश्रुत्यधीनम्। क्वचिन्निषेधे नरकनिरासान्तत्वं तदर्पकार्थवादश्रुत्यधीनमिति तदभावे फलकल्पनाऽनवकाशेत्यर्थः। ननु निषेधविध्यतिक्रमनिमित्तप्रायश्चित्तविधिज्ञापितं निषेधविधेर्नरकनिरासान्ततया पुरुषार्थत्वम्, प्रायश्चित्तपदस्यानिष्टपरिहारसाधककर्मनामत्वात् तत्परिहारस्य च प्राप्तिपूर्वकत्वान्निषेधविधेरेव च प्रापकत्वसम्भवात्। सर्वनिषेधेषु च सामान्यतः विशेषतो वा प्रायश्चित्तश्रुति-

१. Omitted· इति. २. च निषिद्धस्य. क.

सैव च शंयुनयात्नरकनिरसनान्ता। न च निषिद्धाचरणे सर्वत्रैव प्रायश्चित्ताम्नानात् सामान्यतो विशेषतश्च नरकनिरसनान्ततया नरार्थता, नञ्विधेस्तदयोगात्; प्रायश्चित्तविधेस्तदन्ततैवेति निषिद्धफलतामात्रान्नञ्विध्यसिद्धेरेवानर्थत्वमुक्तम् ।

श्येनस्याधर्मत्वोपपत्तिः ।

ननु हिंसा निषिद्धा; न चापूर्वाद्धन्तृव्यापारोत्पत्तिरिति न निषिद्धफलता । नैवम्, आयुर्भाग्यविच्छेदान्मरणापत्तेः; भाग्यविच्छेदं कर्तुकामो हन्ता "अभिचरन्"—इत्युच्यते; लक्षणे हेतौ च शतुरनुशासनादयमेवार्थः । तदेवं तद्विच्छेदं श्येनापूर्वद्वारमाचरन्निषिद्धफलमनर्थं कुरुते ।

---

नियतेति सर्वनिषेधविधीनां तदन्ततयैव पुरुषार्थपर्यवसायित्वं निश्चीयत इति शङ्कां निवर्तयति—न च निषिद्धाचरण इति । नञ्विधेस्तदयोगादिति तत्र हेतुः । यद्यप्येवं निषेधापूर्वविषयनिवृत्तेः नरकनिवृत्त्यन्तत्वमावश्यकम्, तथापि न नञ्विधिज्ञाप्यं तत्, तस्य तदनपेक्षत्वस्योक्तत्वात् । तज्ज्ञाप्यत्वपक्ष एव च विधितात्पर्यविषयतया चोदनार्थत्वप्रसङ्गात् अर्थपदव्यावर्त्यत्वं स्यात्, न प्रायश्चित्तविधिज्ञाप्यत्वे । तद्विधेर्हि 'प्रायश्चित्तं नरकनिवर्तकम्' इत्यत्रैव तात्पर्यम्; तदन्यथानुपपत्त्या निषिद्धक्रियायाः प्रत्यवायकरत्वं स ज्ञापयेत्, न तत्परतया; निषेधविधिस्तु निवृत्तिपरः स्वविषयस्य पुरुषार्थत्वार्थमिति भेदात् । प्रायश्चित्तविधिनियतनरकनिरसनान्तता तु स्वाक्षेपेणैव स्वस्य तदन्तता स्यादिति न निषेधविधिज्ञापनोपजीविकेति निवर्त्यताऽर्हश्येनादेःनिषिद्धफलतयैवाधर्मत्वमुक्तम्; तस्य स्वरूपेण धर्मत्वादधर्मत्वाभानेऽपि तदुक्तिर्नासम्भविनी धर्मात्मकनञ्विध्यसिद्ध्यपेक्षयैव तदुक्तिः, न स्वरूपापेक्षया; धर्मविरोधित्वमात्रेणाप्यधर्मपदवृत्तेरिति नानुपपत्तिरित्यर्थः । ननु निषिद्धफलत्वमसिद्धम्, हन्तृव्यापारात्मकहिंसाया अपूर्वादनिष्पत्तेरिति चोद्यपूर्वकं लोकसिद्धहिंसानुत्पत्तावपि मरणहेतुक्रियानिष्पत्त्यविशेषाद्धिसाफलत्वसम्भवे निषिद्धफलत्वमविहतमित्याह—ननु हिंसा निषिद्धेति । नन्वेवं यागोऽपि हन्तृव्यापार एवेति साक्षादेव निषेधविषय इति कुतो निषिद्धफलत्वेनाधर्मतोक्तेति चोद्यपूर्वकं तदभिप्रायमाह—

---

१. फलत्वमात्रा. क.
२. अधर्मत्व. ख.
३. अनर्थं कुरुते. ख.

ननु श्येनस्यापि तदनुकूलत्वान्निषिद्धता; न तु फलमात्रं निषिद्धम् । मैवम्; अपूर्वानुकूलत्वायाभिचारानुकूलत्वादपूर्वांशे मुख्ये[1] न निषिद्धतेति न निषिद्धकरणतोक्ता[2] श्येनापूर्वस्य; फलतस्तु तत्र प्रवृत्तेस्तत्काले निषिद्धताभिव्यक्तेः "हिंसा हि सा, सा च प्रतिषिद्धा"—इत्युक्तम् । न च आततायिहिंसा न निषिद्धा इति वाच्यम्, "अभिचरन्" इत्यविशेषश्रुतेर्निषिद्धफलान्तर्भावात् । यत्तु समर्थनम्— घ्नत एवाततायिनो वध्यत्वात्, तदा च श्येनाशक्तेर्न तद्विषयतेति; तन्न, दिनान्तरेऽपि[3] निश्चित्य घ्नतः श्येनवध्यत्वसम्भवात् ।

### यागीयहिंसाया न निषेधविषयता

न च ज्योतिष्टोमोऽपि निषिद्धपशुहिंसाङ्गकत्वादधर्मः; अङ्गे हि वैधी प्रवृत्तिः । न च स्वतन्त्रनिषेधस्तद्विषयः; तथात्वे हि निषेधः क्रत्वर्थः स्यात्, रागप्रवृत्तिविषयस्तु[4] पुरुषार्थः । न च द्विकरः, न च क्रत्वर्थ एवेति

ननु श्येनस्यापीति । यदि शस्त्रप्रयोगादिवल्लोकप्रसिद्धं यागस्य मरणफलत्वं स्यात्, तदा यागेऽपि निषेधस्तुल्यः स्यात्; श्रुत्या त्वपूर्वकर्तव्यतोक्त्यन्तर्गतं यागस्य फलकरणत्वमापद्यत इति तत्प्राप्त्यपेक्षो निषेधावतारस्तन्निरुद्धद्वारक इति न करणतापेक्षस्तत्प्रवेशः । न चैतावता तत्प्रवेशासम्भवः, तदुत्तरकालप्रवृत्तिसमये तत्सम्भवात्; तदा हि फलप्रयोज्यत्वादपूर्वविभक्तावस्था बुद्धिस्थेति तत्प्रवेशाविरोधात् । अत एव भाष्ये प्रवृत्त्यनुवादेन तदवतार उक्त इत्यर्थः । नन्वाततायिविषयतया निषिद्धफलत्वेनाप्यनर्थत्वाभावाद् व्यावर्त्यत्वमेव नास्तीत्याशङ्क्य सामान्यश्रुतेस्तन्मात्रविषयत्वाप्रतिपत्तेः तदन्यविषयापेक्षया तदुक्तिरित्याह—न चाततायीति । परोक्तमाततायिनः श्येनवध्यत्वासम्भवमनूद्य दूषयति—यत्तु समर्थनमिति । ननु "न हिंस्याद् भूतानि" इति सर्वहिंसानिषेधश्रुतेः पशुहिंसाङ्गकज्योतिष्टोमादेरपि अधर्मता स्यादित्याशङ्क्य अङ्गस्य विधिप्रवर्त्यत्वान्न निषेधविषयत्वम्, तन्निषेधस्य पुरुषार्थत्वादिति परिहरति—न च ज्योतिष्टोमोऽपीति । ननु पदशक्त्या क्रत्वङ्गहिंसाया अप्यवगमाद्रागप्राप्तनिषेधः कस्मात्तद्विषयोऽपि न स्यात्; एकमात्रविषयत्वेऽङ्गमात्रविषयो वेत्यत्राह—न च द्विकर इति । अन्योन्यविरुद्धाङ्गत्वानङ्गत्वापत्ति-

1. Omitted मुख्ये. क.
2. निषिद्धकारण. क.
3. Omitted. अपि. क.
4. प्रवृत्तिस्तु. ख.

वाच्यम्; स्वतन्त्रविधेर्या स्वतः प्रयोजकताधीः, सा बाध्येत। एतच्च कर्त्रधिकरणे स्थितम्। न च प्रधानेऽपि विधिकरणे वैधी प्रवृत्तिः; फलकरणीभूतस्य च विधिकरणत्वात् फलेऽपि वैधी—इति वाच्यम्; काम्ये फलं प्रति करणीभूतस्य विधिविषयत्वधीपूर्वकविधिकरणत्वधीक्रमादुत्कटा फलतः प्रवृत्तिः; अङ्गे त्वफलार्थेऽपूर्वमात्रार्थे तादर्थ्यादुत्कटा विधेरेव प्रयुक्तिः। तदिदं लिप्सासूत्रे निपुणतरमुक्तम्। न च विध्यनाक्षिप्तत्वात् प्रधानमविधे-

---

दोषेणैकस्य निषेधविधेर्द्वयविषयत्वनिरासे पूर्वग्रन्थसिद्धेऽपि अङ्गमात्रविषयत्वशङ्कानिरासहेतोः क्रत्वसन्निधिश्रुतिहेतुकप्रयोजकत्वबाधस्यापि द्वयविषयत्वनिराससमर्थत्वात्तदभिव्यक्त्यर्थं तदप्यत्र शङ्काविषयतयोक्तमिति द्रष्टव्यम्। ननु स्वकरणप्रधानोपकारार्थमङ्गस्य विधिप्रवर्त्यतया निषेधानर्हत्वे ततोऽन्तरङ्गे प्रधाने विधिप्रवर्त्यत्वाहानात् फलकरणत्वादपृथक्त्वाच्च विधिकरणत्वस्य फलप्रवृत्तेरपि वैधत्वापत्तेः फलेऽपि न निषेध इति न तन्निमित्तमनर्थत्वं श्येनादेरिति शङ्कां परिहरति—न च प्रधानेऽपीति। प्रधानस्य विधिप्रवर्त्यत्वे सत्येवं स्यात्, तदेव नास्ति; विधिविषयत्वयोग्यत्वार्थं फलकरणत्वाक्षेपात्तदुत्तरभाविविषयत्वानन्तराक्षेप्यकरणत्वव्यवहितो विधेः प्रवृत्त्याक्षेप इति पूर्वभाविफलकरणत्वानन्तरमेव कामिनो लोकवदनुष्ठेयत्वधीप्राप्तेस्तत्तदतिरिक्तविषय एव विध्याक्षेपस्तदुपजीवीति प्रधाने स्यात्, तत्कालेऽङ्गान्वयहेत्वभावात्; विध्यैदमर्थ्यान्वयोत्तरकाले विध्युपकारोपजीवित्वे फलस्यावगते तदुपकारकत्वमात्रमङ्गानाम्, नैदमर्थ्यमिति विधिरेव तत्प्रवर्तकः; ततो न निषेध इत्यर्थः। नन्वेवं प्रधानस्य विध्युपात्तत्वाभावादविधेयत्वापत्तिरित्यत्राह—न च विध्यनाक्षिप्तत्वादिति। यद्यपि प्राक् फलप्राप्त्यनुष्ठानमेव प्रधानं विध्यन्वय्यभिधीयते, तथापि योग्यतया वाक्योपस्थापितो विधिरेवाधिकारी कृतिसाध्यत्वाभिधानार्थं काम्यवस्थतत्कृतेस्तद्विषयाभिधेययागादिव्यवधानेन स्वघटनापेक्षया तस्य तत्काम्यफलकरणत्वं स्वव्यवधानेन प्रकल्प्य तत्प्रयोज्यतां नीत्वा तद्घटिततत्कृतिसाध्यतयाभिधानयोग्यमात्मानं करोतीति फलाक्षिप्ततया अपि

---

१. स्वताप्रयोजकता. क.

यम्; फलकरणीतभूत्वापादनेन [1]च विधिमूलकमेव फलाक्षिप्तं प्रधानं विषयतया स्वीकृतम् । अतो विधेयमेव । शेषं सुगमम् ॥

इति द्वितीयसूत्रं समाप्तम् ॥

---

विध्यापादितत्वान्न विधेयत्वहानिरित्यर्थः । यदि फलार्थविधेयगोदोहनादेः क्रतुविध्यनापाद्यक्रतुसम्बन्ध इव क्रतुसम्बन्धो विषयस्य स्यात्, तदैव तदविधेयत्ववत्प्रधानस्याविधेयत्वापत्तिः; तदतुल्यत्वात् स्याद्विधेयत्वमिति भावः ॥

श्येनयागनियोगस्य लक्षणं चोदनैव हि ।
निषिद्धफलसम्बन्धादनर्थ इति कथ्यते ॥

इति द्वितीयसूत्रव्याख्या ॥

---

१. Omitted. च. ख.

# तस्य निमित्तपरीष्टिः ॥ १-१-३ ॥

ननु द्वितीयसूत्रेण श्रुत्यर्थाभ्या[१]मर्थस्वरूपप्रमाणे प्रतिज्ञाते । तत्र श्रुतिप्रतिज्ञातं प्रधानं भेदाभेदरूपेण वाच्यमिति तदवसरोऽयम् । अथानपेक्षशास्त्रावगम्यसाध्यानुबन्धभेदहेतुकशास्त्रभेदात्तदर्थभेदधीरिति प्रामाण्यहेत्वनपेक्षत्वावसरोऽयम्; तन्न, प्रधानं ह्यनागतापेक्षणनया[३]दनपेक्षतामादाय भेदेन वक्तुं युक्तम् ।

अनपेक्षत्वसाधनप्राथम्यसाधनम्

मैवम्, आर्थी हि प्रामाण्यप्रतिज्ञैव श्रौतालौकिककार्यप्रतिज्ञासम्भावनार्थेत्यनपेक्षत्वेऽनुक्ते प्रामाण्यानवगमे कार्यस्यैवासम्भावितत्वमित्यनपेक्षतां साधयित्वैव कार्यं स्थिरीकृत्य शास्त्रभेदतस्तदर्थभेदो वाच्य इत्युक्तम्—'प्रामाण्यहेत्वनपेक्ष[४]त्वावसरः कथ्यते' इति ।

विवरणमतम्

विवरणे तु शङ्का—प्रतिज्ञानन्तरं हेत्वभिधानं युक्तम् । शिष्यशिक्षार्थ-

---

"तस्य हेत्वभिधानावसरः कथ्यते" इति सूत्रप्रयोजनोक्तितस्तद्व्यावर्त्यपूर्वपक्षापेक्षिणी न्यायपरत्वार्थम् किं तद्व्यावर्त्यार्थमिति शङ्का तदुक्त्याऽपाकरोति—ननु द्वितीयसूत्रेणेति । तात्पर्यविषयार्थस्वरूपप्रतिज्ञापरतया प्रामाण्यप्रतिज्ञेति प्रधानभूतार्थविचारोत्तरकालमेव प्रामाण्यसमर्थनं युक्तमित्यस्ति व्यावर्त्यशङ्केत्यर्थः । तामेव दृढीकर्तुं प्रामाण्यसमर्थनस्य प्राथम्यमाशङ्कते - अथानपेक्षेति । अर्थविचारस्य भेदोपक्रमत्वात् तस्य शास्त्रैकगम्यानुबन्धाद्यधीनत्वात्तदनपेक्षप्रामाण्यत्वसमर्थनापेक्षास्तीति तस्यैव प्राथम्यमिति परिहरति—तन्न प्रधानं हीति । प्राप्तक्रमबाधसामर्थ्यं नास्त्यपेक्षामात्रस्य, वक्ष्यमाणापेक्षयापि प्राप्तसमर्थनसम्भवादित्यर्थः ।

सिद्धान्तमाह—मैवमिति । वक्ष्यमाणशेषनयाऽनपेक्षत्वविवक्षायामेवमेव स्यात्; मानान्तरामेयकार्यार्थत्वप्रतिज्ञाविरोधपरिहारार्थं हि लक्षणपदोपक्षेपेण प्रामाण्यप्रतिज्ञायास्तन्निवेशनम्; तत्परिहारस्तत्समर्थनहेतूक्त्यधीनस्तदुपपत्त्यवगमापेक्षत्वाद्विरोधधीनिवृत्तेरिति तद्धेतूक्त्यवसर एवायमित्यर्थः ।

विवरणे सूत्राक्षेपतत्समर्थनमुखेन तत्प्रतिपाद्याधिकमुच्यत इति वक्तुं तदुक्ताक्षेपमाह—विवरणे तु शङ्केति । निबन्धनोक्तप्रामाण्यसमर्थनार्थप्राथम्य-

---

१. यथा क्रममन्वयः २. त्वभिधानाव. क.

३. नयादप्यन. ख. ४. त्वाभिधानाव ख.

मपि 'हेत्ववसरोऽयम्' इति वाच्यम्; न तु[1] 'हेतुपरीक्षा' इति वाच्यम्। मैवम्; शिष्यो हि सिद्धहेतुकथनान्न व्याख्यायां शिक्षितो भवति, स्वसंविदनुसरणप्रकारमसौ ज्ञाप्यः; हेतुपरीक्षात एव हि तस्य हेतुप्राप्तिः; सिद्धहेत्वभिधानं तु परबोधनार्थं वादे, न तु शिष्यशिक्षार्थे ग्रन्थे; न हि साध्यावस्थितिविमतसन्दिग्धाज्ञबोधनार्थोऽयं ग्रन्थः, किन्तु स्वसंविदनुसरणप्रकाराज्ञशिष्यशिक्षार्थः, शिक्षितप्रकारो हि हेतुमनुसृत्य वस्तु ज्ञास्यतीति

माश्रित्य तत्प्रतिज्ञानन्तरप्राप्तहेतून्त्यतिक्रमेण कुतोऽन्यदुच्यत इति शङ्का; न च शिक्षार्थं यथोक्तन्यायप्रतिपादकतयान्योक्तिरिति शङ्कनीयम, तदर्थमपि निमित्तपदमात्रमुपयोगि, न परीष्टिपदमित्याक्षेपः। समाधत्ते – मैवं शिष्यो हीति। यद्यर्थविशेषज्ञानमात्रं परस्योत्पाद्यं स्यात्, तदा तत्समर्थनहेतुमात्रं वाच्यं स्यात्; शिष्यं प्रति तद्धेत्वन्वेषणप्रकारोऽपि ज्ञाप्य एव, अन्यथा मनोगतिव्याप्त्यसिद्धेस्तस्य व्याख्यापटुत्वं नापादितं स्यादिति तदर्थमात्मनोगतिविकासप्रकारमेवासौ ज्ञाप्य इति हेतुपरीक्षां सामान्येनोक्त्वा तत्प्रकारविशेषं विविच्यासौ ज्ञाप्य यथोत्तरसूत्रैरिति युक्तैवाधिकोक्तिरित्यर्थः। नन्वेवमपेक्षितानुवत्यपेक्षितोक्तचोदोषतोपगमः तज्ज्ञानामसाधुः स्यादित्याशङ्क्य शिक्षितकर्तृकवादविषयः सः, न शिक्षार्थग्रन्थविषय इत्याह—सिद्धहेत्वाभिधानन्त्विति। शिक्षितविचारप्रकारनिष्ठवादस्यार्थविशेषनिर्णयार्थत्वात्तदाकाङ्क्षानुसारी वाच्यावाच्यविभाग इति स तद्विषयो युक्त इत्यर्थः। शिक्षार्थग्रन्थे तदतिक्रमहेतुमाह—न हि साध्यावस्थितीति। न वादवदर्थविशेषबोधफलो ग्रन्थः पुरुषवर्तितत्फलकविचारप्रकारबोधफल इति न तत्र तदपेक्षा वाच्यावाच्यव्यवस्थाहेतुः; प्रकृतसाध्यसाधनशक्तहेत्वन्वेषणप्रकारोऽपि वाच्य इति विशेषोऽधिकपदोक्षेपे ऽ सूच्यत इत्यर्थः। तर्हि अर्थविशेषासिद्धिः स्यादित्यत्राह—शिक्षितप्रकारो हीति। शिक्षितशिष्यधीवृत्तिव्यवहितास्यार्थनिश्चयफलता, न कल्पसूत्रादिवत्स्वत एवेत्यर्थः। एवं च निबन्धनोक्तहेत्ववसरकथनार्थत्वमपि परीक्षाव्यवहिताभिधानाभिप्रायमिति दर्शयन्नुपसंहरति—इति युक्तं परीक्षावसरकथनमिति। ननु परीक्षार्थे परीष्टिरिति रूपं न सिद्ध्येत्; ईक्षतेस्तावत "अ प्रत्ययात्" इति प्रत्ययान्तधातुविहिताकारप्रत्ययस्य 'गुरोश्च हलः" इत्यनेन विहितत्वात् सामान्यविहितः क्तिन्प्रत्ययो न

१. Omitted. तु. ख.

युक्तं परीक्षावसरकथनम् । क्वचिदपवादविषयेऽप्युत्सर्गानुशासनात् क्तिना परीक्षार्थे परीष्टिरिति रूपम् । तदेवमध्यायार्थप्रतिज्ञासूत्रमिदम् । द्वितीयसूत्रेण शास्त्रमारब्धम्, अनेनाध्यायार्थः, प्रतिज्ञातः[1] ॥

इति तृतीयसूत्रं समाप्तम् ॥

---

प्राप्नोति; "वासरूपः" इति विकल्पस्यास्त्रीविषयत्वात् । यत्पुनः, इषेरनिच्छार्थाद्युज्वक्तव्यः" इति वार्तिकोक्तयुजः "परेर्वा" इति परिपूर्वाद्विकल्पस्मृतेर्वैकल्पिकक्तिना इषेस्तत्समर्थनम् उपसर्गवशाद्धातूनामर्थान्यत्वप्रसिद्धेरिषेः परीक्षार्थत्वञ्चेति, तदुपगमे पि पर्येषणापदैकार्थ्यापत्तेः तस्य च परीक्षार्थत्वाप्रसिद्धेरस्यापि तदर्थत्वं दुर्लभमित्याशङ्क्य तत्समर्थनार्थमाह—क्वचिदपवादविषयेऽपीति । इषिधातोस्तद्रूपाभ्युपगमे हि परीक्षार्थत्वासिद्धिदोषः शक्यापादनः, ईक्षतेस्तूपगमान्न तदसिद्धिः । न च तस्मात् क्तिन्प्रत्ययानुत्पत्तेस्तदसिद्धिः "गुरोश्च हलः" इत्यपवादविषयेऽपि "क्तिन्नाबादिभ्यः" इत्याकृतिगणाबादिग्रहणेन क्वचिदुत्सर्गानुशासनात् परीक्षार्थत्वनिश्चयाच्चास्य तद्विषयत्वावगमात्तदुत्पत्त्यविरोधादित्यर्थः । नन्वनपेक्षत्वसमर्थनस्यापि प्रामाण्यप्रतिज्ञाविषयतोपमे द्वितीयसूत्रेणैव प्रामाण्यार्थाध्यायारम्भसिद्धेः तत्साधकत्वेनैवास्य सङ्गतिरूपेया; तदसमर्थत्वात्त्वस्य तत्समर्थनस्यैवानन्तर्यप्राप्तेः प्रामाण्यसमर्थनस्य प्राथम्यमर्थोक्तमेव स्यात्, न तदर्थं सूत्रं कर्तव्यम् इत्यपि न शङ्कनीयम्, उक्तविधयास्यैव सूत्रस्याध्यायार्थप्रतिज्ञापरत्वात् । द्वितीयसूत्रस्यार्थप्रतिज्ञापरत्वेन समर्थनान्तप्रामाण्यप्रतिज्ञापरत्वस्याव्यक्तत्वात्तदप्येतत्सूत्रव्यङ्ग्यमेवेति तत्प्राथम्योक्त्यनन्तरवाच्यत्वमेतत्सूत्रज्ञाप्यमित्यध्यायारम्भो न पूर्वसूत्रप्राप्तः; शास्त्रारम्भ एव तत्सिद्धः पूर्वप्रतिज्ञातांशमात्रस्य साधितत्वात् । अनेन तदेकदेशसमर्थनासिद्धावप्यध्यायार्थोऽनन्तरवाच्यतया दर्शित इति इदमेव सूत्रमध्यायादिरित्याह—तदेवमिति ।

इति तृतीयसूत्रव्याख्या ॥

---

१. Added. ख—

वेदार्थः कार्यरूपस्तदपि नरकृतेरीप्सितं कार्यमाहुः
सर्वेषां कार्यबोध्यव्यवहृतिरखिला तत्र सम्बन्धबोधः ।
कार्यार्थातः प्रमाणं श्रुतिरखिलवचोऽप्यर्थसंस्पर्शि लोके
लिङ्गत्वाद्वक्तृबुद्धेर्व्यभिचरति वचोऽलिङ्गके लिङ्गबोधात् ॥
वेदार्थः श्रेयसे हेतुरर्थानर्थात्मकः क्वचित् ।
निषिद्धफलसम्बन्धात् सोऽधर्मः श्यैनिको यथा ॥ इति सङ्ग्रहः

## सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ १-१-४ ॥

अधुना वेदार्थस्य प्रत्यक्षाद्यविषयतामुक्त्वाऽनेन सूत्रेण, औत्पत्तिकसूत्रेण वेदस्यानपेक्षतां वदता परीक्षा कृता। 'सति संप्रयोगे बुद्धिः प्रत्यक्षम्'—इत्यनूद्य वेदार्थबोधं प्रत्यनिमित्तता वर्तमानविषयतयोक्ता। अनुमानोपमानार्थापत्तीनां तु लिङ्गसदृशानुपपन्नद्वारत्वात् वर्णद्वारत्वाच्च वेदार्थस्य वर्णानां च [1]लिङ्गादित्वानुपपत्तेरनुमानादेरप्यनिमित्तता। न चेयं न सूत्रिता, विद्यमानमुपलम्भनं यस्य इत्यनुमानाद्यर्थेन सूत्रितत्वात्, प्रायेण विद्यमानस्यैव लिङ्गादिभावात्।

### सूत्रस्य विवरणमतेन व्याख्या

विवरणे तु विद्यमानं सिद्धरूपं कार्यप्रतिपक्षमभिमतम्। अतोऽनुमानादेरप्यनिमित्तता सूत्रिता, न भविष्यद्रूपता कार्यस्य भाष्योक्ता;

---

ननु चोदनाप्रामाण्ये वाच्ये तदुपपादकौत्पत्तिकसूत्रप्राथम्यहानेन कथं प्रत्यक्षसूत्रप्राथम्यमित्यत्राह—अधुना वेदार्थस्येति। परीक्षालभ्यतया निमित्तस्योक्तत्वात् परीक्षायाश्च प्रत्यक्षाद्यविषयतोक्त्युपक्रमत्वाद्युक्तं तदादित्वमित्यर्थः। परीक्षासामर्थ्यं सूत्रस्याह—सति संप्रयोग इति। ननु संप्रयुक्तविषयत्वरूपानिमित्तत्वहेतुः प्रत्यक्षमात्रवर्तीति सर्वनिवृत्त्यधीनमनपेक्षत्वं कथमित्यत्राह—अनुमानेति। लिङ्गाद्यपेक्षत्वेनानुमानादिनिरासे भाष्योक्तेऽपि तस्यासूत्रितत्वात् कथं सूत्रोक्तपरीक्षासिद्धिरित्यत्राह—न चेयं न सूत्रितेति। प्रत्यक्षानिमित्तत्वहेतुः संप्रयोग इत्यनेनैव सिद्ध इत्यनुमानाद्यनिमित्तत्वार्थमेव "विद्यमानोपलम्भनत्वात्" इत्युक्तम्; विद्यमानहेतुकत्वात्तेषां धर्मबोधे च तदर्हहेत्वसिद्धेरिति तदनिमित्तता सूत्रितैव। विद्यमानेति वर्तमानोक्तेः प्रायःप्राप्तवर्तमानोक्तिमुखेन लिङ्गादिसत्तामात्रवृत्त्या तत्र तदसिद्धिविवक्षयेत्यर्थः। विवरणे षष्ठीसमासाश्रयणेनैव विद्यमानपदस्य कार्यव्यतिरिक्तमात्रार्थताङ्गीकारेणानुमानादिनिवृत्त्यर्थत्वमित्याह—विवरणे त्विति। ननु भविष्यद्रूपश्चोदनार्थ उक्तो भाष्य इति कथमनुमानाद्यविषयतेत्यत्राह—भविष्यद्रूपतेति। न कार्यस्वरूपविवरणाभिप्रायेण तद्रूपतोक्ता, येनानुमानादिमेयतापत्तिः; चोदनामेयाकाराधिष्ठानमितिकाले भविष्यद्रूपम्, न वर्तमानविषयतया प्रत्यक्षविषय-

---

१. लिङ्गादिद्वारत्वानुप. क.

किन्तु वेदप्रमेयत्वाधिष्ठानं भविष्यद्रूपं व्याख्यातम् । तद्द्वारत्वादित्यनेन तु दूरापेततोक्ता, शब्दे निमित्तेऽप्यनुमानाद्यभावात् । न च नित्यानुमेयः शब्दोऽस्तीति च यदुक्तं न तद्वेदवाक्यस्य नित्यानुमेयतां विहन्ति, तद्वाक्यगतानामपि शब्दानां प्रत्यक्षत्वात् । एतच्च मेयप्रत्यक्षस्वरूपं सूत्रितम्, न तु मितिमातृप्रत्यक्षस्वरूपमपि; मेये हि वेदार्थे प्रसक्तमेतदेव निरसनीयम् ।

प्रत्यक्षज्ञानहेतवः इन्द्रियसन्निकर्षाः

संप्रयोगश्चात्र त्रिविधः[1]–संयोगः संयुक्तसमवायः समवायश्[2]चेति । संयोगाद्धि द्रव्यं स्पर्शमहत्त्ववत् पार्थिवाप्यतैजसवायवीयात्मकमैन्द्रियकम्[3], संयुक्तसमवायाज्जातिगुणौ, समवायाच्छब्दः । गुणपदेन च संख्यासादृश्यादेरुप-

---

ताऽर्हमिति तदविषयोक्तिपरसूत्रार्थतयोक्तम्, चोदनामेयाकारोक्तेरत्राप्रसक्तेरित्यर्थः । नन्वेवं तन्मते "सतश्चैतदुपलम्भनम्" इति विद्यमानोपलम्भनपदार्थविवरणभाष्येणैवानुमानादिनिराससिद्धेः प्रत्यक्षपूर्वकत्वेन तन्निरासयत्नोऽनर्थक इत्यत्राह— तद्द्वारत्वादित्यनेनेति । धर्मधीकरशब्दग्राहकतया तत्सन्निकर्षमात्रमप्यनुमानादेर्नास्ति प्रत्यक्षशब्दपूर्वकत्वात्तत्प्रतिपत्तेरिति पूर्वनिरासपरतया तदर्थवत्तेत्यर्थः । एतदुपपादनार्थं नित्यानुमेयः शब्दो नास्तीति यदुक्तम्- तदविरोधमाह—न च नित्यानुमेय इति । वर्णावस्थाग्राहकतयैव प्रत्यक्षस्यापि निमित्तं सन्निकर्षः, तात्पर्यग्रहणापेक्षत्वाद्वाक्यावस्थाप्रतीतेः; तेन तत्तुल्यतैवानुमानादेर्निरस्यते; नित्यानुमेयवाक्यमपि प्रत्यक्षसिद्धवर्णात्मकमेव, वर्णावस्थाया नित्यानुमेयत्वानुपगमादिति नित्यानुमेयवेदोपगमाविरोध्येवैतदित्यर्थः । ननु संप्रयुक्तमात्रग्राहि प्रत्यक्षमिति सूत्रम्; तद्विरुद्धो मितिमातृप्रत्यक्षोपगम इत्यत्राह—एतच्च मेयप्रत्यक्षेति । न सूत्रस्य प्रत्यक्षस्वरूपोक्तौ तात्पर्यम्, मेयरूपधर्मग्राहकत्वनिवृत्त्युक्त्या चोदनानपेक्षत्वपरत्वात् । तेन मेयप्रत्यक्षानुवादेन तन्निवृत्तिमात्रोक्तेः न तद्विरुद्धः स इत्यर्थः ।

संप्रयोगमात्रस्येह सूत्रितत्वात् तद्विशेषनिर्णयस्तार्किकोक्तोऽनुमत इति शङ्कामपनयन्नाह—संप्रयोगश्चात्रेति । त्रिविधे व्यवस्थान्तामुपपत्तिमाह–संयोगाद्धीति । एवं ग्रन्थोक्तं प्रदर्श्य तदभिप्रायमाह—गुणपदेन चेति । ननु संख्यासादृश्यादेरिति

---

१. द्विविधा. ख. २. Omitted च क. ३. ऐन्द्रियिकम्. क.

संहारः । संख्या न गुणः—इति साध्यम्; सादृश्यं तु स्वरूपत एव साध्यम् । गुणकर्माश्रितत्वात्संख्या न गुणः । न च गुणे न संख्यासमवाय इति वाच्यम् । समवायो ह्यनाश्रित एव समवायिनोः सम्बन्धबुद्ध्या कल्प्यते,

---

आदिशब्दोऽनर्थकः । न; यद्यस्ति, तदा षष्ठीसमासाश्रयणेन प्रथनावगम्यद्रव्यवर्ति-मात्रसंग्रहार्थोऽस्तु । ननु गुण एव संख्या, पदार्थविदङ्गीकारात्; सादृश्यमिति तु सामान्यस्य नामान्तरमात्रमिति न संग्रहावकाश इति शङ्कामन्यत्वस्य यत्नसाध्य-तोक्त्या परिहरति—संख्या न गुण इतीति । तत्र संख्यायास्तदन्यत्वं साध-यति—गुणकर्माश्रितत्वादिति । गुणस्य द्रव्याश्रितत्वनियमात् तद्विहीना संख्या न गुण इत्यर्थः । नन्वारोपमूलव्यवहारमात्रं तत्र तत्समवायमूलमित्याशङ्क्य समवायं साधयति—न च गुणे न संख्येति । कार्यकल्प्यस्तावद् द्रव्यगुणयोरपि समवायः; तच्च कार्यं सम्बन्धबुद्ध्यात्मकम्; स च सम्बन्धो विशेषणविशेष्यभावः शुक्लो घटः–इत्यादिरूपः; स च बुद्धिगर्भ इति विशिष्टबुद्धिरेव सम्बन्धबुद्धिपदार्थः। तेन विशेषणविशेष्यसम्बन्धात्मिका विशिष्टबुद्धिः समवायकल्पकं कार्यमिति दर्शि-तम् । बोध्यरूपस्तु सम्बन्धो न विवक्षितः, सम्बन्धान्तराप्रसिद्धेः । तेन सम्बन्ध-कार्यदृष्टदण्डयादिविशिष्टधीदृष्टान्तेन गुणादिविशिष्टबुद्ध्यनुमेयत्वं समवायस्याने-नोक्तम् । एवं हि गुणादावपि अबाधितसंख्याविशिष्टबुध्यविशेषात्तदनुमानमपरि-हार्यमित्यनेनोक्तम् । ननु अल्पाधिकसदृशविलक्षणादिविशिष्टबुद्धेः सम्बन्धकार्य-त्वाभावादनुमानानुपपत्तिरिति शङ्कानिवृत्त्यर्थम् 'समवायिनोः' इति विशेषणमुपा-त्तम् । अयुतसिद्धयोर्विशेशणविशेष्ययोः विशिष्टधीस्तल्लिङ्गमिष्टम्; पृथक्सिद्धयोः तदभावो न तद्विरोधीत्यर्थः। ननु समवायीति विशिष्टधीः अपृथक्सिद्धयोरप्यसम्बन्ध-मूलाऽभ्युपेतेति अनुमानासिद्धिशङ्काहानार्थम् 'आश्रितएव' इत्युक्तम् । तत्र अनवस्था-पत्त्या सम्बन्धपूर्वकत्वासम्भवात् तत्स्वभावमात्राधीनो नियम आश्रितः; तदतिरिक्त-विशिष्टधीकार्ये दण्डयादिधीतुल्यतैव लाघवादुपेया, न व्यवस्थापकान्तरमिति गुण-संख्ययोः सम्बन्धानमानमेवेत्यर्थः । ननु इहप्रत्ययगम्यः समवायः पदार्थविदभ्यु-पेतः । तत्प्रत्ययश्च स्वतन्त्रधीविषये द्रव्ये स्वत इति अन्यतन्त्रे गुणे तदभावान्न सम-

न तु 'इह' इति धिया । न च कर्मणामस्थायित्वात् द्वित्वाद्यनन्वयो वाच्यः। द्वितीयाद्यनवस्थानेऽपि द्वित्वाद्यन्वयात् । सर्वानवस्थाने तु द्वित्वादिधीर्बाधकादर्हतालम्बना । सादृश्यस्थितिस्तु उपमानवादे । न च गुणादिसादृश्यार्थं सन्निकर्षान्तरं धीहेतुः कल्प्यम्; अनन्याधीनधिया हि तत्;

---

वाय इति आरोपमूल एव तत्र संख्याव्यवहार इत्यत्राह—न त्विहेति धियेति । द्रव्य न्ति विशिष्टावगत्युत्तरकालमेव इहप्रत्ययार्हम्, न निर्विकल्पकधीस्थमिति इहप्रत्ययात् पूर्वभाविविशिष्टधीकारणतयैव समवायकल्पना, तदुपजीवी त्विहप्रत्यय इति न तद्गमकः स इत्यर्थः । ननु कर्माश्रिततया द्वित्वाद्युत्पत्तिर्न संभवति, आश्रययौगपद्यापेक्षत्वात्तदुत्पत्तेः, एककर्तृककर्मणां चास्थिरतया तदयोगादिति शङ्कां परिहरति— न च कर्मणामिति । 'एकादश प्रयाजान् यजति" इत्यादिश्रुत्या कर्मान्वयावगमात् तद्यौगपद्यस्य च तत्राभावात ध्वस्तानामपेक्षाबुद्धिविषयतामात्रेण तदुत्पत्त्युपयोगस्थित्यर्हमात्रस्याश्रयतयेत्यभ्युपेत्य तन्निर्वाहोऽभ्युपेयः । तादृग्विषयेषु द्रव्येष्वपि संख्याव्यवहारप्रसिद्धेः तदमुख्यत्वाप्रसिद्धेश्च विधाद्वयेनाप्याश्रयतोपगमस्योचितत्वात् प्रमाणाविशेषान्नारोपः कल्प्य इत्यर्थः । नन्वेकस्थित्यभावेऽपि लोके स्मर्यमाणाश्रयसंख्याव्यवहारदर्शनात्तत्रापि तदुत्पत्तिरित्थमुपेया स्यात्; तदनुपगमे तद्वदितरत्राप्युपपत्तिरित्यत्राह—सर्वानवस्थाने त्विति । तत्रासम्भवात्तद्गतैकत्वानामपि स्मृतिविषयत्वात्तेषाञ्चापेक्षाबुद्धिवर्तितया द्वित्वाद्युत्पत्तिहेतुत्वात्तदल्पाधिकत्ववैलक्षण्येन च संख्याविशेषोत्पत्तेः तदियत्तालोचनया तत्तदर्हतास्मृत्यपेक्षः सर्वसंख्याव्यवहार उपेयः । तदाश्रयस्थितौ स्वल्पाधिकवैलक्षण्यमात्रं नानुत्पत्त्यापादकम्, कार्यान्तरेऽपि कारणनानात्वस्य दृष्टत्वादित्यभिप्रायः । सादृश्यविवादे स्वरूपसमर्थनं ग्रन्थेऽन्यत्रास्तीति नेह कृतमित्याह—सादृश्यस्थितिस्त्विति । ननु गुणादिवर्तितया तदन्यत्वे तत्प्रतीत्यर्थं संयुक्तसमवेतसमवायरूपं सन्निकर्षान्तरमुपेयमिति 'त्रिविधः संप्रयोगः' इति नियमोक्तिरयुक्तेत्यत्राह—न च गुणादिसादृश्यार्थमिति । प्रत्यक्षत्वोपगमे तत्कल्पनापत्तेरेव तन्नोपेयम्; तद्धियोऽनुमानादेवोप .त्तिः; तत्सामग्री तु क्लिप्तैवेति । सा तर्हि विविच्यैव वाच्या । न, सादृश्यानुमानस्योपमानवादे वक्ष्यमाणत्वात् संख्यानुमानसामग्री सर्वसंख्येयानवस्थाने तत्सं-

कलृप्तसन्निकर्षैरेव चानुमानान्तर्भावात् सादृश्यधीसिद्धिः। संयोगाच्चक्षुस्स्पर्शनाभ्यां द्रव्यधीः।

इन्द्रियाणां प्राप्यकारित्वसमर्थनम्

प्राप्यकारि चक्षुः, बहिरिन्द्रियत्वात् त्वगिव। तैजसं हि तत्, रूपधीहेतुत्वाद्दीपवत्। तस्य रश्मयः पृथ्वग्राः प्रसरन्तः पृथून्यपि द्रव्याणि प्राप्नुवन्ति, सान्तरालधीस्तु देहापेक्षया नयनरश्मिभिरेकीभूतस्य बाह्यतेजसो भागः कोऽपि धीहेतुरदृष्टादिति समकालं भौमध्रुवधीः,

---

ख्याप्रतीत्यालम्बनन्यायसिद्धैव। तत्र हि संख्याविशेषोत्पत्त्यर्हसमवाय्यसमवायोयत्ताविशेषस्मृतिः तत्तत्संख्याव्यवहारहेतुरर्हतालम्बनोक्त्योक्ता; तदियत्तादिविशेषस्य द्रव्येषु संख्याविशेषव्याप्तिदर्शनाद्गुणादौ तदनुमापकत्वं स्यादिति भावः। संयोगाद् द्रव्यग्रहे इन्द्रियव्यवस्थामाह—संयोगादिति। ननु चक्षुषः संयुक्तग्राहकत्वमयुक्तम्, विप्रकृष्टार्थग्रहात् स्पृश्यवदल्पदेशग्रहणापत्तेश्चेत्याशङ्क्य तदविरोधविवक्षया प्राप्तौ प्रमाणं तावदाह—प्राप्यकारीति। सत्यपि विप्रकृष्टार्थग्रहणे कुड्यादिव्यवहिताग्रहणात् पृष्ठभागवर्त्यग्रहणाच्चावश्यकल्प्ये कस्मिंश्चिद्व्यवस्थापके त्वगादिदृष्टसन्निकर्षत्यागेनान्यकल्पनानुपपत्तेः तस्य बहिरिन्द्रियप्रयुक्ततया अत्रापि स एव व्यवस्थापको ग्राह्य इत्यर्थः। तथापि देशविप्रकर्षान्न सन्निकर्षोऽभ्युपेय इत्याशङ्क्य तदुपपत्तये तैजसत्वमाह—तैजसमिति। रूपप्रतीत्यसाधारणकारणस्य तजसत्वनियमदर्शनात्तन्निश्चय इत्यर्थः। ततः किमित्याशङ्क्य संयोगाविरोधः पृथुदर्शनाविरोधश्चेत्याह—तस्य रश्मय इति। नन्वव्यवधाननियतत्वात्संयोगस्य संयुक्तदर्शनोपगमो देशविप्रकृष्टानुभवविरुद्ध इत्यत्राह—सान्तरालधीस्त्विति। संयुक्तरश्म्यपेक्षया व्यवधानानुभवाभावाद्देहापेक्षया चाविरोधान्न तदनुपपत्तिरित्यर्थः। ननु बहुयोजनसहस्रव्यवहितातिसन्निकृष्टयोर्युगपद्दर्शनविरोधोऽपरिहार्य इत्याशङ्क्य द्वयव्यापिबाह्यालोकैकीभावात्मिकास्तु प्राप्तिः, न दृश्यप्राप्त्यन्तस्वगत्यैवेत्युपगमे तद्विरोधः परिहार्यः। न चैवमतिदूरव्यवहितदर्शनापत्तिः, कार्यानुसारेण कारणकल्पनेति दर्शनसामग्रीप्रेरकतत्फलभोक्तृदृष्टनियमिततद्भागविशेषस्यैव ग्राहकत्वोपगमेन तत्परिहारसम्भवादित्याह—नयनरश्मिभिरिति। नन्वेवं कल्पनागौरवदोष इति चोद्यपूर्वकमनन्यथासिद्धकार्यायातस्य न

---

१. प्रतीति क. २. Added अपि ख.

न चातिदूरत्वव्यवहितधीः । नन्वेवं रश्मीनां स्वतोऽपि पृथुद्रव्यव्याप्त्या बाह्यतेजसैकीभूय चेति द्विधा धीहेतुता कर्तव्या ! नायं दोषः, द्विधा कार्यदर्शनात् । वितेजोदेशस्थस्य सतेजोदेशस्थपृथुद्रव्यधीर्दृष्टेति तद्व्याप्त्या धीहेतुता। अतिदूरानन्तरितयोर्युगपद् दृष्टेरेकीभूयापि हेतुता । अतिक्षेपीयस्तया तु युगपत्ता

दोषत्वमित्याह— नन्वेवं रश्मीनामित्यादिना । ननु निरालोकदेशस्थस्य सालोकदेशस्थद्रव्यदर्शनमात्रं नयनरश्मेः स्वत एव तद्देशगमनकल्पकम्; तत्र किमर्थं पृथुपदोपादानम् ? उच्यते—गतिमात्रसिद्धावपि स्वरूपेणैव द्रव्यव्याप्तिरित्येतन्निर्हेतुकम्, तदभावे तद्गत्या तत्स्थालोकैकीभावेन तद्व्याप्त्या दर्शनसाधनत्वसम्भवादिति शङ्कानिवृत्त्यर्थं तद्द्रष्टव्यम् । तत्पक्षे तु तत्स्थाल्पपरिमाणद्रव्यदर्शनमपि दुर्वारम् । तादृग्व्याप्तेरविशेषात स्वावयवव्याप्त्या ग्रहणे दूरदेशे तेषां विरलत्वात् सूक्ष्मद्रव्यदर्शनासिद्धिः स्थूलदर्शनसिद्धिश्च युक्तेति स्वतोऽपि विषयव्याप्तिः कल्प्येति[१] तेन दर्शितम् । ननु रश्मीनां वेगातिशययोगात् कालभेदानवमर्शाद्यौगपद्याभिमानमात्रमित्यपि परिहारसम्भवादेकीभावाश्रयणमनर्थकमित्यत्राह—अतिक्षेपीयस्तयेति । यद्यपि तेजोदेशस्थस्य योजनमात्रविप्रकृष्टपर्वतशिखरादिवर्त्यग्न्यादिदर्शने चक्षुरुन्मीलनानन्तरत्वाभिमानात्तदनुरूपवेगातिशयो रश्मीनां प्रसिद्ध एव, तथापि बहुयोजनसहस्रविप्रकृष्टध्रुवादिदर्शने ऽपि नैव कालभेदो नावमृश्यत इति प्रतीतिविरोधम्, तद्योग्यत्वस्यावर्जनीयत्वात्; स्वल्पविप्रकर्षेऽपि च रश्मीनां विरलतापत्त्या सूक्ष्मार्थादर्शने प्रसिद्धे तावद्विप्रकर्षे तद्दर्शनं च स्वगत्युपगमेन दुर्लभमेवेत्येकीभावेन तत्प्राप्तिराश्रितेति भावः । नन्वतिप्रचुरतमोऽवस्थितस्याप्युन्मीलनयत्नानन्तरमेव यादृच्छिकमेघच्छिद्रलाभनिर्गतरश्मेर्ध्रुवादिदर्शने सिद्धे गतिकल्पनायाः प्रतीतिविरोधमुद्भावयतः कोऽभिप्रायः ? उच्यते—न तावद्दृष्टृदेशादारभ्य यावद्ध्रुवादिदेशं व्याप्य तमोव्याप्तिरस्ति, मेघावरणापेक्षत्वात्तत्स्थितेः तेषां चातिनिकटवर्तित्वात्; तदनन्तरदेशे तु ग्रहनक्षत्रादितारकासहस्रातिप्रचितालोकस्य व्यापिनोऽवस्थितत्वात्तदेकीभावेन प्राप्तिरविरुद्धा, मेघाद्यभावे भूमावपि तद्दर्शनादिति मेघच्छिद्रावकाशेनापि तदेकीभाव एव प्रतीत्यनुगुण इत्यभिप्रायः । ननु तत्पक्षे रश्म्याश्रयस्य चक्षुरादेरन्यस्यापि

१. कल्प्या ख.

दृष्टविरुद्धा न कल्प्यते । प्रसरद्भिरेव रश्मिभिरेकीभूताभिमुखतेजोभागमध्यवर्तिनि धीर्दृष्टेति नातिदूरव्यवहितानभिमुखधीहेतुता । न त्वेवमादिकल्पना[1]भयान्मानसिद्धप्राप्यकारित्वहानं युक्तम् । किञ्च[2] अभिमुखतेजोभागमध्यवर्तिधीहेतुतोभयवादिसिद्धा प्रसरत्त्वैकीभूतता च तेजःस्वभावसिद्धा न कल्प्येति यथोक्तं युक्तम् । न च घ्राणश्रोत्ररसनादिभिरपि द्रव्यधीरिति वाच्यम्, अनुपलब्धेः । स्पृष्टे तु द्रव्ये न रसनादिना धीः; किन्तु सर्वव्यापित्वगिन्द्रियेण, तस्य क्लृप्तशक्तित्वादन्यदेशे द्रव्यधियं प्रति । द्रव्ये त्रिविधे दर्शनस्पर्शनजा धीः ।

वायोः प्रत्यक्षतासाधनम्

वायोस्तु स्पर्शनमात्रात् । न च स्पर्[3]शमात्रे धीरिति वाच्यम्;

---

बाह्यालोकसम्बन्धिनो दर्शनापत्तिरित्याशङ्क्य अदृष्टनियमितभागमात्रस्य धीहेतुत्वं पूर्वोक्तं विविच्य दर्शयति—प्रसरद्भिरेवेति । नन्वेवं बहुकल्पनापत्तेः अप्राप्यैव धीहेतुत्वं चक्षुषोऽभ्युपेयमिति सौगतशङ्कां निरस्यति—न त्वेवमादीति । व्यवस्थापकस्यावश्यकल्पनीयत्वाददृष्टाश्रयणमेव कल्पनयापि युक्तमिति प्रागेवोक्तम् । तत्पक्षे रश्मीनामचाक्षुषत्वार्थं जलप्रविष्टाग्न्यवयवानामिव रूपाभिभवकल्पनापि स्यादिति तदपेक्षमादिग्रहणं नेयम् । कल्पनागौरवापत्तिश्च नास्मान् प्रति विशेषत आपाद्येत्याह—किञ्चाभिमुखेति । ननु चक्षुःस्पर्शनाभ्यां द्रव्यधीरिति नियमो न युक्तः, तदितरैरपि स्वस्थानस्पृष्टद्रव्यप्रतीतेः प्रसिद्धत्वादित्यत्राह—न च घ्राणश्रोत्रेति । तैस्तदन्यप्रतीत्यसिद्धेः तत्प्रतीतेश्च देहव्यापिक्लृप्तत्वमिन्द्रियेणैव सम्भवान्न तच्छक्तिकल्पनया तत्कार्यता कल्प्येत्यर्थः । चतुर्विधद्रव्यस्यैन्द्रियकत्वे पूर्वोक्ते विशेषमाह—द्रव्ये त्रिविध इति । वायोरनैन्द्रियकत्वं तार्किकोक्तं निराकरोति—न च स्पर्शमात्र इति । तस्य स्पर्शनानात्वाभावेऽपि निजस्पर्शेऽन्यसंपर्काभिभूतेऽन्यदीयनानास्पर्शमात्रोपलम्भेऽपि वायुबुद्ध्यनुवृत्तेः स्पार्शनत्वं निश्चीयते, शीतोष्णस्पर्शाभ्यां वाय्वनुमानायोगात् । प्रत्यक्षे तु स्पर्शान्तराभ्यामपि सह तद्धीर्युक्तेति तन्निश्चय इत्यर्थः । ननु स्पार्शनद्रव्यस्य चाक्षुषत्वाव्यभिचारात् तदुपगमे चाक्षुषत्वमप्य-

---

१. न चैवमादि. ख. २. किञ्चेत्यादि युक्तमित्यन्तं वाक्यं न दृश्यते. ख.
३. स्पर्शनमात्रे. ख.

तद्गतनानास्पर्शानुभवेऽप्येकप्रत्यभिज्ञानाद्वायोः प्रत्यक्षता, न तु चाक्षुषता; महदनेकद्रव्यारब्धमपि न नीरूपं वाय्वादि चाक्षुषम् । नन्वमहत्त्वादेव द्व्यणुकस्येव परमाणोरप्यप्रत्यक्षतासिद्धेरनेकद्रव्यारब्धत्वोपादानं व्यर्थं स्यात् । मैवम्; लक्षणान्तर्निवेशे हि द्वयोर्व्यर्थता; इह तु महत्त्वानेकद्रव्यत्वस्य हेतुतोक्ता; सा चान्वयव्यतिरेकानुविधानात् । तत्र व्यतिरेकानुविधानं परमाणूनामनेकद्रव्य[2]ारब्धत्वस्य शक्[3]यं वक्तुमित्यनेकद्रव्यारब्धत्वाभावा-त्परमाणोरदर्शनमुक्तम् ।

### चक्षुरादीनां तैजसत्वादिसाधनम्

रूपवदालोकस्य रूपधीहेतुत्वदर्शनाद्रूपधीन्द्रियं रूपवत्, गन्ध-धीन्द्रियं गन्धवत्पार्थिवम्, शब्दधीन्द्रियं शब्दवन्नभः; रूपवत्तेजसो

---

निवार्यमिति शङ्कामपाकरोति—न तु चाक्षुषतेति । स्पार्शनत्वं चाक्षुषद्रव्ये भूयो-दृष्टमपि चाक्षुषत्वेऽनुपकारकम्; महत्त्वानेकद्रव्यारब्धत्वे तदुपकारके; ते अपि रूपवत्त्वसहिते तदुपकारके, न केवले इति वायोस्तदापादने न शक्नुतः, किं पुनः स्पार्शनत्वमित्यर्थः । ननु द्वयोर्ग्रहणमनर्थकम्; यच्च अनेकद्रव्यारब्धत्वाभावात् परमाणोरप्रत्यक्षत्वं प्रकरण उक्तम्; तच्चायुक्तम्, महत्त्वाभावादेव तत्सिद्धेरिति चोदयति—नन्वमहत्त्वादेवेति । परिहरति—मैवं लक्षणेति । लक्षणविवक्षायामे-वैतदानर्थक्यम, हेतुविवक्षयात्वुक्तमिति न दोषः । सा च शिथिलावयवारब्धजालादेः निबिडावयवारब्धवस्त्रादेश्च परिमाणसाम्येऽपि बहुतरावयववस्त्रादेः दूरदेशदर्शन-योग्यत्वदर्शनादवयवाधिक्यस्य प्रत्यक्षविशेषावहत्वनिश्चयात् तस्य च सामान्येनाने-कावयवारब्धत्वस्यापि प्रत्यक्षहेतुत्वे सत्युपपत्तेः सिद्धा । एवमवयवाधिक्यतारतम्य-वर्त्यन्वयव्यतिरेकसिद्धहेतुत्वस्य व्यतिरेकस्थानतया परमाणूदाहरणम्, न तावन्मात्रं प्रमाणतया विवक्षितमिति न दोष इत्यर्थः । इन्द्रियाणां विषयसंयोगार्थं द्रव्यत्वे सिद्धे तद्विशेषप्रदर्शनार्थं चक्षुषस्तावद्रूपवत्त्वमाह—रूपवदालोकस्येति । रूप-दृष्टयसाधारणहेतोः दीपवद्रूपवत्त्वमनुमेयमित्यर्थः । तत्पूर्वकं घ्राणस्य स्वग्राह्यगुण-वत्त्वं पार्थिवत्वं च ततोऽनुमेयमित्याह—गन्धधीन्द्रियमिति । एवं श्रोत्रमाकाश-मित्याह — शब्दधीन्द्रियमिति । रूपवत्तामात्रेण चक्षुषो भूतविशेषानिर्णयेऽपि दीपसाम्यात्तैजसत्वसिद्धिरित्याह — रूपवत्तेजस इति । रसस्पर्शग्राहकयोस्तदि-

---

१. माणोरप्रत्यक्षतासिद्धेः. ख. २. द्रव्यत्वस्य. ख.
३. शक्यमित्य. ख. ४. अनेकद्रव्यत्वाभावात्. क.

दीपस्य रूपधीहेतुत्वदर्शनाद्रूपधीन्द्रियं तैजसम्, रसधीन्द्रियं रसवदाप्यम्, स्पर्शधीन्द्रियं स्पर्शवद्वायवीयम्; भूतानां बहिरिन्द्रियारम्भकत्वनियमादियं व्यवस्था। यदि हि स्पर्शधीन्द्रियं न वायुः, तदा तस्येन्द्रियारम्भकता न स्यादेव।

मनोनिरूपणम्

एवं नित्यद्रव्यगतवैशेषिकगुणासमवायिकारणभूतद्रव्यान्तरसंयोगार्थं द्रव्यं मनोऽनुज्ञातम्। तच्चाणु, आरब्धत्वे कल्पनागौरवापत्तेः; परममहत्त्वे च हेत्वभावादात्मना सह संयोगाभावात्। न च पार्थिवाद्यणु तत् इति वाच्यम्,

---

तरभूतात्मकतेत्याह—रसधीन्द्रियमिति। तत्र हेतुः—भूतानामिति। तमेव हेतुं विपक्षे बाधकोक्त्या दृढीकरोति—यदि हि स्पर्शधीन्द्रियमिति। पञ्चसु भूतत्व-प्रसिद्धेरेकोपाध्यधीनत्वादितरेषु चेन्द्रियारम्भकत्वसिद्धेस्तदुपगम एव व्यवस्थानु-साराच्च युक्त इत्यर्थः। सुखादिप्रत्यक्षोचितमिन्द्रियं संप्रयोगं च वक्तुं तत्स्वरूपं सप्रमाणमाह—एवं नित्यद्रव्येति। पार्थिवपरमाणुषु रूपाद्युत्पत्तौ अग्निसंयोगस्या-समवायिकारणत्वात् सुखादावपि अन्यसंयोग एवानुमेय इति तदर्हं मन इति प्रसिद्धमित्यर्थः। द्रव्यस्य परिमाणाव्यभिचारात् तद्विशेषापेक्षायां तमाह—तच्चाण्विति। लाघवादकार्यत्वे परममहत्त्वोद्गमे अतत्परिमाणकार्यसंयोगो न स्यात्, दृष्टसंयोगव्यापकनिवृत्तौ तदनुमानाप्रचारात्; अतद्विधस्य चान्यथानुपपत्ति-बलोन्नेयत्वादिह च तदभावादणुत्वोपगम एव न्याय्यः। नित्यसंयोगाश्रयणे अन्या-सक्तचित्तस्येन्द्रियसंयुक्तार्थाप्रतिपत्तेः हेत्वन्तरं कल्प्यम्; तदनित्यत्वे तदभावा-देवोपपत्तिरित्यभिप्रायः। नन्वेवं पार्थिवादिभ्योऽन्यत्वं तस्य न स्यात्, अनन्यत्वेऽप्य-विरोधाल्लाघवाच्चेत्यत्राह—न च पार्थिवादीति। स्थूलकार्यकल्प्यानां तेषां तत्कारणत्वं विना तद्भावायोगात्तत्कारणत्वे च तत्कार्याणां कार्यान्तरार्थमुत्पाद्यत्वा-त्तद्व्यापारस्यावश्यकत्वान्मनःकार्यार्थव्यापारविरोधात् तदविरोधार्थं स्वातन्त्र्यो-पगमौचित्यादन्यत्वसिद्धिरित्यर्थः। नन्वसमवायिकारणसंयोगार्थमुपगतस्येन्द्रियत्वं

---

१ हेतुत्वदृष्ट. ख.　　२. Omtted. हि. क.

३. कारणभूत. क.　　४. त्वेऽत्कल्पना. ग.

तस्य द्रव्यारम्भकत्वनियमात्, अस्य[1] तदनुपगमात् तच्चान्तरसुखदुःखेच्छाद्वेषप्रयत्नधीहेतुः; बाह्यार्थस्मृतौ[2] च संस्कारसहितम्। एवमान्तरबोधे सुखादिमदात्ममनस्संयोगः, सुखादिमनस्संयुक्तसमवाय इति द्वयं हेतुः। रूपादिग्रहे त्वात्ममनस्संयोगः, मनइन्द्रियसंयोगः, द्रव्येन्द्रियसंयोगः, रूपादीन्द्रियसंयुक्तसमवाय इति चतुष्टयम्। अनेकसन्निकर्षानुज्ञानं च—असमवायिकारणभूतः संयोगो ह्यात्मना सहानुज्ञातः; आत्मसमवेतसुखाद्यग्रहात्सुखादिसंयुक्तसमवायोऽनुज्ञातः; एवमन्यचित्तस्येन्द्रियार्थसंयोगेऽप्यग्रहात् तस्येन्द्रियसंयोगोऽनुज्ञातः; इन्द्रियद्रव्यसंयोगेऽपि द्रव्ये रूपाद्यसमवाये रूपाद्यग्रहात्त[3]त्संयुक्तसमवायोऽनुज्ञातः; द्रव्यग्रहे संयोगत्रयमर्थादुक्तम्। एवं सन्निकर्षान्निर्विकल्पकसविकल्पकरूपद्वयं बाह्यमेयप्रत्यक्षम्।

भावनाजन्यप्रत्यक्षनिराकृतिः

नन्वनिन्द्रियसन्निकर्षजमपि भावनाप्रकर्षजं[4] युक्तं साक्षाद्धिरूपं मेयप्रत्यक्षम्। तन्न, तस्य स्मृतिभेदत्वात्; अनुभूतिर्हि साक्षाद्धीः।

---

कथमित्यत्राह तच्चान्तरेति। सुखादिप्रत्यक्षधीकरत्वादिन्द्रियत्वम्; बाह्यार्थेऽपि चापरोक्षधीकरत्वं क्वचिदस्ति; प्रमितिमात्रकरत्वं निवर्तत इत्यर्थः। एवमिन्द्रियत्वं प्रदर्श्य संप्रयोगविशेषमाह—एवमान्तरबोध इति। संप्रयोगबहुत्वोपगमे प्रमाणमाह—अनेकसन्निकर्षेत्यादिना। द्रव्यग्रहे ग्रन्थे पृथक् संयोगविशेषापरिगणनमर्थसिद्धत्वादित्याह—द्रव्यग्रह इति। एवं संप्रयोगं तस्य विभज्य लक्षणनिवेशोपयोगं तन्निवृत्त्या धर्मस्य प्रत्यक्षत्वनिवृत्त्यापादनसमर्थमाह—एवं संनिकर्षादिति। यथोक्तान्वयव्यतिरेकबलेन बाह्यद्रव्यगुणसामान्यानां प्रत्यक्षविषयतापत्त्युक्त्या निर्विकल्पकसविकल्पकविभागेनासंयुक्तेन्द्रियजप्रत्यक्षवाद्युक्ततदविषयत्वनिरासेन द्वयस्यापि संप्रयोगजत्वेनैव तत्प्रामाण्यसिद्धिस्तदुपयोग इत्यर्थः। नन्वनुमानागमाभ्यां परोक्षं वस्त्ववधार्य पुनरेकाग्रचिन्तासन्तानसंस्कारबलादपरोक्षं पश्यतो बुद्धिजन्म इन्द्रियसंप्रयोगहीनमित्यव्याप्तिदोषो लक्षणस्येति चोदयति—नन्वनिन्द्रियसन्निकर्षजमपीति। परिहरति—तन्न तस्येति। तस्यापरोक्षत्वविशेषणे सत्यपि प्रामाण्यापादकानुभूतित्वाभावान्न प्रत्यक्षतेति न लक्षणदोष इत्यर्थः। ननु तस्येदन्तया विषयमवभासयतोऽनुभवसिद्धमनुभूतित्वमिति तस्य तद्व्यावृत्त्यशक्तत्वात् प्रत्यक्षपदोपात्ते-

---

१. तस्य. ख. २. बाह्यस्मृतो. ख.
३. अग्रहात्संयुक्त. ख. ४. प्रकर्षपर्यन्तजं साक्षाद्धि रूपम् क.

प्रत्यक्षलक्षणम्

प्रत्यक्षम्; स्मृत्यनुभूती च नानास्वभावे मानबलसिद्धे; साक्षाद्धीः स्वरूपधीः; अक्षाद्धि स्वेन रूपेण भानम्; लिङ्गशब्दसदृशानुपलम्भेभ्यस्तु लिङ्ग्यादिरूपपरसम्बन्धितारूपेण भानम्। सविकल्पके नामादिरूपतः स्वरूपतोऽपि भानमिति साक्षाद्धीत्वम्। अनक्षजापि मितिमात्रोः स्वरूपभाना-

न्द्रियजत्वं प्रत्यक्षलक्षणमाश्रित्यैवातज्जन्यतया तद्व्यावृत्तिरभ्युपेयेति परमतमाशङ्क्य संस्कारजत्वप्रसिद्धस्मृतिबलेनैवानुभूतित्वव्यावृत्तिसिद्धेरप्रत्यक्षत्वं स्यात्, अन्योन्यविरुद्धस्वभावत्वात् स्मृत्यनुभूत्योः नानुभवबलमनुभूतित्वापादकमिति परिहरति—स्मृत्यनुभूती चेति। नानास्वभावत्वसाधकं मानबलमुत्तरत्र स्वयमेव वक्ष्यति। नन्वेवमपि साक्षात्त्वस्य दुर्निरूपत्वादक्षजत्वमेव प्रत्यक्षलक्षणं ग्राह्यमिति तेनैव स्मृतिव्यावृत्तिः सुकरेत्याशङ्क्य तत्स्वरूपमितरव्यावृत्तिक्षमं दर्शयति—साक्षाद्धीरिति। ननु सर्वापि धीः स्वरूपधीरेवेत्याशङ्क्य तृतीयासमासाभिप्रायविवरणेन कारणकृतं स्वरूपविशेषमाह—अक्षाद्धि स्वेन रूपेणेति। कारणतया अन्यव्यावर्तकमपीन्द्रियं परोपाधिहीनविषयभानरूपकार्यकल्प्यमित्यनुभवसिद्धनिरुपाधिकभानमेव प्रथमप्राप्तं प्रत्यक्षलक्षणं युक्तमित्यर्थः। मानान्तरमेयेषु तदभावं व्यावर्तकत्वार्थमाह—लिङ्गशब्देति। व्याप्यादिभिः व्यापकत्वाद्युपाधिग्रस्ततयैव तत्तदर्थभानं लिङ्गाद्यवधारणस्यायथार्थत्वे लिङ्ग्याद्यभावस्य तत्तत्प्रतीत्यभ्युपगतत्वान्न निरुपाधिकभानं तैरित्यर्थः। ननु चैवं नामाद्यवच्छिन्नभानात्मकसविकल्पकधियोऽप्रत्यक्षत्वापत्तिरित्यत्राह—सविकल्पक इति। पररूपान्तर्भावेऽपि स्वरूपभानानपायान्न तस्योपाधित्वं तत्रेत्यर्थः। एवमक्षजत्वस्य लक्षणबहिष्ठत्वादनुमानादावपि मितिमात्रोः प्रत्यक्षतेत्याह—अनक्षजापीति। वित्तिजनकलिङ्गादेर्वेद्यं प्रत्येवोपाधितया स्वरूपतिरोधायकत्वमवभासते, न वेत्तृवित्ती प्रति—इत्यापेक्षिकमेकवित्तेरेव प्रत्यक्षत्वमप्रत्यक्षत्वं च युक्तमेवेत्यर्थः। यथासूत्रं कारणमुखमेव प्रत्यक्षस्वरूपं सुनिरूपम, न प्रतीत्याकारमुखमिति स्थापनार्थं प्रतीतिविशेषरूपसाक्षात्त्वस्य लक्षणत्वे टीकायां विशदावभाससंवेदनपदाभ्यां प्रत्यक्षव्यपदेशदर्शनात सजातीयव्यावर्तकबहुधर्मस्फूर्तेस्तल्लक्षणत्वमुक्तं स्यादित्यापाद्य तदव्यापकत्वदोषोद्भावनमपि परकीयं यथोक्त-

१. लिङ्गादि क लिङ्गादिभूत ख

त्साक्षाद्धीरेव । दूरादशेषविशेषाभानेऽपि त्वचा चाशेषरूपाभानेऽपि परसम्बन्धितारूपेणाभानात्साक्षात्त्वम् । तदेव विशदावभासः संवेदनं चोक्तम्, न तु धीस्फुटता साक्षात्त्वम्; सर्वैव हि धीः स्फुटा । स्मृतेर्विशदत्वेऽप्यमानत्वादप्रत्यक्षता; अविशदत्वे हि विशदावभासेन सह भेदाग्रहो न स्यात् । सापेक्षतापि स्मृतेः परवेद्यतोल्लेखरूपितार्थवेदनात् स्ववेद्ये, न तु स्ववेद्येऽनुमादिकथा । न च मच्छिष्यधीवेद्यत्वान्मत्पूर्वधीवेद्यमित्यनुमानेऽपि तत्ता-

---

विधया परिहृतमित्याह—दूरादशेषविशेषेति । तदभिप्राय एव टीकाव्यपदेशोऽपीत्याह—तदेव विशदेति । यत्तु विशदाद्युक्तेः स्फुटार्थग्रहेण.नुमेयादिधियोऽनुमेयाद्यवच्छिन्नलिङ्गादिधीसङ्कीर्णत्वेनास्फुटत्वात् प्रत्यक्षधियः तदभावात् स्फुटत्वं साक्षात्त्वमिष्टम्, तदयुक्तमित्याह—न तु धीस्फुटतेति । सर्वसन्निकल्पकधियः स्वविषयार्पणोपयोग्यन्यमिश्रतास्त्येव, तथापि क्वचिद्धेतुहेतुमत्तया क्वचिद्विशेषणविशेष्यतयोपयोगाभेदस्यापि व्यक्ततया स्फुटत्वानपायान्न तेन व्यावृत्तिसिद्धिरित्यर्थः । एवं साक्षात्त्वस्यानुभूतिविशेषणतया प्रत्यक्षलक्षणत्वं समर्थ्य 'स्मृत्यनूभूती च नानास्वभावे' इत्येतत्समर्थनार्थं पूर्वोक्तामपि स्मृतिव्यावृत्तिमनुवर्तयति—स्मृतेर्विशदत्वेऽपीति । कथं स्मृतेर्विशदत्वाभ्युपगमः ? निरुपाधिकार्थभानं हि तत्स्वरूपमुक्तम्; पूर्वानुभवोपाधिकार्थभानहतं तु तदित्याशङ्क्य तदभावे दोषोद्भावनेन तत्साधयति—अविशदत्वे हीति । अनुभूतत्वमननुसन्धायापरोक्षाविवेकेनापि भ्रान्तिसमये तदुत्पत्तेः स्फुटत्वात् उपाधिव्यवधाने च तदयोगात् तदनुसन्धानेऽपि नात्मसत्तोपाधितया अनुमानादिव तदनुसन्धीयत इति न विशदत्वासिद्धिरित्यर्थः । नन्वेवं पूर्वानुभवापेक्षत्वमुत्पत्तिमात्रार्थतयावशिष्यत इति न तत्प्रामाण्यापहारकमिति तदप्यनिवार्यमित्याशङ्क्य प्रामाण्यविरोध्येव तत्, न निष्पत्तिमात्रोपक्षीणमित्याह—सापेक्षतापीति । सापेक्षतापि स्मृतिवर्तिनी प्रामाण्यमेव बाधते, न विशदत्वम्; स्मृतिर्हि स्वविषयव्यक्तावेव पूर्वानुभवमुपाधितया व्यवधायकमपेक्षते, 'तत्' इति स्फुरणात्; अनुमानादि तु अन्यसत्तोपाधिकसत्ताकं स्वयमेव विषयं व्यनक्तीति विशदत्वमेव तत्र नास्तीति विशेष इत्यर्थः । नन्वेवमनुमानेऽपि क्वचित् स्मृतितुल्यत्वमनिवार्यमित्याशङ्क्य वैषम्यमाह—न च मच्छिष्यधीवेद्यत्वादिति । पूर्वधीविषयत्वव्यक्तिर्द्वेधा स्यात्—संस्कारादनुमानाच्च; संस्काराधीना तद्व्यक्ति-

स्पदतापत्तिः, अनुमा हि पूर्वधीवेद्यताविशिष्टे, न तु वेद्यतावधृते, अनपेक्षस्वभावत्वात्। अनुभूतांशमोषेऽपि स्मृतेः परवेद्यवेदनताशक्तिनियमः कारणानुसारतः; अनुमाने तु परवेद्यतोल्लेखादर्शनान्न तद्रूपे शक्तिनिश्चय इत्यवधेयम्। यदि तु भेदकबहुधर्मवत्त्वेन[2] वेद्यता साक्षात्त्वम्, तदा दूरात्सामान्यवेद्यं प्रत्यक्षं न स्यात्; पक्षधर्मताबलादिनानुमानादावपि बहुधर्मवत्त्वेन धीरिति न भेदः। न च लक्षणं प्रायिकतया समर्थनमर्हति। न च स्वकीयरूपतो वेद्यता साक्षात्त्वम्; पररूपतो हि न वस्तुनो वेद्यता, न हि

---

स्तत्तास्पदतया हेत्वनपेक्षा प्रामाण्यहीना संस्कारभ्रंशाद्धेत्वपेक्षा त्वानुमानिकी इतरानुमानतुल्या प्रमाणमेव, हेत्वपेक्षयानपेक्षस्वभावत्वनिश्चयादित्यर्थः। नन्वेवं स्मृतिरपि तत्तानास्पदभूता अस्तु प्रमाणमित्यत्राह—अनुभूतांशमोषेऽपीति। सापि तद्धत्वक्लृप्तकारणोत्थैव कारणान्तराप्रचारादुपेतेति दोषखण्डिततदंशापि न स्वभावान्तराङ्गीकारार्हेति न प्रमाणमित्यर्थः। नन्वेवमनुमाने व्याप्तिग्रहणे प्रसिद्धविषयत्वनियमात्तत्संस्कारोत्थतोपगमेनानुभूतांशमोषमात्रं किमिति नाभ्युपेयत इत्यत्राह—अनुमाने त्विति। तन्मोषविषये प्रतीत्यनुगुणकारणप्रसिद्धिमूलः प्रमोषापेक्षसंस्कारोत्थत्वोपगमः। सर्वत्र प्रसिद्धकारणानुमाने तु क्वचित्तत्तास्पदत्वदर्शन एवान्यत्र तत्प्रमोषाश्रयणं न्याय्यम्, तदभावे यथाप्रतीत्यवगतकारणत्यागेन प्रमोषापेक्षसंस्कारकारणाश्रयणमन्याय्यमेवेत्यर्थः। यथोक्तसाक्षात्त्वस्वरूपानङ्गीकारेण बहुतरधर्मवत्तया विशेषान्तरव्यावृत्तभानरूपमङ्गीकुर्वतां परापादितदोषानतिक्रमं स्वयमप्यङ्गीकरोति—यदि त्वित्यादिना। स्वरूपभानपक्षे स्वस्येति पदवृत्त्युपगमोऽप्ययुक्त इत्याह—न च स्वकीयरूपत इति। लिङ्गादेः स्वसत्तोपाधितया वेद्यतोपाधित्वाभावात् स्वीयजात्यादेरेवानुमानादावपि वेद्यतोपाधित्वमिति व्यावर्त्याभावान्न तदुपपत्तिरित्यर्थः। स्मृतेरमानत्वे पूर्वानुभवमात्रार्पकत्वेनार्थविषयत्वाभावो हेतुः; तद्विषयत्वेऽनुवादधीवत्प्रामाण्यं दुर्वारम्; पूर्वानुभवस्य त्वनन्याधीनसिद्धित्वान्न तदुपस्थापकतया प्रामाण्यमिति नार्थस्य साक्षात्त्वप्रसङ्ग इति केचित्। तन्निरस्यति—

---

१ वेद्यत्वो. क. २. कबहिर्धर्म. क.

द्विरूपं वस्त्विति पूर्वोक्तमेव साक्षात्त्वं युक्तम्[1]। स्मृतेः प्राची धीरेव वेद्या नार्थः—इति न वाच्यम्[2], 'तत्' इत्यवमर्शस्यार्थविषयत्वात्। पूर्वधीवेद्यतारूपितार्थपरिच्छेदात्परिच्छेदे सापेक्षतया अप्रकृष्टा स्मृतिः, अनेवंरूपा प्रकृष्टा धीः प्रमेति भेदः। वर्तमानविषयता च या प्रत्यक्षस्योक्ता, सा सूक्ष्मक्षणभेदानवमर्शादिदन्तया भानात्, न तु यत्क्षणवतोऽर्थस्य सन्निकर्षः तत्क्षणवतोऽर्थस्य भानादित्यवधेयम्। मितिमातृप्रत्यक्षतापि यथोक्तेनैव साक्षात्त्वेनेति तदवसरे वाच्यम्। अतः सूक्तं प्रत्यक्षादेर्वेदार्थेऽनिमित्तत्वम्॥

---

स्मृतेः प्राची धीरेवेति। बाह्यविषयत्वं तावत्प्रतीतिबलसिद्धं नापलापार्हम्; न च स्मर्यमाणा पूर्वधीस्तदुपस्थापिका, तत्काले स्वयमसत्यास्तदुपस्थापकत्वासम्भवात्; तेन द्वयमपि सहैव स्मृत्युपस्थाप्यमित्युपेयम्। न चैवं प्रामाण्यापत्तिः, विषयाविष्करणे सापेक्षानपेक्षत्वस्वभावभेदात्तद्विषयप्रकर्षाप्रकर्षभेदमात्रनिमित्तत्वात् प्रामाण्याप्रामाण्योपगमस्य। अतः प्रातीतिकार्थविषयत्वं न हानार्हमित्यर्थः। नन्वर्थसन्निकर्षजत्वोक्तिः प्रत्यक्षस्य वर्तमानविषयत्वापादिकेत्यङ्गीकृतम्; तदङ्गीकारः स्मृतेर्बाह्यविषयत्वानुपगम एव शक्यः तत्पक्षे ह्यान्तरबाह्येन्द्रियाधीनद्रष्टृतानावच्छेदकत्वमात्रमर्थस्य दृश्यत्वमिति संप्रयोगकाल एव दृश्यत्वमिति वर्तमानविषयत्वसिद्धिः; तदुत्थज्ञानविषयतया तु दृश्यत्वे भूततयैव संप्रयुक्तं विषयः; तत्पक्षे तु स्मर्यमाणानुभवस्य तदा स्वयमसतः स्वविषयघटकत्वं नास्तीत्यविषयनिष्ठ एव भ्रान्त्यादाविव तज्जो व्यवहार इति सविषयतोपगमे तद्विरोध इत्याशङ्क्य सूक्ष्मकालस्य दुर्विवेकत्वादनुसन्धानार्हस्थूलकालापेक्षया तदुपगम इति परिहरति—वर्तमानविषयता चेति। साक्षत्त्वस्य बहुधर्मव्यावृत्तभानरूपत्वे स्वीयरूपविशिष्टभानात्मकत्वे च मितिमातृप्रत्यक्षत्वासिद्धिः, अर्थोपरञ्जकतया तयोर्विशिष्टतया भानायोगात् पृथक्त्वभानाभावात्। तद्धीस्थत्वनियमस्तु स्वस्थाने वक्ष्यते। अतोऽप्युक्तरूपमेव तदुपेयमित्याह—मितिमातृप्रत्यक्षतापीति॥

॥ इति प्रत्यक्षसूत्रम्॥

---

१. Omitted युक्तम्. क.    २. वेद्येति न तु वाच्यम्. क.

## औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

### शब्दस्य कार्यान्विते शक्तिनिर्धारणम्

ननु लोके शब्दस्य मानान्तरवेद्यतोपहिते स्वार्थे शक्तिरव्यभिचाराद् व्युत्पन्ना यथा कार्यान्विते। अतः प्रत्यक्षाद्यवेद्यस्य न वेदार्थतापीत्यभाव एव वेदार्थस्येति शङ्कायामुत्तरं सूत्रेण। कार्यान्वितस्वार्थमात्रे स्वाभाविकसम्बन्धव्युत्पत्तेर्वेदार्थधीः। मानान्तरवेद्यता तु न व्युत्पत्तिनिवेशिनी;[1] यत्र हि व्यवहारदर्शनम्, तत्र शक्तिधीः। न च मानान्तरवेद्यतापि व्यवहारान्तर्भूता; कार्यबोधाधीनस्तु व्यवहार इति तदन्विते शक्तिर्युक्ता। स्वार्थमात्रावधृतशक्तेरेवाप्तवाक्यान्मानान्तरं वाक्यार्थविषयमनुमाय मानान्तरवेद्यार्थतां[2] पश्यतां

---

'औत्पत्तिकस्तु"। सूत्रव्यावर्त्यं पूर्वपक्षं भाष्यस्थाभावशङ्काहेतूक्तिमुखेनाह—ननु लोके शब्दस्येति। व्युत्पत्तिसिद्धपदविषयप्रमितिशक्तेर्वाक्यनिष्ठतात्पर्यशक्तिधीप्रणाड्या कार्यकरत्वात् कार्यनिष्पत्त्यन्तशक्तिग्रहो वाक्यार्थविषयमानान्तरविषयप्रवृत्त्युपाधिपर्यवसायी, लोके तत्पूर्वकत्वनियमात् प्रमित्युत्पत्तेः; वेदार्थस्य तदविषयतोक्तेर्व्युत्पत्तिसिद्धशक्तेरपि बाधापत्तेः वेदार्थाभावशङ्का पूर्वसूत्रसामर्थ्यप्राप्तेति तच्छक्त्युपस्थापनेन तत्परिहारार्थं सूत्रमित्यर्थः। कार्यान्वयवैषम्योक्त्या सूत्राभिप्रेतं शब्दशक्तेर्मानान्तरप्रवृत्त्युपाधिहीनत्वं साधयति—कार्यान्वितस्वार्थेति। व्युत्पत्तिभूमिगतशब्दानां सत्यपि व्यापाराधिक्ये स्वभावप्राप्तः कार्ययोगः कार्यान्वितस्वार्थप्रमित्युत्पत्तिनिष्ठ एव व्युत्पत्तिसिद्धः; तदधिकस्त्वौपाधिक इति मानान्तरविषयार्थत्वं न तत्तुल्यमित्यर्थः। तदेव वैषम्यं स्पष्टयति–यत्र हीति। यद्यपि मानान्तरविषयत्वमपि व्यवहर्तृधीस्थम्, तथापि व्युत्पद्यमानपार्श्वस्थदृष्टिविषयव्यवहारानन्तर्भूतत्वान्न तदवसेयशक्त्युपाधितार्हम्; स्वप्रवृत्तिहेत्ववधारितकार्यं तु तत्प्रवृत्तिहेतुतयाऽनुमानसिद्धत्वाच्छक्त्युपाधितार्हमेवेत्यर्थः। ननु व्युत्पत्त्युत्तरकालावगमेऽपि मानान्तरगम्यार्थत्वं व्यवहारोपयोग्येवावगम्यतामिति स्यादुपाधिरित्यत्राह—स्वार्थमात्रेति। तदा हि पूर्वगृहीतशक्त्युपजीवनेनैव स्वयमनुमानेनार्थं निश्चित्य

---

१. यत्र तु॰व्य. ख.    २. Omitted पश्यताम् ख.

न मानान्तरवेद्यत्वेऽपि शक्तिधीः। ननु तदवेद्येऽपि न शक्तिधीः। मैवम्; प्रसिद्धार्थकामिपदसमभिव्याहाराल्लोकव्युत्पत्त्युपायादपूर्वकार्यार्थता लिङादेः, शब्दान्तराणां च तदन्वितस्वार्थव्युत्पत्तेर्मानान्तरानपेक्षार्थत्वमपौरुषेयवेदवचसां युक्तम्। लोके मानान्तरात् स्वार्थधीः; तत्पूर्विकैव पुंसां वाक्यरचना यतः, इदमेव हि पौरुषेयत्वं वाक्यस्य, न तु वर्णादिकार्यता। कार्यव्युत्पत्तिस्तु चोदनासूत्रे, अपूर्वव्युत्पत्तिरपूर्वाधिकरणे, इह तु मानान्तरवेद्यताप्रत्युक्तितोऽनपेक्षतया वेदः स्वार्थे प्रमाणमित्युक्तम्। स्वयं प्रतीयते

पुनर्वाक्येनावगच्छतीति वृद्धस्यापि तथात्वावगमात् न तदुपाधितया निवेशयेत् वि·ोधिनिवर्तकतयैव तत्प्रवृत्तिनिश्चयादित्यर्थः। नन्वेवमपि पूर्वसूत्रे मानान्तराविषयतोक्तिः वेदार्थस्यायुक्ता, व्युत्पत्तेस्तत्प्रामाण्यहेतोस्तदहेतुत्वादिति चोदयति— ननु तदवेद्येऽपीति। परिहरति— मैवमिति। लोके व्युत्पत्तिमात्रात्तदसिद्धावपि तत्पूर्वकसमभिव्याहारमूलव्युत्पत्तिनिष्कर्षापेक्षया तदुपपत्तिरित्यर्थः। नन्वभिधानवृत्तेः लोके मानान्तरसिद्धविषयत्वनियमदर्शनात्तन्मूलाभिधानम्, न तद्विपरीतमाश्रयणीयमित्याशङ्क्य तन्नियमस्यान्यथासिद्धत्वात् नाभिधानसङ्कोचकत्वमिति परिहरति— लोके मानान्तरादिति। वाक्यावस्थाप्रयुक्ततात्पर्यमात्रोपाधिर्लोकदृष्टस्तन्नियमः, न पदनिष्टशक्त्युपाधिरिति न समभिव्याहारावधार्यपदशक्त्यंशविरोधीत्यर्थः। ननु वाक्यतात्पर्योपाधिकी पदानामभिधानवृत्तिः, न स्वतन्त्रेति मूलभूततात्पर्योपाधिस्तन्नियतपदवृत्त्यवसाय्येव स्यादित्यत्राह— इदमेव हि पौरुषेयत्वमिति। तात्पर्यनियतत्वेऽपि पदवृत्तेः पुरुषस्वातन्त्र्यं वाक्यतात्पर्यवर्त्येव, अनादिव्यवहारपरम्परावगतपदशक्तिपूर्वकत्वाद्विशिष्टार्थविषयवाक्यप्रयोगस्य; तेन यथासिद्धवर्णपदतच्छक्त्युपजीविवाक्यरचनामात्रनिष्ठं मानान्तरपूर्वकत्वं नाभिधानशक्तिनिवेशीत्यर्थः। नन्वनपेक्षत्वोपस्थापकापूर्वकार्यार्थत्वधीपूर्विका अनपेक्षप्रमाणप्रतिज्ञेति तन्न्यायपरताप्यस्य सूत्रस्य स्यादित्याशङ्क्य स्थानान्तरव्युत्पादितन्यायोपजीवनेनानन्तरोक्तमानान्तराविषयत्वप्राप्तविरोधपरिहारमात्रेण तत्प्रतिज्ञा अनेन क्रियत परिहरति — कार्यव्युत्पत्तिस्त्विति। भाष्यस्थस्वयंप्रत्ययपदार्थमप्रतीतिहानार्थं मानान्तरानपेक्षत्वरूपं विवृणोति— स्वयं प्रतीयत इति। विवरणे दृष्टसङ्केतपदतुल्यार्थधीकरत्वानुमितसङ्केतापे-

१. दार्थवचसाम् क. २. वेद्यार्थता क.

शब्देनेति "स्वयंप्रत्ययो[1] ह्यसौ" इत्युक्तं भाष्ये ।

विवरणटीकार्थः

विवरणे तु—'देवदत्तादिपदे सङ्केतादर्थधीदर्शनात्सर्वशब्दानां सङ्केतादर्थबोधकता; न चेत्प्रत्यक्षादिगम्यो वेदार्थः, न तत्र सङ्केतः शक्य इत्यभाव एव वेदार्थस्य'—इति शङ्का सूत्रेण[2] निरस्ता । वृद्धव्यवहारतो निश्चितशक्तेर्गवादिशब्दादर्थधीदर्शने सत्यन्यत्र देवदत्तादिपदे दृष्टः सङ्केतो नानुमेय; न हि दृष्टे हेतौ हेत्वन्तरानुमा; प्रत्यनुमानाच्च न सङ्केतसिद्धिः । पूर्वे जना व्यवहारसिद्धशक्तिज्ञानाद्गवादिशब्दादर्थधीभाजः, गवादिशब्दादर्थधीयोगित्वात्, अधुनातनजनवत्—इति प्रत्यनुमानम् । देवदत्तादौ मूलभूतः सङ्केतो दृष्टः । तत्रापि ये व्यवहारतोऽर्थधीभाजः, ते तत एव; न

---

क्षत्वं सर्वशब्दानामहेयमिति वेदस्य मानान्तरागोचरार्थत्वे सङ्केताशक्तेरर्थाभावात्मकपूर्वपक्षनिरासः स्वाभाविकसम्बन्धोक्त्या सूत्रार्थ इत्याह—विवरणे त्विति । सङ्केतानुमानं निरस्यति—वृद्धव्यवहारत इति । यदि हेतुदर्शनहीनमेव कार्यदर्शनं स्यात्, तदान्यत्र दृष्टो हेतुरनुमेयः; सहेतुकार्यदर्शने तु नान्यदीयहेत्वनुमानावकाशस्तुल्यत्वात्; अन्यथा चातिप्रसङ्गादित्यर्थः । ननु देवदत्तादिपदेऽपि तुल्यं व्यवहारदर्शनोत्थार्थधीदर्शनं केषांचित्, तथापि तत्र सङ्केतहेत्वनुवृत्तिवदेव गवादावपि स्यादिति शङ्कानिवृत्त्यर्थं हेत्वन्तरं चाह—प्रत्यनुमानाच्चेति । अनित्यार्थकशब्दस्य व्यवहारदर्शनपूर्वकप्रयोगनियमासम्भवादस्तु सङ्केतपूर्वकत्वं गवादौ तु तत्सम्भवाद्विशेषानुमानप्राबल्यात् तन्नियमसिद्धिरित्यर्थः । नन्वेवं गवादेस्तदनुमानसिद्धस्वाभाविकशक्त्यधीने प्रमितिकरत्वे देवदत्तादेरपि तत्करत्वं तदधीनमेवोपेयमिति सर्वसाधारणशक्तस्वनियतविशेषवर्तिकार्यसिद्ध्यर्थसङ्केतापेक्षोपेयेति शङ्कां परिहरति—देवदत्तादाविति । व्यवधानेनापि सङ्केते कारणे दृष्टे सति न कारणान्तरमनुमेयमिति न तत्र शक्तिरित्यर्थः । नन्वेवं शाब्दप्रमितौ सङ्केतस्यासाधारणकारणत्वापत्तेः तदनुमानापेक्षैवातद्दर्शिनामपि प्रमित्युत्पत्तिरिति न व्यवहितं तस्य कारणत्वं स्यात् । गवादावपि च तदेव कारणमनुमेयम्, न व्यवहारानादितया शक्तिरित्याशङ्क्य अदृष्टसङ्केतानां न सङ्केतानुमानापेक्षा प्रमित्युत्पत्तिः; यतोऽसाधारणकारणताशङ्का स्यादित्याह—तत्रापि य इति । साङ्केतिकशब्दानामन्वय्यर्थसन्निधानमात्रोपक्षीणत्वात तस्य च प्रत्यासत्तिमात्रापेक्षित्वान्नाभिधानवृत्त्युपयोगिरूपान्तरापेक्षा-

---

१. प्रत्योऽसौ. क, ख. २. स्वाभाविकसम्बन्धसूत्रेण. क.

सङ्केतात् । वृद्धव्यवहारपरम्परादिमत्तया च सङ्केतपूर्वत्वं सम्बन्धाक्षेपपरिहारे परिहार्यम् । अतो वेदो वेदार्थेऽपूर्वे प्रमाणम्, नान्यदिति ॥

वृत्तिकारमतोपपादनम्

"वृत्तिकारस्तु" । अधुना लोकसिद्धप्रत्यक्षादिव्यभिचारदर्शनान्निरालम्बनतापाते वेदार्थभावशङ्का । सेह लक्षणपरं तत्सद्व्यत्ययेन सूत्रं व्याख्याय प्रत्यक्षव्यभिचारं कल्पनापञ्चकसमीचीनतया निरस्य अनुमानादीनां तत्सूत्रार्थायातलक्षणान्युक्त्वा निरस्यते । अतः सङ्गतिर्वृत्तिकाराद्यभावान्तवादस्थानानाम्; स्वसंविदनुसरणस्यापि परसम्बोधनपर्यन्तत्वाद्वादस्थानतैवंविधानाम् ।

वृत्तिकारव्याख्या भाष्यासम्मता

वृत्तिकारकृता सूत्रव्याख्या न युक्तेति वक्तुं वृत्तिकारकीर्तनम् ।

---

स्तीति अनादिव्यवहारपरम्परानुमितस्वाभाविकशक्तिकगवादिशब्दानामेवाभिधानवृत्तिः, अपौरुषेयवेदपरामर्शाधीना च तत्स्थितिः, व्यवहारमात्रस्य वक्तृज्ञानानुमानमात्रादप्युपपत्तेरित्यभिप्रायः । अयं च सङ्केतापेक्षत्वनिरासः वादान्तरलभ्यस्थितिरित्याह—वृद्धव्यवहारेति । सूत्रद्वयसाधितमर्थमुपसंहरति—अतो वेदो वेदार्थेऽपूर्व इति ।

"वृत्तिकारस्तु" । परव्याख्योपन्यासः किमर्थ इत्याशङ्क्य प्रस्तुतवेदार्थभावशङ्काया एव मुखान्तरेण प्राप्तेः तद्व्याख्याप्रकारान्तरापेक्षया तन्निरासपरत्वमपि सूत्रस्यास्तीति दर्शयितुमित्याह—अधुनेति । प्रस्तुतसमाधानरूपप्रयोजनोक्त्यैव तद्योग्यवादस्थानानामर्थसङ्गतिश्च सिद्धेत्याह—अतः सङ्गतिरिति । ननु परीक्षास्थानमेव शास्त्रम्, न वादस्थानमिति सूत्रस्थपरीष्टिपदसूचितमिति प्रागुक्तमिति तद्विरुद्धा वादस्थानतोक्तिरित्याशङ्क्य तत्परत्वेऽपि तत्प्रवृत्तेः शिष्यवत्यर्थनिर्धारणफलत्वात् तस्य च वादिविप्रतिपत्तिविषये तन्निरासक्षमवादापेक्षत्वादागन्तुकी वादस्थानतापि स्यादिति परिहरति - स्वसंविदनुसरणस्यापीति । नन्वेवं पक्षव्यावृत्तिपर-तु-शब्द-

---

१. वृद्धपरम्परादिमत्तया. ख.
२. पूर्वकत्व. क.
३. तु सूत्रा. क.
४. यातलक्षण. ख.

नन्वध्याहारो हि श्रुतिविरोधादयुक्तः, अपरीक्ष्यां प्रतिज्ञाय छलेन परीक्षाप्ययुक्ता, "प्रसिद्धत्वात्"—इति चासिद्धम्, सर्वथा माने विवादात्, चोदनासूत्रे च प्रामाण्यप्रतिज्ञानात् परीक्षाभिमता। सर्वं चेदं दूषणं व्यक्तत्वान्नभाष्ये शब्दोत्थं कृतम्।

व्यत्ययमात्रानुज्ञा

व्यत्ययस्त्वनुमतः पूर्वोक्तसूत्रत्रयार्थोपपत्तिः सूत्रकृतैवोक्ता लक्षणद्वारेण—इति वक्तुम्, उत्सूत्रत्वे तु सूत्रकृदनिपुणः स्यादिति भाष्यानुमतो व्यत्ययो लक्षणकरणं च। अत्र भाष्ये कल्पनां प्रत्यक्षमेवाभिप्रेत्य प्रत्यक्षव्यभिचारः शङ्कितः, अविद्यमानार्थान्तरानुसन्धानात्कल्पनानाम्। अनु-

---

सहितपरनामग्रहणमनन्वयीत्याशङ्क्य सूत्राक्षरगत्युक्तिः तदीया व्यावर्त्या, तत्प्रतिपादितार्थमात्रं ग्राह्यमित्याह—वृत्तिकारकृतेति। तद्व्याख्यादोषं प्रकटयति—नन्वध्याहारो हीति। भाष्ये तद्दोषानुक्तिहेतुमाह—सर्वं चेदमिति। तत्सद्व्यत्ययोऽपि तर्ह्यार्जवत्यागादयुक्तोऽभिमत इत्याशङ्क्य ग्राह्यत्वं तस्याह—व्यत्ययस्त्विति। सविकल्पकमात्रस्य निरालम्बनत्वशङ्कया मानान्तरविषयातिरिक्तेऽर्थे वेदस्य प्रामाण्यमयुक्तमिति शङ्कापि सूत्रेणैव निरस्तेति प्रकटनपयोजनसम्भवादिष्टो व्यत्यय इत्यर्थः। "ननु व्यभिचरति प्रत्यक्षम्" इति भाष्ये सौगतः पक्ष उपन्यस्तः; "शुक्तिका हि रजतवत्प्रकाशते" इति चोपपादितम्; तदयुक्तम्; तत्पक्षे निर्विकल्पकमात्रस्य प्रत्यक्षत्वोपगमाच्छुक्तिकारजतज्ञाने प्रत्यक्षपदानन्वयात् मीमांसकपक्षापेक्षयापि तदसम्भवादित्याशङ्क्यार्थमाह—अत्र च भाष्य इति। स्वपक्षे कल्पनाज्ञानस्याप्रत्यक्षत्वेऽपि मीमांसकाभ्युपगतप्रत्यक्षत्वमाश्रित्य तद्व्यभिचार उद्भाव्यते—प्रत्यक्षार्थस्यात्यन्तव्यावृत्तत्वात्तदतिरिक्तानुगतविशेषणारोपेण तत्स्फुरणाद्व्यभिचरत्येव तदिति। नन्वविद्यमानत्वे खपुष्पादिवत् स्वानुरक्तवस्तुस्फूर्त्यसिद्ध्यापत्तेः तद्धीरेव निर्विकल्पकवद्यथावभासं विषयसत्तां साधयेदित्याशङ्क्य तद्वैषम्यं ज्ञानाकारताश्रयणेनोद्भाव्य प्रतीत्यविरोधमाह—अनुसन्धानस्य चेति। ज्ञानस्य ज्ञेयातिरिक्ताकारासिद्धिशङ्कया तत्साधनार्थमाह — साकारता च ज्ञानस्येति। भासमानाकारस्य प्रत्यक्षबाधिते बाह्यार्थे भानस्थतया अवर्जनीयत्वात्तत्र तावत्साकारत्वं प्रतीतिसिद्धमेवेत्यर्थः। अतो भाष्यमपि व्यभिचारोपपादकं साकारत्व-

सन्धानस्य च ज्ञानाकारत्वात् स्वलक्षणे असतोऽपि नालीकता, साकारता च ज्ञानस्य शुक्तिरजतादावश्योपेतव्यापि, तत्र हि बाधकोदयाज्ज्ञानाकारो रजतमिति वाच्यमिति । एवम् "शुक्तिका हि रजतवत् प्रकाशते" इति भाष्ये निदर्शनत्वेनोक्तम् । अतः कल्पनासु लौकिकबाधानुदयेऽपि यौक्तिकबाधात् प्रत्यक्षव्यभिचारशङ्का, तामपनेतुमुक्तम् ।

अख्यातिसाधनम्

न रजतं प्रत्यक्षम्, इन्द्रियसंयोगविरहात्, किन्तु स्मृतिः । अतो न ज्ञानमात्रं साकारम्, 'नेदं रजतम्' इति बाधकोदयाच्चातत्संप्रयोगजतानिश्चयः । तर्हि लौकिकबाधकरहिते जात्याद्यनुसन्धानेऽतत्संप्रयोगजत्वा

साधकतया घटत इत्याह—एवं शुक्तिका हीति । नन्वेवमपि बाधकहीनसविकल्पकप्रत्यक्षस्य निर्विकल्पकवद्बाह्यविषयत्वमेवेत्याशङ्क्य बाधकबलेन ज्ञानस्य साकारत्वसिद्धौ प्रसिद्धबाधकाभावेऽपि युक्तिबलादेव बाह्यविषयासम्भवे साकारत्वापत्तेर्व्यभिचारो भाष्योक्त इत्याह—अतः कल्पनास्विति । ततस्तदुत्तरमपि घटत इत्याह—तामपनेतुमिति । तदेव लक्षणपरत्वोपगमेन "यद्व्यभिचरति न तत्प्रत्यक्षम्" इत्यादिनोक्तं उक्तपदनिर्दिष्टं स्पष्टयति — न रजतमिति । "तत्संप्रयोगे" इति लक्षणेन यद्विषयं ज्ञानं तेनैवेन्द्रियसंप्रयोगे तस्येन्द्रियजन्यतया प्रत्यक्षत्वं नान्यसंयोग इति शुक्तिसंयुक्ते चक्षुषि रजतविषयज्ञानं न प्रत्यक्षम्, स्मृतिस्तु तदिति प्रदर्श्य व्यभिचारविषयेऽपि साकारत्वं ज्ञानस्य निरस्यान्यत्र तत्प्रसक्तिर्निरस्तेत्यर्थः । नन्विन्द्रियान्वयव्यतिरेकानुविधायिनः कथमतज्जन्यत्वमित्यत्राह—नेदं रजतमितीति । संप्रयुक्तविषयापेक्षमेवान्वयव्यतिरेकयोस्तन्नियन्तृत्वम्; बाधकबलादसंप्रयुक्तविषयसिद्धावन्यथासिद्धिरवश्योपेयेत्यर्थः । यदि बाध्यज्ञानस्य स्वतः प्राप्तविषयनिषेधमात्रातिरेकेण व्यतिरिक्तविषयत्वं बाधकज्ञानमापादयतीत्यभ्युपगतम्, तर्हि तादृशबाधवियुक्तस्यान्वयव्यतिरेकसिद्धेन्द्रियजन्यत्वानिवृत्तेः विषयबाधस्य च युक्तिसिद्धत्वाज्ज्ञानमेव जात्याद्याकारं स्फुरतीत्युपेयमिति बाधविषयेऽपि तदेव स्यादिति मुखान्तरेण व्यभिचारो दुर्वार इति चोदयति—तर्हि लौकिकबाधकेति । स्वत एव विकल्पधियः स्वविषयसाधकत्वान्न व्यभिचार इति परि-

१. Omitted अपि. क. २. रजतं इदं न किन्तु आन्तरम् इति बाधकधीः ज्ञेया.

३. Omitted इति. क. ४. बाधरहिते. क.

निश्चये प्रत्यक्षव्यभिचारो दुर्वारः । मैवम् । जात्याद्यनुसन्धानाकारस्यापि स्वलक्षणे समीचीनत्वान्न व्यभिचारः, न ह्यसमीचीनं किञ्चिज्ज्ञानम्, शुक्तेर्हि रजतात्मना भाने धीरयथार्था स्यात्, न च 'रजतं शुक्तेरात्मा' इति काचिद्धीः, अत उक्तम् 'अन्यस्यान्यथा भानं धीहतम्' इति । धीरेव हि

---

हरति—मैवं जात्याद्यनुसन्धानेति । युक्तिबाधे कथं तत्साधकतेत्याशङ्क्य तत्सामर्थ्यमुपपादयति—न ह्यसमीचीनमिति । क्वचिदर्थव्यभिचारिज्ञानसिद्धावेव हि युक्तिविरोधस्तद्बाधकः स्यात्; अन्यथा प्रतीतिहता युक्तय एवाभासाः स्युः, तदसिद्धेर्न व्यभिचार इत्यर्थः । ननु शुक्तिरजतादिधियः स्मृतितया कथंचिदुपपत्तावपि बाधकबाध्ययोराञ्जस्यं व्यभिचारपक्ष एवेति तदापत्तेः कथमसिद्धिरित्याशङ्क्य तदसिद्धिमुपपादयति—शुक्तेर्हीति । स्वावच्छेदेन धीप्रकाशमात्रे विषयलक्षणे स्थितेऽन्यथात्वस्यापि प्रकाशं विनान्यथाख्यात्यसिद्धेस्तदुपगमे 'शुक्तेरात्मा रजतम्' इत्येव भानाकारः स्यात्, तदभावान्न बाधकबलमर्थव्यभिचारावहं स्यादित्यर्थः । एतदभिप्राय एव "प्रतीत्यैव पराहतम्" इति प्रकरणग्रन्थ इत्याह—अत उक्तमिति । विषयत्वं विनान्यथात्वस्य धीस्पर्शासिद्धेर्बाधितं तदित्यर्थः । ननु विधान्तरेणापि स्यात् तत्स्पर्शः; धीस्तावत्पुरुषाश्रिता; तत्फलं भानं विषयाश्रितम्; तत्राश्रयनिरूप्यत्वे भानस्य यथार्था धीः; अन्यनिरूप्यस्यान्याश्रयत्वे त्वयथार्था—इत्यवभासमानमप्यन्यथात्वं तत्फलव्यवहारव्यङ्ग्यं स्यादित्याशङ्क्य तदभेदमुखेनोक्तमेव साधयति—धीरेव हि भानमिति । न तावद्धीजन्यभानाश्रयतयार्थस्य धीकर्मत्वम्, अवर्तमानस्यापि लोके तत्कर्मत्वप्रसिद्धेः । तेन धीहेतुनियमितधीनिरूपकत्वमात्रमर्थस्य धीकर्मत्वमुपेयम्; तदवच्छेदकत्वमेव भातिधात्वर्थोऽपि, भूतादावपि प्रयोगाविशेषादिति नार्थान्यत्वं वित्तिभात्योरस्ति । भानेऽर्थस्य कर्तृतोक्तिस्तु करोत्यर्थकर्मणो जनिकर्तृतोक्तिवत्, धातुना स्वशक्त्या क्रियायाः कर्त्राश्रितत्वानुक्त्यैव कर्मावच्छिन्नतयोक्तिरिति, कर्मणोऽप्युक्तिसमये स्वातन्त्र्योद्भवायत्तोपेया । न हि जनिधातुः कर्तृगतक्रियार्थः स्यात्, प्रागसतः क्रियाश्रयत्वायोगात्, लब्धसत्ताकस्य पुनर्जननाभावात्; अतो जनयितृक्रियायोगं जन्यस्य स्वातन्त्र्यविवक्षया जनिधातुराह, तथेहापीति न तद्भेदापेक्षत्वमन्यथात्वमुपेयमित्यर्थः । नन्वेवमर्थसम्बन्धाभावादर्था-

भानम्, यदर्थव्यवहारानुगुणं हि यद्भानम्; तत् तदर्थभानमित्युच्यते। स चार्थो भानस्य वेद्यो विषय इति चोच्यते। [1]न तु धीजन्यो व्यवहारयोग्यतात्मा धर्मो विषयता, तत्कल्पनायां नानाभावात्। तेन 'इदम्' इति भानं

---

वच्छेद्यत्वं भानस्य न स्यात्; वित्तिकर्मत्वं वार्थस्य न स्यात्; अर्थगतफलजनकत्वाभावादिति नैक्यमुपेयमिति शङ्कां निवर्तयति—यदर्थव्यवहारानुगुणमिति। विषयात्मकस्यापि भानस्य व्यवहारगर्भोऽर्थसम्बन्धः सर्वसम्मतोऽस्त्येव। न चैवं व्यवहारोपाधिकस्तत्सम्बन्ध इति स्वाभाविकप्रसिद्धिबाधः, व्यवहारोत्पत्तेश्चानियतत्वात्तदनुत्पत्तिविषये सम्बन्धासिद्धिः तदपेक्षया वित्तेः सकर्मकत्वनियमोऽपि न स्यादिति वाच्यम्, तदनुगुणस्योपाधित्वाङ्गीकारात्तस्य चार्थविशेषनिष्ठतया नियतत्वान्न स्वाभाविकत्वक्षतिः; न च वित्तिधात्वपेक्षया सकर्मकत्वासिद्धिः। ननु तदनुगुणत्वं स्वरूपाधिकमनधिकं वेति वाच्यम्। तत्स्वयंप्रकाशत्वसाधनसमर्थं वाक्यमिति न विविक्तम्। नन्वर्थव्यवहारानुगुणत्वमात्रादस्त्वर्थावच्छेद्यत्वमर्थकर्मकत्वञ्च; विषयोक्तिस्तु अर्थस्य भानसत्ताप्रयुक्तैव, न फलप्रयुक्तेति सत्तोपाधित्वमर्थस्याश्रयतयापेक्ष्य नेयेति स्यादर्थाश्रितं तदिति शङ्काहानार्थम् "विषय इति चोच्यते" इत्युक्तम्। विषयोऽसाधारणस्वरूपनिरूपक इति व्यवहारार्हतयापि स्वरूपस्थत्वर्थानुबन्धोऽर्थ इति तावतैव विषयतोक्तिश्च घटत इत्यर्थः। यत्तु स्वयंप्रकाशत्वानुपगमात् धीजन्यार्थगतधर्माश्रयणम् तन्निराकरोति—न तु धीजन्य इति। यदि स्फुटसिद्धोऽर्थः पाकादिजधर्मवत् कश्चिदवस्थाविशेषः स्यात् तदा स विषयत्वमस्तु; विषयोक्त्युन्नेयस्त्वयुक्त इत्यर्थः। ननु व्यवहारफलव्यवस्थाप्ये विषयत्वेऽन्यथाख्यातिर्न प्रतीतिहतेति शक्यं वक्तुम् शुक्तेरेव रजतधिया व्यवहार्यत्वादिति शङ्कां तत्फलोक्तिमुखेन परिहरति—तेनेदमिति भानमिति। विषयव्यवहार्या हि सर्वा धीः; तत्र 'इदं रजतम्' इति विशिष्टार्थव्यपदेश्या विशेषणविशेष्यरूपार्थांशभेदादौपाधिकभेदयोगिनीति विशेष्यांशव्यवहारफले 'इदम्' इति भानांशः; स च तस्य हानोपादानकरः; हानोपादाने च विशेष्यनिष्ठे इति इदमंश एव हि साक्षात्तत्फलम्; रजतभानांशोऽपि तद्विशेषणनिष्ठतया तत्सहायत्वेन तत्कर एव। रजतजातेरेव च तदर्थ्युपादा-

---

१. प्राकट्यं निरस्यति —न त्विति।

पुरोवर्तिनि व्यवहारानुगुणम्, रजतभानं च रजतत्वावच्छिन्ने तस्मिन् व्यवहारानुगुणमिति रजततापि वेद्येति । ननु 'इदम्' इत्येतत्समानाधिकरणतया रजतभानम्; न च वस्तु तथेत्ययथार्थमेव । मैवम्, 'इदम्' इति रजतव्यक्तितुल्यधर्मकवस्तुभाने रजतजातिस्मृतौ च सत्यां रूप्यन्तर्भावाच्च रूपबुद्धेरिदमन्तर्भावो जातः; तत्र तु विवेको न भातः—किमपररूपिसन्निधेरित्थं भानमुत निजरूपिसन्निधेरिति । अतो भानस्थमात्रापेक्षया सत्यधीतुल्यतेति

---

नादिहेतुतया तत्सहायतेति स्वोचितव्यवहारहेतुतया सम्यग्धियामिव वेद्यत्वं व्यक्तमेवेत्यर्थः । इतिशब्दः "धीरेव हि भानम्" इत्यन्यथात्वस्य धीहतत्वोपपादनोपसंहारार्थो द्रष्टव्यः । नन्ववच्छेदकतया रजतजातेर्धीविषयत्वे सत्यप्यन्यथात्वमहेयमेव, सामानाधिकरण्यस्य प्रसिद्धत्वात्; अतो रजतैक्यं शुक्तिव्यक्तेर्भातीत्ययथार्थत्वं व्यक्तमेवेति चोदयति—नन्विदमित्येतदिति । समाधत्ते—मैवमिति । यदि हि 'इदम्' इति चाक्षुषधियेव संस्कारोत्थरजतस्मृत्यापि तज्जातीयव्यक्तिरुपस्थापिता स्यात्, तथैतत्स्यात्; स्मृतेस्तु संस्कारोद्बोधकानुसारिणी विषयव्यवस्थेति रजतजात्यविरोधिधर्मकवस्तुदर्शनजा स्मृतिः तज्जातिमात्रविषयतयापि तत्पूरितरूप्यन्तर्भावापेक्षा स्यादिति सम्यग्धीतुल्यसामानाधिकरण्यधीसिद्धिः । न हि तत्रापि इदन्ताजातिरूपयोरेकरूप्यन्तर्भावातिरिक्तं सामानाधिकरण्यनिमित्तमस्तीति इहापि तत्सिद्धिरित्यर्थः । ननु रूपधियो निजरूपिधीस्थतामात्रापेक्षित्वान्न तदन्यरूप्यन्तर्भावः स्यात्, निजधर्मित्वभाने चायथार्थत्वमित्याशङ्क्य अन्यत्वाभिव्यक्तावेव सन्निहितातिक्रमः स्यात्, न निजत्वानभिव्यक्त्यैव; प्रातीतिकपरापेक्षाणां वास्तवसम्बन्धानपेक्षतया विरोध्यप्रतीत्यैवान्तर्भावसम्भवादिति परिहरति—तत्र तु विवेक इति । समवायस्याप्रत्यक्षत्वात् जात्यादिविशिष्टदृष्टेः सम्बन्धदर्शनपूर्वकत्वाभावेऽपि सत्तामात्रेणापि हेतुत्वानपायात् स्वकीयपरकीयभेदस्तावत्प्रसिद्ध एव, अबाधितविशिष्टदृष्टेः दण्डयादिषु सम्बन्धपूर्वकत्वनियमदर्शनात् । न च सम्बन्धादर्शनेऽश्वगोमहिषोष्ट्राद्यनेकदर्शने रूपरूपिसङ्करापत्तेः व्यवस्थितसम्बन्धानुमानासिद्धिः, सत्यपि सम्बन्धदर्शने तस्य सम्बन्धान्तरादर्शनादव्यवस्थासाम्यात्; सम्बन्धस्वभावाद्व्यवस्थायां तद्दर्शनस्यानपेक्षितत्वाददोषः । न च सम्बन्धतत्प्रतीत्यभावेऽपि शुक्त्यादौ विशिष्टबुद्ध्यङ्गीकाराद्व्यवस्थानुपपत्तिः, तथाप्यनेकदर्शने तत्तत्संप्रयुक्त-

---

१. भानाच्च. क, ख.

युक्ता समानाधिकरणता। विवेकग्रहावसरे तु निजजातिरूपितम् 'इदम्' इति रूपिभानम्; रजतजातिभानमपि निजव्यक्त्यन्तररूपतया। एवं च विवेकाग्रहावसरे रजतव्यवहार; विवेकग्रहे तु तद्बाधः तद्बाधाच्च भ्रमता।

अख्यात्युपपादनम्

अयं भावः—निरन्तरभानं हि रूपरूपिणोरेकधीवेद्यतया स्वतो

---

चक्षूरश्मिभागदृष्टरूपरूपिणां तत्तज्जातिव्यञ्जकावयवविशेषाणां च व्यवस्थयैव विशिष्टधीकरत्वमिति व्यवस्थितसम्बन्धानुमानसिद्धेः न कश्चिद्दोषः। एवं सम्बन्धसिद्धौ स्वकीयपरकीयत्वाविवेकात् भासमानावस्थया सत्यधीसाम्यात्सामानाधिकरण्यमिति भावः। नन्वयथार्थत्वानङ्गीकारे धीस्थरूपस्यानपायित्वात् सत्यधीवदन्यनिवर्त्यत्वासिद्धिरित्यत्राह—विवेकग्रहावसरे त्विति। धीविषयस्यानपायित्वेऽपि प्रत्यक्षधियोऽन्यविरोध्यधिकविषयतया स्मृतेः तत्स्थरूप्युजीवनेन रूपमात्रविषयत्वासिद्धेः तत्त्यागेन निजरूपिविषयतेति विषयाधिक्यादपि पूर्वावस्थानिवृत्तिः स्यादित्यर्थः। ततश्च यथार्थत्वे बाध्यत्वप्रसिद्धिः भ्रान्तित्वप्रसिद्धिश्चानुपपन्नेति चोद्यं व्यवहारकार्यापेक्षयापि तदुपपत्तेः परिहृतमित्याह—एवञ्चेति। ननु समवायिलिङ्गविशिष्टबोधे रूपरूपिणोरेकधीस्थत्वमपि समानाधिकरणविशिष्टधीप्रयोजकमभ्युपेतमिति तादृशविशिष्टधीः न धीभेदेन शक्योपगमेति स्मृतित्वोपगमायोगादयथार्थैव स्यात्। निरन्तरधीद्वयोत्पत्त्यैव तदुपपत्त्युपगमे च शुक्तित्वाभिव्यक्त्युत्तरकालेऽपि तन्नैरन्तर्यानपायाद्भ्रान्त्यनुवृत्तिः स्यात्, पूर्वविशिष्टधीहेतोरनपेतत्वात् शुक्तिजातेः शुक्तिव्यक्त्येकधीस्थत्वेन रजतस्मृतिनैरन्तर्यबाधकत्वाभावात, व्यक्तिसम्बन्धप्रतीत्युपगम एव ह्यन्योन्यविरोधित्वं जातिद्वयस्य, न धीद्वये निरन्तरविषयत्वविरोधिता। तेन तन्मात्रस्य विशिष्टत्वप्रयोजकत्वे बाधकोत्तरकालानुवृत्तिर्भ्रान्तेरपरिहार्येति विरोधाभ्युपगमेन रजतजातिभानमपि निजव्यक्त्यन्तररूपतयेत्येतदप्यन्यथाख्यातिपक्षपात्येवेति तदनुपगमे भ्रान्तिगतिर्दुरुपपादेति शङ्कामपनेतुमाह—अयं भाव इति। विशिष्टधीस्तावत् स्वतन्त्रधीयोग्यविशेषणविशेष्यनिष्ठा पितृपुत्रनामनाम्यादिविषये सम्बन्धीपूर्विका भिन्नधीस्थतयापि सुप्रसिद्धेति पृथक्प्रतीत्यनर्हरूपरूपिविषये निरन्तरभानमात्ररूपा विशिष्टधीहेतुशक्त्यनुसारेण धीभेदेनाप्युपपन्नैवेति लाघवमात्रमेकधीस्थित्वापादकम्; हेतुबलाद्धी-

---

१. भानाद्वि. ख.

युक्तमित्येकधीवेद्यताङ्गीकृता। यत्र[1] धीद्वयं युक्तिसिद्धमविच्छिन्नम्, तत्रापि तद्वेद्याविच्छेदादन्तर्भूतरूपकं रूपिभानमिति बलाद्भिन्नधीवेद्यतास्वीकारोऽपि युक्तः। यदा तु शुक्तिजातिरूपितम् 'इदम्' इति रूपिभानम्, तदा रजतजातिरन्तरितभाना; न तु धीद्वये वेद्यनिरन्तरतान्यथात्वभानम्। न चात्यन्तोद्ग्रन्था सामानाधिकरण्येऽपि स्मृतिरुपेया। तदेवं यद्यपि पुरो-

द्वयनैरन्तर्योपगमेनापि विशिष्टता लभ्यत एव। वेद्यभूतरूपरूपिनैरन्तर्यस्यापि नान्तरीयकसिद्धत्वाद्विशिष्टत्वापादकरूप्यन्तर्भावोऽपि रूपभानस्यास्त्येवेति पूर्वधीस्थरूप्यतिक्रमायोगाद्भर्तृभार्यादितुल्येतरेतरपूरणाङ्क्षावतोः अन्योन्यपूरणयोग्यधीसन्निधिमात्रेणैकैकधीस्थताप्युपयोगिनी; न स्वरूपेणैव, ह्रस्वदीर्घादिवदन्योन्यधीपूरणार्हत्वधियोर्विशेषणविशेष्ययोस्तदर्हसहत्वस्यैवान्तर्भूतपदोपात्तस्य विशिष्टतोपयोगित्वात्। एवञ्चेद्बाधोत्तरकालं भ्रान्त्यनुवृत्त्यापादनमप्यपास्तम्, तदैकधीस्थस्वव्यक्त्यैव निवृत्ताकाङ्क्षरजतजातेः पररूपत्वाभिव्यक्त्या कालाविच्छेदानपायेऽपि पूर्वधीस्थविशिष्टत्वापादकेदमन्तर्भावविच्छेदादित्यर्थः। ननु कालाविच्छेदतद्विच्छेदरूपविशेषाधिकपूर्वधीस्थेदमन्तर्भावतन्निवृत्त्योर्बाध्यबाधकधीस्थतोपगमे परापादितमन्यथात्वभानमपरिहृतमेव स्वपक्षेऽपीत्यत्राह—न तु धीद्वये वेद्यनिरन्तरतेति। निरुपाधिकेदमन्तर्भावोक्तावैक्यधिया स्यादन्यथात्वम्; एकमित्युपाध्यपेक्षोक्तौ च जातेरप्यैन्द्रियकतापत्त्या स्यात्; धीद्वयापेक्षोक्तौ तु व्यवस्थिते वेद्यद्वये नैरन्तर्याधिकान्तर्भावाप्रतीतेर्नान्यथात्वापत्तिः। तदा ह्याकाङ्क्षानिरासतदनिरासफलभेदमात्रनिष्ठावन्तर्भावानन्तर्भावावपीति नान्यथात्वभानावकाश इत्यर्थः। एवं निर्व्यक्तिकजातिस्मृत्यपेक्षया सामानाधिकरण्यगतिरुक्ता। केचित् सव्यक्तिकस्मृत्याश्रयणेन तद्गतसामानाधिकरण्यस्मृत्या गृह्यमाणव्यक्तेः तदन्यत्वाग्रहमात्रेण सामानाधिकरण्यनिर्वाहमाहुः; तदनङ्गीकारे हेतुमाह—न चात्यन्तोद्ग्रन्थेति। ग्रन्थोक्तसमर्थनार्थं तदनुक्तग्रहे तदधिकग्रहोऽल्पग्रहेणापि समर्थनसिद्धौ दोष इत्यत्यन्तपदेन दर्शितम्। ननु सत्यमिथ्यात्वविशेषानुपगमेन व्यवहारनिर्वाहोपगमे प्राबल्यदौर्बल्यव्यवस्थापकाभावात् बाध्यबाधकत्वासिद्धिरिति शङ्कां तदनुवादेन परिहरति—तदेवं यद्यपीति। यथार्थत्वाविशेषेऽपि विरुद्धाकारयोः सहत्वासम्भवेऽनुवृत्त्यननुवृत्त्य-

१. यत्र तु. ख.

वर्तिनि भानमुभयथापि सत्यम्, तथाप्यनुवृत्तस्य भानस्य फलमनुवर्तते; तेन तद्बलवत्। अत एव यत्र 'इदं रजतम्' इति भाने भेदकधर्मभानात् 'नेदं रजतम्' इति, पुनश्च 'इदं रजतम्' इति, तत्र 'इदं रजतम्' इत्यस्यानुवृत्तेर्यन्मध्ये भेदकधर्मभानम्, [1]तत् स्मृतिरूपम्; रजतधर्माग्रहश्चानुज्ञेयः; [2]अभेदकरजतधर्मभानमेव तु गृहीतिः, न तु [3]भेदकधर्मभानमित्येवं बलवत्ता। यत्र त्वननुवृत्तिस्तत्र भेदाग्रहो दोषाधीनोऽनुज्ञायते; लोकसिद्ध-दोषपदार्थस्य हि कार्यखण्डकता क्लृप्तैव।

अन्यथाख्यातिनिरासः

ये तु दोषोपहतधीसामग्रीऽन्यथाख्यातिमाहुः तेषां दोषस्वभाव-विपरीतशक्तिकल्पना स्यात्। यद्धि यस्य कार्यम्, न तद्विकृतं दोषात्; जाठराग्नेः कार्यं [4]रसो विहत एव भस्मकात्, पाकाधिक्यं त्वग्नि-

पेक्षया व्यवहारफले बलवत्त्वाबलवत्त्वव्यवस्थया तत्फले बाध्यबाधकत्वव्यवस्थोपपत्तिरित्यर्थः। यतो ग्रन्थेऽनुवृत्त्यननुवृत्त्यभिप्रायेण भेदकधर्मग्राहिणो बाधकत्वमतद्ग्राहिणो बाध्यत्वञ्चोक्तम्, न तदहाग्रहमात्रविवक्षयैव; अत एव विषयान्तरेऽप्यविरोध इत्याह—अत एव यत्रेति। भेदकधर्मभानमप्यननुवर्तमानं स्मृतिरेव स्वव्यावर्त्यप्रसक्तपूर्वधीस्थधर्मभानानुवृत्तिविषये मध्ये; तदग्रहमात्राद्व्यावर्त्यतत्प्रसक्तिस्तत्रोपेया; पुनस्तद्व्यञ्जकधर्मान्तरस्थिरावस्थप्रथमधीस्थधर्म एव ग्रहणविषयः—इत्यनुवृत्तिरेव प्राबल्यहेतुरित्यर्थः। प्राबल्यहेतुनिष्कर्षव्यावर्त्यतां स्पष्टयति—न तु भेदकधर्मेति। एवं बाध्यबाधकप्रतीत्याकारानुरोधेनाग्रहणं समर्थ्य हेतुस्वभावालोचनया तत्प्राप्तिमाह—यत्र त्वननुवृत्तिरिति। दोषस्वरूपहेतुस्वभावप्राप्तकार्यानुमतिमात्रमग्रहणे, नान्यथाख्यातिपक्षवदप्रसिद्धहेतुशक्तिकल्पनेत्यर्थः। तत्र हेतुमाह—लोकसिद्धेति। अन्यथाख्यातिमते तत्कल्पना स्यात्; हेतुस्वभाववैपरीत्यं च तदा स्यात इत्याह—ये त्विति। तदेवोपपादयति—यद्धि यस्येति। ननु भस्मकदोषोपहतस्य जाठराग्नेर्विकृतकार्यकरत्वं प्रसिद्धमेवेति नान्यथाख्यातिपक्षेऽपि दोषस्वभावभङ्ग इत्यत्राह—जाठराग्नेरिति। देहेन्द्रियोपचायकरसविवेक एव तस्य स्वप्रयुक्तकार्यम्, तद्रहितपाकमात्रमग्निसामान्यप्रयुक्तम्, कार्यनिरूप्यं च दोषत्व-

१. तच्च. क.
२. भेदक. क. ख.
३. भेदकबहुधर्म. ख.
४. रसोपिहत. क.

मात्रतया प्रत्नलीभूतस्य युक्तम्, न तत्र दोषता भस्मकादेः । दग्धं तु वेत्र-बीजं कदलीकार्ये सामग्री, न तु दाहोऽस्मिन् कार्ये दोषः; वेत्राजननात्तु दोषता; न तु विकृतवेत्रजननात् । एवं च यज्जातीयकार्यजनिका या सामग्री न सा दोषात्तज्जातीयं कार्यं विकृतं करोतीति न धीजातीयं दोषाद्विकृतं युक्तम्। एतेन वेत्रदाहादिवच्नेत्रादिदुर्बलतैवान्यथाख्यातिसामग्रीत्युपगमोऽपि मन्द-फलः । समग्रधीकार्यगम्य[1]सामग्र्या विशेषोपधानात् सामग्र्यन्तरं न धीजाती-यमेवं[2] विकुर्यादिति नान्यथाख्यातिसिद्धिः । सन्दिग्धे चान्यथाख्यातिकार्ये सामग्र्यन्तरोपगमोऽप्ययुक्तः । एवं हेतुमुखेनाप्यन्यथाख्यातिरयुक्ता ।

---

मिति कार्यविशेषनिष्ठः स दोष इति तत्रापि नास्त्येव दोषस्य विकृतकार्योत्पत्तिहेतुत्वसिद्धिरित्यर्थः । ननु दाहोपहतवेत्रबीजस्य कदलीविकारवदङ्कुरजनकत्वदर्शनादस्त्येव तत्सिद्धिरित्यत्राह—दग्धं तु वेत्रबीजमिति । बीजाङ्कुरयोः सामान्याकारेणैव हेतुहेतुमत्त्वावधारणे हि तत्र तत्सिद्धिः स्यात्; तच्च सर्वबीजानुगतरूपदर्शनाधीनान्वयव्यतिरेकसाध्यम्; तद्दर्शनाभावात्तु तद्विशेषनिष्ठमेव तदवधारणमिति कार्यान्तरमेवकदल्यङ्कुरम्, न पूर्वावधारितकार्यस्य विकार इति कार्यान्तरे कारणान्तरं तत्; अतो न तत्रापि तत्सिद्धिरित्यर्थः । एवं चेत्युक्तमर्थं स्पष्टीकृत्योपसंहरति । सामग्र्यवच्छेदे कार्यस्य तदंशस्य वा निरोधमात्रं दोषकार्यं प्रसिद्धमित्यसदाकारावभासतद्विकारः तत्कार्यतया नोपेयः; प्रसिद्धतत्स्वभावहानापत्तेरित्यर्थः । एवं तर्हि क्लृप्तकार्ये दोषस्सन्नन्यथाख्यातिकार्ये वेत्रदाहवत् सामग्र्यस्त्वित्युपगमोऽपि नाविरोधापादनक्षम इत्याह—एतेनेति । वेत्रदाहादेर्हि न वेत्रप्रयुक्तकार्यसामग्र्यवधारणोपजीवनेन कदलीकार्यादिकरत्वमवसीयते, स्वतन्त्रकार्यत्वात्; पूर्वसिद्धोपजीव्यन्यथात्वमात्रकरत्वावधारणं विशेषोपधानमात्रस्य न क्वचिद्दृष्टम्; सामान्येनाङ्कुरादिहेत्वधारितवेत्रादिविशेषाणां तद्विशेषकरत्वं न तत्तुल्यम्, सामान्यान्तर्गतत्वाद्विशेषाणां तन्नान्तरीयकत्वात् तदधीनविशेषस्य; न त्वर्थभानकार्यविशेषोऽर्थशून्यत्वमित्ययथार्थत्वपक्षे क्लृप्तस्वभावभङ्गोऽपरिहार्य एवेत्यर्थः । सामग्र्यन्तरोपगमश्च कार्यान्तरोत्पत्तिनिश्चय एव स्यात् । यथार्थतयाप्युक्तविधया भ्रान्तिप्रसिद्ध्युपपत्तौ तन्निश्चयाभावादपि तदुपगमोऽशक्य इत्याह—सन्दिग्धे चेति । उपसंहरति—एवं हेतुमुखेनापीति ।

---

1. Omitted. गम्य. ख.    2. व हि कुर्या. क.

किञ्च अयथार्थधीपक्षे धीतोऽर्थानिश्चयरू[1]पोऽनाश्वासः स्यात् । न च निर्दोषधीहेतु[2]जा धीरर्थाश्वासकरी, निर्दोषत्वेऽप्यनाश्वासात् । न च धीयथार्थत्वपक्षेऽपि व्यवहारानाश्वासतुल्यतापातः; धीतोऽर्थदार्ढ्ये हि विरोध्यन्तरानुदये च न व्यवहारविचिकित्सा; पक्षान्तरे तु किंदार्ढ्येनार्थनिश्चयाद्व्यवहारोदयः मूलशैथिल्यात् ? किञ्च रजताकारस्य [3]स्वरूपवत्त्वेन भानान्नालीकता न चार्थरूपतेति धीरेव साकारा स्यादिति बाह्यार्थापलापो दुर्वारः। तदेवं विवेकाग्रहात् क्वचित् स्मृत्योः क्वचित् गृहीत्योः क्वचित् गृहीतिस्मृत्योः

---

धीतोऽर्थनिश्चयश्च न स्यादित्याह—किं चायथार्थेति । दोषप्रयुक्तत्वादयथार्थतायाः तदभावादर्थनिश्चयः सुकर इति शङ्कां निरस्यति—न च निर्दोषेति । यथार्थत्वपक्षेऽपि व्यवहारानाश्वासापादनेन साम्यापादनं दूषयति—न च धीयथार्थत्वपक्षेऽपीति । यथार्थत्वपक्षेऽर्थसंशयाभावात् तदिच्छयोपादानादिकर्तव्यताधीः प्रतिबन्धकनिवृत्तिमात्रात् स्यात्; ज्ञानव्यभिचारेऽनिश्चयज्ञानस्यैव अर्थसंशयकरत्वात् तन्निवर्तकाभावाद्व्यवहारहेतोरेवासिद्ध्यापत्तेर्न साम्यमित्यर्थः । तत्पक्षे बौद्धोक्तयुक्त्यापादितं धियः साकारत्वमपरिहार्यमिति तन्मूलबाह्यार्थापलापोऽपि दुर्वार इत्याह किं च रजताकारस्येति । एवं सर्वोदाहरणेषु यथार्थत्वं नेयमित्युपसंहरति—तदेवमिति । ननु जातिमात्रस्मृत्या पुरोवर्तिव्यक्तिविशेषणतोपगमेनाप्ययथार्थत्वं न परिहर्तुं शक्यते; विशेषणस्य अन्यव्यावृत्तिधीपर्यवसायितया शुक्तिव्यावृत्तेरसत्या एव विशिष्टधीविषयत्वापत्तेरिति चोद्यपरिहारविवक्षया दिङ्मात्रमित्युक्तम्; अन्यव्यावृत्तेरन्यत्वधीपूर्वकप्रतीतिकरतया तत्तद्भावधीरेव विलक्षणस्वभावविषयेत्युपेत्यैवान्यव्यावृत्तिधीः समर्थनीया; स च स्वभावो विशिष्टस्य विशेषणेन सह धीस्थतैव, विशिष्टत्वस्य तन्मात्रत्वात् । अतो व्यावृत्तिव्यवहारस्यापि तदालम्बनतयोपपत्तेः नाभावरूपमेयमुपेयमिति नायथार्थतापत्तिरिति भावः । एवं संशयस्यापि निजधर्महीनधर्मिमात्रग्रहादन्योन्यविरुद्धधर्म-

---

१. य. रूपोऽना. क. २. धीजहेतुजा क.

३. रूपत्वेन. स्वरूपवत्त्वेन. क.

स्वप्नपीतशङ्खशुक्तिरजतादिभ्रान्तिसिद्धिरिति दिङ्मात्रम्; भ्रमवच्च सत्यतयैव सन्देहधीसिद्धिः ।

### बौद्धमतनिरूपणम्

ननु कल्पनापञ्चके सत्यता न सिद्ध्यति । तथा हि—अवस्तुभूतजातिगुणकर्मात्मकं तत्तयाध्यवस्यन्ती धीरसत्या, अवस्तुभूतनामद्रव्यात्मकं तत्तयाध्यवस्यन्ती धीरसत्यैव । वस्तुसमानाधिकरणया च भानात्तदात्मकतया धीः । ननु व्यधिकरणभानमपि पञ्चसु—अस्य संज्ञा, दण्डोऽस्य, कर्मास्य, गोत्वमस्य, शुक्लोऽस्य इति । अत एवानवस्थितभानं न वस्तुनो युक्तमित्यसत्यतैव । जातेरवस्तुता [1]पृथगग्रहणादुक्ता । पृथग्[2]ग्रहश्च द्विधोक्तः; वस्तुभूता हि तुल्यवद्व्यक्त्या सह पृथक् भासेत; तथा व्यक्त्यग्रहेऽपि कदाचिद् गृह्येत ।

---

मात्रस्मृतेश्च पाक्षिकव्यवहारमात्रफलतया गतिरित्याह—भ्रमवच्च सत्यतयैवेति ।

अस्तु तर्हि कल्पनाज्ञानमुखमेवासत्यार्थत्वमिति चोदयति—ननु कल्पनापञ्चक इति । ननु विशेषणविशेष्ययोः ऐक्यधीरसिद्धेति शङ्कां परिहरति—वस्तुसमानाधिकरणतयेति । 'गौरयम्' इत्यादिस्वलक्षणसमानाधिकरणधीस्तावदविवादा । सा च भिन्नधीस्थघटपटादिभ्यो निवृत्ता तदभेदधीसाधिका । 'दण्डचयम्' 'देवदत्तोऽयम्' इत्यपि धीः दण्डचादिस्वरूपमात्रसिद्धावपि सामानाधिकरण्यावस्थिताभेदविषयतया मिथ्यार्थैवेतीतरतुल्येत्यर्थः । नन्वभेदावभासित्वे तद्विपरीतधीर्न स्यादिति तद्भावान्नाभेदसाधिकेति चोदयति—ननु व्यधिकरणभानमपीति । उभयथाभानमेवासत्यार्थत्वसूचकमिति परिहरति—अत एवानवस्थितेति । ननु सामानाधिकरण्यं भेदधीपुरस्सरमेव, अन्यथा गौर्गौरितिवत्तदसिद्ध्यापत्तेः व्यधिकरणधीर्भेदावसायिनीति व्यक्तमेवेति कथमनवस्थितधीमात्रमभेदसाधकमित्याशङ्क्य व्याप्तिबलं तत्साधकम्, तत्सहायमात्रमनवस्थितभानमित्याह—जातेरवस्तुतेति । पृथग्ग्रहणस्य हेतुत्वं विविच्याह—पृथग्ग्रहश्चेति । व्यक्तिद्वयदर्शने भेदस्य व्यधिकरणधीनियमदर्शनात् कदाचित्पृथग्दर्शनव्याप्तिसिद्धेश्च द्वयनिवृत्तिर्जातिगुणयोर्व्यक्तिगुण्यभेदं साधयेदित्यर्थः । परोक्तयुक्त्यन्तरप्रपञ्चः प्रक-

---

१. Omitted. पृथगग्रहणादुक्ता. ख. २. पृथगग्रहश्च. क.

तदेतदुभयं निवर्तमानं वस्त्वन्तरतां जातेर्निवर्तयति गुणस्य च। 'आश्रयद्रव्यानुत्पत्तेर्निराश्रयत्वादाश्रयभेदाभेदविकल्पासहत्वादाश्रये वृत्तिविकल्पासहत्वादाश्रयोत्पत्तिविनाशयोराश्रयान्वयानन्वयप्रकारानिरूपणात्' इत्यादिना जात्यपलापप्रपञ्चोऽप्युक्तः। जातिवद् गुणापलापः। कर्मापि पस्त्वाश्रयाभिमतात् क्षणिकादेवागन्तोः कर्मफलस्यागन्तुकस्य सिद्धेर्न कर्मकल्पनेति। ननु तुच्छरूपा जातिः कथं स्वरूपवत्त्वेन भाति? मैवम्; कल्पनाज्ञानाकारकतया वस्तुनोऽवगमात्; बाह्यात्मकताभिमानस्त्वतद्व्यावृत्तिसामान्याद् भेदाग्रहादध्यासापरपर्यायात्। अत एव नित्यात्मसुखानां ज्ञानाकाराणामेव भेदाग्रहाद्बाह्याभिमानात् संसारस्थितिः। तदुक्तम् "प्राक्

---

रण एव दर्शित इति तत्स्मारणमात्राभिप्रायेणाह—आश्रयद्रव्यानुत्पत्तेरिति। कर्मनिरासे विधान्तरमाह—कर्मापलापस्त्विति। ननु साक्षात्प्रतीतिबलसिद्धार्थबाधे युक्तिमात्रं तन्निरासासमर्थम्, तद्बध्यत्वादिति चोदयति—ननु तुच्छरूपेति। परिहरति मैवमिति। बाह्यत्वमात्रं युक्तिबाध्यमिति स्वप्नादिदृष्टवत्प्रतीत्याकारतयापि भानाविरोधान्न युक्तिर्बाध्येत्यर्थः। नन्वेवमपि बाह्यत्वभानानुपपत्तिरपरिहृतेति तदुपपत्तये यथासम्भवं बाह्यत्वमेवोपगमार्हमिति शङ्कां परिहरति—बाह्यात्मकतेति। सविकल्पकस्य स्वहेतुनिर्विकल्पकतद्विषयान्यत्वानवगमात् स्वलक्षणव्यावृत्त्यप्रतीतेः द्वयोरपि द्वयातिरिक्तेभ्य एव व्यावृत्तिभानमित्येकप्रतियोगिकव्यावृत्तिमत्तया सादृश्यादन्योन्यभेदाभानादैक्यव्यवहारफलाध्यासात्मकादन्योन्यधर्मसङ्क्रमान्ताद्बाह्यत्वाभिमानोपपत्तेः नानुभवविरोध इत्यर्थः। अयं च विवेकोऽत्यन्तपुरुषार्थ इत्येतदर्थमुक्ताध्यासमूलत्वं संसारस्याह—अत एव नित्यात्मसुखानामिति। ननु तन्मतोपन्यास इहानर्थकः, भाष्यानुक्तत्वादिति शङ्काहानार्थमाह – तदुक्तं प्राग्बाधकेति। ननु तदपि संप्रतिपन्नभ्रान्तिविषयमेव, बाधकोत्पत्तेः पूर्वं भ्रान्तिनिश्चयहेत्वसम्भवमाशङ्क्य कारणदोषहेतुकथनार्थमिति शङ्कापनयनार्थमाह—प्राक्पदमिति। तच्छङ्केहानर्थिकेति विनार्थग्रहणेन सर्वसंप्रतिपन्नव्यभिचारपरिहारानन्तर-

---

१. Omitted. कर्म. ख. २. वस्तुतोप. क. वस्तुतोऽव. ख.

बाधकज्ञानात्" इति । प्राक्पदं विनार्थे; कल्पनापञ्चके बाधकं विना तत्संप्रयोगजता दुर्निरूपेति ।

बौद्धमतनिरसनं जातिसाधनम्

अत्र समाधिः—शुक्तिरजतादौ तावद्बाह्यताकारस्योक्ता[1]। कल्पनाकारस्यापि बाह्यत्वात् तत्संप्रयोगजतैव, जात्यादेर्बाह्यत्वात् तद्योजनाकारस्यापि बाह्यत्वात्; न हि योजनमेक[2]ताभानम्; किन्त्वभेदव्यपदेशमात्रम्; तदपि कदाचित् । न च जातेरसत्त्वात्तत्कल्पना न बाह्येति वाच्यम्; न तावज्जातेराश्रयानुत्पत्तेरसम्भवः, स[3]द्वितीयेनाणुना तत्संयोगाद्द्व्यणुकाद्यारम्भात् स्थूलोत्पत्तेः यथानेकवस्त्वनुपगमेऽपि परमतेऽणुचयो धीहेतुः ।

प्राप्तस्याभिमतव्यभिचारहेतूद्भावनार्थम् उक्तपरिहारासम्भवाभिप्रायेण तद्ग्राह्यमर्थवदुपेयमित्यभिप्रायः ।

राद्धान्तमाह—अत्र समाधिरिति । प्रसिद्धभ्रान्तिव्यभिचारसंप्रतिपत्त्यपेक्षमेव तावदुक्तयुक्तिबलेन जात्याद्याकारस्य ज्ञानगतत्वमापाद्यम्, तदव्यभिचारस्य स्थापितत्वात् कल्पनाकारस्यापि बाह्यत्वं धीबलप्राप्तमनिवार्यमिति तद्धीरुक्तलक्षणवत्येव; तेनेतरवदव्यावर्त्येति तदशक्त्यापादनमनवकाशमित्यर्थः । यत्पुनः सामानाधिकरण्यस्याभेदावसायित्वाज्जात्यादेरबाह्यत्वमुक्तम, तन्निराकरोति — न हि योजनमेकताभानमिति । विशेषणविशेष्यभेदभानगर्भत्वाद्विशिष्टप्रत्ययस्य तद्विरुद्धतदभेदस्यानाशङ्कनीयत्वात् पृथगुच्चारितविभक्तिमात्रं विशेष्यैक्याद्येकार्थं तन्मूलमैक्यभानं भ्रान्तमात्रमित्यर्थः । तदपि कदाचिदिति दूरनिरासः । ननूक्तस्वरूपासम्भवयुक्तिबलात्तदसिद्धमिति शङ्कामपनयति—न च जातेरसत्त्वादिति । जात्याश्रयाभिमतस्थूलद्रव्यनिष्पत्त्यनुपपत्तिस्तावन्नास्ति; एकैकव्यतिरिक्तानेकानुपगमे हि द्वित्वादिः संख्यामात्रनिष्ठ एव, न द्वितीयादिवस्तुनिष्ठः, अणुचयोपगमात्; तेन द्वितीयसहितस्यैकस्य कारणत्वाविरोधात् द्व्यणुकादिक्रमेण तदुत्पत्तिः अविचलैवेत्यर्थः । नन्वेकवस्तूपगमेऽप्येकस्येतरसहत्वानुपगमात तदपेक्षसंयोगपूर्वकद्व्यणुकाद्युत्पत्तिश्चालयितुं शक्येति शङ्कां दृष्टान्तोक्तिमुखेन परिहरति—यथानेक वस्त्वनुपगमेऽपि । एकैकावस्थाणूनां प्रत्यक्षधीजनकत्वं त्वयापि नाङ्गीक्रियते, तथापि तच्चयस्य तदङ्गीकारात्तत्तुल्यसहत्वेनैव संयोगाद्युत्पत्तिसम्भवान्न त्वया चालयितुं शक्येत्यर्थः । क्षणिकत्वविरोधः स्थानान्तरापेक्षया परिहार्य इत्यभिप्रायः । अवयवेष्वयविवृत्तिसाधसानायाह—वृत्तिस्त्विति । विशिष्टदर्शनबलोन्नेया हि वृत्ति-

१. बाह्याकारताज्ञानस्योक्ता. ख. २. एकदाभानम् क.
३. अद्वितीय. क.

अवयविनोऽवयवेषु व्यासज्यवृत्तिः

[1]वृत्तिस्त्वेकैकत्रावयविबुद्धेरनुत्पत्तेर्व्यासङ्गादेवेष्टा। येनापि [2]सूत्रस्य कुसुमेषु वृत्तिमवयवान्तरतो व्यासङ्गाद् दृष्ट्वावयविवृत्तिर्व्यासङ्गतो वार्यते, तेनापि सूत्रस्य स्वावयवेषु [3]व्यासङ्गवृत्तिरनुज्ञातेति तन्निषेधोऽशक्यः। एवं भिन्नाया एव जातेर्द्विधा पृथग्ग्रहणं [4]रूपतया। येनापि हि भिन्नानां घटपटादीनां पृथग्ग्रहो दृष्टः, तेनापि घटत्वादिरूपस्य पृथग्ग्रहोऽप्यनुज्ञात एव; प्रत्येकं च व्यक्तितः पृथग्ग्रहोऽप्यस्त्येवेति भेदसिद्धिः। जातेस्तु वृत्तिः प्रत्येकं कात्स्न्र्येन; वृत्तिर्ह्यपरिमाणस्यानेकत्रापि कात्स्न्र्येन नादृष्टा। व्यक्त्यन्वयानन्वयौ च जातेः सम-

---

र्यथादर्शनमेवेति व्यासङ्गिन्येवाश्रयणीया। न चावयवान्तराधीना सेति तदभावात्तदनुपपत्तिः, तदधीनतायाः पुष्पसूत्रादिदर्शनमूलत्वात् तत्रापि च स्वावयवेषु तदनपेक्षतद्वृत्तेर्दृष्टत्वात्तद्दर्शनसापेक्षत्वाच्चावयवान्तरापेक्षत्वव्याप्तिसिद्धेः तत एव तन्निषेधायोगात् स्वावयवव्यतिरिक्तद्रव्यवृत्तावेव व्यासज्यवृत्तेरवयवद्वारतेति तद्व्याप्तेरुपाधिरवश्योपेय इति नावयवान्तरनिवृत्त्या तन्निषेध इत्यर्थः। पृथगग्रहाज्जातिस्वरूपापलापे परिहारमाह—एवं भिन्नाया एवेति। जातिविषयेऽप्युक्तोपाध्युन्नेयहेत्वनुकर्षणार्थमेवमित्युक्तम्। भेदस्य पृथग्ग्रहणव्याप्तिर्घटादौ तत्स्वरूपनिरूपकरूपाद्यन्यभेदाश्रितोपेया, न भेदमात्राश्रितेति रूपत्वाज्जातेरपृथग्ग्रहेऽपि भेदो दुर्वार इति। तद्विवृणोति—येनापीति। पृथगग्रहासिद्धिश्च उपपादयितुं शक्येत्याह—प्रत्येकं चेति। स्वयं भेदसाधनशक्तं चैतदित्याह—इति भेदसिद्धिरिति। वृत्तिविकल्पे त्ववयविसाम्यं न जातेरित्याह—जातेस्त्विति। तदसाम्यमेव साधयति—वृत्तिर्ह्यपरिमाणस्येति। परिमाणगुणयोगप्रयुक्तावयविनोऽवयवेष्वकृत्स्ना वृत्तिः; सर्वावयवसङ्ग्रहान्तं हि कृत्स्नत्वमेकैकत्रासम्भवदतमिति अकृत्स्नवृत्तिस्तत्रावयवीति युक्तम्, सर्वावयवव्यापिपरिमाणनिरूप्यत्वात् कृत्स्नत्वस्य; तदधीना जातिर्यथावभासं वर्तत इति गौगौरित्येकैकत्र संपूर्णदृष्टचनुरोधात्तद्विरोध्यदर्शनाच्चानेकत्रापि कृत्स्नवृत्ति दर्शनमेव साधयितुमलमित्यर्थः। व्यक्त्युत्पत्तिनाशयोस्तद्योगापायप्रकारानिरूपणदूषणे समाधिमाह—व्यक्त्यन्वयानन्वयौ चेति। तद्योगापायौ स्वरूपतः समवायोत्पत्तिनाशाविशिष्टौ; तद्धेतू च व्यक्त्युत्पत्तिविनाशहेतू, न पृथगुपेतौ।

---

१. वृत्तिकारस्त्वेत्र. क.
२. पि हि सूत्रस्य. क.
३. व्यासज्यवृत्तिः
४. रूपकतया. क.

वायोदयापायाभ्यां व्यक्त्युत्पादापायहेत्वधीनाभ्यां समर्थितौ ।

समवायकल्पना

आगमसन्निधिहीनस्याप्युत्पन्नवस्तुपरतन्त्रतया भानादेव संयोगविलक्षणः सम्बन्धः कल्पितः स[1]मवायशब्दवाच्यः। समवायश्च स्वयमनाश्रित एव स्वभावात् स्वतन्त्रपरतन्त्रयोः समवायिनोरा[2]श्रयाश्रितताभानहेतुः। अत एव यावत् समवायकल्पना न जाता तावन्न 'इह गोत्वम्' इति

न चान्यत्र सम्बन्धे सम्बन्धिहेतुमात्राधीनत्वादर्शनात् तदुपगमानुपपत्तिः; संयोगो ह्यन्यः सम्बन्धः प्रसिद्धः; तन्नियतदृष्टहेत्वभावेऽपि सम्बन्धकार्यावधारितविशेषणविशेष्यभावदर्शनात् सम्बन्ध्युत्पत्तिनाशावधिकत्वाच्च तद्दृष्टेः कार्यकल्प्यसम्बन्धस्तद्विलक्षण एवेति नोक्तहेतुकत्वानुपपत्तिरित्यर्थः। ननु कार्यकल्प्यत्वे समवायस्यास्त्वेवमन्यविलक्षणत्वम्; तदेव त्वसिद्धम्, समवायिनोराश्रयाश्रयितयान्योन्यविलक्षणदृष्टेः घटोदकयोरिव सम्बन्धविधाभेददर्शनाधीनत्वात् प्रत्यक्षत्वसिद्धेः। तेन 'इहप्रत्ययसिद्धः' इत्यवश्योपेयम्। कार्यकल्प्यत्वं चासम्भाव्यम्, तदुपपादकत्वायोगात्। विशेषणविशेष्यनियामकत्वस्य सम्बन्धान्तरापेक्षत्वात् तदुपगमे चानवस्थापत्तेः। ततश्च नित्य एव समवायः। कार्यत्वे संयोगविपरीतकारणाश्रयणायोगादिति शङ्कां परिहरति—समवायश्च स्वयमिति। न विशेष्यान्तरप्रसङ्गपरिहारेण विशेषणविशेष्यनियन्तृतया कार्यानुमेयत्वं समवायस्येष्यते, येन सम्बन्धान्तरापेक्षा स्यात्। यस्य ह्यनियतत्वं स्वतस्सिद्धं दण्डादेः, तस्यैव नियमार्था सम्बन्धापेक्षा; जात्यादेस्तु तदसिद्धेर्न तदर्था तदपेक्षा; विशिष्टधीहेतुसिद्धिमात्रं सम्बन्धानुमाननिमित्तमिति सम्बन्धान्तरानपेक्ष एव समवायोऽनुमेयः, अनवस्थापत्तेरेव। न चाश्रिता धीस्तद्दर्शनापेक्षा, जात्यादेर्व्यक्त्यादिभ्यः पृथग्ग्रहणस्यान्वयव्यतिरेकसिद्धत्वात्। स्वतन्त्रपरतन्त्रस्वभावत्वकृतमाश्रयाश्रितत्ववैलक्षण्यमिति तादृग्विशिष्टभानहेतुः सोऽनुमेय इति कार्यानुमेयत्वाद्विलक्षणकारणको नानुपपन्न इत्यर्थः। यथोक्तकार्यकल्प्यत्वाभिप्राय एव समवायस्येहप्रत्ययगोचरत्वनिषेधोऽपीत्याह—अत एव यावदिति। स्मृत्युपस्थापितस्वातन्त्र्यपारतन्त्र्ययोः सहधीस्थतामात्रं विशिष्टधीहेतुः, न सम्बन्धधीरिति सम्बन्धधीनिवेशिनी इहधीस्तदनुमेयोपजीविन्येवेत्यर्थः। यथोक्तसम्बन्ध्युत्पत्तिविनाशावधिस्थितिस्वभावत्वमवयविसमवायस्याप्युपजीव्य अवयविनः पृथ-

१. समवायपदवाच्यः. क.    २. राश्रयाश्रयितां. क.

धीरित्युक्तम् । भिन्नोऽप्यवयवी द्विधा न पृथग्गृह्यते, अवयवसमवेतत्वाद-वयवग्रहाधीनग्रहत्वाच्च । येनापि हि घटादेर्भिन्नस्य पृथग्ग्रहो दृष्टः, तेनापि पृथग्ग्रहोऽन्वयविनोऽनुज्ञात एव । तादात्म्याङ्गीकारे त्वेकतैव स्यान्न तु सम्बन्धितेति स नानुज्ञात इत्यनुसन्धेयम्, धीबलात् ।

ब्राह्मणत्वजात्यनङ्गीकारः

यत्र च भेदभानेऽप्येकाकारावमर्शः, तत्रैव जात्युपगम इति सत्त्वशब्दत्वब्राह्मणत्वादिजातिर्नोपेता; न हि द्रव्यादिभाने पूर्वाकाराव-मर्शोऽस्ति, येन सत्त्वं जातिः स्यात् । सच्छब्दप्रवृत्तिनिमित्तमेकमपि न जातिः; किन्तु क्रियैव मितिरूपा; तयोपलक्षिता योग्यतैव सत्ता ।

---

गग्रहानुपपत्तिं परिहरति — भिन्नोऽप्यवयवीति । उक्तहेतुहीनभेदस्यैव पृथग्ग्रह-व्याप्तिरित्युपाध्याश्रयणे गौरवदोषपरिहारार्थमाह—येनापीति । केचित्तूपाध्याश्रयण-गौरवहानात्सामानाधिकरण्याञ्जस्याच्च भेदपक्षपातिसमवायत्यागेनाभेदपक्षपाति तादात्म्यमिच्छन्ति, तत्र दूषणमाह— तादात्म्याङ्गीकारे त्विति । भेदापेक्षः सम्बन्धः; तन्निमित्ता च विशिष्टधीरिति कार्यविरोधात्तादात्म्यरूपसम्बन्धानङ्गीकार इत्यर्थः । गोत्वादिवत्सत्तासामान्यमपि प्रत्यक्षमिति परमतम्, तन्निरस्यति—यत्र च भेदभानेऽपीति । तत्साधकप्रत्यक्षाभावमाह—न हि द्रव्यादिभान इति । यथा गवादि-पदानुवृत्त्यनभिज्ञस्याप्यनेकतद्व्यक्तिदर्शने तत्सर्वानुगतैकाकारप्रत्यभिज्ञा भवति, न तथा सत्पदार्थव्यक्तिष्वस्तीति न प्रत्यक्षं तन्मानताहमित्यर्थः । नन्वेकपदानु-वृत्तिरेव स्वहेतुतया तत्प्रतीतिसाधिकेत्यत्राह - सच्छब्दप्रवृत्तिनिमित्तमिति । वाच्या-श्रितैकाकारदर्शनाभावेऽपि मितिविषयत्वरूपैकनिमित्तापेक्षैकपदानुवृत्तिर्घटत इति न तत्साधनक्षमा सेत्यर्थः । ननु तन्निमित्तत्वे तस्मिन् वर्तमाने वर्तमानार्थतत्पद-प्रयोगनियमः स्यात्, न तु 'आसीत्', 'भविष्यति' इति वा प्रयुज्येतेत्यनुपपत्तिः; वर्तमानमितिविषयत्वाभावनिश्चयेऽपि वर्तमानसत्तासंशयानुपपत्तिश्चेत्यत्राह— तयोपलक्षितेति । द्वेधा हि स्यान्निमित्तता विशेषणतयोपलक्षणतया च; तत्र विशेष-णत्व एवायं विरोधः; मितियोगयोग्यतोपलक्षणत्वेन तु मितिक्रियाया निमित्तत्व-मुक्तमिति नोक्तदोष इत्यर्थः । ननु वाच्याभिमतद्रव्याद्व्यतिरिक्तयोग्यताया विशेषण-

---

१. कारेऽप्येक. क.

योग्यता[1] तु न स्वरूपातिरिक्ता, स्वरूपमात्रे मितिदर्शनात्। सत्ताजातिमनुजानतापि स्वरूपमतिरिक्तमुपेयम्; अन्यथा सत्ताया नित्यत्वात् त्रैकाल्यव्यवस्था न स्यादिति[2] सत्ता सत्त्वपरद्रव्यत्वादेरपि स्वरूपसत्त्वमेव युक्तम्। ननु प्रतिस्वं स्वरूपभेदान्न मित्यर्हत्वमेकम्। तन्न; य[3]द्विधे हि द्रव्यगुणादौ मित्युत्पत्तिः, तत्सत्त्वमित्युपलक्षणोपाधिरेकः; अतस्तत्र सत्स्वरूपवस्त्वादिशब्दा[4] इति। ककारखकारादावप्येकाकारधीविरहाच्छब्दत्वजातिरप्ययुक्ता।

---

तथैव निमित्ततापत्तेर्नामान्तरेण सामान्यमेवोक्तं स्यादित्यत्राह—योग्यता तु न स्वरूपातिरिक्तेति। मितियोगप्रयोजकं हि रूपं तद्योग्यतेत्युच्यते; द्रव्यादिस्वरूपमात्रं च तदिति न तदतिरिक्ता योग्यतेति न सामान्याङ्गीकारापत्तिदोष इत्यर्थः। ननु न मितियोगोऽपि स्वरूपमात्रप्रयुक्तः, सर्वानुगतसत्ताप्रयुक्ततया एवोचितत्वादित्यत्राह—सत्ताजातिमनुजानतापीति। मितिप्रवृत्तिप्रयोजकरूपमेव हि मेयं स्यात्, न तदुपजीवि व्यवहार्यतया भानस्पृष्टमपि रूपं पृथङ्मेयतार्हम्; द्रव्यगुणजात्यादिस्वातन्त्र्यपारतन्त्र्यवत्तदपृथक्त्वोपपत्तेः न तत्तुल्यं द्रव्यमुपेयम्; सदा वर्तमानायाः सत्तायाः विपरीतभूतभविष्यद्रूपेण तद्भानासिद्धिप्रसङ्गादिति स्वतन्त्रभूततदनुवर्तिता सत्ताया एव द्वैतवादिभिरुपेयेति द्रव्यादिस्वरूपमात्रप्रयुक्तैव मित्युत्पत्तिरिति न तदन्या योग्यता; सत्तायां च पृथक्सच्छब्दस्य व्यवहारदर्शनात् तत्र च सामान्यनिमित्तत्वायोगात्तत्तुल्यतया सर्वस्यापि भासमानस्य स्वरूपमेव मितियोगात् सदुक्तिनिमित्तमुपेयमित्यर्थः। नन्वेवमेकशब्दानुवृत्तिरेकनिमित्तहीनैवोपेता स्यात्, मित्यर्हत्वस्याप्येकस्याप्यनुपगमादिति जात्युपगम एव न्याय्य इति चोदयति—ननु प्रतिस्वमिति। परिहरति—तन्न यद्विधे हीति। यद्यपि मानप्रसिद्धावस्थमेकं निमित्तं नास्ति; तथापि नानाभूतानामपि मानवृत्तिप्रतियोगित्वेन प्रतिसंहितानां सर्वेषां तद्रूपेण यत्नोत्थाप्यैकधीविषयतयान्योन्यानपेक्षाणामेव शब्दवाच्यत्वं सुग्रहम्; तदर्थोत्थाप्यैकधीरूपोपाधेः उपलक्षणत्वेन मेयावस्थानामेव वाच्यत्वग्रहादित्यर्थः। एवं सत्ताजातिं निरस्य तुल्यन्यायतया शब्दत्वजातिं निरस्यति—ककारखका-

---

१. तापि न. ख. २. दिति सत्वपरद्रव्यादे. क.

३. यद्विधेऽपि द्रव्य. ख. ४. शब्दार्थ इति, क.

शब्दपदानुवृत्तिस्तु श्रोत्रोत्थधीक्रियोपलक्षितयोग्यतात एव । तद्योग्यता तु केषांचिदेव तद्धीवेद्यत्वदर्शनात् स्थिता । शब्दत्वजातिमनुजानतापि केचिदेव जात्यन्वयिनो वाच्याः । 'ननु जातियोगः केषाम् ?' इति पृष्टो जात्युपलक्षणेनैव प्रतिवक्तीति युक्तम् । ब्राह्मणत्वादिजातिरप्ययुक्ता; न हि नानानरेषु नरत्वातिरिक्तं शूद्रादिनिवृत्तमनुगतमाकारमनुसन्दधाना धीरुदेति । ब्राह्मणादिशब्दानुवृत्तिस्तु सन्ततिविशेषजस्त्रीपुंव्यतिकरजन्मक्रियोपलक्षणा । सन्ततिविशेषास्तु

---

रादावपीति । नन्वस्मिन्नुदाहरणे व्यक्तैव प्रत्यभिज्ञा, किमिति प्रसिद्धवत्तदभावमात्रमुक्त्वा निराशङ्कमेव गम्यते ? उच्यते—ककारप्रत्यभिज्ञा तावद्व्यक्तिविषयेति न जातिविषयधीनिरासविरोधिनीति कवर्गप्रत्यभिज्ञापि न शब्दत्वधीनिषेधविरोधिनी, तस्य सर्वशब्दानुवृत्ततयेष्टत्वात् । तथापि जातिमात्रमनिवार्यमिति चेत्; न, अनुवृत्तस्य व्यावृत्तरूपत्वमानाभावे तज्जातित्वासिद्धेः । तेनैकवर्गानुगतांशस्य वर्गान्तरीयप्रथमद्वितीयाद्यनुगतांशस्य च संश्लिष्टानेकवर्ण इव संयोगमात्रमनुवृत्तधिया स्यात्, जातिप्रयोजकरूपासिद्धेः सहितावस्थस्य वर्णान्तरत्वं वेति निषेधबाधकं न किंचिदित्यभिप्रायः । एतच्च एकाकारधीविरहादित्याकाराकारित्वनिषेधेनोक्तमिति न कश्चिद्दोषः । शब्दशब्दानुवृत्तिहेतुं पूर्वोक्तविधयैवाह—शब्दपदानुवृत्तिस्त्विति । ननु श्रोत्रग्रहणयोग्यतात्मकमेकमिह निमित्तं नास्तीति कथमेकशब्दानुवृत्तिरित्यत्राह—तद्योग्यता त्विति । तद्ग्राह्यवर्णानामानन्त्याभावात् पृथक्पृथगेव योग्यतामवधार्य तदनुसन्धानपूर्वकः शब्दप्रयोगो नानुपपन्न इत्यर्थः । नन्वेवं बहूनां निमित्तत्वाश्रयणमेव दोष इत्यत्राह—शब्दत्वजातिमनुजानतापीति । जात्युपगमेऽपि तत्समवायप्रयोजकत्वेन तदाश्रयणं दुर्वारमिति तुल्यत्वान्न दोष इत्यर्थः । ननु तत्समवायप्रयोजकत्वेऽपि जातिवादिनो न तज्ज्ञानापेक्षा, शब्दप्रयोगनिमित्ततोपगमे तदपेक्षेति विशेष इत्यत्राह—ननु जातियोगः केषामिति । जात्युपगमेऽपि गवादिवत् सर्ववर्णानुवृत्ततया स्फुटदृष्टचभावाच्छब्दवृत्त्युन्नेयतया तद्व्युत्पत्तिः प्रत्येकप्रयोगमूलैवोपेयेति साम्यमित्यर्थः । ब्राह्मणत्वादिजात्युपगमोऽप्येवमेवायुक्त इत्याह—ब्राह्मणत्वादीति । न तच्छब्दानुवृत्तिनिमित्तासिद्धिरपीत्याह—ब्राह्मणादीति । तद्विशेषचिह्नमाह—सन्ततिविशेषास्त्विति ।

प्रत्येकं लोकत एवावधार्यः—एतज्जो ब्राह्मणशब्दवाच्यः—इत्येवं गृहीतसम्बन्धस्य ब्राह्मणपदप्रयोगो मूलभूतः। न तु ब्राह्मणशब्दवाच्यमातापितृजतया सम्बन्धग्रहो वाच्यः, मातापितृब्राह्मण्यस्य बहिर्भावे सर्वब्राह्मण्यानुपसंहारात्। नानासन्ततिष्वपि लोकप्रसिद्धितो गणत्वेन सम्बन्धग्रहणान्नानेकार्थता। अगणितोऽपि गणः सम्बन्धग्रहहेतुः आकृतिगण इव शब्दानाम्। जात्युपगमेपि कतिपयसन्ततिजतयावधृतब्राह्मण्यमातापितृजत्वधीपराधीनैव जातिधीरनुज्ञेया; अन्यथा हि मातापितृब्राह्मण्यधीव्यवस्था न स्यात्। एकवर्तिकावर्तिनीनां ज्वालानां जात्यन्तरं न युक्तं विना भेदभानात्। अतो भेदभानेऽप्येकाकार-

व्युत्पत्तिमात्रनिमित्तब्राह्मणादिपदप्रयोगः स्वविषयव्यक्तिजन्मव्यवधानेन सन्ततिविशेषावधारणचिह्नं स्यादिति स व्युत्पत्तिमूलः स्यादित्यर्थः। एकदेशिमतं निरस्यति—न तु ब्राह्मणशब्दवाच्येति। ननु स्वपक्षेऽपि सन्ततिविशेषाणां पृथगवधारणीयत्वात् सर्ववाच्यव्यापिव्युत्पत्तिः सकृदशक्येति तुल्यदोषतेत्याह — नानासन्ततिष्वपीति। स्वतः सर्वव्याप्येकोपाध्यग्रहेऽपि गणत्वेनोत्थापितैकधीस्थत्वापेक्षया व्युत्पत्तिः सकृन्नाशक्येत्यर्थः। ननु गणनोत्तरकालवर्तिभ्रंशशङ्कया सन्तत्यपेक्षयापि निश्चयो दुर्लभ इत्यत्राह—अगणितोऽपि गण इति। यद्यपि विशेषनिष्ठतया सन्ततिपरिगणनमेव नास्ति केषांचित्, तथापि कश्चिद्गण इत्येवमवगम्य तत्र शब्दशक्तिरिति ज्ञात्वा पश्चात्तदन्तर्भावावमर्शेनाकृतिगण इव व्युत्पन्नप्रयोगदर्शनात् तदा विशेषनिष्ठतया अवधारणसिद्धिः, गणितान्तर्भावसंशयनिवर्तकज्ञानान्तरापेक्षया तु व्युत्पत्त्यसिद्धिर्न शङ्कार्हेत्यर्थः। नन्वतिदुष्करत्वादस्य प्रकारस्य शब्दान्तरवज्जात्युपगमेनैवास्यापि व्युत्पत्तिर्लाघवाद्युक्तेत्याशङ्क्य जात्युपगमेनापि नेदं गौरवं सुवारमित्याह—जात्युपगमेऽपीति। गवादिवदितरव्यावृत्ततया स्वत एव तद्व्यक्त्यभावादुक्तोपायव्युत्पत्तिविषयार्थजन्यत्वधीव्यङ्ग्यैव जातिरुपेया, नेतरवद्व्युत्पत्त्युपयोगिनीति तदुपगमगौरवमेवापरिहार्यमित्यर्थः। पुनश्चान्यविषयवर्तिजात्युपगमं दूषयति—एकवर्तिकावर्तिनीनामिति। प्रकृतमुपसंहरति—अतो भेदभानेऽपीति। द्रव्यकल्पनायां जातिगुणोक्तदोषाभावस्य

१. ण्यस्यैबहि. ख. २. ग्रहान्ना. ख.

भानाज्जातिसिद्धेर्जातिकल्पना[1] संप्रयोगजैव। तथा गुणकल्पनापि, पृथग्ग्रहेऽपि जातिवत् भेदसिद्धेः। द्रव्यकल्पना[2]पि व्यक्तभेदत्वात् द्रव्यस्य तत्संप्रयोगजैव। नामकल्पनायां तु संज्ञाशब्दस्य स्मृत्यारोहेऽपि संज्ञिनस्तत्संप्रयोगजता न हेया। कर्मकल्पनायामनुमेयकर्मयुक्ते द्रव्ये तत्संप्रयोगजा धीः। न च द्रव्यमेवागन्तु क्षणिकत्वात्तत एव कर्मफलोत्पत्तेर्न कर्मानुमेति वाच्यम्, प्रत्यभिज्ञादार्ढ्यात् क्षणिकतानुमानादार्ढ्याच्चाक्षणिकतासिद्धेः। अतो भ्रमसंन्देहकल्पनादेरप्रकारान्तरत्वात् प्रकारद्वयमेव—प्रमाणं स्मृतिश्च प्रत्ययः—इति सिद्धम्॥ *

---

व्यक्तत्वात् सम्बन्धधीपूर्वकधीविशेषणसम्भवान्मानत्वसिद्धिरित्यत्राह—द्रव्यकल्पनापीति। नामकल्पनायां रूपस्य रूप्येकधीविषयत्वाभावेऽपि प्रधानस्य रूपिणः तत्संप्रयोगजैव धीरिति प्रत्यक्षत्वसिद्धिरित्यत्राह—नामकल्पनायां त्विति। कर्मकल्पनायामप्येवमेवेत्याह—कर्मकल्पनायामिति। ननु कर्मणः स्वरूपेणाप्यसिद्धत्वात् न नामकल्पनासाम्यमिति बौद्धमतक्षणभङ्गित्वानुवृत्तिनीं शङ्कां निरस्यति—न च द्रव्यमेवागन्त्विति। स्वरूपतस्तावदितरसविकल्पकप्रत्यक्षापेक्षया दौर्बल्यं नास्ति, कारणं तु सर्वत्र कार्यबलोन्नेयम्; तदिहापि यथार्हं कल्प्यम्। न च क्षणिकानुमानबाध्यत्वादमानत्वम्, एकस्य क्रमवदनेककार्यकरत्वासम्भवस्य क्षणिकत्वहेतोः सहकारिसन्निधिक्रमापेक्षया सक्रमकानेककार्यकरत्वसमर्थनेन निराकरिष्यमाणत्वात् बाधकानुमानासिद्धेरित्यर्थः। एवं च प्रत्ययस्य द्वैविध्याभिधानमपि समर्थितमित्याह अतो भ्रमसन्देहादेरप्रकारान्तरत्वादिति।

---

१. ना तत्सं. क. २. नाद्रिव्य. क.
३. Omitted. कर्म. क. ४. Omitted. कल्पना. क.

* प्रातः प्रातः समुत्थाय द्वौ मुनी कुंभमंभसा।
अत्र क्रियापदं वक्तुं दत्तः षाण्मासिकोऽवधिः॥ ख.

"अत्र चोत्तराधिकरणारम्भस्याधस्तात् जगदण्डकबलीकरणकृतोद्यमतिमिरततिविशारदकिरणमालिना भगवता सहस्रकिरणेन कुन्तिभोजसुताराधनप्रसन्नेन तदर्थदत्तवररूपसुतस्य गगनविशेषगुणानुभावककरणस्येन्द्रियस्य गुणविशेषो द्रष्टव्यः" इति मातृकायाम्।

## योगाचारमतम्

"ननु" । संप्रति बाह्यार्थापह्नवेनार्थसंप्रयोगाभावात्तत्संप्रयोगजत्वाक्षेप इति संगतिः । पूर्वपक्षस्तु--स्वप्ने तावत् स्मृतित्वमशक्यम्, संस्कारोद्बोधहेतोः सदृशचिन्तादेर्दृष्टस्याभावात्; अचिन्तितेऽपि क्वचित् स्वप्नोत्पत्तेः । न चादृष्टमुद्बोधकं कल्प्यम्; क्लृप्तेनैवोपपादयितुं स्मृतिप्रमोषप्रकारोऽङ्गीकृत; स्वप्ने चेन्न तथा, तद्वरं वासनात एवार्थाकारः स्वप्नोदयः; प्रबोधे बाह्यार्थं प्रति बाधोदयान्नार्थहेतुकता। एवं च जाग्रद्बोधोऽपि वासनात एव; एकहेतुकत्वं हि लाघवाद्युक्तम् । अर्थस्य च स्वप्ने बाधितत्वादव्यापिता, वासनायास्तु न बाध इति सैव सर्वधीहेतुः । वासना [2]चानादिव्यामोहधीसन्ततिरेवेति नातीव तत्कल्पनापि । न च संविदद्वैतविरोधः । तदुक्तम्—

"ननु सर्व एव निरालम्बनः प्रत्ययः" इति, प्रत्यक्षव्यभिचाराशङ्कापरिहारे कृते, किमभिप्राय आक्षेप इत्यत्राह—संप्रति बाह्यार्थेति । उक्तहेतुविषयोऽयमाक्षेपः, न तदभ्युपगमेनार्थान्तरविषय इत्यानन्तर्यसिद्धिः । स्वप्नदृष्टान्तेन बाह्यार्थापह्नवमात्रार्थत्वे बलवत्प्रत्यक्षसमर्थनानन्तरमनुमानानवतारादनुपपत्तिरित्यर्थः । ननु उक्ताक्षेपाभिप्रायेणापि प्रत्यक्षबाधितेऽनुमानानवतारात्तुल्यैवानुपपत्तिरित्याशङ्क्य पूर्वपक्षसमर्थनार्थमाह—पूर्वपक्षस्त्विति । स्वप्नदृष्टान्तेन जागरिताभावानुमानविवक्षायामियमनुपपत्तिः; यथोक्तस्मृतिकारणनिषेधेन स्मृतित्वनिरासविधया वासनामात्रकारणत्वं स्वप्नस्यापाद्य जाग्रद्धियोऽपि लाघवात्तन्मात्रजत्वप्रसाधनेनार्थात् बाह्यार्थापह्नवः क्रियत इति न पूर्वपक्षानुपपत्तिरित्यर्थः । नन्वदृष्टस्य स्मृतिहेतुत्वं तत्कल्पनादोषेणापह्नुत्य वासनाकल्पनाश्रयणे गौरवसाम्यमित्याशङ्क्य विशेषमाह--वासना चानादीति । धीकार्यतयैव तावद्वासनेष्यते; नादृष्टवद्विहितनिषिद्धजन्यतया; तेन धीसन्तत्यतिरेको वासनाया नावश्यंभावी, कार्यनिरूप्यत्वाद्वासनायाः; तस्या एव तत्करत्वेन वासनात्वाविरोधादित्यनुभवसिद्धधिय एव स्वतुल्यकार्यकरत्वमात्रपरत्वं तत्पक्षे कल्प्यम्, न स्वरूपमपीति विशेषः; संविदद्वैताभ्युपगमहानिश्च नेति न कश्चिद्दोष इत्यर्थः । तद्भेदोक्तिश्च कार्यकारणमात्रापेक्षैव, न स्वरूपभेदापेक्षेत्याह--तदुक्तमिति । एवं च भाष्योक्तिमात्रवीक्षणेन

१. जाग्रत्प्रबोध. क. २. Omitted. च. ख.

"वासनातो व्यामोहः, व्यामोहाद्वासना बीजाङ्कुरवत्" इति । एवं च सर्वधीकार्यात्लघुनि कारणे वासनाख्येऽनुमानमिदम्; न तु प्रत्ययत्वादित्येवम्, येनानैकान्तिकताद्युद्भावनं स्यात् ।

### योगाचारमतखण्डनम्

राद्धान्तस्तु–यथाकार्यं हि कारणानुमानम्; स्वप्नधीकार्यं च बहिरर्थभानरूपमर्थमेव यथासम्भवं हेतुतयाऽनुमापयति, न वासनाम् । न चार्थे बाधः, स्मृतित्वात् स्वप्नस्य । न चादृष्टकल्पनादोषः, सुखदुःखहेतुतयाऽदृष्टस्य क्लृप्तत्वात् । स्वप्ने च सुखदुःखोदयात् क्लृप्तमेवादृष्टम्, स्वल्पकालान्तरितापि चिन्तोद्बोधहेतुः दृष्टेति, यत्र तथा, तत्र चिन्तैव हेतुः । स्वप्ने च स्मृतीनामेव 'तत्' इत्यग्रहान्मिथ्यात्वम् । भाष्ये च "सुपरिनिश्चिता बुद्धिः कथं विपर्यसिष्यति" इति बुद्धेरविपर्ययोक्त्या विवेकाग्रह एव मिथ्यात्वमुक्तम् । एवं जाग्रत्स्वप्नधीषु सर्वत्र बाह्यार्थसिद्धेर्युक्तं तत्संप्रयोगजतया प्रत्यक्षलक्षणम् ॥

---

स्वप्नदृष्टान्तेनासद्विषयत्वं जाग्रद्धियोऽनुमेयमित्याश्रित्य तद्दूषणं परापादितमपास्तमित्याह—एवं च सर्वधीकार्यल्लघुनीति । अनुमानबुद्धेर्यथार्थत्वाङ्गीकारादनैकान्तिकत्वम्; स्वप्नधियोऽपि स्वरूपतः स्मृतिभेदत्वात् सविषयतेति साध्यविकलतापीत्यर्थः ।

सिद्धान्तमाह—राद्धान्तस्त्विति । न जाग्रद्धियो वासनाकार्यत्वं लाघवादाश्रयणीयम्, कार्यानुरूपस्यैव लाघवस्योपेयत्वात् । बाह्यार्थावभासित्वाच्च कार्यस्य तदनुरोधात् गौरवेऽप्यर्थ एव कारणं युक्तम् । न च गौरवम्, स्वप्नस्यापि बाह्यार्थावभासित्वाविशेषात् व्यवधानेनाप्यर्थस्यैव कारणत्वाङ्गीकारादित्यर्थः । न चैवं बाधकाननुरोधोऽपीत्याह–न चार्थे बाध इति । स्वप्नस्यानुभूतित्वमात्रं तद्बाध्यते, नार्थविषयत्वम्; तच्च नाङ्गीक्रियते स्मृतित्वादित्यर्थः । न चैवं संस्कारोद्बोधकादृष्टकल्पनापत्तेस्तदाश्रयणम्, सुखादिहेतुतया तस्य स्वत एव क्लृप्तत्वादित्याह—न चादृष्टकल्पनेति । न च सर्वत्र तदुद्बोधकत्वाङ्गीकारोऽपीत्याह–स्वल्पकालान्तरितेति । नन्वेवं मिथ्यात्वप्रसिद्धिविरोध इत्यत्राह–स्वप्ने च स्मृतीनामेवेति । तदंशहीनत्वादनुभवसाम्यादनुभवव्यवहारफलत्वात् तद्बाधादेव मिथ्यात्वप्रसिद्धिः, नार्थबाधादित्यर्थः । भाष्योक्तं चात्राग्रहस्य मिथ्यात्वप्रयोजकत्वमित्याह–भाष्ये चेति । एवं लक्षणांशः समर्थित इत्याह–एवं जाग्रत्स्वप्नेति ।

बाह्यार्थशून्यतावादः

"शून्यस्तु"। स्वप्नद्वारके बाह्यार्थाक्षेपे समाहितेऽपि युक्त्यन्तरेण पुनराक्षेपसमाधानाभ्यां वादान्तरं संगतमवान्तरसंगतं च। प्रत्ययप्रक्रमात्तस्यैवार्थशून्यतोक्ता, न तु ज्ञानस्याप्यभावाच्छून्यता माध्यमिकमतोक्ता। योगाचारयुक्तितो हि बाह्यार्थापह्नवे सति माध्यमिकमतं तद्युक्तिबाधाद्बाध्यत इति न पृथङ्निरासः। अत्र च ग्राह्यग्राहकयोः संविदन्तर्भावादद्वैतमनेन क्रमेण ग्राहकं ग्राह्येऽन्तर्भूतम्, ग्राह्यं तु संविदि इति। तथा हि—ग्राह्यं संविदः संम्बद्धमेव युक्तम्; अन्यथा ग्राह्यव्यवस्था न स्यात्। सम्बन्धिता च

"शून्यस्तु"। वादान्तरप्रतिपाद्यार्थविवेकमुखेन सङ्गतिद्वयमाह—स्वप्नद्वारक इति। ननु नोक्तस्यैवार्थस्य हेत्वन्तरोत्थाक्षेपसमर्थनार्थत्वमस्य युक्तम्; क्रमप्राप्तमाध्यमिकमतनिरासार्थतैव युक्ता; अन्यथा तदनिषेधप्रसङ्गादित्याह—प्रत्ययप्रक्रमात्तस्येति। शून्यशब्दस्य विशेष्यापेक्षत्वात् प्रत्ययस्य च प्रकृतत्वात् तस्यैवार्थशून्यता ग्रन्थसामर्थ्यादवसीयते। न च तस्याप्यभावः। न च तन्मतं निषेध्यमस्माभिः, योगाचारमतनिरासेनैव तत्पूर्वकप्रसक्तेस्तस्य निराससिद्धेरित्यर्थः। ननु यथासमर्थितप्रत्यक्षाविरोधान्नास्ति युक्त्यन्तरमुक्ताक्षेपक्षममित्याशङ्क्य पूर्वपक्षमुपपादयति—अत्र च ग्राह्यग्राहकयोरिति। ननु द्वयोः संविदभेदे युक्तिसाध्ये ग्रन्थस्थमन्योन्याभेदसाधनमनर्थकमिति शङ्कानिरासार्थमुक्तम्—अनेन क्रमेणेति। संविदभेदोक्तिक्रममात्रं तदित्यर्थः। तमेव क्रममाह—ग्राहकं ग्राह्य इति। तत्क्रमसमर्थनार्थमाह—तथाहीति। यद्यपि संविदपेक्षया ग्राह्यस्यात्यन्तभेदः प्रतीयते; तथापि स नाभ्युपेयः, ग्राह्यग्राहकव्यवस्थानुपपत्तेः। तेनावश्याभ्युपेये सम्बन्धे ग्राहकस्य तत्संप्रतिपत्तेः तदभेद एव ग्राह्यप्रतिपन्नस्याप्याश्रयणीय इति संविदभेदद्वारतया ग्राहकाभेदोक्तिर्विवक्षितेत्यर्थः। नन्वित्थं ग्राह्यस्य ग्राहकेऽन्तर्भाव उक्तः, किमिति प्राक् "ग्राहकं ग्राह्येऽन्तर्भूतम्" इति प्रक्रान्तम्? उच्यते—यद्यपि सम्बन्धप्रसाधने ग्राहकस्यान्तरङ्गत्वात् ग्राह्यस्य तदन्तर्भाव उच्यते, तथापि संवित्स्वरूपव्यावर्तकतया तत्प्रकाशकतया ग्राह्यमेवान्तरङ्गतयावशिष्यते; तत्प्रलीनमेव ग्राहकम्, तस्य सर्वसाधारणत्वात्; तदवशेषे च सौगतपक्षप्रतिक्षेपः स्यादिति

१. सम्बन्ध. क. ख.

ग्राहकस्य, ग्राहकता चात्मनो मनसो वा मतभेदत , युक्तिस्तु नोभयोरपि, किंतूभयसन्निकर्षस्य, तस्यैवाव्यभिचारिणस्तादात्म्यादाश्रयत्वसम्भवाद् ग्राहकत्वमिति ग्राहकमेव ग्राह्यम् । संविच्च प्रत्यक्षोपेया, साकारं च प्रत्यक्षम् । एकश्चायं [1]ग्राह्यभूत आकारः संविद एव युक्तः । न च वाच्यं यथाऽऽश्रयत्वमसत्यपि सम्बन्धान्तरे व्यवस्थितम् , तथा [2]ग्राह्यता अनाश्रयाऽस्त्विह; स्पष्टे हि

---

स्वपक्षानुगुणत्वात पूर्वोक्त एवान्तर्भावक्रमो विवक्षितः । सम्बन्धसंप्रतिपत्त्यापादन-सौकर्यात्त्वन्याभिधानमभेदमात्रविवक्षयेति मन्तव्यम् । ननु ग्रन्थेऽन्तर्भावोक्तावात्म-बुद्धिज्ञानानामव्यवस्थाभिधाने कोऽभिप्राय इत्यपेक्षां परिहरन्नभेदावसाय्यन्तर्भाव इति प्रतिवाद्यभ्युपगमापेक्षया तत्संवादापादनार्थमात्मनादिसंकीर्तनम्; स्वाभिप्रायेण तु संविद्व्यभिचार्यमिमतात्ममनोऽपह्नवेन तद्वदन्याभिमतनिलिलतावस्थान्तर्भावो ज्ञान एवेत्युच्यते इत्याह - ग्राहकता चात्मन इति । उपसंहरति --इति ग्राहकमेव ग्राह्यमिति । एवं ज्ञानाभेदसिद्धावपि कथं संविदद्वैतसिद्धिरित्यत्राह—संविच्च प्रत्यक्षेति । यद्यप्रकाशमाना संवित् विषयावभासिनी स्यात्, तदा बाह्यार्थः प्रत्यक्षो भवेत्; प्रकाशमानैव तु सोपेयेत्यर्थः । तथापि कथमर्थस्याप्रत्यक्षत्वमित्यत्राह—साकारं चेति । इतरव्यावृत्तरूपेणैव वस्तुनः प्रत्यक्षत्वात् निराकारत्वे च तदयोगात् व्यावर्तकाकाराभिन्नमेव तदर्हम्, भेदेऽतत्स्पृष्टस्य तद्व्यावर्तकत्वासिद्धेरित्यर्थः । ततः किमित्यत्राह - एकश्चायमिति । प्रत्यक्षत्वे संविदोऽर्थस्यापि तदुपगमे तदाकारोऽन्यः प्रथेत, तन्निवृत्तिरर्थस्याप्रत्यक्षत्वमेवापादयेदित्यर्थः ।

एवं संविदाश्रयतया परोपगतात्मादेः ग्राह्यतापादनेन संविदभेद उक्ते तदुपगताश्रयत्ववदेव ग्राह्यत्वमपि सम्बन्धान्तरानपेक्षं वस्तुस्वभावमात्रेणैव व्यवस्थित मित्याश्रीयताम्; ततो यथाप्रतीति बाह्यमेव ग्राह्यमस्त्विति तदीयाशङ्कां निवर्तयति-न च वाच्यमित्यादिना । तत्र हेतुः—स्पष्टे हीति । संविच्च प्रत्यक्षोपेया, साकारं च प्रत्यक्षमित्युक्तयुक्त्या प्रतीताकारस्य संविन्निवेशोऽवश्यंभाविनि तद्बाह्यस्याकारान्तरं विना भानासिद्धेर्ग्राहकस्यापि संविदन्यत्वं दुर्लभमेवेति तद्दृष्टान्तबलेन ग्राह्यस्यान्यत्वाप्रसिद्धेः द्वयोरपि संविदैक्यमेवापतेत्; यदि पुनराकारान्तरस्य स्पष्टतया

---

१. बाह्यभूत. २. ग्राह्यस्यानाश्रयास्तीति. क.

ग्राहकस्याकारान्तरे तद्बलादसम्बन्धेऽपि ग्राह्यता युक्ता। इह त्वेक एव नीलाद्याकारः; स चेत्संविदि निवेशितः, अपह्नुते तर्हि ग्राह्यग्राहके। अयं भावः—व्यवहारानुगुणं हि वस्तुसंवित्; सैव प्रकाशः; तदन्यज्जगज्जडम्, तदधीनव्यवहारात्। तद्यदि प्रकाशोऽपि पराधीनव्यवहारः; तदा सोऽपि जड एव स्यादिति व्यवहारानर्हं जगदन्धं स्यात्। अथार्थं प्रति प्रकाशता संविदः, न स्वं प्रति; तन्न, प्रकाशस्वभावताहानात्। न च अर्थीकर्मतया संविदो न

---

ग्राहकस्यान्यत्वं स्फुटं स्यात्, तदा दृष्टान्तबलात् त्वदुक्तं संभवेत्; तदभावे तु न स्यादित्यर्थः। ननु संवित् प्रत्यक्षोपेयेत्येतदसिद्धम्; स्वोत्पत्तिमात्रेणैव सा विषयव्यवहारहेतुतया तत्प्रमाणम्, नावगता; स्वयं तु पश्चात्संविदन्तरेण विषयवदेव प्रकाशत इति कथमाकारान्तरविरहादबाह्यार्थापह्नव इति शङ्कमानं प्रत्युक्ताभिप्रायं विवृणोति - अयं भाव इति। विषयव्यवहारफलमात्रमेव तावत्संविदो वस्त्वन्तरव्यावर्तकं रूपम्। न च विषयाश्रयः प्रकाश एव व्यवहारफलकः, नात्माश्रया संविदिति शङ्कनीयम्; प्रकाशपदस्य संविदर्थत्वाद्विषयाश्रितत्वं नास्ति, प्रकाशस्यातीतादेरपि प्रकाशाविवादात् असतश्चाश्रयत्वायोगात् 'अहं जाने' 'मम प्रकाशते' इति नियतोक्तिदर्शनाच्च। तस्माद्यथा करोत्यर्थकर्मैव ततोऽपनीय 'जायते' इति तत्क्रियासम्बन्धमेव स्वतन्त्रं नीत्वा धातुशक्तिमात्रात् कर्तृतयोच्यते प्रागसतो जन्मक्रियाश्रयत्वाभावनिश्चयात्, तथा धातुशक्तिमात्रेण संवित्कर्मैव 'प्रकाशते' इति कर्तृतयोच्यत इत्यवगन्तव्यम्। तेन संविदोऽसाधारणो धर्मो व्यवहारानुगुणत्वम्, तदन्यत्सर्वं तदधीनव्यवहारं जडमिति जडप्रकाशविभागः। तत्र संविदोऽपि इतरवत्पराधीनव्यवहारत्वोपगमे प्रकाशत्वविपरीतप्रसिद्धजडतापत्तेः तदपेक्षयाप्यन्यस्य व्यवहारालाभात् सर्वदा सुषुप्तावस्थैव स्यादिति संविदपेक्षया तन्निवृत्तिप्रसिद्धेरनन्याधीनप्रकाशैव संविदुपेयेत्यर्थः। ननु विषयव्यवहारार्हत्वं संविद इतरव्यतिरेकि रूपम्, न स्वव्यवहारार्हत्वमिति स्वव्यवहारेऽन्याधीनेऽपि न प्रकाशस्वभावत्वहानिरिति शङ्कते—अथार्थं प्रतीति। परिहरति—तन्न प्रकाशस्वभावतेति। विषयतन्त्रत्वे स्वभावत्वप्रच्युतेर्विषयतुल्यत्वापत्तेः अन्योन्यापेक्षयेव विषयाणां संविदपेक्षयापि

---

१. न चेत्. क.

सिद्धिरिति वाच्यम्; धीकर्म सिद्ध्यति—इत्यनुजानता धीत्वेनापि सिद्धिरुपेतैवेति धीस्तत्कर्म चोभयं सिद्धम्; किन्तु धीः प्रकाशस्वभावा स्वरूपवती वाच्या, निःस्वरूपस्याभानात्; स्वरूपं च नीलाद्यतिरिक्तं न निरूप्यते इति नीलाद्याकारैव संवित्।

धर्मकीर्तिप्रयुक्तं हेतुत्रयं तन्निरासश्च

यत्तु कीर्तेर्हेतुत्रयम्, तन्मन्दमिति गुरुणा नोपन्यस्तम्। तथा हि—निराकारापि धीर्नीलादिव्यवहारानुगुणतया 'नीलधीः, पीतधीः' इति व्यवस्थामर्हति, सहोपलम्भनियमस्तूपलभ्य[1]योरभेदसाधनम्, नोपलम्भोपलभ्ययोः; जडस्य प्रकाशात्मकता नेष्टा। प्रकाशसम्बन्धिता तु जडस्यैव भि[2]न्नस्य युक्ता।

व्यवहारार्हता न स्यादिति स्वाभाविकरूपापेक्षया तदर्हत्वार्थं स्वाभाविकमेव संविदः प्रकाशत्वम्, विषया आविश्य प्रकाशन्त इति प्रकाशमानस्वभावैव सोपेयेत्यर्थः। ननु संवित्कर्मत्वमेव प्रकाशमानत्वं विषयेषु प्रसिद्धमिति संविदोऽपि तदेव तत्स्वरूपमिति व्यक्तैव संविदन्तरापेक्षेति शङ्कां निरस्यति—न चाधीकर्मतयेति। यदा हि संवित्कर्म 'प्रकाशते' इत्यवधार्यते, तदा स्वरूपमात्रं व्यवच्छिन्नमिति संविदुपाधिकमेव तस्य प्रकाशमानत्वमिति तस्यास्तदसत्त्वे ततोऽपि तल्लाभायोगात् तस्याः स्वाभाविकं तदवधृतमेवेति न तदर्थमन्यापेक्षा स्यादित्यर्थः। नन्वेवं स्वतः परतश्चोभयोरपि प्रकाशलाभात् कथं तद्विषयापलापसम्भव इत्याशङ्क्य तदभिप्रायमाह—किन्तु धीः प्रकाशस्वभावेति। न तावत्प्रातिस्विकरूपहीनैव प्रकाशस्वभावा धीरित्याश्रयणीयम्, क्वचित्तत्प्रसिद्ध्यभावात्; तच्च नीलादिव्यतिरिक्तं नोपलभ्यत इति तदभिन्नैव सा, भेदे तद्रूपत्वासिद्धेः नीलपीतयोरिवान्योन्यम्—इत्येवं रूपान्तरभानात्तद्विषयासिद्धिरित्यर्थः।

एवं संवित्प्रकाशान्यथानुपपत्तियुक्त्या कीर्त्युक्तयुक्त्यनादरेण संविदद्वैतं साधयतोऽभिप्रायोचितमुखेनत द्युक्तिदोषमुद्भावयति—यत्तु कीर्तेर्हेतुत्रयमिति। प्रतिकर्मव्यवस्था तावन्निराकारायाः प्रकाशसम्भवे तत्स्वभावाधीनार्थविशेषव्यवहारार्हतामात्रेणापि घटत इति नाभेदसाधनसमर्था; सहोपलम्भनियमस्य भेदव्यावृत्तिश्चोय-

१. भ्ययोरसा क. २. भिन्नता युक्ता क. ख.

यत्तु सौत्रान्तिकवैभाषिकनये धियः साकारतां मुक्त्वापि यद्बाह्यं साधितम्, तदपि मन्दम्; नानाभूतसमनन्तरप्रत्ययेभ्य एव नानाविधज्ञानोदयदर्शनात् बाह्यहेतूपगमो न युक्तः ॥

बाह्यशून्यवादनिरासः

राद्धान्तस्तु — सत्यं संवित्प्रकाशरूपा, न तु नीलाद्याकारा; तदाकारत्वे प्रकाश्यत्वापत्तेः प्रकाशताहानिः स्यात्। यथा च नीलादिकं स्वरूपम्, तथा संविदपि स्वरूपमिति तद्भानं युक्तम्। भानं हि संविदेव तत्त्वतः। सैव नीलादेरिति नीलादेर्भानमुच्यते। सा च यद्यप्यान्तरी 'इदम्'

---

लभ्यविषये दृष्टा नोपलम्भोपलभ्यगतभेदाभावसाधनसमर्था; जडस्य प्रकाशानुपपत्तिश्च तादात्म्यापेक्षया, न सम्बन्धापेक्षया; सम्बन्धापेक्षया च विपरीतहेतुर्जडत्वमिति युक्तस्तदनादर इत्यर्थः। न चोक्तयुक्त्या साकारत्वमात्रसिद्धावपि वैभाषिकसौत्रान्तिकमतानुसारेण प्रत्यक्षेणानुमानेन वा बाह्यार्थसिद्धेर्न संविदद्वैतसिद्धिरिति शङ्कनीयम्, तत्तद्वासनात्मकानन्तरदृष्टसमनन्तरप्रत्ययकारणतयैव संविदुत्पत्त्युपपत्तौ तदुपगमायोगादित्याह—यत्तु सौत्रान्तिकेति ॥

एवं पूर्वपक्षं संबोध्य सिद्धान्तमाह—राद्धान्तस्तु सत्यमिति। प्रकाशस्वभावत्वमङ्गीक्रियत एव; तथापि नीलाद्याकारता संविदो न स्यात्, प्रकाश्यावगततदैक्ये तत्त्वापत्तेः प्रकाशत्वस्फुरणविरोधाद्यथावभासं भेदानपायात्। न च तदभेदाभावे निःस्वरूपत्वापत्तिरपीत्याह—यथा च नीलादिकं स्वरूपमिति। नीलाद्यनपेक्षैव संविद् व्यवहारे स्फुरणे चानर्हेति हि तत्स्वरूपमित्युच्यते; तद्द्वयोस्तुल्यम्; न हि तदपि तदनपेक्षमेव द्वयार्हम्; व्यावृत्तत्वं विजातीयापेक्षया द्वयोरप्यस्ति; सजातीयापेक्षया न निर्देशार्हम्; स्वरूपतस्तु तुल्यमेव सत्त्वमिति भानार्हतापि तुल्यैवेत्यर्थः। ननु संविदो नीलाद्यन्यस्वरूपोपगमेन तत्तुल्यभानयोगोपगमे तत्तुल्यप्रकाश्यतापत्त्या प्रकाशत्वहानिस्तुल्या; प्रकाशाश्रयत्वं तु प्रागेवापास्तमिति न तन्निर्वाह इत्याशङ्क्य भानस्य संविदन्यत्वे ह्ययमनिर्वाहः, तस्य त्वौपाधिकत्वात्तत्त्वतोऽनन्यत्वान्नानिर्वाह इति परिहरति—भानं हीति। औपाधिकत्वेन तन्निर्वाहं वक्तुं तदुपाधिं तावदाह— सैवेति। संविदेव नीलादिसम्बन्धोपाधेः 'नीलादिभानम्' इत्यपि वचनार्हेति न 'भाति' इति समानाधिकरणोक्तिमात्रेणान्यत्वापत्तिरित्यर्थः। ननु नाना-

इत्यनिर्देशात्, तथापि सा स्वभावाद् बाह्यनीलादिव्यवहारानुगुणत्वान्नीलादि-भानमित्युच्यते; न तु नीलाद्याश्रितोऽसौ धर्मः, अतीतानागतनीलादेरपि भानोपगमात्। यत्र च भाने नीलादि साक्षात्कारव्यवहारादि भजते, तत्र नीलादि संवेद्यतया प्रत्यक्षम्; संविद्धेतुश्च ज्ञानं न नीलादिभानारूढमिति तदनु-मेयं प्रमेयमात्रम्, न संवेद्यम्। निरावरणं स्वलक्षणं ज्ञानारूढं संवेद्यम्, दूरात्

---

देशवर्तिनोः संविदर्थयोः सम्बन्ध एव न स्यादिति संविदोऽप्यर्थाभेदोपगमेनैव भानै-क्याहंतेत्याशङ्क्य तत्पक्षे सर्वव्यवस्थापकभूतप्रतीतिबाधापत्तेः निर्मूलैव तद्व्यवस्थेति यथाप्रतीति स्वहेतुव्यवस्थितसंवित्स्वभावादेव नियतबाह्यव्यवहारानुगुणतया बाह्य-सम्बन्धोपगमेनैव तद्गतिर्निर्णयः; तदा च स्वव्यवहारानुगुणतया प्रकाश्यत्वनिवृत्ति-सिद्धेर्यथाप्रतीति सर्वनिर्वाहः स्यादिति परिहरति—सा च यद्यपीति। नन्वर्थस्य बाह्यत्वे सति भानोक्तेरपि मुख्यत्वार्थं संविदोऽन्यदेव भानमुपेयमित्याशङ्क्य अवर्तमान-भानोक्त्यनुगतमेव तन्निमित्तमुपेयम्, तदुक्तेरमुख्यत्वप्रसिद्ध्यभावादिति परि-हरति—न तु नीलादीति। ननु संविदधीनव्यवहारभाक्त्वमात्रे तद्विषयत्वेऽर्थस्यापि तद्विषयत्वार्थं संविद इवाकारापेक्षा न स्यात्; ततश्च भाष्यकारीयस्तदङ्गीकारो मिथ्या स्यात्; ज्ञानस्यानुमेयत्वाङ्गीकारेण तत्र तदनपेक्षोक्तिश्च बाध्येत; तेनोक्त-गतिर्भाष्याननुमतेति शङ्कां निवर्तयति—यत्र च भान इति। सर्वप्रमाणसाधारण-फलस्याकारानपेक्षत्वेऽपि क्वचित्साक्षात्कारविशेषणयुक्तं भानमर्थे स्वफलकरमिति फलेऽपि तद्विशेषणानुवृत्तेः साधारणफलनिरूप्यवेद्यत्वमपि तत्र सम्यगेव भातीत्यर्थ-स्यापि तत्र ज्ञानवाचिप्रत्यक्षव्यपदेशप्रसिद्धिरित्यव्यवधानेनार्थस्य संविदवच्छेद-कत्वात् अस्त्येव तत्राकारोपयोगः; अनुमेयत्वोपगमेनाकारानपेक्षोक्तिस्तु संविद्धेतु-विषया, तस्य साक्षाद्भानाभावादिति न भाष्यविरोध इत्यर्थः। किमात्मकं तर्हि तद्वेद्यानुवृत्तिसम्यक्त्वमित्यत्राह—निरावरणमिति। अनुमेयाद्यर्थस्य सत्ताभि-व्यक्त्यावरणमुपाधिर्लिङ्गादेः व्याप्तिपक्षधर्मत्वादिरित्यसम्यक्त्वं तद्व्यक्तेः सर्वत्र; प्रत्यक्षे तद्विरहात संविदवच्छेदकोऽर्थे व्यवहार्यत्वमात्रमितरत्रेति। अव्यवच्छेदः संशब्दार्थः प्रत्यक्षे विवक्षित इत्यङ्गीकुर्वतो यद्दूषणम्—दूरात्सामान्यमात्रं प्रत्यक्षं न स्यादिति, तदुक्तप्रकारे न प्रसक्तमित्याह—दूरात्सामान्यमात्रमपीति। प्रत्य-

सामान्यमा[1]त्रमपि तथेति संवेद्यमेव। तदेवं प्रत्यक्षेऽर्थे साक्षा[2]त्कारः; धीस्त्वतिरोहितस्वलक्षण[3]भाना सर्वत्रैव साक्षात्कारवती प्रत्यक्षा, तथा ज्ञाततापीति वक्ष्यते।

ज्ञानानुमेयत्वनिराकरणम्, प्राकट्यनिरासश्च

न च संविदनुमेया, लिङ्गाभावात्। नार्थमात्रं लिङ्गम्, व्यभिचारात्। न च ज्ञातताविशिष्टम्, विशेषणस्याज्ञानारूढत्वे विशिष्टस्यालिङ्गत्वात्; ज्ञानारूढत्वे गम्याभावात्। न चार्थधर्मः प्राकट्यं लिङ्गम्, अतीताना-ग[5]तार्थधर्मत्वानुपपत्तेः। किञ्च, तत्प्राकट्यं स्वप्रकाशं चेत्, नामान्तरेण धीरेव; नापरं गम्यम्। अथ तदन्यत् प्रकाश्यम्, तदार्थवत् प्राकट्यान्तरापेक्षेति प्राकट्यानन्त्यप्रसङ्गः। यच्च प्राक[6]ट्येऽर्थधर्मे दूषणम्, तदभावोद्धारेऽप्यर्थधर्मे तुल्यम्; नामान्तरेण चाभावोद्धारो धीरेवोक्ता। न च

---

क्षस्य कारणविशेषनिरूप्यमितरवैलक्षण्यं वाद्यन्तराङ्गीकृतमनादृत्य प्रतिभासगत-वैलक्षण्यमङ्गीकुर्वतोऽभिप्रायमाह—तदेवं प्रत्यक्षेऽर्थ इति। चित्यात्मनोः सर्वधीषु प्रत्यक्षत्वं विवक्षितमिति ज्ञानानुमानोक्तेः परोक्तं संविदप्रत्यक्षत्वाभिप्रायं दूषयति—न च संविदनुमेयेति। प्राकट्यमङ्गीकृत्यापि दूषयति—किंचेत्यादिना। प्रकाशमानमेव हि तत्संविदनुमापकमुपेयम्; तदन्यानपेक्षमेव प्रकाशत इत्यङ्गीकारे-अनुमात्रनवमृष्टस्य लिङ्गत्वासम्भवात्-तत्प्रकाशार्हधीरेवोपेता स्यादित्यनुमेयासिद्ध्या-पत्तिः; तत्प्रकाशार्थमन्यापेक्षायामनवस्थापत्त्या संविदनुमानासिद्धेः यथोक्तैव भाष्यगतिरुपेयेत्यर्थः। मतान्तरमप्युक्तन्यायेन निरस्तमित्याह—यच्च प्राकट्येऽर्थधर्म इति। 'नामान्तरेण च' इति प्राकट्ये 'किंच' इत्युक्तं दूषणं स्पष्टार्थं पृथगुक्तमिति द्रष्टव्यम्। विप्रतिपन्नप्राकट्यादिकार्यलिङ्गदूषणं संप्रतिपन्नचेष्टादिकार्येऽपि तुल्य-मेव, तथापि दूषणान्तरविवक्षया तस्य लिङ्गत्वमाशङ्क्य तदुक्त्या दूषयति—न च स्वचेष्टादिरेवेति। न तावत्साक्षादेव चेष्टाहेतुत्वं धियोऽङ्गीक्रियते, प्रयत्नेच्छाव्यवधा-नेन तदुपगमात्; तेन चेष्टामात्रं न तल्लिङ्गं स्यात्, यत्नानन्तरभावितया अतन्मात्र-लिङ्गत्वादित्यर्थः। नन्वेवमपि तत्तच्चेष्टाहेतुयत्नविशेषानुगुणात्मावस्थान्तरं तत्त-दभिमुखत्वं धीलिङ्गमस्त्वित्यत्राह—न चात्मधर्म एवेति। तदपि प्रकाशस्वभावत्वा-

---

१. मात्रमात्रमपि क, ख.　　२. कार धी. ख.　　३. भानात्सर्व. क.
४. ज्ञातापि. क.　　५. गतधर्मानुप. क.　　६. अर्थदूष. क.

स्वचेष्टादिरेव स्वधियो लिङ्गम्, आगन्तुप्रयत्नवदात्मदेहसंयोगभेदादेव चेष्टाहेतोस्तत्सिद्धेर्न धीलिङ्गता। न चात्मधर्म एव तैक्ष्ण्यादि लिङ्गम्, तस्य प्रकाशस्वरूपत्वे धीत्वमेव, [1]प्रकाश्यत्वे तदानन्त्यम्।

भाष्यस्य स्वमतानुगुण्यम्

भाष्ये तु बुद्ध्यनुमानोक्तिर्धीहेतोरपि कथञ्चिद्बुद्धिव्यपदेशात्। दिङ्नागेन[2] हि तद्धीहेतोरेव नीलाद्याकारवत्तया प्रत्यक्षतामास्थायार्थापह्नवः कृतः 'ज्ञातो ह्यः' इति स्मृतिबलात्, तन्निराकर्तुं प्रत्यक्षार्थानुमेयज्ञानाभ्यामपि 'ज्ञातः' इति स्मृत्युपपत्तिरिति वक्तुं बुद्ध्यनुमानमुक्तम्। यदि चैकेनाकारेण संविदर्थात्मकं द्वयमशक्यमुपगन्तुम्, तद्वरं स्पष्टे बहिरर्थे संविदपह्नवात्तदनुमेयबुद्ध्यपह्नवोऽस्तु, [4]नार्थहानम्। बाह्यतन्तूपादाने नियमेन पटबुद्धेर्बाह्यः पटो वाच्यः, वासनोद्बोधाधीनत्वे नियमासौरस्यम्। एवं च बहिरर्थसद्भावादिन्द्रियार्थसन्निकर्षजता प्रत्यक्षलक्षणं युक्तम् ॥

---

तत्स्वभावत्वविकल्पोक्तदूषणानतिवर्ति न लिङ्गताहमित्यर्थः। ननु बुद्ध्यनुमानस्य भाष्योक्तत्वादवश्योपेयं धियोऽनुमेयत्वमित्याशङ्क्य तदुपपत्तिरपि धीकारणविषयोपेयेत्याह—भाष्ये त्विति। ननु बुद्धिपदस्य फलवाचित्वप्रसिद्धेः कुतस्तत्कारणपरताऽऽश्रितेत्यत्राह—दिङ्नागेन हीति। निराकार्यार्थस्थापकग्रन्थकर्त्रभिहितस्योपन्यसनीयत्वात् करणेऽपि क्वचित् क्तिन्प्रयोगदर्शनात् फलहेतोरेव 'ज्ञातः' इति स्मृतिबलेन प्रत्यक्षत्वं तदुक्तमुपन्यस्यान्यथापि स्मृत्युपपत्त्या निराकर्तुं तदिति युक्तमेव तदर्थत्वमित्यर्थः। प्रत्यक्षाभ्युपगतसंविदोऽप्याकारान्तरापेक्षमेव प्रत्यक्षत्वमिति परापादितमङ्गीकृत्य "काममेकरूपत्वे" इत्यदीत्याह—यदि चैकेनाकारेणेति। भानबलापह्नवेनाकारमात्रतन्त्रे प्रत्यक्ष आश्रिते तस्य बहिष्ट्वेनैव भासमानत्वात् तदेव तात्त्विकं तद्विरुद्धान्तरस्थत्वत्यागेन तत्तन्त्रबुध्यपह्नवेनोपेयं स्यादित्यर्थः। युक्तिश्च बाह्यार्थसद्भावे प्रतीतिबलवत्यचिवतयास्त्येवेत्याह—बाह्यतन्तूपादान इति। यद्यन्तरेणैव बाह्यं पटं वासनामात्रतः पटप्रत्यय इत्याश्रीयेत, तदा शब्दमात्रात्तन्तूपादानादिस्मृतेर्वासनोद्बोधकालेऽपि पटोत्पत्तिधीर्बाह्यतन्तूपादान इव स्यात्; तदभावाद्बाह्योत्पत्तिरेवावगम्यते; अन्यथोद्बोधकवैलक्षण्यकल्पनाप्यापतेत्; तन्निर्मूलैवेति प्रतीत्यनुसार्यभ्युपगमो युक्तः, न तदनादरेणेत्यर्थः। वादद्वयप्रसाधितमर्थमुपसंहरति—एवं चेति ॥

---

१. इतरथा तद'. ख.
२. Omitted हि. क.
३. मवग. ख.
४. नार्थभानम् क.

# अनुमानम् ।

## अनुमानलक्षणम् ]

"अनुमानम्" । प्रत्यक्षलक्षणं लोकप्रसिद्ध्यनुसारतः सूत्रयता दिगुपदर्शनद्वारानुमानादिलक्षणान्यपि सूत्रितानि, भाष्यं स्फुटमाह, लोकप्रसिद्धे हि मानान्तरे व्यभिचरति तत्साधर्म्याच्छास्त्रेऽपि व्यभिचारशङ्का, सा लक्षणाव्यभिचारादपैतीति सङ्गतिः । अनुमा च प्रत्यक्षवत्प्रसिद्धेर्बहुवादिसंमतेश्च प्रत्यक्षानन्तरं लक्ष्यत इत्यवान्तरसङ्गतिः । लक्षणे च "ज्ञातसम्बन्धस्य" इति न कर्मधारयः, सम्बन्धस्यैकदेशितापत्तेः 'सम्बन्धोऽग्निमान्' इति धीर्लक्षिता स्यात्, न चैवं लोकधीः । अतो बहुव्रीहिणैकदेशस्योपसर्जनस्यापि 'कस्य'

---

## अनुमानम् ।

"अनुमानम्" । सूत्रव्याख्यापरत्वप्रकारं भाष्यस्याह—प्रत्यक्षलक्षणमित्यादिना । प्रत्यक्षस्यापि व्यभिचार[शङ्]कानिवृत्तिसमर्थं लोकप्रसिद्धमेव स्वरूपं सूत्रकारेण दर्शितम्, नाप्रसिद्धमित्यन्यदपि तत्तुल्यं तात्पर्यविषयतया तत्सूत्रेणैव गमितमिति तदभिप्रेतमेव भाष्ये स्पष्टीकृतमिति तद्व्याख्यैवेत्थं क्रियत इत्यर्थः । स्यादेवं सूत्रार्थविवरणार्थता, यदि लोकप्रसिद्धेरेव सूत्रोक्तिप्रयोजकत्वं नियतं स्यात्; तदेव कथमित्यत्राह—लोकप्रसिद्धे हीति । शास्त्रव्यभिचारशङ्कानिरासहेतुतया तदव्यभिचारोक्तेरेवाध्यायसङ्गतिरिति तत्परता निश्चीयत इत्यर्थः । तथापि कथमनुमानस्य प्राथम्यमित्यत्राह—अनुमा च प्रत्यक्षवदिति । ननु ज्ञातसम्बन्धोक्तेर्विशेष्यान्तरासिद्धेः कर्मधारयस्याङ्गीकार्यत्वात् कथं प्रसिद्धानुमानलक्षणार्हतेत्याशङ्क्य बहुव्रीहिसम्भवोक्तया तदर्हतामाह – लक्षणे चेति । अर्थतस्तावद्दर्शनोपसर्जनस्याप्येकदेशस्यान्वयार्हतेति स्थितं उपसर्जनत्वमाकाङ्क्षाबलोपनीतानुपसर्जनत्वप्रतीक्षयाऽवान्तरवाक्यभेदाश्रयणेन परिहृत्य विशेष्यताऽऽश्रय[ण]ीयेत्यर्थः । ननु समासिन एकपदत्वात्तदेकदेशोपसर्जनस्याकाङ्क्षोत्थापनेनापि पृथगन्वयानर्हत्वात् वाक्यभेदस्य चातिकष्टत्वात् न तद्युक्तमित्याशङ्क्य पदमात्राद्व्याप्यैकदेशानुपस्थितेस्तदुपस्थित्यधीन-

इति साकाङ्क्षस्यानुपसर्जनावस्थस्य वाक्यभेदाद्विशेष्यता। आकाङ्क्षा च व्याप्यैकदेशार्था। अत एव वाक्यभेदाश्रयणम्। विशेषणापेक्षस्य च समर्थता, 'गुरुकुलम्' इत्यत्र हि 'कस्य' इत्यपेक्षायां गुरुविशेषणं दृष्टम्। नित्यसापेक्षतया हि वैधर्म्यं शिष्यविशेषणे शक्यम्। [1]यस्य च मते स्वर्ग उपसर्जनं पदान्तरार्थेन भावनयान्वित', कस्तस्य विशेषणान्वये प्रद्वेषः? इदं च शाब्दैरेव शब्दोत्थं कृतम्—"अथ शब्दानुशासनम्। केषां शब्दानाम्? लौकिकानां वैदिकानां च" (म० भा० १।७।१) इत्यत्र। किञ्च स्वभावाद् दृश्यमेव दर्शनस्य प्रधानमिति तदहानादेव दृश्यदर्शनयोरन्वयान्नोत्तरपदार्थप्रधानता तन्त्रम्। शब्दानां पूर्वनिपातार्था तूपसर्जनसंज्ञा, अन्तर्गतविभक्तिलोपार्था च। यत्तु

---

त्वात्तदन्वयार्हतायास्तदर्थमुत्थितैवाकाङ्क्षा, न विशेषेण श्रुत्युत्थाप्येति वाक्यभेदाश्रयणमपि न दोषः, तदधीनत्वादुपस्थितान्वयधीसमाप्तेरिति परिहरति—आकाङ्क्षा चेति। समासश्रुतिश्च नेह पदान्तरान्वयविरोधिनी, स्वनिमित्तभूतसामर्थ्यापादकत्वात्तस्येत्याह—विशेषणापेक्षस्य चेति। न चाप्रसिद्धोऽयमन्वयप्रकार इत्याह—गुरुकुलमित्यत्र हीति। वार्तिककृतेदं दूषितम्—'गुरुकुलमित्यत्रास्ति विशेषणान्वयार्हता, नित्यसापेक्षत्वात् गुरूक्तेरुपसर्जनावस्थायामपि तदनुवृत्तेः; तदभावादेकदेशपदस्य तदुत्थापनस्य चोपसर्जनत्वे सत्यशक्यत्वात्' इति; तत्परिहरन्नाह—नित्यसापेक्षतयेति। शिष्यप्रतियोगिकी नित्यापेक्षेति तद्विशेषणत्वे शक्यते वैषम्यं वक्तुम्; यदा बहुत्वात् गुरूणां तद्विशेषाकाङ्क्षायां स्वरूपेणैव विशेष्यते, तदा तत्साम्यमेकदेशोक्तेरिति तदपेक्षया साम्योक्तिरदुष्टैवेत्यर्थः। स्वाभ्युप.तार्थविरोधाच्चाशक्यमिदमन्वयानुपपत्त्यापादनमित्याह—यस्य मते स्वर्ग इति। महाभाष्यप्रयोगाच्चानुपपत्त्युत्थापनमशक्यमित्याह—इदं च शाब्दैरेवेति। उपसर्जनत्वमेवेह नास्ति, पूर्वपदप्राधान्यस्य वस्तुबलप्राप्तस्यापरिहार्यत्वादित्यपि समर्थनं सुकरमित्याह—किं च स्वभावाद्दृश्यमेवेति। नन्वेवमुपसर्जनोक्तिविरोध इत्यत्राह—पूर्वनिपातार्थास्त्विति। नार्थस्य प्राधान्यनिवर्तनेन तन्निमित्तविशेषणान्वयानर्हतोक्तिपरा तत्संज्ञा; "उपसर्जनं पूर्वम्" इति सूत्रान्तरेण तत्संज्ञकपदस्य पूर्वप्रयोगनियमार्थेति क्वचि-

---

१. भट्टस्य।

भट्टमतम्—ज्ञातः सम्बन्धो येनेति व्युत्पत्त्या बुद्धिगम्यो बोद्धा विशेष्यः, यस्येति व्युत्पत्त्या एकदेशद्वयगम्यस्तत्समुदायो वा एकदेशी वा विशेष्यः इति तत्स्वोक्तिहतम्—

"गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् ।"

इति वदता । न च वाच्यम्—क्वचिद् गम्यस्यापि विशेषणं संख्यादि दृष्टम् 'षड् गाव' इति; न सर्वत्र गम्यमविशेष्यमिति दुर्लभलब्धमिव योऽयम् इति; यतस्तद्धि गम्यमविशेष्यम्, यदतत्परात् पदादविनाभावाद् गम्यते धूमपदादिवाग्निः; व्यक्तिपर्यन्ते हि गोपदे षडिति विशेषणं युक्तमेव ।

---

दर्थस्य सामर्थ्यप्राप्तप्राधान्योपगमेऽपि न तद्विरोध इत्यर्थः । फलान्तरं च संज्ञाया आह—अन्तर्गतविभक्तीति । "सुपो धातुप्रातिपदिकयोः" इति समासस्य प्रातिपदिकसंज्ञापेक्षया समासात्पूर्वभाविविभक्तिलोप उच्यते, सोऽपि ह्युपसर्जनसंज्ञापूर्वकपूर्वनिपातनियमापेक्ष एव, तदभावे समाससंज्ञायां सत्यामपि प्रथमानिर्दिष्टस्य परत्रापि प्रयोगप्रसक्तेः तदा विना विभक्त्या विवक्षितार्थप्रतिपादनासमर्थत्वादुभयथा तत्समर्थत्वे च लोपनियमानुशासनमित्यनवसरमेव लोपविधानं स्यात्; पूर्वनिपातनियमपूर्वकत्वे तु सामर्थ्याविशेषाल्लोपविधिः सुकर इति सोऽप्युपसर्जनसंज्ञाफलमेवेत्यर्थः । वार्तिककारेण तु एकदेशस्य विशेष्यत्वानुपगमेन बोद्धुः समुदायस्यैकदेशिनो वा विशेष्यत्वमभ्युपगतम्; तदनुपपत्तिमाह—यत्तु भट्टमतमित्यादिना । तदुपगतार्थस्य स्वोक्तिहतत्वदोषोद्भावनमिदमम्युच्यमानैः 'गम्यमानस्याविशेष्यत्वाभिधानमिदं न नियततया व्याख्येयम्, क्वचिद्विशेष्यत्वदर्शनात् प्रायिकोक्तिमात्रमिदम्' इत्यभिप्रायो दर्शितः; तदभिप्रायकथनं दूषयति—न च वाच्यं क्वचिद्गम्यस्यापीति । तन्निषेधहेतुः—यतस्तद्धीति । गम्यागम्यविशेषानवधारणात्; क्वचिद् गम्यमपि विशेष्यं दृष्टमित्यतात्पर्यविषयस्य गम्यत्वम्; न पदशक्त्यविषयमात्रं गम्यमुच्यते; तेन 'षड् गावः' इति संख्याविशेष्यत्वं व्यक्तीनां शक्त्यविषयत्वेऽपि तात्पर्यविषयत्वाद्युक्तम्, न तद्गम्यस्य विशेष्यत्वदर्शनम्; तेन प्रायिकाभिधानाभिप्रायोक्त्या बोद्धादेर्विशेष्यत्वसमर्थनमयुक्तम् गम्याविशेष्यत्वस्य नियतत्वादित्यर्थः । एवमपि पिनाकपाण्यादिपदवत् स्वयमेव विशेषणान्वयद्वारेण विशेष्यपरमस्त्विति शङ्कां निवर्तयति—

अतः सर्वत्र गम्यमविशेष्यम्। न च स्वत एव विशेष्यनिष्ठमिति वाच्यम्, अनामत्वात्। पिनाकपाणिपदं तु नाम विशेष्यार्थं युक्तम्। न च वाच्यम्—गुरुनये वाक्यभेदाध्याहारानुषङ्गदोषाः; तद्वरं लाक्षणिकप्रमात्रादावन्यतमो विशेष्यः; तथा हि—ज्ञातसम्बन्धस्येति वाक्यान्तरम्, 'कस्यैकदेशस्य' इत्यध्याहारः, ज्ञानसम्बन्धस्येत्यत्र वाक्ये 'एकदेशस्य' इत्यनुषङ्गः इति; 'यत उक्तं विवक्षितपरे नरवाक्ये वाक्यभेदादि न दोषः इति। किञ्च आकाङ्क्षाभिलापोऽयम् 'कस्यैकदेशस्य' इति, न त्वध्याहारः, यथाश्रुतस्य विशेषणानर्हत्वादव स्थान्तरान्तर्भावार्थं विरम्य विशेषणान्वयादवान्तरवाक्यभेदेऽपि महावाक्यमेकमिति नानुषङ्गः। सकृच्च मुख्यलाक्षणिकत्वायोगात् बुद्ध्यादिपदानां न लाक्षणिकप्रमात्रादिविशेषणता। योऽपि गुरूक्ते युक्त्यन्तरे दोषो-

न च स्वत एवेति। नाम्न एव हि स्वतो विशेष्यनिष्ठत्वम्, तस्यावयवार्थयोगावगमेऽपि तदविवक्षया नाम्न्यन्वयपरत्वात्; नामत्वाभावे तु अवयवार्थान्वयपरत्वान्न विशेष्यान्वयपरतेति न तन्निष्ठत्वमित्यर्थः। यद्यप्यनामतया स्वतो विशेष्यार्थं न स्यात्, तथाप्युक्तप्रमात्राद्यन्यतमस्यैव लक्षणया बुद्ध्यादिपदार्थभूतस्यास्तु विशेष्यत्वम्, पक्षान्तरेऽधिकदोषापत्तेरिति शङ्कामपाकरोति— न च वाच्यं गुरुनय इति। तन्निरासहेतुः—यत उक्तमिति। लक्षणानुगुणव्याप्त्यैकदेशे विवक्षिते सिद्धे तद्वृत्तेर्वाक्यभेदाद्यपेक्षत्वे तदाश्रयणं न दोष इति चोदनासूत्रेऽर्थपदं प्रयुञ्जता सूत्रकारेणैव प्रदर्शितमित्युक्तमिति न तद्रीत्या तावद्वृत्त्यन्तरमुपेयम्। वस्तुतस्तु "कस्यैकदेशस्य" इति नाध्याहार उक्तः, विशेषणान्वयोपयोग्याकाङ्क्षैवोक्तेति नाध्याहारानुषङ्गापादनावकाशः; वाक्यभेदश्चान्वयानुगुणावान्तरवृत्तिभेदापेक्षयोक्त इति विवक्षितार्थोक्तावेकवाक्यतैवेति न कोऽपि दोषोऽसम्मत इत्यर्थः। लाक्षणिकप्रमात्रादेः विशेष्यत्वाङ्गीकारोऽतिकष्ट इत्याह- सकृच्च मुख्यलाक्षणिकत्वायोगादिति। वस्तुतः कार्यान्तरङ्गत्वात् पूर्वपदमेवेह प्रधानमिति नोपसर्जनत्वमित्युक्तयुक्तचन्तरे भूतादिलिङ्गधीमात्रेणाप्यनुमोदयदर्शनाद्दर्शनमेव वस्तुतोऽपि प्रधानम्, न दृश्यमिति दोषमुद्भावयन्ति" तदनुवदति—योऽपि गुरूक्त इति। परिहरति—सोऽयुक्त इति।

१. Omitted यतः. क, ख. १. स्थान्तर्भावार्थम् क, ख.

द्भेदः—नैकदेशजानुमा, अतीतेऽपि लिङ्गे धीस्थेऽनुमोदयात्; दर्शनमेव कार्यबलात् प्रधानम्, न तु दृश्यम् इति, सोऽयुक्तः; व्याप्यतया ज्ञातस्यैकदेशस्य विज्ञातकार्यस्य संस्कारो युक्तः, न तु सत्तयैकदेशः; कार्यवत्तया संस्कार्योऽवगत इति दृश्यं प्रधानमेव। नन्वाकाङ्क्षापूर्तिर्विशेषणेऽपि नास्ति; ज्ञातो हि सम्बन्धो व्यापकस्यापि। तन्न, 'यस्य' इति विग्रहवाक्यस्थषष्ठ्या सम्बन्धितया व्यपदेशः सः,—यस्य सम्बन्धोऽस्त्येव, तस्यासाधारण्याद्युक्त इति षष्ठीतो व्याप्यताधीः, अव्याप्येऽपि हि व्याप्तिविवक्षायां

---

तत्रापि तावदनुमेयधीनिष्पत्तावसत्त्वादकारकत्वं लिङ्गस्य नोपेयम्, तदनपेक्षस्य ज्ञानस्यापि तदसिद्ध्यापत्तेः तन्निरूपकतयापि कारकत्वोपगमे प्राधान्यं लिङ्गस्यापरिहार्यम्, व्याप्यत्वेनावगतस्यैव व्यापकधीशक्तस्य स्वतोऽनवगतकार्यदर्शनद्वारताऽर्हस्य दर्शनसंस्कार्यत्वावगमात्। न चासत्त्वात् संस्कार्यत्वानुपपत्तिः; सत्तायाः संस्कार्यत्वोपाधित्वे प्रागवगते हि तदभावादसंस्कार्यता स्यात्, न तु तदिहेति, दृश्यतया कार्यकरत्वार्थमेव दर्शनापेक्षेति सत्तायाः कार्यानङ्गत्वात् युक्तैव दर्शनसंस्कार्यतेत्यर्थः। ननु ज्ञातसम्बन्धपदस्याकाङ्क्षितसम्बन्ध्यन्तरबुद्धिशक्तैकदेशार्पणसामर्थ्यं नास्ति, द्वयोरपि सम्बन्धिनोः पदवृत्तौ विशेषाभावादिति चोदयति—नन्वाकाङ्क्षापूर्तिरिति। परिहरति—तन्न यस्येति। विग्रहवाक्यस्थेति। सम्बन्धिन एकदेशस्येत्युक्ते यथा सम्बन्धाभावव्यवच्छेदान्नियतसम्बन्ध एवोच्यते, स्वरूपे स्वपदोक्ते पदान्तरोक्तेस्तद्व्यवच्छेदैकार्थत्वात; तथेहापि, समासान्तर्गतषष्ठ्यर्थस्यापि तदविशेषात्। व्यापकस्य तु सम्बन्धधीयोगमात्रेण व्याप्यसाम्येऽपि विशेषणावस्थोक्तिफलव्यवच्छेदसंपूर्त्यभावाद्व्याप्यार्थतैवेत्यर्थः। ननु 'अस्य स्वम्', 'वृक्षस्य फलम्' इत्यव्याप्येऽपि प्रचुरप्रयोगदर्शनात् कथं व्याप्यार्थता षष्ठ्या इत्यत्राह—अव्याप्येऽपि हीति। तत्रापि तत्सम्बन्ध्यवस्थायामेव प्रातिपदिकवृत्तिर्न तद्वियुक्तावस्थायामिति वृत्त्यपेक्षया तदर्थतासिद्धिरित्यर्थः। ननु विशिष्टार्थपदसामानाधिकरण्याद्वाक्यार्थतया व्याप्यधीसम्भवातिरेकेण कथम अव्याप्येऽपि लोके षष्ठीप्रयोगदर्शने सत्यपि विवक्षापेक्षया तद्गतिमाश्रित्य व्याप्यार्थतोपेयते ? षष्ठ्यर्थान्वयमात्रमवस्थाविशेषापेक्षयास्तु;

षष्ठी। लोकेऽपि 'ममायम्' इत्यत्र ममेति व्याप्यम् 'अयं पुनरन्यस्यापि' इति वाचा व्याकृतम्। अतो विशेषणादाकाङ्क्षापूर्तिः। यत्तु भट्टोक्तम्—न सम्बन्धोऽस्त्येवेति व्याप्यता; किन्तु व्याप्तेर्नियमपर्यायात्सम्बन्धान्तरात् इति, तन्न; नियमो हि सदात्वं सम्बन्धादेर्धर्मः, न सम्बन्धः; तदा कादाचित्कत्वमपि सम्बन्धः स्यात्। क्रियागर्भ एवंजातीयकः सम्बन्धः—इति कल्पनाप्यमानिकी स्यात्। तादात्म्यतदुत्पत्तिभ्यां व्याप्यतेत्यपि न; पञ्चभिर्व्याप्यतेत्यपि न; सम्बन्धान्तरेऽपि तद्दर्शनात् अत्राप्यदर्शनात् गणनमयुक्तम्।

व्याप्तिग्रहणोपायकथनम्

व्याप्यत्वे मानमुच्यते—यद्वस्तु येन मानेन सम्बन्धविशिष्टतयावसीयते,

---

कस्मात्प्रातिपदिकस्यापि तत्रैव वृत्तिराश्रितेत्यत्राह लोकेऽपि ममायमित्यत्रेति। व्याप्यार्थत्वस्य व्युत्पत्त्यविषयत्वेऽपि विभक्त्यर्थत्वात् षष्ठ्यर्थोऽपि प्रातिपदिकार्थविशेषणत्वेनैव भातीति तद्व्याप्ततयैव तदर्थो भातीति, सम्बन्धनन्तरं तत्प्रतियोगितयेति, द्वयमतुल्यम्। लोकव्यवहारोऽपि तदनुवर्त्येव दृश्यते; 'ममायम्' इत्येकनियतषष्ठीप्रयोगहेतुतया प्रतियोगिनोऽन्यसम्बन्धोक्त्या प्रकृतसम्बन्धव्याप्यत्वनिषेधेन तत्र षष्ठ्यनर्हतोक्तेः। तेन तया षष्ठ्या व्याप्यधीर्व्याख्यातेत्यर्थः। साधितमपेक्षितार्थार्पकत्वं ज्ञातसम्बन्धपदस्योपसंहरति—अतो विशेषणादिति। नन्वसम्बन्धव्युदासान्ते सम्बन्धव्याप्यत्वे यथोक्तं भवेत्; सम्बन्धान्तराधीनं तु व्याप्यत्वमिति परमतम्; अतः कथं तस्य षष्ठ्यर्थतेति शङ्कानिवृत्त्यर्थं तन्मतमनूद्य दूषयति—यत्तु भट्टोक्तमित्यादिना। व्याप्तेर्नियमपर्यायत्वप्रसिद्ध्यभ्युपगमात् तद्विरुद्धः सम्बन्धान्तराङ्गीकारः, तद्व्यापकक्रियान्तरकल्पनापत्तिश्चेति न तन्मानानुसारीत्यर्थः। सम्बन्धनियतत्वात्मकं तु व्याप्यत्वं सम्बन्धविशेषवर्त्येव, न सम्बन्धमात्रवर्तीति केषांचिन्मतम्; तद्विविच्य निरस्यति—तादात्म्येति। गणिताधिके व्याप्त्यभावाद्वा तत्र व्याप्तिनियमाद्वा गणनोपपत्तिद्वयाभावात गणनमयुक्तमित्यर्थः। ननु केन प्रमाणेनाशेषदेशकालवर्तिव्याप्यत्वमवगन्तुं शक्यमित्यत्राह—व्याप्यत्वे मानमिति। सम्बन्धस्वरूपावगतौ तावन्मानं न दुर्लभम्, विवादाभावात्; तदेव व्याप्तिसाधकं स्यात; सर्वस्यापि हि सकृत्प्रमाणनिर्धारितस्वरूपस्य पुनर्मानापेक्षा

तेनैव सम्बन्धव्याप्यतापि । धर्मी हि कालाद्यवच्छिन्नो भाति; न तत्सम्बन्धोऽपि धर्मः कालादिधर्मावच्छिन्नः; गुणानामगुणपरतन्त्रस्वभावत्वात्। [2]जैमिनिनापि स्वभावानुसारादेव समत्वादसम्बन्ध उक्तः, नाशब्दत्वात्। यदि हि धर्मोऽपि कालाद्यवच्छिन्नो भासेत न धर्मिमात्रानुबन्धितया, तदा निजधर्मनिरूप्यो ध[1]र्मी न प्रत्यभिज्ञायेत। अथ धर्म्यवच्छेदकेन धर्मोऽत्यन्तर्भावित इति यावद्धर्मितया निजधर्मिता सिद्धा, तर्हि सम्बन्धव्याप्यता धूमादेः। या तु सम्बन्धस्य सर्वथानवच्छेद्यतोक्ता, सा तथा प्रतीते व्याप्तिदार्ढ्यार्थम्। अत उक्तम्—'धूमसत्त्वैव परमानमपेक्षते; अग्निसम्बन्धस्तु धूममात्रानुबन्धी

---

तन्निर्धारणोपाधिभूतदेशकालाधीना; तदुपाधिहीनस्य सकृत्प्रवृत्तप्रमाणेनैव कृतार्थता; तत्र सम्बन्धस्य स्वयं सम्बन्धिधर्मतयैव धीस्थस्य तद्धर्मदेशकालावच्छेदार्हता नास्तीति न स्वोपस्थापकाधिकमानापेक्षा देशकालभेदप्रयुक्ता धर्मिण इवेत्यर्थः। यथोक्तयुक्तिबलाविवेकेनानिवृत्तबुद्धिविपर्यासं विपक्षे बाधकोक्त्या जिज्ञासामुत्थाप्य विवेचयति—यदि हि धर्मोऽपीति। गुणजात्योरपि हि विशेषणस्वभावत्वे सम्बन्धसाम्यमनुभवसिद्धमेव। तत्र सम्बन्धस्य कालाद्यवच्छेद्यत्वोपगमे तदविशेषात् गुणजात्योरपि द्रव्यावच्छेदकत्वे कालाद्युपाध्यनुप्रवेशानिवारणात् विशिष्टावस्थस्य कालान्तरेऽनुवृत्त्ययोगात्तद्विषया प्रत्यभिज्ञा न स्यादिति सर्वप्रसिद्धा सैव कालादेस्तदनुप्रवेशं वारयेदित्यर्थः। ननु मा भूज्जात्यादेः स्वधर्म्यवच्छेदकत्वं कालाद्युपाधिकम्, प्रत्यभिज्ञाविरोधित्वात्; कालादिना धर्म्यवच्छेदे तद्धर्मभूतजात्यादेरपि अवच्छेद्यत्वमानुषङ्गिकमित्युच्यत इति पराभिप्रायमाशङ्कते—अथ धर्म्यवच्छेदकेनेति। परिहरति—तर्हि सम्बन्धेति। एवं तर्हि जात्यादेः स्वरूपनिरूपकत्वात्तन्निरूपितधूमाद्यवच्छेदकः सम्बन्धो यावद्धूमादिभावीति सकृद्दर्शनसिद्धैव व्याप्तिः स्यादित्यर्थः। ननु व्याप्त्युपपादकतयायमप्यवच्छेदप्रकारो निरस्तः प्रकरणे, तद्विरोधः स्यादेवं व्याप्तिसिद्ध्यङ्गीकार इत्याशङ्क्य वस्तुवृत्त्यैवमपि कालाद्यवच्छेदो नास्ति, गुणानां गुणिमात्रपरतन्त्रतयान्योन्यास्पर्शात्; तदभ्युपगममात्रेण तु व्याप्त्यविरोध उक्त इति दूरनिरासाभिप्रायेण सर्वथानवच्छेद्यतोक्ता, न त्वन्यथा व्याप्त्यसिद्ध्यभिप्रायेणेत्यविरोध इति परिहरति—या तु सम्बन्धस्येति। तस्माद्युक्तमुक्तमित्याह—अत उक्तं धूमसत्त्वैवेति। ननु कालाद्यनवच्छेदमात्रेण व्याप्तेः सकृद्दर्शनसिद्धिरियं

---

१. धर्मो. क.		२. गुणानां च परार्थत्वादित्यत्रेति शेषः

सकृद्दर्शनसिद्ध एव'। ननु धूमाकृतिकव्यक्तिभेदे संयोगभेदवति सकृद्दृष्टे न व्यक्त्यन्तरं संयोगान्तरवद्दृष्टमिति न व्याप्तिः। मैवम्; एवं हि व्यक्तिभेद उपाधिरिति शङ्क्येत; सा च व्यक्त्यन्तरेऽपि धियापैति। यदि चानेकव्यक्त्युपाधिशङ्का, तदाऽनुगतं तदाकृतिकत्वमेकमुपाधिर्लाघवात्तर्कतः; उपाधिशङ्कापनयनमपि

---

कथमाश्रिता ? यदि हि सर्वव्यक्तिव्याप्येक एव सम्बन्धः स्यात्, तदैवं स्यात्; सम्बन्धस्वरूपस्यैव भेदे कः कालाद्यनवच्छेदस्योपयोग इति चोदयति—ननु धूमाकृतीति। परिहरति—मैवमेवं हीति। यदि सम्बन्धोऽपि धर्मिस्वरूपनिरूपणार्थ एव स्यात्, तदैकव्यक्त्यवसायिता तद्दृष्टेः स्यादिति व्यक्त्यन्तरे दृष्टचन्तरापेक्षं तन्निरूपणं स्यात; यदा तु धूमाकृतिकव्यक्तिभेदे संयोगभेदवतीति जातिनिरूपितव्यक्त्यवच्छेदकत्वं सम्बन्धस्याङ्गीकृतं तदेति एवं हीत्युक्तम्। तदा हि निरूपितावस्थव्यक्तिरेव सम्बन्धावच्छेद्येति यावन्निरूपकवृत्त्यवसायितैव सम्बन्धदृष्टेः स्यात् धूमपदवाच्यतावधृतेरिव; न हि सकृद्दृष्टसम्बन्धानां पदानां तदाकृतिकव्यक्त्यन्तरे व्युत्पत्त्यन्तरापेक्षा वृत्तिरिष्यते व्यक्तिवाच्यवादिभिरपीति सम्बन्धितन्त्रसम्बन्धदृष्टेः तत्स्वरूपदृष्टचन्तर्भूताकृतिधीपूर्वकत्वनियमात्तदाकृतित्वप्रयुक्तसम्बन्धधीर्जातैवेति व्यक्तिविशेषावसायित्वशङ्कोपाधिशङ्कैव स्यादिति तन्निवर्तकतया व्यक्त्यन्तरदर्शनं व्याप्त्यवधारणाङ्गमित्यर्थः। ननु तन्निवर्तकतया तद्दर्शनान्तराङ्गीकारेऽवश्यंभाविनि पुनश्चानेकोपाधिशङ्कापत्तेस्तन्निरासे दर्शनमात्रस्याशक्तत्वान्मानान्तरं तच्छक्तमुपेयमेव स्यादिति शङ्कामनूद्य, मानसहायाभ्युपगततर्कमात्रमपेक्ष्यमिति प्राच्यदर्शनमेव तन्मानं स्यात् न मानान्तरमिति परिहरति—यदि चानेकव्यक्तीति। ननूपाधिशङ्कापनायकतर्कस्य न मानसहायता स्यात्, व्याप्त्यनिर्णयार्थत्वात्तस्य; तन्मानसहायता हि प्रसक्ता; प्राच्यदर्शनस्य तु तन्मानत्वे तस्यानेन विषयविशेषविवेकः कार्यः; स त्वनेन लेशमात्रेणापि नावसीयत इति मानान्तरमेव तद्ग्राह्युपेयमिति शङ्कां परिहरति - उपाधिशङ्कापनयनमपीति। मा भूद्व्याप्तिग्राहकमानसहायत्वम्, तद्गृहीतव्याप्त्युत्पाद्यानुमानोत्पत्तिसहायात् स्यात् तदपनयः। न च विषयविवेकेनैव तर्कस्य सहायतेति नियमः, उत्पत्तिहेतुतयाप्यविरोधात्; बाह्यालिन्दप्रदेशे पुरुषेण भवितव्यम्, न स्थाणुना—इत्यनुमानोत्पत्त्युपयोगित्वमपि

तर्कान्मानोत्पत्तिसहायादिति दिक्। एवं प्रतीतेऽपि विषयेऽनुमाऽनुभूतितया मानान्तरसिद्धेति। [1]अग्निस्त्वसम्बन्धोऽपि दृष्टः। सम्बन्धासम्बन्धयोर्नाना-कालाग्नितयोश्च दर्शनादेवमविरोधार्थं कल्प्यते—सविशेषण एवाग्निः काला-द्यवच्छेद्य इति। विरोधे त्वसति धूममात्रस्यैवाविच्छिन्नोदयस्य नभोवर्तिनः-स्वतःसिद्धोऽवच्छेदः।

व्यभिचारशङ्कानिरासप्रकारः

ननु धूमेऽप्यसम्बन्धो द्रक्ष्यत इति शङ्कायां व्याप्यत्वानिर्वाहः।

---

बहुलमुपलभ्यते। प्रत्यक्षस्योर्ध्वतामात्रविषयतया स्थाणुत्वपुरुषत्वाग्राहकत्वे हेश-विशिष्टोर्ध्वतायाः पुरुषव्याप्त्युपस्थापकतया अनुमानोत्पत्तिसहायतैव तत्रेति इहापि तथास्तु। न चोत्पद्यमानस्याप्यनधिगतार्थत्वायोगादमानत्वात् सहायत्वासिद्धिः, अधिगतार्थस्याप्यनुभूतित्वमात्रेण मानत्वाविरोधात् तर्कानुग्राह्यतोपपत्तेरित्यर्थः। नन्वेवमग्नेरपि धूमव्याप्यत्वमनिवार्यम् कालाद्यनवच्छेद्यत्वसाम्यात् तन्मूलत्वाच्च व्याप्तेरिति शङ्कां परिहरति—अग्निस्त्वसम्बन्धोऽपीति। स्वतः सम्बन्धस्य कालाद्य-वच्छेदाभावेऽपि तदनवच्छिन्नदर्शनविरोध्यसम्बन्धदर्शनेऽन्योन्यप्रतियोगिकतयैकैक-विशेषणदृष्टस्य व्यभिचार्यवच्छेदकत्वं तत्कालवर्त्यार्द्रेन्धनसंयोगादिनिरूप्यकालादि-विशेषणापेक्षस्य स्वयं विशेषणावस्थस्यापीति विरोधपरिहारार्थं कल्प्यते, न धर्मि-मात्रं स्वतः प्राप्त्यनुरोधेन कालाद्यवच्छेद्यमित्यर्थः। नन्वेवं सम्बन्धस्य विशेषण-त्वात् कालादिविशेषणास्पृष्टत्वं पूर्वोक्तं भग्नमिति तदुक्त्यानर्थक्यं तदपेक्षव्याप्ति-सिद्धिश्च भग्नेत्यत्राह—विरोधे त्वसतीति। विशिष्टदृष्टौ विशेषणस्य विशेषणान्तर-योग एव तद्भङ्गः; विरुद्धदर्शनकल्प्ये तु न। तद्विहीनसम्बन्धिनं प्रति तस्यैव सम्बन्ध-स्यावच्छेदकत्वं कालाद्यनपेक्षमेव स्यादिति धूममात्रस्यैव कालाद्यवच्छेदः, न तद्वि-शेषणावस्थसम्बन्धस्यापीत्यर्थः। न च कुम्भादिप्रवेशितस्य देशान्तरं नीतस्याग्नि-संयोगविरहात् कालाद्यवच्छेदः कल्प्य इत्येतदर्थं अविच्छिन्नेति विशेषणम्। धूम-स्वभावनिरूपकावयवसंस्थानानुप्रविष्टस्य जातितुल्यतया सम्बन्धात्पूर्वभावित्वात्त-द्विहीनस्यासम्बन्धो न कालाद्यवच्छेदकल्पक इत्यर्थः। ननु सम्बन्धदर्शनसमये द्वयोस्तुल्ययोरेकस्यासम्बन्धदर्शनमेव इतरस्यापि तच्छङ्काकरमिति चोदयति—ननु धूमेऽप्यसम्बन्ध इति। तुल्यतैव द्वयोर्नास्ति सोपाधिकत्वनिरुपाधिकत्वरूपेण

---

१. अग्निस्त्वसम्बन्धो दृष्टः, क. अग्निस्त्वसंबन्धोऽपि दृष्टः ख.

मैवम्, यद्विधे हि यस्य दर्शनम्, तद्विध एव अर्थान्तरे तस्य शङ्का, यस्य कुतश्चिदुपाधेः सम्बन्धः, तस्योपाधिविगमादसम्बन्धोऽपि स्यात् यथार्द्रेन्धनोपाधिरग्नेः। न च धूमस्य सम्बन्धेऽप्युपाधिः कश्चिन्निश्चितः, यद्विगमादसम्बन्धोऽपि स्यात्। नन्वनौपाधिकत्वस्याप्यनिश्चयादुपाधिशङ्का। तथापि निश्चितोपाधिविगमाधीना शङ्का नास्त्येव। किन्तु उपाधिशङ्कापि नास्ति, सम्भावितोपाधेर्विगमेरपि सम्बन्धदर्शनात्। एतच्चासकृद्दर्शनायत्तमिति तदादृतं वृद्धैः। ननु दीर्घकालादेरुपाधिता, यस्य विगमानवगतेर्न तत्र शक्यं वक्तुम्—विगमेऽपि सम्बन्धनियमानुवृत्तेर्नोपाधितेति। तन्न, तद्विधस्य कालादेः क्वचिदुपाधितानवगतेर्नेहोपाधिताशङ्का, यद्विधे त्वृत्वादौ कुसुमादिसम्बन्धोपाधिता तद्विधविगमे सम्बन्धानुवृत्तिदर्शनार्थं भूयोदर्शनमुक्तम्।

---

सम्बन्धावच्छेदवैषम्यादिति परिहरति—मैवं यद्विधे हीति। पश्चादुपाधिविगमकालवर्त्यसम्बन्धदर्शननिश्चितो ह्युपाधियोगः पूर्वभाविदर्शनवर्त्येव, व्यवहारार्हतामात्रं पश्चात्; धूमे तु तन्निश्चयस्तावन्नास्ति, पश्चादप्यसम्बन्धादर्शनात्। न च शङ्कामात्रमपि स्वरूपमात्रेण; प्राच्यदर्शन एव हि सम्बन्धोपाधिरग्नेर्दृष्टः, स्ववियोगेनासम्बन्धावहत्वात् तादृक्सम्भावितसहदृष्टव्यतिरेकेणापि सम्बन्धदर्शनेन शङ्कानिरासम्भवात् तदर्थं च भूयोदर्शनस्याप्युपेतत्वादित्यर्थः। न चादृष्टव्यभिचारार्द्रेन्द्रन्धनसंयोगस्योपाधित्वशङ्कया व्याप्त्यसिद्धिः, तस्याप्यग्निवद्व्यापकत्वेनोपाधित्वासम्भवात् साधनाव्यापकस्यैवोपाधितार्हत्वात्। न चान्योन्योपाधित्वशङ्कयोभयोरपि व्यापकत्वासिद्धिः, कार्यस्य धूमस्यैकैकाभावेऽनुपपत्तेरुभयकार्यत्वनिश्चयेनोभयोरपि व्यापकत्वसिद्धेरित्याशयः। नन्वेवमपि व्यतिरेकदर्शनायोग्यदीर्घकालस्यान्यस्य वा कस्यचिदुपाधित्वशङ्कया तदनिश्चय इति चोदयति—ननु दीर्घकालादेरिति। दर्शनमूलशङ्का दृष्टिवधातिलङ्घनेन नैव भवेत्; दृष्टविधस्य च व्यतिरेकदर्शनं सुकरमिति परिहरति—तन्न तद्विधस्येति। सम्भावितोपाधिभावस्य कस्यचिदनुवृत्तस्य स्पष्टदृष्टावेव सोपाधिशङ्कापि स्यात्, नादृष्टविशेषस्योत्प्रेक्षामात्रेण पूर्वभाव्युपाध्यस्पृष्टसम्बन्धदर्शनस्यासम्बन्धदर्शनविरोधं विना। बाधानर्हस्य बाधा-

किञ्च 'अस्मिन् काले सम्बन्धो नान्यदा' इत्येवं 'कालस्योपाधिता वाच्या । न च कालाद्यवच्छेदान्तर्भावः समवायदर्शनादर्शनविरोधं विना; यद्विधे हि यद्दृष्टं तद्विध एव तच्छङ्केत्युक्तम् सकृद्दर्शनादेव स्वभावमात्रानुबन्धित्वं स्वतः प्रामाण्यनयसिद्धमिति दिङ्मात्रम् ।

---

पत्तेरित्याह—किंचास्मिन् काल इति ।

ननु सकृद्दर्शनादेव सम्बन्धस्य सम्बन्धिभावमात्रानुबन्धित्वसिद्धिर्नास्ति, इन्द्रियसंयुक्तधूमादेरेव तदुत्थधीविषयत्वेन तदितरधूमाद्यनुबन्धित्वसिद्ध्ययोगादिति तद्भङ्गभयादुपाधिशङ्कानवतारो नास्ति; संप्रयुक्तव्यक्तेरपि सम्बन्धभङ्गे स्यात्तदनवतारः, तदभावादवतरेदिति शङ्काहानार्थं दिङ्मात्रमित्युक्तम्; "तदा निजधर्मनिरूप्यो धर्मी न प्रत्यभिज्ञायेत" इत्यनेनैव परिहारस्य सूचितत्वात् । प्रत्यभिज्ञा हि असंप्रयुक्तात्रस्थस्यापि संप्रयुक्तस्येन्द्रियग्राह्यत्वं गमयतीति तेनोक्तम्; कारणत्वमेव संप्रयुक्तया पूर्वक्षणवर्तिनः, तदधीनविषयत्वं तु तत्स्वरूपमात्रस्येति यावत्स्वरूपस्थितिस्वोत्थमिति परिच्छिन्नमेव तदिति प्रत्यभिज्ञायाः आत्मलाभः; व्यक्त्यन्तरमपि पूर्वदृष्टजात्यवच्छिन्नतया प्रत्यभिज्ञायत एव; शूर्पाकरजन्मनो देशान्तरगतस्योष्ट्रदर्शने तद्वर्तिगवादौ पूर्वदृष्टत्वानुसन्धानस्योष्ट्रव्यावृत्ततया स्पष्टत्वात् पूर्वदृष्टजातिस्वभावबलेनैव विशेष्यभूतस्वव्यक्त्यन्तरविषयत्वसम्भवाच्च प्रत्यभिज्ञाया जातिमात्रशक्तगोपदोत्थधिय इव तद्व्यक्तिविषयत्वम् । एवं जात्यवच्छिन्नव्यक्तेः सम्बन्धविशेष्यत्वेऽपि जातिस्वभावानुसार्येव तद्विशेष्यत्वम्, सन्निहितव्यक्त्यवसायिन्यपि प्रथमदर्शने पूर्वविशेषणतन्त्रत्वात्तदुपजीविन्याः सम्बन्धविशिष्टदृष्टेः; प्रकृतौ प्रकृत्यपूर्वगृहीतावघातादेरिव तदपूर्वीयद्वारसम्बन्धे प्रकृत्यपूर्वीयतयान्वयेऽपि तद्ग्रहणबलात् तदीयसाधनलक्षणेति स्वग्राहकीयत्वमेव तदन्वये प्रयोजकमिति तत्प्रमाणकमेव पश्चाद्भाविविकृत्यपूर्वग्रहणव्यवहिततदीयसाधनभूतद्रव्यान्तरान्वयित्वमपि इति; जातिस्वभावस्य सर्वव्यक्तिष्वविलक्षणत्वात् सर्वव्यापिन्येव सन्निहितव्यक्तितिरोहितापि सम्बन्धविशिष्टधीरिति ॥

स्वोपजीव्याकृतिव्याप्तिरुपजीव्यर्थसंविदः ।
शाब्दप्रत्यक्षयोस्तुल्या निर्विकल्पा तदा परम् ॥ इति सङ्ग्रहः ॥

---

१. कालस्यैवावधिता. क. ख.

### भट्टोक्तव्याप्तिग्रहोपायनिरासः

परोक्तं त्वयुक्तम्—भूयोदर्शनसंस्कारसचिवं मनो बहिरर्थे व्याप्तौ मानमिति, संस्कारस्यापरिच्छेदकत्वात्। किञ्चासाधारणसंस्कारानुप्रवेशे तेनैव मानव्यवहारान्मानान्तरमलोकमिद्धमनुज्ञातं स्यात्। किञ्च इत्थं व्याप्तिरग्न्यादावपि दुर्वारा। न चार्थापत्त्या व्याप्तिः, शतशोऽग्नौ धूमदर्शनमनग्नौ चादर्शनं शतशो व्याप्तिं विनानुपपन्नमिति, यतो यत्र यदा च दर्शनादर्शने तत्र तदा सम्बन्धभावाभावाभ्यामेव तदुपपत्तेर्न व्याप्तिसिद्धिः।

### हेत्वाभासनिरूपणम्

व्याप्तिस्मृतिश्च अनुमाङ्गमिति वक्तुं ज्ञातसम्बन्धतोक्ता। तदभावे साधारणासाधारणविरुद्धा हेत्वाभासाः। एकदेशश्च यथासम्भवमाश्रितोऽभिमतः। आश्रिताभ्यां च लाघवादेकाश्रयाक्षेपः, अन्तरशब्दस्वरसाच्च। अत एकाश्रयाश्रितयोरेव गम्यगमकतोक्तेत्यपक्षधर्मस्याहेतुता। न च नितम्बोपरि भागभेदे भिन्नाश्रितता, नगावयव्येकत्वात्। अतः कदाचिन्नगाश्रितयोर्गम्यगमकता कदाचिद्धूमाश्रितोऽग्निसंयोगो गम्यः, धूमत्वं च तदाश्रितं निजं हेतुः। कृत्स्नपक्षानाश्रितस्य चाहेतुता उपाख्यानात्मकत्वस्येव कृत्स्नवेदाना-

---

एवं स्वमतेन व्याप्तिप्रमाणं व्याख्याय परोक्तं दूषयति—परोक्तं त्वयुक्तमिति। व्यक्तस्त्वर्थः। पुनः पक्षान्तरं दूषयति—न चार्थापत्त्येति। तदर्थश्च व्यक्तः। ज्ञातसम्बन्धपदेन ज्ञानस्यातिवृत्ततोक्तेरनुमोत्पत्तिकारणत्वविरोधं स्मृतेरेव साक्षात्कारणत्वं विवक्षितमिति परिहरति—व्याप्तिस्मृतिश्चेति। स्मृत्यभावे हेत्वाभासतापत्त्युक्त्या हेतुत्वं दर्शयति—तदभाव इति। एकदेशपदेनान्यधर्मत्वमुक्तम् नावयवत्वमिति सर्वानुमानानुवृत्त्या लक्षणक्षमत्वमाह—एकदेशश्चेति। एकदेशद्वयेनैकधर्म्याक्षेपाच्चैकधर्मत्वनियमहेतोः पक्षधर्मत्वमङ्गमिति तद्विरहाच्चाभासान्तरापत्तिरित्याह—आश्रिताभ्यामिति। न चैवं धूमस्याप्यहेतुतापत्तिरित्याह—न च नितम्बोपरिभाग इति। अतो विधाद्वयेनापि हेतुतेत्याह—अतः कदाचिदिति। नन्वित्थमपक्षधर्मत्वसमाधिसम्भवेऽपि भागासिद्धिरपरिहृता, तथापि धूमस्य हेतुत्वोपगमे च भागासिद्धिरदोष इत्याश्रितः स्यादित्याशङ्क्यादोषता नाङ्गीकृतेत्याह—। कृत्स्नपक्षानाश्रितस्येति। तदुदाहरणमाह—उपाख्यानात्मकत्वस्येवेति। तद्वैषम्यं धूमस्याह—

श्रितस्य; नगस्य त्ववयविनः पक्षत्वात् कृत्स्नाश्रितो धूमः । दर्शनशब्दात् स्वरूपासिद्धो न हेतुः ।

असाधारणे संशयहेतुत्वस्य दूषकताबीजत्वोक्तिनिरासः

असाधारणस्य संशयहेतुता केनचिदुक्ता, सा न युक्ता; उभयसम्बन्धिनो हि दृष्टस्योभयस्मृतिजनकत्वादेकस्य द्वयात्मकत्वविरोधात् सन्देहहेतुत्वं साधारणस्य युक्तम्; न त्वसाधारणस्य, धर्मिमात्रादपि सन्देहापत्तेः। कथञ्चित्सम्बन्धात् कथञ्चिदेककालाश्रिततया चानुमानोदयादेककालादिसम्बन्ध एककालाद्याश्रिततापि मता । तथा दर्शनशब्दात् सतोऽपि दर्शन एव हेतुता । एकदेशान्तरपदादस्वतन्त्रस्य गम्यता। अन्तरशब्दाच्चैकाश्रिताश्रितयोरेव गम्यगमकता ।

असन्निकृष्टपदव्याख्या

एवं समाप्तेऽपि लक्षणे सुहृद्भूतस्योत्पत्तिहेतुगणनार्थमसन्निकृष्टपदं

---

नगस्य त्ववयविन इति । वेदात्मकावयवव्यभावादेकैकवाक्यस्य पृथक् पृथक् पक्षत्वात् पक्षवृत्त्यभावादुपाख्यानात्सकलपक्षवृत्तिः; नगस्थाग्न्यनुमाने त्वेकत्वात् पक्षस्य न भागासिद्धचवकाश इत्यर्थः । दर्शनपदव्यावर्त्यमाह—दर्शनशब्दादिति । तत्र साधारणासाधारणयोर्लक्षणैकदेशभाजोस्तत्पूर्त्यभावादनुमित्युत्पत्त्य सामर्थ्यादाभासतया व्यावर्त्यत्वेनोक्तयोः संशयकरतयापि साम्यं कैश्चिदङ्गीकृतम्; तदनूद्य दूषयति—असाधारणस्येति । विरुद्धानेकधर्मस्मृतिद्वारेणैव तत्करत्वम्; तदसाधारणस्य नास्ति, तत्सम्बन्धस्य स्मृतिहेतोरसिद्धत्वात्; व्यतिरेकमुखेन स्मृतिकरत्वोपगमे धर्मिमात्रस्यापि तत्करत्वापत्तेरसाधारणधर्ममात्रस्य संशयहेतुत्वोपगमानुपपत्तिरित्यर्थः । ननु चन्द्रोदयादिना समुद्रवृद्ध्याद्यनुमानं लोकप्रसिद्धं यथोक्तसम्बन्धं यथोक्तमेकाश्रयत्वं च विनेति कथमस्य लक्षणत्वमित्याशङ्क्य तदव्याप्त्येव द्वयं विवक्षितमिति न दोषापत्तिरित्याह—कथंचित्सम्बन्धादिति । एवं लक्षणावयवैराभासव्यावृत्तिमुपदिश्य अनाभासहेतोरपि हेतुत्वमनिश्चितावस्थस्य दर्शनपदेन व्यावृत्तं तन्निश्चयस्यापि अनुमानोत्पत्तिसामग्र्यन्तर्भावोपपत्त्येत्याह—तथा दर्शनशब्दादिति । द्वितीयैकदेशपदेन मेयार्पकेण तस्य स्वतन्त्रावस्था व्यावर्त्येत्याह—एकदेशान्तर इति । अन्तरशब्देन द्वयोर्भिन्नाश्रितता नेत्याह—अन्तरशब्दादिति । किमर्थमसन्निकृष्टपदमित्यत्राह—एवं समाप्तेऽपीति । धीहेतूनामेव लक्षणत्वेनोपात्तत्वात् व्यावर्त्याभावाल्लक्षणान्तर्भावाभावेऽपि हेतुत्वाविशेषात्तदवगममात्रार्थं तद्ग्रहणं शिष्यकौशलार्थ-

क्तम् । तज्जिज्ञासितधर्मपरं परिशिष्टे व्याख्यातम् । जिज्ञासा च तद्धर्मत्वनिश्चये तद्विरुद्धधर्मत्वनिश्चये च नास्तीति नानुमा; यदि तु निश्चितेऽपि [1]मानान्तरतो निश्चयेच्छा, कथञ्चित् तदानुमोदेतीत्युक्तम् । प्रकरणे विरुद्धधर्मत्वनिश्चये तु[2] जिज्ञासापि न हेतुरित्यभिसन्धाय बाधित एव नानुमेति स्थापितम्, न तु साधिते तथा; गुरुनये हि सिद्धविषयमेवानुमानम्। परोक्तम्-"असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।" इति । न तत् तुल्यं द्वयम् । असत्प्रतिपक्षता च यथोक्तहेतुद्वयाद्विरुद्धसाध्यद्वये सन्देहापत्तेरिष्टा; सा त्वतुल्यत्वात् द्वयस्य प्रत्युक्ता; तुल्यत्वे वा वस्तु नित्यसन्दिग्धं स्यादिति दिङ्मात्रम् ।

### अनुमानद्वैविध्यम्

"तत्तु द्विविधम्" इत्यनेन व्यापि लक्षणमित्युक्तम्, अदृष्टस्वलक्षणेऽपि क्रियाशक्त्यादौ सामान्यरूपेण सम्बन्धग्रहणादेवानुमोत्पत्तेः । क्रियायां तावत्

---

मित्यर्थः । बाधितविषयव्यावृत्तिर्ज्ञातसम्बन्धपदेनैव सुलभेति भावः । कस्य हेतुत्वं तेनोक्तमिति शङ्कायामाह—तज्जिज्ञासितधर्मेति । तदभावादनुत्पत्तिविषयमाह—जिज्ञासा चेति । विषयद्वये विशेषमाह—यदि तु निश्चितेऽपीति । सत्प्रतिपक्षहेतुत्वाभासव्यावृत्त्यर्थमसत्प्रतिपक्षतापि लक्षणान्तर्भूतेति केचित्; तन्नेत्याह—असत्प्रतिपक्षता चेति । दिङ्मात्रमिति । न्यायशास्त्रोक्तप्रपञ्चापेक्षं द्रष्टव्यम् ।

"तत्तु द्विविधम्" इति किमर्थमित्यत्राह—"तत्तु द्विविधम्" इत्यनेनेति । व्याप्त्यभावशङ्कां तत्परिहारं च विवृणोति—अदृष्टस्वलक्षणेऽपीति । ज्ञातसम्बन्धत्वेऽनुमानाङ्गे लोकप्रसिद्धप्रत्यक्षायोग्यार्थविषयानुमाने लक्षणाव्याप्तिः शङ्किता—सम्बन्ध्यसिद्धौ सम्बन्धासिद्धेरिति; सामान्यरूपेणापि सम्बन्धग्रहणसम्भवाद्विशेषरूपेण प्रत्यक्षायोग्यमप्यनुमेयं स्यादिति लक्षणसमाध्यर्थतेत्यर्थः । कथं सामान्यसम्बन्धमात्रेण प्रत्यक्षानर्हावधारितविशेषनिष्ठमनुमानं स्यादिति शङ्कां क्रियानुमानोदाहरणेन परिहर्तुमाह—क्रियायां तावदिति । कार्यमागन्तुजमित्येतावन्मात्रग्रहेऽपि निरन्तरोत्पन्नसंयोगविभागरूपकार्यदर्शनादागन्तुहेत्वनुमाने दृष्टसमवायि-

---

१. मानान्तरापेक्षा. ख. २. Omitted. तु. ख.

कादाचित्कं ह्यागन्तुजं दृष्टम्; अतः संयोगविभागादागन्त्वनुमा; समवायिकारणस्य पूर्वस्थितेरसमवाय्यागन्तु, तत्कर्मेत्युच्यते। न च कर्मण आगन्तोरसमवाय्युपेयम्, तत्कर्मजस्यास्त्विति वाच्यम्। कर्मासमवायिहेत्वभिमतसंयोगस्तावन्नोदनाभिघातादिरूपोऽसमवायितया कार्यान्तरजनने निरूपितनियतस्वभावः—यत्स्वाश्रये स्वाश्रयसमवेते वा करोति, नान्यत्र।

असमवायिकारणभेदाः

अवयवसंयोगः स्वाश्रयेऽवयविनम्; प्रचयाख्योऽवयवसंयोगः स्वाश्रयसमवेतेऽवयविनि महत्त्वम्; तन्तुतुरीसंयोगः पटतुरीसंयोगं जनयन्नेकदैव स्वाश्रयतत्समवेतयोः— न सोऽपि नियममतिक्रामति। तथा गुरुत्वद्रवत्वसंस्काराः कर्महेतवः; तेऽपि न नियममतिक्रामन्ति। अवयवगुरुत्वं स्वा-

---

नोऽनागन्तुत्वसिद्धेः परिशिष्टमसमवायिकारणमागन्त्वित्यनुमानपर्यवसानाददृष्टस्वलक्षणविषयं तत्स्यादित्यर्थः। नन्वेवमप्यदृष्टविषयमनुमानं न स्यात्, दृष्टस्यैवागन्तोस्तत्र तत्र भावात्; कर्मानुमानवादिनापि यत् तदसमवायिकारणमाश्रयणीयं दृष्टं दृष्टविषयानुमानसिद्धं वा, तस्यैव संयोगविभागकारणत्वसम्भवादिति शङ्कामपाकरोति—न च कर्मण आगन्तोरिति। कर्मासमवाय्यभिमतसंयोगे प्रथमं तदसम्भवहेतुमाह—कर्मासमवायिहेत्वभिमतेति। यद्यपि पटादिहेतोस्तन्त्वादिसंयोगस्य तत्कर्तृकव्यापारपूर्वकत्वात् क्रियाजन्याभिमतसंयोगस्य पूर्वभावित्वात् प्रचुरदृष्टत्वात् सन्तानवर्तितया स्पष्टदृष्टत्वाच्च तत्कारणावधारणस्य पूर्वप्राप्तत्वात् तदनुवर्तित्वं द्रव्याद्युत्पत्तिहेतोः स्वतो युक्तम; तथापि तदुत्पत्तिहेतुसंयोगस्य तत्कारणत्वं निरूपणार्हम्, इतरकारणं तु पूर्वदृष्टपूर्वदेशप्रतियोगिकसंयोगान्तरमुभयाश्रितमेकवर्त्येव कार्यं कुर्यात्, नेतरवर्तीति विषमस्वभावं दुर्निरूपमिति—पूर्वं द्रव्योत्पत्तावसमवायिकारणसंयोगस्य निरूपितनियतस्वभावत्वात्, परिमाणकार्ये चान्यथानिरूपितनियतस्वभावत्वात्, संयोगान्तरकार्ये स्वाश्रयापेक्षया विषमस्याप्युभयनियतस्वभावमेलनमात्रेणैवान्यथात्वात्, स्वभावान्तरकल्पनाहेत्वभावात्, क्लृप्तस्वभावाहानार्थं दृष्टसंयोगव्यतिरिक्तमेवासमवायिकारणमनुमेयमित्यर्थः। कर्मासमवायिहेत्वभिमतगुरुत्वादेश्च कर्मकार्यहेतुत्वमाह—तथा गुरुत्वद्रवत्वसंस्कारा इति। वेगभावनयोः साधारणं संस्कारत्वं स्वकारणसमस्वभावकार्यकरत्वमभिप्रेतम्। ननु कर्मनामकासमवाय्यनु-

---

१. घातकरूपः. क.

श्रयसमवेतेऽवयविनि गुरुत्वं करोति। तथावयवद्रवत्वादवयविद्रवता। संस्कारोऽप्यात्माश्रयः[1] स्वाश्रये स्मृतिं करोति। वेगाख्योऽपि संस्कारतया तथा। एवं नियमानतिक्रमात् कर्महेतुभ्यः कर्मजन्यसम्भावना मानहता। कर्मणि त्वपूर्वे नियमोऽयं नावधृत[2] इत्यतद्विधेऽपि देशे तज्जन्यं युक्तम्। नन्वसमवायिकारणतया संयोगादे[3]रयं नियमः; अत एवार्थेन्द्रियसंयोगादिरतद्विध आत्माश्रये धीकार्येऽतिक्रान्तनियमः। युक्तं चेदम्, समवायिनि द्विधा प्रत्यासत्तिरसमवायिनस्तदसमवायतत्कारणसमवायरूपेष्यते। स चेन्नियमोऽत्र कार्ये कर्मकल्पनेऽपि हेयः किं कर्मणा? तन्न, न तावदसमवायिहेतोरयं नियमः, वेणुदलविभाग[4]जे खदलविभागेऽतिक्रमात्, द्वित्वाद्युत्पत्तौ च। प्रत्यासत्तिस्तु समवाय्यन्तर्भावात्, न त्वसमवायिबहिर्भावनियमात्। किञ्च यद्यसमवा[5]यितामात्रेणायं नियमोऽवधार्येत, कर्मजन्यं कार्यमसमवायिशून्यं स्यात्।

---

मानेऽप्युक्तनियमस्य त्यागस्याहेयत्वे लाघवाद्दृष्टसंयोगस्यैव तन्नियमत्यागेन तत्कार्यकरत्वमस्त्विति शङ्कामक्लृप्तस्वभावत्वात्तस्य तत्त्यागो न दोष इति कर्मानुमानमेव युक्तमिति परिहरति—कर्मणि त्वपूर्व इति। नन्वसमवायित्वप्रयुक्तमिदं नियताश्रयकार्यकरत्वम्, न संयोगादिप्रयुक्तम्; निमित्तकारणेऽर्थेन्द्रियसंयोगे नियमत्यागदर्शनात् द्वेधा समवायिप्रत्यासत्त्युपगमाच्चासमवायिनस्तत्फलत्वान्नियमस्येति चोदयति—नन्वसमवायीति। परिहरति—तन्न, न तावद .मवायीति। न्यायशास्त्रोपगतविभागजविभागे द्वित्वादौ च व्यभिचारान्नासमवायिप्रयुक्तता नियमस्योपेता; समवायिप्रत्यासत्त्युपगमोऽपि न तन्नियमापादक इति न कर्मानुमानेऽपि नियमबाधापादनावकाश इत्यर्थः। यद्यपि व्यभिचारो न स्यात्, तथापि युक्तिबलेनैवासमवायिमात्रधर्मत्वमस्य नियमस्य निराकर्तुं शक्यमित्याह—किञ्च यद्यसमवायितेति। संयोगादिरूपासमवायिन एवायं नियम इति विशेषणाग्रहे कार्यस्यासमवायिजन्यत्वनियमबाधापत्तेः तदबाधार्थं तत्पूर्वकनियमान्तरे विशेषमात्राङ्गीकारो युक्त इत्यर्थः।

---

१. स्वाश्रय······ति. क. २. इत्येतद्विधे. क, ख. ३. गादेः. क, ख.

४. भागज दल. क, ख. ५. वायिमात्रेण. क, ख.

संयोगादेर्दृष्टस्यासमवायिनोऽयं नियमो नासमवायितामात्रस्येति [1]स्वीकृते द्वयं [2]सुस्थम्। असमवायिनियतता सर्वकार्याणाम्; असमवायिनां दृष्टानां नियताश्रये कार्यकारिता च; द्वैधासत्त्युपगमो दृष्टासमवायिन्येव। नन्वदृष्टं स्थाणावपि कल्प्यताम्; यावदसमवायिविषय एव नियमोऽस्तु। तन्न, यदि तावदेकमेव स्थाणुश्येनाद्याश्रितं तन्नानास्वभावं स्यात्—श्येनं प्रति देशान्तरप्रापकं स्थाणुं प्रति नेति। अथ द्वयं कल्प्यं नानास्वभावम्, तन्न, विभागोपक्रमे संयोगे द्वयाश्रितेऽप्येकस्मिन् कार्ये लाघवतर्कसहायैकासमवाय्यनुमा युक्ता। लाघवादेव श्येने, स्थाणौ हि कर्मणि क्लृप्तेऽपि विभागांशस्य स्थाणवनाश्रितस्य कृते कर्मान्तरं श्येनेऽपि कल्प्यं स्यात्। नियमे [4]तु दृष्टासमवायिगतेऽपि व्यवस्थिते लाघवमेव। यत्तु केनचित् दृष्टासमवायिन्यपि नियमासिद्धिरुद्भाविता—तन्तुद्वयसंयोगात्तन्त्वनाश्रितोऽपि पटः कार्यं दृष्ट-

---

नन्वेवमप्युपगतासमवायिस्वभावबाधोऽपरिहार्यः, द्वेधा समवाय्यासत्तेस्तत्स्वभावतयोपगमात् कर्मणश्च तदभावादित्याशङ्क्य तदुपगमोऽप्यदृष्टस्वलक्षणातिरिक्तविशेषविषय एव, नासमवायिमात्रविषयः; तेन कर्मणः समवाय्येकदेशमात्रसमवायादसमवायिमात्रापेक्षया त्रेधा प्रत्यासत्तिरेवेष्टेत्याह—द्वैधासत्त्युपगम इति। ननु कर्मणोऽदृष्टत्वावगमे तद्गौरवद्वयहानार्थं स्थाणुश्येनसंयोगकृत् कर्म स्थाणावप्यनुमेयं स्यात्, यथादृष्टस्वभावस्यैवासमवायिनोऽनुमानार्हत्वादिति लोकप्रसिद्धिविरोधमापादयति—नन्वदृष्टं स्थाणावपीति। परिहरति—तन्न यदि तावदेकेति। द्वयाश्रितैककर्मानुमानं तावदशक्यम्, तत्कार्यापेक्षयापि द्वयोरैकरूप्यापत्तेः; विलक्षणस्वभावकारणद्वयानुमानमेककारणार्हकार्यस्यानेकानुमापकत्वायोगादयुक्तमिति तदर्हश्येनवर्त्येवानुमेयमित्यर्थः। न च कर्मण्यसमवाय्यन्तरदृष्टनियमानङ्गीकाराद् गौरवापत्तिः, दृष्टस्थानातिक्रमस्यैव गौरवकरत्वात्; तदनतिक्रमो लाघवकर एवेत्याह—नियमे त्विति। दृष्टोपाधिप्रवेशोऽदृष्टकल्पनातो लघुरित्यर्थः। दृष्टासमवायिन्यपि परापादितनियमासिद्धिमनूद्य तत्सिद्धिमाह—यत्तु केनचिदिति। पूर्वपूर्वखण्डा-

---

१. Omitted. असमवायिनः क.　　२. Omitted. स्वीकृते. क.
३. स्वस्थम्. क. ख.　　४. नियमेऽपि. क.

मिति, तन्न; तन्तुजखण्डावयवितन्तुसंयोगजो हि पटः स्वाश्रय एव दृष्टः। एवं द्व्यणुकत्रयसंयोगे त्र्यणुकहेतौ योज्यम्।

कर्मणः लैङ्गिकत्वप्रसाधनम्

नन्विन्द्रियानन्तरं स्फुरत्कर्म नासति बाधके लैङ्गिकं युक्तम्। तन्न, लिङ्गातिरिक्तस्वलक्षणास्फूर्तेः; स्फूर्तिविवादे चायं निर्णयः—रूपिद्रव्याश्रितेष्वपि कार्यगम्यं चक्षुरादेर्नियतग्राहित्वम्; तत्र किं कर्मग्राहित्वमपि कल्प्यताम् उत क्लृप्तं लिङ्गमेव तद्ग्राहीति? लाघवाल्लैङ्गिकत्वे स्थिते क्षणभेदाग्रहादनन्तरताभिमानः। एवंविधे सर्वत्र हि इयमेव युक्तिरिति दिङ्-

---

वयव्यविनाशे हि तत्तत्प्रतियोगिका एवोत्तरोत्तरावयवसंयोगा इति तत्कार्यावयविनोऽपि तत्समवाय्याश्रिता एवेति न नियमातिक्रमः; न च तन्नाशकास्ते संयोगा इत्यर्थः। ननु त्र्यणुककार्यं द्व्यणुकत्रयसमवाय्येवोपेयम्, अवयवबहुत्वस्यैवात्र महत्त्वकारणत्वादिति तत्र नियमातिक्रम इत्यत्राह—एवं द्व्यणुकत्रयेति। स्वसमवायिसमवेतमेव बहुत्वं महत्त्वकारणमित्यनुपगमान्न तदुत्पत्तिविरोधः, क्रमेणापि सूक्ष्मबहुतरतन्त्वारब्धपटस्याल्पस्थूलतन्त्वारब्धान्महत्त्वदर्शनात् समवायिसमवाय्यपेक्षयापि तत्कोटिनिविष्टं बहुत्वं स्यादेव महत्त्वोत्पत्त्यर्हमित्यभिप्रायः।

नन्वेवमपि प्रत्यक्षत्वप्रसिद्धिविरोधो दुर्वार इत्याक्षिपति—नन्विन्द्रियानन्तरमिति। परिहरति—तन्न लिङ्गातिरिक्तेति। नेन्द्रियसन्निकर्षमात्रं कर्मधीहेतुः, देशभेदास्फूर्तौ दूरवर्तिपुरुषादिदृष्टौ तदभानात् तत्रैव तिर्यग्गतेस्तद्दृष्टौ च तद्भानात् नौस्थस्यापि तन्मात्रव्यापृतदृष्टेरभानात् देशभेदस्फूर्तौ च भानात् तत्सहकार्यपेक्षयैन्द्रियकभानविवादे तत्पक्ष इन्द्रियशक्तिकल्पनापत्तेः, तद्धानार्थं लैङ्गिकत्वनिश्चयात्, प्रसिद्धेरन्यथासिद्धिरुपेयेत्यर्थः। गुरुत्वादावुपगतश्चायं निर्णयप्रकार इत्येवंविध इति दर्शितम्। गुरुत्वे तद्धारणयत्नभेदस्य सर्वप्रसिद्धत्वादस्तु तदनुमेयत्वम्, कर्मणि त्वनुमेये यथोक्तयुक्त्यकुशलानां गतिव्यवहारासिद्ध्यापत्तिः प्रत्यक्षत्वापादिकेति शङ्काहानार्थं दिङ्मात्रमित्युक्तम्। देशान्तरसंयोगविभागसन्ततिमात्रविषयतयापि तदुपपत्तेर्न कर्मणोऽनुमेयत्वक्षतिरिति भावः। केचित्तु आन्तरज्ञानादिमदात्मसंयोगादान्तरेच्छाद्वेषसुखदुःखादिकार्यनियमात् आन्तरप्रयत्न-

मात्रम् । य[1]स्तु प्रयत्नवदात्मदेहसंयोगस्यान्तरस्य बहिःकार्यं नेति नियमात् समा[2]धिः, स तु न, उक्तनियमासिद्धेः, सुखवदात्मदेहसंयोगाद्बहिर्देहदेशे रोमाञ्चादिदर्शनादव्यापित्वाच्च, [3]आन्तराभिघातादिसंयोगस्य बहिःकार्यार्हत्वात् ।

शक्तेश्च अनुमेयता

तथा[4] शक्तावप्यनुमैकगम्यतेदं, कुण्ठदशायामजनकस्य कुठारस्य तैक्ष्ण्यातिशयवतः कार्यदर्शनात्; अग्नेर्मन्त्रादियोगदशायामजनकस्य दाहकार्यं सातिशयस्यैवेत्यतिशयानुमा, सोऽतिशयः शक्तिरित्युच्यते । अथ जनकेऽप्यग्नौ मन्त्राद्यप्रयोगस्यापि हेतुत्वान्म[6]न्त्रप्रयोगे न सामग्रीति न कार्यम् । तन्न, अप्रयोगस्याभावत्वात् सर्वकार्याणां च भावरूपकारणनियतत्वदर्शनात् अभावरूपस्य क्वचिदपि कार्यजनकत्वाश्रयणायोगात् । अयं भावः—भावाभावयोः भाव-

---

वदात्मदेहसंयोगादप्यन्यद्रव्यकार्यायोगात् देशान्तरसंयोगासम्भवात् देहस्थकर्मैवोत्पत्त्यर्हमित्याहुः; तन्मतमुपन्यस्य निरस्यति तदङ्गीकारभ्रान्तिहानार्थम्—यस्तु प्रयत्नवदात्मेति । शक्तिविषयेऽप्यदृष्टस्वलक्षणानुमानं समर्थयितुमाह—तथा शक्तावपीति । अन्वयव्यतिरेकावधारितसहकारिमत एवाग्नेः परनिमित्तस्वकार्याजनकत्वदर्शनात् तद्दशाननुगतातिशयवत्त्वं जनकदशायां परशुदृष्टान्तेनानुमेयमित्यदृष्टस्वलक्षणा शक्तिरनुमानार्हेत्यर्थः । ननु अन्वयव्यतिरेकाभ्यां तदभावस्यापि तद्भावे सामग्र्यन्तर्भाव एवैवं स्यात्, न तदनादरेण सहायान्तरमनुमेयमिति शङ्कयति—अथ जनकेऽप्यग्नाविति । कार्यस्वभावावधारितभावकारणकत्वहानापत्तेर्नैतदित्याह—तन्न अप्रयोगस्येति । नन्वन्वयव्यतिरेकावधार्ये कारणत्वे कथं तदतिलङ्घनेन भावकारणत्वनियमोऽवधार्यतेत्याशङ्क्य अभिप्रायमाविष्करोति—अयं भावः भावाभावयोरिति । न तावदभावस्य सर्वप्रकारकारणत्वनिषेधेनास्माभिः शक्तिः समर्थ्यते; यतः प्रतिबन्धक्षयेऽपि शक्त्युद्भावकभावहेत्वभावात् कार्यासिद्धिरापतेत्; तत्राभावस्य स्वतन्त्रकारणत्वादस्तु कारणत्वम् । यस्त्वभावः

---

१. यत्तु. ख.
२. समाधिस्तुनो. क.
३. अन्तरा. क.
४. तथा. च. क.
५. प्युक्तेऽग्नौ. ख.
६. Omitted मन्त्र. क.

हेतुकयोरेवाभावोऽपि सहकारी वाच्यः, मुद्गरपाताभावे घटोत्पत्तेः, तन्न, पाताभावे हि भावहेतुसाकल्यादेव घट इति नाभावस्यापि हेतुताश्रयणम्, अन्यत्रातः शक्तिसम्बन्धविषयेऽपि नाभावस्य हेतुतेति परमदृष्टस्वलक्षण-हेतुकता । न चादृष्टं सर्वहेतुः सिद्धमिति नापरा शक्तिः कल्प्येति वाच्यम् । उक्तं हि–जनकदशायामतिशयवत्ता दृष्टेति अन्याश्रित एव धर्मः कल्प्य इति आत्माश्रितादृष्टहेतुतासिद्धावपि शक्तिः कल्प्येति । न च अतिशयनाशाद-जनकतास्तु—अभिभवे कथम् ? अभिभवस्यानिरूपणात्—इति वाच्यम्; यथा शक्तिः कार्यैकनिरूप्या तथा पुन कार्योत्पत्तिगम्योऽवस्थाभेदोऽभिभव

---

सहकारितया कारणत्वाहः तस्यैवाकारणत्वमुच्यते, तदन्वयव्यतिरेकभाजां च सर्वेषां भावाभावरूपकार्याणां निर्धारितभावकारणकानामेव प्रतिबन्धकोपाधौ तत्कार्यादर्श-नात् तदुत्तरकाले तदभावोऽपि पूर्वावगतभावकारणकानां सहकारी, यदभावात्तत्र कार्यानुत्पत्तिरिति कारणत्वमभावस्याश्रयणीयम्; न सहैव, प्रतिबन्धकानवगमे तदभावावगमायोगात्; तथा च न कारणत्वमुपेयम्; मुद्गरपातादिप्रतिबन्धकस्य सामग्रीनिवर्तकतयैव प्रतिबन्धकत्वान्मणिमन्त्रादिप्रतिबन्धकस्यापि तथैव प्रतिबन्ध-सिद्धौ तदभावस्य कारणत्वाश्रयणे हेत्वभावात् । तेनादृष्टस्वलक्षणकारणसिद्ध्यपेक्ष-त्वात् प्रतिबन्धकत्वसिद्धेर्न तदभावदृष्टेरनुमानविरोधितेत्यर्थः । नन्वेवमपि प्रसिद्धा-दृष्टातिरिक्तादृष्टानुमानासिद्धिरिति शङ्कामपाकरोति—न चादृष्टमिति । कारण-विशेषं प्रति हि प्रतिबन्धकत्वमन्वयव्यतिरेकसिद्धमिति प्राप्ताजनकभावकारण-विशेषवर्त्येवादृष्टं कुठारदृष्टान्तेनानुमेयामिति स्याच्छक्त्यनुमानसिद्धिरित्यर्थः । नन्वजनकावस्थाननुवर्त्यत्रादृष्टमनुमेयमिति कथं शक्तिमत एव तदभिभवादजनकत्वं क्वचिदित्युच्यत इति शङ्कमानं प्रत्याह—न चातिशयनाशादिति । प्रतिबन्धकापग-मात् कार्यकरत्वदर्शने शक्त्यनुवृत्तेरावश्यकत्वादभिभवोऽपि कार्यकल्प्य एव; स च तत्समवायमात्रनिवृत्तिरूप इति तदवगमे समवायिद्वयेनैव प्रतिबन्धकनिवृत्त्या-गन्तुकसचिवेन पुनः स्यादिति तदुपगम इति भावः । नन्वभावानङ्गीकारात् कथं

---

१. स्यापिनि. ख.

इत्युच्यते । अत्र परसिद्धमभावमुपेत्य हेतुता निरस्ता । अनुपगमे तु दूरोत्सारिता । अत एव गुरुनये—संयोगाभावात् पतनम्, भेदाग्रहात्प्रवृत्तिः; विद्ध्यतिक्रमात् प्रत्यवायः, नञर्थान्नियोगसिद्धिरित्याद्यननुयोगः । भाव-भेदादेव हि सर्वत्र कार्यम्, अभावानुपगमात् । एकदेश्यपि शक्तिवादी विद्ध्यति[1]क्रमे नाभावात् प्रत्यवायमाह—

"स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः ।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ॥"—

प्रतिबन्धकाभावस्य हेतुत्वनिरासः

इत्याह । परोक्ता प्रतिबन्धकाभावस्याहेतुत्वे युक्तिः—विरोधिप्रयोगे सत्युत्तेज-कमन्त्रेऽपि कार्यं न स्यात्, अथ विरोधिमन्त्रवदुत्तेजकमन्त्राभा[2]वेऽपि प्रति-

---

तदकारणत्वाद्युक्त्यवकाश इत्यत्राह—अत्र परसिद्धमिति । तदङ्गीकारेणापि शक्ति-समर्थनस्य सुकरत्वप्रदर्शनार्था तदुक्तिरिति न दोष इत्यर्थः । यत एवाभावाङ्गीका-रेण यथोक्तविषय एवाभावस्य कारणत्वं निराक्रियते, अत एवानीदृशविषयेऽनेकत्र कारणत्वव्यवहाराविरोध इत्याह—अतएव गुरुनय इति । वस्तुतस्तु तत्रापि भावस्यैव कारणत्वमिष्टम्, अभावानङ्गीकारादित्यकारणत्वोक्तेरुक्ताभिप्रायत्वमेव द्रढयति—भावभेदादेव हीति । प्रामाणिकाभावादिनापि शक्तिसमर्थनद्वारमभाव-स्याकारणत्वव्युत्पादनमेव तत्कारणत्वेन परैस्तद्दूषणादाश्रितमिति तदभ्युपगमे-नापि युक्तं तन्निराकरणमित्याह-एकदेश्यपीति । तेन तु स्वविपरीतभावनिष्पादकस्व-भावाभावात् प्रधानकारणत्वमेव निषिध्यते भावव्यावर्तकतया तत्सहकारित्वमा-त्रमङ्गीकृतमिति प्रधानकारणतयोक्तविध्यतिक्रमरूपाभावस्यापि स्वकालस्थभाव-निरूपकतयैव कारणत्वम्, न साक्षादेवेति तदविरोधार्थमिदमुक्तमित्यनेनोच्यते । कथं तर्हि प्रतिबन्धकाभावस्यापि तादृशाकारणत्वसम्भवात् तन्निरासेन शक्तिः समर्थ्यत इत्यत्राह-परोक्ता प्रतिबन्धकाभावस्येति । भावद्वारेण कारणत्वसम्भवेऽपि मणिमन्त्रौष-धादीनां प्रतिबन्धकानां बहुत्वात्तदभावानामपि बहुत्वे तद्भावेऽपि तत्तद्विरोध्यन्ययो-

---

१. क्रमेणाभावात्. क. २. भावो न प्र. ख.

बन्धकः, उत्तेजके सति तन्निवृत्तेः कार्यम्, तर्हि उत्तेजकाभावे विरोध्यभावेऽपि कार्यं न स्यात्, अथ विरोधिविशिष्ट उत्तेजकाभावः प्रतिबन्धकः, तर्हि बहु कल्प्यम्, वरं शक्तिकल्पनास्तु। तन्न, प्रमाणाविरुद्धं बहु कल्प्यमेवेति अभावस्याहेतुत्वं यथोक्तमानविरोधादिति दिक्। एवमग्न्यादौ सिद्धा शक्तिर्भावान्तरेष्वपि कार्यकरेष्वनुमानसिद्धा। सा च नित्याश्रया नित्यैव अनित्याश्रयाश्रयहेतुजा। संस्कारस्तु नित्येष्वप्यनित्यः हेत्वन्तरादनित्येष्वपि। सर्वशक्तौ तु 'कार्ययोग एव शक्तेरुद्बोधः' इति यदुक्तम्, तत् उद्भवधीस्तदैवेत्येवमविरोधः। क्वचिच्छक्तिनाशः क्वचिदभिभव इति च सर्वशक्तिनयो-

गेऽपि कार्योत्पत्तेस्तदभावापेक्षत्वादिकल्पनातः शक्तिकल्पनैव लघ्वीति समर्थ्यत इत्यर्थः। तदनुपगमकारणमाह—तन्न प्रमाणाविरुद्धमिति। बहूनामप्यन्वयव्यतिरेकसिद्धेः शक्त्युपगमेऽपि प्रतिबन्धकस्य तद्विरोधितयोपेयत्वाच्चादृष्टकल्पनातः तदङ्गीकार एव लघीयानिति पूर्वोक्तैव विधोपेयेत्यर्थः। नन्वेवं स्वपक्षेऽपि प्रतिबन्धकनिरूप्यकेवलकारणावस्थाया एव प्रत्यक्षदृष्टायाः कार्योत्पादकव्यवस्थापकत्वापत्तेर्न शक्तिसिद्धिरिति शङ्कानिवृत्त्यर्था दिगुक्तिः। प्रत्यक्षदृष्टमण्यादिप्रतिबन्धे तत्सम्भवेऽपि विशेषावस्थानापादकमन्त्रादिप्रतिबन्धे तद्धीनावस्थानुपगमान्न शक्त्यसिद्धिः; परपक्षे त्वभावस्य तत्राप्यविशेषात्तदसिद्धिरिति भावः। नन्वेवमपि सर्वकारणेषूक्तप्रकाराभावात् कथं तत्र शक्त्यङ्गीकार इत्याशङ्क्य तत्पूर्वकानुमान्तराधीन इत्याह—एवमग्न्यादाविति। कुर्वदकुर्वद्विभागस्याग्न्यादौ तत्प्रयोजकातिशययोगायोगकृतत्वनिश्चये धर्मिभेदेनापि तद्विभागे तदेव निमित्तं स्वतः प्राप्तमित्यनुमानान्तरापत्तिरित्यर्थः। कीदृशस्तत्र तद्योगप्रकार इत्यत्राह—सा च नित्याश्रयेति। संस्कारस्यापि कार्यजनकत्वप्रयोजकत्वाप्रयोजकत्वोपगमात् ततो विभागमाह संस्कारस्त्विति। सर्वशक्त्यधिकरणोक्तशक्त्युद्भवस्य पूर्वोक्तादन्यत्वदोषं परिहरति—सर्वशक्तौ त्विति। ननु शक्तिस्वरूपसमर्थनकाले नाशाभिभवविभागोक्तिरजनकावस्थाव्यावृत्तजनकावस्थामात्रवर्त्यतिशयानुमानानुपयोगादनर्थिकेत्याशङ्क्य अन्यार्था सा, न स्वरूपानुमानोपयोगाभिप्रायेणेत्याह—क्वचिच्छक्तिनाश इति। अत्र भाष्ये सामा-

१. Omitted. सति ख.    २. याश्रयहेतुजा. क.

पयोगी; इह तु सर्वत्र नाशोत्पत्त्युपगमेऽपि न दोषः। यत्र हि क्रियाहेतोः फलसिद्धिनिश्चयः तत्क्रियानुमानपूर्विकाऽन्यत्रापि क्रिया फलानुमेयेति वक्तुं भाष्ये "देवदत्तस्य गतिपूर्विकाम्" इत्युक्तम्। यदि त्वादित्येऽपि गतिहेतोः फलसिद्धिः शक्यनिश्चया, तदाऽनादरोऽन्यपूर्विकतायाः। गतिनियततास्मृतितोऽनुमितेर्गतिस्मरणमुक्तं भाष्ये।

परार्थानुमानम्

परार्थानुमान[1]वाक्यस्येयमेव सामग्री वाक्यार्थः। अबाधितार्था एकदेशान्तरार्था च प्रतिज्ञा; साध्ये हि ज्ञाते सत्यबाधितधीरेकदेशान्तरधीश्च; न तु साध्यबोधनार्था प्रतिज्ञा सामग्रीत एव साध्यबोधोत्पत्तेः स्वानुमायामिव;

---

न्यतोदृष्टानुमानमादित्यगतिविषयमुक्तं देवदत्तगतेः प्रत्यक्षविषयतोक्त्येति तद्विरुद्धं नित्यानुमेयकर्मपक्षाश्रयणमित्याशङ्क्य अविरोधमाह—यत्र हि क्रियाहेतोरिति। उभयात्रानुमेयत्वविवक्षयापि कारणानुमानस्य दृष्टव्यतिरिक्तविषयतया क्रियाविषयत्वनिश्चयो देवदत्ते सुकरः, नादित्य इत्यभिप्रेत्य पौर्वापर्योक्तिर्युक्तेति न तद्विरोधः शक्यापादन इत्यर्थः। नन्वादित्यस्यापि पूर्वदेशाद्विप्रकृष्टदेशप्राप्तिर्मध्यस्थनिरन्तरसंयोगविभागसन्तानपूर्विकेत्यन्यदेशान्तरप्राप्तिवदनुमानसिद्धमिति तुल्यकालतैव स्यादित्याशङ्क्य तदापि तत्प्रकटनेन गतिकारणकत्वस्य वाच्यत्वात् पौर्वापर्याविवक्षया स्वतःप्राप्तविधान्तराश्रयणेनास्तु तदुक्तिरिति परिहरति यदि त्वादित्येऽपीति। गतिस्मरणमित्यनुमानविवक्षया निर्देशोपपत्तिमाह—गतिनियततेति।

एवमनुमानभाष्यार्थं प्रदर्श्य तदवधृतेर्वाक्योत्थाप्यतत्सामग्रीद्वारकपरसम्बोधनफलावसायित्वात्तदुत्थापकवाक्यविषयविवादजनितसंशयनिरासे च तत्सम्भवात् तदर्थं तद्वाक्यविषयं तावदाह—परार्थानुमानवाक्यस्येति। ततः प्रतिज्ञायाः तद्वाक्यान्तर्भावः सिद्ध इत्याह—अबाधितार्थ इति। ननु साध्योक्तिरूपा प्रतिज्ञेति तज्ज्ञानार्था तज्ज्ञानस्य च सामग्रीमात्रालभ्यत्वादनर्थिकेति शङ्कां तदनङ्गीकारेण परिहरति—न तु साध्यबोधनार्थेति। हेतुदृष्टान्ता-

---

१. फलासि. क, ख.  २. Omitted अनुमान. क.

सम्बन्धनियमार्थो दृष्टान्तः; एकदेशदर्शनार्थो हेतुः; एवं त्र्यवयवता। हेतुदृष्टान्तयोः पौर्वापर्ये न नियमः, नियमस्मृ[1]तिपूर्वके तत्परके वैकदेशदर्शनेऽनुमोत्पत्तेः। एवं प्रतिज्ञया सह हेतुदृष्टान्तयोर्न पौर्वापर्ये नियमः। प्रायेण प्रतिज्ञा च [2]यदग्रे, तज्जिज्ञासोत्पादात्सुखमनुमोत्पत्त्यर्थम्, न तु सामग्रीत्वात्; यथा स्पष्टार्था—'यो यः स सः' [3]इति वीप्सा, 'अग्निमानेव' इत्यवधारणा च। एवं च यत्तत्पदे अपि किञ्चित्स्पष्टार्थे। पूर्वोच्चारणस्वरसादपि लिङ्गमुद्देश्यरूपं लभ्यते। परत उच्चारणे यत उद्देश्यता। वाक्यं च—'पर्वतोऽग्निमान्, "यो यो धूमवान् सोऽग्निमान् महानसादिः,' 'धूमवांश्चायम्'

---

न्तर्भावोऽविवादसिद्ध इत्याह—सम्बन्धनियमार्थ इति। एतावतैव सामग्रीपूर्तेर्नावयवान्तरमुपेयमित्याह—एवं त्र्यवयवतेति। तत्र क्रमनियमाङ्गीका रश्चास्माभिर्नेष्यत इत्याह—हेतुदृष्टान्तयोरिति। ननु प्रतिज्ञाया अनियतक्रमत्वमयुक्तम्, पूर्वोक्तेः सर्वाभ्युपेतत्वादित्यत्राह—प्रायेण प्रतिज्ञेति। सामग्रीत्वेनास्माभिः पूर्वत्वं निषिध्यते, जिज्ञासोत्थानेनोपयोगो न निवार्यते वीप्सोक्तिरिव। स्पष्टार्थवीप्सायाः सौकर्यमात्रार्थतोक्त्यैव यत्तत्पदस्वरूपोक्तेरपि तत्कोटितयैवाङ्गीकार इत्याह—एवं च यत्तत्पदे अपीति। यत्तत्पदयोरुद्देश्यविधेयत्वोपदर्शकतया व्याप्तिधीकरत्वम्; विधेयस्योद्देश्यव्यापकतयैव स्वपदप्रतिपाद्यत्वात्। 'धूमवानग्निमान्' इति पूर्वोक्त्याप्युद्देश्यता प्रतीयत एव, पदक्रमानुवर्तित्वात् स्वतोऽन्वयप्रतीतेः। तेन तद्व्यञ्जकतया यत्तत्पदयोरपि तदुपयोग इति पूर्वप्रयोगलब्ध उद्देश्यत्वे तदनुक्तिर्न दोष इत्यर्थः। नन्वेवं पदमात्रलभ्यार्थसूचकत्वमात्रं यत्तत्पदयोः स्यादित्यव्ययवदनभिधायकत्वापत्तिरित्यत्राह—परत उच्चारण इति। यदोद्देश्यपदं परत्रोच्चार्यते विधेयपदं च पूर्वम्, तदा यच्छब्दादेवोद्देश्यत्वधीरिति नान्वयसाम्यमित्यर्थः। तत्र दृष्टान्तस्य पूर्वप्रयोगे प्रयोगप्रकारमाह—वाक्यं च पर्वतोऽग्निमानिति। हेतुत्वार्थो विभक्त्यादिस्तदा न प्रयोज्यः, आकाङ्क्षान्तरपूरकतया तदा हेत्ववतारादित्यर्थः। संक्षेपोक्त्याश्रयणेन

---

1. Omitted स्मृति—नियम. क. 2. तदग्रे. क, ख.

3. Omitted इति. क, ख.

इति । संक्षेपपक्षे—[1]पर्वतोऽग्निमान् धूमवत्त्वात् महानसवदिति । धूमवत्त्वादित्युक्तेऽर्थात् सम्बन्धिनियतता धूमस्याभिप्रेतावगम्यते । एवं 'पर्वतोऽग्निमान्,' 'यो यो धूमवान् सोऽग्निमान्' इत्युक्तेऽर्थात् धूमवत्त्वादित्यभिप्रायधीः । एवमङ्गुल्यादिनिर्देशेऽभिप्रायधियाऽनुमोत्पादसिद्धिः । एवमवाचकादिप्रयोगेऽप्यभिप्रायधियां; किन्तु योग्यवाक्याज्ञता वक्तृदोषः ।

न्यायमतनिरसनम्

पञ्चावयवता तार्किकोक्ता न मता । प्रतिज्ञाहेतुदृष्टान्तानन्तरम् 'धूमवांश्चायम्' इत्युपनयः 'तस्मादयमग्निमान्' इति नि[2]गमः—द्वयं व्यर्थम्, 'धूमवत्त्वात्' इत्युक्तेः 'धूमवांश्चायम्' इति पुनरुक्तिः, 'तस्मादयमग्निमान्' इति च पुनरुक्तिः । वैधर्म्यदृष्टान्तं [3]केचिदाहुः—'यत्राग्निर्नास्ति, तत्र धूमोऽपि [4]नास्त्येव' इत्येवम्, तदपि व्यर्थम्, साधर्म्यदृष्टान्तादेव नियततासिद्धेर्वि[5]पक्षे निवृत्तिरुक्तैव । सपक्षवृत्तिता [6]पक्षवृत्तिता च हेतूक्त्यैवोक्ता—इति त्रिरूपतया हेतुतासिद्धिः ।

---

व्याप्त्युक्त्यभावे हेतुः पूर्वमित्याह—संक्षेपपक्ष इति । व्याप्त्यप्रतीतेस्तत्रानुमेयाप्रतीतिदोषं परिहरति—धूमवत्त्वादित्युक्त इति । हेतुत्वधीसामर्थ्याद्व्याप्तिविवक्षावगमात् संक्षेपोऽपि न दोषः इत्यर्थः । संक्षेपपक्षे दृष्टान्तोक्त्याक्षेपसिद्धेः हेत्वनुक्त्यापि क्वचिद्वाक्यपूर्तिरित्याह—एवमिति । अभिनयादिना हेतुबुद्ध्युत्पादेनापि क्वचिदनुमेयमित्यापादनमित्याह—एवमङ्गुल्येति । अतश्चावाचकोक्तावपि नानुत्पत्तितो निग्रहाङ्गीकारो न्यायशास्त्र इत्याह—एवमिति । नन्वनुमानविवेकप्रधानन्यायशास्त्रोक्तावयवानामनुक्तिः कस्मादित्यत्राह पञ्चेति । तदनङ्गीकारे हेतुः—द्वयं व्यर्थमिति । प्रतिज्ञाहेतूक्त्यनधिगतावाच्याभावादित्यर्थः । न च व्याप्ततया हेतुप्रत्यभिज्ञार्थोपनयोक्तिरर्थवतीति वाच्यम्, उक्तहेतुस्थतयैव दृष्टान्तोक्त्या, तदेकवाक्यत्वात् व्याप्त्युक्तेः व्याप्तिधीः सिद्धैवेत्यभिप्रायः । व्याप्तिस्मृतेरन्वयव्यतिरेकानुसन्धानलभ्यत्वाद्व्यतिरेकोपयोगिवैधर्म्यदृष्टान्तोऽपि प्रयोज्यत इति परमतमनूद्यस्य निष्फलत्वेनैव निरस्यति—वैधर्म्येति । साधनवदुद्देशेन साध्ययोग-

---

१. Omitted. पर्वतो—गम्यते. क. २. नियमः क.
३. न्तं द्वितीयं केचित्. ख. ४. नास्ति तदपि क, ख.
५. पक्षनिवृत्ति. क. ६. Omitted. पक्षवृत्तिता. ख.

अथ वैधर्म्यदृष्टान्तेन सह विकल्पोऽस्तु । न ऋजुवक्रयोर्विकल्पः । न चोपायतापि वक्रस्य, न हि विपक्षनिवृत्तेरभावरूपायाः सपक्षेऽस्तित्वनियमहेतुता । न चानन्तविपक्षनिवृत्त्या नियमः सुगमः । पक्षहेतुदृष्टान्तदोषाश्च यथोक्तसामग्रीवैगुण्यमेव । वैगुण्यं सर्वं हेतोरेव, विवक्षया पक्षदृष्टान्तयोः । अतत्त्वदोषाश्छलजातिनिग्रहा विमतबोधोपायताऽऽदृतास्तार्किकैः ॥

---

विधिबलात् साधर्म्यदृष्टान्तेनैव विवक्षितव्याप्तिरर्थोक्तेति व्यक्तमानर्थक्यमित्यर्थः। नन्वेवमपि विकल्पाश्रयणेनार्थवत्त्वं सुलभमिति शङ्कते—अथेति । परिहरति—न ऋजुवक्रयोरिति । साधर्म्यदृष्टान्तेन साक्षात्सम्बन्धनियमोक्तेरितरेण साधनप्रतीत्यन्यथानुपपत्तिधीव्यवधानाल्पत्वादतुल्ययोर्न विकल्प इत्यर्थः । वैधर्म्यदृष्टान्तस्यापि इतरवद्व्याप्तिधीसामर्थ्यव्यतिरेकद्वारेण परोक्तमभ्युपगम्य विकल्पो निवारितः । वस्तुतस्तत्सामर्थ्यमपि नास्तीत्याह—न चोपायतापीति । सपक्षवृत्तिसाध्यसाधकत्वं तावन्न विपक्षवृत्तिव्यावृत्तेर्व्यधिकरणत्वाद्युक्तम् । विपक्षनिवृत्तेश्च सम्बन्धदर्शनप्रसक्तनिरुपाधिकसम्बन्धावधारणप्रतिबन्धकाभावरूपायास्तदवधारणहेतुता न स्यात्, प्रतिबन्धकाभावस्य प्रागेव निरस्तत्वादित्यर्थः । विपक्षाणां चानन्तत्वात् सर्वनिवृत्तिरूपहेतुप्रसिद्धिश्चाशक्येति दूरनिरस्ता तद्धेतुका सम्बन्धनियमसिद्धिरित्याह—न चानन्तेति । वादादिव्यवहारे परिहार्यत्वेन पक्षादिदोषाश्च प्रपञ्चिता ग्रन्थान्तरे । तत्संग्रहमात्रं तन्मूलायत्नान्तरार्थमाह—पक्षेति । सामग्र्युक्त्यैव तद्वैकल्यकराः सुज्ञाना एवेत्यर्थः । ननु व्याप्तिमूला साध्यधीः व्याप्त्याश्रयहेतुतन्त्रेति तत्परिकरमात्रमन्यत्सर्वमिति दोषाश्च तस्यैव स्युः, कथमन्यस्येत्याशङ्क्य वस्तुतस्तदीयत्वेऽपि द्वारमात्रविवक्षयान्यसम्बन्धोक्तिरिति परिहरति—वैगुण्यं सर्वमिति । नन्वनुमानविवेकप्रकरणे तदुपयोगेन कथं तत्पृष्ठे छलादेर्ज्ञेयतयोक्तिर्न्यायशास्त्र इत्याशङ्क्य वादिनां परज्ञापनप्रवृत्तौ विमतापेक्षया तदुपायतास्त्येवेति तदुक्तयुपपत्तिरित्याह—अतत्त्वदोषेति ॥

इत्यनुमानवादः ॥

---

१. मग्रीवैगुण्यं सर्वम्. क. ख.

# अथ शास्त्रवादः

## शास्त्रलक्षणम्

"शास्त्रम्" प्रत्यक्षानुमानाधीनव्युत्पत्त्यपेक्षस्येदानीं लक्षणमुच्यते। शास्त्रमिति लक्ष्यं निर्दिष्टम्; लोके च यतः शब्दाच्छासनधीः, तच्छास्त्रं प्रसिद्धम्। शासनं च प्रेरणमभिमतम्, न च प्रेरणाधीः शब्दालम्बनाज्ज्ञानात्। [1]कार्यज्ञानं न प्रेरणाविषयम्; किन्तु शब्दाद्यत् ज्ञानं कार्यविषयम्; ततः प्रेरणाज्ञानं शास्त्ररूपम्। [2]अतो ज्ञानं शास्त्ररूपं लक्ष्यमिति समर्थपञ्चमीसमासाश्रयणम्

---

ननु लोकप्रसिद्धप्रमाणलक्षणे प्रक्रान्ते प्रमेयतोऽपि प्रसिद्धप्रमाणावसान एवातथाभूतशास्त्रलक्षणं वाच्यमिति शङ्कामपनयन् सङ्गतिमाह प्रत्यक्षेति। व्युत्पत्त्यपेक्षशास्त्रप्रामाण्यार्थमेव तल्लक्षणाव[?]र इत्यपेक्षि[?]ोक्त्यविच्छेद एव ग्र[?], न साद्दृश्यविशेष इत्यर्थः। ननु शब्दविज्ञानादिति पञ्चमीसमासाश्रयणमयुक्तम्, पञ्चमी भयेन" इति विशेषमात्रनिष्ठत्वात्तदनुशासनस्येत्याशङ्क्य तत्समर्थमाह — शास्त्रमिति। यदि शाब्दं लक्ष्यं स्यात्, तदा तदाश्रयणमयुक्तं स्यात्; शास्त्रं त्विह लक्ष्यमभिमतम्। ततः किमित्यत्राह—लोकेति। शासनात्मकधीहेतोः शब्दस्य शास्त्रपदार्थतया प्रसिद्धस्याविवेकमूलव्यभिचारशङ्कानिवृत्त्यर्थं लक्षणमुच्यते, नाप्रसिद्धस्वरूपनिर्धारणार्थमिति प्रसिद्धलक्ष्यानुसारीह लक्षणार्थो वर्णनीय इत्यर्थः। तत्रैव किमित्यत्राह—न च प्ररणेति। शब्दज्ञानादव्यवहितप्रेरणोत्पत्तिसिद्धौ न स्यात् पञ्चमीसमासाश्रयणम्, न तथोत्पत्तिरित्यर्थः। ननु 'ममेदं कर्तव्यम्' इति शब्दादेव धीरिति कथं तत्र प्रेरणानुत्पत्तिरित्यत्राह—कार्यज्ञानमिति। यद्यपि कार्यं येन प्रवृत्तावव्यवहितहेतुत्वात् तद्भाविता लिङादेरिति तस्य चोदनार्थत्वमाश्रितम; तथापि चोदनोत्थं कार्यज्ञानं नाव्यवहितप्रवृत्तिहेतुविषयम्, तस्याक्रियात्वेन स्वतः प्रवृत्त्यविषयत्वात्; तत्कारणं तु प्रेरणाज्ञानमापादितस्वकृतिसाध्यत्वसाधनचक्रव्यापिस्वकार्यत्वधीरूपमिति शास्त्रात्मिका धीर्व्यवहितैवेत्यर्थः। तेन पञ्चमीसमासोऽङ्गीकृत इत्याह—अतो ज्ञानं शास्त्ररूपमिति। नन्वेवमप्यनुशासनाभावात् अयु-

---

१. कार्यं न. क, ख,　　२. Omitted अतो ज्ञानं शास्त्ररूपम् क.

"पञ्चमी," "भयेन" इति योगविभागात् । सप्तमीसमासपक्षेऽपि कार्यधी-व्यवहिते प्रेरणाधीहेतुत्वे न दोषः । "सप्तमी शौण्डैः" इत्याकृतिगणत्वाद-दोषः । कारकविशेषतयान्वयेऽस्मिन् सम्बन्धमात्रस्मृतषष्ठीसमासो नोक्तः । ननु कार्यधीरेव शाब्दी प्रमितिः, तत्परत्वाच्छब्दस्य; न प्रेरणाधीः । मैवम्; कार्यधीरेवं हि स्वसाधनाक्षेपरूपा प्रेरणपर्यन्तेति पर्यन्ते लक्षिते तावती कार्यधीरेव लक्षिता भवति । प्रेरणाधीहेतुतया च शब्दः शास्त्रं चोदना

---

क्ततेत्यत्राह – "पञ्चमी" "भयेन" इति योगविभागदिति । सामान्येनापि जघन्यतया-नुशासनं व्याख्यातृसंमतमेवेत्यर्थः । शब्दविज्ञानस्य व्यवहितहेतुत्वाश्रयणेन सप्तमीसमासाश्रयणेनापि भाष्यगतिः सुकरेत्याह—सप्तमीसमासपक्षेऽपीति । ननु तत्रापि सामान्येनानुशासनाभावात् तुल्यैवानुपपत्तिरित्याशङ्क्य "सप्तमी शौण्डैः" इत्याकृतिगणत्वेनेष्टत्वान्नानुपपत्तिरिति परिहरति—"सप्तमी शौण्डैः" इतीति । ननु षष्ठीसमासः कस्मान्नोक्त इत्यत्राह—कारकविशेषतयेति । विशेषप्रतिपत्तेः स्ववाचिविभक्तिनियन्तृत्वात्तदितरविषयैव षष्ठी, शेषोद्देशेन विहितत्वादित्यर्थः । ननु शब्दतात्पर्यानुवर्ति शास्त्रं प्रमाणम्, न शास्त्रपदवृत्तिनिमित्तानुवृत्ति; कार्यनिष्ठं च तात्पर्यमिति न जघन्यसमासाश्रयणहेतुरस्तीति चोदयति—ननु कार्यधीरेवेति । परिहरति—मैवं कार्यधीरेवेति । यदि कार्यधीबाह्या प्रेरणाधीः स्यात्, तदा प्रेरणा-पेक्षं शास्त्रं नोपेयं स्यात्; कार्यबोधावसानात्मिका तु प्रेरणाधीरुक्ता; तेन कार्य-तात्पर्यानुगुणमेव तन्मुखेन शास्त्रलक्षणं विवृतमित्यत्रापि कार्यधीरेव पर्यवसिता शास्त्रमुक्तेत्यर्थः । अनर्थकस्तर्ह्यृज्वर्थत्यागेन व्यवहितज्ञानापेक्षः समासविवरणप्रयास इत्यत्राह - प्रेरणाधीहेतुतयेति । सूत्रे चोदनापदसूत्रितप्रमाणं तत्पर्यायशास्त्रपदेनो-पादाय लक्षणकरणात् पदद्वयवृत्तिनिमित्तप्रेरणाधीहेतुत्वं शब्दस्येह विवक्षितम्, न स्वार्थमात्रधीहेतुत्वमित्यभिप्रायानुपपत्तिसमाधानार्थः प्रयासो नान्यव्युदासार्थ इत्यर्थः ।

---

१. नरकार्यं. क, ख.   २. Omitted. हि. क.

चेति वृद्धप्रसिद्धिः समर्थिता भवतीति भावः ।

लक्षणे दोषनिरासः

ननु लक्षणमतिव्यापि, 'वन्ध्यासुतो याति' इत्यतोऽपि शब्दाद्धीः शास्त्रं स्यात् । [1]अथाप्रेरणाधीरियमिति नातिव्याप्तिः, तर्हि 'वन्ध्यासुतं पश्य' इति प्रेरणाधीर्भ्रान्तिमूलापि शास्त्रं स्यात् । अनास्थया 'याति' इत्युदाहृतम् । मैवम्; उक्तं हि—पुंवाक्ये लिङ्गोपस्थितमानान्तरादर्थधीः, न शब्दादिति; लिङ्गाभासोत्थेयं धीः । एवं च पुंवाक्योत्था [2]सत्यापि धीर्न शाब्दी[3] । अनुवादधीस्त्वसन्निकृष्टपदाच्छाब्द्यपि न शास्त्रम् । ननु न सा मितिर्न स्मृतिरिति विधान्तरं स्यात् । मैवम्; मितिस्वभावेयमनपेक्षतांशमोपेण स्मृतिवद्भाता—[4]इति न लक्षिता, मितिकार्यदर्शनात् ।

---

यथाग्रन्थं लक्षणमाक्षिपति—ननु लक्षणमतिव्यापीति । तदभिप्रायाविष्करणार्थमाशङ्कते—अथाप्रेरणाधीरिति । असदर्थत्वमात्रमाक्षेपे विवक्षितम्, प्रदर्शनार्था वर्तमानोक्तिरित्यभिप्रायं विवृणोति—तर्हि वन्ध्यासुतं पश्येति । समर्थयते—मैवम्; उक्तं हीति । पुंवाक्ये वक्तृज्ञानानुमानात् प्राग्वाक्यस्यानभिधायकत्वाच्छब्दविज्ञानपदेनैव व्यावृत्तिसिद्धेः नातिव्याप्तिरित्यर्थः । एवमसत्यार्थपुंवाक्यवत्पर्यक्षेपसमाधानेनैव सत्यार्थपुंवाक्यजा धीः शब्दप्रमाणात्मिका किमितीतरवन्न लक्षितेत्यपि चोद्यमपास्तमित्याह—एवं च पुंवाक्योत्थेति । सानुमानलक्षणेनैव लक्षिता, शाब्दी तु न भवतीत्यभिप्रेत्य भाष्ये तत्परिहारेण शास्त्रलक्षणमेव कृतमिति न चोद्यावकाश इत्यर्थः । नन्वेवमप्यनुमानानन्तरं शाब्दधीरनिवार्येति लक्ष्यतापत्तिरित्याशङ्क्यानुवादत्वान्न शास्त्रमितिः व्यावर्तितेत्याह—अनुवादधीस्त्विति । ननु तर्हि द्विविधैव धीरित्युपगमबाध इति चोदयति—ननु न सा मितिरिति । मैवम्; मितीति । परिहरति । कारणशक्त्यपेक्षया मितित्वेऽपि प्रवृत्त्यादिमितिकार्यंनिष्ठव्यभिचारशङ्काहानार्थलक्षणफलमतत्कार्यतया नास्तीति मानलक्षणबहिष्ठता तस्याः,

---

१. अथ प्रेरणा. क, ख. २. Omitted सत्या. ख.

३. Added अन्तःसारविहीनानां बोधः केनोपजायते ।
मलयाचलसञ्जातो न वेणुश्चन्दनायते ॥ ख.

४. Omitted इति. क. ख.

अशासनाच्च न शास्त्रमुच्यते[1] एवंविधविवेकार्थमित्थं लक्षणं कृतम् । न त्वविशिष्टं विशिष्टस्य लक्षणमिति शङ्का, लक्षणस्यापि विशिष्टत्वात्; 'शब्दादसन्निकृष्टेऽर्थे धीः' इत्येवं लक्षणात् । एवं वेदवाक्यात् सम्यगवधृतवचनव्यक्तिकाद्धीर्लक्षिता । अनवधृततात्पर्याद्धर्माणां स्वरूपान्वयधीः विपरीतावधृततात्पर्यात् पूर्वपक्षधीः पुंवाक्याद्धीर्निरस्ता, अर्थाप्रतिबन्धात् । बौद्धोक्तविसं-

---

न मितित्वाभावादिति नाभ्युपगमहानिरित्यर्थः । ननु कार्यादर्शनात् पृथग्यत्नमात्रं वर्जनीयम्, "शब्दविज्ञानात्" इत्युक्तलक्षणं किमिति तदनुगतं न कृतमित्यत्राह— अशासनाच्चेति । लक्ष्यत्वेन विवक्षितं शास्त्रमिहेति तद्विलक्षणत्वात्तदनुगतं लक्षणं तद्विरोधादशक्यमित्यर्थः । नन्वनुवादो लक्षणास्पृष्ट एवेत्याह—एवंविधविवेकार्थमिति । बोध्यबोधकद्वयद्वारकं हीदं लक्षणमुक्तम्; बोध्यमात्रमुखं च लक्षणं लघु शक्यम्; तत्त्यागेन गुरूपादानात्कारणमुखेनानुवादधीः शास्त्रानन्तर्भूतापि शब्दप्रमाणतया संगृहीतेति ज्ञाप्यत इत्यर्थः । परैस्तु – शास्त्रप्रमाणं लक्षयितुमसमर्थमिदं लक्षणम्, शब्दमात्रमेव शक्नोतीति भाष्यदूषणमुद्भावितम्; तन्न शङ्कार्हमिति दूषयति—न त्वविशिष्टं विशिष्टस्येति । पुंवाक्यस्य वक्तृज्ञानलिङ्गत्वानभ्युपगमेनार्थाभिधायकत्वोपगमे हि शास्त्रलक्षणयोग्यविशेषहीनत्वं लक्षणस्य स्यात्; तदुपगमे तु "शब्दविज्ञानादसन्निकृष्टे" इत्येतद्द्वयमुभयावस्थपुंवाक्यजव्यवच्छेदसमर्थत्वाद्विवक्षितं शास्त्रमेव लक्षयेदिति नासमर्थमिदमित्यर्थः । तथापि वेदोत्थभ्रान्तावतिव्याप्तिरिति शङ्कां शब्दविज्ञानादिति विशब्देनापाकृतां दर्शयन् उपसंहारमुखेन लक्ष्योक्तविज्ञानपदार्थं विवृणोति—एवं वेदवाक्यादिति । व्यावर्त्यविशेषमाह— अनवधृततात्पर्यादिति । ननु सापि धीः शब्दोत्थेति न व्यावर्त्या, बाधकाभावादित्याशङ्क्य तत्र हेतुमाह—अर्थेति । व्युत्पत्तिसिद्धशक्तिमात्रापेक्षया शब्दजत्वभानेऽपि तात्पर्याभावादर्थप्रमितिकरत्वं तत्र शब्दस्य नास्ति; पुंवाक्येऽपि पुमभिप्रायानपेक्षोऽर्थप्रतिबन्धः शब्दस्य नास्तीति व्यावर्त्योक्तेत्यर्थः । नन्वर्थाप्रतिबन्धः स्वाभाविक एव शास्त्रादिषूक्तो बौद्धैर्न विषयविशेषनिष्ठः, विपक्षे बाधकाभावादित्यर्थविसंवादि तदुत्थज्ञानमिति तच्छङ्कानिवृत्त्यर्थमाह–बौद्धोक्तेति । क्वचिद्व्यभि-

---

१. च्यत इति । क, ख.

वादित्वं च शास्त्रादीनां निरासानर्हम्, स्वतः प्रामाण्यात् [1]परतो विसंवादाभावाच्च; लक्षणग्रन्थोपयोगि तत्र तत्र स्थितत्वान्नोच्यते। "शब्दविज्ञानात्" इत्यस्योपयुक्ताः शब्दार्थसम्बन्धव्युत्पत्तयः; "असन्निकृष्टे" इत्यस्य सपरिकरापूर्वस्थितिः; "शास्त्रम्" इत्यस्य शास्त्रभेदादीति।

---

चारसंप्रतिपत्तौ हि तदापादनं पृथग्यत्ननिवार्यं मानान्तरैकविषयत्वेन तत्संवादापेक्षत्वे वा, तदुभयाभावान्न तन्निरासार्हमित्यर्थः। व्यभिचारशङ्कानिवृत्तिर्लक्षणप्रयोजनमिति शास्त्रादावनुक्तमपि प्रत्यक्षोक्तमेव सर्वार्थं स्यादित्याह—लक्षणग्रन्थोपयोगीति। प्रकरणोक्तप्रपञ्चस्य लक्षणग्रन्थशेषतां विभज्याह—[2]शब्दविज्ञानादित्यस्येति।

इति शास्त्रवादः॥



---

१. परतोऽपि सं. क, ख.　　२. शब्दज्ञानस्योप. क.

# अथ उपमानवादः

## सादृश्यस्य पदार्थान्तरत्वम्

"उपमानम्" असन्निकृष्टार्थशास्त्रानन्तरमसन्निकृष्टार्थमुपमानं[1] लक्ष्यते। लक्षणे सादृश्यमुक्तं न तद्द्रव्यम्, गुणकर्मणोरप्याश्रितत्वात्। अत एव च न गुणः, न च कर्म। न सामान्यम्, अननुवृत्ते। न समवायः, असम्बन्धत्वात्। विशेषपदार्थस्तु न मानार्हः; स्थूलकार्यगम्यं हि परमाणूनां पृथक्त्वम्; स्थूलं हि द्व्यणुकादिक्रमेण; द्व्यणुकमणुद्वयात्; भेदे च

"उपमानम्।" ननु बहुविषयत्वादर्थापत्तिरुपमानात्पूर्वं धीस्थेति कुतस्तदतिक्रमेण पूर्वमुपमानलक्षणावतार इत्यत्राह—असन्निकृष्टार्थेति। शास्त्रप्रमाणप्रयोजकत्वेनासन्निकृष्टविषयत्व उक्ते तत्प्रयुक्तमेवोपमानमपीति तदुत्थापितं तदेवानन्तरं युक्तमित्यर्थः। कथमसन्निकृष्टार्थत्वम्, ततश्च कथं मानान्तरत्वमित्येतत्साधनार्थं लक्षणग्रन्थे बुध्युत्पादकत्वेनोक्तं सादृश्यमनूद्य तस्य द्रव्याद्यनन्तर्भावं तावदाह—लक्षणे सादृश्यमुक्तमिति। 'सदृशम्' इति तावदैन्द्रियकं विज्ञानं द्रव्यविषयं प्रसिद्धम्; तद्विशेषणं च सादृश्यम्; तच्च नावयवादिद्रव्यात्मकम्, गन्धरसगत्यादावपि सादृश्यबुद्धिविशेषात् द्रव्यस्य च तदाश्रयत्वयोगात् गुणकर्मता च तत एव निरस्तेत्यर्थः। सामान्यसमवायरूपता च तत्प्रयोजकरूपाभावान्नास्तीत्याह—न सामान्यमिति। विशेषात्मकता तु न शङ्कार्हा, स्वरूपासिद्धेरित्याह—विशेषपदार्थस्त्विति। स्वरूपासिद्धिहेतुं प्रकरणोक्तं तावदाह—स्थूलकार्यगम्यं हीति। अनेन स्थूलकार्यनिष्पत्तिलिङ्गानुमेयत्वं विशेषस्य पराभ्युपगतं पृथक्त्वगुणेनैव तदुपपत्त्युक्त्या दूषितम। तदनुमानप्रकारमाह—स्थूलं हि द्व्यणुकादिक्रमेणेति। द्व्यणुकारम्भकाणुद्वयभेदोऽन्योन्यव्यावर्तकधर्मयुक्तः, भेदत्वाच्छुक्लकृष्णयोर्यथा। न चान्योन्यव्यावृत्तसामान्ययोगस्तादृशगुणयोगो वा तत्र शङ्कार्हः, भिन्नजातीययोः सहारम्भकत्वाभावाद्विरुद्धगुणकानामपि तन्नाङ्गीक्रियते। तदङ्गीकारेऽप्येकगुणकयोरेव पक्षीकृतत्वान्न दोषः। न च गुणव्यक्तिभेदमात्रं व्यावर्तकम्; शुक्लधिया हि कृष्णा-

1. मान मुच्यते. क.

द्वयम्; भेदश्च विशेषयोगादिति विशेषानुमा; भेदस्तु पृथक्त्वात् दृष्ट इति स्थूलात्पृथक्त्वानुमेत्युक्तम्; स्थूलकार्योन्नेयं पृथक्त्वम्; तदधिकस्तु विशेषो न मानार्हः; अथ पृथक्त्वहेतुतया तदनुमा, तन्न, नित्यत्वात् परमाणुपृथक्त्वस्य; अथ भेदकधर्मनियतात् पृथक्त्वात्तदनुमा, तन्न, भेदकधर्मासिद्धेः स्वरूपत एव वस्तूनां भेदप्रसाधनात्; एवं योगिप्रत्यभिज्ञयापि भेदकधर्मासिद्धिः; असिद्धा च योगिप्रत्यभिज्ञा—इति सादृश्यं धीसिद्धं पदार्थान्तरम्।

साहश्यस्य द्रव्यादिष्वन्तर्भावनिरासः

तत्र तदपि परोक्तम्—गुणावयवकर्मसामान्यानि तद्योगो वा जात्यन्तरस्य सादृश्यमिति—जात्यन्तरस्येति प्रायिकम्, यमलयोर[1]पि दर्शनादिति, तत्प्रत्युक्तम्; न सामान्यम्, अननुवृत्तत्वात्; न योगः, असम्बन्ध-

---

दिभ्य एव व्यावृत्तिः स्यात्, न शुक्लान्तरादिति सामान्यास्पृष्टात्यन्तव्यावृत्तधर्मयोगः प्रतिपरमाण्वनुमेय इति विशेषपदार्थानुमानमुक्तम्; तद्दूषणमाह—भेदस्तु पृथक्त्वादिति। व्यावर्तकधर्मयोगः पृथक्त्वगुणाङ्गीकारेणैव सिद्ध इति न तदधिकविशेषसाधनसामर्थ्यमनुमानस्येत्यर्थः। न च सामान्यवत्तया पृथक्त्वगुणस्य व्यावर्तकत्वासामर्थ्यम्, पृथक्त्वेऽपि सामान्यासिद्धेरिति भावः। ननु पृथक्त्वस्यापि धर्मान्तरापेक्षत्वान्न तदपसार्थनुमानमिति शङ्कते—अथ पृथक्त्वहेतुतयेति। दूषयति—तन्न नित्यत्वादिति। ननु नोत्पादकतया तदपेक्षकत्वमुक्तम्, तद्व्याप्ततामात्रेणेति शङ्कते—अथ भेदकधर्मनियतादिति। दूषयति—तन्न भेदकधर्मासिद्धेरिति। धर्माणामप्यन्योन्यं भेदासिद्धेः भेदकापेक्षत्वेऽनवस्थापत्तेः धर्माणां तदनपेक्षत्वे धर्मिणामपि स्वतस्तदपेक्षा नास्ति सादृश्यादिप्रतिबन्धात् क्वचित्प्रातिस्विकधर्मावगम्यत्वेऽपीति न विशेषाख्यवस्त्वन्तरानुमानसिद्धिरित्यर्थः। तुल्यजातिगुणकपरमाणुषु योगिनामन्योन्यव्यावृत्तरूपेण प्रत्यभिज्ञाप्यस्माभिरनुमिता व्यावर्तकधर्मविषया प्रमाणमित्युपगमोऽप्ययुक्त इत्याह—एवं योगिप्रत्यभिज्ञेति। भेदस्य धर्मान्तरानपेक्षतोक्त्यैवेत्यर्थः। तदसिद्धिं चाह—असिद्धा चेति। प्रासङ्गिकादपेत्य प्रकृतमुपसंहरति—इति सादृश्यं धीसिद्धं पदार्थान्तरमिति। परोक्तमप्येतेनैवापास्तमित्याह—तत्र यदपीति। तदेव विवृणोति—न सामान्यमित्यादिना। तदन्यत्वं विधान्तरेणाह—

---

१. रिति दर्श क. ख.

त्वात्, 'तद्वत्' इति हि तद्धीः, न तु 'तत्' इति 'सम्बन्धः' इति वा । किञ्च सामान्ययोगयोर्गुणादिवर्तिता अबहुता च, सादृश्यं गुणादिमद्वर्ति बहु[1] चेति भेदः । गुणादिसामान्यं ह्येकार्थसमवेतसमवायात् गुणादिमद्योगि, सादृश्यं तु तद्गतं धीस्थमिति भेदः । सामान्यान्याश्रयभेदेऽपि तान्येव, सादृश्यं तु न तथेति भेदः । सादृश्यं हि प्रत्याश्रयं भिन्नम्, न संयोगादिवदेकम्, 'सदृशम्' इति प्रत्येकं धीः प्रत्येकं भिन्नविषया, यापि 'सदृशौ द्वौ' इति धीः, सा सादृश्यद्वयधीपूर्विका । एकधीस्थयोरपि हि प्रतियोगिस्वरूप[2]प्रतिसन्धानापेक्षा प्रतियोग्यन्तरे सादृश्यधीः, संयोगिनोरेकधीस्थयोस्तु संयोगालिङ्गितयोरेव धीरित्येकः संयोगः, सादृश्यमनेकमन्योन्यनियतं च धीसिद्धं

किञ्चेति । गुणावयवकर्मसामान्यानि स्वाश्रयमात्रावच्छेदकानि तद्विशेष्यावच्छेदे नानाभूताश्रयव्यवधानेनैव स्वानानात्वाहानेनैव चावच्छेदकानि यावदाश्रयं भेदहीनानि च भान्तीति तद्विपरीतस्वभावसादृश्यात्मकतानर्हाणीत्यर्थः । ननु सादृश्यस्यापि यावदाश्रयं भेदोऽसिद्धः, संयोगादितुल्यत्वभानात्; तत्रापि हि 'अनेनेदं संयुक्तम्' इत्यपि धीः 'संयुक्तौ' इत्यपीति साम्यमित्याशङ्क्य भेदमुपपादयति--सादृश्यं हीति । 'अनेनेदं संयुक्तम्' इति व्यपदेशेऽपि संयोगिद्वयदृष्टावेव तदृष्टिः, नान्यतरदृष्टौ; सादृश्यदृष्टिस्तु प्रतियोगिस्मृतिमात्रेणैकदृष्टयैव भवतीति प्रत्याश्रयं भिन्नविषयेत्यवधारणात्सहदृष्टावपि सादृश्यद्वयदृष्ट्यधीनैव 'सदृशौ' इति धीरित्युपमेयमित्यर्थः । ननु सादृश्यभेदे धर्मिप्रतियोगिभावेन विलक्षणैव द्वयोर्धीरुपेयेति 'सदृशौ' इति तुल्यतानुभवविरोधः स्यादित्यत्राह--एकधीस्थयोरपि हीति । प्रतियोगित्वं न स्वरूपातिरिक्तरूपभानापेक्षमित्येकधीस्थयोरन्योन्यप्रतियोगिकैकैकाश्रयसादृश्यद्वयविशिष्टतया 'सदृशौ' इति तुल्यानुभवोनानुपपन्न इत्यर्थः । नन्वेवम् 'संयुक्तौ' इत्यपि धीस्तथैव नेयेत्यत्राह--संयोगिनोरिति । सादृश्येऽन्यतरदर्शन एव सादृश्यदर्शनबलादेवसाश्रितम्; संयोगे तु तदभावाद्व्यक्तमेवैकत्वम्; भेदश्चेतरत्र व्यक्तः; भेदेऽप्यन्योन्यनियतत्वात्संयोगवत् सहापि दर्शनसम्भवात् 'सदृशौ' इति संयोगदर्शनसाम्यमात्रं भवतीत्यर्थः । नन्वेवं गुण-

१. मद्वर्त्यबहु. क, ख. २. स्वरूपं प्रति. क. ख.

पदार्थान्तरम् । तच्च प्रीतिकरत्वादिसामान्यादेः गुणगतमनुमेयम्, कारकसामान्यादेः कर्मगतमनुमेयम्, प्रत्यक्षत्वोपगमे हि संयुक्तसवेतसमवायादपीन्द्रियशक्तिकल्पनापत्तिः ।

नन्वेवं सादृश्यात् प्रत्यक्षात् परोक्षद्रव्यसादृश्यमनुमेयम्, नोपमानमेयं स्यात् । मैवम्, भिन्नधर्मिधर्मभूताविह गम्यगमकौ, आद्यदर्शन एव चेह धीः, अनुमाने तु एकधर्मिधर्मता ज्ञातसम्बन्धता च, न ज्ञायमानसम्बन्धता, निरुपाधिकत्वविपक्षव्यतिरेकित्वयोरसकृद्दर्शनाधीनत्वात्, न चेह

---

कर्मगतसादृश्यधीः किन्निमित्तेत्यत्राह—तच्च प्रीतिकरत्वादीति । प्रीत्यर्था तावत्सर्वा प्रवृत्तिः, दुःखनिवृत्त्यर्था वा; तत्र चन्दनादिविशेषनिष्ठा प्रवृत्तिस्तत्तत्साध्यानुभूत प्रीतिविशेषार्थैव, अन्यथा विशेषव्यवस्थानुपपत्तेः तेन प्रीतिविशेषाणां साधनविशेषाणां चान्योन्यनियतत्वं प्रवर्तमानैरवधारितमित्यास्थेयम् । ततश्चन्दनगन्धसाध्यावधारितप्रीतेरन्यगन्धाघ्राणजतदनुभवे चन्दनगन्धसदृशत्वं तस्यानुमेयम् । पुत्रादिदर्शनजप्रीतेस्तत्सदृशदर्शनेऽत्थत्वदर्शनात् । तथा दुर्गन्धविशेषनियतदुःखविशेषस्यान्यगन्धजत्वदर्शनेऽपि तत्सादृश्यमनुमेयम् । शत्रुसदृशदर्शनदुःखस्य दृष्टत्वात् । एवं रसादिगुणेऽपि सादृश्यानुमानमुन्नेयम् । सिद्धे च प्रीत्यप्रीतिविशेषकरत्वसामान्यानुमिते गुणसादृश्ये प्रीत्याद्यनुत्पत्तिविषयेऽपि तत्तद्गुणविशेषवृत्तिलिङ्गानुमेयतापि स्यात् । कर्मगतसादृश्यं त्वेकरूपैकप्रकारव्यापारितकारकैर्निरोत्पादितचित्रपटादीनां सादृश्यदर्शनात्तद्विधकारकोत्पाद्यकर्मस्वपि तदनुमानात् तत्साध्यफलैकरूप्यलिङ्गाच्च सिद्धमित्यर्थः । नन्विन्द्रियव्यापारानन्तरधीबलात्प्रत्यक्षत्वमेव तत्सादृश्यस्यापि कुतो नोपेयत इत्यत्राह—प्रत्यक्षत्वोपगमे हीति । अनन्यथासिद्धकार्यबलेनैव सम्बन्धान्तरापेक्षधीशक्तिरिन्द्रियाणामुपेया, न प्रसिद्धशक्तिकलिङ्गगम्यत्वसम्भवेऽपीत्यर्थः ।

नन्वेवमुपमानप्रमाणमपि नोपेयम्, तन्मेयस्यापि लिङ्गगम्यत्वसम्भवादिति चोदयति—नन्वेवं सादृश्यात् प्रत्यक्षादिति । तत्सामग्र्यसिद्ध्या परिहरति—मैवमिति । यद्यपि सादृश्यलिङ्गापेक्षयाऽनुमासामग्र्यसिद्धिः, तथाप्यवयवसामान्यस्य

---

१. गत ख.

सम्बन्धः। ननु सदृशमवयवसामान्य¹बहुलभाजं पश्यन् 'यस्तद्वाक् स तत्सदृशः' इत्यवधारयन् 'स्मृतोऽपि गौस्तद्वांस्तत्सदृश' इत्यवैति, तद्वाक्त्वतत्स²दृशत्वयोरेकधर्मिधर्मता एकार्थसमवेतसमवायस³म्बन्धनियतता चेत्वनुमैव। मैवम्, सम्बन्धनियमस्मृतिरनुमानाङ्गम्, न तदवधारणमेव। ⁴अत एव निरुपाधिकत्वविपक्षव्यावृत्त्योरसकृद्दर्शनाधीनत्वमुक्तम्। अतो हेतुभेदान्मानान्तरमुपमा।

### न्यायाभिमतोपमाननिरासः

यत्तु नैयायिकोक्तम्—'यथा गौस्तथा गवयः' इत्येवं श्रुतातिदेशवाक्यस्य वने गवयं पश्यतः 'अयं स गवयः' इत्युपमानम्, तन्न, 'गोसदृशो गवयः' इत्याद्या धीर्वाक्यप्रभवा। यापि वनगते गवये तद्गते च गोसादृश्ये धीः, सा सप्रत्यभिज्ञं प्रत्यक्षम्। यापि तस्य गवयशब्दवाच्यताधीः, सा गवयशब्दप्रयोगादनुमा; वने संज्ञिनमुपलभ्य 'अस्येयं संज्ञा' इति धीः स्मृतिरिति नोपमानावकाशः। लक्षणेन च सादृश्याभासात्

लिङ्गत्वं न सामग्र्यसम्भवहतमिति चोदयति—ननु सदृशमवयवसामान्येति। परिहरति—मैवं सम्बन्धिनियमस्मृतिरिति। सकृद्दर्शनादेव निरुपाधिकसम्बन्धस्वरूपमात्रसिद्धावपि निरुपाधिकत्वनिश्चयस्तदा नास्ति; तन्निश्चयाधीनविपक्षव्यावृत्तिश्च न निश्चिता, संशयहेतोरनपास्तत्वात्—इत्यनुमानसामग्र्यसिद्धिस्तत्पक्षेऽपि तुल्येति सादृश्यदर्शनात्मकहेत्वन्तरोत्थमुपमानं मानान्तरमेवेत्यर्थः। ननु न्यायवित्परिगृहीतोपमानत्यागे किं निमित्तमिति शङ्कां तदसम्भवप्रदर्शनेन निवर्तयति—यत्तु नैयायिकोक्तमिति। गवये गोधर्मातिदेशकेन वाक्येन यत् गोसादृश्यं विवक्षितं गवयस्थं तद्धीस्तावद्वाक्यजेति न तत्र मानान्तरसम्भवः। तदूर्ध्वम् 'इदं तद्वाक्योक्तम्' इति ज्ञानान्तरमपि वाक्यजज्ञानसंस्कारसहितेन्द्रियजमिति न मानान्तरापेक्षम्। तस्य गवयशब्दवाच्यता न प्रत्यक्षार्हेति सा मानान्तरार्हेत्यपि न शङ्कनीयम्। वाक्यस्य सादृश्यपरतया वाच्यत्वानर्पकत्वेऽपि सादृश्याश्रयविषयप्रयोगलिङ्गेन प्रागेव तद्वाच्यतानुमितेति न मानान्तरापेक्षा। वाक्यस्यैव शब्दार्थनिर्धारणार्थत्वे तु तद्विषयमानान्तरशङ्कापि नेति प्रयोगानुमेयतैवोक्ता। ननूभयथापि प्रयोगानन्तरमेव

१. Omitted. बहुल. ख. २. सादृशयो. क, ख.
३. तन्न सम्बन्धः क, ख. ४ Omitted. अत एव. क. ख.

सादृश्यान्तरे धीर्नोपमेत्युक्तम् , यथा हि पलालकूटे हस्तिसादृश्यं ज्ञात्वा 'एतत्सादृश्यं हस्तिनि' इति धीः, भूयोऽवयवसा[1]मान्यबाहुल्यभ्रमात् सादृश्यभ्रमः । अत एव सन्निधौ प्रबलालोके च बाधधीः । स्तोकसाधर्म्यात् सादृश्यव्यवहारस्तु कवीनां व्यवहारमात्रम् ।

---

शब्दार्थसम्बन्धोऽशक्यावगमः; सादृश्यस्यावाच्यत्वाद्वाच्यस्य चासिद्धत्वादिति कथं मानान्तरासम्भवः ? उच्यते—सादृश्यं हीह लक्षणतयोपयोगीत्यविवादम् । ततश्च स्वलक्ष्यं परोक्षतया स्वयमेव तदुपस्थापयेदित्यनन्तरमेव वाच्यवाचकधीः स्यात । आपरोक्ष्यमात्रं वनगमनापेक्षम्, न तद्वाच्यत्वज्ञानोपयोगीति तद्गतस्य 'अस्येयं संज्ञा' इति धीः स्मृतिरिति युक्तमेवोक्तम् । लक्षणेन चेत्यादिसुगमम् ।

इत्युपमानवादः

---

१. Omitted सामान्य. क.

# अथार्थापत्तिवादः

### अर्थापत्तिलक्षणम्

"अर्थापत्तिः" अनुमानाद्भिन्नेयमर्थापत्तिरविशिष्टा सतीदानीं लक्ष्यते। उपलब्धोऽर्थः कल्पनां विना अर्थान्तरं सन्देहयन्नर्थं कल्पयति, [1]सन्देहित एव वा कल्पयति इति द्विधा लक्षणम्।

### परमतखण्डनम्

परोक्तम् उपलब्ध एव सन्दिग्धः कल्पयतीति। [2]जीवतो गृहाभावः सन्दिग्धः; न तु जीवनं सन्देहितं कल्पयतीत्यर्थः। इयमिह स्थितिः—यः सदा गृह एव दृष्टो गणितागमादेः कञ्चित्कालं [3]तज्जीवनं निश्चितम्, तदन्तर्गत एव क्षणे तस्य गृहेऽदर्शनात् पूर्वनिरूपितगृहदेशत्वधर्महानाज्जीवनं सन्देहं नीतं [4]बहिर्देशत्वकल्पनया पुनर्निश्चितम्;

"अर्थापत्तिरपि"। ननु व्याप्तिग्रहोपजीविन्यर्थापत्तिः किमित्यनुमानानन्तर्यानादरेणेदानीं लक्ष्यत इति शङ्कां निरस्यन् सङ्गतिमाह—अनुमानाद्भिन्नेयमिति। लक्षितादन्यत्वधीतोऽनन्तरलक्ष्यत्वप्राप्तिः; न चार्थापत्तेरन्यत्वं वस्तुतः सदपि व्यक्तमिति तदनुसन्धानविलम्बिता लक्ष्यत्वापत्तिरिति शास्त्रस्यैव तदापत्तिर्द्रागिति तदनुसन्धानापेक्षयेदानीं परिशेषाद्धीस्था लक्ष्यत इति न स्थानातिक्रम इत्यर्थः। तदन्यत्वं व्यञ्जयितुं प्रकरणपञ्चिकयोर्दर्शितं लक्षणं संगृह्यानुवदति—उपलब्धोऽर्थ इति। भाष्यस्थदृष्टश्रुतपदार्पितोऽर्थ उपलब्ध उक्तः; सोऽर्थान्तरानुपपत्त्यापादकतया विवक्षितोऽर्थान्तरकल्पकः स्वमते; परमते स एवानुपपन्नो विवक्षित इति विशेषमाह द्वयाभ्युपगतमानानन्तरसाधकत्वशक्तिविवेकार्थम्—परोक्तमुपलब्ध एवेति। तदभिप्रायमाह—जीवतो गृहाभाव इति। तत्र कस्य सन्देहार्हतेति विवेक्तुं सन्देहहेतुज्ञापकतया विषयमेव शोधयति—इयमिहेति। यस्य जीवनं गणितशास्त्रादिनिश्चितं गृहाधारतया च तन्निश्चितं गमनाशक्त्यादिना तत्रैव सदा दर्शनात् तस्य प्राङ्निश्चितमपि जीवनं तद्व्यापकावधारितदेशयोगबाधात् सन्देहार्हं तद्देशयोगस्योपाध्युन्नयनेनाव्यापकत्वपरामर्शात् बहिर्देशवर्तितया पुनर्निश्चयार्हं चेति स्वपक्षस्तावन्निर्वाहान्तः। परपक्षे सन्देहो दुरुपपाद इत्याह—

१. Omitted सन्दे—कल्पयति. क. २. जीवतो वा गृहा. क. ख.
३. कालं जीवनम् क. ४. देशकल्प क.

नं[1] सन्देहमर्हति; गृहदेशता त्वौत्सर्गिकी आगमनिश्चयानुरोधात् बाधमर्हति। बहिर्भावधीस्तु जीव[2]तो गृहादावदर्शनाद्वा जीवनादेव वा गृहादर्शनात् सन्दिग्धा; विवक्षाभेदात् विधाद्वयम्; सत्यप्यनुमानसामग्री नास्यां कल्पनायां व्यापृता। इत्थमपि लोके मित्युत्पत्तेर्नानुयोगः। न च सन्देहान्तर्भावविधा; कारणानुमाने कार्यं हि कल्प्यकारणाकल्पनयैव सन्दिग्धम्, जीवनं तु

---

स्वपक्षेऽपि गृहनियततयाऽवधारितजीवनस्य कथं तद्विपरीतावधारणमित्यत्राह - गृहदेशता त्विति। तदर्थस्तूक्त एव। ननु गृहनियततानिश्चयबाधानन्तरं बहिःस्थितिरनुमानार्हेति कथं मानान्तरसिद्धिरित्यत्राह — बहिर्भावधीस्त्विति। सामग्र्यन्तरजा तद्धीरिति मानान्तरसिद्धिरित्यर्थः। ननु विधाद्वयोक्तिर्न घटते, हेतुभेदाभावादित्यत्राह — विवक्षाभेदादिति। गृहाभावजीवनयोर्गुणप्रधानभाव-विवक्षाभेदमात्रात् द्वयोक्तिर्न सामग्रीभेदाभिप्रायेणेत्यर्थः। नन्वनुमानसामग्र्यां सत्यां कुतः सामग्र्यन्तरजत्वाङ्गीकार इत्यत्राह — सत्यप्यनुमानसामग्रीति। गृहाधारत्वव्याप्तिबाधानन्तरजीवनसन्देहनिवृत्तिर्बहिर्देशनिर्णयान्तैव; नानाधार-जीवननिश्चयव्यवहितस्तन्निश्चय इति बहिःसम्बन्धकल्पनासमकालैवानुमानसाम-ग्रीति तज्जन्यत्वायोगान्मानान्तराङ्गीकार इत्यर्थः। ननु गमकविषयः सन्देहः तस्य गमकत्वशक्तिप्रतिबन्धक इति प्रसिद्धमेवानुमाने; युक्तं च तत्; स्वयंसन्दिग्धस्य स्वोपपादककल्पकत्वेऽतिप्रसङ्गः स्यादित्यत्राह – इत्थमपि लोक इति। इतरसन्देहानां तत्प्रतिबन्धकत्वेऽप्युक्तविधस्य तत्साधकत्वं मित्युत्पत्तिदर्शनादेवेतरमानवदुपे-यमिति न चोद्यावकाश इत्यर्थः। ननु स्वमाननिश्चिते वस्तुन्यन्यगतः संशयो मिति-हेतुर्मानान्तरत्वहेतुश्चेत् कार्यलिङ्गे कारणानुमानेऽपि तदापत्तिरित्याशङ्क्य ततोऽपि प्रकृतस्य विशेषमाह—न च सन्देहान्तर्भावविधेति। न हि प्रकृता विधा तत्रास्ति; गम्यव्यतिरिक्तव्यापकाभावधीर्जीवनसंशयकरी, न सा कारणानुमाने; तदसिद्धौ कार्याभावप्रसङ्गमात्रमिति न साम्यमित्यर्थः। तत्संशयनिवृत्तिफलार्थजिज्ञासाप्रयुक्त-मनोवधानलभ्या च तदुत्था मितिरिति गमकाभिमतजीवनमेव गम्यम्, तत्प्रकार-मात्रतया बहिर्देशयोगस्य गम्यता; न तथा कार्यस्य गम्यता, संशयस्यापि कारण-

---

१. Omitted न. क, ख. २. जीवत्वे गृहा. क.

गृहाभावदर्शनात् कल्प्याकल्पनसहितात्सन्दिग्धम्; गम्यं चेदं बहिर्वर्तितया। गमकपक्षेऽप्यन्यापादितः सन्देहः, कार्यं तु कल्प्याकल्पनमात्रान्नीतसन्देहमिति भेदः। कार्यानुमानादपि परोक्तो भेदः—जीवनं देशव्याप्तम्, अव्याप्त एव हि गृहाभावोऽनुपपद्यमानतया बहिर्भावं गमयतीति। तन्न, गृहाभावो हि[1] निश्चित एवेत्युक्तम्, जीवतो हि गृहाभावोऽपि बहिर्भावव्याप्त एव गमकः, शुद्धस्त्वगमक एव, अव्याप्तत्वात्। अस्तु वा जीवतो गृ[2]हाभावस्य बहिर्भावं विनानुपपत्तिः, सा तु व्याप्तित एवेत्यनुमापत्ति। साध्येन हेतुव्याप्तेः साध्याभावो हेत्वभावव्याप्त इति साध्याभावे हेत्वभावापत्ति-

---

जिज्ञासापाद्यत्वादिति विशेषान्तरमाह—गम्यं चेदमिति। ननु गमकमात्रसित्यपि पक्षोऽस्तीत्याशङ्क्य तत्रापि पूर्वोक्तो विशेषोऽनपाय्येवेत्याह—गमकपक्षेऽपीति। एवं स्वमतेन मानान्तरत्वमुपपाद्य परमते तदसम्भवं दर्शयितुं तदुक्तप्रकारमाह—कार्यानुमानादपीति। व्याप्तेः सम्बन्धात्मतोपगमेऽपि सम्बन्धान्तरोपजीविन्येव सेति जीवनमेव बहिर्देशव्याप्त्यर्हम्, न गृहाभावः; तच्च देशमात्रव्याप्तम्, न बहिर्देशविशेषनियतमिति न लिङ्गतार्हम्; न चैवं मित्युत्पत्त्यसिद्धिः; बहिर्वृत्त्यभावे गृहाभावस्यानुपपत्तिः, देशयोगं विना जीवनानुपपत्तेः—इत्यनुपपत्तिहानायैव बहिर्वृत्त्यवगमादित्यर्थः। तदसम्भवमाह—तन्न गृहाभावो हीति। न तावद्गृहाभावस्यानुपपत्तिः, तत्स्थितेः प्रत्यक्षार्हत्वात्तन्निवृत्तिमात्रेणैव तदभावनिश्चयात्; देशयोगासिद्धिनिमित्तस्तु संशयो जीवनविषय एवेत्यभिप्रायः। गृहाभावस्य सम्बन्धाभावाद्व्याप्त्यसिद्धे[4] अनुमानासम्भवो नास्तीत्याह—जीवतो हीति। व्यभिचारस्तावज्जीवनविशेषणयोगात् परिहृतः, केवलस्य ह्यगमकत्वं संप्रतिपन्नमेव तदव्याप्त्यभावकृतम्, अनुपपत्तिभावाभावव्यवस्थाया व्याप्तिभावाभावैकहेतुत्वादिति व्याप्त्यपेक्षाया अवश्याश्रयणीयत्वाल्लिङ्गत्वेव स्यादित्यर्थः। गृहाभावस्य परोपगतानुपपत्तिरेव व्याप्तिमूलेत्यनुमानत्वापाि केति तदङ्गीकारेणाह—अस्तु वा जीवत इति। यादृशं हि गृहगतस्य द्रष्टुस्तद्वर्त्यभावनिश्चयं प्रति दार्ढ्यम्, न तादृशं जीवननिश्चयं प्रतीति न तन्निश्चयो

---

१. पादितसन्दे. क. ख.
२. मानो बहि. क.
३. हिस्थिरएवे. ख.
४. Omitted गृहाभावस्य. क.

रूपानुपपत्तिर्मा भूदिति हेतोरेवान्वयव्यतिरेकप्रतिसन्धानात् साध्यधीरनुमैव। अत एव जीवतो गृहाभावबहिर्भावावेककालत्वसम्बन्धनियतावेकदेशौ कालस्यात्मन्येव दृष्टौ; तथैकत्राभावे जीवनं देशान्तरसंयोगेन नियतैकार्थसमवायमेकदेशश्च जीवत इत्यनुमानसामग्रीसम्भवेऽपि विधाद्वयादुक्तो भेदः। एवमपि धीदर्शनाल्लोके मानान्तरतेत्युक्तम्; दृष्टस्य हि जीवनादेः पूर्वनिरूपितरूपादर्शने सन्दिग्धता लोकसिद्धेत्यप्ययुक्तम्। भाष्ये दृष्टश्रुतशब्दाभ्यां गोबलीवर्दवदुपलब्धमात्रमुक्तम्; इत्थमपि लोके प्रयोगान्न गौरवानुयोगः गुरुपर्यायप्रयोगवत्।

भट्टोक्ता श्रुतार्थापत्तिः

परस्तु—'श्रुतार्थापत्तेः शब्दकल्पनेति भेदं वक्तुं श्रुतपदम्' इत्याह।

---

गृहाभावनिश्चयं चालयितुं शक्नोति। वस्तुतस्तु तदभ्युपगमेऽपि जीवनदार्ढ्यापन्नं बहिर्भावव्याप्यत्वं गृहाभावस्यानुसन्धायैव तदभावोत्प्रेक्षया गृहाभावानुपपत्तिरुन्नेयेति तच्छाान्त्यर्था बहिर्भावधीर्व्याप्यधिया व्यापकधीरेवेयं स्यादित्यर्थः। यस्मादेवं जीवनस्य संन्देहापत्त्यनुगमेऽवश्याश्रयणीयानुमयैव मित्युत्पत्तिः, तस्माद्व्याप्त्यपेक्षितसम्बन्धाद्यनुमानसामग्र्यपीत्यम. श्रयणीयेत्याह—अत एव जीवत इति। संयोगादितुल्यासम्बन्धाभावेऽपि चन्द्रोदयसमुद्रवृद्ध्यादिवदेककालत्वसम्बन्धादप्यनुमानसिद्धेर्मानान्तरं न स्यादित्यर्थः। गृहाभावस्य जीवनविशेषणत्वापेक्षयाप्यनुमानसामग्रीलाभात् स्वोक्तगतिरेव भाष्यानुगुणेत्याह—तथैकत्राभाव इति। ननु प्रमाणसिद्धे वस्तुनि तदुपपादकासिद्धिमात्रप्रसक्ततदभावसंशयस्यैव तत्प्रमितिसामर्थ्यं लोकसिद्धम्, न स्वत एव सन्दिग्धस्येत्युक्तगतिरप्ययुक्तैव। स्वरूपतश्च संशयः पूर्वनिश्चयनिरुद्धोत्पत्तिरित्याशङ्क्योक्तस्मारणेन परिहरति—एवमपि धीदर्शनादिति। ननु दृष्टपदस्योपलब्धमात्रोपलक्षणार्थत्वाच्छ्रुतपदं भाष्यस्थमनन्वितमित्यत्राह भाष्ये दृष्टश्रुतपदाभ्यामिति। सति श्रुतपदे तदतिरिक्तोपलब्धार्थं दृष्टपदमिति नान्वयानुपपत्तिरित्यर्थः। नन्वेवमपि गौरवदोषो दुर्वार इत्याशङ्क्य न स दोषतया प्रसिद्ध इति परिहरति—इत्थपि लोक इति। कल्प्यान्यत्वसूचनार्थं पृथक् ग्रहणमिति परोक्तमनुवदति—परस्तु श्रुतार्थापत्तेरिति। ग्रन्थार्थो व्यक्तः। तदनुपपत्तिमाह—सविकल्पकेति।

---

१. अदर्शनात्. ख.

यद्यपि पीनत्वानुमितं भोजनं दिवानिषिद्धं रात्रिवर्ति कल्पयितुं प्रवृत्ति, तथापि शब्दविकल्पितं तत् कल्प्यमिति तद्वाचकशब्द एव प्राथम्यलाघवाभ्यां कल्प्यते, ततोऽप्यर्थबोधादनुपपत्तिशान्तेः; न चैवमिन्द्रियादिसविकल्पकेऽपि शब्दो वेद्य; तिर्यगादिधीषु शब्दशून्यास्वर्थे [३]शक्तयवधृतेर्न शब्देऽपि शक्तिकल्पना। न च दृष्टार्थापत्तावर्थे शक्तेरत्राप्यर्थ एव; उपपादकतया हि शक्तिरर्थे, नार्थतयेति शब्देऽप्युपपादके सा।

तन्निरासः

मन्दतयेदं गुरुणा न निरस्तम्, मन्दतामाह नाथः; सविकल्पके हि संज्ञाविशिष्टोऽर्थो वेद्यः, न तु संज्ञामेय इति तदवस्थे शब्देऽपि [४]नार्थमित्यनुपपत्तिशान्तिः। अथ तदवस्थस्यार्थधीशक्तेरर्थपरत्वमवस्थान्तरं कल्प्यम्, एवं कल्पनागौरवाद्वरमर्थकल्पना। किञ्च दृष्टार्थापत्तेः साक्षादुपपादकेऽर्थे शक्तिः, इह तूपपादकबोधके शब्दे कल्प्या। किञ्च अन्यत्र सविकल्पके [५]शब्दः स्मृतिस्थ इति अत्रापि तथा, न [६]तु मितिस्थः कल्प्यः। ये [७]तु विश्वजिदादौ प्रमा[८]णत्वेनापरिपूर्णः शब्दः शब्दमेव कल्पयतीत्याहुः, ते

---

व्युत्पन्नस्य शब्दपूर्विकापि सविकल्पकधीः न मानावस्थशब्दोपनेत्रीति न पूर्वोपस्थितिमात्रेणावसायिन्यर्थापत्तिः, तत्परधोस्थतोपाधिकत्वानमानतायास्तदसिद्धेश्चानुपपत्तिशान्त्यसमर्थत्वादित्यर्थः। यदि पुनर्व्युत्पत्त्यवधार्यसाधारणपदशक्तिसिद्धिमात्रेण कल्प्यतात्पर्यापेक्षयाऽर्थोपस्थापकशब्दावसायितेष्टा, तदा लाघवादर्थावसायितैवोपेयेत्याह—अथ तदवस्थस्येति। साक्षादुपपादकत्वं चेहार्थस्यैवेति संमतमिति दृष्टार्थापत्तौ तद्विषयप्रसिद्धार्थापत्तेः तद्धानेन व्यवहितविषयत्वकल्पनया शब्दविषयत्वाश्रयणे गौरवाधिक्यदोषोऽपीत्याह—किञ्च दृष्टार्थापत्तेरिति। सविकल्पकान्तरवैषम्याश्रयणं च दोष इत्याह—किंचान्यत्रेति। केचित्पुनः—विश्वजिदादौ तावच्छब्दकल्पनैवोपेया, शब्दस्यैवापरिपूर्णतयाऽनुपपन्नत्वात्तदवयवान्तरकल्पनया तत्पूर्तेरेवापाद्यत्वात्तत्साम्यात् प्रकृतेऽपि सैवाविशेषादित्याहुः; तन्मतमनूद्य दूषयति—ये तु विश्वजिदादाविति। शब्दस्यापि साकाङ्क्षतदपेक्षितार्थप्रतीतिमूलैवा-

---

१. यद्यपीनत्वा. क.
२. शब्दमात्रम्. क.
३. Omitted. शक्ति. क.
४. नार्थमिथ्यानुप. क. ख.
५. शब्दस्मृतिस्थ. क. ख.
६. तु मृतिस्थः. ख.
७. तु. शब्दोविश्व. ख.
८. णत्वेन परि. क.

निरस्ता', अर्थाभावेऽप्रमाणत्वेनापरिपूर्णतार्थादेव शाम्यतीत्यर्थ एव कल्प्यः। 'भाष्ये च श्रुतेऽप्यर्थकल्पनैवोक्ता, न शब्दकल्पना ।

श्रुतार्थापत्तिविषयभेदः

अर्वाचीनोक्तं हेयम्—ऊहादौ शब्दकल्पना न स्यादिति । यत्र हि शब्द एव साक्षादुपपादकः, तत्र शब्दकल्पनैव मता, प्रकृतिवदाभिधानिकं प्रकाशनं मन्त्रकार्यमिह धीस्थमिति 'सूर्याय' इति प्रक्षेपादेव कार्योपपत्तिरिति शब्दकल्पनोक्ता नवमे । अध्याहारेऽपि "इषे त्वा" इत्यत्र छिनद्मि इति शब्दकल्पनं मन्त्रोपदेशादाभिधानिकप्रकाशोपपत्त्यर्थम् । विश्वजिदादौ त्वर्थाध्याहार एव । अशब्दोपस्थितेनापि

---

पूर्तिरिति तत्प्रतीत्यैव तच्छान्तिरिति तत्त्यागेन शब्दकल्पना न स्यादित्यर्थः । भाष्यविरुद्धा च सेत्याह—भाष्ये चेति । तत्र शब्दकल्पनानुपगमे तदविशेषादूहविषयोपगतापि सा न स्यात्; 'इषेत्वा' इत्यध्याहाराश्रिताधीत्यापादनमप्ययुक्तमित्याह—अर्वाचीनोक्तं हेयमिति । उपपादनकत्वप्रयुक्तार्थकल्पनोक्ता; तत्प्रयोजके शब्दाश्रिते तत्कल्पनाप्यहेया तच त्रोहे शब्दाश्रितम्, मन्त्रपाठप्राप्तपदस्य तत्प्रकाश्यतयोहे प्राप्तेऽर्थान्तरे क्लृप्तवृत्त्यसम्भवे पदान्तराणां क्लृप्तकार्यार्थं प्रयोज्यत्वे तेषां यथाक्लृप्तकार्यकरत्वं पदान्तरार्पितांशान्तरापेक्षमिति तदाक्षेपेणैव प्रयोगं विधिराक्षिपेत्; न तेषामेव तदंशेऽपि व्यापारम्, कार्यान्तरतापत्तेः—इति युक्ता शब्दकल्पना; तथा; "इषे त्वा" इत्यत्रापि स्यात् । यद्यपि छिनद्मिपदस्य सम्बन्धापादकः कश्चिद्विनियोगो नास्ति, तथापि "इषे त्वेति च्छिनत्ति" इति साक्षात्तदुक्त्यशक्ते पदद्वये तत्र विनियुक्ते तदनुष्ठानोपयोग्यनुष्ठेयानुसन्धानार्थोपायान्तरनिवृत्तौ छिनद्मिपदहीनस्य च पदद्वयस्य तदनुसन्धानाशक्तेस्तदपेक्षस्य च तच्छक्तेस्तत्कल्पना स्यादित्यर्थः । तत्तुल्यहेत्वसिद्धेर्विश्वजिदादावर्थाध्याहार एवेत्याह—विश्वजिदादौ त्विति । ननु तदर्थस्य मानान्तराविषयतया शब्दैकविषयतोपगमाच्छब्दाध्याहारानुपगमे च तदसिद्धेस्तदापत्तिरित्याशङ्क्य अन्विताभिधानश्रुतशब्दाभिधायिविषयतयैव तत्सिद्धेर्न तदर्थः शब्दाध्याहार इत्याह—अशब्दोपस्थितेनापीति । अनुषङ्गे तर्हि कथमर्थान्वयमात्रानङ्गी-

---

१. भाष्येऽपि श्रुते. क. ख.　　२. वम्, अतः क.

प्रतियोगिना श्रुतः शब्दोऽन्विताभिधायीत्येवं शाब्दतापि । अनुषङ्गे तु न कल्पना, तन्त्रोच्चरितशब्दस्यैव सर्वशेषत्वात् । स्मृतिलिप्यपभ्रंशानां वेदवर्णसाधुप्रभवतया [1]तदुपस्थापकता साधुत्वेऽन्वितार्थतेति । विभक्तेरसाधुत्वेऽर्थानन्वयो [2]नाशब्दतया । एवं पचति इत्युक्ते [3]प्रत्यक्षेणौदनेऽनन्वयो

---

कारेण शब्दविषयत्वाश्रयणमित्याशङ्क्य तत्कथनैव तत्र नास्तीत्याह—अनुषङ्गे त्विति। स्मृत्यादौ तर्हि कथं शब्दकल्पनेत्याशङ्क्य कार्यकारणव्याप्तिमूलानुमानविषयस्तत्र शब्दः, नानुपपत्तिमात्रकल्प्य इति परिहरति—स्मृतिलिप्यपभ्रंशानामिति । तत्रापभ्रंशेऽनुपपत्तिरापादिता परैः - पदांशापभ्रंशेऽपि प्रकरणादिभिः तदर्थप्रतीतिपूर्विकैव साधुशब्दकल्पना; ततोऽर्थकल्पनापक्षे तदन्वयमात्रमुपेयम्, साधुशब्दकल्पना निर्मूलैव स्यादित्यशब्दोपस्थापितस्यान्वयानर्हतैव तत्कल्पनाहेतुरवश्याश्रयणीय इति सर्वत्र शब्दकल्पनैव साध्वीति तत्समाधिमाह— साधुत्वेऽन्वितार्थतेति । वक्ता तावत्तदन्वयोऽपि पदार्पणीयो विवक्षितः; प्रयुक्तं च तदेकदेशविकलमपीति तदर्पणीय एव तदन्वयो यथासम्भवं न पदान्तरविषयतयोपेयः । तस्य च श्रुतांशस्य असाधुतया तच्छक्त्यभावाद्विवक्षितसाधुपदोपस्थापनद्वारेणैव तदर्हतेति तदनुमितविवक्षितपदाभिधेयस्तदन्वय इष्टः, नाप्रयुक्तांशार्थस्याशब्दतादोषेणेति नाभ्युपगतभङ्ग इत्यर्थः । यत्तु—शब्दोपस्थितस्यैवान्वय इत्येतद्दार्ढ्यार्थमेव—अन्यथा 'पचति' इत्येतावत्येव प्रयुक्तेऽश्रोतृप्रत्यक्षोपस्थापितौदनान्वयोऽपि स्यादित्यापादितम्, सन्निध्यविशेषादिति; तत्परिहारमाह—एवं पचतीत्युक्त इति । न सन्निधिमात्रमन्वयप्रयोजकम् , तात्पर्यस्यापि तद्धेतुत्वप्रसिद्धेस्तन्निश्चयात्तदन्वयः; तन्निश्चये च तदन्वयः प्रसिद्ध एवेति न शब्दसन्निधापितताऽन्वयहेतुरित्यर्थः । नन्वेवमपि त्वदभ्युपगतकार्यपरान्वयनियतशक्तिव्युत्पत्तिसाम्यं शब्दोपस्थापितान्वयनियमव्युत्पत्तेर्नापैति, व्युत्पत्तौ कार्याव्यभिचारात्; तदुत्तरकालव्यभिचारः पुरुषाभिप्रायनिमित्तो न शब्दस्वभावनिमित्त इति हि शक्तिनियमाङ्गीकार ; तद्वद्व्युत्पत्त्युत्तरकाले पुमभिप्रायकृतः प्रत्यक्षसन्निहितान्वयो न शब्दस्वभावकृत इति शङ्कते—

---

१. तत्तदुप. ख. २. न त्वशब्द. ख.
३. दनेनाशाब्दत्वात्. क,

नाशब्दत्वात्, किन्तु तद्विवक्षानवधृतेः; अवधृतेऽन्वय एव। अथ [1]'यथा वः कार्यपरान्वये व्युत्पत्तिः, तथा [2]नः शाब्देनैव शाब्दान्वयव्युत्पत्तिरिति, तन्न; कार्यधियैव व्यवहारात्सा तथा; नेयम्, अध्याहारेणापि व्यवहारात्। अध्याहारस्य चोपपादकेऽर्थ एव स्थितेः शाब्दत्वस्य श्रुतशब्दार्थतयापि व्युत्पत्तेः। यदि च शाब्दोपपत्त्य[3]र्थं शाब्दमेव, तर्हि प्रत्यक्षोपपत्त्यर्थं प्रत्यक्षमेव स्यादिति दिक्॥

---

अथ यथा वः कार्यपरान्वय इति। वैषम्यमाह—तन्न कार्यधियैवेति। व्युत्पत्तिस्थानव्यवहारे कार्याव्यभिचारात् कार्यपरत्वमुपेयते तत्रैव त्वध्याहारस्य दर्शनात्, तस्य चार्थविषयत्वमुक्तमिति साम्यापादनमशक्यमित्यर्थः शाब्दत्वभङ्गापादनस्यान्विताभिधानहतत्वमित्याह—शाब्दत्वस्येति। श्रुतार्थापत्तावध्याहारसाम्याङ्गीकारेण शब्दकल्पनोपगमे च दृष्टार्थापत्तावतिप्रसङ्गदोषोऽपि स्यादित्याह—यदि च शाब्दोपपत्त्यर्थमिति। ननु शब्दोपस्थितस्यैव शाब्दान्वयो न हेत्वन्तरोपस्थितस्येति व्युत्पत्तिसिद्धनियममूलस्तत्र शब्दकल्पनोपगमः; तदभ्युपगमेन प्रत्यक्षार्थोपपादकार्थः प्रत्यक्ष एव स्यादिति निर्मूलातिप्रसङ्गापादनमुन्मत्तचेष्टितमेवेति शङ्काहानार्था दिगुक्तिः। अयमर्थः—यत्र 'पीनो दिवा न भुङ्क्ते' इति वाक्यं रात्रिर्वार्तिभोजनविधिपरमेव प्रयुज्यते, तत्रैव रात्रिर्वार्तिभोजनस्य वाक्यार्थान्वयः तदर्थं शब्दकल्पना च; न तु तत्रार्थापत्तेः प्रचारः, शब्दोत्थत्वात्तत्प्रतीतेः; यत्र तु दिवानिषेधमात्रपरम्, तत्रार्थापत्तिः; तत्र च वाक्यार्थान्वयो नास्ति, केवलं शब्दोपपादकत्वमात्रम्। अर्थापत्तिविषयस्य तत्रोपपाद्यस्य शाब्दत्वमात्रेण तत्सजातीयप्रमाणविषयत्वमुपपादकार्थस्य यद्युपेयते, तदातिप्रसङ्ग इति॥

इत्यर्थापत्तिवादः॥



---

१. यथावयवः क. २. न शाब्देनैव. क.

३. पत्त्यर्थं प्रत्यक्षमेव. क.

# अथाभाववादः

भट्टाभिमताभावप्रमाणनिरासः

"अभावोऽपि ।" उक्तलक्षणसमाध्यर्थं भाष्यमनन्तरं कृतम्[1]; पूर्वः पक्षः—प्रसिद्धेः षष्ठं प्रमाणं लक्ष्यं प्रमेयशून्यत्वान्न[2] लक्ष्यमिति सन्देहो भाष्यादपि नापैतीति। राद्धान्ताभासी लक्षणपरं भाष्यमाह, प्रमेयसम्भवात्, भूतले घटो नास्तीति धीर्हि शून्यत्वे, न भूतलमात्रे, घटवत्यपि प्रसङ्गात्। पादन्यासादिव्यवहारोऽपि न भूतलमात्रधिया, धीःसैव प्रतियोगिना, सकण्टकधियाप्यापत्तेः। अथ द्वयी धीः—संसृष्टे [3]तन्मात्रे, तन्मात्रे च द्विधा[4]—प्रतियोगिन्यदृश्ये दृश्ये च,

"अभावोऽपि"। भाष्यप्रयोजनं ससङ्गतिकमाह— उक्तलक्षणसमाध्यर्थमिति। का तदनुपपत्तिरित्याशङ्क्य तन्निवर्त्यशङ्कारूपं पूर्वपक्षमाह—पूर्वः पक्ष इति। लोकप्रसिद्धप्रमाणलक्षणकरणे प्रसिद्ध्यविशेषादभावाख्यप्रमाणमपि लक्षणार्हं भाति; विषयनिरूप्यं प्रमाणमिति तद्विवेके तन्मेयाप्रसिद्धेर्न लक्ष्यमित्यपि—इति संशयात्मकः पूर्वः पक्षः प्रमाणव्यभिचारसंशयान्तः। स च भाष्याक्षेपावसायी; पूर्वपक्षनिरासार्थं हि तदारभ्यते; ततस्तच्छक्तमेव तद्वचनार्हम्; न चेदं तच्छक्तम्, स्थानप्रकरणाभ्यां वाच्यान्तराप्रसिद्धेश्च प्रमाणलक्षणपरत्वभानान्मेयान्तरानुपलब्धेः पूर्ववद्बुद्ध्युत्पत्त्यनुक्तेश्चातत्परत्वभानाच्च सन्दिग्धार्थत्वादित्यर्थः। उक्तहेतुभ्यो लक्षणपरत्वभाने मेयाभावशङ्कामात्रं तद्विरोधीति तत्समर्थनेन लक्षणपरत्वमेव—इत्येकदेशिमतं पूर्वपक्षनिरासप्रकारमाह—राद्धान्ताभासी लक्षणपरमिति। धर्मिविशेषनिष्ठान्यनास्तिताधीस्तदपेक्षानुष्ठानं च लोकेऽभाववत्प्रचरतीति तावत्प्रसिद्धम्; तत्र नास्तिधियस्तद्धर्म्यनधिकविषयत्वशङ्कया हि मेयाभावः शङ्क्यः; तन्मात्रविषयत्वे संसृष्टधीकालेऽपि तदापत्तियुक्त्याधिकविषयत्वनिश्चयसम्भवान्मेयसिद्धेर्मानलक्षणमेवैतदित्यर्थः।

नन्वयमतिप्रसङ्गदोषो नास्ति, संसृष्टावस्थायां तद्विलक्षणविषयतन्मात्रधियोऽनुत्पत्तेरिति राद्धान्तिमतमाशङ्कते अथ द्वयी धीरिति। भूतलदृष्टे-

1. न्तरं कृतः पूर्वः क. ख.
2. प्रमेयत्वान्न. क. ख.
3. अतन्मात्रे. क.
4. Omitted. द्विधा. क.

तत्र दृश्ये या तन्मात्रधीः, सैव प्रतियोगिनास्तित्वधीः। धीरेव नास्तित्वमिति यदुक्तम्, तत्तद्धीवेद्यतयैव तन्मा[1]त्रकेवलैकाकि तदेकपर्यायं नास्तित्वं [2]विमतो बोध्यते। यथा धीविमतावर्थनिर्देश्या धीः, तथार्थविमतौ धीनिर्देश्योऽर्थः; धीनिर्दिष्टेऽप्यर्थे विमतस्तत्संमत्या बोद्धव्यः। अभावधीहेतुर्हि भावधीर्न संसृष्टे, विरोधात्; नाभावविशिष्टे, आत्माश्रयात्। अतस्तन्मात्र एव वाच्या, एवं च तन्मात्रावस्थैव घटभङ्ग इति [3]तद्धीहानेऽपि जलपातो युक्तः। मृत-

एव हि घटसंसर्गाविषयत्वमात्रेणापि तत्संसृष्टतद्दृष्टिविलक्षणत्वं प्रसिद्धमेव, न तत्संसर्गाभावविषयतयैव; सा तु तन्मात्रधीः तत्संसर्गस्फुरणसमर्थसामग्र्युत्था चेत् तन्नास्तितधीरिति प्रसिद्धिं लभेत तदर्हानुष्ठानहेतुश्च स्यात्, न तदधिकाभावप्रमितिः प्रसिद्धेति न लक्षणोक्त्यवकाश इत्यर्थः। ननु नेदं राद्धान्त्यभिप्रेतम्; तन्मात्राधीविषय एवैवमभावस्य स्वरूपमुक्तं स्यात्; तद्धीरेव तु तत्स्वरूपं शालिकोक्तमिति किमित्यन्यथोच्यत इत्याशङ्क्य तदुक्तिरप्येतदभिप्रायैवेत्याह—धीरेव नास्तित्वमितीति। संप्रतिपन्नाधिकार्थस्वरूपविवादे तद्व्यवहारसमर्थपर्यायपदानां वाच्यविवादस्यानुषङ्गसिद्धत्वात्तदन्यतमेन तद्बोधासिद्धेस्तदुपस्थापकधीविवेकमात्रलभ्यबोधापनेयस्तद्विवाद इत्यवश्यापेक्षे बोधविवेके तदुक्तिमात्रोपरमस्तद्विषयसिद्धेरयत्नलभ्यत्वाभिप्रायेणेत्यर्थः। एतदेव दृष्टान्तमुखेन स्थापयति—यथा धीविमताविति। यथा धियो लिङ्गेन्द्रियजत्वादिविवादे लिंगादिसम्भवासम्भवविवेकलभ्यं तन्निर्धारणं तथेत्यर्थः। ननु तन्मात्रधियः संसर्गाभावाधिकाविषयसंप्रतिपत्तौ तदधिकाभावमेयासिद्धिस्तदवष्टम्भेनापाद्या; कथमभाववादिनस्तत्संप्रतिपत्तिरित्यत्राह—धीनिर्दिष्टेऽप्यर्थे विमत इति। कथं तत्संमतिः स्यादित्यत्राह—अभावधीहेतुर्हीति। धर्मिधीसापेक्षत्वादभावधियोऽभावानपेक्षमेव संसृष्टावस्थधर्मिविलक्षणावस्थधर्मिधीविषयत्वमभावबोधार्थमुपेयमिति न सम्मतिर्दुष्करेत्यर्थः। ततश्च तन्मात्रधिय एवाभावतां यथाश्रुतां गृहीत्वा परापादितदूषणद्वयमपास्तमित्याह—एवं च तन्मात्रावस्थैवेति। धीविषयधर्म्यवस्थैवाभाव इति नानन्तरमेवाभाव-

१. न्मात्रैकैवलैकाकि. ख. २. विमतो बोध्येते. क.

३. पातनमपि क.

संजीविनी चाप्रसक्ता। धीहाने तु व्यवहारहानम्। धीभावेऽपि दृश्यतार्था सूक्ष्मजिज्ञासा। संसृष्टबुद्ध्यनन्तरं च तन्मात्रधीर्युक्ता, स्वहेत्वा[1]गमात्। कपालमाला वा देशान्तरस्थितिर्वा घटस्य तद्धीहेतुः। संसृष्टधीस्तु स्वहेतुध्वंसाद्भावान्तरोदय[2]रूपान्निरन्वयविनाशिबुद्ध्यादेः धर्मिस्वरूपमात्रस्थितिरूपान्न भवति। धर्मिमात्रस्थितिरेव ध्वंसो व्यापी। अनुमा[3]द्येकवेद्यस्य धर्मिणो धर्माभावेऽप्यनुमाद्यात्मिकैव तन्मात्रधीः। लिङ्गव्याप्तिदृश्यतया प्रतियोगिनो धर्मस्य दृश्यता। तन्मात्रधीश्च यस्मिन् दृश्येत, तदभावव्यवहारहेतुः। अतो

---

नाश इति न तत्प्रयुक्तदूषणापत्तिः, धीनाशात्तु तत्प्रयुक्तव्यवहारहानमेव स्यादित्यर्थः। ननु धर्मिमात्रावस्थात्मके धर्माभावे तद्धाने सत्यपि पुनः सूक्ष्मजिज्ञासा प्रवृत्यङ्गं न स्यादित्याशङ्क्य प्रतियोगिदृश्यतापेक्षयैव तद्धानं व्यवहारकरम्, न केवलमिति न तदनुपपत्तिरित्याह—धीभावेऽपि दृश्यतार्थेति। सत्यपि ह्यभावाख्ये मेये न तद्भावनिष्ठप्रवृत्तौ विषयतयेक्षणापेक्षं स्वप्रतियोगिपरिहारोपयोगितयैवेति सूक्ष्माणां परिहार्यत्वे तद्धानयोग्यधीहेत्वनुवृत्तिनियतोऽनिष्टपरिहार इति मेयान्तरानुपगमेऽपि न सूक्ष्मनिरीक्षणानर्थक्यमिति भावः। ननु घटसंसृष्टभूतलदर्शनानन्तरमेव केवलदर्शनं तत्संसर्गाभावोत्पत्त्यनुपगमे तद्दर्शनहेत्वभावानुपगमे च न स्यादित्याशङ्क्य अन्यथापि तदुपपत्तिरित्याह—संसृष्टबुद्ध्यनन्तरमिति। सुव्यक्तभावान्तरोदयात्मकपरिहारविवक्षयैव विषयभेदेनानेकपरिहारोक्तिः प्रकरणे, न त्वेकासम्भवादित्याह—धर्मिमात्रस्थितिरेवेति। एवं च तन्मात्रधीः स्वहेत्वागमादित्युक्तस्वहेत्वागमो धर्मिमात्रस्थितिरूपो दर्शित एवार्थादित्यभिप्रायः। ननु नित्यानुमेये धर्मिणि कथं तन्मात्रधियैवोपपत्तिरित्याह—अनुमानाद्येकवेद्यस्येति। तत्राप्यभाववादिनाप्यभावधीहेतुतया तन्मात्रधियः प्रतियोगिदृश्यतायाश्चानुमानान्तर्गततयैवोपेयत्वात् तदगम्यतन्मात्रात्मकता तद्धर्माभावस्य नाशवयोपगमेत्यर्थः। ननु प्रतियोगिभेदेनानन्तभेदभाजामभावानां निर्भेदं धर्मिमात्रमात्मेत्येतत्प्रतीतिहतमित्याशङ्क्य दृश्यत्वेनाभिसंहितप्रतियोगिधीसहायभेदेनासंकीर्णानन्ततदभावव्यवहारकरस्वधीस्थतयैकमपि व्यवस्थया तत्तदभावात्मतार्हमेवेति परिहरति—तन्मात्रधी-

---

१. हेत्ववगमात्. क, ख. २. रूपानिरन्वये. क, ख.

३. कस्य वेद्य. क.

नातिप्रसङ्गाप्रसङ्गौ । तन्मात्रधियैव शशशृङ्गानुमाबाधः । न च तन्मात्रधिया अभावमेयनिह्नवे भावधिया भावनिह्नवात् बाह्या[1]पलापापत्तिः, मितेर्बहिर्नीलादिस्फुटस्वरूपमपलापानर्हम्; अभावस्त्वस्फुटत्वान्निह्नुतः ।

### भट्टाचार्यमतम्

अत्राह राद्धान्ताभासी—न मन्मतेऽपि तन्मात्रावस्था स्वरूपाधिका; स्वरूपधीरेवाभावधीहेतुः; संसृष्टस्वरूपधीस्तु यत्नाभावधीः तत्र प्रतियोगिस्मृत्यभावात्, न तु स्वरूपधीहेत्वभावात् । तदुक्तम्—"स्मृत्वा च प्रतियोगिनम्" इति; सं[2]सृष्टग्रहे च न तत्स्मृतिः । अतो नामान्तरेण तन्मात्रावस्था अभाव एव ।

### प्राभाकरसिद्धान्तः

राद्धान्तस्तु–यत्र यस्याभावधीः तत्र [3]तत्संसृष्टस्वरूपधीर्नास्ति, स्वरूपधीस्त्वस्तीति द्वयी स्वरूपधीरास्थेया । तत्र या संसृ[4]ष्टधीतोऽन्या विधा, सा

---

श्चेति । एवं चाभावात्मकमेयानुपगमे शशमस्तकवर्तिशृङ्गानुमानमबाधितं स्यादित्यापादनमपि निरस्तमित्याह—तन्मात्रधियैवेति । बाह्यार्थापलापान्तत्वापादनमप्यभावमेयानुपगमस्यायुक्तमित्याह—न च तन्मात्रधियेति । न तावदबाधितव्यवहारहेतुधीवृत्ते यथाव्यवहारं विषयसत्तानियमोऽभाववादिनापीष्यते, विषयविशेषनिष्ठव्याप्यारोपपूर्वकव्यापकारोपात्मकतर्कप्रवृत्तेर्मानसहायोपगतया अपि तद्विरहात्; तद्विषये हि तदन्वयो नित्यनिरस्तः, न च स्वविषये तदन्वयधीः प्रसज्यत इत्यनन्वयापत्तेः । तेन धीबलविमर्शाधीना विषयव्यवस्था; नापातमात्रसिद्धा, ह्रस्वदीर्घाद्यापेक्षिकव्यवहारस्यैकस्मिन्नेव विषये प्रचुरत्वात् । नास्तिबुद्धेस्तु धर्मिमात्रातिरिक्तो विषयो विमर्शे ऽहो नास्तीत्युक्तमिति न काचिदनुपपत्तिरित्यर्थः ।

एवं राद्धान्तिमतमुपपाद्य एकदेश्यभिमतं तद्दूषणमुपन्यस्यति—अत्राह राद्धान्ताभासीति। धर्मिस्वरूपातिरिक्तकेवलावस्थासंमत्यापादनेनाभावनिरासोऽशक्यः, तदनुपगमेनैवाभावधीसामग्र्युपगमात् । अतो नामान्तरेणाभावाख्यं मेयान्तरमेवाश्रितं स्यादिति ।

परमसमाधातुरभिप्रायमाह—राद्धान्तस्तु यत्र यस्येति । यद्यपि तन्मात्रावस्थायाः स्वरूपाधिकत्वानुपगमेनाप्यभावधीसामग्री सुलभैव, तथापि तदन्तरभूता धर्मि-

---

१. बाह्यमेयापत्तिः. क.  २. संस्पृष्ट. क, ख.

३. संस्पृष्ट. क, ख.  ४. संस्पृष्टधीस्त्वतोऽन्या. क, ख.

तन्मात्रधीविधा; तन्मात्रमपि तद्धीवेद्यत्वविधया मेयान्तरम्। व्यवहारशक्तिधीस्तन्मात्रमिति हेयम्; तन्मात्रधिया व्यवहारः, ततः शक्त्यनुमेति न शक्तिधीस्तन्मात्रधीरिति न शक्तिस्तन्मात्रम्। अभावधीपक्षे च धीहेतुरनुपलम्भः सत्तया न ज्ञानेन, अनवस्थापत्तेः। यदा तु दृश्यमानस्यैव 'प्राङ्नासीद-

---

धोर्न संसृष्टविषयेत्यविवादादल्पाधिकविषयत्वविधया धीविभागोऽभ्युपेत एवेति तदुपस्थाप्यावस्थाभेदस्यावर्जनीयत्वात् भावरूपकेवलावस्थाधिकमभावाख्यं मेयं दुर्लभमेवेत्यर्थः।

नन्वेवं धर्म्यतिरिक्तमेव तन्मात्राख्यं मेयमभ्युपगतं स्यात्, संसृष्टावस्थानुवृत्त्यननुवृत्तिरूपविरुद्धधर्माक्रान्तेर्भेदापादकत्वात्; ततश्च द्रव्यादिषु क्वास्यान्तर्भाव इति वाच्यम्। उच्यते—सर्वाभ्युपेतप्रत्यक्षधीबलोपदर्शितं हीदं विविक्तम्, न मानान्तरमूलमेतत्प्रेक्षितमिति नैकं प्रत्येवानिष्टतया किञ्चिदापादनीयम्, न चान्यमते कैवल्यं नाम न किंचिन्मेयमस्ति; संसृष्टावस्थावर्त्यविषयमात्रकृतं तु तद्धीवैलक्षण्यमिति वाच्यम्, अधिकस्याल्पप्रतियोगिनिरूप्यत्वेनाल्पत्वरूपार्थाधिक्यस्यावारणीयत्वात्; ह्रस्वदीर्घादिवत् पदमात्रं तदधिकं नार्थ इति चेत् न, तस्याप्यवकाशपूरणादिशक्तिपरीक्षकैस्तिलरोममात्रादिरूपेण यत्नान्तरपरिच्छेद्यत्वेनाभ्युपगमात्; तथेहापि प्रतियोगिविशेषनिरूप्याल्पत्वरूपकैवल्यस्य तत्तज्जिज्ञासुभिः पृथग्यत्नैर्विकल्पज्ञानविषयतापादनेनैव प्रवृत्त्यर्हतापादनात् अल्पाधिकत्वमात्रेणैवोत्तरोत्तरसंख्योत्पत्तावपेक्षाबुद्धिविषयसमवायिकारणवैलक्षण्यनिमित्तव्यवस्थावद्व्यवहारसिद्धेर्न काचिदनुपपत्तिः। कैवल्यं नामावस्थाख्यपदार्थान्तरं वास्तु, प्रसिद्धस्यैव वा विशेषणान्तराधीनविकल्पान्तरात्मकव्यवहारहेतुभूतावस्थान्तरं यत्नान्तरावसेयमस्त्वित्यनास्थया तदनादर इत्यनवद्यम्। स्वयूथ्येनान्येनान्यथोक्तं तन्मात्रत्वं स्वाभ्युपगतमिति शङ्काहानार्थं दूषयति—व्यवहारशक्तिरिति। तन्मात्रस्यावगततया व्यवहारहेतुत्वेनोपगमात् शक्तेश्च कार्यकल्प्यतयोत्तरकालावसेयत्वात् प्राग्धीयोग्यमन्यदेव तदुपेयमित्यर्थः।

एवं विषयाभावाललक्षणपरत्वं निरस्य धीजनकाभावाच्चेति वक्तुमनुपलम्भस्य ज्ञाततया तावन्न जनकत्वमित्याह—अभावधीपक्षे चेति। न च सत्तयापीत्याह—यदा तु दृश्यमानस्यैवेति। प्रतियोगिस्मृत्यभावात् सत्यनुपलम्भे तदभावमप्रतीत्य तद्दर्शन-

यमिह' इति धीः; तदानुपलम्भो निवृत्तः सत्तया न हेतुः स्यात्। अथ प्रत्यक्षानुपलम्भे निवृत्तेऽपि स्मृत्यनुपलम्भ सन्नेव, प्राक्तनी च तत्स्थितिः स्मृत्यर्हेति स्मृत्यनुपलम्भः सत्तयैव हेतुः, तन्न; यदा मध्याह्ने दृष्टस्य प्रातरभावः सायं बुद्ध्यते, [1]तदा माध्यन्दिनदर्शनस्मृत्या स्मृत्यनुपलम्भ[2]सत्ता हता न धीहेतुः। अथेयं विधा—यदोपलम्भस्तत्कालमात्रानुपलम्भबाधः, न तु प्रातर्गतबाधः; तन्न, माध्यन्दिनोपलम्भैकत्वे तत्प्रागभावोऽप्येक एव। स चेदुपलम्भहतः यावत्पूर्वक्षणगत एव हतः, प्रातर्गततोपाधिभेदस्तु प्रातर्हानादेव हतः। एवमनन्तरक्षणहततापि तत्क्षणहानादेव हता। उपलम्भक्षणे तु प्रसक्तः प्रागभावो भावबाध्यो न क्षणसम्बद्धप्रसक्तिमात्रं बाध्यम्, अन्यथा भावोऽपि प्रध्वंसबाध्य एकक्षणान्वयितयेति पूर्वक्षणान्वयोऽनुवर्तेत। न च प्रातरुत्पत्त्यर्होपलम्भप्राग-

---

काले पूर्वकालवर्त्यभावधीर्न सत्तानुपलम्भेनोत्पाद्येत्युभयथापि सा न हेतुरित्यर्थः। तथापि स्मृत्यभावो हेतुरिति शङ्कते—अथ प्रत्यक्षानुपलम्भ इति। तद्दर्शनकालेऽपि जिज्ञासाभावात्तदुत्तरकाले जिज्ञासोद्भवात् स्मर्यमाणप्रतियोग्यभावावगमे तन्निर्वाहोऽपि नास्तीति दूषयति—तन्न यदा मध्याह्न इति। ननु कालविशिष्ट एवार्थानुपलम्भः कालावच्छिन्नतदभावधीजननशक्तः, तद्विशिष्टोपलम्भसत्तया च स नाश्यत इति तदनुत्पत्तेस्तदनुपलम्भोऽनुवृत्त्यर्हः उत्तरकालजातोपलब्ध्या तत्कालीनानुपलम्भनाशेपीति न हेत्वसिद्धिरिति शङ्कते—अथेयं विधेति। दूषयति—तन्न माध्यन्दिनोपलम्भैकत्व इति। विशिष्टसत्ता हि विशेषणविशेष्यसत्तौपाधिकी; विशेष्यश्चेहानुपलम्भोऽनुभवसिद्धोपलम्भनिरूप्य इति तदेकत्वे तदुत्पत्त्यवसायी नानुवृत्त्यर्हः। विशेषणावस्थकालक्षणानां तु क्षणभङ्गिस्वरूपत्वान्नानुवृत्तिशङ्कापि स्यात्। यदि तु विशिष्टभावानुत्पत्तिमात्रेण विशिष्टाभावानुवृत्तिरभ्युपेयेत, विशिष्टाभावानुत्पत्त्या विशिष्टभावानुवृत्तिश्चोपेयेति सर्वलोकव्यवहारविरोधः स्यादित्यर्थः। ननूत्पत्त्यर्हतामात्रेण धीस्थोपलम्भस्यानुपलम्भनिरूपकत्वाङ्गीकारेण हेत्वनुवृत्तिरुपेयते, नोत्तरकालोत्पन्नस्येति स्यादनुपलम्भानुवृत्तेरभावधीरिति शङ्कामपाकरोति—न च

---

१. तथा. क, ख.　　　　　　२. लम्भः सत्ताविता. क.

भावादभावधीः, नित्यतुच्छस्योपलम्भसजातीयत्वासिद्धेः तदर्हत्वमसिद्धम्। माध्यन्दिनोपलम्भ एव तज्जातीयस्तदर्ह इति दिक्। दृश्यता चानुलम्भविशेषणं न युक्तम्; योगाद्धि विशेषणता; न च भावस्तद्योगो वा तुच्छाभावा-

---

प्रातरुत्पत्यर्होपलम्भप्रागभावादिति। कालविशेषनिरूपितेन्द्रियाद्युत्पत्त्यर्हता हि अनुत्पन्नव्यक्तिनिष्ठा दुरुपगमेत्युत्पन्नव्यक्तिनिरूप्यैव सेति वस्तुतो धीजननसामग्र्यसम्भवाच्च न मानोपपत्तिरित्यर्थः।

ननु 'इह घटो नास्ति' इति वर्तमानाभावधीविषयेऽप्येवमुत्पत्त्यर्होपलम्भव्यक्तिविवेकासम्भवनिमित्तदृश्यानुपलम्भरूपहेत्वभावापादनसाम्ये केन विशेषेण "यदा तु दृश्यमानस्यैव 'प्राङ्नासीदयमिह' इति धीः" इति विषयान्तरमुपात्तम्? तत्रापि हि न धर्मिधीहेतुवित्त्यर्हतातिरिक्तधीव्यक्त्यन्तरार्हतापेक्षायोग्यता धर्मिधीहेत्वर्हतातद्विषयत्वाभावश्च भूतलविषयेऽपि तुल्यौ; तदभावात्तु तत्स्मृतिरस्त्वभावधीहेतुः; अत एव प्रतियोगिस्मृत्यभावादेव संसृष्टस्वरूपधीहेतोः नाभावधीरित्युक्तम्; अन्यथा ह्यनुपलम्भाभावादित्युच्येत। तस्मात् "यदा तु दृश्यमानस्यैव" इत्याद्यबद्धमिव प्रतिभाति।

उच्यते—तन्मात्रधियः संसृष्टधीस्थस्वरूपातिरिक्तावस्थान्तरविषयत्वसंप्रतिपत्तिनिषेधार्थं यदभावधियः प्रतियोगिस्मृतिजत्वमेकदेशिनोक्तम्, तद्दृश्यमानस्यैव प्रागदृष्टस्मर्यमाणधर्मिवर्त्यभावबोधे नास्तीत्यवस्थान्तरविषयत्वासंप्रतिपत्तयेऽनुपलम्भस्यैवाभावधीहेतुत्वमाश्रितम्; तदनाश्रयणे तत्संप्रतिपत्त्यङ्गीकारभिया तेन तदसम्भवप्रदर्शनेन तदनङ्गीकारे हेत्वभावप्रसङ्गोक्त्या तत्संप्रतिपत्तिरेवापद्यत इति तन्मात्रावस्थैवाभाव इत्येतदेव स्थापितम्। ननु नष्टानुपलम्भस्मृतिरस्तु कारणम्, धर्मिस्मृतिवदिति शङ्कानिरासार्था दिगुक्तिरनवस्थयोक्तज्ञानाहेतुत्वसूचनेन। सत्यपि चानुपलम्भे हेतुत्वाहेतुत्वव्यवस्थापकरूपासम्भवात् कादाचित्कमभावधीहेतुत्वं न युक्तम्; दृश्यतायास्तदयोगाद्विशेषणत्वासिद्धेः।

असत्यां च दृश्यतायामहेतुत्वं प्रसिद्धमेवेति सतोऽपि न हेतुत्वार्हतेत्याह—दृश्यता चानुपलम्भविशेषणमिति। उक्तमेव भावाभावसामान्यप्रयुक्तासम्बन्धमुपजीव्याभावस्वरूपसिद्ध्यभ्युपगमेन प्रत्यक्षमेयत्वं परोक्तं दूषयति—

श्रयः, विरोधात्, अत एव सिद्धेऽप्यभावे संयुक्तविशेषणतया नेन्द्रियग्राह्यता। इन्द्रियोपरमे च तद्धीरुक्ता। न च दृश्यसत्ता दर्शनेन व्याप्तेति दर्शननिवृत्तिलिङ्गात् दृश्याभावधीरनुमा। व्यापकनिवृत्तिव्याप्याभावयोः पूर्वबुद्धयोर्न व्याप्तिधीरिति नानुमामात्रादभावधीः। तन्मात्रधीस्तु भावरूपा दृश्यविशेष्या युक्ता। दृश्यता च तदधीनान्यधीहेतुसाकल्यमेव व्यापि। एवमसति मानान्तरे[1] षष्ठ्यामानसिद्धिरमूला। भाष्यं च न लक्षणपरम्, किन्तु उक्तलक्षणमानसमाध्यर्थं तद्युक्तं ग्रन्थे।

अपरमानपञ्चकदूषणम्

न चापरं मानपञ्चकं, सम्भवैतिह्यलोकप्रसिद्धिह्रस्वदीर्घप्रतिभाख्यम्
महासंख्यावच्छिन्नवस्त्ववयवेऽवान्तरसंख्याधीः सम्भवोऽनुमैव। मूलशून्यनृपरंपरावचनमैतिह्यं न मानम्, अनुभवप्रत्यक्षादिर्न लोके मानान्तरम्। लिङ्गाभासजा प्रतिभा अनिश्चयो न मानम्। ह्रस्वदीर्घे परिमाणे प्रत्यक्षा-

---

अत एव सिद्धेऽप्यभाव इति। दूषणान्तरं चाह—इन्द्रियोपरमे चेति। परोपगतानुमानमेयतामपि निरस्यति—न च दृश्यसत्तेति। ननु तन्मात्रधीरपि सूक्ष्मकण्टकादीनां दृश्यत्वादृश्यत्वावस्थयोः अनुगततया अनुपलम्भतुल्यैव, तद्दृश्यतायाश्च धर्मिविषयतन्मात्रधीसम्बन्धाभावात् तदविशेष्यतयापि तत्तुल्यैवेत्यनुपलम्भस्याहेतुत्वप्रसाधनं न तन्मात्रधियो भावधीहेतुत्वं परिशेषयेदित्याशङ्क्य परिहरति—तन्मात्रधीस्तु भावरूपेति। भावरूपत्वात्तस्याः सामान्यप्रयुक्तसम्बन्धविरोधस्तावन्नास्ति, तथाप्यभावधीकाले धर्मिसम्बन्धाभावान्नविशेष्यतेति शङ्कां परिहरति—दृश्यता च तदधीनेति। दृश्यतायाः प्रतियोग्याश्रितत्वे हि सम्बन्धासिद्धिः; धर्मिण एव तु प्रतियोगिप्रकाशनसमर्थावधारितसामग्रीसमुत्थधीविषयतैव तन्निरूप्यतया तद्दृश्यतेत्युच्यते; तेन तद्धीस्तद्विशेष्या युक्ता। न च प्रतियोगीन्द्रिययोगस्यापि तत्सामग्रीनिविष्टत्वात्तस्य चेहाभावात् सामग्र्यसिद्धिः विषयाधीनहेत्वतिरिक्तधीहेतुसाकल्यस्यैव दृश्यतापदार्थत्वात्तस्यैव दर्शनादर्शनविषयव्यापित्वाद्योग्यतायाश्चोभयगामित्वादित्यर्थः। एवमावश्यकतन्मात्रावस्थाधिकाभवाख्यमेयासिद्धेरसति मानान्तरे प्रसिद्धिमात्रमन्यथा नेयमित्याह—एवमसतीति। तथापि भाष्यं सार्थकमेवेति व्याख्यातमित्याह—भाष्यं

---

१. षष्ठ प्र. ख.

दिग्ग्राह्ये, ह्रस्वदीर्घशब्दप्रवृत्तिस्तूपाद्ध्यपेक्षा। अल्पदेशव्यापी ह्रस्वमुच्यते। हस्तादिसंख्याल्पत्वाद्देशाल्पता। संख्याल्पता पूर्वगणनीयतया, परगणनीयसंख्यया तु दीर्घशब्दः। अत एवाल्पान्तरत्वेऽङ्गुलयद्धाङ्गुलयवच्छेदं विना न ह्रस्वदीर्घशब्दः। संख्यापूर्वपरता च प्रत्यक्षादिसिद्धेति न मानान्तरतेति पञ्चैव प्रमाणानि इति स्थितम् ॥

---

चेति। न चापरं मानपञ्चकमित्यादि मतान्तरनिरासपरं व्यक्तम् ॥

इत्यभाववादः



# अथ सम्बन्धाक्षेपवादः

पूर्वसंगतिः

"ननु[1] प्रत्यक्षादीनि" तत्सद्व्यत्ययेन सूत्रावयवे लोकप्रसिद्धप्रत्यक्षपरे लोकसिद्धिसामान्यान्मानान्तरेषु भाष्योक्तेषु लोकसिद्धव्युत्पत्तित एव "अनिमित्तं विद्यमानोपलम्भत्वात्" इति सूत्रावयवान्तरेण शब्दस्यानपेक्षता औत्पत्तिकसूत्रावयवोक्ताक्षिप्यते । तत्समाधित्सया सम्बन्धौत्पत्तिकत्वे प्रक्रान्ते तस्मिन्नप्याक्षिप्ते समाधातैकदे[2]शी शाब्दः शब्देऽर्थे च सम्बन्धे चान्यथास्थितो यावन्न बोध्यते तावत्सम्यक् समाधिरशक्य इत्येवं वादस्थानानेकान्तरितोऽत्र प्रस्तुतसमाधिरिति चित्रापरिहारान्तानां सङ्गतिः ।

आक्षेपविवरणम्

विद्यमानोपलम्भनत्वादित्थमनपेक्षताक्षेपः—लोके हि फलसाधनतया कार्ये लिङादिदृष्ट इति वेदेऽपि न स्वतन्त्रकार्यार्थः । अतो विनियोगाधीनमेव नियोगमाहेति फलसाधनतात्मकविनियोगे मानान्तरापेक्षतयाऽन-

---

प्रत्यक्षानन्तरं शास्त्रप्रामाण्याक्षेपः कथं प्रत्यक्षसूत्रार्थयोपन्यस्यते ? तदर्थस्य तल्लक्षणोक्त्यानन्तर्यहानायोगात् तत्समर्थनस्य चानन्तरादर्शनादनेकन्यायव्यवधानेन च तत्समाधानं सूत्रार्जवभङ्गादयुक्तमिति शङ्कां सूत्रघटनोपन्यासेन परिहरति—तत्सद्व्यत्ययेनेत्यादिना । वृत्तिकारव्याख्यापेक्षं लक्षणपरत्वं सूत्रावयवस्य प्रयोजकैक्यात्सर्वप्रमाणव्यापीति तद्विवरणोत्तरकालमेवोत्तरावयवार्थविवरणं प्रस्तुतलोकप्रसिद्धिहेतुबलोपस्थापितोक्तानपेक्षत्वाक्षेपार्थं प्रसक्तमिति न तत्र व्यवधानदोषः । तत्समाधानार्थसम्बन्धौत्पत्तिकत्वार्थमेव तदनन्तरन्यायान्तरव्युत्पादनमपीति न सूत्रगतेरनार्जवदोष इत्यर्थः । सूत्रोक्तहेतोरुक्तानपेक्षत्वहेत्वाक्षेपसामर्थ्यमुपपादयति—विद्यमानोपलम्भनत्वादित्थमिति । लोकव्युत्पत्तेरेव वेदेऽपि शब्दवृत्तिव्यवस्थापकत्वाल्लिङाद्यर्थप्रधानत्वाच्च विधिवाक्यावगतेः कार्यस्य च तदर्थतोक्तेः फलसाधनत्वगर्भत्वनियमाच्च लोके तत्प्रमितेर्वेदेऽपि तदतिरिक्तक्रमासम्भवाल्लिङादेश्च तदशक्तेरुक्तत्वात्तच्छक्त विनियोगगम्यसाधनताधीपूर्विकैव लिङादिवृत्तिरुपेया। विनियोगस्य च सापेक्षत्वसंप्रतिपत्तेः मानान्तरापेक्षतापत्तेः कार्यधीरपि तदपेक्षैवेत्यर्थः । न केवलं शब्दस्वभावमात्रमेवैवं सापेक्षत्वापादकम्, तदर्थस्वभावोऽपि तदनु-

---

१. Omitted. ननु. क. ख.

पेक्षताहानिः । विशेषतश्चित्रायागादेः पश्वादि विद्यमानोपलम्भनम् । यद्धि क्रियानन्तरं भवनार्हं तस्य मानान्तरोपलम्भार्हता[1] विद्यते । तेन मानान्तरापेक्षफलसाधनतया कार्यता व्यक्तेति विशेषतश्चित्रोदाहृता । शुष्यत्सु व्रीहिषु वृष्ट्याद्यनन्तरमेव काम्यं मानान्तरगम्यं व्यक्तम् । कालान्तरफले स्वर्गादौ मानान्तरानर्हेऽपि मानान्तरापेक्षे विनियोगाधीनो नियोगोऽनुगम्यत एव । न च कार्यतामात्रे लिङादिरुक्तेति वेदे फलानपेक्षैव कार्यताधीः; फलादेवानेन कार्यं बुद्धम्, न वेदादप्यन्यथा बोद्धुं शक्यम् । कामी कामोपायमेव कार्यं बुद्ध्यते इत्येवमपूर्वव्युत्पत्तिरुच्यते । कामी तु सर्व एवेति फलसाधनतापेक्षमेव कार्यं मानान्तरार्हमिति नापूर्वे वेदप्रामाण्यं शक्यम् । किन्तु फलसाधनतया क्रियैव

---

गुण एव चित्रादावित्यभ्युच्चयार्थं तदुदाहरणं भाष्य इति दर्शयति—विशेषतश्चित्रायागादेरिति । तच्चानन्तरनियतफलकार्यादेरप्युपलक्षणमित्याह—शुष्यत्सु व्रीहिष्विति । मानान्तरानर्हार्थविषयेऽप्युक्तशब्दस्वभावहेत्वनुवृत्तेर्व्यापिता प्रामाण्याक्षेपस्य सिद्ध्यतीत्याह—कालान्तरफले स्वर्गादाविति । ननु कार्योक्तेर्लोके फलसाधनत्वाव्यभिचारेऽपि शब्दशक्तिः कार्यमात्रनिष्ठोक्ता; पुंवाक्यत्वप्रयुक्तश्च लोके तदव्यभिचार इति वेदे कार्यमात्रधीः कुतो न स्यादित्यत्राह--न च कार्यतामात्र इति । पुंसः फलापेक्षकार्यधीमात्रार्हत्वात्तज्जनकः शब्दोऽपि तदपेक्षां नातिवर्ततेत्यर्थः । ननु पुंसोऽपि दुःखात्मकक्रियामात्रविषयं तदर्हत्वम्, तदतिरिक्तापूर्वार्थव्युत्पत्त्यपेक्षया वेदादनपेक्षार्थधीरस्त्वित्यत्राह—कामी कामोपायमेवेति । कामिबोद्धन्वयानुपपत्तिमूलत्वात्तद्व्युत्पत्तेः न काम्यसाधनत्वातिवर्तित्वमिति तदुपदर्शकप्रमाणान्तरापेक्षा न मुच्येत । कामिता च कर्तुर्नियतैवेति मानान्तरापेक्षानतिलङ्घनादपूर्वकार्यार्थतापि न स्यादित्यर्थः । एवं च लौकिकवाक्यमूलसापेक्षत्वस्य प्रागेव निरस्तत्वात् पुनरुक्ताशङ्काप्याक्षेपप्रकारस्यान्यतया परिहृतेत्याह—इत्थमाक्षेप इति । नन्विह मानान्तरबाधितार्थत्वमप्रामाण्यहेतुर्भाष्योक्त इत्याशङ्क्य सापेक्षत्वाभिप्राया तदुक्तिरित्याह—

---

१. लम्भानर्हं. क. ख.

कार्या । इत्थमाक्षेपः क्वचिन्न निरस्त इत्यपुनरुक्तिः । पश्वनुपलब्ध्यापि माना-न्तरापेक्षैवोक्ता । यद्धि मानान्तरापेक्षं तदसति मानान्तरे हेयमित्युक्तम्; न तु विपर्ययाद्धेयताभिप्रेता । क्रियाफलं च पशुरनन्तरम्; अतो मानार्हम् । कृषिफलमपि भूविभागोऽनन्तरमेव । प्रयोजनं तु सस्यमन्तरितम् । इह फल-मेव पशुः प्रयोजनमित्यनन्तरतया मानान्तरार्हमित्युक्तम् । मूलयुक्तिसापेक्षता स्वर्गादिफलकेऽप्युक्ता । एवं विधितः सापेक्षता । तथाऽर्थवादतोऽपि "एषः" इति शरीरं प्रत्यक्षं निर्दिष्टम् । तद्यातीति दृष्टविरुद्धम् । न चार्थवादतया लक्ष-णया "एष यज्ञायुधी" इत्यात्मोक्तः "स स्वर्गं याति" इति, देहातिरिक्तात्मा-सिद्धेः ।

### संबन्धाक्षेपे विवरणमतम्

विवरणे तु सम्बन्धस्य पौरुषेयतया वेदस्यापि पौरुषेयतेति विद्यमानो-पलम्भनं साध्यसाधनरूपं वेदार्थः, नापूर्वम् । चित्रेष्टिफलस्य चैहिकत्वानुमते-रनन्तरादर्शने नेष्टिजन्यता संस्कारद्वारा कल्प्या, कालान्तरे च प्रति-

---

पश्वनुपलब्ध्यापीति । सापेक्षत्वं विना बाधानुपपत्तेः फलमुखेन सापेक्षतैव विवक्षिता । तत एवामानत्वसिद्धेर्न तत्फलं विवक्षितमित्यर्थः । अनन्तरानुपलब्धेः सापेक्षतोपस्थापनसामर्थ्यमाह—क्रियाफलं चेति । क्रियाफलत्वप्रयुक्तोऽनन्तरो-पलम्भप्रसङ्ग इति तन्मुखेन सापेक्षता दर्शितेत्यर्थः । ननु क्रियाफलत्वमनन्तरत्व-व्यभिचारीति शङ्कां परिहरति—कृषिफलमपीति । एवं साक्षाद्भाष्योक्तमानान्तरा-र्हार्थत्वहेतोरुदाहरणमात्रवर्तित्वेऽपि तदापादकतया विवक्षितस्य मूलहेतोः सर्व-व्यापित्वात् सर्वापेक्षासिद्धिरित्याह—मूलयुक्तिरिति । उक्तविवेकेनोत्तरभाष्यार्थमाह—एवं विधित इति ।

विवरणे विधान्तरेण मानान्तरगम्यार्थत्वमाक्षेपहेतुरिष्ट इत्याह—विवरणे तु सम्बन्धस्येति । साक्षादुत्तरसूत्रार्थनिवर्त्यपरत्वमेव पूर्वपक्षसूत्रस्य स्वतः प्राप्त-मित्यभिप्रायः । चित्रादेरैहिकफलत्वानुज्ञानाच्च विद्यमानोपलम्भनत्वमित्याह—चित्रेष्टिफलस्य चेति । तथापि कथमनन्तरफलत्वापादनेन भाष्ये दूषणोक्तिर्घटते ? तैलपानादिवत्संस्कारद्वारेण व्यवहितफलत्वसम्भवादित्याशङ्क्य व्यवहितफलस्य प्रतिग्रहादिहेत्वन्तरदर्शनान्न संस्कारकल्पनावकाश इति परिहरति—अनन्तरादर्शन

ग्रहादिहेतुदर्शनात् मानान्तरार्हफलनिष्ठे च नापूर्वमित्युक्तम् । कामश्रुतिरपि न नियोज्यपरा; किन्तु 'आरोग्यकामः पथ्यमश्नीयात्' इतिवत् फलपरेत्यनापेक्षता हता, सत्यार्थतात्पर्यनन्तरादर्शनहता । आमुष्मिकफलेऽप्यपूर्वार्थहानान्मानान्तरार्हतया नाश्वासः । दृष्टविरुद्धश्च "एष यज्ञायुधी" इति । चित्रेष्टौ संवादाभावः, इह विरोध इत्युदाहृतमात्मसाधनार्थम् "न चैष यातीति विधिशब्दः" इत्यनेन वेदगम्य आत्मेति वेदान्तिमतं निरस्तम्; विधि[1]शब्द एव कदाचिदात्मप्रमितिशक्तः, न चायं तथा ।

मतद्वये सिद्धान्तनिरूपणम्

मतद्वये राद्धान्तमुपक्रमते-"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानम्" इत्यनेन । स्यान्मानान्तरार्हता यदि पौरुषेयः सम्बन्धः, न[2] चैवम् ।

---

इति । क्रियोत्पाद्यफलार्थे च क्रियाविधौ मानान्तरार्हत्वादपूर्वाभावः प्रोक्षणादावुक्त इति चित्रादौ विद्यमानोपलम्भत्वान्तमेव तदैहिकफलत्वं स्यादित्याह—मानान्तरार्हफलनिष्ठे चेति । ननु पशुकामनियोज्यश्रुतिबलादिना अपूर्वनिष्ठो विधिरस्त्वित्यत्राह—कामश्रुतिरपीति । सा ह्यन्यथानुपपन्नेति न प्रोक्षणादिविधितुल्यताप्राप्तं साध्यसाधनमात्रनिष्ठत्वं विधेरपहरेदित्यर्थः । तन्निष्ठतोक्त्या फलद्वयमिह भाष्याभिमतमित्याह इत्यनपेक्षतेति । अनुदाहृतविषयव्याप्तिमाक्षेपस्याह—आमुष्मिकफलेऽपीति । "दृष्टविरुद्धं च" इति भाष्याभिप्रायमाह—दृष्टविरुद्धं चेति । ननु च "एष" इति विधिनिरासयत्नोऽनर्थकः, प्रसङ्गाभावात् फलाप्रसिद्धेश्चेत्याशङ्क्य तदभिप्रायमाह—न चैष यातीति । देहव्यतिरिक्तात्मनोऽनुभवमात्रसिद्ध्यभावेऽपि वेदादेव सिद्धिरस्त्विति वेदान्तैकदेशिमतानुसारिशङ्कानिरासेनार्थवानेवेत्यर्थः । कथं तन्निराससामर्थ्यमित्यत्राह—विधिशब्द एव कदाचिदिति । तेऽपि तदुपासनविध्याक्षेपगम्य इति मन्यन्ते; नास्य तदनुसारेणापि तच्छक्तिरस्ति; वस्तुतस्तु विधिनिष्ठवाक्यानां न तद्गमकत्वमितभिप्रायः ।

पूर्वपक्षवन्न सिद्धान्ते प्रतिपाद्यभेदोऽस्तीत्याह—मतद्वय इति । निराकार्यपूर्वपक्षभेदे कथं तन्निराकरणरूपसिद्धान्तस्यैकरूपतेति शङ्कां परिहरन्नेकरूपेण सूत्रमवतारयति—स्यान्मानान्तरार्हतेति । निबन्धनोक्तगत्या सापेक्षत्वापत्तिमुद्भाव्य

---

१. अविधिशब्द. क. २. न त्वेवम्. क.

नन्वौत्पत्तिकत्वे[1]ऽपि लोके फलसाधनताधीनं कार्यं मानान्तरार्हमुक्तम्। मैवम्, मानान्तर[2]प्रमिते लोके प्रयोगोऽस्तु; शक्तिस्तु कार्यमात्रे, स्वर्गकामान्वयादपूर्वे, पदार्थस्यैव वाक्यार्थत्वात्। वाक्यार्थसम्बन्ध एव सूत्रेणौत्पत्तिक उक्त इत्याक्षिप्तवाक्यार्थसमाध्यर्थं सूत्रम्। तर्हि पूर्वव्याख्ययैव समाधिसिद्धेः पुनर्व्याख्या व्यर्था।

### शङ्कान्तरनिरासाय पुनर्व्याख्या

न, शङ्कान्तरनिरासाय पुनर्व्याख्या। शङ्का च—सम्बन्ध एव नास्ति, कस्यौत्पत्तिकतयानपेक्षता वेदस्य? संश्लेषो हि पाटनाद्यापत्तेरशक्यः। यद्यपि राद्धान्ती वाच्यवाचकतामिच्छति न संश्लेषम्, तथापि प्रथमश्रुतादर्थप्रतीतेधूमादेरिव सम्बन्धान्तरपूर्विकैव गम्यगमकतेत्यापाद्य शाब्दानुमतः संश्लेषः पाटनाद्यापत्तेर्वारितः यौनादिस्तु केनाप्य-

---

परिहरति—नन्वौत्पत्तिकत्वेऽपीति। अयमर्थः—सहायद्वयापेक्षं सर्वत्रार्थबोधकत्वं शब्दानाम्। शक्तितात्पर्यग्रहात्मकं तत्। तत्र तात्पर्यग्रहः प्रतिवाक्यावसायीति शक्तिमात्रे लौकिकप्रयोगानुवृत्तिः, न तात्पर्ये; प्रयोगतात्पर्यनिष्ठं च यथोक्तं मानान्तरापेक्षत्वं लोकदृष्टम्; न तद्वेदेऽनुसरणीयम्। शक्तिग्रहस्तु कार्यमात्रनिष्ठश्चोदनासूत्र उक्तः। स च स्वर्गकामसमभिव्याहारादपूर्वावसायीति न वेदे मानान्तरापेक्षाहेतुरस्तीति। नन्वेवं शक्तिमात्रपृथक्कारेणौत्पत्तिकत्वोक्तौ वाक्यविषयानिमित्तसूत्रेणैव विषयत्वासिद्धेः कथं तदुत्तरत्वमित्यत्राह—पदार्थस्यैव वाक्यार्थत्वादिति। अन्वितस्यैव पदार्थत्वान्न शक्तितात्पर्ययोर्ग्राहकभेदेऽपि विषयभेद इत्यर्थः। नन्वेवं अनिमित्तादेरिवौत्पत्तिकसूत्रस्यार्थान्यत्वाभावात् व्याख्यानान्तरयत्नोऽनर्थक इति चोदयति—तर्हि पूर्वव्याख्ययैवेति। यथोक्तोपक्रमेण सम्बन्धाभावशङ्कानिरासेऽपि सूत्रस्य वृत्तिरस्तीत्यधिकार्थपरताविष्करणेनार्थवत्तेति परिहरति—शङ्कान्तरनिरासायेति। तच्छङ्कां विवृणोति—संश्लेषो हीति। किमित्यनङ्गीकृततादात्म्यनिरासादर इत्याशङ्क्य बोधकत्वातिरिक्तसम्बन्धापादनाभिप्राय इत्याह—यद्यपि राद्धान्तीति। यौनादिनिरासानादरो वाद्यनङ्गीकारादित्याह—यौनादिस्त्विति। संश्लेषे शाब्दाभिमतहेत्वनुवादेन वक्ष्यमाणासम्भवाभि-

---

१. कत्वे लोके. क, ख. २. प्रतीतानि. क.

ननुमतो हेत्वनपेक्षहानः। शब्दाध्यास[1]रूपोऽर्थः, 'गौ' इति शब्दार्थयो-स्तुल्यनिर्देशात् इति शाब्दाः। न निर्देशसाम्यादध्यास इत्याकृतिग्रन्थे वक्ष्यते। अतः सम्बन्धान्तराभावात् संज्ञासंज्ञिता प्रयत्नजन्या। उत्पत्ति-मत्ता तु धीक्रियागर्भत्वात् सिद्धैव, चक्षुष आलोकापेक्षास्तु, शब्दस्तु गमकत्वावगतो[2] गमयति; तत्रात्माश्रयदोष इति हेत्वन्तरापेक्षायां चैत्रादौ समयदर्शनात् समय एव गवादिष्वर्थधीहेतुः। तदाह कीर्तिः—

"यज्जातीयो यतः सिद्धः स तस्मादग्निकाष्ठवत्।
अदृष्टहेतुरप्यन्यो विशिष्टः संप्रतीयते" ॥ इति।

द्विविधा यत्नाधीनता संज्ञा वास्तु सङ्केतो वा—यदायमर्थो बोधयितुमिष्टस्तदा

---

प्रायेणेहानुद्धाटनमित्याह—शब्दाध्यासरूप इति। एवं चेद्देवदत्तादिसंज्ञासाम्य-मनिवार्यमित्याह—अतः सम्बन्धान्तराभावादिति। ननु नित्यार्थतयौत्पत्तिक पदस्य राद्धान्तिना व्याख्यातत्वात् जन्यत्वस्याप्यनिष्टत्वे किमर्थं प्रयत्नेन विशेष्यत इत्याशङ्क्य नित्यत्वोक्तिर्यत्नजत्वनिवृत्त्यर्था, न निष्पत्तिनिषेधार्थेत्याह—उत्पत्तिमत्ता तु धीक्रियागर्भत्वादिति। ननु शाब्दश्रुतेरर्थधीव्यभिचारः सहायापेक्षामात्रमापा-दयेत् चक्षुरादेरिव, सहायत्वव्युत्पत्तिरूपः प्रसिद्ध एवेति कुतश्चैत्रादिसाम्यापत्ति रित्याशङ्क्य चक्षुरादिवैषम्यमुखेन तदापत्तिमुपपादयति—चक्षुष आलोकापेक्षा-स्त्विति। व्युत्पत्तेर्नालोकादिवदविचारितसिद्धं सहायत्वम्, सम्बन्धज्ञानरूपत्वात्; तत्र यत्नोपाधिकसम्बन्धज्ञानं वा तदनपेक्षं वा तदिति विचारणीयम्। तदनपेक्ष त्वेऽर्थबोधकत्वज्ञानमेव तदित्यापतेत् तदा च ज्ञानस्य ज्ञेयानपेक्षस्य सर्व-साधारणस्याहेतुत्वसंप्रतिपत्तेः तदपेक्षत्वेऽर्थबोधकत्वमेव स्वहेतुरित्याश्रितं स्यात्; तदसम्भवादन्यापेक्षायां व्युत्पत्त्यपेक्षबोधकप्रसिद्धचैत्रादिसाम्यनिवारणात् समय ज्ञानमेव व्युत्पत्तिस्वरूपं स्यादित्यर्थः। वाद्यन्तरसंमतिं चाह—तदाह कीर्तिरिति। ग्रन्थोक्तं द्वैविध्यविवेकार्थमाह—द्विधा यत्नाधीनतेति। तत्र संज्ञायां चैत्रादौ सर्वप्रसिद्धत्वात् सङ्केतस्वरूपमाह—यदायमर्थ इति। हस्तसङ्केतादितुल्यः स

---

१. रूपोऽर्थः क. ख.    २. गतो. क. ख.

चायं शब्दः प्रयोज्यः इत्येवम्। तदेवं नरयत्नापेक्षार्थधीः वेदादपीति पौरुषेयवेदा मानान्तरगम्यार्थाः। एवं सम्बन्धाक्षेपाच्चित्राक्षेपसमाध्यपर्यवसानम्॥

---

इत्यर्थः। उपसंहरति—तदेवमिति। चित्राक्षेपोपक्रमोक्तसिद्धान्तव्यवधाननिदानं चाव्यक्तोक्तमेवं विवृतमित्याह—एवं सम्बन्धाक्षेपादिति॥

इति सम्बन्धाक्षेपवादः



# अथ स्फोटवादः

## वैयाकरणानां मतोद्भावनम्

"अथ गौरित्यत्र कः शब्दः" इति सम्बन्धसमाधित्सोनायं प्रश्नः; एवं हि "गकारौकारविसर्जनीयाः" इत्युत्तरमाचिक्षिप्सोः स्यात्; अतः शाब्दस्यैवायमनुयोगः। पूर्वपक्षिणा राद्धान्ति निर्जिते निर्जितं प्रत्याह शाब्दः— संज्ञासंज्ञितां वदतः संश्लेषं त्यजतः अवर्णात्मकशब्दाध्यासमनिच्छतः कस्ते शब्दोऽभिमतः? न[1] हि संश्लेषो यत्नापेक्षः। राद्धान्ती श्रोत्रग्राह्या वर्णा इत्याह। न तेऽर्थसंश्लिष्टाः, भिन्नदेशत्वाद्वर्णार्थयोः। शाब्दस्तु—अर्थधीकार्याद्वर्णान्यः शब्दः; स संश्लिष्टोऽस्तु। वर्णा हि धीस्था अर्थधीहेतवो वाच्याः; उच्चारणक्रमात्तत्क्रमवन्तो धीस्थाः; तद्धियां च क्षणिकत्वान्न साहित्यम्। न च तत्स्मृतीनां साहित्यमुत्पत्तौ स्थितौ वा अनुभूतिवदेव। न च संस्कारसाहित्यादनेकवर्णविषयता, एकस्मृतिस्थत्वेऽपि व्यतिक्रमोच्चरितस्मृतिस्थे-

---

नन्वनन्तरप्राप्तसम्बन्धसमर्थनशेषत्वं कथं प्रश्नोक्तेरित्याशङ्क्य सिद्धान्तिकर्तृकत्वे तदुपयोगो वाच्यः, न तत्कर्तृकः प्रश्न इत्याह—अथ गौरित्यत्र कः शब्द इतीति। क्रमात्तत्कर्तृकत्वोपगमे तदुत्तरान्वये सामर्थ्यविरोधान्न तत्कर्तृक इत्यर्थः। कस्य तर्हीत्यत्राह—अतः शाब्दस्यैवेति। उत्तरग्रन्थसामर्थ्यप्राप्तशाब्दकर्तृक एव नेय इत्यर्थः। न च तदनवकाशदोषोऽपीत्याह पूर्वपक्षिणेति। पूर्वपक्षनिषेधसमर्थः संश्लेष एव त्वयाभ्युपेय इति तदर्थं वर्णात्मकशब्दपक्षत्यागेनावर्णात्मकाभ्युपगम एव कार्य इत्यापादनाभिप्रायावकाशसम्भवादित्यर्थः। तत्पक्षे कथमुत्तरग्रन्थसम्बन्ध इत्यत्राह—राद्धान्ती श्रोत्रग्राह्या वर्णा इति। तदापादितसंश्लेषोत्तरत्वं कथमुत्तरग्रन्थस्येत्याशङ्क्य उक्तवर्णसामर्थ्यलब्धस्तन्निषेध इत्याह—न तेऽर्थसंश्लिष्टा इति। एवं ग्रन्थगतिं प्रदर्श्य अवर्णात्मकशब्दापादकाभिमतहेतुं विवृणोति शाब्दस्त्वर्थधीकार्यादिति। वर्णवाचकत्वपक्षे तत्सहत्वेऽवश्याभ्युपेये श्रोत्रधिया चाशक्ये स्मृत्यपेक्षया च स्वतोऽनुपपन्नेऽर्थधीकार्यबलेन संस्काराणामेकस्मृतिजनकत्वकल्पनया तदुपेयम्; तच्चोच्चारणाद्युपाधिगतक्रमाक्रमनिवृत्तेः क्रमानपेक्षत्वे चातिप्रसङ्गादयुक्तमिति वर्णव्यतिरिक्तवाक्यात्मकशब्दाविवर्तरूपताऽर्थस्योपेया; वर्णविवर्तनव-

---

[1] स हि. ख.

भ्योऽप्यर्थधीप्रसक्तेः स्मृतावक्रमकत्वादुच्चारणक्रमानुपयोगात्। अतो वर्णे-भ्योऽर्थधीरन्यथानुपपत्त्येति वर्णादन्यस्यार्थविवर्तोपगमः। अत्र न मानान्तरविरोधः।

शब्दार्थभेदस्य प्रत्यक्षत्वनिरासः

ननु विवर्तपक्षेऽपि श्रोत्रादेः शब्दार्थभेदधीः समाधेया। तन्न; श्रोत्राद्युपधानादेव साऽस्तु, मणिदर्पणाद्युपाधेरिव मुखानेकत्वधीः। ननु च मुखैकता ग्राहकचक्षुरेकतया, इह तु ग्राहकश्रोत्रादिभेदान्नैकता। न तत्रापि ग्राहकैक्यादेकता, किन्त्वेकधिया; सेहास्ति शब्द इत्येका धीः; अभिव्यञ्जकध्वनिभेदाद्भेदः। एवं शब्दस्य जात्यादिभिरभेदस्तुल्यनिर्देशात्, भेदस्तु श्रोत्राद्युपाधेः। एवं विश्वमेकम्। श्रोत्रादिभेदोऽपि शब्दादिधीभेदात्। अन्योन्याश्रयमविद्यानुगुणम्। 'तत्त्वपचे वर्णेभ्योऽर्थधीतः संस्कारैः

---

मानान्तरविरोधाभावादिरयौत्पत्तिकत्वनिर्वाहः इत्यर्थः। नन्वयमपि पक्षः श्रोत्रादीन्द्रियनिमित्तभेदधीविरोधसमाध्यभावादयुक्त इति चोदयति—ननु विवर्तपक्षेऽपीति। श्रोत्राद्युपाधिभेदमात्रेणापि तत्समाधिसिद्धिरिति परिहरति—तन्न श्रोत्रादीति। ननु मुखादिपरिमाणाद्यन्यतया तदन्यत्वानुपगमः, तद्ग्राहकचक्षुराद्यनिवृत्त्या तदेकत्वधीबलाद्ग्राहकभेदाच्छब्दार्थभेदो दुर्वार इति पृच्छति—ननु च मुखैकतेति। परिहरति—न तत्रापीति। तत्राप्येकधीमात्रमैक्यधीहेतुः, नेन्द्रियैक्यम्; एकधीश्च शब्दे स्पष्टा; नानात्वोपाधिश्च ध्वनिभेदः। शब्दार्थयोस्तु निर्देश्यैक्यफलव्यङ्ग्यैक्यधीः; युगपदेकशब्दनिर्देशो हि न विलक्षणधीस्थेषु दृष्टः, नानार्थविवक्षया 'गावः' इत्यभिधानादर्शनात्। एकजातीयविषयस्य दर्शनादेकधीगर्भैव व्युत्पन्नस्यान्योन्यानुरज्यानुरञ्जकतया शब्दार्थज्ञानेषु एकशब्दनिर्देशोपगूढा धीर्युगपत् भेदधीश्च ग्राहकभेदौपाधिकी स्यादित्यर्थः। एवं यथोक्तभेदाभेदधियोरौपाधिकत्वानौपाधिकत्वभेदोक्त्या स्पष्टास्पष्टत्वविशेषाद्भेद एव तात्त्विक इति विवर्तपक्षो नावतरेत् इति शङ्का निरस्ता। सर्वव्यापि च तदेकत्वं स्यान्न प्रकृतवाच्यवाचकमात्रवर्तीत्याह—एवं विश्वमेकमिति। नन्वेवं श्रोत्रादिभेदोऽप्यन्यनिमित्त एवोपेयः, किं तदित्यत्राह—श्रोत्रादिभेदोऽपीति। नन्वेवमन्योन्याश्रयदोषापत्तिरित्यत्राह—अन्योन्याश्रयमिति। तात्त्विकार्थनिर्धारणाङ्गतर्कविरोधरूपत्वात् तस्याविद्योत्थत्वापादकतयास्मद्राद्धान्तानुगुणत्वान्न दोष इत्यर्थः। वर्णमात्रं तात्त्विकमिति वदतश्चायं दोषोऽपरिहार्य इत्याह—तत्त्वपच इति। एतेनैव वर्णनिमित्तस्फोटाभिव्यक्ति-

---

१. एवं तत्त्व, क. ख.

सम्भूय स्मृतिः; ततो वर्णेभ्योऽर्थधीरित्यन्योन्याश्रयदोषः। अत एव न[1] स्फोटाभिव्यक्तेः साम्यमर्थधिया; नैकैकेन वर्णेन ध्वनिना [2]वाभिव्यक्तिः; न मिलितैः; न भागशः, निर्भागत्वात् स्फोटस्येति दुर्घटतयैवाविद्याश्रयणान्न दोषः। तत्त्वपक्षेऽप्यन्योन्याश्रयता बीजाङ्कुरवदिति चेत्, न; व्यक्तिभेदादनादितया च बीजाङ्कुरयोर्नान्योन्याश्रयम्; अर्थधीस्तु न तथा। ननु शब्दाभेदपक्षे चोदनार्थभेदधीर्न स्यात्। मैवम्; अर्थैकत्वे वर्णपदभेदो न वाक्ये; अर्थभेदे तु न वाक्यानामेकता। ननु शब्दाद्वैतमुक्तम्। ब्रह्मावस्थायां तत्, शास्त्रार्थदशायां तूपाधितो भेदः। ननु शास्त्रार्थो विद्येष्यते, ततोऽभ्युदयोक्तेः; अविद्या हि प्रत्यवायहेतुः। सत्यं निषिद्धापेक्षया स्वर्गादिकमभ्युदयहेतुः;

---

प्रतिबन्दचा तन्निमित्तार्थबोधोपपादनमपि प्रत्युक्तमित्याह—अत एव न स्फोटाभिव्यक्तेरिति। ननु वर्णश्रुत्यर्थोक्त्योरन्वयव्यतिरेकसिद्धे हेतुहेतुमत्त्वे अनन्तरत्वासिद्धिसमाधिर्बीजाङ्कुरवत् संस्कारापेक्षः कल्प्य इत्यन्योन्याश्रयपरिहारसम्भवात् तात्त्विकत्वोपपत्तिरिति शङ्कते—तत्त्वपक्षेऽपीति। परिहरति—न व्यक्तिभेदादिति। कारणान्तरशङ्कारूपप्रतिबन्धकशङ्काभावात्तत्र तन्निर्वाहकसंस्कारकल्पनापेक्षया स्यात् व्यक्तिभेदादनादितया चान्योन्याश्रयसमाधिः। इह तु पदवाक्यविषयैकधीः संस्कारकल्पनाविरोधितयानुवर्तत इति न वर्णकारणत्वनिर्वाहाय संस्कारकल्पनावकाश इति न साम्यमित्यर्थः। ननु भेदापह्नवेनाभेदोपगमे चोदनार्थभेदस्यापि निवृत्तेस्तद्भेदापेक्षं चोदनाप्रामाण्यं न स्यादिति चोदयति—ननु शब्दाभेदपक्ष इति। परिहरति—मैवं अर्थैकत्व इति। अर्थप्रतीत्यनुगुणपदवाक्यैकधीबाध्यत्वात् अभेदस्य अर्थाभेदे वाक्याभेदस्यानुपगमात् न प्रामाण्यभङ्ग इत्यर्थः। ननु पूर्वोक्तशब्दाद्वैतविरुद्धमेतदित्याह—ननु शब्दाद्वैतमिति। परिहरति – ब्रह्मावस्थायां तदिति। वाक्यजप्रमितिसमकालैव भेदनिवृत्तिधीः प्रामाण्यविरोधिनी; तदातूपाध्यनिवृत्तेः न तन्निमित्तभेदबाध इत्यर्थः। नन्वेवमप्यविद्याकल्पितत्वं भेदस्याङ्गीकृतमित्यङ्गीकृताभ्युदयकरत्वहानिरित्याह—ननु शास्त्रार्थ इति। परिहरति – सत्यं निषिद्धापेक्षयेति। अभ्युदयप्रत्यवाययोः आपेक्षिकत्वात् परमाभ्युदयमोक्षापेक्षया स्वर्गादिकं प्रत्यवायकरमपि नरकादिफलनिषिद्धापेक्षयाभ्युदयकरमिति न प्रामाण्यहानिरित्यर्थः। नन्वेवं गुणविधिकर्मविधिवाक्यानामर्थ-

---

१. Omitted न. ख. २. Omitted वा. क. ख.

मोक्षापेक्षया प्रत्यग्रायतैव तत्त्वत इति । गुणविधिकर्मविधिवाक्यानामेकतैका-नुष्ठानोपाधेः । तदेवम् 'शब्दः' इति सर्वत्रैकतानिर्देशाच्छब्दानामेकता शब्द-जात्यादिनिर्देशसाम्यात् जात्यादेः शब्दरूपतेत्यद्वैतम् । अर्थरूपत्वाच्छब्दस्य तादात्म्यादौत्पत्तिकादर्थधीः । तात्त्विके त्वेकत्वे उपाधितः सर्वभेदधियामुप-पत्तिः [1]शब्दप्रामाण्यं चाविद्यावस्थायाम् ॥

स्फोटवादनिरासः

राद्धान्तस्तु—नैकनिर्देशादेकधीसिद्धिः; एकनिमित्ता ह्येकशब्दवाच्यता, न पुनरेकताकृता । [2]एकं च निमित्तं जातिः क्रिया गुणो द्रव्यं वा गौर्गन्ता शुक्लो विषाणीति यथाक्रमम् । क्वचिद्वस्त्वेकता निमित्तमाकाशमिति । शब्द-शब्दप्रवृत्तौ च श्रोत्रग्रहणक्रिया निमित्तम् । न च सत्त्ववर्णत्वादेरपि शब्द-

भेदे सत्येवैकशास्त्रत्वाभ्युपगमः कथमित्यत्राह—गुणविधीति । सत्यपि गुणविधेः विधेयान्तरे कर्मविधिवाक्यप्राप्तानुष्ठानानुवादेन गुणमात्रविधेरेकानुष्ठानोपाधि-कृतमेकशास्त्रत्वमहतमेवेत्यर्थः । अतः पूर्वोक्ततात्त्विकाद्वैतमचलितमेव भेदापेक्ष-विधिप्रामाण्येनेत्याह—तदेवं शब्द इतीति । ततः पुरुषानपेक्षमेव श्रुतिप्रामाण्यं सिध्य-तीत्याह – अर्थरूपत्वाच्छब्दस्येति । न चाविसंवाद्यशेषप्रमाणप्रसिद्धभेदबाधदोषः, सर्वभेदधियामुपाधिनिमित्ततयोपपत्तेरित्याह—तात्त्विके त्वेकत्व इति । न चोपाधि-निवृत्तौ भेदापेक्षप्रामाण्यभङ्गदोषोऽपि, तदवधिकत्वेनैव तदुपगमादित्याह—शब्दप्रामाण्यं चेति ।

सिद्धान्ताभिप्रायमाह—राद्धान्तस्त्विति । यद्यपि सर्ववर्णेषु शब्दपदनिर्देशोऽनुवृत्तः, तथाप्येकबोधानुवृत्तिरसिद्धैव । यथा हि उच्चनीचभेदेन उदात्तादिभेदेन चैकवर्णोच्चारणे प्रसिद्धा तत्प्रत्यभिज्ञा सर्वत्रापि तच्छ्रवणनिमित्तवर्णलेखनस्यैकरूप-तयैव सर्वश्रोतृसंप्रतिपत्तेः, न तथा नानावर्णोच्चारणेऽप्येकधीः कस्यचिदुदेति; यतो भेदधीरुपाधिमात्रनिमित्ता स्यात् । तेनैकनिर्देश एवोपाधिकृतः स्यात् । तच्च निमित्तं प्रसिद्धमेवानेकविधम् । तत्र परा्भ्युपगतव्यक्त्यर्थत्वाङ्गीकारेण गौरित्ये-कोपाधिकानेकप्रत्युदाहरणं नेयम् । तत्र प्रकृते निमित्तविशेषमाह—शब्दशब्दप्रवृ-त्ताविति । श्रोत्रग्रहणरूपोपाधेः जातावपि प्रवृत्तेः शब्दपदवृत्त्युपाधित्वमयुक्तमिति

१. सर्वप्रामाण्यम्. क   २. एवं च. क.

तापत्तिः, सत्त्वादिजातेरसिद्धेरश्रोत्रग्राह्यत्वात् । न च शब्दत्वजातेर्निर्निमित्तता, शब्दत्वासिद्धेः । यद्वस्तुग्रहे हि पूर्वदृष्टावमर्शः, तत्र जातिधीसिद्धिः; न च वर्णान्तरग्रहे तथेति शब्दत्वासिद्धिः । एवं सत्त्वाद्यसिद्धिः । प्रमाणक्रियातः सच्छब्दः । अतः शब्दैकत्वासिद्धेर्दूरे निर्देशसाम्याच्छब्दरूपतार्थानाम् । अतः श्रोत्राद्युपाधेर्भेद इत्ययुक्तम् । मुखादौ बिम्बाकारप्रत्यभिज्ञया उपाधितो भेदधीर्युक्ता । एवं विवर्तपक्षे मानहतेऽर्थधीकार्यात् संस्कारैः सम्भूयानेकवर्णस्मृतिः कृतेति युक्तम् । व्यतिक्रमोच्चरितेषु कार्यादर्शनात् क्रमविशेषोच्चरितवर्णधीभिर्जनितैः संस्कारैः [1]सम्भूय स्मृतिसिद्धिः । अथ स्वरूपतो न क्रमः, किन्तु धीकृत एव; एका चानेकवर्णस्मृतिरिति न क्रमः, तन्न; क्रमवदनेकधीस्थताप्यनुभूतेति सक्रमानेकवर्णस्मृतिसिद्धिः । विच्छेदोच्चारणे च नार्थ-

---

शङ्कां परिहरति—न च सत्त्ववर्णत्वादेरपीति । ननु शब्दत्वजातिहानेन कुतः श्रोत्रग्रहणक्रियोपाधिराश्रितेत्याशङ्क्य तदसिद्धेरित्याह—न च शब्दत्वजातेरिति । एकशब्दनिर्देशानपेक्षानेकव्यक्तिदर्शने पूर्वदृष्टाकारप्रत्यभिज्ञैव जात्युपगमे निमित्तम्; नानाविधवर्णेषु तदसिद्धेः शब्दत्वजात्यभावात् क्रियानिमित्ततोपेयेत्यर्थः । प्राक्तनसत्त्वादिजातिनिषेधेऽप्ययमेव हेतुरभिप्रेत इत्याह—एवं सत्त्वाद्यसिद्धिरिति । कस्तर्हि तत्रोपाधिरित्यत्राह—प्रमाणक्रियात इति । एवं प्रत्यभिज्ञानुत्पत्तेरेकत्वासिद्धेर्निर्देश्यैक्यस्यौपाधिकत्वेऽनपेक्षितैकोपाधिकनिर्देशसाम्यमात्रेण दूरापेतार्थज्ञानानां शब्दात्मकतेत्याह—अतः शब्दैकत्वासिद्धेरिति । ततश्च शब्दार्थभेदस्यौपाधिकत्वमपि निरस्तमित्याह—अतः श्रोत्राद्युपाधेरिति । तत्साधकोक्तदृष्टान्तवैषम्यमाह—मुखादाविति । अतोऽर्थधीकार्योन्नेयं संस्कारसाहित्यं निष्प्रतिबन्धकमित्याह—एवं विवर्तपक्ष इति । कार्योन्नेयत्वादेवातिप्रसङ्गदोषोऽपि सुनिवार इत्याह—व्यतिक्रमोच्चरितेष्विति । ननु निराश्रयः क्रमो नातिप्रसङ्गनिवारणक्षम इति शङ्कते—अथ स्वरूपतो न क्रम इति । परिहरति—तन्न क्रमवदनेकधीस्थतापीति । संस्कारजनकश्रोत्रोत्थधियस्तावत् क्रमवत्य एव; ताश्च तदुत्थस्मृतौ वर्णानुरञ्जकतया भान्त्येवेति स्वकालस्थस्वक्रमानुरक्तानेन वर्णानेकवृत्तिस्थान संपादयन्तीति तयैवार्थधीरित्यर्थः । निरन्तरोच्चारणमप्येकस्मृतिकारणोपाधिः कार्यकल्प्य इत्याह—विच्छेदोच्चारणे चेति । बहुकल्पनाप्येवं कार्योप-

---

1. Omitted सम्भूय. क.

धीरिति न तदानेकवर्णस्मृतिसिद्धिः। एवं कार्यानुरूपं सर्वं सिद्धम्।

अत्र भाष्यसम्मतिः

भाष्ये तु "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः" इत्यनास्थावादः; तत्त्वतो हि स्मृतिस्थवर्णेभ्योऽर्थधीः, अन्विताभिधानस्य न्यायसंपादनाधीनतया विलम्बात्। वर्णभेद उपाधिकल्पना एकशब्दकल्पना च "सा च शब्दकल्पना च" इत्युक्तम्। 'शब्दार्थभेदश्चाकृतिग्रन्थे पुनर्वाच्यः[1]। 'शब्दादर्थम्' इत्येकवचनं लोके शास्त्रे चैकार्थधीकरतोपाधेः। पदं वाक्यं लौकिकं वैदिकं[2] मित्येकवचनमुपाधित एव। अतः सिद्धं गकारादय एव गौरित्यत्र, न ततोऽन्यः शब्दः। अकारस्तु प्रत्यभिज्ञानादेकोऽष्टादशधोपाधिभिन्नो युक्तः। न शब्दे प्रत्यभिज्ञा, येन वर्णभेद उपाधितः स्यात्॥

---

पादकतया न दोष इत्याह – एवं कार्यानुरूपमिति। नन्वेकस्मृतिकरत्वं भाष्यविरुद्धमित्याशङ्क्योपपादकप्रदर्शनमात्रे भाष्यतात्पर्यम, नान्त्यवर्णस्यातत्संस्कार्यत्व इत्याह—भाष्ये त्विति। अन्त्यवर्णस्यार्थबोधानन्तर्यनियमाभावान्नोक्तमात्रे तात्पर्यमित्यर्थः। भाष्ये 'ननु च संस्कारकल्पनायामस्त्यदृष्टकल्पना' इति चोद्यस्य कल्पनागौरवापत्तिः परिहार उक्तः; किं तद्गौरवं स्फोटवाद इत्याशङ्क्य वर्णभेदनिर्वाहकोपाधिकल्पनापेक्षया तदापादनमित्याह—वर्णभेद उपाधिकल्पनेति। ननु सत्येव बाह्येऽर्थे गौरवभिया स्फोटपक्षनिराससिद्धिः, तदभावेऽपि शाब्दधीर्दृष्टेति गौरवाभ्युपगमेनापि तत्पक्षापत्तिरित्याशङ्क्य तन्निरासो भाष्ये यत्नान्तराधीन इति नेदानीं वाच्य इत्याह—शब्दार्थभेदश्चेति। ननु स्फोटपक्षानुसारिव्यवहारः प्रसिद्ध इति तत्सिद्धिरित्याशङ्क्यान्यथासिद्ध्या परिहरति—'शब्दादर्थम्' इत्येकवचनमिति। उपसंहरति—अतः सिद्धमिति। ननु वर्णभेदस्यापि क्वचिदौपाधिकत्वसंप्रतिपत्तेस्तत्तुल्यतया सर्वत्रापि तदापत्तिरित्याशङ्क्य विशेषप्रदर्शनेन परिहरति—अकारस्तु प्रत्यभिज्ञानादिति॥

इति स्फोटवादः॥

---

१. शब्दार्थभेदश्च. क.    २. कं वाक्यमि, ख.

# अथाकृतिवादः

## विधान्तरेण पूर्वाक्षेपः

"अथ गौरित्यस्य शब्दस्य कोऽर्थः" इति वाचकरूपैव वाच्येषु धीर्वनादौ वाच्या, सा वर्णाधिके वाचके युक्ता इति विधान्तरेण पूर्वाक्षेपः प्रश्नार्थः। उत्तरं राद्धान्तिनः—वाचकाद्भिन्नं वाच्यमाकृत्यादि गवादेः। प्रश्नोत्तरयोर्विशेषनिर्देशः प्रदर्शनार्थः, अरुणादेर्गुणार्थतोपगमात्। ननु प्रतिगुण्यरुणादिभेदादरुणादिजातिरेवार्थः। तन्न, भेदभाने हि यत्रैकावमर्शस्तत्र जात्युपगमे जात्यर्थता; न चारुण्यभेदधीः गुणिभेदधीरेव परम्। पटुमन्दतादयस्तु वस्तुतत्त्वाधीना न वस्तुभेदायालम्, गवाद्याकृतेरपि पटुमन्दतया भेदापत्तेः। यत्तु परमाणुषु पाकजं कार्यद्रव्ये कारणगुणजं न तदरुणादि, किन्तु तत्समवाय इति नो मतम्।

---

नन्वर्थविषयप्रश्नस्येदानीं कः प्रसङ्ग इत्याशङ्क्य मुखान्तरेण पूर्वाक्षेपाभिप्रायेणेत्याह—अथ गौरित्यस्येति। कथं तर्ह्याकृत्यर्थतयोत्तरघटनेत्याशङ्क्य प्रभृतिपरतयेत्याह—उत्तरं राद्धान्तिन इति। नन्वरुणादावप्याकृत्यर्थतानुगतेति नाकृत्युक्तेरविवक्षा युक्तेति चोदयति—ननु प्रतिगुण्यरुणादिभेदादिति। परिहरति—तन्न, भेदभाने हीति। 'अरुणा एते गाव एते' इति भेदधियो विशेष्यमात्रविषयतया विशेषणभेदो नावसीयत इति जातिगुणविषयैवोभयत्रापि प्रत्यभिज्ञा; तेन गुणभेदोपगमेन तज्जात्यर्थता गुणशब्दानां न युक्तेत्यर्थः। ननु पटुमन्दतया तरतमभावेन च भेदधीर्गुणमात्रनिष्ठेति प्रत्यभिज्ञा तज्जातिविषयैवोपेयेत्यत्राह—पटुमन्दतेति। यादृशी भेदधीः स्वरूपैक्यभेदोपजीवितयौपाधिकभेदावगाहिनीति न स्वरूपभेदनियतजातिविषयतापादिकेत्यर्थः। गवादावपि चागन्तुकहेत्वधीनान्यसादृश्यप्राप्तपटुमन्दधिया जातेरपि भेदापत्तेरित्याह—गवाद्याकृतेरपीति। नन्वरुणादेरेकत्वोपगमः पाकजत्वाद्यभ्युपगमविरुद्ध इत्याशङ्क्य तत्समवायमात्रं पाकजमिष्यत इति न विरोध इत्याह—यत्तु परमाणुष्विति। केचित्तु अरुणादिगुणजातेर्विशेष्याव[च्छेदक]तद्रव्यविशेषणत्वाभावात् तद्विशेषणभूतगुणमात्रं स्वजात्युपलक्षितं वाच्यम्, द्रव्य-

केचित्तु सत्यप्यरुणादिजातिर्न न वाच्येत्याहुः—गुणिन्यरुणादिशब्द-प्रवृत्तेर्गुणार्थता जातिमिति प्रवृत्ताविव जात्यर्थता; गुणाश्रया जातिरुपलक्षणं गुणाभिधाने। स्यादेवं यद्यरुणभेदः स्यात्। स नेति नाथः। वाचकरूपा वाच्येषु धीः। इत्थम् 'वनम्' इति बहुषु तरुष्वेकवचनम्। तदेकस्मिन्नर्थे शब्दश्चैकः। शब्दानां स यद्यर्थः तदैकवचनं युक्तम्। वर्णात्मकं तु पदं स्पष्टभेदं नार्थरूपार्हम्। न च तदेकवचनार्हम्। एवं च वस्तु बाह्यमव्य-पदेश्यमस्तु; शब्दादर्थधीस्तु शब्दविवर्त एव। न च प्रयोगसाध्वेकवचनम्, "एकस्मिन्नेकवचनम्" इत्यनुशासनोपगमात्॥

बाह्यस्यैव वाच्यतासिद्धान्तः

राद्धान्तस्तु—व्युत्पत्तितः स्पष्टं बाह्यमेव वाच्यं स्थितम्। वनादावेक-वचनं तु प्रयोगसाधुतया। प्रायिकमेकस्मिन्नेकवचनं स्मृतम्, प्रयोगमूलत्वात् स्मृतेः। यद्यपि वनादौ समुदायावस्थयैकार्थता शक्या 'दाराः' इत्यादौ

---

वृत्त्यन्यथानुपपत्तेरित्याहुः; तद्गुणभेदसाधकमानाभावान्नाङ्गीकृतमित्याह—केचित्तु सत्यपीति। एवं प्रासङ्गिकीं गुणार्थतां समर्थ्य प्रस्तुतं वनादिशब्दोत्थधीमुखं पूर्वोक्ताक्षेपप्रकारमुपपादयति—वाचकरूपा वाच्येषु धीरित्थमिति। मानान्तरा-विसंवादविषये यथोक्तविधया शब्दवाच्यस्याशब्दात्मकत्वसम्भवेऽपि तद्विसंवादे तदयोगात्तत्र शाब्दाभ्युपगतविवर्तवादस्याहेयत्वात् शब्दोत्थप्रतीतेरपि लक्षणत्वा-दितरत्रापि तदापादकाहानात्सदपि बाह्यमव्यपदेश्यम्, व्यपदेश्यं तु शब्दात्मकमेव स्यादित्यर्थः। नन्वेकवचनस्य प्रयोगसाधुत्वार्थतया तत्रापि बाह्यस्यैव वाच्यतोपे-येति शङ्कां साधुत्वस्य शाब्दस्मृतिमात्रलभ्यत्वात्तद्विरोधात् प्रयोगसाधुत्वगतेरनु-पेयत्वात्तदुक्तैव गतिरिति परिहरति—न च प्रयोगसाध्वेकवचनमिति।

सिद्धान्तमाह—राद्धान्तस्त्विति। व्युत्पत्त्येकनिमित्तत्वाच्छाब्दप्रतीतेः बाह्य-नियतत्वाच्च व्युत्पत्तेरविचाल्यमेव बाह्यार्थत्वं शब्दानाम्; प्रयोगसाधुतयाप्येकवचन-मुपपन्नम्। न च "एकस्मिन्नेकवचनम्" इति स्मृतिविरोधात्तदसम्भवः, प्रयोग-मूलत्वात्स्मृतेः प्रायिकतया चोक्त्युपपत्तेः अनादिप्रयोगोपस्थापकतयैव स्मृतेरपि नियन्तृत्वादविगीतप्रयोगादिह साधुत्वसिद्धिरित्यर्थः। समुदायावस्थैकत्वानादरेण तत्समर्थनेऽभिप्रायमाह—यद्यपि वनादाविति। दारादिष्वपि जघन्यावस्थया बहु-

प्रयोगसाधुतैव गतिरिति सैव वनादावुक्ता व्यापितया। दारादिष्ववयवापेक्षया बहुवचनं परोक्तं हेयम्, प्रातिपदिकार्थसंख्यां विभक्तिराह; न चावयवपरं प्रातिपदिकमिति "पाशान्" इत्यत्र स्थितम्। एवं समर्थिते वनाद्येकवचने बाह्ये चाकृत्यादौ वृत्तिकारग्रन्थे स्थिते संविदद्वैते च विज्ञानवादनिरस्ते शब्दरूपा न 'वाच्ये धीः। अत्राकृतिव्युत्पत्तिरिति परोक्तं हेयम्। भाष्ये त्वाकृत्याद्यपलापो यदि परमाकृत्यादिरेवा'भिधीयेतेत्येवंपरतया गुरुणा प्रपञ्चितम् ॥

---

र्थतां परभिप्रेतां दूषयति—दारादिष्ववयवापेक्षयेति। प्रातिपदिकस्याप्यवयवपरत्वे तदपेक्षं बहुवचनं नेयम्; तच्च पाशादिषु नास्तीति पाशाधिकरण उक्तम्; तेन प्रयोगसाधुतैवोपेयेत्यर्थः। मानान्तरविषयार्थतां शब्दानां स्थानान्तरस्थापिततत्तत्स्मरणपूर्वकमुपसंहरति—एवं समर्थित इति। इहैवाकृतिसमर्थनमिति परव्याख्यानं भाष्यस्थतदुक्तेरन्यपरत्वप्रदर्शनमुखेनेतरबाह्यार्थसमतामाकृतेरप्यभिप्रेत्यापाकरोति—अत्रेति।

इत्याकृतिवादः ॥

---

१. बाह्ये ख. २. बाहूयेते. क. ख.

# अथ सम्बन्धाक्षेपपरिहारः

संबन्धाक्षेपः वैयाकरणानाम्

"अथ सम्बन्धः कः" इति प्रश्नः शाब्दस्यैव। यदि युतसिद्धौ शब्दार्थौ, न तु विवर्तपक्षः तर्हि संज्ञासंज्ञिसम्बन्धः कृतक इत्यनपेक्षताहतिरुक्ता दुस्तरा। मत्पक्षे हि[1] तादात्म्यसम्बन्धः। स हि न कृत्यर्ह इत्यनपेक्षता। संज्ञा तु चैत्रादिः कृतैव दृष्टा इति कृतकसम्बन्धानुबन्धा वेदा अपि कृतका एव। अन्यथा सङ्केतात् प्राच्यत्वे वेदानामर्थबोधकता न स्यात्। अतः सङ्केतयितृवेदकर्तृसंप्रतिपत्तिर्वा एकतैव वा वाच्येति सम्बन्धाक्षेपवादस्थानोक्तसंकेतवादिपक्षनिवेशान्मीमांसकमतमाक्षिपतः[2]शाब्दस्यैव पुनः प्रश्नः।

सिद्धान्तः

उत्तरं तु[3] वृद्धव्यवहारानादितावलात् संकेतकल्पनाहानात् संज्ञासंज्ञित्वापौरुषेयत्वसिद्धेः व्यवहारानादित्वेऽपि यत्र सम्बन्धदर्शनं तत्र संकेत एव; सोऽत्र मा भूदिति सम्बन्धुरभावादित्युक्तम्। न सम्बन्धरि प्रत्यक्षम्। अतस्त[4]त्पूर्वकानुमागमासम्भवः। न चाप्रत्यक्षपूर्वकार्थधीकार्यानुमागम्यः, व्यवहारानादितयापि कार्योपपत्तेः। न चाप्रत्यक्षपूर्वको वेदगम्यः, अपूर्वानात्मकत्वात्। न च पूर्वेषां प्रत्यक्षाभावासिद्धिः, परेषामस्मृतेः तत्सिद्धेः। न च स्मृत्यनर्हता,

---

ननु सम्बन्धाक्षेपसमाधानार्थे स्फोटनिरासे कृते पुनः सम्बन्धप्रश्नस्य कः प्रसङ्ग इत्याशङ्क्य राद्धान्तिनं प्रति निराकृतस्वपक्षस्फोटवाद्यपाद्यानपेक्षत्वक्षतिपरतयेत्याह—अथ सम्बन्धः क इतीति। परिहाराभिप्रायमाह—उत्तरं वृद्धव्यवहारेति। यद्यपि वाच्यवाचके पृथक् सिद्धे तथापि न कृत्रिमस्तत्सम्बन्ध उपेयः, व्यवहारावधारितवाच्यवाचकत्वधीमात्रेणार्थधीदर्शनात् तत्सन्तत्यनादित्वकल्पनाया एवोचितत्वात्। ततश्चापौरुषेयत्वयानपेक्षत्वं वेदानां सिध्येदित्यर्थः। कथं तर्हि भाष्ये हेत्वन्तरोपादानमित्याशङ्क्य बाधकनिरासपरतयेत्याह—व्यवहारानादित्वेऽपीति। सम्बन्ध्रभावसिद्धिरेव कथमित्यत्राह—न सम्बन्धरि प्रत्यक्षमिति। ननु पूर्वपुरुषाणां प्रत्यक्षसिद्धोऽपि सम्बन्धकर्ता परेषामप्रत्यक्षः स्यादित्यत्राह—न च पूर्वेषा-

---

१. Omitted हि. क.
२ शाब्दस्य पुनः. क.
३. Omitted तु. व्याख्या.
४. कार्यानुपगमागमा. क.

व्यवहाराविच्छेदादुपयोगाच्च; सम्बन्धसंप्रतिपत्त्या हि व्यवहारार्थं स्मृत्युपयोगो महान्। न चेह विस्मरणम्; [1]ज्ञातास्मृतौ हि विस्मरणम्। नन्वर्थधीकार्यात्, न प्रथमश्रुतात्; अस्ति चातोऽर्थात् सम्बन्धानुमापत्तिरिति। इयमेव भाष्येऽर्थापत्तिरुक्ता, न तु सम्बन्धगम्यस्यानुपपत्तिरत्र इति न प्रसिद्धार्थापत्तिरियम्। इत्थं चार्थधीर्व्यवहाराद्व्युत्पत्त्यपेक्षयापि इति न सम्बन्धगमिका, प्रथमश्रुतादप्रतीतेश्च न भागासिद्धता। वेदात् प्रथममेव प्रतीतेर्व्याप्त्या;

---

मिति। सङ्केतितशब्दाधीनार्थप्रतिपत्तेः सम्बन्धव्यवहर्तृसंप्रतिपत्त्यपेक्षतया वृद्धचादिषु प्रसिद्धत्वात् गवादावपि तद्वदेव सम्बन्धस्मृतिः प्राप्तैवेति तन्निवृत्तिः पूर्वेषामपि प्रत्यक्षं निवर्तयितुमलमिति न तच्छङ्केत्यर्थः। अत्र भाष्ये "यद्यपि" इत्यादिना विस्मरणसम्भवाभ्युपगमेनापि प्रमाणाभावादेव सम्बन्धनिषेधः कृतः; सोऽयुक्तः, विस्मरणस्य स्वयमेव प्रमाणत्वादित्याशङ्क्य न सम्बन्धविषयमेव विस्मरणमभ्युपेतम्, सामान्येनैव तदुपगम इत्याह—न चेह विस्मरणमिति। एवं प्रत्यक्षनिरासेऽपि सामान्यतोदृष्टानुमानं सम्बन्धविषयेऽपि स्यादिति चोदयति—नन्वर्थधीकार्यादिति। शब्दधीकार्यतया दृष्टाप्यर्थधीः शब्दसहायभूतान्यापेक्षा चैत्रादिवर्तिदृष्टसङ्केतापेक्षैव युक्ता, व्यवहारदर्शनमात्रस्य गवादिवर्तिदृष्टस्य चैत्रादौ सङ्केतपूर्वकत्वप्रसिद्धेः सङ्केतस्य तदनपेक्षत्वप्रसिद्धेश्च सङ्केतानुमानस्यैव युक्तत्वादिति भावः। ससहायशब्दजाप्यर्थधीरनवगतसङ्केतस्य व्युत्पत्तिमात्रापेक्षयापि भवतीति न सङ्केतानुमानसमर्थेति परिहरति—इत्थं चार्थधीरिति। ज्ञातस्यैव सहायतार्हत्वात्तदज्ञानेऽप्यर्थधीदर्शनाद्व्यभिचारिणो न कार्यानुमेयतेत्यर्थः। ननु सहायापेक्षोत्थापकतयोक्ता प्रथमश्रुतादप्रतिपत्तिर्वेदवाक्ये नास्तीत्यसिद्धिरपि स्यादित्याशङ्क्य पदापेक्षया तदुक्तिर्न वाक्यापेक्षयेति नासिद्धिर्वाच्येति व्यभिचार एव दोष इति दर्शयति—प्रथमश्रुतादप्रतीतेश्चेति। यदि तुनः स्वोत्थसम्बन्धव्यवधानेन सङ्केतस्य सहायताभिमता, तदा सम्बन्धमात्रादपेक्षापूर्तेः न तत्कर्त्रवसाय्यनुमानमित्यर्थानुपपत्तिगौरवदोषोद्भावनार्थः "इत्थं चार्थधीः" इत्यादिग्रन्थो द्रष्टव्यः। भाष्ये यथोक्तानुमान-

---

१. Omitted. ज्ञातास्मृतौ हि विस्मरणम्. } क.

पदं हि प्रथमश्रुतं नान्वितपदार्थधीव्यावृत्त्या वाक्यार्थं बोधयतीति वेद-वाक्येऽपि तुल्यम् ।

उपदेशपदेन सिद्धान्तोक्तिः

सौत्रं पदम् "उपदेशः" इति पञ्चम्यन्ततया विपरिणमय्य सिद्धवदित्य-ध्याहृत्य भाष्ये व्याख्यातम् । सिद्धमपौरुषेयत्वम्, वृद्धोपदेशात् वृद्धान्तरानु-ष्ठानोपदेशे पार्श्वस्थस्य सम्बन्धग्रहणसंस्कारादेवार्थधीसिद्धेः सम्बन्धकल्पना-नुपपत्तेः । यदि व्यवहारोऽनादिर्न स्यात् तदा प्रथमवृद्धयोः सम्बन्धग्रहो-पायाभावात् शब्दप्रयोगार्थप्रतीती न स्याताम्; ततः पार्श्वस्थस्य सम्बन्धग्रहो न स्यात् । अनादिस्तु वृद्धव्यवहारः, पुरुषान्तरपूर्वकत्वात् पुरुषान्तरोत्पत्तेः । यथाद्यतना नरा नरान्तरपूर्वकाः तथा प्राच्या अपि । न चायोनिजा धर्माधि-पत्यजाः स्वर्गिणः संस्वेदजाश्चाधर्माधिपत्यजा इति जरायुजाण्डजा अप्ययो-निजाः; तेषां योनिजत्वव्याप्तेरित्यनादिरेव नरपरंपरा । न च भुवनादेः कार्यतया विनाशित्वान्निराश्रयतया परम्परोच्छेदः; सृष्टिस्थितियोग्यावयव-विभागादपि विनाशः अवयवान्तरोत्पादाच्च पुनरुत्पत्तिरस्तु;

जगत ईश्वरसृष्टत्वेपि गुरुनयाविरोधः

एकदा कृत्स्नसृष्टिविलयौ मानशून्यौ प्रत्युत यथादर्शनं क्रमेण तदनुमेति जगतीश्वरकर्तृकेऽपि न गुरुनयविरोध इति गुरोरवधीरणम् ।

---

निरासः "सिद्धवदुपदेशात्" इत्युक्तः, तदर्थं स्वतोऽनभिव्यक्तमाह—सौत्रं पद-मिति । वृद्धोपदेशस्य हेतुत्वप्रकारमाह—वृद्धान्तरेति । हेत्वसम्भवप्रकारानुवादेन तत्परिहारमुखं सम्भवं साधयति—यदि व्यवहार इति । पुरुषोत्पत्तेर्योनिजत्वनियमे पुरुषान्तरपूर्वकत्वनियमादनादित्वं व्यवहारपरम्परायाः स्यात्, तन्नियम एव नास्तीति शङ्कामपाकरोति—न चायोनिजा इति । देहोत्पत्तेर्देहान्तरपूर्वकत्वनियमा-भावेऽपि जरायुजाण्डजविशेषोत्पत्तेर्योनिजत्वाव्यभिचाराद्व्यवहारसन्तत्यनादिता सुलभेत्यर्थः । ननु पुरुषसन्तत्याश्रयभूता पृथिवी सावयवत्वात् कार्येति कादाचित्का-श्रया पुरुषसन्ततिर्नानाद्यन्ता स्यात्; तत एव तत्स्थितिहेत्वोषध्युदकादेश्चाभावात्त-न्नित्यता दुर्लभेत्याशङ्क्य देहादिसृष्टिस्थितियोग्यात्तद्योगार्हादप्यवयवविभागाद्विना-शोपपत्तिः उत्पत्तिश्च तथेति न सन्ततिनित्यताविरोधिनी तत्कार्यतेति परिहरति—न च भुवनादेः कार्यतयेति । ननु व्यवहारानादित्वकल्पनयैवं शब्दानां स्वाभाविक-बोधकत्वाश्रयणे तुल्यन्यायतया हस्तसंज्ञादेः कशाद्यभिघातादेश्च तदापत्तिरित्या-

अनादित्वेऽपि कशाद्यभिघाताद्धस्तसंज्ञातश्चाभिप्रायादर्थधीतः पार्श्वस्थानां व्युत्पत्तिः। चैत्रादौ सङ्केतदर्शनात्; न गवादौ "यज्जातीयो यतः सिद्धः" इति सामान्यतो दृष्टम्, विशेषानुमानबाधात्। पूर्वेऽपि जना गवादिभ्यो व्यवहारादेवार्थधीमन्तः, गवादिभ्योऽर्थधीमत्वात् अर्वाचीनजनवत्। किञ्च वेदं कृत्वा तदर्थव्यवहारार्थः सङ्केतो दुर्गस्थम्लेच्छेषु व्यर्थः। किञ्च व्यवहारानर्हदेवतादौ व्यर्थः।

ईश्वरानुमाननिरासः

संप्रति सुहृद्भावेनाह नाथः—केषांचिच्चेतनाधिष्ठानानुमानमयुक्तम्।

---

शङ्कय परिहरति—अनादित्वेऽपीति। सत्यप्यनादित्वे तस्य पुरुषस्वातन्त्र्यानपायात् पुंवाक्यादिवाभिप्रायपरिच्छेदपूर्वकधीनियमाद्व्युत्पत्तिरपि तद्विषयैवेति न स्वाभाविकबोधकतापत्तिः; तदा च वस्तुतोऽनादित्वकल्पनापि नावश्यकीत्यर्थः। ननु सङ्केतस्यैवमर्थधीकार्यलिङ्गत्वासम्भवेऽपि चैत्रादिदृष्टसङ्केतानुमानं गवादावपि पदत्वसामान्यलिङ्गकं युक्तमेवेत्याशङ्कय विशेषानुमानाविरुद्धमेव सामान्यतोदृष्टमेयम, तद्बाधितविषयं त्विदमित्याह—चैत्रादाविति। विमतकालव्यवहर्तृपक्षीकरणेनाविमतकालकदृष्टान्तकस्य तद्दृष्टहेत्वनुमानस्य विषयैक्याद्विशेषनिष्ठतेति तदेव बलवदित्यर्थः। सङ्केतनिरासे हेत्वन्तरम् "अव्यतिरेकश्च" इति सूत्रपदोक्तमाह—किञ्च वेदं कृत्वा तदर्थेति। वेदार्थानुष्ठानार्थमेव हि वेदकर्तृकृतसङ्केतापेक्षान्येषाम्, न स्वतन्त्रव्यवहारार्थमिति तत्कर्तृभिरेव सोऽनुवर्तनीयः स्यात्; यथा व्याकरणव्यवहारिभिरेव तत्कर्तृकृतः सङ्केतः तदनुष्ठानहीनैस्त्वेकदेशवर्तिभिरपि तद्वदेव नानुवर्तनीयः स्यात्, सुतरां दुर्गदेशस्थैः; सर्वेषामपि त्वेकार्थतयैव गवादिशब्दव्यवहारदर्शनात् वेदकर्तृकृतत्वमर्थसम्बन्धस्य नाङ्गीकारार्हमित्यर्थः। "बहवः सम्बन्धारः कथं संगंस्यन्ते" इत्याद्यसम्भवोक्तिर्भाष्येऽभ्युच्चयार्थेत्यभिप्रायः। "अर्थेऽनुपलब्धे" इति सूत्रपदसूचितं हेत्वन्तरं स्पष्टयति—किंच व्यवहारानर्हेति। सङ्केतो हि मानान्तरेण विषयमुपस्थाप्य 'अस्येयं संज्ञा' इत्येवं कार्यः; मानान्तरामेयत्वेनाभ्युपगम्यमानोऽप्यर्थो निर्विषयः स्यादित्याशङ्कयैवेत्यर्थः। जगतीश्वरकर्तृकेऽपि न गुरुनयविरोध इति प्रागुक्तम्; तदभ्युपेत्यैव परोक्तानुमानिकेश्वरनिरासयत्नः प्रकरणादौ वास्तवं तदनुमानदूषणं दर्शयितुम्; न स्वपक्षविरोधाभिप्रायेणेत्याह—संप्रति सुहृद्भावेनेति।

अथ तेषां तत्रैवं प्रयोगः—अदृष्टमणुद्वयसंयोगहेतुकर्मकरं चेतनाधिष्ठितम्, अचेतनत्वात्; यदचेतनं कार्यकरं तच्चेतनाधिष्ठितम्, यथा वास्यादि; तथा चेदम्, तस्मात्तथा । ज्ञाताधिष्ठेयस्वरूपशक्तिकार्यश्चाधिष्ठातेति क्षेत्रज्ञान्यज्ञातृविशेषानुमा; सामान्यतोऽपि व्याप्तावन्तर्भावितज्ञातृविशेषमेव सामान्यं पक्षधर्मतयाधिकरणसिद्धान्तापरपर्यायया साध्यधर्मिण्यनुमेयं पर्वतगताज्ञाताग्निविशेषवत् । न चान्यस्यापि हेत्वभावादधिष्ठेयस्वरूपादिज्ञानासम्भवः, तद्बुद्धेर्नित्यत्वात् । न च नित्या क्षेत्रज्ञधीर्दृष्टेति तन्नित्यत्वासम्भवः; न हि पार्थिवाणौ रूपादि कार्यमिति जलाणौ रूपादि तथा;

---

सर्वदूषणपरिहारेण तदुपपादितमनुमानप्रकारमाशङ्कते अथ तेषामिति । संप्रतिपन्नमेव तावत् स्थूलद्रव्योत्पत्तेः परमाणुसंयोगपूर्वकत्वम्; द्व्यणुकोपक्रमश्च तत्तत्कर्मजश्च तत्संयोगः, तत्कर्म चादृष्टनिमित्तम्, तददृष्टं चेतनाधिष्ठानाधीनवृत्तिकं तत्कर्मकरमिति वास्यादिदृष्टान्तेनानुमीयते। न चादृष्टस्य चेतनाश्रितत्वसिद्धेः सिद्धसाध्यतादोषः, अधिष्ठेयस्वरूपशक्तिकार्यज्ञस्यैव कार्यार्थवृत्त्यधिष्ठातृत्वसम्भवादिति विलक्षण एवानुमेय इत्यर्थः। ननु दृष्टान्ताननुगतविलक्षणरूपस्य व्याप्त्यसिद्धेः नानुमेयानुप्रवेश इत्यत्राह — सामान्यतोऽपि व्याप्ताविति । सर्वानुमानेष्वपि पक्षविशेषसम्बन्धज्ञानान्तेऽनुमेये तदनुसार्यज्ञातविशेषानुप्रवेशस्यापरिहार्यत्वात् क्षेत्रज्ञाननुगतज्ञानातिशयसिद्धिर्नायुक्तेत्यर्थः। नन्वदृष्टस्वरूपादिज्ञाने हेत्वभावस्य लोकसिद्धत्वात व्यापकाभावनिश्चये तज्ज्ञानं नानुमानान्तर्भावार्हमित्यत्राह—न चान्यस्यापीति । हेत्वभावनिश्चयः कार्यत्वमात्रं निवर्तयेत्, न ज्ञानमपीत्यकार्यज्ञानावसाय्यनुमानमित्यर्थः। ननु व्याप्तिधीबलप्रवृत्तमनुमानं नात्यन्तादृष्टं ज्ञाननित्यत्वं विषयीकुर्यादिति शङ्कां परिहरति—न च नित्या क्षेत्रज्ञधीरिति । दृष्टव्याप्तिकाधिष्ठेयज्ञानानुमानानुषङ्गायातं तन्नित्यत्वं स्वतोऽदृष्टमपि पक्षधर्मबलप्राप्तं रूपादिनित्यत्ववदाश्रयविशेषोपाधित्वसम्भवाद्विषयतार्हमेवेत्यर्थः। नन्वधिष्ठेयसम्बन्धापेक्षमधिष्ठातृत्वं दृष्टम; न च क्षेत्रज्ञवर्त्यदृष्टसम्बन्धोऽन्यस्यास्तीति न तत्सम्भव

अधिष्ठानं च तत्संयुक्तक्षेत्रज्ञादृष्टे संयुक्तसमवायात् । अजसंयोगेऽप्यसति तत्संयुक्ताणुसंयुक्तक्षेत्रज्ञादृष्टे संयुक्तसंयोगिसमवायात् । वृत्तिरप्यदृष्टस्य कार्याभिमुख्यम् । तच्च देशकालाद्यपेक्षमित्यधिष्ठातृयत्नापेक्षं विषविद्यत्नापेक्षविषप्रवृत्तिः । धीच्छायत्ननित्यत्वे च न तदुत्पत्त्युपयोगिदेहानुमा । न च तस्य प्रयोजनाभावादकर्तृतानुमा । न च तद्धीरनित्या धीत्वादित्यनुमा; तदनुमा-

---

इत्यत्राह—अधिष्ठानं च तत्संयुक्तेति । संयोगस्य तावद्देहे तत्संयुक्तवास्यादौ चाव्यवधानाद्व्यवधानाच्चाधिष्ठानप्रयोजकत्वं प्रसिद्धमेव, समवायस्यापि तत एव प्रसिद्धं समवायापेक्षयैव संयोगस्य तत्प्रयोजकत्वात् । ततः क्षेत्रज्ञवर्त्यदृष्टेऽप्यन्यस्य तथैवोपपत्तिरित्यर्थः । नन्वजसंयोगाभावात् क्षेत्रज्ञसंयोग एवान्यस्य न स्यादित्याशङ्क्य व्यवधानापेक्षया तर्ह्यस्त्वित्याह—अजसंयोगेऽप्यसतीति । नन्वदृष्टेऽधिष्ठात्रधीना वृत्तिर्वास्यादेः स्वकार्यानुगुणक्रिया तदुत्थसंयोगादिवन्न काचिन्निरूप्यत इत्यधिष्ठात्रपेक्षा न स्यादित्याशङ्क्य न दुर्निरूपा वृत्तिरित्याह—वृत्तिरप्यदृष्टस्येति । चिरकालानुवर्तिनोऽप्यदृष्टस्य कदाचित्कार्यकरत्वमागन्तुकावस्थापेक्षमिति सैव वृत्तिरुक्तेत्यर्थः । ननु वास्यादिवृत्तिविशिष्टवृत्तेरेवाधिष्ठातृप्रयुक्तत्वं दृष्टम्, न कार्योन्नेयादृष्टवृत्तेरिति कथं तदनुमानमित्यत्राह—तच्च देशकालाद्यपेक्षमित्येति । यद्यदृष्टं स्वकार्यारम्भे कर्मेव विभागाद्यारम्भे सहायापेक्षं न स्यात्, तदा स्यादप्यधिष्ठात्रनपेक्षम्; तत्तु देशकालादिबहुतरसहायापेक्षमित्यविवादमेवेत्यधिष्ठात्रपेक्षमप्यचेतनत्वाद्युक्तम् । न च वास्यादेः स्वमात्राद्यवसायि विशेषप्रयुक्तमधिष्ठात्रपेक्षत्वम्, तद्विलक्षणविषयवृत्तेरपि विशिष्टपुरुषध्यानादियत्नापेक्षत्वप्रसिद्धेः सर्वानुगतचेतनत्वनिश्चयादित्यर्थः । ननु मुक्तात्मनोऽचेतनप्रेरकत्वाभावात् देहित्वमप्यधिष्ठातृत्वप्रयोजकमिति देहोऽप्यनुमेयः स्यात्; स्वप्रयोजनाभावे च तद्यत्नानुपपत्तिः; धीत्वस्य च विनाशित्वव्याप्तेः नाशानुमानं च स्यादिति शङ्कां परिहरति—धीच्छायत्ननित्यत्व इति । देहस्तावज्ज्ञानाद्युत्पत्तिव्यवधानेनाधिष्ठातृतोपयोगी; न साक्षाद्देहाधिष्ठाने, देहान्तराभावादिति तन्नित्यत्वे तदपेक्षा नास्ति; देहाभावादेव देहित्वप्रयुक्तप्रयोजनापेक्षापि नास्ति; यत्नविषयसिद्धिप्रयोजनं त्वस्त्येव । धीत्वादनित्यत्वानुमानं धीसाधकानुमानप्राप्तनित्यत्वबाधितम् । तदनपेक्षत्वे त्वाश्रयासिद्धि-

पूर्वकत्वे तद्बाधितत्वादतत्पूर्वकत्वे चाश्रयासिद्धेः। प्रसङ्गापादनमपि नोक्तविधाद्दयाधिकम्, तत्कर्तृकत्वतद्धीनित्यत्वानुमयोश्च विशेषविषयत्वात्प्रयोजनाभावात् धीत्वादकर्तृत्वबुद्ध्यनित्यत्वानुमयोश्च सामान्यविषयत्वात् बाधः। एवं स्थितेऽणुद्वयसंयोगहेत्वदृष्टाधिष्ठातरि द्व्यणुकाधीनोत्पत्तिस्थूलकार्यजाते तदधिष्ठानाधीनतासिद्धिः। अतो भूधरादेरपि सावयवत्वात्कार्यस्य तदधिष्ठानाधीनतासिद्धिः। न च सावयवत्वमप्रयोजकं कार्यत्वस्य; प्रागभाववत्त्वप्रयुक्तं हि तत्क्रियादिष्वपि कार्यत्वदर्शनादिति; यतः कार्यत्वं नामान्तरेण प्रागभाववत्त्वम्; तदन्यत्वे तु सावयवत्वेन प्रागभाववत्त्वं प्रसाध्य कार्यत्वं प्रसाध्यमित्यदोषः। महत्त्वे सति स्पन्दवत्त्वात् कार्यतेति तु नोक्तम्, द्व्यणुककार्यतार्थं सावयवत्वस्यावश्यवाच्यत्वात् सविशेषणस्य च हेतोर्ज-

---

दुष्टम्। इदं च पूर्वसाधारणं द्रष्टव्यम्। नन्वनित्यत्वादिसाधकानुमानप्रयोगाश्रितमिदमाश्रयासिद्ध्यादिदूषणं त्वदुक्ताधिष्ठात्रनु[मा]नाश्रितप्रसङ्गमात्रं मयापाद्यत इति न तद्दूषणमित्यत्राह—प्रसङ्गापादनमपीति। तदापादनस्यापि तर्कप्रयोगरूपत्वादाश्रयसिद्ध्यपेक्षत्वे बाधितत्वमाश्रयासिद्धिर्वा दूषणमपरिहार्यमेवेत्यर्थः। पक्षधर्मतापादितवैलक्षण्यस्य च विशेषनिष्ठत्वात्सामान्यविषयबाधकत्वं व्यक्तमित्याह—तत्कर्तृत्वतद्धीनित्यत्वानुमयोस्त्विति। ननु द्व्यणुककर्तृत्वमात्रमेतदनुमानसिद्धं स्यात्, सर्वकर्तृत्वसिद्धान्तसिद्धिः कथमित्याशङ्क्य तत्फलतया तत्सिद्धिरित्याह—एवं स्थितेऽणुद्वयसंयोगेति। सर्वकार्योत्पत्त्याक्षेपकादृष्टद्वारं परमाणुद्व्यणुकाश्रितत्तत्कारणाधिष्ठानद्वारं च तत्तत्कार्यकरत्वं भवेत्; एवं क्षेत्रज्ञसाध्येऽपि कार्ये तदगोचरादृष्टादिद्वारेण तस्य कर्तृत्वे स्थिते अत्यन्तागोचरभूधरादिकार्ये व्यक्तमेवेति स्यात्सर्वकर्तृतेत्यर्थः। ननु सावयवत्वात्कार्यस्येत्ययुक्तम्, अप्रयोजकत्वाद्धेतोरित्याशङ्कामपाकरोति—न च सावयवत्वमिति। नन्वित्थमप्रयोजकत्वपरिहारसम्भवः 'महत्त्वे सति स्पन्दवत्त्वात्' इत्यस्यापीति किमिति तत्त्यागेनैतदेवोच्यत इत्यत्राह—महत्त्वे सतीति। सर्वकर्तृत्वसाधने तस्यैवाभ्यर्हितत्वादित्यर्थः। ननु कर्तृविशेषे साध्ये विमतकार्यपक्षीकारेण तदनुमानमेवाभ्यर्हितम्, कुतोऽधिष्ठातृत्वव्यवहितमुच्यत इति

घन्यत्वात् । विवादाध्यासिता धीमत्कर्तृकाः, कार्यत्वादचेतनापादानत्वाद्वा इति तु नोक्तम्, सिद्धसाधनत्वात् । तदाहुः—

"कस्यचिद्धेतुमात्रत्वं यद्यधिष्ठातृतेष्यते ।
कर्मभिः सर्वजीवानां तत्सिद्धेस्सिद्धसाधनम् ॥" इति ।

अथोपादानोपकरणसंप्रदानप्रयोजनज्ञधीमत्कर्तृका इत्युच्यते, तन्न; सर्वोत्पत्तिमतामदृष्टमुपकरणम्, न च तज्ज्ञः कुलालादिरपीति व्याप्त्यसिद्धिः । दृष्टान्तश्च साध्यविकलः बालोन्मत्तादिश्च प्रयोजनाद्यज्ञः कर्तेत्युक्तदोषद्वयम् । अचेतनं तत्स्वरूपशक्तिकार्यविच्चेतनाधिष्ठितं कार्यकरमित्येतत् कुलाल-

---

शङ्कां तदनन्वितहेतूक्त्या परिहरति—विवादाध्यासिता इति । धीमत्कर्तृकत्वं हि अनेककारणककार्याणामशेषकारणविषयबुद्ध्यपेक्षमल्पविषयापेक्षं च स्यात् व्यवहितकारणविषयबुद्ध्यपेक्षमव्यवहितविषयापेक्षं च; तत्र व्यवहितकारणविषयधीजन्यत्वं कार्याणां प्रसिद्धकर्तृकरणान्न नियतम्, कृष्यादिजेषु व्यभिचारात् । तेन निमित्तत्वमात्रं धियः सपक्षे प्रसिद्धम् । तच्चादृष्टजकार्ये पक्षेऽप्यदृष्टहेतुकर्मविषयधीजन्यतया सिद्धमेव; तत्कर्मणश्च तत्कार्यहेतुत्वं तत्तत्कामस्य तत्तद्विधेः श्रुतिप्रसिद्धमेव । तेनाल्पविषयबुद्ध्यपेक्षया धीमत्कर्तृत्वं सिद्धमेवेति साध्यत्वानुपपत्तिः । सर्वकारणविषयधीमत्कर्तृकत्वं सपक्षे क्वचिदपि न दृष्टमिति नानुमानार्हम् । प्रयोजनादिधीश्च बालादौ व्यभिचारिणीति परोक्तमपि सकर्तृकमित्यनुमानमनादृतमित्यर्थः । अधिष्ठात्रनुमाने तूक्तदोषाप्रसक्तेः तदेवोक्तमित्याह—अचेतनं तत्स्वरूपेति । ननु बालोन्मत्तादिरत्र प्रयोजनाद्यज्ञः कर्तेत्यनेन कार्यतच्छक्त्यज्ञस्यापि कर्तृतोक्तेः कर्तृत्वफलकाधिष्ठातृत्वं तदज्ञस्याभ्युपेतमिति कथं तद्विपरीतं तद्विदधिष्ठितं कार्यकरमित्येतद्बालादावपि दृष्टमित्युच्यते; दृष्टं चाज्ञातशक्तिकबालाद्यधिष्ठितशस्त्रादिकृतच्छेदनादिकार्यमिति अधिष्ठात्रनुमानेऽपि तुल्यो व्यभिचारदोषः । उच्यते – न तावत्प्रयोजनाद्यज्ञ इत्यनेन कार्यशक्त्यज्ञानमपि कर्तुरङ्गीक्रियते, तदज्ञाने कर्तृत्वासिद्धेः; बालाद्यधिष्ठितशस्त्रादिजच्छेदनं तु न तत्कर्तृकम्; तद्योजनमात्रं तत्कर्तृकम्; तच्च ज्ञानकृतम्; छेदनं तु तच्छक्तिमात्रजं तत्पक्षनिवेशीति न व्यभिचारावकाशः । नन्वेवमज्ञानकृतप्रतिषिद्धप्रायश्चित्तश्रुतिरनवकाशा स्यात् । न, तच्छक्तिज्ञस्यैव प्रतिषिद्ध-

बालादौ दृष्टम्, न चेह सिद्धसाधनतेति ।

श्रुत्यादिभिरीश्वरसाधननिरासः

न च श्रुतितः स्मृतितश्च तत्सिद्धिरुक्ता । श्रुतिः "द्यावापृथिवी जनयन् देव एकः" इति । स्मृतिः "ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा" इति । श्रुतिः "पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वम्" इति । स्मृतिस्तावन्मूलापेक्षा । श्रुतिरपि कार्यानुगुणे मानान्तराविरुद्धे स्वर्गादौ युक्ता, न तु धीमत्कर्तृकत्वे भूम्यादेरपूर्वकार्याननुगुणे मानान्तरविरुद्धे । धीहेत्वभावेन धीमत्त्वाभावान्मानान्तरविरुद्धता; न तु स्वर्गे तथा; स्वर्गशब्दस्य प्रकृष्टप्रीतिहेतौ प्रयोगात् प्रकृष्टप्रीत्यर्थताभानम्; प्रकर्षश्चापेक्षिकोऽनवस्थित इति नियोज्यविशेषणं स्वर्गः किंरूप इत्यपेक्षायां वाक्यशेषस्थप्रकृष्टरूप इत्येवं कार्यानुगुणता । तदनुगुणता च निशिष्टदेहदेशयोरिति तत्र चापूर्वस्य हेतुत्वान्न हेत्वभावान्मानान्तरविरोधः । किं च कार्ये स्वर्गदेह-

---

क्रियानिष्पत्त्यनवमर्शनिमित्ततत्परिहारयत्नाकरणकृतदोषपरिहारार्था तच्छ्रुतिरिति न कश्चिद्विरोधः । ननु श्रुतिस्मृती किमिति तत्प्रमाणतया नोपन्यस्ते इत्यत्राह—न च श्रुतितः स्मृतितश्चेति । स्मृतिस्तावदनपेक्षत्वाभावान्न मानतार्हा; श्रुतिः स्वर्गादौ सिद्धरूपे मानतयाभ्युपेतापि कार्यैकविषयोक्ता तत्प्रमित्यन्तर्गतस्वर्गादावेव मानं स्यात्, न तदननुगुणे मानान्तरविरुद्धे च कर्तरीत्यर्थः । मानान्तरविरोधमुपपादयति—धीहेत्वभावेनेति । "पश्यत्यचक्षुः स शृणोत्यकर्णः" इति धीहेत्वभाववचनविरुद्धा "पश्यति" इत्यादिश्रुतिः स्तुतिपरैव नेयेत्यर्थः । नन्वेवं स्वर्गश्रुतिरपि लौकिकसुखविलक्षणत्वोक्तिपूर्विकैवेति स्तुतिमात्रार्थैव स्यादिति शङ्कां परिहरति—न तु स्वर्गे तथेति । लोकप्रयोगावगतार्थस्य प्रकर्षोपाधिकत्वात् प्रकर्षस्य चानियतरूपतया विशेषापेक्षत्वात् वाक्यशेषोपस्थापितविशेषशब्दप्रवृत्तिमनाश्रित्य विधिपर्यवसानायोगात्तदाश्रयणमेव तत्र स्यात्; लौकिकविलक्षणता च तद्योग्यदेहदेशकल्पनया विध्यनुमतेत्येवं वाक्यशेषस्य विध्यानुगुण्यं हेत्वभावनिमित्तश्च मानान्तरविरोधोऽपूर्वस्य तद्धेतुत्वावगमात् परिहृत इत्यर्थः । मानान्तरविषयातिवर्तितयैव श्रुत्या स्वर्गाद्यवगतिर्न कर्त्रवगतिरिवेत्येवमप्यविरोध इत्याह—किं च कार्ये स्वर्गदेहदेशादाविति । ननु

---

१. भ्रम्यादेः. क. २. हेतुत्वानहेतुत्वा. क.

देशादौ शब्दगम्ये न मानान्तरविरोधः। सिद्धे तु बुद्धिमद्वृन्दे मानान्तरविषये युक्तो मानान्तरविरोधः। देवता तु कार्यानुगुणापि शाब्दस्मृतिनिश्रिता सूक्तहविर्भागित्वरूपा न वाक्यशेषावसेयविग्रहादिमती। न च देहदेशविशेषार्हा; देशान्तरस्था हि आराधनाद्यनर्हा स्यात्। यथाश्रुतवाक्यशेषाच्च "गृभ्णाते दक्षिणमिन्द्र हस्तम्" इति मानान्तरविरोधः अननुगुणता च। न चोत्पाद्या देवतेत्युक्तम्। अतोऽनुमानादेव चेतनाधिष्ठातृसिद्धिः।

### ईश्वरानुमानखण्डनम्

अत्र समाधिः—उक्तं हि, यो यत्स्वरूपकार्यशक्तिज्ञः, स तदधिष्ठाता, नान्य इति। शक्यज्ञानमेवाचेतनं चेतनाधिष्ठितमिति व्याप्तिः। अशक्य-

---

विध्यनुप्रवेशतदभावनिमित्ते श्रुतेः सिद्धार्थपरत्वातत्परत्वविभागे वाक्यशेषार्पितविग्रहादिमती देवता स्यादित्यत्राह—देवता तु कार्यानुगुणापीति। फलसाधनेऽपूर्वकार्ये श्रुतिप्रमिते कारकत्वमात्रेण देवतान्वये देवतापदार्थे च शाब्दस्मृतिप्रसिद्धेऽपेक्षाभावाद्वाक्यशेषोपस्थापितोऽपि विग्रहादिर्न स्तुत्यधिकोपयोगितया विधिग्रहणार्ह इत्यर्थः। विरोधितया च न तद्ग्रह इत्याह—न च देहदेशविशेषेति। मानान्तरविरोधश्च क्वचिदित्याह—यथाश्रुतेति। ननु वाक्यशेषश्रुतिबलात् स्वर्गादाविवास्मददृश्यत्वाद्यवान्तरवैलक्षण्याभ्युपगमेन मानान्तरविरोधः परिहार्य इति शङ्काहानार्थमाह—अननुगुणता चेति। वैलक्षण्यकल्पना ह्यावश्यकापेक्षापूरणेन विध्यनुगुणतयैवाकल्पनयापि स्तुतिपरत्वसिद्धौ न स्यादिति न सेहाश्रयणीया; उत्पाद्यतया च तत्र तत्सिद्धिः तदभावाच्चात्र न विरोध इत्यर्थः। तस्मादधिष्ठात्रनुमानोक्तिरित्युपसंहरति—अतोऽनुमानादेवेति।

एवं परसंशोधितप्रकारं तत्पक्षं निर्दिश्य तद्दूषणमपि परोक्तप्रकारोपदर्शितमेवेति सिद्धान्तयति— अत्र समाधिरिति। त्वयैव हि ज्ञाताधिष्ठेयस्वरूपशक्तिकार्यश्चाधिष्ठातेति वदता अधिष्ठातुः क्षेत्रज्ञव्यतिरेकाङ्गीकारेणैव व्याप्तेस्तत्समर्थोपाधियोगः; तेन चादृष्टाद्यचेतनस्य अधिष्ठात्रनपेक्षत्वमर्थोक्तं स्यात्। यदा ह्यधिष्ठातुरधिष्ठेयापरोक्षज्ञानमधिष्ठानोपाधिमाश्रित्य तद्धीनो निवर्त्यते, तदाधिष्ठय-

ज्ञानं चादृष्टम्, क्षेत्रज्ञवदन्यस्यापि तज्ज्ञानहेत्वभावात्। एवं च तज्ज्ञान-हेत्वभावेनाचेतनविशेषे चेतनाधिष्ठानं वार्यते। अचेतनसामान्ये चेतना-धिष्ठानं विशेषानुमाबाधितम्। न चान्तर्भावितज्ञानेऽनु[1]मिते तज्ज्ञानहेत्व-भाव उक्तः, येन तत्पूर्वकत्वे तदनुमाबाध:, अतत्पूर्वकत्वे चाश्रयासिद्धिरिति वाच्यम्, अधिष्ठेयाश्रयचेतनाधिष्ठानस्य वारणात्। पक्षधर्मतापि हेत्व-

---

स्यापि तद्योग्यत्वं तद्विषयत्वोपाधितया नियतदृष्टं तदुपजीव्यधिष्ठेयत्वेऽप्युपाधि-तया निवारयितुं न शक्यत इत्यतदर्हस्याधिष्ठात्रधीनं कार्यकरत्वमिति मानहीन-मेतत्। न च द्रष्टृविशेषावधिकमदृष्टादेरपरोक्षज्ञानानर्हत्वम्, कदाचिदपि तददर्श-नेन स्वाभाविकत्वावधारणादिति नाधिष्ठात्रनुमेत्यर्थः। यस्मादेवं शक्यज्ञानत्वो-पाधिकमचेतनस्य ज्ञानाद्यधिष्ठितत्वमवधारितम्, तस्माद्यत्पूर्वपक्षवादिनाधिष्ठा-त्रनुमानस्य विशेषविषयत्वेन सामान्यविषयात्तन्निषेधानुमानात् बलवत्त्वमुक्तम्, तस्य वैपरीत्यापत्त्या विशेषानुमाबाधितमधिष्ठात्रनुमानमित्यपि शक्यं वक्तुमिति। दूषणान्तरं चोपाध्युद्भावनेन फलितमित्याह—एवं च तज्ज्ञानहेत्वभावेनेति। यत्पुनर्नि-षेधानुमानस्य निषेध्यानुमानपूर्वकत्वात् तत्पूर्वकत्वविकल्पेन दूषणान्तरमापादितम्, तच्चानवकाशमिति दर्शयति—न चान्तर्भावितज्ञानेऽनुमित इति। यद्यनुमेयाधिष्ठात्रा-श्रयं तन्निषेधानुमानं तदन्तर्भूतज्ञानाश्रयं वा तदोक्तदूषणं स्यात्; तदधिष्ठेया-दृष्टाश्रयं तूच्यते-तत्स्वोत्पत्तिकर्त्रपरोक्षाधिष्ठितं न कार्यकरम्, तदिन्द्रियामेयत्वात्, यद्यदिन्द्रियामेयम्, न तत्तदपरोक्षाधिष्ठितम् यथान्धादिना वास्यादीति। तस्मात्त-द्बाधितमधिष्ठात्रनुमानमित्यर्थः। यद्वा विमतं स्वग्राहकेन्द्रियहीनचेतनाधिष्ठानापेक्षं न कार्यकरम्, अतद्ग्राह्यत्वादिति प्रयोगः। नन्वचेतनत्वसामान्याद्वास्यादिवत्त्यवधा-रिताधिष्ठितत्वानुमानानुषङ्गसिद्धज्ञानस्य पक्षधर्मताबलान्नित्यत्वापत्तेर्नेन्द्रिया-भावो बाधक इति शङ्कामपाकरोति —पक्षधर्मतापीति। सति हि ज्ञानानुमाने तस्य नित्यता; विशेषानुमाननिवारितस्य त्वनुमानान्तर्भाव एव नास्तीति तन्नित्यतान्त-र्भाव एव नास्तीति तन्नित्यतान्तर्भावो दूरनिरस्त एवेत्यर्थः। परोक्तं दूषणान्तरं

---

१. अनुमिते तेन ज्ञान. क.

भावात् विशेषतो वारितं ज्ञानं सामान्यतोऽन्तर्भावयितुमर्हति । यत्तु परेण ज्ञाननित्यतामास्थाय चिकीर्षायत्नोत्पत्तये मुक्तात्ममनोयोगमुपेत्य तन्मनाधिष्ठानं चिकीर्षायत्नप्रवाहानादितयोपपाद्य दूषणमुक्तम्, सृष्टिं संहृत्य पुनः सिसृक्षोः प्रवाहविच्छेदे कुत इच्छाप्रयत्नयोर्जन्मेति । अथ ज्ञानेच्छादि नित्यम्, तत्तद्भावोपधानात्तत्तद्विषयं रविप्रकाशवत्, तन्न, अन्योन्याश्रयात् । उपधानेऽधिष्ठानमधिष्ठाने चोपधानम् । अतो नेदृशो विशेषः पक्षधर्मतया ।

---

स्वाभ्युपगमशङ्काहानार्थमुपन्यस्य दूषयति—यत्तु परेणेति । कर्तुर्हि कार्यानुकूलागन्तुकक्रियापेक्षं कर्तृत्वम् । तत्र ज्ञानस्यानागन्तुकत्वेऽपि इच्छायत्नयोः कार्यतयागन्तुकत्वात् तदुपपत्तिं साधयितुं मुक्तात्ममनोयोगं तदुत्पत्त्यसमवायिकारणमाश्रित्य तन्मनसश्च अधिष्ठातृयत्नाधीनं तदुत्पादकत्वमपीति तदर्थमपीच्छायत्नान्तरापेक्षायां तत्प्रवाहानादितया तदुपपत्तिमुक्त्वा कर्तृत्वं संशोध्य पुनस्तद्दूषणमुक्तम् । स्थितिकाल एव हि निरन्तरानन्तकार्योत्पत्तेस्तत्प्रवाहानुवृत्तिर्मानोपेता । प्रलये तदसम्भवात् प्रवाहविच्छेदे कर्तृत्वासिद्धिरित्यर्थः । इच्छाद्यपि नित्यमेवेति न कारणाभावदोष इति मतान्तरमाशङ्कते—अथ ज्ञानेच्छादीति । नन्वेवं सर्वकार्योत्पत्तिस्थितिलयानां तद्विषयत्वाविशेषात् सकृदेव सर्वोत्पत्तिस्थितिलयापत्तिः सदा चेत्याशङ्क्य क्रमेण तद्विषयत्वाङ्गीकारान्न तदापत्तिरित्याह—तत्तद्भावोपधानादिति । कार्योत्पत्तिसामग्र्युपधानमात्रेण तावन्नित्येच्छायत्नयोः तच्चिकीर्षात्वं तत्कृतित्वं च स्यात्, यथोक्तप्रवाहविच्छेदविषये तदयोगात् । न चैवमाद्यस्य कार्यस्यागन्तुकशून्यतापत्त्या सृष्ट्यभावापत्तेरवश्यं केनचिदागन्तुना भाव्यमिति वाच्यम्, तत्पक्षे कदाचिदपि कार्यसन्ततिविच्छेदकप्रलयस्यानङ्गीकारेण कालावच्छेदकतत्सन्तानसम्भवादाद्यासिद्धेः स्मृतभाविकार्योद्देशप्रवृत्त्या चेच्छायत्नयोः तद्विषयता लोकसिद्धेति । नित्यत्वपक्षे कार्योत्पत्तिपूर्वकोपधाने सत्येव तदुद्देशेन तत्कारणमधिष्ठाय प्रवर्तयेत् तत्पूर्विका चोत्पत्तिरित्यन्योन्याश्रयतापत्त्या सोऽपि पक्षोऽनुपपन्न एवेति दूषयति—तन्न अन्योन्याश्रयादिति । एवं न पक्षधर्मतयापि सामान्यतो दृष्टम् लोकदृष्टविपरितमनुपपन्नं विशेषं साधयितुमलमिति तदुक्तदूषणमुपसंहरति—अतो नेदृशो विशेष इति । नन्वसिद्धादिपरिगणितदूषणेष

नेदं साधनदूषणम्, किन्तु वादिन इत्युपसंहृतम्, तद्वैदग्ध्यमात्रम्, न हि साधनमदुष्टं वादी च दुष्ट इति। अथानुमिते विशेषे तदनुमाबाधः, अननुमिते आश्रयासिद्धिप्रसङ्गापादनमपि एतद्विकल्पासहमिति न साधनदोषः, तर्हि न वादिनोऽपीति परसमाधानं हेयमेव। तथाधिष्ठानानर्हमदृष्टम्, करादिसंयोगो हि वास्याद्यधिष्ठानम्, न चादृष्टे गुणे संयोगः। न च समवायोऽप्यन्यगुणे अयुक्ते [1]युक्ते चासंयोगे संयुक्तसंयोगिसमवायो वाच्यः। न चेयमधिष्ठानविधा दृष्टा, उत्पत्तावेवादृष्टस्येयं विधेति तयैव प्रवृत्तिः स्यात्। तथा प्रवृत्त्यनर्हमदृष्टम्, क्रिया हि वास्यादिप्रवृत्तिः, न च गुणे क्रिया,

---

नेदं दूषणमन्तर्भवतीति कथमस्य दूषणत्वमित्याशङ्क्य तल्लक्षणलक्ष्यत्वाभावात् तदन्तर्भावाभावेऽपि न दुष्टत्वं निवर्तते, साध्यसाधनभूतानुमानदूषणत्वासम्भवेऽपि वादिनं प्रति दूषणत्वानिवृत्तेस्तदनुमितस्य कर्तृत्वप्रकारावधारणाशक्तेरिति परोक्तं दूषणमुपसंहरति—नेदं साधनदूषणमिति। तदनुपपत्तिमुद्भावयति—तद्वैदग्ध्यमात्रमिति। शिल्पिनो दारुखण्डादिषु स्वाभिप्रेतपुरुषविशेषादिधीसंपादनकौशलवत् वस्त्वनपेक्षतद्धीसंपादनं कौशलमात्रं तदित्यर्थः। तदेव दर्शयति—न हि साधनमिति। तदभिप्रेतं साधनस्यादुष्टत्वहेतुमाशङ्कते—अथानुमित इति। दूषयति—तर्हि न वादिनोऽपीति। वादसमये हि साधनदूषणनिरासाधिककृत्याभावाददुष्टे साधने तदनुमेयकर्तृत्वस्य सामान्येन तदुचितप्रकारस्याक्षेपसिद्धत्वात् तद्विशेषो वादिनो न वाच्य इति तद्दोषाभावात् साधनदोष एवोद्भाव्य इति तन्मतं नाङ्गीकारार्हमित्यर्थः। दूषणान्तरं प्रकरणोक्तं समर्थयते तथाधिष्ठानानर्हमिति। चेतनाधिष्ठितमिति उक्तसाध्यस्वरूपं क्वचित्कार्यकरत्वोपाधित्वेनादृष्टम्, न व्यापकतयानुमेयम्, व्याप्त्यसिद्धेरागन्तुकरूपभावात् कार्यकरत्वानुपयोगितया चेत्यर्थः। चेतनाधिष्ठानलभ्यावस्थान्तरात्मकवृत्त्यनिरूपणाच्चानुमानासिद्धिरित्याह—तथा वृत्त्यनर्हमिति। नन्वनुमेयक्रियावादिना द्रव्यवृत्तिनियमानवगमात् कथं न क्रिया गुण इति नियन्तुं शक्यत इति शङ्कां परिहरति—विशेष्ये

---

१. अयुक्ते चासं. क.

विशेष्ये तु द्रव्ये सा युक्ता। न चोत्पत्तिरेव प्रवृत्तिर्दृष्टा। न चाभिमुख्येऽत्र-स्थाभेदेऽधिष्ठानापेक्षा। देशकालापेक्षा तु दृष्टा। न चेच्छामात्रमधिष्ठानम्, अणूनामदृष्टस्य वा तथाविधाधिष्ठानादर्शनात्। स्वदेहस्यापि नेच्छामात्रमधिष्ठानम्, किन्तु यत्नः, स्वादृष्टोपगृहीते देहे, नान्यत्र। अधिष्ठानं च देहान्तर्भावात्

---

तु द्रव्ये सेति। सा हि देशान्तरसंयोगाद्यनुमेया, तद्वद्द्रव्यविशेषणतयैवानुमेयेति तद्वर्तितयैव तत्स्वरूपसिद्धिरिति त तदतिक्रमार्हा सेत्यर्थः। ततः परिशेषात् कार्योत्पत्तिरेव वृत्तिरुक्ता स्यात्, न तु सा क्वचिद्वृत्तितयावधारितेत्याह—न चोत्पत्तिरेवेति। ननु कार्याभिमुख्यमदृष्टस्य वृत्तिरस्त्विति शङ्कां परिहरति—न चाभिमुख्येऽवस्थाभेद इति। अन्वयव्यतिरेकनिर्धारितसहकारियोगो ह्यभिमुख्यम्; तत्रादृष्टस्याधिष्ठातृव्यापारापेक्षा नास्ति, सहकारिसाधकमात्राधीनत्वात्तस्येत्यर्थः। ननु देशकालापेक्षातुल्या तदपेक्षेत्याह—देशकालापेक्षा त्विति। जलगतानामेव केषांचिदङ्कुरादिजनकत्वम्, स्थलगतानामेव केषाञ्चित्-इत्यन्वयव्यतिरेकसिद्धा देशकालापेक्षाप्यृतुभेदेन पुष्पाद्युत्पत्तिदर्शनसिद्धा; वास्यादिवृत्तीनामेव तु चेतनाधिष्ठानमात्रायत्तकार्याभिमुख्यं दृष्टमिति कालाद्यपेक्षाणां तन्मात्रकृतमाभिमुख्यम, चेतनाधिष्ठानापेक्षिणां ( न ) तन्मात्रमिति नादृष्टे देशकालापेक्षावच्चेतनापेक्षेति शक्यं वक्तुमित्यर्थः। यत्पुनस्तद्विषयेच्छामात्रमदृष्टादिवत्यधिष्ठानं चेतनस्येति कैश्चिदभ्युपगतम्, तच्चायुक्तमित्याह—न चेच्छामात्रमिति। न तन्मात्रमचेतनस्य कार्यकरतोपाधितया क्वचिद्दृष्टमिति तन्नोपेयमित्यर्थः। यत्तु स्वदेहे दृष्टमित्युक्तं केनचित्, तच्चायुक्तमित्याह—स्वदेहस्यापीति। नन्विच्छामात्रमिति न यत्ननिवृत्त्यर्थं मात्रग्रहणम्, तदधिकक्रियानिवृत्त्यर्थमेवेति सयत्नमिच्छामात्रमस्त्वधिष्ठानमित्यत्राह —स्वादृष्टोपगृहीत इति। यत्नमात्राधीनमधिष्ठातृत्वं स्वदेहनियतं दृष्टं नान्यत्र; देहत्वं च स्वादृष्टापादिताशेषभोगोपाधिभावनस्यैवेति नाधिष्ठात्रपेक्षं युक्तमिति नेह यत्नमात्रं तदर्हमित्यर्थः। स्वरूपादिज्ञचेतनाधिष्ठितत्ववदेव देहिचेतनाधिष्ठितत्वं चाचेतनस्य दृष्टमिति ज्ञानाहाने देहहानं चाशक्यमुपयोगाविशेषात्। देहाधिष्ठानेऽपि हि देहदेहित्वसम्बन्धस्तदुपयोग्येवेति ज्ञानबाध इव देहबाधेऽप्यनुमानावतार इत्याह—अधिष्ठानं चेति।

व्याप्तमिति देहहानं दुष्करं युक्तं नरहानम्, वल्मीकेऽन्याधिष्ठानदर्शनात्। अतो दृष्टविपरीतहानार्थं चेतनाधिष्ठानताहानमेव। एवं चेश्वरे परोक्तमेवानुमानं निरस्तम्। नेश्वरोऽपि निरस्तः।.*

---

न च वास्यादिदृष्टनरहानवद्देहहानमपि स्यादिति वाच्यम्; नरहानेनाप्यधिष्ठानं दृष्टम्, न देहहानेनेति वैषम्यादित्याह – युक्तं नरहानमिति। तस्माद्व्याप्यापकत्व-दर्शनसमयदृष्टस्वव्यापकहीनं नाधिष्ठातृत्वमनुमानार्हमित्युपसंहरति—अतो दृष्टविपरीतताहानार्थमिति। न चैवं श्रुतिस्मृतिनिषिद्धेश्वरनिरासापत्त्या साधु-बहिष्कार्यत्वापत्तिः; श्रुतेश्वरविषयत्वात्तस्येत्याह—एवं चेश्वर इति।

इति सम्बन्धाक्षेपपरिहारः॥

---

*जय, जनकरहित, वरयुवतिसहित, जय, तपसि निरत, स्वभुज हित ( हरिण ), जय, विषमनयन, गलनिहितगरल, जय, विजितमदन, कृतसततनयन, जय वृषभवहन, धृतरजनि-जनक, जय, भुजग वलय, कलिकलुषशमन, जय, कलितभुवन ( भगवन् ) तव नमस्ते नमस्ते॥ क.

# अथ चित्राक्षेपपरिहारौ ॥

चित्राक्षेपः

"अथ यदुक्तमनिमित्तं शब्दः" इति भाष्यम् । तस्यार्थः—कृते सम्बन्धे बलात् वेदेऽपि कृततया सापेक्षतापत्तिरौत्पत्तिकतया प्रतिकृता । लोके इष्टसाधनतानुरक्ता कार्यता मानान्तरत इति वेदेऽपि तथा लिङर्थ इत्येतच्चोदना चोद्यमनुभाषितम् । [1]कर्मकाले फलाभावादिति भाष्यार्थः । यद्यपि कर्मानन्तरं न फलम्, तथाप्यपूर्वात् फलं वाच्यम् । मानान्तरगम्यं चेत् कार्यम्, तर्हि नापूर्वम्; अतः फले विपर्ययात्स्फुटं वेदाप्रामाण्यम् ॥

चित्राक्षेपपरिहारः

राद्धान्तस्तु—यद्यपीष्टसाधनतानुरक्ता कार्यता, कार्यमात्रं तु लिङर्थः, तन्मात्रस्यैव प्रवृत्तिहेतुत्वेन व्युत्पत्तेः । इष्टसाधनतानुरागोऽपि कार्यधीहेतुः । तत्स्थान एव लिङिति नेष्टसाधनतापेक्षा शब्दात् कार्यधीः । अतः कामिनियोज्यान्वयादपूर्वं कार्यं लिङर्थः फलसा[2]धनमिति न विपर्ययात् स्फुटमप्रामाण्यम् । न च सापेक्षतापत्तिः । भाष्यं शब्दातिरेकि मानपञ्चकमाह । व्यवहार-

"अथ यदुक्तमनिमित्तं शब्दः" इत्यनुभाषणमयुक्तम् औत्पत्तिकसूत्रव्याख्ययैव परिहृतत्वात् इति शङ्कां परिहरति – तस्यार्थ इति । मानान्तरमेयार्थत्वं हेतुद्वयप्राप्तं निमित्तसूत्रभागेन पूर्वपक्षितम्; तत्रेष्टसाधनत्वोपाहितकार्यार्थतया लोकदृष्टप्रयोगप्राप्तया प्राप्तं सापेक्षत्वं न परिहृतमिति तत्परिहारार्थं तदित्यर्थः । ननु नैतदनुगुणो भाष्योक्तो बाधितत्वात्मको हेतुरित्याशङ्क्य तदनुगुणतयैव तदर्थमाह कर्मकाले फलादर्शनादिति । यथोक्तसापेक्षत्वापनीतापूर्वार्थत्वापेक्षमानान्तरबाधितार्थतोक्त्यापि सापेक्षतैव स्पष्टीकृतेत्यर्थः ॥

सिद्धान्ताभिप्रायमाह—राद्धान्तस्त्विति । इष्टसाधनत्वाव्यभिचारेऽपि कार्यमात्रस्य लिङर्थत्वव्युत्पत्तेरन्यथासिद्धोपाधितशङ्कायाश्च निवृत्तेः नियोज्यपदसमभिव्याहारादपूर्वात्मककार्यार्थतापातान्न मानान्तरबाधः सापेक्षता चेत्यर्थः । यदि पञ्चैव प्रमाणानीति शब्दव्यतिरिक्तमानपञ्चकाभिधायिभाष्यस्याभिप्रायमाह— भाष्यं शब्दातिरेकीति । सर्वाणि तावन्मानानि स्वमेयतत्त्वोपदर्शनद्वारेण प्रवृत्तिनिवृ-

१. कर्मकर्मकाले. क. २. साधनं कृति न. क.

हेतुभेदोपाधेरभावव्यवहारहेतोरपि भेदाद्व्यवहारावसरे मानप्रक्रमे त्वभावः प्रमाणं न भवतीत्याह। तच्चोपपादितम्। आत्माक्षेपसमाधिस्तु वादान्तराधीनः।

---

त्यादिव्यवहारफलानि; तत्र फलं स्वोद्देश्यफलस्वभावानुसारेण स्वमेयानन्तर्गतार्थनिरूप्यतया विलक्षणावस्थतन्मेयमानविकल्परूपापेक्षोत्पत्त्यपि भवति यथा परिमाणगुरुत्वाद्यवच्छिन्नद्रव्योपादानमन्यापेक्षसमह्रस्वदीर्घतादिरूपापेक्षं समगुरुलघुत्वापेक्षं च। न हि तत्र स्वनियतपरिमाणगुरुत्वाधिकं तात्त्विकं रूपं परनिरूप्यमस्ति, तथापि तदुपदर्शकयत्नान्तरापेक्षं तदुपादानम्। एवं भावोपदर्शकमानपञ्चकमपि भावव्यवहारानुपयोग्युपाध्यन्तरापेक्षमभावव्यवहारकरमित्युपाधिभेदेन फलान्तरवन्मानान्तरतुल्यमिति मानान्तरप्रसिद्धिबीजोपदर्शनार्थं व्यवहारफलविचारकाले मानान्तरतयार्हेत्यर्थः। ननु मुख्यार्थत्वार्थमितरतुल्यभेदपरमेव युक्तमिति शङ्काहानार्थमाह—मानप्रक्रमे त्विति। लोकप्रसिद्धिनिमित्तलक्ष्यत्वविवक्षायां मानतया प्रसिद्धोऽपि मानाभाव एवेति नास्तिशब्दवाच्यप्रतियोगिग्रहणयोग्यमाननिवृत्तिमात्रस्य व्यवहारहेत्वभिमताभावस्वरूपतोक्त्या मानान्तरनिरासाभिप्रायस्य व्यक्तत्वान्न तद्युक्तमित्यर्थः। बाधितार्थतोक्त्यात्माक्षेपस्यैतदेकयत्नत्वेऽपि परिहारः पृथग्यत्नार्ह इत्याह—आत्माक्षेपसमाधिस्त्विति।

इति चित्राक्षेपपरिहारौ॥

---

# अथात्मवादस्थानकम्

## देहादिभिन्नात्मसिद्धान्तः

"एष यज्ञायुधी" इतिपदे देहादिभिन्न एवात्मनि गौणे स्तुत्या; एषपदार्थो हि स्पष्टसत्त्वः प्रत्यक्षः; आत्मापि देहादिभिन्नस्तद्विध एवात्र वादे साध्य इति गुणयोगः। तथा यज्ञायुधी देहः स्फुटसद्भावः; सोऽपि तद्विध इति गौणता। धीरेण देहार्थे पदे सम्बन्धादात्मनि लक्षणे उक्ते, "मञ्चाः क्रोशन्तीतिवत्" इति गुरूक्तेः। तन्न; गुरोरभेदोपचारवाचा गौण्येव वृत्तिर्मता; परशब्दतासाम्यात् मञ्चाः क्रोशन्तीतिवत् इत्युक्तम्। सति हि गौणे ततो जघन्या लक्षणा न युक्ता। गौणे च स्तुतेः स्पष्टसत्त्वादाञ्जस्यम्। पूर्वपक्षी देहादिभिन्नानुपलब्धिमाह। राद्धान्तैकदेशिनस्तु योगाः प्राणादिलिङ्गगम्यं[1] भिन्नमाहुः। आन्तरवायुक्रियाभेदैः कार्यैर्देहादिभिन्नकर्त्रनुमा।

## भूतात्मवादमतानुवादः

भूतात्मवादी त्वाह—देह एव तत्कर्तास्तु क्लृप्तः। योगास्तु देहकार्यत्वासम्भवात् प्राणादिबुद्ध्यादेः भिन्नानुमामाहुः। देहो हि भूतसमवायि[2]कारणकः; पञ्चभूतारब्धो ह्यचाक्षुषः स्यात्, चाक्षुषाचाक्षुषद्रव्यारब्धस्या-

तमेव समाधिं देहव्यतिरिक्तात्मनि गौणवृत्त्युक्त्याह—एष यज्ञायुधीति पदे इति। लक्षणावृत्तिः परोक्तेति सैवोपेयेति शङ्कां निवर्तयितुमाह—धीरेणेति। व्यक्तस्तदर्थः। एवं वाक्यवृत्तिमुक्त्वा "कोऽसावन्यः" इति अनन्तरभाष्येण पूर्वपक्ष उक्त इत्याह—पूर्वपक्षीति। तदनन्तरम्, 'प्राणादिभिरेनमुपलभामहे" इति भाष्यमेकदेशिमतेनेत्याह—राद्धान्तैकदेशिनस्त्विति। तदभिप्रायमेव विवरीतुं तन्निवर्त्यपूर्वपक्षमाह—भूतात्मवादी त्विति। प्रत्यक्षत्वादात्मतया देहस्य तद्धर्मत्वाभ्युपगम एव न्याय्यः, न कल्प्यान्यधर्मताश्रयणमित्यर्थः। तदनुपपत्त्यैवान्यधर्मताश्रयणमित्येकदेश्यभिप्रायं विवृणोति। योगास्त्विति। देहस्तावत्पार्थिवोऽभ्युपेयः; पराभ्युपेतपञ्चभूतारब्धत्वे वायोरचाक्षुषत्वसम्मतेश्चाक्षुषत्वापत्तेः। चतुर्भौतिकत्वनिरासार्थं नभोऽपि न चाक्षुषमिति साध्यते—द्रव्यत्वे सत्यरूपत्वादीति। नन्वरूपत्वमसिद्धम्, तेजोहिमप्रचारे रूपदृष्टेरन्यथासिद्धत्वेऽपि तदप्रचारे नील-

१. गम्यमभिन्न. क. ख.    २. कारणतः. क.

चाक्षुषत्वात् वाततरुसंयोगवत्; वायोश्चाक्षुषत्वं सिद्धम्। नभोऽपि न चाक्षुषम्, द्रव्यत्वे सत्यरूपत्वात्। न च रूपवन्नभः, तेजोहि[1]महानेऽपि निशि नीलबुद्धेरिति वाच्यम्, नीलबुद्धेर्हेत्वभावेनासिद्धेः आलोकानपेक्षं चक्षुर्न हेतुः। एतेन तमसि नीलधीः प्रत्युक्ता तमोधीरपि।

तमसो द्रव्यान्तरत्वम्

किञ्च रूपवत्तमोऽनेकद्रव्यारब्धं सच्चाक्षुषं स्यात्। न चास्यारम्भक-द्रव्याणि सन्ति; सन्ति चेत् सतेजोदेशेऽप्यारभेरन्। "स्वतो दिवा सतेजसो देशाः" इति दिवाग्रहणं सतेजोदेशपरं प्रकरणे। न च तेजसा विरोधादनारम्भः; तेजोविरुद्धमपि जलं सालोके देशे[2] दृष्टमारम्भकम्। न च कार्यधिया दृष्टहेतुस्वभावान्यत्वम्। भ्रमरूपा[3] हि धीर्दृष्टा। न चेन्द्रि-

दृष्टेरिति शङ्कामनुवदति—न च रूपवन्नभ इति। तेजःप्रचाराभावे चक्षुषो धीकरत्वायोगान्नीलदृष्टेरभावान्न तद्बलाद्रूपवत्त्वमित्यर्थः। नन्वालोकसहायस्यैव चक्षुषो धीहेतुत्वमिति नियमो नास्ति, तमोदृष्टेरन्यथापि प्रसिद्धत्वाद्विषय-विशेषनिष्ठतयैव तन्नियमस्योपेयत्वादित्यत्राह—एतेन तमसीति। सहायनिवृत्त्या तद्विषयोऽप्यचाक्षुषतानुमानादुक्तहेतोरेव तच्छङ्कानिरासशक्तत्वात्सिध्यत्येव तन्नियम इत्यर्थः। तमोद्रव्यासम्भवाच्च नियमासिद्धिर्न शङ्क्येत्याह—किं च रूपवत्तम इति। तमोद्रव्यसत्तायास्तदारम्भकसत्तानियतत्वात् तत्सत्त्वे च तेजोदेशेऽपि तदारम्भापत्तेस्तत्सत्त्वं दुरुपगमेत्यर्थः। ननु तेजसस्तमसा विरोधिस्वभावत्वात्तत्स-त्त्वेऽनारम्भसम्भवात्तच्छून्यदेशनियम इत्यत्राह—न च तेजसा विरोधादिति। द्रव्यत्वे हि तमसो नाश्यनाशकत्वरूपं विरोधित्वम्, न भावाभावयोरिव स्वभावप्रयुक्तम्; तच्च जलतेजसोरप्यस्त्येव, तथापि सतेजोदेशे जलारम्भदर्शनाज्जलेऽपि विद्युद्द्युतागमनारम्भात्तमसोऽपि सालोकदेशे दर्शनापत्तिरित्यर्थः। ननु तद्दर्शनबलात् कार्यसिद्धेः तद्धेतोरितरविलक्षणस्वभावत्वमुपेयमित्यत्राह—न च कार्यधियेति। न तद्दर्शनस्य तत्कल्पनाक्षमबलमस्ति, भ्रमतयापि तदुपपत्तेः; अनन्यथासिद्धधिय एव प्रसिद्धव्याप्तेरुपाधिकल्पनया विलक्षणस्वभावकल्पकता, नान्यथासिद्धाया इत्यर्थः। ननु स्वतःप्रामाण्यबलादिन्द्रियान्तरकल्पनास्त्वित्यत्राह न चेन्द्रियान्तरमिति।

१. हि महानपि. क. २. देशो. क. ख.
३. Omitted. हि. क. ख.

यान्तरं कल्प्यम्, चक्षुरेकग्राह्यत्वनियमाद्रूपस्य। न च भ्रमो धीभेदः। सर्वथा धीहाने कथमिति वाच्यम्, न[1] हि सर्वधीहानिरुक्ता, किन्तु 'नीलं तमः' इति मित्यभावेऽपि मितिभ्रम उक्तः। उन्मीलिताक्षस्य हि तेजसो रूपमपश्यतः तद्रूपविपरीतनीलरूपि द्रव्यं सामान्यतः स्मरतः स्मृतित्वमगृह्णतो 'नीलद्रव्यम्' इत्यभिमानात् स्यादेव तमोव्यवहारः। अन्धानां नीलाभि[2]माना-सिद्धिरित्यपि न, 'तमसि प्रविष्टोऽहम्' इत्यन्धवाक्यात्। निमीलिताक्षस्य च सर्वस्य नीलधीः। न च सा पक्ष्मच्छायाधीः, अप्रसरतो नेत्ररश्मेरग्राहक-

---

रूपदृष्टेश्चाक्षुषत्वव्याप्तिबाधापत्तेः साप्ययुक्तैवेत्यर्थः। इह प्रकरणे "अबुध्यमाने-बुद्धिभ्रमोऽयम्" इति भ्रमविधोक्ता, तदसम्भवशङ्कानिषेधेन तदभिप्रायमाह—न च भ्रमो धीभेद इति। कथं मित्यभावे मितिभ्रमोपपत्तिरपीत्याशङ्क्योपपत्ति-माह—उन्मीलिताक्षस्य हीति। चक्षुरुन्मीलनस्यानन्तरभावितेजोरूपदर्शनसम्बन्धि-तया प्रचुरानुभूतस्य तदितरदृश्यानामन्योन्यव्यभिचारात् तत्सर्वानुरञ्जकभूतानु-गततत्स्मृतिहेतुत्वात् प्राप्तोत्पत्तिः स्मृतिः तद्दर्शननिवृत्तिः तद्दर्शनहीनात्मभानरूपा तेजोरूपविपरीतरूपत्वाच्छ्लाघ्यर्थदर्शनकरोन्मीलनजदर्शनविषयत्वानर्हनीलद्रव्य - स्मृतिकरी तदुन्मीलनानभिव्यञ्जत्वसाम्यात्; सा च नीलस्मृतिस्तेजोरूपस्मृति-तद्दर्शननिवृत्तिव्यवधानेनोन्मीलनोत्थाप्येति चाक्षुषदृष्टितुल्यव्यवहारकरीति भवेत् तत्सिद्धिरित्यर्थः। ननु सर्वसंवाद्यबाधितनीलतमोदृष्टेर्भ्रमत्वाश्रयणमयुक्तमिति शङ्कानिवृत्त्यर्थमन्धानामिव नीलरूपाभिमान इत्युक्तदृष्टान्तासिद्धिशङ्कां परिहरति-अन्धानां नीलरूपेति। इतरेषामन्धाभिमाने स्वानुभवाभावेऽपि तद्वाक्यैरेव तन्नि-श्चयः सुकर इत्यर्थः। स्वानुभवोऽपि न नास्तीत्याह—निमीलिताक्षस्य चेति। निमीलि-ताक्षनीलाभिमानाविशेषात्तमोदृष्टेरमानत्वं सुगममित्यर्थः। ननु तमोवादिना छायावस्तुनोऽभ्युपगतत्वान्निमीलिताक्षधियस्तद्विषयत्वसम्भवात् कथममानधीदृष्टा-न्ततेत्याशङ्क्य अतद्विषयत्वं साधयति—न च सा पक्ष्मच्छायाधीरिति। अप्रसरतोऽपि तद्रश्मेः स्वविषयग्राहकत्वे छायाकरपक्ष्मणोऽपि ग्रहणापत्तेरग्राहकत्वनिश्चयात् सत्त्वेऽपि छायावस्तुनो ग्राह्यत्वायोगादमानत्वसिद्धिरित्यर्थः। ननु छायोपगमे तमो-

---

१. न च. क. २. मानसिद्धिः. ख.

त्वात् । छायैव तम इति तु छायात्वस्त्वसिद्धेरसिद्धम् । भूगुणादि[1]तापि तु परैरेव प्रत्युक्ता ।

नभसः शब्दानुमेयता

नभस्त्वचाक्षुषमपि शब्दगुणानुमेयम्—शब्दो गुणः स्पर्शान्यैकेन्द्रियग्राह्यत्वात् । भूजलतेजोवायुगुणानां गुणिना सह ग्रहणम्, शब्दस्य न तथेति न तद्गुणता । अणुमनोगुणत्वमशक्यम् । दिक्कालात्मगुणानामबहिरिन्द्रियग्राह्यता, न शब्दस्तथेति गुणयन्तरं नभः ।

---

बुद्धेरप्यनवच्छिन्नच्छायाविषयतया मानत्वनिर्वाह इत्यत्राह—छायैव तम इतिेति । तदभ्युपगममात्रेणाप्रसरतोऽपि ग्राहकत्वमुक्तम्; वस्तुतस्तु निवारितालोकयोगदेशाधिकवस्तुविषयत्वं छायाधियोऽसिद्धमिति तदेकविषयतया तमोबुद्धेर्न मानतेत्यर्थः । केचित्तु भूम्यादेः स्वाभाविकं रूपं तमोरूपं दृश्यते; तेजसा तदभिभवे तदपगमे चान्यथेत्याहु; तन्निरासाय नास्माभिर्यत्नः कार्यः, परैरेव निरस्तत्वादित्याह—भूगुणादितेति । नन्वन्धनिमीलिताक्षानुगता नीलधीः किमित्युन्मीलिताक्षस्येत्युन्मीलितोपक्रमैवोक्ता ? उच्यते—सैव हि चाक्षुषतया प्रमाणम् न तथेति विवादालम्बनमिति तच्चाक्षुषत्वाभिमाननिदानतया तदुपक्रमोक्ता; तदन्या तेजोरूपादर्शनमात्रोत्थापिततद्विरुद्धनीलस्मृतितस्तद्भ्रमभागाभिमतेति न दोषः । एवं प्रासङ्गिकं समाप्य नभसोऽचाक्षुषत्वे स्वरूपासिद्धिरेव स्यादिति परापादितदोषं परिहरति—नभस्त्वचाक्षुषमपीति । ननु गुणत्वमेवासिद्धं शब्दस्येत्यत्राह—शब्दो गुण इति । यत्स्पर्शेन्द्रियव्यतिरिक्तबाह्यैकेन्द्रियग्राह्यं तद्गुण इति व्याप्तेरनुमेयं गुणत्वमित्यर्थः। तार्किकाणां रूपत्वादिसामान्याभ्युपगमेऽपि सामान्यपदार्थापेक्षया शब्दस्यान्यत्वं सम्मतमिति द्रव्यव्यवच्छेदमात्रफलं गुणग्रहणमित्ययत्नलभ्यफलव्यक्तिमात्रार्थं तदिति नानैकान्तोद्भावनावकाशः । ननु गुणत्वमात्रसिद्धावपि कथं नभोऽनुमानलिङ्गतेत्याशङ्क्य पारिशेष्यादिति वक्तुं तदन्यगुणत्वं निरस्यति—भूजलेति । एकधीस्थतया गुणिना सह धीनियमाभावेऽपि भूम्यादिगुणानां गुणविशेषवृत्त्यवधारणक्षमसहबोधनियमत्वसंप्रतिपत्तेः तद्गुणत्वे तदापत्तेस्तन्निवृत्त्यान्यगुणतैव स्यात्, अणुगुणानामप्रत्यक्षत्वान्मनोगुणत्वं च न स्यात् । तथान्यगुणत्वे चासति गुण्यन्तरानुमानं परिशेषसिद्धमित्यर्थः । एवं पाञ्चभौतिकत्वं चातुर्भौतिकत्वं च निरस्तमित्युप-

---

१. भूतगुणादिता तु. ख.

देहस्य पाञ्चभौतिकत्वनिरासः

एवं न पञ्चारब्धो देहः। भूम्यप्तेजोभिरनुष्णाशीतशीतोष्णैरारब्धोऽपि तदन्यस्पर्शः स्यात् नानागुणतन्त्वारब्धतदन्यगुणचित्ररूपपटवत्। अनुष्णाशीतस्तु देहः; सगन्धागन्धारब्धत्वेऽप्यगन्धतापत्तिः। एवमरसतापत्तिः। तदतद्धर्मारब्धं चातद्धर्मवाततरुसंयोगवत्।

देहश्चातुर्भौमिक इति धीरमतम्

धीरेण चतुर्भिरारब्धताप्युक्ता। संयोगो हि निःशेषसंयोगिग्रहाच्चाक्षुषः[1] रज्जुघटसंयोगवदिति युक्तम्। वाततरुसंयोगोऽचाक्षुषः; अवयवी तु न सर्वावयवग्रह एव चाक्षुषो दृष्ट इत्यचाक्षुषारब्धोऽपि चाक्षुषो युक्तः। स्पर्शश्चान्योऽप्यनुद्भूतो भूवाय्वोरनुष्णाशीत उद्भूतो भाति। सगन्धरसावयवगन्धानां रसानां[2] च गन्धरसारम्भकतास्त्विति। तन्न, भुजजङ्घादिकतिपयावयवचाक्षुषत्वे हि देहावयवी चाक्षुषो दृष्टः, चतुर्भिरारम्भे च न कश्चिदवयवश्चाक्षुषः स्यात्, भुजादेरपि चाक्षुषाचाक्षुषारब्धत्वात्तदवयवानामपि तथात्वात्। [3]अथ चाक्षुषखण्डावयविग्रहात् भुजाद्यवयविग्रहे देहग्रहः; तन्न, अचाक्षुषानपेक्षेण चाक्षुषेण खण्डावयव्यारम्भे सिद्धे

संहरति—एवं न पञ्चारब्ध इति। न च त्र्यारब्धोऽपीत्याह—भूम्यप्तेजोभिरिति। द्व्यारब्धोऽपि नेत्याह—सगन्धागन्धेति। यथोक्तदूषणपरिहारेण चतुर्भूतारब्धत्वमेव धीरेणाश्रितमित्याह—धीरेण चतुर्भिरारब्धतेति। न तावद्वाततरुसंयोगवदचाक्षुषत्वभीत्या तदनारभ्यतोपेयेत्याह—संयोगो हीति। आश्रयैकदेशग्रहाधीनग्रहावयविनः संयोगासाम्यात् चाक्षुषाचाक्षुषारम्भत्वेऽपि चाक्षुषत्वार्हतास्त्येवेत्यर्थः। भासमानानुष्णाशीतस्पर्शविरोधोऽपि नास्तीत्याह—स्पर्शश्चेति। गन्धरसोत्पत्तिश्च तद्वतामवयवानां बहुत्वात्तद्गतानामेवारम्भकत्वसम्भवान्नायुक्तेत्याह—सगन्धरसावयवेति। तदनुपगमहेत्वभिव्यक्त्यर्थं तन्मतं दूषयति—तन्न भुजजङ्घादीति। सत्यप्येवं संयोगवैलक्षण्ये केषुचिदवयवेषु प्रत्यक्षेष्वेवावयवी प्रत्यक्ष इति तावत् संप्रतिपन्नम्, तत्तु दुर्लभम्, चतुर्णां सहारम्भकत्वे तत्तदवयवारम्भे तदहानापत्तेरित्यर्थः। नन्वेवमपि चाक्षुषाणामप्यन्योन्यसंयोगोऽपरिहार्य एव, ततः खण्डावयव्युत्पत्तिश्चापरिहार्येति तच्चाक्षुषत्वापेक्षमवयविप्रत्यक्षत्वं घटत इति शङ्कते—अथ चाक्षुषखण्डावयवीति। दूषयति—तन्नेति।

१. योगाच्चाक्षुषत्वम्. क. ख. २. रसगन्धानाम्. क. ३. ननु. क.

महावयव्यारम्भोऽपि तथैवोपेयः। [1]सगन्धरसावयवानां गन्धैरसैर्गन्धरसारम्भे समवायिकारणं न समर्थितम्। अन्यश्च [2]स्पर्शः कदाचिदननुभवान्नास्तीत्येवोक्तम् ॥

देहस्य पार्थिवत्वमिति गुरुमतम्।

गुरुणा तु यत् "चतुर्भौतिकः सङ्घातः" इत्युक्तम् तद्भूतान्तरारब्धचक्षुरादिकार्य[3]द्रव्यान्तरयोगाच्चतुर्भूतसमूहोपलक्षणम्। योगमते देहस्य पार्थिवत्वस्थापनात्तस्यैव गुरुणोपन्यासात्। एवं पार्थिवो देहः। न स बुद्ध्यादेः[4] समवायिकारणम्। कारणगुणपूर्वको हि वैशेषिकगुणः। न च कारणेषु बुद्धियादिः यदि स्यात्तदारब्धे तत्कार्यान्तरेऽपि घटादौ स्यात्। न च करकाकाठिन्यमकारणगुणपूर्वकमित्यनेकान्तः। काठिन्यं ह्यवयवसंयो[5]गभेदः; न च

एवं चाक्षुषैकारब्धस्यैव प्रथमचाक्षुषत्वसंप्रतिपत्तेः तन्न्यायेनैवोत्तरेषामप्यनुमानमनिवार्यम्, तदन्यस्वभावोपस्थापकहेत्वभावादित्यर्थः। गन्धरसोत्पत्तिनिर्वाहोक्तिश्चायुक्तेत्याह—सगन्धरसावयवानामिति। तदुत्पत्त्यसमवायिकारणमात्रमेवं सिध्येत्, समवायिकारणं तु खण्डावयव्यधिकं न स्यादित्यर्थः। विलक्षणस्पर्शस्यानुपलभ्यतोक्ति रसत्त्वापादिकेत्याह—अन्यश्च स्पर्श इति। ननु पृथिवीमात्रारभ्यत्वं टीकाविरुद्धमिति नाभ्युपेयमिति शङ्कां परिहरति—गुरुणा त्विति। देहसंयोगापेक्षस्वकार्यकराप्यतैजसवायवीयद्रव्यसंयोगितयैव देहस्यात्मभोगकार्यकरतेति तत्संयोगप्राप्तसमुदायावस्थापेक्षस्वकार्यकरदेहोपलक्षणार्था तदुक्तिरिति न विरोध इत्यर्थः। कुत एवंपरत्वनिश्चय इत्यत्राह—योगमते देहस्येति। उक्तोपसंहारपूर्वकं तत्फलमाह—एवं पार्थिव इति। रूपादिविशेषगुणानां कार्यवर्तिनां कारणगुणपूर्वकत्वनियमात् बुद्ध्यादेश्च विशेषगुणत्वनिश्चयात् कार्यान्तरे तदनुपलब्ध्या कारणे तदभावनिर्णयाच्च देहधर्मत्वासिद्धिरित्यर्थः। ननु कारणगुणपूर्वकत्वव्याप्तिरेव नास्ति, जलकार्यकरकायां काठिन्यस्यापि दर्शनादिशङ्क्य विशेषगुणत्वाभावेन परिहरति—न च करकाकाठिन्यमिति। दृढावयवसंयोगस्यैव काठिन्यपदार्थत्वात् संयोगस्य च

१. Omitted. स. क.
२. Omitted स्पर्श. क. ख.
३. Omitted द्रव्य. क.
४. सम्बुद्ध्यदेः क.
५. गविशेषः क.

संयोगो वैशेषिकगुणः। न च गोमयाच्चेतनोत्पत्त्याऽनेकान्तः, वृश्चिकदेहचैतन्यासिद्धेः। वैशेषिकगुणास्तु रूपादयो यावद्भूतभाविन एव। भाष्ये च "अयावच्छरीरभावित्वात्" इत्यृजु न, युक्तम्—"अयावद्भूतभावित्वात्" इत्येवं गुरुः [1]न च देहाधर्मत्वं मृतेऽननुवृत्तेर्यु[2]क्तम्; अविगुणदेहधर्मोपगमे मृते विगुणे धर्मनिवृत्तिर्न युक्ता। निजरूपादिनिवृत्त्या च विगुणत्वसिद्धिः। किञ्च भूतगुणा रूपादयः परेन्द्रियग्राह्याः, न तथा सुखादय इत्यभूतगुणास्ते। किञ्च गुण्यग्रहे गुणग्रहात्तद्गुणता दुर्भणा। प्रत्यक्षगुणिगुणयोर्गुणस्य गुणिना सह ग्रहणात्।

---

विशेषगुणत्वाभावान्न हेतोर्व्याप्तिभङ्ग इत्यर्थः। संप्रतिपन्नविशेषगुणविषयेऽपि तद्दृष्टिप्राप्तानेकान्तशङ्कामनूद्य कारणसमवायात्यकव्यापकनिवृत्तिहेतुकार्यसमवायनिषेधस्य तद्विषयत्वात् पक्षभूते तत्रानेकान्तापादनमशक्यमित्याह—न च गोमयाच्चेतनोत्पत्तेरिति। कारणगुणपूर्वको हि वैशेषिकगुण इति संक्षिप्तां व्याप्तिं विषयोक्त्या साधयति—वैशेषिकगुणास्त्विति। सजातीयसर्वभूतवृत्तिसिद्धेः कारणगुणपूर्वका बुद्धयादिविलक्षणाः प्रसिद्धा एवेत्यर्थः। नन्वशरीरगुणत्वमयावच्छरीरभावितया भाष्योक्तम्; तत्र किमयद्भूतभावित्वेनेत्याशङ्कय भाष्यमप्येतत्परमेवेत्याह—भाष्ये चेति। कृत्स्नभूमेरप्यन्यावस्थापत्त्या तदर्हत्वाविशेषात् तदर्हतापेक्षया भूतपरमेव शरीरपदं नेयमन्यथानुपपत्त्येत्यर्थः। शरीरगुणत्वे परेन्द्रियग्राह्यतापत्त्यापि तन्नोपेयमित्याह—किं च भूतगुणा इति। भूतगुणत्वे गुणिना सह ग्रहणापत्तिः; तन्निवृत्तिश्चातद्गुणत्वगमिकेत्याह—किं च गुण्यग्रहे गुणग्रहादिति। शब्दादेर्गुणस्य सहग्रहणाभावेऽपि भूतगुणत्वाङ्गीकारात् व्याप्त्यसिद्धिरित्याशङ्कय गुणिनोऽपि प्रत्यक्षत्वविषय इदमुच्यत इति परिहरति—प्रत्यक्षगुणिगुणयोरिति। ननु गन्धादेरपि सहग्रहणं नास्ति; भूतगुणत्वं त्वस्त्येव। सुखादेश्चास्त्येव सहग्रहणम्। न हि गन्धवत्सुखमात्रग्रहणमविज्ञाताश्रयं कस्य चित्प्रतिभासमानं प्रसिद्धम्, 'अहं सुखी' इत्येव तद्भानात्। अतः किमिदमुक्तं गुण्यग्रह इत्यादिना? उच्यते—यदा हि 'अहं सुखी' इत्यादिना देहधर्मत्वमे-

---

१. न हि देहाधर्म. ख. २. युक्तमपि गुण. क. ख.

बौद्धपक्षः

संप्रति योगोक्तदोषानुपेत्य भूतचैतन्यवादी बौद्धदृष्ट्या[1] बुद्ध्यादिहेतुं बुद्ध्याद्यन्तरमाह। योगाभिमतविजातीयसमवायिकारणं प्रक्रियामात्रम्। भाष्ये च सम्बन्ध्यन्तरनिषेधो विजातीयाभिप्राय एव। अन्तरशब्दो जात्यन्तरे स्वरसात्। व्यक्त्यन्तरेऽपि च शक्यः। भाष्यान्तरात् "समानायां सन्ततौ" इत्यस्मात् सजातीयोपगमात् विजातीयनिषेधार्थ एवान्तरशब्दः। विजातीयहेतूपगमेऽनवस्था। विजातिह्यात्मा[2] कार्यप्राक्क्षणसत्तामात्रेणानुमेयः क्षणिक इति [3]तस्य विजातिहेतूपगमादनवस्थैव। प्रत्यक्षे च बुद्ध्यादेर्बुद्ध्यादिहेतौ न

वोच्यत इत्याश्रीयते, तदा देहस्य बाहरिन्द्रियग्राह्यत्वात् तद्ग्राह्यतैव सुखादेरप्याश्रयणीया। तदन्यग्राह्यत्वे गन्धादिवत् स्वतन्त्रावभासापत्त्या नियमेन विशेष्यनिष्ठप्रतीत्यसम्भवापत्तेः। न च बाह्येन्द्रियग्राह्यतास्तीति भूतचैतन्यवादिनोऽपि संमतम्। तेनोष्णजलज्ञानादिवत् भ्रान्तिरेव 'अहं सुखी' इत्यादिधीरिति न तद्बलाद्देहगुणता साधयितुं शक्येति तदर्थं इति न काचिदनुपपत्तिः। तद्भ्रान्तित्वापादनोपजीवनेनैवं तर्हि विज्ञानवादिमतापत्तिरनिवार्येति भूतचैतन्यवादयेव योगोक्तदोषाभ्युपगममात्रेण तन्मतं निरस्यति "कुत एष संप्रत्ययः" इत्यादिनेति ग्रन्थसम्बन्धमाह—संप्रति योगोक्तदोषानिति। ननु समवायिकारणशून्यतापत्तिदोषस्तन्मतापत्तिं निवारयेदित्यत्राह—योगाभिमतेति। ननु भाष्ये सजातीयकारणमपि निवारितम्, न विजातीयमात्रमिति कार्यत्वनिर्वाह एव न स्यादित्याशङ्क्य विजातीयाभिप्रायमेव तदित्याह— भाष्ये च सम्बन्ध्यन्तरेति। केन विशेषेण सजातीयाङ्गीकारेण विजातीयनिषेधः कृत इत्यत्राह—विजातीयहेतूपगम इति। क्षणिकस्यैव कारणत्वोपपत्तिरिति तदुक्तन्यायबलेनानुमेयस्य क्षणिकत्वापत्तेस्तस्यापि तद्विधानुमापत्तेः; प्रत्यक्षसजातीयमात्रेणाकाङ्क्षानिवृत्तेश्चानुमानानुपपत्तिरित्यर्थः। ननु देहेन्द्रियादिव्यतिरिक्तात्मसाधकतया योगमतस्यापि राद्धान्तानुगुण्ये सत्यपि कुतस्तन्निरासे भाष्यकारो यतत इत्याशङ्क्य तत्साधना-

१. दृष्ट्वा. क. ख.     २. विजातिहेतू. क.
३. तस्या विजातिहेतू. ख.

हेत्वन्तरानुमा । देहादिभिन्ने साध्येऽपि यत्प्राणादिलिङ्गात्तत्सिद्धिः परोक्ता निरस्ता तत्प्राणादेर्भिन्नसिद्धिरशक्येत्येवम् । प्राणादेश्चलनभेदत्वात् बाह्यवायौ चलनदर्शनादयावद्भूतभावित्वासिद्धेर्न भिन्नात्मसिद्धिः। सुखादयोऽपि भूतगुणाः, देहे प्रसादादिविकारासमवायिकारणत्वात्; देहतद्धेत्वनाश्रितत्वे च द्विधा समवाय्यप्रत्यासत्तेरसमवायिकारणता नेति भूतधर्मः सुखादिः विशेषत इत्ययावद्भूतभावित्वासिद्धिः । उपेत्याभूतधर्मतां बौद्धदृष्ट्या "कामं सुखादय एवं स्युः" इति भाष्यम्। "कामम्" इत्युक्तेरुपेत्यवादनिश्चयः। बौद्धा हि सर्वभावानां क्षणिकतया कारणकार्ययोः पूर्वापरक्षणतामाहुः । अतो न

---

सामर्थ्यादित्याह—देहादिभिन्ने साध्येऽपीति । चलनप्रकारमात्रं प्राणादेरितरवायुवैलक्षण्यमवान्तरभेदमात्रं सर्वत्राप्यस्त्येवेति सामान्यनिष्ठैव व्याप्तिरित्ययावद्भूतभावित्वासिद्धेर्न तस्य तत्सामर्थ्यमित्यर्थः । तथापि सुखादेस्तत्सामर्थ्यमविहतमेवेत्याशङ्क्य विशेषानुमानबाधितत्वात्तदपि नास्तीत्याह—सुखादयोऽपीति । देहगतप्रसादादिविकारकारणत्वं तावदविवादम्; तदसमवायिकारणत्वमप्यसमवायिकारणान्तराप्रसिद्धेः सिद्धम्; सुखादेर्देहव्यतिरिक्तगुणत्वे मानान्तरसिद्ध एव हि तत्संयोगस्यासमवायिकारणत्वप्रसङ्गः, न प्रागिति स्वतःप्राप्तमसमवायिकारणत्वम्; तद्बलाद्देहधर्मत्वे विशेषानुमानमिति चैतन्यसामग्रीयोगिनां भूतानामपि सुखाद्यर्हत्वादयावद्भूतभावित्वहेतुरसिद्ध एवेत्यर्थः । नन्वेवमभिप्रेतहेतुदोष एव वाच्यः; कुतस्तदनुक्त्यानभिमतं स्वातन्त्र्यमुच्यत इत्यत्राह—उपेत्याभूतधर्मतामिति । संप्रतिपन्नदेहवृत्त्यहंधीबलत्यागेऽनुमानसिद्धेऽनुमानस्यादुष्टत्वेऽपि बौद्धोक्तयुक्तिबलायातं स्वातन्त्र्यमेवोपेयं स्यादिति भाष्याभिप्रायः; न हेतोरदुष्टत्वमभ्युपेतम्; तावता च परितोष्यसीति कामोक्तिबलादित्यर्थः । नन्वभूतधर्मकत्वसिद्धौ कार्यस्य समवायिकारणजन्यत्वनियमादन्यगुणत्वं स्यादेवेत्यत्राह—बौद्धा हीति । प्रत्यभिज्ञाप्रत्यक्षबलात् स्थायिनोऽपि सहकारिक्रमापेक्षया कारणत्वे समर्थित एव हि पूर्वोत्तरकालानुवृत्त्यपेक्षया समवायिकारणजन्यत्वनियमः कार्याणां सिध्येत्, नान्यथा; प्रत्य-

---

१. Omitted अपि. क. २. लिङ्गात्सिद्धि. क.

समवायिकारणं भिन्नं सुखादिगम्यम्, सुखान्तरादिहेतुकमेव सुखादीति। एवमनाश्रयित्वे स्वातन्त्र्ये च सुखादेर्न भिन्नात्मसिद्धिः। अथ वायोस्तिर्यग्गतेर्देहे चान्यथावृत्तिरन्याधीना भस्त्रायामिव, निमेषोन्मेषौ चान्याधीनौ दारुयन्त्र इव, तन्न; [1]अचेतने ह्यन्याधीनता, न सा देहे।

सांख्यमतनिरासः

योगमतं निरस्य सांख्यमतमुपन्यस्य निरस्यति। जानातीति कर्त्रभिधानान्महदादिभूतान्ताद्देहात् भिन्न आत्मेति सांख्याः। [2]तत्र प्रक्रियेयम्—सुखदुःखमोहात्मिका प्रकृतिः महदात्मकबुद्धितया परिणमते, महतोऽहङ्कारः परिणामः। अहंकारस्य पञ्चतन्मात्राणि गन्धरसरूपस्पर्शशब्दात्मकानि एकादश चेन्द्रियाणि ज्ञानेन्द्रियकर्मेन्द्रियमनांसि। पञ्चतन्मात्राणां पृथिवी चतुर्णामापः त्रयाणां तेजः द्वयोर्वायुः एकस्याकाशं यथाक्रमम्। देहश्च सर्वः प्राकृत उक्तः। तन्मध्ये महदहङ्कारमनांसि ज्ञानात्मकमन्तःकरणमुक्तम्। अन्यत् ज्ञेयम्। अतः कर्मकरणाधिकः कर्ता पुरुषः, जानातीत्यभिधानात्।

---

भिज्ञाप्रत्यक्षं च ज्ञानव्यतिरिक्तप्रत्यभिज्ञात्मनिश्चयपूर्वकमिति न तज्जन्यत्वव्याप्तिबलादात्मसिद्धिरिति तदनुमेयात्मवादिनो बौद्धपक्षनिषेधासिद्धिप्रकटनार्थस्तन्मतोपन्यासो भाष्य इत्यर्थः। एवं योगमताङ्गीकारेणात्मसिद्धिर्दुर्लभेत्युपसंहरति—एवमनाश्रित्व इति। प्राणादेर्विधान्तरेणैवात्मगमकत्वं तदभिप्रेतम्, न सुखादितुल्यतयेति तस्य तल्लिङ्गत्वमदुष्टमेवेति शङ्कते—अथ वायोरिति। तदनुमानस्याप्युपाधिशङ्काहतव्याप्तिकत्वादसम्भव एवेति दूषयति—तन्न अचेतने ह्यन्याधीनतेति। "कस्तर्हि जानाति इत्युच्यते" इत्यादिभाष्याभिप्रायमाह—योगमतं निरस्येति। स्वतन्त्रत्वे ज्ञानस्य कर्तृतन्त्रत्वप्रसिद्धिर्न स्यादिति तत्प्रसिद्धिबलात्तदन्यात्मसिद्धिरिति सांख्यमतमुपन्यस्य तेन च देह एव कर्तास्त्विति शङ्क्यम्, तस्य कोटचन्तरनिविष्टतया तदनर्हत्वादिति तदभ्युपगमादित्यर्थः। देहस्य कर्मकरणमात्रत्वं तदंशविवेकेन प्रपञ्चयति—तत्र प्रक्रियेयमिति। ननु कर्तृत्वस्य परिणामक्रियापेक्षत्वात् तदधीनत्वात्तदभिमतात्मनः कथं कर्तृतयोपस्थितिः तत्प्रक्रियानुवादेनेति शङ्कानुवादपूर्वकं तदविरोधमाह—यद्यपि निष्क्रिय इति। कर्तृत्वाभावेऽप्यात्मनो भोक्तृत्वं तदभ्यु-

---

१. अचेतनेऽप्यन्या. क.   २. अत्र. ख.

यद्यपि निष्क्रियः पुरुष उक्तः, बुद्धिधर्मा ज्ञानधर्मवैराग्यादय उक्ताः, तेन साक्षादात्मनो न ज्ञानकर्तृता, तथाप्यात्मनो भोगार्थं बुद्धिर्ज्ञानपरिणत्या भोग्यरूपेति निमित्ततया कर्तोक्तः, तथा पूर्वभुक्त इच्छोत्पत्तेर्भिन्नात्मसिद्धिः। बौद्धमते हि क्षणिकेषु विज्ञानरूपवेदनासंज्ञासंस्कारस्कन्धेषु पूर्वभोक्तुः परभोक्तुर्भेदात् पूर्वभुक्तिः पूर्वापरक्षणस्थं विना नेति स्कन्धाधिकसिद्धिः। तथा स्मृतिरिच्छावदनुभूतविषयेति ततोऽप्यक्षणिकात्मसिद्धिः। परबोधनार्थं चेदं युक्तित्रयम्, अनुभवादेवात्मसिद्धिः। तन्न, बौद्धयुक्तिभिरनुभव

---

पगतमेव। जलादिप्रतिबिंबस्थार्कतुल्यो ह्यात्मा देहान्तःस्थाचेतनान्तःकरणात्मकबुद्धिमिश्र एव व्यवहारगोचरस्तैरुपेयते। तेन जलचलनेऽर्कचलनवत्तद्विकारादेवात्मनः सर्वविकारभानम् निर्विकारप्रकाशमात्रं स्वाभाविकं रूपम्। तस्य तु तद्विकारोत्पत्तिनाशारोपनिमित्तं नानात्वम्। तदागमापायदर्शितया प्रकाशस्वरूपानुवृत्त्यनवभासादुत्पत्त्यादिशून्यत्वभानमव्यक्तत्वादसत्कल्पमिति वस्तुतः साक्ष्यवस्थाशेषदृश्यदर्शिप्रकाशमात्ररूपोऽप्यात्मा विकारिबुद्ध्यैक्यभ्रान्त्या विकारीव भासते तद्गुणप्रकाशः। तद्दर्शित्वमेव कर्तृत्वं तात्त्विकमिति तदर्थैव बुद्धेर्ज्ञानपरिणतिरिति तन्निमित्तत्वमात्रेणात्मा कर्तेति कर्तृतयापि तत्सिद्धिरविरुद्धैवेत्यर्थः। पूर्वानुभूतनियतविषयेच्छोत्पत्तिश्च व्यतिरिक्तात्मसाधिकेत्याह—तथा पूर्वभुक्त इच्छोत्पत्तेरिति। प्रकाशस्वभावक्षणिकज्ञानमात्रं सर्वव्यवहारास्पदभूतं तत्त्वम्। तच्च मानमेयमितिसंज्ञासंस्कारात्मकस्वशाखाभूतानन्तव्याप्त्या तदास्पदम्। सर्वं चैतत्क्षणध्वंसीति बौद्धमतम्। ततस्तन्मते पूर्वभोक्तुः सपरिकरस्य लेशमात्रमप्युत्तरभोक्त्रनुगामि नास्ति, देवदत्तयज्ञदत्तयोरिवात्यन्तिकभेदस्याभ्युपेतत्वात्। तेनान्यभुक्तेऽन्यस्य तद्वदेवेच्छोत्पत्त्ययोगात्तदन्यात्मसिद्धिरित्यर्थः। स्मृतिरप्येवमेव तत्प्रमाणमित्याह—तथा स्मृतिरिति। ननूक्तान्यथानुपपत्तिगम्य आत्मा अनुमेयः स्यात्, सांख्यमते तदनुपगमात् कथं तदुक्त्युपपत्तिः? व्याप्तिमूला चान्यथानुपपत्तिः; व्याप्तिश्च प्रत्यक्षं विना ग्रहीतुमशक्येति दृष्टत्वात् स्कन्धाधिकात्माभावेऽपि नानुपपन्नमिति वक्तुं शक्यमिति कथं तदुक्तिर्नेयेत्यत्राह—परबोधनार्थं चेदमिति। यथोक्तसाक्ष्यनुभवादेव स्वरूपसिद्धिरिष्टा; विप्रतिपन्नं प्रति तन्निवृत्त्यर्थमिदं युक्तित्रयम्; तन्निवृत्तौ

---

१. भूतिविषयेति क.

एवानुभूयते । इच्छास्मृती चैकसन्ततिजे एव दृष्टे; जानातीत्यधिकाभिमान इत्यात्मशून्याः स्कन्धाः । ब्राह्मणमपि "विज्ञानघन एव" इत्याद्यनुगुणं भूतचैतन्ये । विज्ञानचैतन्यमुपेत्योक्तम्; भूतचैतन्यमेवोपसंहृतम् । जानातीच्छास्मृतीनां भूतचैतन्ये युक्ततरता व्यक्तैव ॥

मीमांसकमते आत्मनिरूपणम्

राद्धान्तस्तु अमिश्रितेदंप्रत्ययात् 'अहम्' इति प्रत्यक्षाद्देहादिभिन्नात्म-

---

तस्याप्यात्मसिद्धिः साक्ष्यनुभवविवेकाधीनैवेत्यर्थः । नन्वेवमनुभवबलात्स्यादेव तत्सिद्धिः, केनाभिप्रायेण भाष्येऽनुपपत्त्यभावेन तदसिद्धिरुक्तेत्याशङ्क्य तदभिप्राय-माह—तत्र बौद्धयुक्तिभिरिति । क्वचिदनुभवव्यतिरिक्तविषयाभ्युपगमे स्यात्स्कन्धाधिकात्माभावेऽप्यनुपपत्तिः; क्वचिदपि तदनुपगमान्नानुपपत्तिः । तेनानुभवबलात् तत्सिद्धिरित्ययुक्तम् । इच्छास्मृत्योः सन्ततिभेदेऽनुपपत्तावपि सन्तत्यैक्ये दृष्टत्वान्नानुपपत्तिः । कर्तृनिर्देशश्चात्र भ्रान्त्याप्युपपन्न इति भाष्याभिप्राय इत्यर्थः । यथाभाष्यं ब्राह्मणमुखेन भूतचैतन्यमेवोपसंहरति—ब्राह्मणमपीति । तदुपसहारः पूर्वोक्तविज्ञानचैतन्यस्य अतत्परत्वे हेतुर्द्रष्टव्य इत्याह—विज्ञानचैतन्यमुपेत्येति ॥

राद्धान्तभाष्याभिप्रायमाह—राद्धान्तस्तु अमिश्रितेदंप्रत्ययादिति । यदि प्रत्यक्षव्यतिरिक्तप्रमाणबलमाश्रित्य देहादिभिन्नात्मसिद्धिं वदेम तदा भूतचैतन्यवादिनेत्थमुपालभ्येमहि; 'अहम्' इति प्रत्यक्षबलात्तूच्यते । न चैतद्देहविषयमिति शङ्कनीयम्, देहस्येदंप्रत्ययविषयत्वाविवादादहंप्रत्ययस्य चातद्विषयत्वनियमात् । धीकर्म हीदमाकारमवभासते, तत्कर्ता तु 'अहम्' इति; तयोश्चान्योन्यव्यावृत्तत्वात् । न चैकत्र कर्तुरन्यत्र कर्मत्वसम्भवादविरोधः, द्रष्टुरात्मदृश्यत्वे ह्येवमविरोधः स्यात्; तदभावात्स्वकर्मतयैवात्मभानमिति नास्त्येवेदन्तामिश्रणमहंधीस्थस्येति देहविषयत्वशङ्का तद्विवेकाग्रहशक्तिमूलैवेत्यर्थः । नन्वहंधीस्थस्येदन्तामिश्रणानर्हतोक्तिरेवाविवेकमूला यथा हि 'अयं घटः' 'अयं पटः' इति तत्तदर्थभानं पृथक्पृथक्प्रसिद्धम्, तथा 'अयमहम्' इत्यपि तत्सामग्र्यपेक्षमात्मभानमिति कर्मतयैवात्मा भाति; सत्यपि वास्तवे स्वस्य कर्तृत्वे तेन भानावस्थापेक्षया देहस्याप्यविरुद्धमत्मात्वमित्याशङ्क्य भानाविवेकमूलेयमाशङ्का, कर्तृशून्यसंविद्वादिनोऽपि तन्निरासार्थं

सिद्धिः। 'अहम्' इति कर्तृतया संविदः प्रतिभानं च बौद्धस्यापि भ्रमतया मतम्, संविद्याकारनिवेशात्; तद्विज्ञानवादे निरस्तमिति न भ्रमः। संविच्च धात्वर्थत्वात् क्रिया, क्रियार्थस्यैव धातुसंज्ञितत्वादिति वेद्यज्ञानात्मककर्मकरणभिन्नार्थप्रत्यभिज्ञामुखेन नैरात्म्यं निरस्तम्। क्षणिकत्वे हि संविद्रूपक्रियायोगिता न स्यात्; 'अहम्' इति भिन्नकर्तृभ्रम एव स्यात्। इदंधीविषये तु देहादौ गौणाहंपदानुविद्धा धीः, अहंमात्रानुविद्धं द्राक् धीस्थं मुख्यम्। एवं सप्रत्यभिज्ञानात् स्थिरस्य नित्यतां प्रसाध्य स्वमधिकं निश्चित्य भाष्यकृत्

---

तद्विवेकात्संवित्कर्तृतयैवाहंभानमिति संमतमेवेत्याह—अहमिति कर्तृतयेति। वेत्तृशून्यवेद्यभानशङ्कया ह्येदमाशङ्कनीयम्; तत्तु ग्रन्थगत्युक्त्यनन्तरं निरस्यते; बौद्धसंमतिमात्रापेक्षया ग्रन्थगतिमिदानीं प्रदर्श्यते; कृत्स्नस्यापि धीस्थाकारस्य संविदन्यतया योऽयमात्मापलापः, स प्रागेन बाह्यार्थसमर्थनन्यायनिरस्त इत्यात्मस्वरूपमपि देहाद्यन्यतया धीबलसिद्धमेवेत्यर्थः। नन्वेवमप्यन्यकर्मकसंवित्कर्तृभानप्रदर्शनार्थम् 'अहमिदं पश्यामि' इत्येवंरूपमात्मभानमुपन्यसनीयं स्वरूपाक्षेपपरिहारार्थम्; किमर्थोऽयम् "अन्येद्युर्दृष्टे" इत्यादिना प्रत्यभिज्ञोपन्यास इत्याशङ्क्य संवित्कर्तृत्वोपयोगेनेति वक्तुं संविदः क्रियात्वं तावदाह—संविच्च धात्वर्थत्वादिति। तमेवोपयोगं क्रियात्वोपजीविनमाह—इति वेद्यज्ञानात्मकेति। क्रियावाचिधातूत्पन्नकर्तृप्रत्ययार्थसंवित्कर्तृधीबललभ्य एव तत्कर्मकरणदेहेन्द्रियव्यतिरेकं कर्तृतोपयोगि प्रत्यभिज्ञोपस्थाप्यं स्थायित्वम्; बौद्धोपपादितक्षणिकत्वबाधकानुक्तौ हि प्रस्तुततन्मतप्राप्तक्रियातदाश्रयत्वभङ्गात्कर्तृत्वासिद्धेः प्रत्यभिज्ञापि प्रमाणोक्त्युपजीविन्येवेत्यर्थः। ननु 'अहं स्थूलः' 'अहं कृशः' 'अहं गच्छामि' इत्यादिव्यवहारप्रसिद्धेः कथमहंधीरमिश्रितेदंप्रत्ययेत्यत्राह—इदंधीविषये त्विति। सकृत्कर्तृकर्मत्वविरोधात् समावेशासम्भवनिश्चये पदवृत्तिमात्रं गौणमस्तु; देहाद्युपस्थापकात् प्राक् तदुपस्थापकार्थधीरप्यहंधीग्रस्तैवेति वक्ष्यत इति सैव विविक्तात्मविषयोपेया; कालभेदानवमर्शादविवेकिनां मिश्रणभ्रममात्रमित्यभिप्रायः। ननु कृतसमाधानोपक्रान्तशेषानुष्ठानप्रवृत्त्यनुमेयत्वमप्यात्मन उपगच्छतो भाष्यकारस्य तद्विरुद्धमकर्मत्वाभिप्रायोन्नयनमित्याशङ्क्य विरोधपरिहारार्थं तदभिप्रायमाह—एवं सप्रत्यभिज्ञानादिति। स्थिरत्वान्तात्मसिद्धिः मानबलायातेति तदुक्त्य-

परार्थं शास्त्रमित्येवं परबोधनार्थमनुमामाह 'अहम्' 'मम' इति देहाद्भिन्न-धीरिति। भ्रम इति भूतचैतन्यवादिनो ब्रह्मविदश्च तदर्द्ध कृतसमापनादि-चेष्टयाऽभिन्नधियमनुमायाविपर्ययान्न भ्रम इत्याह; न तु चेष्टया भोक्तृ-रूपधीः, तद्रूपस्याप्रमेयत्वात्। स्वसंवेद्यमपि सुखादि परगतं भ्रूभङ्गादिकार्यानु-मेयम्, मेयत्वात्; अहंशब्दात् भिन्नधीः परबोधनार्था। परस्याहंशब्दः साक्षा-

---

न्तरमेवानुमानं वाच्यं स्यात्, तदपि स्वरूपासाधकतया विवक्षितं चेत्; न तु तथो-क्तम्; तदनन्तरं हि तदेव "अशीर्यो न हि शीर्यते" इति श्रुतिसंवादेन दृढीकृत्य "अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा" इत्यादिश्रुतिमुखेन तस्य नित्यता प्रसाधिता। एवं स्वात्मविषयं यत्नं समाप्य पुनः परप्रतीतिमात्रार्थमनुमानमुपन्य-स्तम्, नात्मसाधकतयेति न कर्मतापादकं तदित्यर्थः। नन्वनुमानस्य तदसाध-कत्वे परप्रतीत्यर्थता न स्यात्, परस्यापि तत्समर्थाहंधीमात्रबोध्यत्वादित्याशङ्क्य परविप्रतिपत्तिमूलसंशयनिरासेन मन्दधीबुद्धिदाढर्यापादकतया स्यादेवेत्याह— अहंममेति देहाद् भिन्नधीरिति। अहंधियो देहव्यतिरिक्तविषयत्वं भ्रमारोपितमिति परोक्तिप्रसक्तं तत्तन्नेति परधियोऽपि तद्विषयत्वानुमानेनाह भाष्यकार इत्य-तद्विषयमप्युपयोग्येवानुमानमित्यर्थः। कुतस्तद्विषयत्वं स्वतः प्राप्तमनुपेत्यान्यथा व्याख्यायत इत्यत्राह—न तु चेष्टया भोक्तृरूपधीरिति। तत्प्रमाणोक्ताहंधीविषय-साधकत्वसम्भवे हि तदुपेयम्, तदभावाद्युक्तमेवोक्तमित्यर्थः। नन्वनुकूलस्वभा-वावभासिनः सुखस्य प्रत्यक्षत्वनियमेऽपि परसुखस्यानुमेयतोपगमवत् परात्मनोऽ-प्यनुमेयत्वमविरुद्धमित्याशङ्क्य विशेषमाह—स्वसंवेद्यमपि सुखादीति। तत्रानुकूलादि-रूपाभानेऽपि मेयत्वरूपस्य प्रत्यक्षावस्थानुवर्तित्वात् कार्यानुमानमपि तद्रूपेण तद्वि-षयताऽर्हमेव; इह प्रत्यक्षावस्थानुगतरूपाभावात्तदेकविषयतानर्हमनुमानमित्यर्थः। नन्वनुमानोक्तेर्भ्रमशङ्कापोहार्थतया परप्रतिपत्त्यर्थत्वं परस्य स्वरूपसिद्धिपूर्वकमु-पेयम्, किं तत्साधकमभिप्रेत्य तदपोहार्थतोच्यते, न तावत्स्वनिश्चयहेतूक्ताहंधीरेवेति वाच्यम्; सापि ह्यहंशब्दानुविद्धोक्ता भिन्नेति। तन्निषेधस्तर्ह्यनर्थक इत्याशङ्क्य तद्भ्रमापनयेनार्थवानित्याह—परस्याहंशब्द इति। नन्वकर्मतार्थमहंधीमात्रगोचरत्वे भाष्यार्थ इष्टे "विज्ञानमपास्य तन्निदर्श्यताम्" इत्युक्ताक्षेपभाष्यमसम्बद्धार्थं स्यात्;

द्भिन्नधीहेतुरि'ति भ्रमः; तमपनेतुम् "न वयमहंशब्दम्" इत्यादिभाष्यम्। अहंधीरेव शब्दद्वारोच्यते विज्ञानमपास्येति भाष्यार्थः। अहंधीमेयत्वे मेयान्तरे ज्ञानज्ञात्रन्तरमनिच्छता ज्ञानज्ञात्रनपेक्षाहंधीर्वाच्येति परं प्रत्यपि ज्ञानमपास्य कथ्यताम्। उत्तरं तु स्वसंवेद्यतया; मेयत्वे हि कर्मकर्तृतादिदोषः; मेयान्तरधीषु च भानम्[1]; न ज्ञानं विना कथनम्। ज्ञानाकारता तु निरस्ता, ज्ञानस्यानुमेयत्वात्। अनीलाद्याकारापि संवित् प्रत्यक्षेत्यप्युक्तम्।

पुनश्च भाष्यम् "विज्ञानमपास्य" इति; न तत्पुन[2]रुक्तम्; अधिकेयं शङ्का—धीज्ञानयोरेकतां मत्वा यद्यर्थधीष्वात्मभानं धीप्रत्यक्षतानुज्ञानात् ज्ञानप्रत्यक्षता इत्यात्माकारा ज्ञान एवेति तदपास्य नात्मा दर्शयितुं

---

स्वरूपोपस्थापकाहंधियोऽनपास्यत्वादन्यस्याप्रसक्तत्वादित्यर्थान्तरपरमेव भाष्यमित्याशङ्क्य आक्षेपघटनमाह - विज्ञानमपास्येति भाष्यार्थ इति। अकर्मतयैवाहंधीगोचरत्व आत्मनोऽङ्गीक्रियमाणे वस्त्वन्तरविलक्षण एवात्मा प्रकाशत इत्याश्रितं स्यात्; ततश्च कर्तृकरणशून्य एव स प्रकाशते, कर्त्रन्तरानुपगमात् करणस्य च तत्प्रवर्त्यस्य तन्निवृत्त्यैव निवृत्तिसिद्धेः। ततश्चात्मप्रकाशरूपाहंधीर्बाह्यप्रकाशवत् स्वतन्त्रैवाकर्तृतन्त्रा स्यात्; कर्तृत्वे कर्मत्वस्याप्यवर्जनीयत्वात् तदनुपगमेऽहंधीरेव पुरुषान्तरं प्रत्यपि स्वविषयोपनेत्री स्यादित्यापादनरूपोऽयमाक्षेप इत्यर्थः। कथं तर्हि स्वसंवेद्यतया तन्निरास इत्यत्राह—उत्तरं त्विति। यदि बाह्यार्थभानहीनाहंधीः पृथग्भूतात्मनि मानतयेष्टा स्यात्, तदा मेयत्वस्यापरिहार्यतया कर्मकर्तृतापत्तिः तदापादितविकल्पमात्रतया मिथ्यात्वं देहाद्यनन्यत्वं वा स्यात्; अनात्मकर्मकधीषु तत्कर्तृतयैवात्मा भातीत्युच्यत इति कर्तृकरणशून्यतया अतिप्रसङ्गापादनमनवकाशम्। न च ज्ञानापेक्षामात्रेण बौद्धोक्ततदाकारमात्रतात्मनः, ज्ञानस्य प्रत्यक्षत्वानुपगमात् प्रत्यक्षोपगतसंविदस्त्वाकारानपेक्षत्वात्। तेन स्वसंवेद्यतयोत्तरमपि घटत इत्यर्थः। नन्वेवमुक्तेऽप्युत्तरे पुनश्च यदुच्यते "विज्ञानमपास्य तन्निदर्श्यताम्" इति तदुपन्यासो न घटत इत्याशङ्क्य तद्घटनं चाह—पुनश्च भाष्यमिति। बौद्धमते प्रमाणफलयोरेकतोपगमात् फलस्य प्रत्यक्षत्वोपगमेनैव ज्ञानस्यापि प्रत्यक्षतापादनेन प्रत्यक्षात्माकारस्तद्गत एव स्यादित्युक्तोत्तरासमाप्तिशङ्कयाऽऽक्षेपोपन्यास इत्यर्थः। कथं

---

१. भानान्न ज्ञानम्. ख. २. न तत्प्रत्युक्तम्. क. ख.

शक्यः । उत्तरं तु "यद्युपायमेव" इति भाष्यम् । अस्यार्थः—उक्तं शून्ये, ग्राह्याकारा धीर्न ग्राहकभूतज्ञानाकारेति; अनाकारं ज्ञानमनुमेयम्, धीस्तु स्वरूपतः प्रत्यक्षेति भेदः । आत्ममनोयोगो ज्ञानमुपाय[1]मात्रमर्थधियः । तथाप्युपायमपास्येत्युक्तम्, तदशक्यो[2]पेयधीः यथा शुक्लतां विना न शुक्लधीः । यद्यपि शुक्लता धीस्थोपायः, तथाप्युपायत्वमात्रात्साम्यम् । शून्ये प्रत्युक्तमपि ज्ञानप्रत्यक्षत्वमुपेत्यात्मसिद्धिं वक्तुमुक्तम् । साकारमपि ज्ञानं ज्ञेयप्रवणं ज्ञेयाकारमेव वाच्यम्, न ज्ञात्राकारमित्यात्मसिद्धिः । उपमापि भाष्ये कथनोपायवाक्याभिप्राया, न मानान्तररूपा । प्रत्यभिज्ञया च मातृस्थैर्ये शब्दादिविषयस्थैर्यमपीति शब्दाधिकरणसमीपोक्तावुपयोगः । मातृक्षणिकत्वे तु नार्थस्यानेकक्षणानुवृ[5]त्त्यनुभूतिः स्यात् ।

'प्रत्यगात्मन्यहम्' इति भाष्यम् । [6]तस्यार्थः—भोक्ता हि साध्यः,

---

तर्ह्युपायप्रतिषेधापादनेनोत्तरोपपत्तिरित्याशङ्क्य तदुपपत्तिमाह—उत्तरं त्विति । स्वाकारेण प्रकाशस्वभावसंविदवच्छेदकत्वं ह्यप्रकाशस्वभावार्थस्य प्रत्यक्षत्वम्; ग्राह्यस्यैव तत्, न संविज्जनकज्ञानस्येत्यनुमेयं तदित्यनाकारमिति न तत्स्थः प्रत्यक्षभूत आत्माकारः; ज्ञानं त्वनाविर्भूतस्वाकारमुपायमात्रम्; तदप्यपास्येति तु न वाच्यम्, असम्भवादित्यर्थः। कथं तर्हि ज्ञात्रवस्थात्मभाने ज्ञानस्यापि प्रत्यक्षत्वमङ्गीकृतं भाष्यकारेणेत्याशङ्क्य तदभिप्रायमाह—शून्ये प्रत्युक्तमपीति । ज्ञानस्य प्रत्यक्षत्वेन सत्यामप्याकारापेक्षायां ज्ञेयप्रवणत्वाज्ज्ञेयाकारेणैव साकारमुपेयम्, न ज्ञात्राकारेणेत्यकर्मोपस्थापकाहंधियात्मसिद्धिदार्ढ्यमनेन दर्शितमित्यर्थः । ननूपमाज्ञाप्यताङ्गीकाराज्ज्ञेयतात्मनोऽप्यङ्गीकृतेति गम्यत इत्याशङ्क्य अनन्यानुगतात्मोपदर्शकपरवर्त्यहंधीरेव स्वधीविपर्यासशङ्काहानाय येन वाक्येन प्रदर्श्यते, तद्वाक्यमुपमानपदेनोच्यत इत्यज्ञेयत्वपरतोक्त्या परिहरति—उपमापि भाष्य इति । एवमाद्यभाष्यस्याकर्मात्मोपस्थापकाहंधीपरत्वाविरोधित्वमुत्तरभाष्याणामुपदर्श्य प्रत्यभिज्ञोक्तेः प्रयोजनान्तरमप्यस्तीत्याह—प्रत्यभिज्ञया चेति । "प्रत्यगात्मनि" इत्यनन्तरभाष्योक्तमनूद्य व्यावर्त्याप्रतीतेरानर्थक्यशङ्काहानाय व्याचष्टे—अस्यार्थ इति । संवेत्ता ह्यत्र वादे साध्यः;

---

१. Omitted मात्र. क.　　२. कथोपायधी.. क. ख.
३. आत्मसिद्धिः. क.　　४. Omitted. यें शब्दादि विषयस्थै. ख
५. वृत्तिः. क. } वृत्त्यानु. ख.　　६. अस्यार्थः. व्याख्या.

प्रत्यगात्मनि भोगदर्शनात्; तत्रैवाहमिति । ब्राह्मणं तु भूतचैतन्यं निरस्या-विनाशित्व[1]मात्मन आह ॥

सिद्धान्तसंग्रहः

अत्रेदं सारम्—सर्वार्थधीषु 'अहम्' इति भानमास्थेयम्; ज्ञातृशून्ये हि ज्ञेये भाते 'मयेदं विदितम्' इत्येवं धीर्न स्यात्; तदा च स्वपरवेद्ययोरनतिशयः । अयं भावः—स्ववेद्यपरवेद्ये अन्योन्यं विलक्षणस्वरूपे विलक्षणफले च, स्ववेद्ये स्वव्यवहारात् परवेद्ये परव्यवहारात् । न च वेद्यभाताभातयोः [2]स्वपरयोर्वेद्यरूपे वै[3]लक्षण्यापादकता; न च वेद्यभाताभातयोर्वेद्ये व्यवहर्तृ-त्वम्, अभातस्य व्यवहारानन्तर्भावात्; वित्त्यन्तराद्धानोप[4]गमे चानित्यत्वात्

'यजमानः स्वर्गं लोकं याति' इति कर्तुः फलित्वश्रुतेः, अहंव्यवहारप्रसिद्धेः प्रयोगव्यापारदर्शनाच्च देहस्य कर्तृत्वप्रसङ्गाद्बाधितार्थत्वशङ्काहानार्थं शास्त्रार्थवेत्तुरधिकृतस्य कर्तृत्वमित्येतत्सिद्धये व्यवहारप्रसक्तरूपव्यावृत्त्या वेत्रात्मेह साध्यः; ततश्च वेद्यात्मकपराग्भूतदेहादिविपरीताकारावभासप्रत्यगात्मनियतसंविद्धानात्तन्नियताहंप्रत्ययव्यवस्थापकतया पूर्वभाष्यविवक्षितार्थाभिव्यक्त्यार्थवदेवेत्यर्थः । पूर्वपक्षयुक्तश्रुतिपरिहारः पूर्वपक्षसिद्धान्तवाक्यवृत्त्याश्रयणेन तदुत्तरवाक्योक्त इत्याह—ब्राह्मणं तु भूतचैतन्यं निरस्येति । इदानीमात्मनः प्रमेयत्वनिवृत्तिनिदानभूतं सर्वार्थधीनिष्ठभाननियमं ग्रन्थस्थमाह—अत्रेदं सारमिति । ननु वेत्तुरभानेऽपि तत्समवायादेवान्यवेद्यवैलक्षण्यं वस्तुतोऽस्त्येव, प्रातीतिकं तु तद्भासिप्रतीत्यन्तरापेक्षमस्त्विति कथमनतिशयोक्तिरित्याशङ्क्याभिप्रायमाह—अयं भाव इति । भासमानस्वभाववित्तिप्रत्युपरज्योपरञ्जकत्वमेव तावत्तच्छून्यावस्थाव्युदास्यर्थस्य वेद्यत्वमिति प्रागेव स्थापितम् । तत्र वेत्तुस्तदन्तर्भावाभावे 'विदितमिदं केन' ? इति सन्देहार्हं तद्रूपमवभासेत, न तु तथा भासत इति प्रतिपुरुषनियतस्वरूपमेव वेद्यावस्थमर्थजातं प्रसिद्धं नियतफलं च; न तद्धीसमवायित्वमात्रकृतम्, विशिष्टावस्थापादनस्य व्यवहारगोचरत्वस्य च भाननियतत्वात्; वित्त्यन्तरापेक्षत्वे च तदसिद्धेः कदाचित्तदभावप्रसङ्गात् तन्नित्यत्वस्य चानुभवसिद्धत्वात् सर्वधीस्थतैव वेत्तुरुपेयेत्यर्थः । वित्त्यन्तराद्धानोपगमे चेति आत्मनो वित्त्यन्तरवेद्यतोक्तिरसदभ्युपगममात्रेणानित्यत्वदोषोक्त्यर्थैव । वस्तुतस्तु स्वकर्मकवित्तौ स्वस्य कर्तृत्वासम्भवात् तनवभासमानात्म-

१. त्वादात्मनः. क.
२. Omitted, स्वपरयोः. क.
३. वैलक्षण्यपहता. ख.
४. मानोपमे. क.

वित्त्यन्तरस्य नित्यं वैलक्षण्यद्वयं न स्यात्। वित्त्यन्तरं चेत् स्वप[1]रवेद्यभेदकम्, वेत्तृता न स्यादिति वस्तुतोऽपि धीसमवायो दुःसाधः। न च वस्तुतो धीसमवायात् स्ववेद्यता; न हि [2]यस्य दीपेन यत्प्रकाश्यं तत्तस्यैव वेद्यं दृष्टम्; [3]कर्मत्वकर्तृत्वयोरेकस्यैकस्यां क्रियायां चासम्भवः; परस्था क्रियाफलवत्ता हि कर्मता, [4]न तथा कर्तृतेति। विवक्षया च न वस्तुसिद्धिः।

धीरमतम्

यद्धीरेणोक्तम्— यथा 'अहम्' इत्यभाने तत्सम्बन्धितयार्थो न भासेत, एवं स्वपरभानभेदो न स्यादिति; तस्याप्युक्तविधैव। प्रत्यक्षश्चायमहंधीभातः, साक्षाद्भानात्। तेनांशेन धियां प्रत्यक्षत्वेऽपि वेद्यांशेनानुमादिव्यवस्था; वेद्यभूतकर्मप्रवणा हि गुणकर्मभूता धीर्वेद्यभेदात् भिन्ना; बुद्धीन्द्रियदेहान्यता चाहंधीत एव। ज्ञेयज्ञानरूपा हि स्कंधाः अहंधीविरुद्धेदंधीग्राह्या

---

नोऽर्थवित्तिसमवायित्वसिद्धिरपि न स्यादित्याह—वित्त्यन्तरं चेदिति। वेत्तुर्धीस्थतया वेद्यावस्थोपरञ्जकत्वानुपगमेन धीसमवायित्वमात्रोपगमे धीस्वभावप्रकाशितार्थस्य प्रकाश्यावस्थया सर्वसाधारण्यमहेयमित्याह—न च वस्तुतो धीसमवायादिति। ननु कर्मणोऽपि कर्तृत्वं व्यवहारप्रसिद्धं शाब्दस्मृतिसङ्गृहीतं चेति कथं वेत्तृता न स्यादित्युच्यत इत्याशङ्क्य तदसम्भवमुपपादयति—कर्मत्वकर्तृत्वयोरिति। धात्वर्थक्रियाश्रयः कर्ता, परस्थक्रियाफलवत्कर्मेति नैकस्य द्विरूपतोपपद्यते। विवक्षामात्रेण लोके व्यवहारः। न च विवक्षामात्रेण वस्तुसिद्धिरित्यकर्मतैवेत्यर्थः। नन्वर्थवित्त्यगोचरत्वे वेत्तुर्वेद्यत्वव्यवस्थानुपपत्त्यतिरेकेण भावव्यवस्थानुपपत्तिः परेणोक्ता सा ग्राह्या चेत्तन्निदानं वाच्यम् न चेद्दूषणम्, इत्याशङ्क्योक्तमेव तन्निदानमित्याह—यद्धीरेणोक्तमिति। समवायव्यवस्थायां सत्यामपि समवायस्याव्यवस्थापकत्वोक्त्या वेद्यत्वाव्यवस्थैवेत्थमुपपादितेत्यर्थः। नन्वहंधीः प्रत्यक्षादिषु क्वान्तर्भूता आत्मनि प्रमाणमित्यत्राह— प्रत्यक्षश्चायमिति। न चैतावता मानभेदासिद्धिरपीत्याह—तेनांशेनेति। ननु धीस्वभावप्राप्ते कर्मप्रवणत्वे काचिदपि धीर्नात्मनि स्वतन्त्रेति देहादिभ्यो भेदधीरपि न स्यात, 'इदमस्माद्भिन्नम्' इति स्वतन्त्रधीग्राह्यत्वाद्भेदस्येत्यत्राह—बुद्धीन्द्रियदेहान्यता चेति। मेयोपसर्जनात्मभासिन्यप्यहंधीरेव भेदग्राहिणी; न भेदभानार्थं स्वतन्त्रमेव भानान्तरमाश्रीयते, यतः कर्मकर्तृत्वाविरोधाङ्गीकारः स्यादित्यर्थः। कुत इत्यत्राह—ज्ञानज्ञेयरूपा होति। विलक्षणाकारभानमेव भेदभानम्।

---

१. स्वेद्यकं वेद्यता. क. ख. २. यस्यात् दी. क.
३. सकर्मकर्तृत्वयोः ख. ४. न तथा न कर्तृ. क.

नाहंमित्यर्हाः। किञ्च देहादिभिन्न एव 'अहं जानामि' इति भाति। न हि कराद्यवयवं वस्तु 'अहम्' इति भाति। एवं च 'अहं गच्छामि' इति गौणेन लाक्षणिकेन वाहंशब्देनानुविद्धा देहधीः,। 'ममात्मा' इत्यपि लक्षणया देह एव ममशब्दः, चेतन [1]एवात्मशब्दो मुख्यः। वेद्यासमवेतापि धर्वेद्यव्यवहारानुगुणयात् वेद्यस्योच्यते। अहंधिया [2]चात्मा स्वरूपत्वेन भातः सन्नकारणश्च, कारणकल्पने मानाभावात्। अतो नित्यः। अर्थवित्त्यधीनभानतया सदा न भाति। सर्वगतश्च, सर्वत्र तद्गुणोपलम्भात्, गुणदेशगतिकल्पने गतेश्चासमवायिकल्पने गौरवापत्तेः। न च सर्वगतत्वे देहाद्बहिरपि तद्गुणधिया भाव्यमितिवाच्यम्; तद्गुणाना[3]मात्ममनःसंप्रयोगजत्वात् संयोगस्य च द्विष्ठतया मनसि वृत्तेः मनसश्च देहान्तरवस्थितेरसमवा[4]यिदेशे च कार्योत्पत्तेर्न बहिस्तद्गुणधीः। न चैवं देहेऽपि गत्यकल्पनम्, तत्र हि

'अहम्' 'इदम्' इति चान्योन्यविलक्षणाकारत्वाद्वेत्तृव्यतिरिक्तस्य सर्वस्येदंधीनियतत्वात्तदन्यत्वं व्यक्तमेवेत्यर्थः। प्रातिस्विकरूपनियतभानं च देहादि; तन्नियमहीनमहंभानमित्यपि भेदसिद्धिरित्याह—किं च देहादिभिन्न एवेति। तत्तद्ग्राहकेन्द्रियादिव्यापाराभावेऽपि सुसूक्ष्मार्थनिमग्नचित्तस्य तद्धीः 'अहं जानामि' इत्येवंरूपैवेत्युक्तम्, 'कस्यापीदं विदितम्' इत्येतदवसायिधीजन्माप्रसिद्धेः। अतोऽनुभवसिद्ध एव भेद इत्यर्थः। ततश्च देहादौ प्रयोगो युक्त इत्याह—एवं चाहं गच्छामीतीति। नन्वात्मसमवायित्वेऽर्थधियो वेद्यनिरूप्यत्वायोगाद्वेद्यसमवायितैवेति सैवात्मधीरिति न घटत इत्यत्राह—वेद्यासमवेतापि धीरिति। एतच्च प्रागेवोपपादितम्। बुद्ध्याद्यन्यत्वसिद्धौ नित्यत्वं विभुत्वं च सुलभमेवेत्याह अहंधिया चात्मेति। ननु तद्गुणानां प्रादेशिकत्वं गुणिनो विभुत्वविरोधीति शङ्कां निरस्यति—न च सर्वगतत्व इति। गुणानामपि कार्याणामसमवायिकारणे प्रादेशिके प्रादेशिकत्वं स्यादिति न तद्गुणिनः प्रादेशिकत्वगमकमित्यर्थः। नन्वात्मनो गतिकल्पनादिहानार्थे विभुत्वाश्रयणे देहेऽपि तदापत्तिरित्याशङ्क्य विशेषमाह—न चैवं

१. एवास्मच्छब्दः. क. २. चात्मना स्वरूप. ख.
३. Omitted आत्म. क. ४. वायिनो देशे. ख.

सर्वत्र स्थितिः [1]योग्यधीनिवृत्तिबाधिता; आत्मनि तु न सर्वत्र धीर्योग्या। अग्न्यूर्ध्वज्वलना[2]दौ चादृष्टं निमित्तम्; अदृष्टवदात्माग्निसंयोगोऽसमवायिकारणम्; न च निमित्तमपि स्वदेशे कार्यकरमिति देहाद्बहिरूर्ध्वज्वलनादि। न च स्वप्रकाश एवात्मा, एवं तुरीयेऽपि प्रकाशान्मोक्षस्य पुरुषार्थतेति वाच्यम्; स्वप्रकाशत्वे हि जाग्रत्स्वप्नतुरीयेष्विव सुषुप्तेऽपि प्रकाशापत्तिः। प्रकाशस्वभावो हि न सुष्वापेत्यन्यथा। न च मोक्षस्यापुरुषार्थता; [3]अर्थवित्त्युपरमे सन्मात्रतया स्थितिरप्यर्थ्यते विवेकिभिर्विविधदुःखसंभिन्न[4]सुखजिहासया। न च वाच्यम्——विभुश्चेदात्मा सर्वदेहेष्वेक एवास्त्विति। न हि स्वात्मनीव परात्मनि 'अहम्' इति धीः; किन्तु परात्मनोऽनुमाग्राह्यता, न भोक्तृतया धीरित्यन्यथाभानान्नानात्वे सुखदुःखादिव्यवस्थापि नोपाधेः कल्प्या;

---

देहेऽपीति। नन्वग्न्यूर्ध्वज्वलनादेरदृष्टकारणकत्वमभ्युपगतम्, तस्यादृष्टनियतदेशत्वं च नास्तीति; तत्साम्येन बुद्ध्यादेरपि बहिर्वृत्तितापद्येतेत्याशङ्क्य तद्वैषम्यमाह — अग्न्यूर्ध्वज्वलनादाविति। ननु मोक्षचिन्तकाङ्गीकृतं स्वप्रकाशत्वमनादृत्य किमित्यहंधीगोचरत्वमाश्रितमित्याशङ्क्य तदनुपपत्तिमाह—न च स्वप्रकाश एवात्मेति। सुषुप्त्यनुपपत्तिप्रसङ्गात्तन्नाङ्गीक्रियते; मोक्षस्य तु पुरुषार्थत्वमतितीव्रापरिहरणीयदुःखनिवृत्त्युपायतयैव विवेकिभिरिष्यते अल्पकालानेकविधदुःखग्रस्तबह्वायाससाध्यक्षयिष्णुसुखनिवृत्त्यभ्युपगमेनैवेति स्वप्रकाशत्वानङ्गीकारेऽपि न हानिरित्यर्थः। नन्वात्मनो विभुत्वाश्रयणे नानाभूतः प्रतिक्षेत्रमिति किमित्यङ्गीक्रियते? एकस्यैवाकाशस्य सर्वजीवश्रोत्रत्वमुपाधिभेदमात्रेणेष्यते; तथा देहाद्युपाधिभेदादेकस्यैव नानाजीवत्वोपपत्तेः नानात्वममानकमिति शङ्कां निरस्यति—न च वाच्यं विभुश्चेदात्मेति। न तावच्छब्दगुणकद्रव्यं शब्देन्द्रियमितिवत् स्वात्मनः परात्मनश्चैकरूप्येण स्वस्वरूपभानमस्ति, परात्मनि 'अहम्' इति भानाभावात्। अहंधीगोचरतया च स्वरूपधीरुक्तेति विलक्षणधीरन्यत्वमेव नयेत्। सुखदुःखादिव्यवस्थोपाधिकल्पनाहानमपीति लाभः। एकत्वस्यानाद्यविद्यातत्कार्यदेहोपाधिनिर्वाह्यसंसारानु-

---

१. र्येबोधिता. क. २. नादौ त्वदृष्टम्. ख.
३. यतोऽर्थवित्त्युप. ख. ४. न्नसुखयोर्दुःखतया. ख.

### अद्वैतेदूषणोद्भावनम्

आत्माद्वैते ह्यनाद्यविद्यया देहाद्युपहितः सद्वितीय इव जीवात्मा भाति । अनाद्यविद्यैव संसारः, विद्योदय एव तदस्तमयो मोक्ष इत्यास्थेयम् । न चाद्वैते मानम् । अथ प्रत्यक्षं विधातृ अस्पृष्टान्योन्यभेदमद्वैते मानम्, तन्न; [1]विधात्रपि रूपं रूपतया रसं रसतया विधत्ते, न पुनः सर्वमेकस्वरूपतया; यदि हि यथा रूपे धी[2]धारा तथाभूता [3]यदि रसं रसयतः स्यात्, तदा प्रत्यक्षादद्वैतं स्यात्;न त्वेवं सर्वबोद्धृधीः यच्च मेयविकल्पात् सामान्यमेव[4] तत्त्वमित्युक्तम्, तत्सामान्यविशेषवस्तुनोः सम्बद्धयोः 'इह' इति बुद्ध्यभावेऽपि साधितत्वाद-

---

भवाविद्यानिवर्तकविद्यालभ्यतन्निवृत्तिरूपमोक्षाङ्गीकाराधीनत्वात् तदङ्गीकारश्चैकात्म्ये दृढसिद्धे स्यात्, न च तत्र मानमस्तीति तत्कल्पनालाघवमेवाश्रयणीयमित्यर्थः । ननु मानाभावोऽसिद्धः, प्रत्यक्षमेव तत्प्रमाणमिति शङ्कते—अथ प्रत्यक्षं विधात्रस्पृष्टान्योन्यभेदमिति । व्यावृत्तिपुरःसरत्वात् द्वैतप्रतीतेः व्यावृत्तेश्चाभावरूपत्वान्न प्रत्यक्षग्राह्यतेति सर्वानुगतसन्मात्रग्राहि प्रत्यक्षं स्यात्; तथाप्यात्मत्वासिद्धिरिति न शङ्कनीयम्; 'अहमस्मि' इत्यात्मानुगतत्वात्तत्प्रतीतेः तत्रास्तिबुद्धेरात्मापेक्षत्वादनपेक्षास्मिधीरेवावशिष्यते; तत्र भ्रान्त्यारोपितरूपान्तरतिरोधानात् 'अस्मि' इत्यनुवृत्त्यप्रसिद्धिरिति सद्रूपानुवृत्त्यैव सिद्धमिति प्रत्यक्षमेवात्माद्वैतमिति शङ्कार्थः । दूषयति—तन्न विधात्रपि रूपं रूपतयेति । व्यावृत्तिर्हि विशेषणयोगधिया विशेष्यवर्तिन्येव भातीति तत्स्वरूपभेदधीपूर्विकैवेति स्वरूपभेदस्य प्रत्यक्षत्वमनिवार्यम्; अन्यथा धारावाहिकरूपधीतुल्यैव रसधीरप्यनुभूयेत; न तु कस्यचिदभ्रान्तस्य तथानुभव इति न प्रत्यक्षत्वमित्यर्थः । यच्च भावरूपस्यापि भेदस्याप्रत्यक्षतार्थं विशेषणविशेष्यतयाभिमतयोः सामान्यविशेषयोरन्योन्यमन्यानन्यतयानुवृत्तव्यावृत्ततया सम्बन्ध्यसम्बन्धितया च मेयत्वायोगादेकस्यैव मेयत्वे सर्वमित्यनुगतं महासामान्यमेव तत्त्वमित्युक्तम्, तच्चायुक्तम्; निर्विकल्पकावस्थायामव्यक्तत्वेऽपि सविकल्पकधिया द्वयोरन्यत्वस्य व्यक्तत्वादर्थनिष्ठसम्बन्धास्फुरणेऽपि नियतबौद्धसम्बन्धभाक्त्वस्य प्रागेवोपपादितत्वादिहंप्रत्ययनिवृत्तेश्च अर्थनिष्ठसम्बन्धास्फूर्त्यैवोपपत्तेरित्याह—यच्च मेयविक-

---

१, विधात्रविरूपम्. क. विधतृरूपम्. ख. २. पे धियातथा. क. पेधीधारतथा. ख.
३. ता एव यदि. ख. ४. मेव सत्ताख्यं वस्त्विति सन्मात्रमेव तत्त्व. ख.

[1]युक्तम्। अथागमादेवाद्वैतम्, तन्न; आगमस्य कार्यैकपरस्य सिद्धे तत्त्वे न मानता। किञ्च वाक्यात्मनोऽनेकपदार्थात्मनि वाक्यार्थे धीजननात्ततो नाद्वैतम्। अथ "एष नेति नेति" इति सर्वोपाधिनिषेधान्नानावस्त्वन्तरवारणादद्वैतम्, तन्न; यो हि 'एषः' इति सद्रूपतया निर्दि[2]ष्टः पदार्थः, सोऽसद्रूपापादकेन [3]नञा सह संबन्धुमयोग्यः अस्ति नास्तीतिवत्। अन्वयायोग्ययोश्च पदार्थयोः न वाक्यार्थीभवनम्। निषेधवाक्यैर्हि नात्यन्तिको निषेधः; किन्तु क्वचित् कस्यचित्; अद्वैतवादे चात्यन्तनिषेधः, मस्त्रोक्तिप[4]राहतः। "लब्धरूपे क्वचित् किञ्चित्तादृगेव निषिध्यते।" इति हि स्रोक्तिः। प्रत्यक्षविरुद्धश्चाद्वैतबोधक आम्नायो न यथाश्रुति युक्तः। यच्च प्रपञ्चेन भाषितम्—"प्रत्यक्षादिविरोधेऽप्याम्नायस्य बलीयस्त्वात् प्रत्यक्षादेर्भ्रान्तता" इति, तन्न, प्रत्यक्षादिविरोधे हि पदानामन्वयायोग्यत्वात् आम्नायार्थाबोधात्। अतः प्रत्यक्षादिविरोधादाम्नाये गौणी लाक्षणिकी वा वृत्तिः। तत्रानन्दश्रुतयः स्वाभाविकदुःखा-

---

त्यादिति। ननु श्रुतिप्रसिद्धमद्वैततत्त्वमिति न मानाभाव इति शङ्कते—अथागमादेवेति। दूषयति—तन्नेति। कार्यैकविषयत्वाभावेऽपि स्फोटपक्षानङ्गीकारात् पदार्थान्वयपुरस्सरैव वाक्यार्थधीरिष्टेति द्वैतोपजीविनो वाक्यान्नाद्वैतधीरित्याह—किंच वाक्यात्मन इति। तथापि निषेधमुखप्रवृत्तानि वाक्यानि तत्साधकानीति शङ्कते अथैष नेति नेतीति। दूषयति—तन्नेति। परस्परान्वयायोग्यत्वान्न तत्परतेत्यर्थः। नन्वेवं सर्वनिषेधवाक्यानुपपत्त्यापत्तिरित्याशङ्क्य अन्येषामुपपत्तिमिहानुपपत्तिं चाह—निषेधवाक्यैर्हीति। प्रत्यक्षविरोधेनान्यार्थतोपेयाद्वैतश्रुतेरित्याह—प्रत्यक्षविरुद्धश्चेति। यदुक्तम्—श्रुतेस्तात्पर्यलिङ्गवत्याः प्रत्यक्षादिबाधेऽपि सामर्थ्यमस्ति, भ्रान्तित्वेनापि तदुत्पत्तेः प्राचुर्येण दर्शनात्तदुचितदोषकल्पनयापि तत्प्राचुर्यमस्ति, भ्रान्तित्वेनापि तदुत्पत्तेः प्राचुर्येण दर्शनात्तदुचितदोषकल्पनयापि तत्प्राचुर्यस्याङ्गीकारार्हत्वादिति, तदनूद्य दूषयति—यच्च प्रपञ्चेनेति। पदतदर्थतदन्वययोग्यत्वग्राहकतया तदुपजीविनी श्रुतिरेव गौणादिवृत्त्यर्हतयान्यथानेयेत्यर्थः। तदन्यथानयनं विशेषनिष्ठं दर्शयति—तत्रानन्दश्रुतय इति। दुःखाभावमात्रार्थत्वे कथं

---

१. युक्तम्. क. २. परामृष्टः. ख.
३. केन नन्तासह. क. ४. Omitted. परा. क.

भावपराः। लौकिकानन्दाल्पतोक्तिः दुःखानुषङ्गात्। एकत्वश्रुतय एकस्मिन् देह एक एव स्वामीत्येवंपराः। नानात्वनिषेधश्रुतिरनेकदेहग्रहेऽप्येक एवात्मेत्येवंपरा। 'एष नेति नेति' इति देहादीनामात्मत्वनिषेधः। विज्ञानश्रुतयश्चिच्छक्तियोगपरा व्योमादिभ्यो भेदफलाः सर्वात्मश्रुतयः। सर्वस्यात्मार्थत्वेनोपचारात्। 'आत्मनि ज्ञाते सर्वं ज्ञातम्' इति श्रुतिरात्मज्ञानं परमपुरुषार्थमोक्षफलम्, तदन्यत् सर्वं ज्ञानं कृतार्थमित्येवंपरा इति दिक्। अथ यत् प्रकाशते तत्प्रकाशादभिन्नम्, प्रकाशात्मकं च ब्रह्म, [1]अतो ब्रह्मात्मकं सर्वमित्यद्वैतं ब्रह्म, तन्न, एवं हि नानाभूताकाराणां प्रकाशादभेदे प्रकाशस्यापि नानात्वापत्तेः नाद्वैतम्। अथ विविधोऽयमाकारप्रपञ्चोऽविद्याध्यासात् भाति, तन्न, सदात्मा

---

लौकिकानन्दस्य ततो न्यूनतोक्तिर्नेत्यत्राह—लौकिकानन्दाल्पतोक्तिरिति। एकत्वावधारणश्रुतेर्गतिमाह—एकत्वश्रुतय इति। नानात्वनिषेधश्रुतेस्तदनधिगतार्थत्वमाह—नानात्वनिषेधेति। निषेधश्रुत्यभिप्रायमाह—एष नेति नेतीति। विज्ञानरूपत्वोक्त्यर्थमाह—विज्ञानश्रुतय इति। सर्वस्यात्मश्रुतिरौपचारिकीत्याह—सर्वात्मश्रुतय इति। आत्मज्ञानमात्रात्सर्वस्य ज्ञातताश्रुतिश्चानात्मनः काल्पनिकत्वं विनापि सदर्थैवेत्याह—आत्मनि ज्ञात इति। एवं श्रुतेः प्रामाण्यमन्यथाप्युपपद्यमानं न स्वमूलप्रत्यक्षादिबाधे समर्थमिति भावः। पुनश्च परोक्तं विधान्तरमाशङ्कते—अथ यत्प्रकाशत इति। ननु यत्प्रकाशत इति प्रकाशकर्तृतोच्यते, प्रकाशादभिन्नमिति तक्रियैक्यम्, न च क्वचित्कर्तुः क्रियैक्यं प्रसिद्धमिति कथमाशङ्का? उच्यते—न कर्तृविवक्षया प्रकाशत इत्युच्यते; वित्तेर्हि स्वभाव एव प्रकाशमानत्वम्, अन्यथार्थस्य तदपेक्षया प्रस्वापनिवृत्तिर्न स्यादित्युक्तम्। तेन प्रकाशमानस्वभाव इति संमतम्; तेन तद्दृष्टान्तेन सर्वस्यापि प्रकाशमानस्य तत्स्वभावतैवेत्युच्यते। न चागन्तुकत्वात्तदवस्थायाः स्वभावत्वानुपपत्तिः, ब्रह्मप्रकाशस्य नित्यत्वात्; तेन तदपेक्षया स्वभावत्वमविरुद्धमेवेत्यभिप्रायः। दूषयति—तन्न एवं हीति। तदभेदे प्रकाशस्यापि तद्धर्मत्वापत्तेरेकत्वोपगमविरोधः, विरुद्धधर्मकयोरैक्यायोगादित्यर्थः। नन्वविद्यारोपितानां नानात्वेऽपि तदधिष्ठानस्य प्रकाशस्य न नानात्वापत्तिरिति शङ्कते—अथ विविधोऽयमिति। परिहरति—तन्न सदात्मा प्रकाश इति। तदुपगमे

---

1. Omitted. अतो ब्रह्म. क.

प्रकाशः तेन सहाभिन्ना असदात्मान आकारा इति स्वमतहतम्; अप्रकाशात्मानस्ते कथं प्रकाशेरन् ? किञ्च अप्रकाशात्मन एव प्रकाशः सम्बन्धीति बाह्यार्थसिद्धावुक्तम् । किञ्च अत्यन्तासन्तं प्रपञ्चं कथमविद्यापि दर्शयितुमलम् ? न ह्यसत्ख्यातिरविद्या इति शक्यम्; अग्रहरूपा सा इत्युक्तम् । अतो नाविद्यास्तमयो मोक्षः; किन्तु अत्यन्तदेहेन्द्रियोच्छेदः । स च निःशेषसुखदुः[1]-खद[2]कर्मक्षयात्तदधिकारानुत्पादाच्च; अनादिदेहसन्ततिसञ्चितानल्पकर्मक्षयो भोगात्, निःशेषक्ष[3]यः शमदमब्रह्मचर्याद्यङ्गकेनात्मज्ञानेनापुनरावृत्तये श्रुतेन । आत्मज्ञानविधायपरा[4]र्थेऽपुनरावृत्तिफलश्रुतिः नियोज्यविशेषणं रात्रि[5]सत्रवत् ॥

[6]बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः ।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते ॥

---

ह्यैक्यानुमानोक्तिविरोधः, सत्यानृतयोरन्योन्यैक्यस्य सिद्धान्तविरोधात्; तदैक्यानुपगमे च प्रकाशस्यैव प्रकाशमानतेति नियमोक्तिर्बाधिता स्यादित्यर्थः । प्रकाशसम्बन्धितैवार्थस्य प्रकाशमानत्वम्, व्यक्तत्वादन्यत्वस्य; अन्यथा विशिष्टवित्त्ययोगाच्चैत्यैक्यानुमानं बाधितविषयमित्याह—किंच अप्रकाशात्मन एवेति । एवमनुमानोक्त्यसम्भवमुक्त्वैकात्म्यपक्षनिष्ठमाह—किंचात्यन्तासन्तं प्रपञ्चमिति । अनुभवबलात् तावदर्थस्य सत्त्वमेव प्रसक्तम्; यदि पुनरसदनुभवकरतयाविद्या क्लृप्तशक्तिः स्यात्, तदा तदाश्रयणेनासत्त्वं शङ्काऽर्हम्; तदसम्भवस्तूक्त इति मोक्षशास्त्रगतिरप्यविद्यास्तमयापेक्षया न नेयेत्यर्थः । कथं तर्हि नेयेत्यत्राह—किं त्वत्यन्तदेहेन्द्रियोच्छेद इति । तस्य गत्यन्तरासम्भवे हि लौकिकप्रमाणतदनुवर्तिकर्मशास्त्रविरोधेनाप्यविद्यानिवृत्तिमात्रपरतोपेया, तत्सम्भवान्न सेत्यर्थः । नन्वत्यन्तदुःखोच्छेदहेतुरन्यो नास्तीत्यत्राह—स च निःशेषेति । नन्वनादिजन्मसन्ततिसञ्चितकर्मक्षयस्तन्निवर्तकभोगादसम्भाव्य इति कस्तत्रोपाय इत्याशङ्क्य ततोऽप्यल्पनिवृत्तिरस्तु, निःशेषनिवृत्तिस्तदर्थंचोदितात्मोपासनात् स्यादित्याह—अनादिदेहसन्ततीति । नन्वपुनरावृत्त्युक्तिः स्तुतिपरेति नात्मज्ञानस्य विधेयतोपगम इत्याशङ्क्य नियोज्यविशेषणत्वकल्पनया फलपरताप्यस्त्येवेत्याह—आत्मज्ञानविधाविति ।

इत्यात्मवादस्थानकम्

---

१. दुःखकर्म. क.   २. तात्मकर्म.
३. क्षमः. क. ख.   ४. रार्थे. क.
५. Omitted रात्रिसत्रवत्. क.   ६. अयं नास्ति. क.

# अथ शब्दनित्यताधिकरणम् ॥

## ॥ ६ ॥ कर्मैके तत्र दर्शनात् ॥ ६ ॥

"विद्यमानोपलम्भनत्वात्" इति सूत्रावयवोक्तमानान्तरगम्यार्थत्वमानान्तरविरुद्धार्थत्वे सम्बन्धनित्यताबलादौत्पत्तिकसूत्रोक्ताद्धादद्वयेन निरस्ते। अथ शब्दानित्यतया सम्बन्धानित्यता तत्समाधिश्च सूत्रैरधिकरणम्। पूर्वपक्षस्तु—उत्पन्नविनाशिनः शब्दस्य न वृद्धव्यवहारात्सम्बन्धग्रहः; किन्तु समयादेवार्थधीः। शब्दत्वजातिनिरासाद्धि न शब्दत्वेन सम्बन्धग्रहः। न च शब्दत्वे विशेषोपहिते शक्तिग्रहः। श्रोत्रग्राह्यत्वोपाधेः सम्बन्धग्रह इति चेन्न। अस्तु तावदुपाधिरेकः; स तु सकलवर्णेष्विति न गौरित्यादिविशेषस्य स्वार्थे

---

"कर्मैके तत्र दर्शनात् ॥" कथमस्य सङ्गतिद्वयमित्याशङ्क्योपरितनशब्दनित्यतामात्रापेक्षया तदलाभेऽपि पूर्वसूत्रस्थसम्बन्धनित्यताव्यावृत्त्योपयोग्युक्तात्मविवेकानन्तरार्हसम्बन्धाक्षेपतत्समाधानपरतया सूत्रसङ्गतिलाभ इत्याह—विद्यमानोपलम्भनत्वादितीति। ननु तदुक्तस्य सम्बन्धस्य शब्दानित्यत्वेनाक्षेपो नास्तीत्याशङ्क्य पूर्वपक्षमाह—पूर्वपक्षस्त्विति। वृद्धव्यवहारगृहीतशक्तिमूलार्थधीकरता हि सम्बन्धः; स चानित्यत्वस्य क्षणिकत्वरूपत्वादनुपपन्नः, समयमूलत्वस्याहानादित्यर्थः। ननु व्यक्तिमात्रं क्षणिकम्, तत्स्था जातिर्नित्येति तदवच्छेदेन व्यक्तीनां वा व्यक्त्युपहितजातेरेव वा शक्तिग्रहणसम्भवात् कुतः समयापत्तिरित्याशङ्क्य शब्दत्वजात्यपेक्षया तावदुभयथापि तद्ग्रहो न स्यादित्याह—शब्दत्वजातिनिरासाद्धीति। सर्वशब्देषु गवादितुल्यानुवृत्तदृष्टत्वप्रसिद्धेः शब्दत्वासिद्धेः न तदपेक्षया तत्सिद्धिरित्यर्थः। ननु जात्यसिद्धावपि शब्दस्यैकनिमित्तप्रवृत्त्युपगमात् तदपेक्षयैव जातिसिद्धाविव सम्बन्धः सुग्रह इति शङ्कते—श्रोत्रग्राह्यत्वोपाधेरिति। दूषयति - अस्तु तावदुपाधिरेक इति। जातिसिद्धौ जातेर्व्यक्तिस्थतया व्यक्तिकार्ये सर्वत्र कारणत्वानपायादस्त्ववच्छेद्यतयाऽवच्छेदकतया वा शक्तिग्रहनिवेशः, उपाधिस्तु बहिष्ठो न शक्ति-

---

१. विरुद्धत्वे. क.
२. निरासाद्धि. क.
३. शक्तित्वग्रहः. क.
४. न तु. क. ख.
५. स्वार्थेन सम्बन्ध. ख.

सम्बन्धग्रहहेतुः । न च क्षणिकगादिव्यक्तिषु गत्वादिजात्या सम्बन्धग्रहः, गत्वादेरेव वा वाचकत्वग्रहः; गत्वादिजात्युपगमाशक्तेः; भेदे 'भातेऽप्यभेदधिया जातिसिद्धिः; गादिभेदाभाने त्वभेदधीः बौद्धोक्तयुक्तिहता भेदाग्रहव्यवस्थाप्या ज्वालैकत्वधीरिव । एतेन ये ज्वालायां प्रत्यभिज्ञा जातावित्याहुः, ते निरस्ताः । न च गादिभेदभानं नरशुकादिवक्तृभेदेऽपि, किन्तु वक्तृमात्रभेदे । अत एवैकस्य पुनर्वक्तृत्वे मनागपि न भेदधीः । नन्वेवं यत्नकृतोऽपि सम्बन्धो गादेरननुवृत्तस्य व्यवहाराङ्गं न स्यात् । तन्न, भिन्नेष्वपि गादिषु भेदाग्रहादभिन्नतामास्थाय समयक्रियाभिप्रायधिया लोकेऽर्थधीरित्येवं व्यवहाराविसंवादात् सफलता यत्नस्य । वेदे तु नाभि-

स्पर्शीति शक्तिसन्निपातकत्वयैव शक्तिग्रहहेतुरित्यतिव्याप्त्ययन्न हेतुतार्ह इति भेदान्न साम्यमित्यर्थः । अस्तु तर्हि गादिव्यक्तिस्थगत्वादिजात्यपेक्षया सम्बन्धग्रह इत्याशङ्क्य तज्जात्यसम्भवान्न तदपेक्षयेत्याह—न च क्षणिकगादिव्यक्तिष्विति । व्यक्तिभेददृष्टिसहभाविन्येवानुवृत्तिधीर्जातिविषयोपेता तद्भेदादर्शने भेदाग्रहमात्रेणापि ज्वालादिषु तद्ग्रहस्य प्रचुरदृष्टत्वान्न मानत्वमित्यर्थः । ज्वालोदाहरणे मानत्वविप्रतिपत्तिर्युक्तिहतेत्याह—एतेनेति । ननु गादिव्यक्तेर्भेदाग्रहणमसिद्धमित्याशङ्क्य तत्साधयति—न च गादिभेदभानमिति । वक्तृतद्यत्नभेदाद्युपाध्यधिकस्वरूपभेदः सूक्ष्मदृशामपि न भातीति व्यक्त एव व्यक्तिभेदाग्रह इत्यर्थः । नन्वेवं समयापेक्षयापि व्यवहारानिर्वाहादनित्यतया पूर्वपक्षोऽप्यनुपपन्न एवेति पृच्छति—नन्वेवं यत्नकृतोऽपीति । परिहरति—तन्न भिन्नेष्वपीति । यदि समयकृतसम्बन्धव्यक्तेरेव पुनर्दर्शनादर्थधीः, न व्यक्त्यन्तरदर्शनादिति तत्पक्षेऽपि नियमः स्यात्; तदायं दोषः स्यात्; तत्पक्षे त्वन्यदर्शनादपि स्यात्, भेदग्रहनिमित्ताभेदाभिमानाश्रयत्वात् समयस्य वक्त्रभिप्रायाविसंवादमात्राच्च लोकोक्तेरर्थवत्तेति व्यवहारनिर्वाहक एव समयः स्वविषयशब्दस्य पुनः प्रयोगाद्यभावेऽपि इति नोक्तदोष इत्यर्थः । वेदे तु वास्तवसम्बन्धापेक्षो व्यवहार इति तदर्थं नित्यत्वसाधनमित्याह—वेदे तु नाभिप्रायादिति । नन्वेवं सत्यपि शब्दत्वे तस्य

१. मात्रभेदः क. २. भात्यप्यभेदः. क.

प्रायादर्थधीः, वास्तवसम्बन्धादित्यभिधानस्य नित्यत्वं प्रसाध्यम्। न चानित्यत्वेऽपि व्यक्तिकारकादेर्जातिक्रियादिसम्बन्धो यत्नानपेक्ष इति शब्दस्यापि तथास्त्विति वाच्यम्। समवायोऽसावयुतसिद्धयोर्यत्नानपेक्षः, शब्दार्थयोर्न तथा; तयोर्हि पृथगाश्रयाश्रयित्वं, [1]पृथग्गतिमत्त्वात् युतसिद्धिः। इयं च यथासम्भवम्। एवं चानित्ये शब्दे वाच्यवाचकसम्बन्धो [2]यत्नादेव। न[3] च चक्षुरादेरिवानित्यस्य स्वभावादेव प्रमाज[4]नकत्वं शब्दस्यापि वाच्यम्।

---

साधारणत्वादर्थविशेषनियताभिधानशक्तिग्रहायोगाद्वर्णानामनित्यत्वे समयस्यावारणीयत्वात् किमिति प्राक् तदभावादेव समयापत्तिरभ्युपेता? उच्यते—सतोऽपि हि तस्य व्युत्पत्यर्थधीकालानुवर्तितया व्युत्पत्तिविषयत्वसिद्धौ नियतार्थधीनियन्तृत्वमात्रमगृहीतभेदवर्णानामपि वर्णक्रमस्यैवास्तु; न तावता समयापत्तिः, तस्याप्यभावे व्युत्पत्तेः कथंचिदप्युपायत्वासिद्धेः समयः सावकाश इत्यभिप्रायः। तदभिप्रायाग्रहणेनानित्यस्यापि लोके यत्नानपेक्षसम्बन्धप्रसिद्धेरभिधानाभिधेयसम्बन्धस्यापि तदनपेक्षत्वमित्याशङ्क्य विषयभेदप्रदर्शनेन परिहरति—न चानित्यत्वेऽपीति। समवायस्यापृथक्सिद्धनियतत्वात् स्वाभाविकत्वसम्भवाद्यत्नानपेक्षत्वं युक्तम्; शब्दार्थयोः पृथक्सिद्धयोः योगस्यान्याधीनत्वनियमाद्रज्जुघटयोरिव यत्नापेक्षः स उपेय इत्यर्थः। पृथक्सिद्धेर्विधाद्वयोक्तिः पृथगाश्रयाश्रयित्वं पृथग्गतिश्चेति योग्यतानुसारेण ग्राह्येत्याश्रितत्वगतिमत्त्वव्यवस्थया तत्सहभावासहभावेन च विषयभेदाद्विवक्षितेत्याह—इयं च यथासम्भवमिति। एवं सम्बन्धान्तरे यत्नानपेक्षे सिद्धेऽपि यत्नजन्यशब्दस्य सम्बन्धोऽपि यत्नापेक्ष एवेत्याह—एवं चानित्ये शब्द इति। ननु विषयप्रमितिजननशक्तिरूपोऽपि सम्बन्धोऽनित्यस्यापि यत्नानपेक्षो दृष्ट इति शब्दस्यापि तथास्त्वित्याशङ्क्य प्रथमश्रुतात्तदनुपपत्तेरन्यापेक्षत्वनियमे यत्नापेक्षैव कल्प्येत्याह—न च चक्षुरादेरिवेति। एवं नित्यतोक्तेरर्थवत्त्वं प्रदर्श्यानित्यत्वसाधकहेतोरुक्तस्य दूषणप्रसङ्गहानार्थं शब्दविशेषस्यैव पक्षत्व-

---

१. गतिश्च ख. २. यत्नादेरिव. क.
३. Omitted न च. क. ४. जननं श. क.

प्रथमश्रुताच्छब्दाद् बुद्धेः सम्बन्धग्रहापेक्षोक्ता । यत्नजतश[1] च शब्दस्याभिधानात्मकस्योच्यते, तत्प्रासाण्यप्रतिज्ञया तदधिकारात् । अतो यत्नानन्तरदर्शनादिति हेतोर्न भागासिद्धता अग्निघोषादेरतथात्वात् [2]वाच्या, पक्षस्य वा मानान्तरहतिः । न च मूलजलादिनाने[3]कान्तता, पूर्वास्तित्वमानेऽसतीति हेतोर्विशेषणात् । ननु शब्दे विशेषणासिद्धिः, प्रत्यभिज्ञया पूर्वस्थितिसितेः । एवं च पूर्वोऽपि यत्नोऽभिव्यञ्जकः परयत्नवत् । तन्न; विशेषधीपूर्विका ह्यभेदधीः प्रत्यभिज्ञा; भेदाग्रहे तु प्रत्यभिज्ञाभ्रमः । ध्वस्तोत्पन्नयोरन्यताऽनुमया, न [4]तु साक्षाद्विशेषग्रहादिति ज्वालादिवदप्रत्यभिज्ञैव । यदि हि विशेषाग्रहमात्रं प्रत्यभिज्ञा, कर्मण्यपि सा स्यात् । अथ स्वरूपग्रहे विशेषाग्रहो न [5]कर्मणीति न प्रत्यभिज्ञा, तर्हि ज्वालादेः स्वरूपग्रहे सा स्यात् । अथ स्वरूप-

---

मित्याह—यत्नजता च शब्दस्येति । नन्वेवमपि हेतोर्व्यभिचारदोषोऽपरिहार्य इत्याशङ्क्य विशेषणविवक्षोद्भावनेन परिहरति—न च मूलजलादिनेति । ननु पूर्वस्थितिग्राहिमानाभावरूपविशेषणमसिद्धम्, शब्दे प्रत्यभिज्ञाबलात् पूर्वास्तित्वावगमात्; तेनोत्तरयत्नस्याजनकत्वे सिद्धे प्रथमयत्नस्याप्युत्तरतुल्यत्वेनानुत्पादकत्वे व्यञ्जकत्वापत्तेः सहकारणत्वान्नित्यतैव स्यादिति चोदयति—ननु शब्दे विशेषणासिद्धिरिति । परिहरति—तन्न विशेषधीपूर्विका हीति । स्वरूपभेदे मानसिद्धे तदननुसन्धाधिन्येवाभेदधीः प्रत्यभिज्ञात्मकप्रमाणभावार्हाः । तदननुसन्धानादियं भ्रान्तिरेव । न च भेदग्राहिप्रत्यक्षाभावादेव मानतासिद्धिः, तदभावेऽपि ज्वालादावनुमयैव भेदाभ्युपगमादिहाप्यनुमानविरोधात् भ्रान्तितेत्यर्थः । विशेषाग्रहमात्रात्मकप्रत्यभिज्ञादिशङ्कया ग्रन्थे कर्मादिनित्यतापत्त्यादिक्रमेणायमेवार्थो दर्शित इति दर्शयति—यदि हि विशेषाग्रहमात्रमित्यादिना । नन्वस्थानादिसिद्धविशेषणविशिष्टयत्नानन्तरदर्शनहेतुसाधितयत्नकार्यत्वे सत्यपि यत्नजघटादेर्व्यवहाराङ्गत्वानपायाच्छब्दस्यापि तत्सम्भवाद्व्यवहारसिद्धशक्तिकस्य मानत्वसिद्धिरित्याशङ्क्य

---

१. जतापिशब्द. क. २. वाच्यपक्ष. ख.
३. अनेकान्तात् पूर्वास्तित्वामाने. क. ४. Omitted तु. क.
५. कर्मणतीति. क.

ग्रहेऽप्यनुमया ज्वालाभेदे प्रत्यभिज्ञा भ्रम', तर्हि 'शब्देऽप्यस्थानाद्यनु-मया भिन्ने प्रत्यभिज्ञा भ्रम इति यत्नात् प्रागस्तित्वासिद्धेर्यत्नानन्तरधिया यत्नजता। न चास्थानं घटादेरिव, येन तद्व्यवहाराङ्गता [2]स्यात्, अपि तु क्षणान्तरास्थानात्। न चोन्मीलितावस्थं चक्षुः क्षणिकमपि रूपधीव्यवहा-राङ्गम्, शब्दोऽपि [3]स्वार्थधियोऽङ्गमस्त्विति। उक्तं हि—'सम्बन्धबुद्ध्य-पेक्षाच्छब्दादर्थधीः; न सा क्षणिकात् इति' अस्थानात् समयादेवार्थधीः॥

किञ्च लोके शब्दं कुर्वित्युच्यते; करोतिश्चोत्पादने मुख्य इत्युत्पाद[4]नं लोकोऽपि मन्यते। यद्यप्यनेकहेतुप्रयोग एकत्र साध्ये निन्दितो वादेऽपि विशेष-तोऽमन्दत्वे हेत्वन्तराणाम्; तथापि मन्दामन्दधीशिक्षार्थे शास्त्रे युक्तः। अन्यथा हि मन्दधियामुक्तेऽप्यमन्दे राद्धान्तहेतौ मन्दामन्दविपक्षहेत्वाच्छादनाशक्तेर्न राद्धान्तधीः स्यादिति सफलावनेकहेतूपन्यासनिरासौ मन्दविषदष्टचिकित्सेवे-त्युक्तं द्वितीये भाष्ये। किञ्च [5]नानादेशेषु युगपच्छब्दधीः; सा चैकत्वान्निवृत्ता

अस्थानत्वसामर्थ्येनैव शङ्कां निरस्यति—न चास्थानं घटादेरिवेति। न च क्षणि-कत्वेऽपि चक्षुरादिवत्प्रमाजनकत्वसिद्धिः पूर्वसिद्धशक्त्यपेक्षत्वादिति प्रामाण्यानि-र्वाहात् समय एवानित्यत्वे गतिरित्याह—न चोन्मीलितावस्थमिति। एवं सूत्रद्वये-नैव पूर्वपक्षं समर्थ्य हेत्वन्तरार्थं तृतीयसूत्रमित्याह—किञ्च लोके शब्दं कुर्वित्युच्यत इति। नन्वनेकहेतूक्तिरयुक्ता अल्पाक्षरनियते सूत्रे, अमन्दत्वे सुतरामिति शङ्कामनूद्य परिहरति—यद्यप्यनेकहेतुप्रयोग इति। निशितधीपुरुषमात्रार्थे सूत्रे स्यादानर्थक्यम्; मन्दामन्दप्रज्ञाध्येत्रर्थं त्विदम्; ततो मन्दहेतुनिरासोऽप्यर्थवान्; तन्निरासाभावे हेतुबहुत्वमात्रधिया मन्दानां प्रामाणिकविपरीतार्थविश्वसापत्तेरिति शास्त्रे मन्दबुद्ध्यधिकारसूचनेनार्थवत्त्वमनेकहेतूक्तिनिरासयोरित्यर्थः। हेत्वन्तरं च यथाग्रन्थमाह—किंच नानादेशेष्विति। तत्राव्यक्तार्थभाष्यव्याख्याद्वारेणार्थोपपाद-

१. शब्देऽप्यनुमया. क.

२. Omitted स्यात्. क.

३. स्वार्थमङ्गधियः. क.

४. दनं लोकेऽपि- क.

५. नानंशेषु. क.

भेदे स्थिता शब्दभेदे हेतुः । अत्र भाष्यम् "असति विशेषे नित्यस्य नानेकत्वम्" इति । नानेकदेशत्वमित्यर्थः । भाष्यं चेदं[1] शङ्कानिराकारणार्थमित्युक्तम् । गोत्वादेरेक[2]स्याप्यनेकत्र युगपद्धीर्दृष्टेति न शब्दानेकत्वे लिङ्गमिति शङ्का । निरासस्तु गोत्वादेरप्यसति विशेषस्य देशत्वे नानेकदेशत्वम्; विशेषा एव नानादेशा भान्ति, न गोत्वम्; न हि 'इह गोत्वम्' इति भानम् किन्तु गोत्वादि[3]धर्मनिरूपितव्यक्तिधर्मभानम् । यदपि "इहप्रत्ययहेतुः समवायः" इति, तत् क्रियासमवायविषयम्, क्रिया हि धर्मान्तरनिरूपिते धर्मिण्यनुमेयेति इहधीहेतुः । अतः "सत्त्वान्तरे च यौगपद्यात्" इत्यनेन भेदद्वारा कार्यता शब्दस्य ।

किञ्च प्रकृतिविकृतिता शब्दस्य शाब्दस्मृतेरनुगुणा कार्यत्वे । सादृश्यमपि अवयवसामान्यात्; सावयवत्वात् कार्यः शब्दः । कर्तृभूम्ना च हेतु[4]बहुत्वात् सावयवतया शब्दस्यापि कार्यता ।

---

नार्थं भाष्यमनूद्याक्षरार्थमाह—अत्र भाष्यमिति । तत्प्रयोजनमाह—भाष्यं चेति । नित्यानित्यविवादविषयशब्दस्य नानात्वद्वारेणानित्यत्वसाधनार्थं हि युगपदनेकदेशवृत्त्युपलब्धिरुक्ता; तत्र हेतोर्व्यभिचारादसाधकत्वमाशङ्क्यते—सामान्यस्यैकस्य नित्यस्य युगपदनेकव्यक्तिवृत्तिदर्शनादिति।तन्निवृत्त्यर्थम् "असति विशेषे नित्यस्य" इत्युच्यते । व्यक्तिर्विशेष उक्तः; तस्य सामान्यं प्रति देशत्वे हि व्यभिचारः स्यात्; तस्मिन्देशत्वेनादृश्यमाने व्यभिचारो नास्ति; न तु देशत्वेन दृश्यते; न हि 'इह गोत्वमस्ति' इति तद्दृश्यते; 'गौरयम' इति दर्शनप्रकारस्य सर्वानुभवसिद्धत्वादिति हेतुसमर्थनार्थं तदित्यर्थः । नन्वेवं पदार्थवित्प्रसिद्धिर्बाधिता स्यादिति शङ्कां तत्प्रसिद्धेः क्रियासमवायविषयतोक्त्या परिहरति—यदपीहप्रत्ययहेतुरिति ॥

हेत्वन्तरं शाब्दस्मृतिप्रसिद्धं चास्तीत्याह—किञ्च प्रकृतिविकृतिता शब्दस्येति । सादृश्यानुभवानुगृहीतं च तत्, सादृश्यस्यावयवसामान्यनिमित्तत्वादवयवानां च कार्यत्वनियतत्वादित्याह—सादृश्यमप्यवयवसामान्यादिति । पुनश्च हेत्वन्तरमाह—कर्तृभूम्ना चेति । कार्यभूतं महत्त्वं सावयवत्वद्वारेण कार्यत्वहेतुरित्यर्थः ।

---

१. च शङ्कानिवृत्त्यर्थम् क. २. कत्वस्या क.

३. धर्मनिरू. क. ४. महत्त्वात् क.

शब्दानित्यत्वनिरसनम्

संप्रति पूर्वपक्षहेत्वनैकान्तिततकतोच्यते । यदि हि प्रत्यभिज्ञा स्थास्यति, तदा प्रागस्तित्वे मानात् यत्नानन्तरधीरभिव्यङ्ग्येऽपीत्यनैकान्तिकता । एवं सतोऽप्यदर्शनमित्यदर्शनमस्थानेऽनेकान्तम्।ननु नि[1]त्यत्वेऽपि विषयानागमाददर्शनम्, तच्च न खाश्रयखग्राह्यैकशब्दे । अतो नष्टस्यैवादर्शनम् । अथावरणादि तदग्रहबलात् कल्प्यम्; तन्न; दृष्टविरोधात् । एकदेशस्थैकेन्द्रियग्राह्याभिव्यक्तौ [2]सर्वशब्दधीः सर्वेषां च स्यात् दीपाभिव्यक्तघटदेशस्वरूपपरिमाणादिवत्।न च प्रतिशब्दमभिव्यञ्जकभेदान्न [3]सर्वशब्दधीः, अभिव्यक्तिर्हि न शब्दगता, सर्वेषां प्रसक्तेः; किन्तु श्रोत्रसंस्काररूपा । न चेन्द्रियाभिव्यक्तिस्तत्त-

उपरितनसूत्रतात्पर्यमाह—संप्रति पूर्वपक्षहेत्वनैकान्तिकतेति । तत्र यत्नानन्तरदर्शनहेतोः प्राक्सत्त्वग्राहिमानाभावविशेषणापेक्षतोक्तेः पूर्वोत्तरोपलब्ध्यैक्यग्राहिवक्ष्यमाणप्रत्यभिज्ञया प्रागस्तित्वसिद्धौ विशेषणहीनस्यानैकान्तिकत्वमुच्यत इत्याह—यदि हि प्रत्यभिज्ञेति । तथास्थानहेतोरपीत्याह—एवं सतोऽप्यदर्शनमितीति । द्वितीयहेतोरनैकान्तिकतोक्तिरयुक्तेत्याक्षिपति—ननु नित्यत्व इति । सत एवानुपलब्धिधीहेत्वभावात् स्यात्, प्रत्यक्षे चेन्द्रियसन्निकर्षो हेतुः; न च नित्यत्वे तदभाव इति पारिशेष्याद्विषयाभावादेवासन्निकर्ष इति दर्शनाननुवृत्तिः शब्दस्य क्षणनाशित्वे हेतुरेवेत्यर्थः । नन्वदर्शनकालेऽप्यस्तित्वे प्रत्यभिज्ञासिद्धे तद्दर्शनस्य हेत्वन्तरापेक्षत्वाश्रयणेन तदननुवृत्तिकृता दर्शनानुवृत्तिरिति शङ्कते—अथावरणादीति । दूषयति—तन्न दृष्टविरोधादिति । विषयेन्द्रियसन्निकर्षाधिकहेत्वाश्रयणे हि तादृक्प्रसिद्धालोकसमस्वभावतापत्तेः दृष्टप्रतिनियतशब्दधीबाधः स्यात्, सन्निकृष्टेन्द्रियसर्वपुरुषधीश्च स्यादिति नाशाश्रयणेनैवाविरोध इत्यर्थः । ननु प्रतिशब्दं व्यञ्जकभेदाश्रयणेन विरोध परिहार्य इत्यत्राह—न च प्रतिशब्दमिति । शब्दगते व्यञ्जककार्ये नियतशब्दधीरबाधिता स्यात्, तदा तूपलब्धृनियमो न स्यात्; तेन श्रोत्रसंस्कार उपेयः; तदुपगमे चेन्द्रियान्तरसंस्कारसाम्यापत्तेः सर्वविषयत्वापत्तिरवारणीयेत्यर्थः । ननु तदसाम्यमपि धीबलादाश्र-

१. नित्यत्वे वि. ख. २. सर्वशक्तिधीः क.

३. Omitted शब्द ख.

दिन्द्रियग्राह्यविशेषार्था दृष्टेति सर्वशब्दधीदुस्तरा; प्रत्यभिज्ञास्थितौ हि[1] दृष्टान्यता; न हि प्रत्यभिज्ञाख्यं प्रत्यक्षमसन्निहितदेशकालग्राहि। अथ संस्कार-सहितेन्द्रियजा प्रत्यभिज्ञा, तथापि भेदाग्रहतुल्या भेदग्राहिकयाऽनुमया बाध्या प्रत्यक्षान्तराद्विपर्ययाभावेऽपि कारणदोषधीतः। शुक्तिकारजतादौ प्रत्यक्षतो विपर्यये भेदाग्रहे तद्ग्रहभ्रम इति ज्वालाशब्दादावपि भेदाग्रहे तद्ग्रहभ्रमः। अन्यथाख्यातिपक्षेऽन्यथाभातेऽनुमा न स्यात्; अख्यातिपक्षे तु नानुमा शक्य-बाधा। यद्यपि शब्दे प्रत्यक्षान्न कदाचिदपि भेदग्रहः, तथाप्यनुमया भेदग्रहो ज्वलादिष्विव। न च यथा मण्डूकवसाक्तं चक्षुर्वंशमुरगरूपं गृह्णाति, तथा

---

यणीयमित्यत्राह—प्रत्यभिज्ञास्थितौ हि दृष्टान्यतेति। प्रत्यक्षस्य सन्निहितदेशकाल-ग्राहित्वप्रसिद्धेस्तदन्यस्वभावकल्पनया तत्स्वरूपमेव तावद्दुस्थम्। यदि पुनः सहकार्यन्तरयोगादसन्निहितग्राह्यपि कथंचिदाश्रीयेत, तथापि भेदाग्रहमात्रादपि तादृग्धीप्रचारान्मानान्तराविरोधबलादेव तत्संशयनिवृत्त्या प्रामाण्यलाभ इति; इहानुमानबाधात् न तल्लाभः, प्रत्यक्षत्वप्रयुक्तबलस्य भेदाग्रहरूपकारणदोष-दर्शनबाध्यत्वादित्यर्थः। कथमिह कारणदोषधीतस्तद्धीरित्यत्राह—शुक्तिकारज-तादाविति। प्रत्यक्षबाधविषये भेदाग्रहस्यान्वयव्यतिरेकाभ्यां तद्ग्रहभ्रमकरत्वाव-धारणाज्ज्वालाशब्दयोः प्रत्यक्षबाधाभावेऽपि तद्धीमात्रेण भ्रान्तिता सुग्रहे-त्यर्थः। भ्रान्तेरभेदग्राहित्वपक्ष एव च प्रत्यक्षविरोधादनुमानानुदयशङ्कापि; भेदाग्रहमात्ररूपत्वे विरोधाभावान्न तच्छङ्केत्याह—अन्यथाख्यातिपक्ष इति। ननु भेदा-ग्रहरूपकारणदोषधीरिहानुमानप्राबल्यप्रयुक्तभेदनिश्चयोत्तरकालभाविनी; प्रत्य-क्षेणैव कदाचिच्छब्दभेदभान एव तदनपेक्षा स्यात्, न तु तदस्तीति कथं कारण-दोषधीतः प्रत्यक्षस्य दौर्बल्याभिधानमित्यत्राह—यद्यपि शब्दे प्रत्यक्षान्न कदाचि-दिति। आनुमानिकभेदधियैव ज्वालायां प्रत्यभिज्ञाया भेदाग्रहरूपतोपगमात् शब्देऽपि तदुपगमो नानुपपन्न इत्यर्थः। ननु चक्षुषोऽपि सहायव्यवस्थया नियतार्थ-ग्राहित्वं दृष्टमिति श्रोत्रस्यापि नानुपपन्नमित्याशङ्कां व्युदस्यति—न च यथा मण्डू-

---

१. Omitted हि. क. २. Omitted देश. क.
३. दग्राहितया. क. ४. कदापि. ख.

संस्कारभेदाच्छ्रोत्रमपि कंचिदेव शब्दं ग्रहीष्यतीति; तत्र हि भेदाग्रहोऽशक्तेः शक्तिप्रतिबन्धात्; श्रोत्रे तु शब्दग्रहणार्थः संस्कारः सर्वशब्दार्थ इत्युक्तम्। अथ व्यञ्जकमणिदर्पणभेदान्मुखे नानारूपधीर्दृष्टा, तन्न; मण्यादिरूपानुरक्तमुखग्रहात्तत्र नानात्वम्; ससंस्कारश्रोत्रानुरक्तशब्दग्रहो नेह। अतो न तुल्यतेति श्रद्धयैव शब्दनित्यतोक्ता शब्दात्मके वेदेऽप्यनित्यतया निन्दा मा भूदिति। एवं वेदवेदार्थादरोऽन्धपरम्परया। इयं यदि नेष्टा, तर्हि वेदार्थज्ञप्रणीताद्वेदादर्थं निश्चित्य लोको व्यवहरतीति कल्प्यम्। अथ मानान्तरागम्यज्ञो न शक्यः कल्पयितुम्, तर्हि प्राज्ञैः स्वभोजनाद्यर्थसृजनैः सुप्रयुक्तदम्भविस्रब्धाः। वेदवादिनोऽपि हि दृष्टलोभादिमूलसम्भवे नादृष्टार्थां स्मृतिमाहुः। तथा

---

कवचाक्तं चक्षुरिति। तत्र तदञ्जनस्य शक्तिप्रतिबन्धकत्वं वंशरूपग्रहविरोधित्वात्; न संस्काररूपतया अनेकरूपवस्तुनो नियतरूपग्रहहेतुतेति न श्रोत्रसंस्कारस्य नियतविषयत्वे दृष्टान्ततेत्यर्थः। ननु मुखादिवर्त्यनेकत्वं संमतम्, मणिदर्पणादेर्व्यवस्थितरूपग्राहित्वं च प्रसिद्धमिति तत्तुल्यत्वं श्रोत्रसंस्काराणामिति शङ्कते—अथ व्यञ्जकमणिदर्पणाबिभेदादिति। दूषयति—तन्न मण्यादिरूपानुरक्तेति। व्यञ्जकभूतमण्यादिवर्तिदृष्टरूपाविविक्तमुखग्रहमात्रं तत्र, न मुखादिवर्तिव्यवस्थितरूपभानम्, शब्दवर्त्यवभासमाननानात्वं न व्यञ्जकवर्तीति व्यवस्थितग्रहो व्यञ्जकत्वेऽनुपपन्न एवेत्यर्थः। नन्वेवं वेदस्यामानत्वे तदादरो लोकेऽनुपपन्न इत्याशङ्क्य मानासम्भवाद् भ्रान्तिमूलः स उपेय इत्याह—एवं वेदवेदार्थादर इति। तदनुपगमे मानानपेक्षयथार्थज्ञानवत्पुरुषप्रणीतवेदादर्थं निश्चित्य व्यवहरतीति कल्पनीयमित्याह—इयं यदि नेष्टेति। तत्रापि मानविरोधे प्रतारणकुशलैः प्रतारिता ऋजुबुद्धय इति कल्पनीयमित्याह — अथ मानान्तरागम्यज्ञ इति। एतन्मीमांसकाभ्युपेतं चेत्याह—वेदवादिनोऽपि हीति। लोकायतिकशास्त्रकारोक्तश्चायं प्रकार इत्याह—तथा वेदेऽप्यस्त्वित्याहेति। तदनुपगमे शब्दविषयप्रत्यभिज्ञाप्रामाण्यं

---

१. कथं चित्. क. २. अभिव्यञ्जक. क.

३. वेदार्थारोऽर्थ. क.

वेदेऽप्यस्त्वित्याह बृहस्पतिः। अथैतन्नेष्टम्, तर्हि कार्यः समत्यभिज्ञप्रत्यक्ष-गम्यत्वे शब्दस्य यत्नः।

शब्दनित्यत्वस्थापनम्

उच्यते—परं शब्दं बोधयितुं वायवीयसंयोगविभागावारभ्येते। तयो[1]श्च श्रोत्रसंस्कारद्वारा शब्दाभिव्यञ्जकता। तत्र दीपादेरिन्द्रियसंस्कारेण [2]व्यञ्जकत्वादेकदेशस्थसर्वव्यक्तिदृष्टेस्तन्निवृत्त्यानभिव्यञ्जकत्वानुमा, पारिशेष्याच्चोत्पादकतानुमा तत्पूर्विका; प्रत्यभिज्ञया पूर्वस्थितेर्व्यञ्जकतान्तर-साधर्म्यबाधान्नियतविषयतानुमा; प्रत्यक्षपूर्विकानुमापूर्विकाया बलीयसी। न च [3]तद्ग्रहो भ्रमः, अनुमितानुमया भेदासिद्धेः। ज्वालाभेदस्तु प्रभा-ततिकार्यस्य प्रत्यक्षत्वात् सिद्धः। इह [4]तु न किञ्चित्प्रत्यक्षं भेदलिङ्गं कार्यम्, वायुसंयोगविभागात्मकश्रोत्रसंस्कारानुमितेर्व्यञ्जकान्तरसाम्यात्

---

समर्थनीयमित्याह—अथैतन्नेष्टमिति। तत्समर्थनमाह—उच्यत इति। श्रोतुरर्थ-बोधनार्थं तदुपायावधारितशब्दबोधं कर्तुं शब्दोच्चारणयत्नेन साक्षात् वायवीय-संयोगविभागौ क्रियेते इति तावत्सम्मतम्। तत्र शब्दस्य व्युत्पन्नतया प्रत्यभिज्ञाय-मानत्वाच्छ्रोत्रसंस्कारद्वारेण शब्दाभिव्यञ्जकत्वं तयोः स्वतः प्राप्तम्। तत्र दीपादि-दृष्टसर्वाभिव्यक्तिप्रसङ्गधिया तन्निवृत्तिमनुसन्धाय तयाभिव्यञ्जकत्वनिवृत्तिर-नुमेया; तत्पूर्वकमुत्पादकत्वानुमानमित्यनुमानान्तरपूर्वकं तत्; प्रत्यभिज्ञाप्रत्यक्ष-पूर्वकं नियताभिव्यञ्जकत्वानुमानमिति तद्बलान्नित्यतेत्यर्थः। ननु ज्वालायामिवा-न्यथोपपत्त्यैव दुर्बला प्रत्यभिज्ञेत्यनुमानपूर्वकमप्यनुमानमुत्पत्तिसाधकमित्यत्राह—न च तद्ग्रहो भ्रम इति। भ्रान्त्यैव हि तत्रान्यथासिद्धिः; भेदप्रसङ्गधिया च तच्छङ्का; उत्पत्तिलिङ्गं च तत्प्रसञ्जकम्; तत्त्विहासिद्धम्, तत्सिद्धेरिहाभिव्यञ्जकत्वनि-वृत्त्यनुमानाधीनत्वात्; तस्य च प्रत्यभिज्ञाबाधधीपूर्वकत्वेनान्योन्याश्रयतयानुदयान्न दौर्बल्यशङ्केत्यर्थः। ज्वालायां तर्हि कथमित्यत्राह—ज्वालाभेदस्त्विति। तत्र भेदोपस्था-पकलिङ्गं प्रत्यक्षमेवेत्यस्त्यन्यथासिद्धिशङ्केत्यर्थः। शब्दे तदभावं स्पष्टयति—इह तु न किञ्चिदिति। ननु ज्वालोत्थप्रभाततिदृष्टिस्तदवयवविशरणमात्रे लिङ्गम्; विशीर्णाव-यवत्वात् ध्वंसधीरनुमानान्तराधीना। ततो दृश्यमानान्येति अत्रापि न प्रत्यक्षमात्रसिद्धं

---

1. Omitted च. क.
2. व्यञ्जकदे. क.
3. तत्रग्रहः. ख.
4. Omitted तु. ख.

सर्वव्यञ्जकताप्र[1]सक्तेस्तन्निवृत्त्योत्पादकताप्यनुमितेः । प्रत्यक्षप्रभातत्या शीर्णावयवा ज्वालेत्यनुमेव ध्वंसानुमा; पुनर्ज्वालाप्रत्यक्षात् भेदानुमेति प्रत्यक्षद्वयं भेदाग्रहानर्हम्; तद्ग्रह एव भे[2]दाग्रहार्हो व्यवस्थाप्यः। किञ्च संयोगविभागौ लोकतः परनरार्थौ। तत्र श्रोतरि संस्कारानर्हौ श्रोत्रसंस्कारकौ, न तु शब्दोत्पादकौ; तथाहि शब्दार्थौ स्याताम्। एवं चैकैकशब्दधीकार्यात् संस्कारकसंयोगविभागा नानेति कल्प्यम्। भाष्ये 'संयोगविभागोपरमे शब्दश्रुतेर्न तौ व्यञ्जकौ' इति चोद्यं ताल्वादिसंयोगवि[3]भागाभिप्रायम्।

---

भेदलिङ्गम्। प्रत्यक्षत्वेऽपि च लिङ्गस्य तदनुमेयभेदस्य प्रत्यभिज्ञाप्रत्यक्षदृष्टाभेदबाध्यत्वमनिवार्यं तस्य प्रामाण्यसिद्धौ। तदसिद्धावनुमितलिङ्गानुमेयभेदधियोऽपि प्रामाण्यमहतमेवेति शङ्कां निरस्यति—प्रत्यक्षप्रभातत्येति। विभक्तावस्थावयवस्थित्यधिकाभावस्य निरस्तत्वाद्ध्वंसग्राह्यनुमानान्तरं नास्तीति नानुमेयलिङ्गानुमेयो ज्वालाभेदः; प्रत्यक्षसिद्धप्रभातत्युपरितनप्रत्यक्षसिद्धज्वालामात्रानुमेय इतीदं तावद्वैषम्यं स्थितम्। न च तत्साध्यानुमानदौर्बल्यात्तद्वैफल्यम्; भेदोपस्थापकप्रत्यक्षद्वयं भेदं विनानुपपन्नम्, प्रत्यभिज्ञा त्वभेदाभावेऽपि शुक्तिविषयरजतप्रत्यभिज्ञेवोपपन्नेत्येतद्विवेकलभ्यत्वात् बलवदबलभावस्येत्यर्थः। वायुसंयोगविभागयोः शब्दश्रोत्रसंस्कारकार्यकरत्वाविशेष एव च प्रत्यभिज्ञाबलावष्टम्भेन नियतविषयत्वकल्पना समर्थनीया। श्रोत्रसंस्कारोन्मुख्ये तु नियतधीदृष्टेः सैव प्रसक्ता, नेन्द्रियान्तरसंस्कारकसाम्यं प्रसक्तम्, संस्कार्यनानात्वात्तदनुपस्थितेः। तदुन्मुखत्वं च स्वतःसिद्धमित्याह—किंच संयोगविभागाविति। श्रोत्रर्थत्वं तावदुक्तम्; तस्य चानियतदेशत्वात् नियतदेशसंस्कारानर्हत्वे तदीयश्रोत्रसंस्कार एव तत्कार्यतयोपेयः, नाप्रसक्ता शब्दोत्पत्तिरिति व्यवस्थितवर्णधीकार्यतो व्यञ्जकनानात्वं न पूर्वधीबाधितमित्यर्थः। नन्वभिव्यञ्जकत्वे स्वतःप्राप्ते कार्यकल्प्ययोः संयोगविभागयोः कथमुपरतत्वादनभिव्यञ्जकत्वशङ्का भाष्यगतेत्याशङ्क्य संप्रतिपन्नताल्वादिसंयोगविभागाभिप्रायासेति घटयति—भाष्ये संयोगविभागोपरम इति। कथं तर्ह्युत्तरमित्याशङ्क्य कार्यकल्प्य-

---

१. प्रसिद्धेः. क. २. दाग्रहव्यव. क.

३. Omitted विभाग. क.

उत्तरम्—"न नूनमुपरमन्ति" इति कार्यकल्प्यवायवीयाभिप्रायम्। पर-भाष्येणापि वायवीयाभिप्रायं चोद्यम्—अभिव्यक्तिः कार्या अभिव्यञ्जक-देशस्थास्तु; व्यङ्ग्यं तु खदेशमेकम्, श्रोत्रान्तर्बहिश्च खमित्यन्यत्रत्यैर्व्यक्तं तदन्यदेशस्थैरपि ज्ञायेत। उत्तरभाष्यम्—शब्दव्यक्तौ स्यादेवम्, श्रोत्र-संस्काररूपा तु व्यक्तिरिष्टा; खमवच्छिन्नं श्रोत्रमिति न सर्वेषां धीः।

अपरमापाद्यचोद्यम्—आसन्नानासन्नयोर्धिया वायवीयाः प्राप्त्यन-पेक्षाः; अन्यथा ते व्यञ्जकाः व्यञ्जकान्तरकरा इति द्विविधा शक्तिः स्यादित्येक एव वायवीया यावत्संस्कारं श्रोत्राण्यप्राप्य संस्कुर्युः। अतो दूरासन्नयोर्युगपद्धीः स्यात्। शब्दोत्पत्तिपक्षे न चोद्यम्; वायवीयाः शब्दा-

---

श्रोत्रवर्त्यभिप्रायं तदित्याह—उत्तरं न नूनमुपरमन्तीति। नन्वेवं तदनन्तरमपि कथं वक्तृसन्निध्यभावेऽपि शब्दश्रवणं स्यादित्यापाद्यते इत्याशङ्क्य वायवीयानां व्यञ्ज-कत्वमवधार्यापि तत्कार्याभिव्यक्तिनिष्पत्तावेव निष्पादकतदपेक्षया तत्सन्निध्युप-योगो नातत्कार्यव्यङ्ग्यस्येति व्यङ्ग्यमन्यदेशेऽप्युपलभ्येतेति चोद्यमुपपद्यत इति परिहरति—परभाष्येणापीति। परिहाराभिप्रायमाह—उत्तरभाष्यमिति। कर्णशष्कुल्यु-पहितावस्थश्रोत्ररूपेण नानात्मकमेव खं संस्कार्यमुपेयते, न शब्द इति नातिप्रसङ्ग इत्यर्थः। कथं तर्हि तदुत्तरभाष्येण दूरस्थासन्नयोः युगपच्छब्दोपलब्धिः स्यादित्य-प्राप्त्यनुवादेन चोद्यत इत्याशङ्क्य तदभिप्रायमाह—अपरमापाद्यचोद्यमिति। यद्यपि तात्वादिसंयोगाद्यतुल्यतया वायवीयाः श्रोत्रदेशगत्यापि संस्कारारम्भार्हाः; तथाप्यप्राप्यैवारभन्त इत्युपेयम्; प्राप्तिपक्षे आसन्नश्रोत्रे प्रथमं संस्कारका भूत्वाना-सन्नश्रोत्रसंस्कारार्थं संस्कारकान्तरकराश्चेति द्वैविध्यकल्पनापत्तेः तद्धानार्थमप्राप्य संस्कुर्वन्तीत्युपेयमित्यापाद्य युगपच्छ्रवणप्रसङ्गश्चोद्यत इत्यर्थः। ननूत्पत्तिपक्षेऽपि क्रम-धीबलादासन्नदेशे शब्दोत्पादका भूत्वानासन्नदेशस्थशब्दोत्पादकराश्चेति कल्पना तुल्यैवेत्याशङ्क्य न वायवीयानां द्वैविध्यकल्पनेति परिहरति—शब्दोत्पत्तिपक्षे न चोद्यमिति। ननु शब्दपरम्पराश्रयणेऽपि द्वैविध्यमपरिहृतमेव; कार्यवर्ति तन्न कारणवर्ति इति को लाभ इत्याशङ्क्य तत्पक्षे लोकदृष्टमेव द्वैविध्यमङ्गीकृतम्

रम्भकाः; ततः शब्दादेव शब्दपरम्पराक्रमेण दूरस्थश्रोत्रे शब्द इति क्रमेण शब्दधीः। दृष्टं हि लोके मूलहेत्वपेक्षया 'कार्यं स्वकार्यापेक्षया कारणम्,[1] न तु व्यक्तिर्व्यञ्जिका दृष्टा। न च नायनतेजोऽव्यक्त आलोको व्यञ्जकः, तद्वद्व्यक्तः शब्दो व्यञ्जकोऽस्त्विति वाच्यम्; धीयोग्यताभिव्यक्तिरालोके स्वतः, न सजात्यपेक्षेति वायवीयः शब्दः संयुक्तसमवायाच्छ्रोत्रग्राह्योऽस्तु। योगोक्ता वा[2] संयोगाद्विभागाच्छब्दाच्च शब्दोत्पत्तिरस्तु। भेरीदण्डसंयोगसचिवा[3]द्भेरीखसंयोगात् खे शब्दजन्म, ततः शब्दादेव शब्दः। एवं वीचीचयसञ्चारवत् कर्णशष्कुल्यवच्छिन्ने खे जातः समवायात् ग्राह्यः। एवं वंशदलविभागसचिवाद्वंशदलखविभागात् खे शब्दजन्म, ततः शब्दपरम्परा। तथैवाद्यः शब्दः कार्यबाध्यः; अन्त्यः कारणबाध्यः; मध्यस्थाः कार्यबाध्याः कारणबाधकाः।

---

व्यङ्ग्यपक्षे त्वप्रसिद्धकल्पना स्यादिति विशेषमाह—दृष्टं हि लोक इति। कार्यद्वैविध्यं स्थावरजङ्गमकार्यवर्ति प्रसिद्धमेव, व्यक्तौ व्यञ्जके चाप्रसिद्धमिति व्यक्तिपक्षे तदाश्रयणं दोष इत्यर्थः। ननु व्यक्तिपक्षेऽपि व्यक्तस्यास्तु व्यञ्जकत्वम्, तच्च लोकदृष्टमिति शङ्कामपनुदति—न च नायनतेजोऽव्यक्त इति। यादृशमालोकस्यान्यव्यञ्जकत्वम्, तादृशं नायनतेजसो नास्त्यालोकं प्रति धीयोग्यतापादनम्; तद्योग्यता स्वाभाविक्यालोकस्येति नान्यापेक्षा। तत्स्वभावत्वादेवान्यस्यालोकापेक्षेति न तत्स्वभावस्य सजातीयापेक्षोपेयेति धीकरतयैव नायनापेक्षा, न तद्योग्यतार्थेत्यनुपपत्तिः व्यक्तिपक्षे स्थितेत्यर्थः। एवमप्रसिद्धकल्पनाक्षयात्कार्यपक्ष एव स्यादित्युपसंहरति—इति वायवीयः शब्द इति। कार्यतैव पूर्वपक्षे विवक्षितेति अवायवीयपक्षोऽभ्युपेयत एवेत्याह—योगोक्ता वेति। ननु भाष्यानुक्ता योगोक्तविधा किमित्यनुज्ञायत इत्याशङ्क्य न्यायसाम्यात् साप्युपेतेत्याह—योगोक्तविधापीति। कार्यपक्षनिरासकाले पृथग्योगपक्षनिरासयत्नदर्शनाच्चाभ्युपगमः सिद्ध इत्याह—

---

१. Omitted कार्यं स्वकार्यपेक्षया क. २. वासंयोगोवावि क.

३. वाद्भेरीदण्डसयो क.

[1]योगोक्तविधापि क्रमेण धिया तुल्यनयादभिमता भाष्ये तद्ग्रहान्निरस्ता 'अनुवाते दूरेऽपि शब्दधीः' इति। अनेन योगोक्तबौद्धोक्तयोर्निरासः, शब्दपरम्परयाप्राप्त्या ग्रहे अनुव[2]ातानुपयोगात्। शीक्षाकारोक्ते वायवीयशब्दे अनुवाते दूरे धीर्युक्तैव। दूरादूरयोर्युगपद्धीचोद्ये समाधिभाष्यम् "अभिघातेन" इत्यादि। तदेवं न व्यक्तिकरी व्यक्तिः। अभिघातप्रेरितकोष्ठ्यवायुना श्रोत्राच्छादकस्तिमितवातबाधः। सर्वत्र हि स्तिमितवातसत्ता तूललवधारणालिङ्गात्। बहवश्च कोष्ठ्या एकैकश्रोत्रव्यञ्जकाः क्रमगतयः क्रमाद्दूरादूरधीहेतवो यथाकार्यकल्प्याः उत्पत्तिपक्षवत्। श्रोत्रस्थस्ति[3]मितवातबाधेऽपि न सर्वबाध इत्यसर्वश[4]ब्दधिया कल्प्यम्॥ 'शब्दं कुरु' इति च निर्देशो मानपूर्वकः शब्दप्रयोगाभिप्रायः। युगपन्नानादेशेषु

अनुवाते दूरेऽपीति। कथं वायवीयपक्षाननुगतिस्तद्यत्नस्येत्यत्राह—शीक्षाकारोक्त इति। वायवीयपक्षे बाह्यवायुनोदनानुग्रहाद्दूरतरगत्युपपत्तेर्योगबौद्धमतनिरासार्थैवात्रानुवातदूरश्रुत्युक्तिरिति पूर्वपक्षे तदनुज्ञा व्यक्तैवेत्यर्थः। यथोक्तचोद्यनिरासे सामर्थ्यं कथमुत्तरभाष्यस्येत्याशङ्क्य तदनुवादपूर्वकं व्याचष्टे—दूरादूरयोर्युगपद्धीचोद्य इति। शब्दाभिव्यक्तिपक्षेऽपि दूरादूरोपलम्भक्रमार्थं न लोकाप्रसिद्धं वायुकार्यमुपेयते, अभिघातसंयोगादिजवेगवद्वायुना स्तिमितवाय्वपनयनकारिणा श्रोत्रकुहरस्थस्तिमितवाय्वपनयनाङ्गीकारात्; स्तिमितवायोश्च सर्वत्र सदा स्थितिः प्रसिद्धैव। न च तदापि सन्निहिततत्कुहरस्थापनेतुरेव दूरस्थतदपनायकत्वापत्त्योक्तदोषावकाशः, बहुत्वात् तद्वायूनामन्योन्यानपेक्षाणामेव क्रमेण दूरासन्नश्रोत्रगतया व्यञ्जकत्वाङ्गीकारात्; कार्यानुगुणकारणकल्पना चोत्पत्तिपक्षेऽपि तुल्येति व्यक्तिपक्षे न दोष इत्यर्थः। ननु विरोध्यपनयने कार्ये सर्वोपलब्धिः स्यादित्याशङ्क्य कार्यबलादेकैकविरोध्यपनयनस्यैकैककार्यत्वोपगमान्न सर्वोपलब्धिरिति परिहरति—श्रोत्रस्थस्तिमितवातबाधेऽपि इति। लोकप्रसिद्धकार्यतैवमुक्ता; प्रथमभावित्वात्संयोग एव कार्यमिति लाघवादुक्तमित्यविरोधः॥ पूर्वोक्तं हेत्वन्तरं परिहरति—शब्दं कुर्विति चेति। अनन्तरोक्तं परिहरति—युगपन्नानादेशेष्विति। प्रमित्यात्मिकैव धीः स्वार्थसाधिकेति

१. एवं योगो. ख.
२. पातानुप. ख.
३. स्तिमित......वा, क.
४. Omitted. शब्द. क.

शब्दधिया नानात्वधीर्भ्रान्तिरेव। नानात्वं वस्तूनां स्वरूपमेव, यद्वैलक्षण्येन विमृश्यते; न तत् तद्ग्रहे सति। भ्रमबीजम्—अन्यानपेक्षध्वनिभिः श्रोत्रसंस्कारभेदाद्धीभेदे भेदाग्रहाच्छब्दभेदभ्रमः नेत्रवृत्तिभेदादिव चन्द्रभेदभ्रमः। एवं सान्तरालधीरपि भ्रमः। शब्दो हि स्वदेशशून्यः श्रोत्रग्राह्यः, श्रोत्रेन्द्रियस्य शब्ददेशत्वादिन्द्रियाणां स्वबोधाशक्तेः; शब्दं गृह्णच्छ्रोत्रं व्यञ्जकध्वनिमूलदेशग्राहीति धीबलसिद्धम्। मूलदेशलिङ्गभेदं व्याहर्तुं विमतं प्रत्यशक्तेः श्रोत्रशक्ति-

---

सर्वसंमतम्। नानादेशावच्छिन्नशब्दनानात्वधीश्च भ्रान्तिरेवेति न तद्व्यवस्थापनक्षमा, वस्तुभेदनियताद्दृष्टक्रमकनानादेशतोपलब्धेर्भ्रान्तिहेतोरनुवृत्तेरित्यर्थः। ननु तदनुवृत्तावप्यबाधितत्वात् प्रमितिरेवास्त्वित्याशङ्क्य अबाधितत्वं नास्तीत्याह—नानात्वं वस्तूनां स्वरूपमेवेति। विलक्षणावभासमानस्वरूपमेव नानात्वम्, न तदन्यदिति स्वरूपप्रत्यभिज्ञाबाधितत्वात् न तात्त्विकं नानात्वमिति भ्रान्तिरेव तद्धीरित्यर्थः। ननु शब्दनानात्वोपस्थाप्यमिह देशनानात्वं त खत एव भानार्हमिति कथं ततः शब्दनानात्वभ्रान्तिरुक्तेत्याशङ्क्य तद्भ्रान्त्युपपत्तिमाह—भ्रमबीजमिति। अनपेक्षाभिव्यञ्जकवायूनां नानात्वात् नेत्ररश्मिद्वैविध्यादिनेवाभिन्नशब्दधीभेदे विवेकाभावाच्छब्दभेदभ्रमः सिद्ध्येदित्यर्थः। नेत्ररश्मिभेदाच्चन्द्रभेदधीदृष्टान्तोक्त्यैव भिन्नचन्द्रयोरन्योन्यान्तरालभ्रान्तितुल्यतया शब्दस्यापि सान्तरालधीगतिर्दर्शितेत्याह—एवं सान्तरालधीरपीति। ननु विषयनिरूप्यधीभेदो विषयाभेदे कालभेदाभावे च सन्नपि निरूपकाभावादविकल्पितो न धीविषय आरोपार्ह इति न शब्दभेदभ्रान्तिकरः, न देशाभानात् सान्तरालभ्रमकरश्चोपपद्यत इत्याशङ्क्य द्वयोपपत्तिमाह—शब्दो हि स्वदेशशून्य इति। श्रोत्रं स्वतो देशाग्राहकमपि शब्दग्राहकावस्थं तदभिव्यञ्जकजन्मदेशग्राहीति तद्धीबलकल्प्यमिति देशात्मकनिरूपकभेदाद्भ्रान्तिद्वयोपपत्तिरित्यर्थः। ननु प्रकरणविरुद्धा श्रोत्रस्य तद्देशग्राहितोक्तिरित्याशङ्क्याविरोधमाह—मूलदेशलिङ्गभेदं व्याहर्तुमिति। वादसमये श्रोत्रशक्तिर्वाच्या, इक्षुक्षीरगुडादिमाधुर्यावान्तरभेदवत्सूक्ष्मदृगनुभवसिद्धत्वेऽपि देशभेदव्याप्तलिङ्गभेदस्य शब्दविशेषावाच्यतया विमतबोधायोग्यत्वात्; वस्तुतस्तु वक्तृभेदस्याश्रोत्रवेद्यत्वप्रसिद्धेरनुमेयत्व-

---

१: त्वधीः शब्दभ्रान्ति. क.  २. Omitted. मूल. क.

रुक्तर्जुविमलायाम्। सौहार्दं तु न्यायशुद्धौ। सूक्ष्मधियां लिङ्गभेदाद्देशभेदधीः; स्थूलधियां देशं प्रति भ्रम एव, मूलदेशलिङ्गाद्यभावात्। एवं देशशब्दयोरसम्बन्धाग्रहात्तद्देशत्वधीः। कोष्ठ्यध्वनिरष्टस्थानाभिघातजसंस्कारभेदाच्छ्रोत्रसंस्कारभेदान् कुर्वन् वर्णधीभेदहेतुः। अतो व्यञ्जकध्वनिमूलदेशतोक्ता। "कामं देशा एव भिन्नाः" इति भाष्यमन्वारुह्यवादः। प्राप्यकारिश्रोत्रदेश एव शब्दधीरिति वस्तुतो न देशभेदः। एकस्य वेद्यस्यानेकत्र धीर्युगपदित्येवं रविदृष्टान्तः; रवावनेकनराणाम्, शब्दे त्वेकस्येति भेदोऽस्तु। इकूस्थाने यणुच्चार्य इत्येवं पाणिनेर्विकारोक्तिः, विकारे मानाभावात्। न च सादृश्याद्विकारता, दधिकुन्दयोरदृष्टेः। शब्दो महान्—इत्यपि भ्रमः। व्यञ्जकनादाः प्रचिताः कृत्स्नकर्णच्छिद्रव्या[1]प्त्या निरन्तरधियः कुर्वन्तोऽसम्बन्धाग्रहाच्छब्दनै-

---

नियमात्तल्लिङ्गवद्देशभेदलिङ्गस्यापि स्वानुभवसिद्धिरनिर्देश्यत्वेऽपि प्रसिद्धैवेत्यर्थः। सूक्ष्ममनोऽवधानाभावे शब्दग्रहणे सत्यपि देशभेदानवमर्शाच्चानुमेयतैवेत्याह—सूक्ष्मधियां लिङ्गभेदादिति। एवं देशभेदभाने तदवच्छेदापेक्षया धीभेदः शब्दनानात्वभ्रान्तिकरः स्यादित्याह—एवं देशशब्दयोरिति। ननु व्यक्तिपक्षे कोष्ठ्यवायोः श्रोत्रसंयोगो व्यञ्जक इति कथं वक्तृदेशो व्यञ्जकदेश उक्त इत्याशङ्क्य सोऽपि व्यञ्जकदेशभेद एवेति परिहरति—कोष्ठ्यध्वनिरष्टस्थानाभिघातजसंस्कारभेदादिति। ननु देशभेदस्यारोप्यत्वे कथं तदुपगम इत्याशङ्क्य असदङ्गीकारमात्रं तदित्याह—कामं देशा एव भिन्ना इतीति। देशभेदेऽपि देशैक्ये कथमादित्यो दृष्टान्तः, शब्ददेशभेदवत् तस्य नानादेशत्वप्रतीत्यसिद्धेरित्याशङ्क्य तद्वदेकस्य द्रष्टुस्तदसिद्धावपि नानाद्रष्टृपेक्षया तत्सिद्धेर्द्रष्टृभेदाविवक्षया तदुक्तिरित्याह—एकस्य वेद्यस्यानेकत्र धीर्युगपदित्येवमिति। विकारहेतुपरिहारमाह—इकः स्थाने यणुच्चार्य इति। कर्त्रधीनमहत्त्वहेतुपरिहारमाह—शब्दो महानित्यपि भ्रम इति। नन्वेककालैककर्णच्छिद्रव्याप्त्याप्येकविषयबहुधीकरत्वं नादानां न युक्तम्, इन्द्रियान्तरेष्वभावात्; शब्दनानात्वधीकरतोक्त्या एकविषयमहत्त्वभ्रान्त्यनानुगुण्याच्चानु-

---

१. प्राप्त्या. ख.

रन्तर्यमिव बोधयन्तो नैरन्तर्याग्रहान्महत्त्वमिव बोधयन्ति तद्वत् 'वनं महत्' इतिवत्। तद्ग्रहे स्थास्यति पूर्वोक्तहेतुजातमनेकान्तम्। संप्रति तद्ग्रहः शब्देऽनुमया साध्यते।

### शब्दनित्यतानुमानम्

शब्दो नित्यः परार्थदर्शनसम्बन्धित्वात् धूमादिवदिति। एवमपक्षधर्मता हेतोः प्रत्युक्ता, दर्शनसम्बन्धस्य पक्षधर्मत्वात्। धूमादिदर्शनस्य स्वबुद्ध्यर्थत्वेऽपि परबुद्ध्यर्थताप्यस्तीति न हेत्वसिद्धिः दृष्टान्ते। दर्शन-

---

पयुक्ता तदुक्तिः। उच्यते—भाष्ये तावत् भिन्नविषया नादा उदाहृताः। भिन्नधीकरतया क्लृप्तशक्तयः सहभावे विभिन्नधीकराः प्रातिस्विकविषयवैलक्षण्यतिरोधानाद्वर्णात्मकैकैकशब्दभ्रमकरास्तद्व्यञ्जकस्थानबहुदेशव्यापित्वान्महाशब्दभ्रान्तिकराश्च युक्ताः। वर्णव्यक्तिविषयेऽपि च विभिन्नविषयत्वं नादानामनपेतम्; स्वरव्यञ्जनभेदो हि वर्णानां व्यक्त एव; स्वरसाहित्येनैव व्यञ्जनाभिव्यक्तिः, न पृथगिति व्यक्तम्; परस्परसंश्लेषाच्चैकतया व्यञ्जनाभिव्यक्तिः, स्वराणां चोदात्तादिस्वरसंश्लेषः; तेन वर्णेष्वपि यथाभिव्यक्त्यैकत्वभानमन्यसंश्लिष्टेष्वेवाविवेकमूलमभिव्यक्तिकालमात्रवर्तीति सिद्धम्। वस्तुतस्त्वन्वयव्यतिरेकावधारितप्रातिस्विकरूपेणैव पृथगभिव्यक्त्यनर्हेण जातितुल्येन प्रत्यभिज्ञाबलान्नित्यतयेष्यन्ते वर्णाः। अत एव पञ्चसु वर्गेषु एकैकनिष्ठायां प्रत्यभिज्ञायां सत्यामपि न जातिः तद्ग्राह्येष्यते, तद्वर्तिप्रथमद्वितीयतृतीयचतुर्थपञ्चमेषु च न जात्यन्तराणि; अतस्तद्रूपेण व्यक्तावस्थानां सङ्घातमात्रत्वात् सङ्घातस्य च जात्याश्रयत्वायोगात् तदवस्थायां प्रत्यभिज्ञायमानाः सङ्घातिन एव तात्त्विका वर्णाः, अभिव्यक्तावस्थया अर्थधीशक्ततया अनुसन्धीयमानाः तत्प्रमितिकराः इति रहस्यम्। अत एव शब्दत्वजातिमात्रापेक्षमपि श्रुतिप्रामाण्यमङ्गीकृतम्। एवं वर्णव्यक्तावपि नादानामन्वयव्यतिरेकसिद्धैकैकविषयशक्तिभेदानुरोधेन धीबहुत्वमाश्रित्य महत्त्वभ्रान्तिसमर्थनं सुस्थम्। उक्तानुवादेन अनन्तरसूत्रव्युत्पाद्यमर्थमाह—तद्ग्रहे स्थास्यतीति। सूत्रार्थं तद्ग्रहसाधकमनुमानं स्वरूपेण दर्शयति—शब्दो नित्यः परार्थदर्शनसम्बन्धित्वादिति। साक्षात्पक्षधर्मत्वेनानुक्तोऽपि हेतुरर्थसामर्थ्याद्दर्शनविषयतया विवक्षित इत्यदोष इत्यर्थः। दर्शनोक्त्या धीग्रहेऽपि परगतानुमेयधीहेतुतया परार्थतापीति नासिद्धिदोषोऽपीत्याह—धूमादिदर्शनस्येति। ननु धूमादेर्नित्यत्वाभावात् साध्य-

कालात् कालान्तरस्थायितात्मकं[1] नित्यत्वं साध्यतयाभिप्रेतम्। एवं हि धूमादिव्यक्तेर्दृष्टान्तता। कालान्तरस्थायित्वे च[2] परयत्नस्यानुत्पादकत्वात् पूर्वयत्नोऽपि तथेति सद्कारणत्वसिद्धिः[क]। न च क्षणिकेऽपि शब्दे सङ्केतितार्थे तत्सदृशेऽभेदभ्रमादर्थधीरित्येवमपि परार्थमुच्चारणमितीतरथापि हेतुसिद्धिरिति; यतस्तद्ग्रहे न प्रत्यक्षबाधो नानुमानबाध इत्युक्तम्। सदृशत्वबोधे चार्थधीर्न स्यात्। शालाशब्दान्मालार्थधीर्मालासदृशधियेव बाध्येत। न च गावीशब्दात् गोशब्दभ्रान्त्यार्थधीः[4] सादृश्यधियापि न विपर्येतीति वाच्यम्; यो हि गोशब्द एव साधुरिति वेत्ति, सः अशक्त्या 'गावी' इत्युच्चरितं गोविवक्षोः इत्येवं ज्ञात्वा गोशब्दादेवार्थमवैति; यस्त्वेवं न वेत्ति, स गावीशब्दादेव; न

---

वैकल्यमिति शङ्कां स्थायित्वमात्रं विवक्षितमिति परिहरति—कालान्तरस्थायितात्मकमिति। नन्वेवं विवक्षितनित्यत्वासिद्धिरिति शङ्कामर्थादपि तत्सिद्धेस्तदनुक्तावपि न हानिरिति परिहरति—कालान्तरस्थायित्वे चेति। ननु क्षणिकत्वेऽपि सङ्केतापेक्षया परार्थत्वोपपत्तेः न स्थायितापि स्यादिति शङ्कां बाधकाभावात् तत्सिद्धप्रामाण्येन परिहरति–न च क्षणिकेऽपि शब्द इति। सादृश्यधिया बाधनियता च तन्मूलार्थधीः दृष्टा, तदभावाच्च न सादृश्यनिमित्तभ्रान्तिमूलेत्याह—सादृश्यबोधे चेति। ननु गावीशब्दजबोधवत् सादृश्यधियापि बाध्या न स्यादित्यत्राह—न च गावीशब्दादिति। 'गावीशब्दोऽशक्त्योच्चारितः' इति विजानतस्तावत्तत्स्मारितगोशब्दादेवार्थधीरिति न बाधप्रसङ्गः। वक्तृविवक्षासंवादात् व्यवहारदर्शनात् गावीशब्दस्तदर्थ इति जानतो न सादृश्यान्तर्भाव इति सादृश्यभ्रान्त्युत्थधियः तदभिव्यक्तौ बाधनियमोऽस्त्येवेत्यर्थः। ननु सङ्केतस्यैवयभ्रान्तिनिष्ठस्यार्थधीहेतुत्वात् सदृशत्वज्ञानेऽप्यबाधोपपत्तिरित्याशङ्क्य गत्यन्तराभावमूलैषा कल्पना, व्यवहारपरम्पराविभक्तायाञ्च तदभावः; तदनादित्वान्नैतरकल्पनावकाश

---

१. स्वात्मक. क. २. Omitted च. क.

क. सद्कारणवन्नित्यम् इति कणादोक्तेः ४. भ्रान्त्यर्थं. क. ख.

गोभ्रमात्। न चाद्यः शब्दः सङ्केतितः तत्सादृश्यादितरेभ्योऽर्थधीरिति शक्यम्, अनादिसंसारे आद्याभावात्। अतः प्रत्यभिज्ञयार्थधीः। सा च स्मृतिग्रहणच्छायावाहिनी संस्कारेन्द्रियाभ्यां प्रत्येकं तत्तेदन्ताशक्ताभ्यामेकबोद्धरि जन्यत इति हेत्वभावोऽप्यस्या न युक्तः। न च क्षणिकत्वादभिव्यक्तेरेकैव शब्दधीः, न सा संस्कारबोधिता प्रत्यभिज्ञा युक्तेति वाच्यम्; हेत्वान्तरोद्बुद्धसंस्कारस्य[1] प्रत्यभिज्ञास्तु। अन्वयव्यतिरेकाधीनाकृतिवाचिता च स्थायिशब्दस्य, न क्षणिकस्य; अङ्गुल्यादिनिर्देशादियं गौरित्याकृतिवचनता शक्या; पिण्डलीना हि न पृथङ्निर्देशार्हा। किञ्च अष्टकृत्वो गोशब्द उच्चरितः—इति कृत्वसुच् क्रियावृत्तौ[2]। अनुमेयक्रियावृत्तिः कार्यावृत्तिगम्या

इत्याह—न चाद्यः शब्दः सङ्केतित इति। साधितमुपसंहरति—अतः प्रत्यभिज्ञयेति। यदुक्तम्—तस्याः प्रत्यक्षरूपतयेन्द्रियजत्वनियमादिन्द्रियाणां चासन्नदेशकालवस्तुग्राहित्वनियमाद्यथानुभवमेकज्ञानत्वे हेत्वभावात् ज्ञानद्वयैक्यभ्रान्तिकरं तदिति, तत्परिहरति—सा च स्मृतिग्रहणच्छायावाहिनीति। सर्वकारणानां कार्यानुभवबलनियमितस्वभावत्वादबाधितकार्यानुगुणतयैव स्वभावस्योपेयत्वात् संस्कारसाचिव्यादिन्द्रियशक्त्युद्दीपनाभ्युपगमेन बोद्धुश्च स्थायित्वाङ्गीकारेण प्रमाणतयैव सोपेयेत्यर्थः। ननु शब्दाभिव्यक्तेः क्षणिकतया स्वमतानुवृत्त्यापि संस्कारोद्बोधकापेक्षप्रत्यभिज्ञानुपपत्तिरपरिहार्येत्याशङ्क्य अनियतत्वात्तदुद्बोधकानां हेत्वन्तरापेक्षयाप्युपपत्तिरभ्युपेयेति परिहरति—न च क्षणिकत्वादिति। गवादिशब्दानामाकृत्यर्थत्वप्रसिद्धिश्च शब्दप्रत्यभिज्ञोपबृंहितेत्याह—अन्वयव्यतिरेकाधीनेति॥ एवं शब्दोच्चारणविषयकृत्वसुच्प्रयोगोऽपीत्याह—किञ्चाष्टकृत्वो गोशब्द इति। शब्दस्य कार्यत्वे भेदापत्तेः कर्मकारकोपाधितोऽपि क्रियैक्यमाश्रित्य तदावृत्तिर्न सिध्येत्; व्यङ्ग्यत्वे तु तदैक्योपाधेः सिध्येदित्यर्थः। उक्तहेत्वाक्षेपाभिप्रायेण बुद्धिकर्मणोरपि प्रत्यभिज्ञापादनेन नित्यत्वापत्तिर्भाष्येऽभिहिता, तदापत्तिः कथमित्याशङ्क्य ज्ञाप्यैक्यापेक्षया क्रियावृत्त्यभ्युपगमे अत्र क्रियान्यत्वधीर्नास्तीत्युपेयम्, अन्यत्वस्यावृत्तिविरोधित्वात्; क्रियैक्यधिया च तदावृत्तिधीः इत्यपरामृष्टान्य-

१. द्धस्य''''ज्ञास्तु. क. २. वृत्तानुमेयाक्रिया. क. ख.

न वाच्या; कार्यं ह्यन्यदन्यत्[1] कार्यत्वात्। अतो ज्ञाप्यैकशब्दापेक्षया क्रियैकतामाश्रित्य क्रि[2]याावृत्तौ कृत्वसुच्स्मृतिः प्रत्य[3]भिज्ञाबृंहिका। एकहेतुसिद्धेऽपि साध्ये आहार्यधियां हेतुप्रचयः। यदि ज्ञाप्यात्मककार्यैक्यात् क्रियाभ्यासं कृत्वसुजाह, तर्हि न क्रियान्यत्वधीः। अनन्यताधियैव प्रत्यभिज्ञामिच्छतः क्रियायां प्रत्यभिज्ञा स्यात्। बौद्धयैक्यात् बुद्धावपि स्यात्। अतश्च स्थायितापत्तिरिति "बुद्धिकर्मणी" इत्यादिचोद्यभाष्यार्थः।

उत्तरभाष्यम्—"अथ प्रत्यक्षे नित्ये एव" इति। अस्यार्थः—यदि प्रत्यभिज्ञात्मकप्रत्यक्षवेद्ये तदा स्थायिनी; स्वलक्षणाग्रहणार्हे हि तद्ग्रहः, न तु कार्यतोऽस्तीत्येवमनुमेये; न ह्यन्यत्वाग्रहः तद्ग्रहः क्रियावृत्तिरुपाधित ऐक्याद्युक्ता। बुद्धस्यान्तराबोधो नास्तीतिधीर्व्यवहा[4]रारोहः; अन्यथा नास्तीति निर्विषयमिति चोद्यभाष्यम् "ह्यस्तनस्य" इत्यादि। तन्न; बुद्धस्य[5] हि पुनरत्यन्ताबोधो नास्तीति; तद्ग्रहात्मके पुनर्बोधे न नास्तीति, भावधीनिवृत्त्यपेक्षत्वान्नास्तीत्यस्य। अत एव लोको जायादि दृष्ट्वान्तरा अपश्यन्

---

त्वक्रियाधीरेव प्रत्यभिज्ञेत्यङ्गीकृतं स्यादित्यापाद्यक्रियाबुद्धयोश्च तत्पक्षे प्रत्यभिज्ञेयतापत्त्या स्थायितापत्तिरुच्यत इति भाष्यार्थमाह—यदि ज्ञाप्यात्मककार्यैक्यादिति। परिहारभाष्ये प्रत्यक्षत्वाभाव उक्तः। प्रत्यक्षत्वे च नित्यत्वमङ्गीकृतम्, तत्कथमित्याशङ्क्य प्रत्यभिज्ञात्मकप्रत्यक्षापेक्षो नित्योक्त्या स्थायित्वाङ्गीकारः। प्रत्यक्षत्वनिवृत्त्यैव प्रत्यभिज्ञानिवृत्तिः सिद्धा; स्वरूपग्रहापेक्षा हि सा, भेदाग्रहमात्रत्वानुपगमात्। क्रियाभ्यावृत्तिस्तु भेदसिद्धावप्यौपाधिकैक्यमात्रापेक्षेत्यर्थविवरणेन परिहरति—उत्तरभाष्यमित्यादिना। ननूपलब्धविषयानुपलब्धिरभावनियन्त्रीति पूर्वस्य नाशनियमात् भेदाग्रहमात्ररूपत्वमुपेयमेवेत्यनन्तरभाष्येण चोद्यत इत्याह—बुद्धस्यान्तराबोध इति। बुद्धस्यात्यन्तिकानुपलब्धिः तन्नियन्त्री नानुपलब्धिमात्रं प्रत्यभिज्ञया मध्येऽपि भावस्फूर्तेरिति तन्निवृत्तावेवाभाव इत्युत्तरार्थमाह—तन्न; बुद्धस्य पुनरिति। तदेव लोकसम्मत्या दृढीकरोति — अत एव

---

१. न्यकार्य. ख. २. क्रियाकृत्वसुच्. क. ख.
३. त्यभिज्ञोद्बृंहिता. ख. ४. हारारोपा. अन्य. क.
५. Omitted हि. क.

पुनर्बोधे नास्तितां हित्वा विश्वासं याति । यापि सर्वभावानां नाशितान्ते क्षयात् बौद्धैरुक्ता, सा न शब्दस्य[1], न हि शब्दस्यान्तक्षयौ धीसिद्धौ । यत्रापि घटादौ तौ स्तः, तत्रापि न नाशिस्वभावतया क्षणिकतानुमा प्रत्यभिज्ञां बाधते । इत्थमनुमा वाच्या—[2]भावस्वभावाः क्षणिकाः, स्वहेतुतो नश्वरत्वात् । न चासिद्धो हेतुः; हेत्वन्तराधीने हि नाशे भावस्वभावानन्तर्भूते जातेऽपि प्रागिव भावधीः स्यात्; न च हेत्वन्तरजन्यो नाशो भावस्वभावार्हः, हेतुभेदात् भेदापत्तेः; अन्ते नाशान्नश्वरक्षणात्मकाद्भावात् सदृशपरम्परोत्पत्तेः स्थिरभ्रमः । विसदृशहेतोस्तु विसदृश-

---

लोको जायादि दृष्ट्वेति । सर्वभाववर्त्युक्तक्षणनाशितापि तदापादकहेत्वसिद्धेर्न शब्दस्पर्शिनीति नाशानर्हतातिशयमाह—यापि सर्वभावानामिति । एतच्च प्रत्यभिज्ञास्थैर्यार्थमभ्युपगममात्रेणोक्तम् वस्तुतस्तु स्थितिकालावधिनाशयोर्दर्शनेऽपि तदुक्तप्रत्यभिज्ञाबाधो नास्तीत्याह—यत्रापि घटादाविति । तत्साधनार्थं तदुक्तानुमानं दर्शयति—इत्थमनुमा वाच्येति । सर्वकार्यवर्तिक्षणिकत्वे स्वकारणमात्रप्रयुक्तनाशस्वभावत्वं तैर्हेतुतयोच्यते । तत्र हेत्वसिद्धिं विपक्षे बाधकोक्त्या परिहरति—न चासिद्धो हेतुरिति । नाशो हि नाश्यभ्युपगतभावाभिन्न एवोपेयः । भेदोपगमे भावस्य पूर्वावस्थानुवृत्त्यापत्तेः नाशस्वभावत्वे नाशस्य तन्निवृत्त्यात्मकत्वात्तदसिद्धिः स्यात्; हेत्वन्तरजत्वे तत्स्वभावत्वायोगात् स्वहेतुजत्वे च तत्सम्भवात् क्षणध्वंसित्वं सिद्धं स्यादित्यर्थः । ननु क्षणध्वंसित्वे उत्तरक्षणभावरूपानुवृत्तिदर्शनविरोध इति शङ्कां कृतकस्यान्ते क्षयनियमात् नश्वरक्षणात्मकत्वस्यावश्योपेयत्वात् सदृशपरम्परोत्पत्तिनिमित्ता तदनुवृत्तिः, न नाशाभावनिमित्तेति स्थिरत्वं भ्रान्त्यारोपितम्; कालान्तरवर्तिनाशदर्शनं हेत्वन्तरागमनिमित्तविसदृशजन्मनिमित्तमिति क्षणध्वंसित्वे कोऽपि विरोधी नास्तीति दर्शयन्नपाकरोति—अन्ते नाशान्नश्वरक्षणात्मकादिति । कृतकस्य नाशनियमाभ्युपगमाच्च नाशाभिन्नत्वं तस्य स्यात्, भेदे द्वयोः स्वहेतुतन्त्रतया अन्योन्यनियमायो-

---

१. स्यान्तक्षयौ क.

२. भावाभावाः ख.

क्षणोत्पत्तावन्ते क्षयधीः । कृतको नाशीत्येवमपि स्वहेतुतो नाशीति; कृतकाश्च सर्वे भावाः ।

बौद्धोक्तानुमानभंगः

तन्न; भागासिद्धेः हेत्वभावाच्छब्दस्याकृतकत्वात् शङ्कितहेतोर्यत्नस्य व्यञ्जकत्वात् । शब्दधीश्च[1] यत्नसंस्कृतश्रोत्रापेक्षा, न तु शब्दस्तदपेक्षः । तेनास्वभावकरत्वे नापेक्षा; स्वभावकरत्वे शब्दोऽनित्य इत्यनुयोगो हेयः । न च नियतदेश[2]कालप्रकृतितयापि कृतकता, नियमासिद्धेर्विभोर्नित्यस्य; [3]प्रकृतिनियमः काल्पनिकोऽनिदंप्रथ[4]मे । न च कृतका भावा विनाशस्वभावाः, गुरुनये नाशवस्त्वसिद्धेः ।

अथेत्थमनुमा—यत्सत् तत् क्षणिकम्, सन्तश्च सर्वे भावाः । सत्ता हि [5]क्रमयौगपद्याभ्यां व्याप्ता; ते ह्यक्षणिकान्निवृत्ते स्वव्याप्तां सत्ता-

---

गात्; कृतकत्वं च भावाभिन्नं दृष्टमित्यपि क्षणिकत्वसिद्धिरित्याह—कृतको नाशीत्येवमपीति । सर्वभावानां क्षणिकत्वं तावच्छब्दे कृतकत्वासिद्धेर्न स्यादिति दूषयति—तन्न; भागासिद्धेरिति । ननु व्यञ्जकत्वेनापि यत्नापेक्षत्वं शब्दस्याङ्गीकृतम्, उपकारं विनापेक्षानुपपत्तेः; उपकाराङ्गीकारे स्वानन्यतयैव तत्सिद्धिरिति व्यञ्जकत्वमुखेनापि क्षणिकतापद्येतेति शङ्कां परिहरति—शब्दधीश्च यत्नसंस्कृतश्रोत्रापेक्षेति । कार्यस्यैव कारणापेक्षत्वमिति धीरेव तदपेक्षा; श्रोत्रस्थश्च यत्नोत्थ उपकार इति न शब्दस्य यत्नस्पर्श इति न तस्य निष्पत्त्यापादनावकाश इत्यर्थः । ननु देशकालप्रकृतिनियमस्य उत्पत्तिप्रयुक्तत्वात्तद्धीः कृतकत्वापादिकेत्याशङ्क्याह—न च नियतदेशकालप्रकृतितयापीति । तद्धीमात्रं देशकालनियतमित्यसिद्धः शब्दस्य तन्नियमः; ताल्वादिवीणादिप्रकृतिनियमश्चाभिव्यक्तिगतः कल्पित एव शब्दे इति न तेनाप्युत्पत्त्यापत्तिरित्यर्थः । यत्पुनः कृतकानां नाशस्वभावत्वमुक्तम्, तदप्यनभ्युपगतनाशत्वात्प्रत्यवचनीयमित्याह—न च कृतका भावा इति । एवमुक्तप्रकारक्षणभङ्गस्य शब्दानवगाहित्वे उक्ते तदवगाहार्हं विधान्तरमवतारयति—अथेत्थमनुमा—यत्सत् तत् क्षणिकमिति । कथं सत्तायाः क्षणिकत्वव्याप्तिसिद्धिरित्यत आह—सत्ता हि क्रमयौगपद्याभ्यां व्याप्तेति । यद्यपि द्वयोः क्वचिद्विषये सह-

---

१. Omitted च. क. २. कालदेश. क.
३. Omitted अपि क. कृतता. ख. ४. प्रथमः न च. ख.
५. कर्मयौग. क. ख.

मपि ततो निवर्त्य क्षणिककोटिं सत्तां नीत्वा तत्कोटिव्याप्तां [1]कुरुत इत्येवं सत्त्वात् क्षणिकत्वसिद्धिः; सत्त्वं ह्यर्थक्रियाकारित्वम्, तदधिका[2]निरूपणात्। अर्थक्रिया चाक्षणिकस्य न क्रमात्, शक्तस्य कालक्षेपायोगात्; अशक्तौ न कुर्यादेव। अथ शक्तोऽपि सक्रमसहकारिसन्निध्यपेक्षः क्रमात् करोति, तन्न; किञ्चित्करो ह्यपेक्ष्यः; स यदि भावस्वभावकरः, तदा भावस्योत्पत्तेः नाक्षणिकात् क्रमादर्थक्रिया; अथास्वभावकरः, तर्हि पूर्वावस्थात् भावान्नार्थक्रिया; तत एवागन्तोः सा स्यात्, तदनुविधानात्। अथ यौगपद्यादर्थक्रिया; तर्हि क्षणान्तरे तच्छून्यो न अक्षणिकः सन् स्यात्।

---

वृत्तिसंप्रतिपत्तिर्नास्ति, तथाप्यक्षणिके सत्तायाः बाधकं व्यापकनिवृत्त्यात्मकं दर्शयित्वा ततो व्यावृत्तिं प्रदर्श्य पारिशेष्यात् क्षणिकवृत्तिं तद्व्याप्त्यन्तां संबोध्य लिङ्गलिङ्गित्वधीः सुसंपादेत्यर्थः। कथं पुनः क्रमयौगपद्ययोः सत्ताव्यापकत्वमित्याशङ्क्य तत्समर्थनार्थं सत्तास्वरूपमेव परिशोधयति—सत्त्वं ह्यर्थक्रियाकारित्वमिति। सर्वस्य हि सत्त्वमन्वयव्यतिरेकावधारणार्हम्, न सकृद्दर्शनमात्रावसेयम्; 'सत्' इति सकृन्निश्चितस्यापि जलादेरर्थक्रियानर्हत्वेनासत्त्वावधारणदर्शनात्तदर्हत्वमेव सत्त्वमित्यन्वयव्यतिरेकसिद्धमित्यर्थः। तथा च कथं क्रमयौगपद्यव्याप्तत्वेनाक्षणिकात्तन्निवृत्या निवर्तत इत्याशङ्क्य तदुपपादयति—अर्थक्रिया चाक्षणिकस्येति। शक्तत्वाविशेषेऽनेकार्थक्रियाणामेकक्षण एव प्रथमवदुत्पत्त्यापत्तेर्न क्रमोत्पत्तिरेकस्मादुपपद्यते। प्रथमक्षणे तदनुत्पत्तिरशक्ततयैव स्यात्, तदा चोर्ध्वमपि ततो नोत्पद्येतेत्येकस्मान्नानेकोत्पत्तिः क्रमेण स्यादित्यर्थः। नन्वक्षणिकादपि सहकारिसन्निधिक्रमापेक्षया क्रमेणानेकोत्पत्तिर्घटत इति शङ्कते—अथ शक्तोऽपीति। दूषयति—तन्न; किञ्चित्करो हीति। सहकारिसाध्योपकारस्य स्थाय्यभिमतभावान्यत्वेऽनन्यत्वेऽप्यक्षणिकत्वक्षतिरिति क्रमस्याक्षणिकव्यावृत्तिः सिद्धेत्यर्थः। यौगपद्यपक्षशङ्कामुखेन सोऽपि क्षणिकत्वापादक एवेत्याह—अथ यौगपद्यादर्थक्रियेति। तृतीयविधयास्तु तर्हीत्याशङ्क्य नास्ति विधान्तरमित्याह—

---

१. कुरुतेत्येवम् क.　　२. कारिनि ख.

क्रमयौगपद्ययोश्चैकाभावे नियमादपरदर्शनात् तृतीयकोटयभावसिद्धिः। न च असाधारणानैकान्तिकता सत्त्वादिति, हेतोः क्षणिकादर्थक्रियानिवृत्तेः अशक्तादर्थक्रिया न स्यात्; शक्तस्य सहकार्यपेक्षा न स्यात्; न च विधान्तरमस्तीति वाच्यम्; यतोऽन्त्यक्षणप्राप्तः शक्तः सहकार्यनपेक्ष एव कार्यकरः। सहकारिणोऽपि स्वहेतोरन्त्यक्षणप्राप्तास्तत्कार्यशक्ता युगपत्तत्करा अनपक्षैकसामग्रीत्वापन्ना[1] इति नानपेक्षा; न कृतकरता न कार्यभेदः सहकारिता[2]पीति यथादृष्टमविरुद्धम्। तन्न; घटते हि स्थिरादपि क्रमादर्थक्रिया सहकार्यधीनस्वाधिकोपकारापेक्षात्। न चागन्त्वनुविधानात् कार्यस्य भाव उदास्ते; आगन्तूपकृतभावानुविधानं हि कार्यस्य, नागन्तुमात्रानुविधानम्।

---

क्रमयौगपद्ययोश्चेति। ननु शक्ताशक्तविकल्पमुखानुपपत्त्यार्थक्रियानिवृत्तिः क्षणिकावपि तुल्येत्यसाधारणानैकान्तिकता सत्त्वहेतोरिति शङ्कामनूद्य निरस्यति—न चासाधारणेति। तत्पक्षे प्रतिक्षणसमर्थभेदात्कार्यपूर्वक्षणवर्ती शक्तः, तदन्ये त्वशक्ता इति विभागोपपत्तिः। न चैवं सहकार्यनपेक्षत्वापत्तिदोषः, तदनपेक्षतयैवोपगमात्। न चैवं दर्शनविरोधः, तदुत्पत्तौ सहकारिसहत्वमात्रस्य दृष्टस्यानपेक्षत्वे सत्यपि स्वहेतुभिस्तच्छक्तानामेव तेषामासन्नत्वादवर्जनीयतयोपपत्तेरिति सर्वानुपपत्तिहीनत्वात्तत्पक्ष एव प्रमाणवानित्यर्थः। दूषयति—तन्न घटते हि स्थिरादपीति। प्रत्यक्षमेव तावन्मूलभूतं सर्ववस्तुस्वभावोपगमे; तद्बलप्राप्ते स्थिरत्वे तदनुसार्येव सहकारिस्वभावोऽभ्युपेयः; तेन सहकार्यधीनस्वव्यतिरिक्तोपकारापेक्षया क्रमेणानेककार्यकरत्वं स्थिरस्याङ्गीकर्तुमुचितम्। न चैवं तन्मात्रमेव कारणं स्यादिति स्थिरस्याकारणत्वापत्तिः, कार्यकारणत्वावधारणसमर्थान्वयव्यतिरेकयोग्याकारहीनतयोपकारमात्रस्य तदवधारणासिद्धेः; तद्वदुपकार्योपकारकनिरूप्यतयैवोपकारनिवेशात् स्थिरस्य प्रधानकारणत्वं न हेयम्। न चोपकारनिरूपकतयापि उपकारस्यैव जनकतया तत्सम्बन्धात् कारणत्वम्, नोपकार्यस्य असम्बन्धादिति शङ्कनीयम्, जनकादप्याश्रयस्याव्यवहितत्वेन लोके सम्बन्धप्रसिद्ध्याधिक्यादिति स्थिरमेव प्रधानकारणं मानसिद्धमित्यर्थः। एवं क्षणिकत्वहेतोः सत्त्वस्य साधारणानैकान्तिकत्वं प्रत्यक्षावष्टम्भे-

---

१. अनपेक्षा एक. क. २. सहिकार्य. क.

आगन्तुजोऽप्युपकारो भावाश्रयो भावस्योच्यते लोके। न च परोक्तप्रतिबन्दीतोऽसाधारणता सत्त्वादित्यस्य क्षणिकादप्यर्थक्रियानिवृत्तेर्वाच्या। यद्यप्येकं कार्यमनेकस्मात् कारणान्मतम्, तथाप्यन्योन्यानपेक्षाणामपि स्वहेतुवशादपेक्षाणां मेलनं युक्तम्। तत्र नायमनुयोगः—कृषीवलः प्रेक्षावान् कुसूलादवनीय बीजं भुवि न वपेत्, कुसूलनिहितबीज[2]: कृती स्यादिति। यथा हि कृषीवलो बीजक्षणसन्ततिजः कोऽपि क्षणभेदोऽङ्कुरहेतुरिति ज्ञात्वा बीजं कुसूले निधत्ते, तथा क्षित्यादिसहभूर्बीजक्षणः कोऽपि हेतुरिति ज्ञात्वा स्वलक्षणसहभूश्च बीजक्षणः क्षित्यादिसहभुवो हेतुरिति च ज्ञात्वा स्वयमपि क्षणात्मको बीजक्षणं स्वसहजं कर्तुं प्रेक्षावानपि चेष्टत इति दिक्। अतो गुरूक्तमेव यत् परोपसंहृतम्—अक्षणिकादपि क्रमेणार्थक्रियेत्येवं साधारणत्वं हेतोः इति तदेव युक्तम्।

एवमनुमया तद्ग्रहाबाधाद्घटाद्यपि स्थिरम्; शब्दस्तु सुतराम्; घटादेर्ह्यवयवसंयोगासमवायिकारणकस्यासमवायिनाशे नाशशङ्का; सापि शब्दे

---

नोपपाद्य परोद्भावितासाधारणानैकान्तिकत्वम् अभ्युपगतसिद्धान्तत्वशङ्कानिवृत्त्यर्थमनूद्य दूषयति—न च परोक्तप्रतिबन्धीत इति। निरपेक्षैककार्यकराणामपि स्वहेतुसन्निधापितानामन्योन्यसाहित्यं संजातम्, न सापेक्षत्वेन क्षणिकत्वपक्ष इति यत् क्षणिकवादिनोक्तं तत अप्रेक्षापूर्वकारिणां कारणानामङ्गीकृत्य कृषीवलस्य प्रेक्षावत्त्वादनपेक्षकारणत्वपक्षे बीजवपनादिप्रवृत्तिर्न स्यात्, कुसूलनिहितबीज एव कृतकृत्यः स्यात् इत्यसाधरणत्वं परापादितमयुक्तम्; कुसूलनिधानप्रवृत्तिमभ्युपगम्य वपनादिप्रवृत्तिनिषेधासम्भवात्, प्रवृत्तिहेतोः प्रेक्षावद्विषये समत्वादित्यर्थः। कुसूलनिहितबीजावस्थोक्तिरुदासीनोपलक्षणार्था न तन्निधानाङ्गीकारार्थेति प्रेक्षावतां सर्वप्रवृत्त्यसम्भव एवाभिप्रेत इति शङ्काहानार्था दिगुक्तिः, पूर्वसञ्चितेच्छावासनानुवृत्त्या रागादिजप्रवृत्तेरनिवार्यत्वादित्यर्थः। तेन साधारणानैकान्तिकत्वमेव तद्दूषणं परैरप्युपसंहारकालेऽभ्युपगतं स्थिरमित्युपसंहरति—अतो गुरूक्तमेवेति। प्रकृतमुपसंहरति—एवमनुमया तद्ग्रहाबाधादिति। नन्वभ्युपगतप्रमाणभावशीक्षावचनविरुद्धं

---

१. यद्यप्यतेककार्य. क. २. वीजाकती. क.

तद्विधानपेक्षे नास्तीति "अनपेक्षत्वात्" इति सूत्रम्। न चानपेक्षत्वासिद्धिः, शीक्षाक्षरैः "वायुरापद्यते शब्दताम्" इत्येवंविधैरित्याह सूत्रम् "प्रख्याभावात्" इति। प्रख्या ह्यचाक्षुषस्यापि वायोस्त्वचा, न शब्दप्रख्या तथेति न वायवीयता; शीक्षाक्षराण्युपचारतो वाय्वधीनत्वात्। वेदाक्षराणि "वाचा विरूपनित्यया" इति नित्यत्वे स्पष्टानि। न तु शीक्षा "वायुरापद्यते शब्दताम्" इति स्पष्टमनित्यतामाह।

अत्र पूर्वोत्तरपक्षसंक्षेपः—न यत्नाद्वर्णाश्रयात् व्यक्तिः खेन्द्रिये, खगुणस्य नित्यानावृतसन्निधेः। व्यक्तश्चैकखस्थो दूरस्थैरपि ज्ञायेत, सदा च ज्ञायेत, सर्वश्चैकस्थः सकृद्व्यज्येत एकस्थरूपसंख्यादिवत्। अथ श्रोत्राश्रयः संस्कारो[1] व्यक्तिः, न सा दृष्टेन कोष्ठ्यैः उन्मेषादिनेव चक्षुषः; सकृच्च संस्कृते श्रोत्रे सर्वधीः स्यात् घटार्थोन्मेषे पटादिधीवत्। एवमव्यक्त्यर्थो यत्नः कारकत[2]यापेक्ष्यः। प्रयोगश्च—वर्णा यत्नजन्याः, तदव्यङ्ग्यत्वे तदपेक्ष-

---

नित्यत्वप्रयुक्तमनपेक्षत्वमिति शङ्कां परिहरति—न चानपेक्षत्वासिद्धिरिति। कथं प्रख्याभावोक्त्या तन्निरास इत्यत्राह—प्रख्या ह्यचाक्षुषस्यापीति। श्रोत्रातिरिक्तेन्द्रियग्राह्यता प्रख्या, तन्निवृत्त्युक्त्या स्पार्शनत्वनिवृत्तिः विवक्षिता; ततो न वायवीयः शब्द इति सूत्रार्थ इत्यर्थः। शिक्षावाक्यमौपचारिकार्थमित्याह - शीक्षाक्षराणीति। व्यक्तनित्यत्वार्थवेदानुसाराद‌व्यक्तानित्यत्वार्थशिक्षागतिर्गौणी युक्तैवेत्याह—वेदाक्षराणीति। तत्त्वजिज्ञासुभिः सारमात्रस्य पृथगवधारणीयत्वात् तदर्थं पक्षद्वयसारं संगृह्याह—अत्र पूर्वोत्तरपक्षसंक्षेप इति। सर्वसाधारणधीसामग्रीसंपादनेन तावद्यत्नव्यङ्ग्यत्वं वर्णानां नास्ति। विधान्तराश्रयणेऽपि श्रोत्राश्रितत्वाविशेषात् सर्वपुरुषश्राव्यत्वम्, पुनस्तिरोभावानुपपत्तिः एकाश्रितैकेन्द्रियग्राह्याणां रूपपरिमाणादिवत् सकृद्व्यङ्ग्यतापत्तिश्च स्यात्; श्रोत्रसंस्कारपक्षेऽपि प्रसिद्धप्रकारः संस्कारो दुर्लभः। सर्ववर्णसाधारण्यापत्तिश्चानिवार्यंति बाधकैरव्यङ्ग्यत्वे यत्नानन्तरोपलब्धेस्तत्कार्यतयैव कुलालयत्नानन्तरोपलब्धघटवदिति पूर्वः पक्षः। तत्र वायवीय-

---

१. संस्कारात्. ख. २. तमैवापेक्ष्यः. क.

वेद्यत्वात् कुलालयत्नापेक्षवेद्य[1]घटवत् । यत्नजत्वे वायवीयता मन्दा, त्वचा बधिरवेद्यत्वापत्तेः । न चाभि[2]भूतेतरवेद्यता, श्रोत्रार्हतयेन्द्रियार्हत्वानभिभूतेः । अतो यत्नजः खगुणः । किञ्च यत्नभेदे वर्णनानात्वधिया यत्नजत्वम्; हेतुभेदे हि कार्यं नाना, न व्यञ्जकदीपादिभेदे व्यङ्ग्यं नाना । एवं यत्नमृदुत्वामृदुत्वतो वर्णमृदुत्वामृदुत्वधिया यत्नजत्वम्; न व्यङ्ग्ये तथात्वम् ।

सिद्धान्तः

तन्न, स्पष्टे तद्ग्रहे व्यञ्जकभेदमास्थाय तद्धीव्यवस्था; कोष्ठ्यवायोस्तत्तत्स्थानसंयोगान्यत्वे व्यञ्जकान्यतया नैकस्थानेकधीः सकृत्; व्यञ्जकैक्ये हि सा सकृत् । न चैकस्थैकेन्द्रियग्राह्येषु सकृद्धिया व्यञ्जकैक्यनियमान्न तद्भेद इति वाच्यम्; यतः सकृद्धिया व्यञ्जकैक्यं दृष्टम् । यत्र त्वसकृद्धीः तत्र

---

त्वं मन्दमिति आकाशगुणतैवाभिमता । यत्ननानात्वाद्वर्णनानात्वधीर्यत्नमृदुत्वामृदुत्वयोः मृदुत्वामृदुत्वधीश्च तत्कार्यत्वहेतुरिति ।

राद्धान्तसारस्तु—प्रत्यभिज्ञादार्ढ्यादकार्यत्वे व्यञ्जकभेदाश्रयणेनोपलब्धिव्यवस्था नेया । स्थानाभिघातसंयोगसंस्कारभेदात् कोष्ठ्यवायोः व्यवस्थया एकैकव्यञ्जकत्वाश्रयणान्नैकव्यङ्ग्यरूपादिसाम्यापत्तिः ।

नन्वेवमेकाश्रितैकेन्द्रियवेद्यानामेकव्यङ्ग्यत्वव्याप्तेः व्यवस्थितानेकव्यङ्ग्यत्वाश्रयणमयुक्तमिति शङ्कामपनयति—न चैकस्थैकेन्द्रियग्राह्येष्विति । सकृत्प्रतीत्युदयकल्प्यत्वात् तत्र तदैक्यस्य असकृद्धीविषये तत्प्राप्त्यभावात् व्याप्तिबलस्य चोपाधिशङ्कापहतत्वादिति । नन्वेकाश्रितैकेन्द्रियग्राह्यत्वैकहेतोः प्रकृतस्य कथं हेतुद्वयं विषयव्यवस्थयोपाधितयोच्यते ? साध्यव्यापकत्वं चोपाधिलक्षणं तद्विद्भिरिष्यते; तच्च द्वयानर्हमिति कोऽयमौपाधिकत्वप्रलापः ? उच्यते — साध्यव्यापकत्वं तावत्तदव्यापकहेतुं प्रत्युपाधित्वनिश्चयोपयोगेनोक्तम् । प्रकृतहेतुसाम्यमात्रं साधनाव्यापकत्वयुक्तं संशयोत्थापनोपयोगीति इह साम्यमेवापेक्षितम् । घटादेरपि च स्वाश्रितरूपादिना सहैकव्यङ्ग्यत्वं साध्यमस्त्येव, न त्वेकाश्रितत्वमिति हेत्वन्तरायत्तैव तत्र साध्यानुगतिः पूर्ववादिनाप्यभ्युपेयेतेति द्वया-

---

१. वेद्ययत्न घट. क. २. अभिभूतेरवेद्यता. ख.

व्यञ्जकाभेदो न दृष्ट एव। व्याप्तेश्चानौपाधिकत्वनिश्चयात्[1] स्थिरता। अत्र च किमेकेन्द्रियग्राह्यतया घटादेस्तद्गतरूपादेश्चैको व्यञ्जकः, उत रूपिद्रव्यतया घटादेस्तत्समवायितया रूपादेरित्यनिश्चितव्याप्तिकमेकेन्द्रियग्राह्यत्वं न व्यञ्जकैक्ये श[2]क्तम्। ननूभयम[3]विनाभूतं व्याप्यमित्येकेन्द्रियग्राह्यत्वमेकमपि व्यञ्जकैक्ये शक्तम्। न हि धूमे व्याप्ये भस्माव्याप्यम्। अतोऽसत्यपि धूमे भस्माग्निधीशक्तमेव। तन्न; अत्र ह्येकं व्याप्यं रूपिद्रव्यतद्रूपाद्यात्मकम्; तत् किमनेनैवाकारेण उतैकेन्द्रियग्राह्यत्वेनेत्यनिश्चयः। ननु धूमः कार्यत्वेनापि व्याप्तः संयोगित्वेनापि, तथेहाकारद्वयेनास्तु, तन्न; धूमे हि सम्बन्धद्वयात् द्विधा व्याप्तिः; इह त्वेक एवैकाश्रयत्वसम्बन्ध एकव्यङ्ग्यत्वस्य रूपिद्रव्यतद्रूपादेश्च। सम्बन्धस्य नियततात्मिका व्याप्तिरेकैव, तत्र विशेषा-

---

पेक्षयोपाध्युक्तिरिह नानुपपन्नेत्यभिप्रायः। तत्समवायितया रूपादेरित्येवमत्रैकेन्द्रियग्राह्यत्वसहितयेति शेषः; अनुज्ञातः संप्रतिपद्य तदनुक्तिरिति। यदि पुनर्वायुगुणापेक्षयाप्येकव्यङ्ग्यत्वं प्रसिद्धं स्यात् तदा रूपिद्रव्यपदस्थाने स्पर्शवद्द्रव्यपदप्रक्षेपेण समाधिर्वाच्यः, प्रदर्शनपरत्वात्तस्य प्रस्तुतत्वात्तदुक्तिः। ननूपाधिसंशयो न व्याप्तिनिश्चयविरोधी, द्वयोरपि धूमभस्मनोरिव तुल्यतया व्याप्तिसम्भवादिति चोदयति—ननूभयमविनाभूतं व्याप्तमिति। परिहरति—तन्न, अत्र ह्येकं व्याप्यमिति। एकव्यङ्ग्यतया निश्चितानां निजाकारनिरूपितानामेकेन्द्रियग्राह्यत्वोपाधिनिरूपितानां वा तन्निश्चय इत्यस्ति संशय इत्यर्थः। नन्वाकारद्वयेनापि व्याप्यत्वं धूम एव दृष्टमिति इहापि द्वयदर्शने द्वयेनाप्यस्तु; न संशयार्हतेति चोदयति—ननु धूमः कार्यत्वेनापि व्याप्त इति। परिहरति—तन्न धूमे हि सम्बन्धद्वयादिति। सम्बन्धधर्मो हि व्याप्तिः सम्बन्धिसत्तामात्रानुगामित्वरूपा सम्बन्धभेदे भेदार्हा; सम्बन्धाभेदे तन्निरूपकभेदे च सति केनाकारेणेतिसंशयादवच्छिन्नव्याप्तिकमेकेन्द्रियग्राह्यत्वं स्वतोऽशक्तं व्यञ्जकैक्यार्पणे; न प्रत्यक्षपूर्वकनियतधीलिङ्गकव्यञ्जकभेदानु-

---

१. सकृद्विधा व्यञ्जकैक्यं दृष्टम्. इत्यधिकं दृश्यते. क.
२. शक्यम्. ख.
३. मपि नाभूतं व्याप्येत्येके. क.

नध्यवसानं केन स्वभावेन नियततेत्यशक्तमेकेन्द्रियग्राह्यत्वं व्यञ्जकैक्ये । न च स्थिरवाय्वपनय एव श्रोत्रस्य व्यक्तिरिति सर्ववर्णधीः स्यादिति वाच्यम्; यतो यत्नकोष्ठ्यवायुभेदात् स्थिरवायुविभागरूपव्यक्तिभेदो धीव्यवस्थयोपेयः । न च स्थिरवाय्वपनयो व्यक्तिः; किन्तु पूर्वभाविकोष्ठ्यवायुसंयोग एव । भाष्ये तु स्थिरवायुबाधो वायुवेगनाशार्थं उक्तः । सर्वैः सर्वदा च धीर्न युक्ता, एकमपि खं श्रोत्रतया भिन्नं व्यक्तमिति न सर्वेषां धीः । कोष्ठ्यवायुसंयोगक्षणिकतया न सर्वदा धीः नानात्वधीर्भ्रान्तिरित्युक्तम् । मृदुत्वामृदुत्वे च नादतो भ्रम एवेत्यादि न्यायशुद्धावुक्तम् ॥

---

मानबलबाध्यत्वमात्रमित्यर्थः । ननु सत्यामप्युपाधिशङ्कायामभ्युपगतव्यञ्जककार्यसामर्थ्यात् सर्वव्यक्तिरनिवार्येत्याशङ्क्य पूर्वोक्तानुस्मारणेनैव परिहारमाह—न च स्थिरवाय्वपनय एवेति । परिहारान्तरं चाह—न च स्थिरवाय्वपनयो व्यक्तिरिति । भाष्ये तदपनयोक्तिस्तत्कार्यत्वाविवक्षयापि कोष्ठ्यवायुवेगनाशहेतुविवक्षयाप्युपपद्यत इति न कार्यार्थेत्याह— भाष्ये तु स्थिरवायुवाध इति । श्रोत्रसंस्कारपक्षे नभसः श्रोत्रत्वादेकत्वाच्च तस्य सर्वश्रोत्रसंस्कारापत्तेः सर्वपुरुषाणां शब्दश्रवणं स्यात्, पुनस्तिरोभावश्च हेत्वभावान्न स्यादिति पूर्वोक्तदूषणं परिहरति—सर्वैः सर्वदा च धीरिति । दूषणान्तरं च परिहृतमित्याह— नानात्वधीर्भ्रान्तिरिति ।

इति शब्दनित्यताधिकरणम् ॥

---

१. गात्. कः २. नानार्थं. क.

वाक्याधिकरणम्

उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥

शब्दे नित्ये तदनित्यतया समयादर्थधीरिति निरस्ते वृद्धव्यवहारादर्थधीर्वाच्या। न चालौकिके वेदार्थे प्रयोज्यवृद्धव्यवहारं हानोपादानात्मकं बालो बुद्ध्वा तेन शब्दशक्तिमनुमाय वेदार्थं बोद्धुमलम्। अतो नाकृतकसम्बन्धादपि वेदप्रामाण्यम्। प्रयोजकवृद्धेन च वैदिकः पदसमुदायो व्यवहारे न प्रयुक्तः; ततोऽपि न तदर्थे बालव्युत्पत्तिः। नन्वावापोद्धाराभ्यां पदानां पदार्थेषु शक्तिः, पदार्थानां च वाक्यार्थे; वेदे च त एव पदपदार्था इति लोकव्युत्पत्तितो वेदादप्यर्थधीः। यदि तु समुदायादर्थधीः स्यात्, तदैकपदोद्धारेऽर्थधीरेव न स्यात् पदादिव वर्णोद्धारे। [1]तन्न; पदार्थेभ्यो हि वाक्यार्थविशेषार्थमाकाङ्क्षासन्निधियोग्यतोपाध्याश्रयणं वृद्धव्यवहारात्;

उत्पत्तौ। ननु शब्दतदर्थसम्बन्धनित्यतामङ्गीकृत्य, तथापि चोदनाप्रामाण्यं न स्यादित्याक्षेपे को हेतुरित्याशङ्क्य अलौकिके व्युत्पत्त्यसम्भव इति हेतुं विवृणोति—शब्दे नित्ये तदनित्यतयेति। व्युत्पत्त्यसम्भवोऽपि नास्ति; वाक्यार्थ एव ह्यलौकिक इष्टो वेदे, न पदार्थोऽपि; पदपदार्थविषया च व्युत्पत्तिरावापोद्धारव्यवधानतः; पदार्थेभ्य एव वाक्यार्थधीरिति नाक्षेपावकाश इति चोदयति—नन्वावापोद्धाराभ्यामिति। पदसमुदायस्य वाक्यार्थे व्युत्पत्तिरिति शङ्कां विपक्षे बाधकोक्तिमुखेन परिहरति—यदि तु समुदायादर्थधीः स्यादिति। तत्पक्षे समुदायस्यैव शक्तिग्रहणमिति पदेभ्यः पदार्थधीर्न स्यादित्यर्थः। परिहरति—तन्न पदार्थेभ्यो हीति। यदि पदनिमित्ता पदार्थधीरेव व्युत्पत्त्यपेक्षा न पदार्थनिमित्ता वाक्यार्थधीः, तदा न स्यादनुपपत्तिः; विशेषान्वयरूपवाक्यार्थबोधार्थं ह्याकाङ्क्षासन्निधियोग्यतोपाधिस्वीकारः पदार्थानामपि व्युत्पत्तिमूल एवेत्यस्त्येव तदपेक्षा, तथापि तदुपाधिबलादेव चोदनार्थधीरप्यस्त्विति न शङ्कनीयम्; पदसमुदायस्य प्रयोज्यवृद्धप्रवृत्त्यनुमिततदीयविशिष्टार्थधीकरत्वं निश्चित्य

[1] तत्पदार्थेभ्यः क.

व्यवहारे च यत्र प्रयुक्तः समुदायो यः तत्पद[1]पदार्थशक्तिधीर्मानान्तरगम्य एवार्थे, न वैदिके। न च[2] सामान्यतोदृष्टम्—वेदे पदार्थाः स्वान्वयनिमित्तम्, पदार्थत्वात् लोकवाक्यपदार्थवदिति। सामान्यतोऽप्यन्वयनिमित्तत्वे विशेषार्थमाकाङ्क्षादि व्यवहारत एव वाच्यम्। एवं च[3] वैदिकोऽन्वयभेदो न सिद्ध्येत्। मानान्तरार्हे च वेदार्थे वाक्यत्वादिति पौरुषेयत्वानुमा, शक्यसङ्केते चार्थे चैत्रादिदृष्टसङ्केतानुमा इति सम्बन्धो नौत्पत्तिकः। न च सङ्केतव्युत्पत्तये कश्चिदसङ्केतितः शब्द आस्थेयः। सङ्केत[4]व्युत्प-

---

तत्प्रकारतयैवावापोद्धारभेदावसिततत्स्थपदार्थानां तदुपाधितो विशिष्टान्वयधीकरत्वशक्तिः पदानां पदार्थधीकरत्वशक्तिश्च निश्चीयत इत्यनवगतसमुदायप्रयोगवैदिकपदानां तदर्थानां च तत्तच्छक्त्यसिद्धेः द्वयधीरपि न सिध्येदित्यर्थः। ननु न प्रतिवाक्यं पृथक् पृथक् पदसमुदायप्रयोगदर्शनापेक्षं पदार्थानामन्वयधीशक्त्यवधारणम्, लौकिकावधारणस्यैव सामान्यतोदृष्टानुमानव्यवधानेन वैदिकव्यापित्वसम्भवात्; तेन वेदार्थधीर्युक्तैवेत्याशङ्क्य न व्यापितेति परिहरति—न च सामान्यतोदृष्टमिति। उपाधिनिवेशाधीनो हि विशेषान्वयावगमः; तन्निवेशश्च व्युत्पत्तिमात्रप्रयुक्तो नानुमानविषयः; तत्प्रयुक्तश्च समुदायप्रयोगावधारणपूर्वक इति न वैदिकव्याप्तिरित्यर्थः। ननु वेदेऽपि पदतदर्थानन्यत्वाल्लोकदृष्टतदुपाध्युपस्थापितान्वयविशेषे पदसमुदायप्रयोगमप्यनुसन्धायोपाधिसामर्थ्येनैव पुनस्तमवधारयेदिति स्यात् वैदिकव्याप्तिरित्याशङ्क्य लोकसिद्धार्थानां लोकप्रसिद्धान्वयधीकरत्वे वाक्यार्थस्य मानान्तरार्हता दुर्निवारेति वेदस्यापि पौरुषेयत्वापत्तिरिति दूषयति—मानान्तरार्हत्वेऽपीति। सम्बन्धस्य चौत्पत्तिकत्वमुक्तं न सिद्ध्येदित्याह—शक्यसङ्केते चेति। ननु सामान्यादिविषयसङ्केतस्य पूर्वसिद्धतद्वाचिशब्दैरेव शक्यत्वाद्व्यवहारप्रसिद्धशब्दापेक्षत्वान्न सङ्केतमात्राधीनत्वं शब्दार्थसम्बन्धस्य स्यादित्याशङ्क्य परिहरति—न च सङ्केतव्युत्पत्तये कश्चिदिति। व्यवहारपरम्परयैव सङ्केत-

---

१. पदवाक्यार्थधी ख. २. Omitted च. क.
३. च वैदिकःस्वयंभेदः क. ४. सङ्केतान्तरपूर्वकव्यवहारव्यु ख.

त्नानां सङ्केतोऽनादिपरम्परयास्तु। एवं चान्यत्र दृष्टं साध्यसाधनत्वमन्यत्रारोप्य वक्तुं वेदाः प्रणीताः। न च कार्यान्वयिनः पदार्था लोके, वेदेऽपि कार्य इत्येवं लोकत एव वेदार्थे व्युत्पत्तिर्वाच्या। मानान्तरगम्ये हि कार्ये लोके सङ्गतिग्रहः, नान्यत्र। न चानुबन्धान्यत्वाद्वेदे कार्यान्यत्वम्; अलौकिके हि कार्ये स्थितेऽनुबन्धभेदादवान्तरभेद इति व्यवहारव्युत्पत्त्या मानान्तरगम्यो वेदार्थ इति गहनेयं न्यायपदवी। एवं जैमिनिमते वेदास्वातन्त्र्यात् सूक्तं शब्दब्रह्मविद्भिः "एक एव शब्दो बहुधा प्रकृति-

---

परम्परया व्युत्पत्तेर्न व्यवहारसिद्धशक्त्यपेक्षः सङ्केत इत्यर्थः। ननु लोकसिद्धयोग्यान्वयपरत्वं न वेदार्थस्य मानान्तरार्हत्वापादकम्, अग्निहोत्रहोमादेः स्वर्गादिसाधनत्वस्य मानान्तरानर्हत्वात्, तदनर्हत्वे च पौरुषेयत्वानुमानं सङ्केतानुमानं च कथमापाद्यत इत्याशङ्क्य मानान्तरार्हतोक्त्या तत्सापेक्षतैव विवक्षिता, न वेदार्थे तत्सत्त्वेति वस्तुतः पौरुषेयत्वद्वारमसमर्थत्वमेव फलतीति नोक्तानुमानहतिरित्याह—एवं चान्यत्र दृष्टं साध्यसाधनत्वमिति। ननु सविधिकवाक्ये साध्यसाधनान्वयस्य वाक्यार्थत्वे लोकप्रसिद्धे सत्येवं भवेत्, कार्यान्वय एव तु तत्र प्रसिद्धः; वेदार्थस्यापि च कार्यत्वाविशेषात्तदन्वयोऽन्यपदार्थानां लोकप्रसिद्ध एव स्यात्। स्वरूपेण त्वलौकिकत्वादनपेक्षत्वं च वेदस्येति नोक्तदोष इति शङ्कां लोकव्युत्पत्त्यनुवृत्त्युपगमेन अनपेक्षत्वक्षतिरहेयेति निरस्यति—न च कार्यान्वयिनः पदार्था इति। लोकव्युत्पत्तेः कार्यविषयत्वोपगमेऽपि मानान्तरसिद्धकार्यार्थतैव व्युत्पत्त्युपजीवित्वे; तदनादर एवालौकिककार्यार्थतयानपेक्षत्वमुपेयमित्यर्थः। नन्वनुबन्धाधीनमेव वेदे कार्यस्यान्यत्वम्, न स्वत एवेति पदार्थव्युत्पत्तिर्लौकिकी वेदोपजीव्या; तदनपेक्षत्वं चानुबन्धभेदान्यत्वकृतमिति शङ्कां निरस्यति—न चानुबन्धान्यत्वादिति। लौकिककार्यापेक्षयानुबन्धभेदस्य कार्यभेदकत्वं नोपेयते, अनपेक्षत्वस्थित्युत्तरकालभावित्वात् तदधीनभेदस्येत्यर्थः। व्युत्पत्त्यसम्भवमूलानपेक्षत्वाक्षेपमुपसंहरति—इति व्यवहारव्युत्पत्त्येति। तदनुपपत्त्युपजीवी स्फोटपक्षावतार इत्याह—एवं जैमिनिमते वेदास्वातन्त्र्यादिति। कथं तत्पक्षे स्वातन्त्र्यनिर्वाह इत्यत्राह—तेन यद्यपि वेदार्थ इति।

प्रत्ययपदविभागविकल्पारोपितभेदो लोके वेदे च वाक्यार्थतया विवर्तते" इति। तेन यद्यपि वेदार्थे न सम्बन्धग्रहः, तथापि वेदवाक्यमर्थतया विवर्तते। प्रत्यक्षवर्णपदभेदेऽप्यपूर्वधीकार्यानुगुणमेकमनुमितं भेदैरुपप्लुतमित्युक्तम्। अस्तमितव्याकरणोक्तप्रकृत्यादिविकल्पं स्वयं ब्रह्म प्रकाशत इति हि शाब्दाः। न च लोके श्रोत्रग्राह्ये शब्दशब्दप्रसिद्धिः; लोके हि गौरिति शब्दो गौरिति धीर्गौरित्यर्थ इति युगपदेकाभिधाननिर्देशाच्छब्दात्मक-

स्वयमर्थतया विवर्तमानः शब्दो नार्थसम्बन्धज्ञानमपेक्षते; तदपेक्षया च तज्ज्ञापकमानापेक्षत्वात् स्वातन्त्र्यहानिरिति तत्पक्षे न तद्धानिरित्यर्थः। ननु शब्दतत्त्वं वर्णादिरूपतया प्रत्यक्षसिद्धिमिति तद्विरोधात्तदन्यत्तत्त्वं विवर्तत इति न घटत इत्यत्राह—प्रत्यक्षवर्णपदभेदेऽपीति। अत्रापूर्ववाक्यश्रवणेऽपि ह्यर्थधीकार्यं प्रत्यक्षमिति तदन्यथानुपपत्त्यानुमितमेकं काल्पनिकवर्णपदभेदाच्छादितमर्थतया भातीति न तद्विरोध इत्यर्थः। नन्वेकरूपशब्दतत्त्वस्यानुमेयतोक्तिस्तदापत्त्या मोक्षाङ्गीकारविरोधिनीति कथमप्रत्यक्षत्वं तदुक्तमुच्यत इत्याशङ्क्य तद्विरोधिभेदप्रत्ययस्तमयोत्तरकालं तद्ब्रह्मरूपेण प्रकाशत इत्युपगमात् तदापत्त्या मोक्षोपपत्तिः। ततः पूर्वं स्वसाधकार्थविवर्तसहायप्रकृतिप्रत्ययादिभेदधीतिरोधानान्न साक्षाद्भातीत्युपगमान्न विरोध इत्याह—अस्तमितव्याकरणोक्तेति। ननु श्रोत्रग्राह्यवर्णमात्रविषयशब्दतत्त्वप्रसिद्धिरनुमिततत्त्वान्तरमपि बाधत इत्याशङ्क्य तत्प्रसिद्धिरेवासिद्धेत्याह—न च लोके श्रोत्रग्राह्य इति। सर्वेऽपि हि शब्दाः स्वरूपस्वार्थतद्धीनिर्देशसाधारणा एव लोके दृश्यन्ते; यौगपद्यं च तत्रान्योन्यनिरूप्यतया पृथक्त्वायोगात् सिद्धमित्येकैकपदप्रयोगेपि त्रयप्रतिपत्त्यहानात् गोशब्दादेरिवैकैकव्यक्तिनिष्ठे प्रयोगेऽपि साधारणधीबलादनुगतार्थतैव तेषामिति तत्स्वरूपार्थशब्दशब्दस्यापि तत्सर्वानुगतार्थत्वधिया न वर्णमात्रार्थतेत्यर्थः। युगपदिति विशेषणादक्षादिष्वेकाभिधाननिर्देशेऽप्यनुगतैकार्थत्वाभावो न व्यभिचारावह इत्युक्तम्। यौगपद्याभावस्तत्र प्रसिद्ध एवेत्याह—

१. तया च. क. २. रिति चार्थः ख.

ताधीः । अनेकार्थोऽक्षादिर्न युगपन्निर्देश्यो दृष्टः । एवं च लोकतः कार्यतश्चैकता[1]वस्थितावतात्त्विकं वर्णादिभेदभानम् । एवं च कल्पितविभागाश्रयव्युत्पत्तये वृद्धव्यवहारापेक्षया वेदार्थधीरदुष्टा । तात्त्विकव्युत्पत्तौ हि मानान्तरावेद्यधीर्न स्यादेव । अतात्त्विकव्युत्पत्तेर्बीजं बहुधा—पदमाद्यम्, वाक्यम्, सर्वाणि पदानि, आख्यातं वा इत्यादि । अतोऽप्युपप्लुतता ।

---

अनेकार्थोऽक्षादिरिति । नन्वेवमप्यबाधितवर्णादिधीबलाच्छब्दाद्वैतसिद्धिर्नेत्याशङ्क्य तन्मिथ्यात्वावसायिहेतुद्वयमित्याह—एवं च लोकतः कार्यतश्चेति । वर्णभेदभानं तावदुच्चारणश्रोत्रेन्द्रियकृतम्; पदानां पदार्थानां चान्योन्यभेदभानमर्थनिष्ठव्युत्पत्तिभेदार्थोपस्थापकेन्द्रियादिकृतम्; निर्देशानुगतैक्यभानं शब्दस्वभावमात्रकृतम्, अर्थनिर्देशकत्वसिद्धौ स्वनिर्देशे धीनिर्देशे च व्युत्पत्त्यन्तरानपेक्षत्वात् । एवं चोपाध्यनपेक्षनिर्देशसामर्थ्यसिद्धस्वरूपमात्रं सर्वानुगतं तत्त्वम्, तदन्यत् तत्तदुपाधितो भातीत्यतात्त्विकं युक्तम् मणिकृपाणदर्पणाद्युपाध्यनुगतपरिमाणाद्यन्यत्ववत् । एवमप्रतिपन्नापूर्ववाक्यार्थधीकार्यं च विवर्तापेक्षमित्युक्तमिति शाब्दसिद्धान्तः सुख एवेत्यर्थः । नन्वपरिहार्यैवास्मिन्नपि पक्षे वृद्धव्यवहारापेक्षेति साम्यापत्तिरित्याशङ्क्य नापूर्ववाक्यार्थधीविरोधिनी सेति विशेषमाह—एवं च कल्पितविभागाश्रयेति । मेयानन्तर्भूतोपायसिद्ध्यर्था तदपेक्षा, न मेयाश्रयतयैव मित्युत्पादकतयेति न दोष इत्यर्थः । तदङ्गीकार एव को हेतुरित्याशङ्क्यान्यथापूर्वार्थमित्यसिद्धेरेवेत्याह—तात्त्विकव्युत्पत्तौ हीति । नन्वतात्त्विकव्युत्पत्तेः स्वरूपमेवासिद्धम्, मितिजनकत्वावधारणरूपत्वाद्व्युत्पत्तेरित्याशङ्क्य निरपेक्षजनकत्वाभावेऽपि अखण्डवाक्यनिरूपकतया कथञ्चित्तज्जनकत्वान्न निर्बीजा व्युत्पत्तिरिति परिहरति—अतात्त्विकव्युत्पत्तेर्बीजमिति । वाक्यतदर्थयोरेकत्वसिद्धेः पदतदर्थानां च भेदप्रसिद्धेः कथञ्चिदव्यवस्थिता च व्युत्पत्तिरित्यतोऽपि हेतोरतात्त्विकत्वं व्युत्पत्तेः सिद्धमित्याह—अतोऽप्युपप्लुततेति । ननु वाक्यवाक्यार्थभेदस्याप्येवमतात्त्विकत्वाभ्युपगमात् तद्भेदापेक्षं प्रामाण्यमपि श्रुतेर्विहन्येतेत्याशङ्क्य विवक्षितमोक्षात्मकार्थस्य तात्त्विकत्वान्न प्रामाण्यप्रच्युतिरि-

---

१. तावस्थितातावतात्त्विकम् क.

अतत्त्वोपायतोऽपि तत्त्वभूतमोक्षफलत्वात् श्रुतेः प्रामाण्यम्। न वैदिकी कल्पना प्रत्यवायाय। भेदातात्त्विकत्व एव विनियोगाधीनो मन्त्रार्थः; तात्त्विकत्वे हि नियतार्थतैव। विनियोगात्तु मन्त्रार्थे "उणादयो बहुलम्" इत्यादि युक्तम्। निरुक्तव्याकरणाद्यङ्गविद्याश्च युक्ताः। भेदे तु लोकत एवार्थे व्यर्थता। लौकिकानां वैदिकानां छन्दसि भाषायां निगम इति चातत्त्वे भेदे युक्तम्। व्याकरणमतभेदश्च—अस्ति सकारमात्रं पठन्ति, केचित् असभुवीति; अ[1]तत्त्वे भेदे युक्तम्। अतत्त्वे भेदे चैकादशद्वादशकपालमेकं कर्म; सर्वशाखास्वेकं कर्म; तत्त्वे एकवाक्यार्थधीगम्यमेकं प्रमाणम्, तस्मिन्नानापदार्था-

---

त्याह—अतत्त्वोपायतोऽपीति। ननु भेदोपजीविमित्युत्पत्तेः कल्पनारूपत्वे कल्पनायाः प्रत्यवायकरत्वान्मोक्षफलत्वमेवायुक्तमित्याशङ्क्य वेदतात्पर्यवती कल्पना पुरुषार्थफला, नेतरेति विशेषमाह—न वैदिकी कल्पनेति। मीमांसकैरपि मन्त्राणां विनियोगानुसारेणानवस्थितार्थतोपगमादतात्त्विकत्व एव तदुपपत्तेः स्वरूपतोऽतात्त्विकत्वं वैदिकस्यापि युक्तमिति सर्वसंमतमित्याह—भेदातात्त्विकत्व एवेति। तन्निर्वाहकोपगतानवस्थितप्रत्ययानुशासनाच्च तद्दार्ढ्यमित्याह—विनियोगात्तु मन्त्रार्थ इति। वेदाङ्गत्वप्रसिद्धिश्चैवमेव घटत इत्याह—निरुक्तेति। निरुक्तव्याकरणाद्यङ्गानां प्रमाणान्तरसिद्धार्थानुवर्तित्वे मानान्तरवशतया न स्वाङ्गवशतैवेत्यर्थः। लौकिकवैदिकादिविभागश्चानुशासने मानान्तरसिद्धभेदाङ्गीकार एव युक्त इत्याह—लौकिकानां वैदिकानामिति। धातुप्रत्ययादेरनियतरूपपाठश्च भेदस्यातात्त्विकत्वद्योतक इत्याह—व्याकरणमतभेदश्चेति। मानान्तरगम्यभेदस्य काल्पनिकत्व एवैकादशकपालपुरोडाशजन्यं द्वादशकपालजन्यं चैकमेव कर्मेत्युपगमो युक्तः, शब्दविवर्तरूपस्य तदस्पर्शात्; तत्त्वरूपत्वात्त्वन्यथा न युक्त इत्याह—अतत्त्वे भेदे चैकादशेति। सर्वशाखाविहितकर्मैक्योपगमश्चैवमेवेत्याह—सर्वशाखास्वेकमिति। तस्यान्यथानुपपत्तिमाह—तत्त्व एकवाक्यार्थेति। मानान्तरगम्यभेदानुवर्तिनि हि शास्त्रे तद्गम्यकर्मात्मकार्थैक्ये तत्प्रमितिकार्यैक्यकृत-

---

1. Omitted भेदे ख. क.

न्तर्भावेण नानात्वमित्येकत्वनानात्वविरोधः । समासे [2]शिष्टेऽप्यत्रान्तरार्थभेदादेव वाक्येऽपि प्राप्ते त्वावचनम्; अतत्त्वे समासवाक्ययोरर्थे युक्तम् । वर्णप्रत्यभिज्ञानेऽपि नामाख्यातोपसर्गादिभेदः विलम्बते प्रलम्बते विप्र इति न स्यात् तत्त्वे । वर्णप्रत्यभिज्ञानेऽपि भवति—इति सप्तम्याख्यातसंबोधनभेदो न तत्त्वे । वर्णात्मकपदप्रत्यभिज्ञानेऽपि राज्ञः पुरुषस्य द्विपा इति द्वयेन द्विपान्वयो राजपुरुषस्य द्विपा इति पुरुषमात्रान्वयो न तत्त्वे; उपगोरिदमपत्यस्येदमिति द्वयमिदमर्थान्वयि औपगवस्येदमित्यपत्येन न तत्त्वे । करणं करणेनेति पदार्थयोः प्रत्यभिज्ञानेऽपि तृतीयोत्पत्तिर्न चेति न तत्त्वे । सुबन्तो धातुश्चैकोऽश्वोऽश्वतीति न तत्त्वे । अवर्ण एक एवोपाधेरष्टादशधा नानार्थधीहेतुर्न स्यात्; त[4]त्त्वे ह्येकत्वादस्य सदा सर्वार्थधीः सर्वाधीर्वा । उपा[5]धिभिर्हि ह्रस्वदीर्घप्लुताः प्रत्येकमुदात्तानुदात्तस्वरिता नव सानुनासिकनिरनुनासिकतया अष्टादश ।

---

मेकशास्त्रत्वं स्यात् । तत्र च शाखाभेदप्रयोजकपदार्थभेदानुप्रवेशस्यावश्यकत्वात् तद्भेदाच्छास्त्रतदर्थयोश्च भेदापत्तेरेकत्वनानात्वयोर्विरोधाद्विवर्तापेक्षयैव शास्त्राभेदोक्तिरित्यर्थः । वाक्यसमासविकल्पाथस्मृतिश्चातात्त्विकशास्त्रोक्तभेद[3]वश्ये वेदार्थेऽर्थवती, न लौकिकभेदवश्य इत्याह—समासे शिष्टेऽपीति । काल्पनिकभेदानभ्युपगमे भेदाभेदयोर्वर्णभेदाभेदमात्रावधिकत्वात्तदभेदेऽपि नामाख्यातोपसर्गनिपातभेदोपगमः, सप्तम्यन्तसम्बोधनाख्यातपदरूपभेदोपगमश्चाशक्य इत्याह—वर्णप्रत्यभिज्ञानेऽपीति । पदावस्थान्ते च वर्णाभेदे पदार्थान्वयप्रकारभेदोपगमश्च समासे तद्धिते चाशक्य इत्याह—वर्णात्मकपदप्रत्यभिज्ञानेऽपीति । पदपदार्थान्ते वर्णभेदे च विभक्तिविशेषोत्पत्त्यनुत्पत्तिभेदोपगमो नामाख्यातभेदोपगमश्चाशक्य इत्याह—करणं करणेनेति । वर्णैक्येऽप्यौपाधिकभेदापेक्षार्थभेदोक्तिश्चाशक्येत्याह—अवर्ण एक एवेति । स्पष्टे च द्रव्यगुणभेदे शब्दैरभेदोक्तिरप्यतात्त्विकोक्त्यनुपगमे न श-

---

१. वननानात्वं. क.
२. Added वि. ख.
३. ज्ञाने नामा. ख.
४. तत्त्वेऽप्येक. क.
५. उपाधिः ह्रस्व. ख.

भिन्नेन्द्रियादिना भेदेन भातेऽपि गुणद्रव्येऽपि शब्दादेकताभानम्—सुरभि चन्दनम् इत्यादि शब्दविवर्तादेव। एकस्य प्रादेः प्रयातीति प्रकर्षार्थता प्रतिष्ठत इति विपरीतार्थता प्रलम्बत इत्यनर्थकत्वमतत्त्वे; तत्त्वे च पदार्थतो वाक्यार्थे न निर्णयः। प्रयोगे लम्बत इत्यर्थवदिति नानर्थकतेति न; लम्बत इत्यत्र व्युत्पत्तौ प्रलम्बत इत्यतोऽर्थधीर्न स्यादित्यनर्थकतैव। अनर्थकत्वे चैकवाक्यता[1] विभागधीश्च न; किन्तु प्रलम्बत इत्यत्र वर्णाधिक्यम्। अतत्त्वे सर्वं युक्तम्। प्रकृत्यादिविकल्पस्तु व्याकरणपरम्परानादितयोक्तः। वेदान्तैरपि ब्रह्म ज्ञेयमित्येवं

---

क्येत्याह—भिन्नेन्द्रियादिनेति। तात्त्विकवर्णाधीने चार्थाभिधाने नानाविधवृत्तिरेकस्योपसर्गस्य क्वचिदानर्थक्यं च न घटत इत्याह—एकस्य प्रादेरिति। न च प्रधानभूतवाक्यार्थानुसारेण वृत्तिव्यवस्था तत्परपदपदार्थानां स्यादिति शङ्कनीयम्, तत्पुरःसरत्वाद्वाक्यार्थधियः प्राक् तदानुकूल्यप्रतीत्ययोगादित्याह—तत्त्वे च पदार्थतो वाक्यार्थ इति। आनर्थक्यासिद्धिमाशङ्क्य परिहरति—प्रयोग इति। आनर्थक्ये चैकार्थ्याभावादेकवाक्यत्वासिद्धिर्वाक्यपदविभागासिद्धिश्चेत्यत्यन्तं दुर्घटतैवेत्याह—अनर्थत्वे चेति। ननु विवर्तपक्षेऽपि भेदकल्पनायास्तदुपयोगित्वोपगमादनर्थकत्वदोषः सम इत्याशङ्क्य न सम इत्याह—अतत्त्वे सर्वं युक्तमिति। प्रशब्दसहितमेकं पदमित्येतस्मिन् पक्षे हि तद्वियुक्तपदव्युत्पत्त्यननुगतिप्रसङ्गदोष उक्तः; विवर्तपक्षे त्वमेयविषयत्वाद्व्युत्पत्तेः कार्यदर्शनकल्प्यं व्युत्पत्तेस्तद्धेतुत्वमिति तद्वियुक्तव्युत्पत्त्यैव कार्यसिद्धेः सैव हेतुरस्त्विति न दोषावकाश इत्युक्तः। तत्पक्षेऽपि प्राग्भाविनो हि प्रकृत्यादिभेदकल्पना कार्यहेतुरिति मानान्तरं तत्कारणमनुसरणीयम्; तदभावाद्दोष इत्याशङ्क्य व्याकरणान्तरमस्तु तस्याप्यन्यदित्यनादिव्याकरणपरम्पराभ्युपगमेन परिहारसम्भवमाह — प्रकृत्यादिविकल्पास्त्विति। निर्भेदं ब्रह्म तत्त्वम्, भेदजातं स्वतस्तु काल्पनिकमिति तत्त्वमेव वेदमानार्हम्, नान्यदिति साक्षादेव वेदोक्तमित्याह—वेदान्तैरपीति। देशकालवस्तुव्यावृत्तमल्पपदोक्तं तदस्थायीति मर्त्यपदेनोच्यते; स्वविपरीतरूपास्पृष्टत्वं हि स्थायित्वम्; व्यावृत्तं

---

१. तापि भाग. क.

परैर्विभागः काल्पनिक उक्तः—"यदल्पं तन्मर्त्यं यद्भूम तदमृतम्" इति। अवच्छेदोऽल्पम्, मर्त्यम् अस्थायि, कल्पितत्वादवच्छेदास्थायिता न तत्त्वे स्यात्। तत्त्वसाक्षात्कारपरे "यावद्वाचो गतम्" इत्यद्वैतपरं घटते; अन्यथा कर्मविधयो भिन्नपरा वेदान्ता अद्वैतार्था इति विरोधः। शब्दविवर्तोऽर्थ इत्येवमविरोधः। अत एकब्रह्मानुगुणो वेदराशिरित्येवंविदो ब्रह्मविदो वैयाकरणा एव।

तन्न; यदि व्याकरणोक्तविकल्पादर्थधीः, व्याकरणं बोद्धुं व्यवहारापेक्षा; तद्वरं व्यवहारात्तात्त्विकविभागादेवार्थधीरस्तु। अर्थधीकार्यं च भेदेऽपि घटत इति तत्र तत्रोक्तम्। अद्वैतबोधे च न वेदान्ताः शक्ता इत्युक्तम्। तत्त्वे यद्दोष-

---

तु सद्धीसमय एवासद्धीग्रस्तमिति व्यक्तमस्थायित्वं तस्य; तेनारोपितसत्ताकमेव तत्सिद्ध्येदित्येतन्मर्त्यपदार्थ इत्यर्थः। एवं व्यावृत्तस्य सर्वस्य मिथ्यात्वमुपदर्श्य सर्वानुवृत्तसत्तत्त्वस्य प्रकाशमानात्मसदैक्यप्रदर्शनेन साक्षात्कारपरे वेदराशौ सर्ववेदवर्त्यद्वैतवाक्योपपत्तिरित्याह—तत्त्वसाक्षात्कारपर इति। एवं कर्मविधीनामपि विवर्तापेक्षमद्वैतपरत्वमुक्त्वा तदनङ्गीकारेऽन्योन्यविरोधः स्यादित्याह—अन्यथा कर्मविषय इति। स्वपक्षे विरोधाभावाभिप्रायं प्रकटयति—शब्दविवर्तोऽर्थ इतीति। अतो विवर्तवादिन एव तत्त्वविद इत्युपसंहरति—अत एक ब्रह्मानुगुण इति।

विवर्तापेक्षमप्यनपेक्षत्वं पूर्वपक्षी निरस्यति—तन्न; यदि व्याकरणेति। तत्पक्षेऽपि व्याकरणार्थनिर्णयार्थतया वृद्धव्यवहारव्युत्पत्तेरुपायतोपगमे विशेषाभावात् तात्त्विकविषयव्युत्पत्तिद्वारेण साक्षादेव वाक्यार्थधीहेतुतोपेतुमुचितेति न विवर्तापादकं किंचिदस्तीत्यर्थः। नन्वपूर्ववाक्यार्थधीकार्यान्यथानुपपत्तिस्तदापादिकेत्यत्राह—अर्थधीकार्यं चेति। नन्वेवमपि वेदान्तवाक्याविरोधार्थस्तदुपगम इत्यत्राह—अद्वैतबोधे चेति। तेषामद्वैतार्थतानुपपत्तिरात्मवादोक्तेति न भेदस्तद्विरोधीत्यर्थः। ननु भेदे तात्त्विके मन्त्रानियतार्थत्वादिदोषजातमुपन्यस्तं किमिति ग्रन्थे न परिहृतमित्यत्राह—तत्त्वे यद्दोषजातमिति। ननु विवर्तनिरासप्रस्तावे "जातिगुणयोरिवैकद्रव्यनिवेशात्" इत्यादेः अन्वितार्थत्वप्रकारशङ्कापरस्य ग्रन्थस्य कथमवतार

जातं तत्तुच्छत्वादुपेक्षितम् । एवं निरस्ते विवर्ते जातिगुणयोरिवैकाश्रयतयान्वयो जातिगुणशब्दार्थयोरपि सन्निध्यादेरस्तु, अनन्वितार्थत्वे वैयर्थ्यात् । तन्न; व्यवहारे पदार्थमात्रे शक्तिः, नान्विते । अतो मानानुसारात् व्यर्थतैव इत्यकृतकसम्बन्धसाधनेऽपि न वैदिकान्वयधीः शब्दादिति कृतकतापातः । पूर्वपक्षभाष्यव्याख्या विस्तरभयान्नोक्ता ।

राद्धान्तस्तु—वेदार्थे व्यवहारस्योपायत्वमेकत्वाल्लोके वेदे च पदपदार्थयोः । नन्वेकत्वेऽप्यन्वयात्मकवाक्यार्थधीरहेतुः । न च पदेन पदार्थोऽन्वितो लक्ष्यत इति वाच्यम्; निश्चिते ह्यन्वयपरत्वे लक्षणा । वेदे च तत्परत्वानिश्चये वैयर्थ्येऽपि न हानिः । किञ्च कोऽन्वयः केन लक्ष्यतामित्यपि न निश्चयः । तन्न; पदार्था हि सदा अन्विता एव दृष्टाः, अन्ततोऽस्त्य-

---

इत्याशङ्क्य न तच्छेषोऽयं ग्रन्थः; तन्निरासस्त्ववसितः तदनन्तरं भेदपक्षेऽप्यर्थसामर्थ्यद्वारेण पदैरेवापूर्ववाक्यार्थधीः सुकरेति शङ्कोत्थापनेन तन्निरासपरतयावतार इति सम्बन्धमाह—एवं निरस्ते विवर्त इति । आवापोद्धाराभ्यामनन्वितार्थत्वे व्युत्पत्तिसिद्धे प्रयोगवैयर्थ्यं मानप्राप्तं न दोष इत्यपौरुषेयत्वे वाक्यार्थप्रतीत्यनुपपत्तेः पौरुषेयतामेव तत्प्रतीतिरापादयेदित्यर्थः । यथोक्तपूर्वपक्षपरं भाष्यं व्याचक्षाणस्य टीकाग्रन्थस्यापेक्षितमाकाङ्क्षोत्थापनादि पञ्चिकायामेव कृतम्; पुनश्च यत्तत्र शिक्षणीयं तद्ग्रन्थगतिमात्राङ्गम्, न न्यायशरीरावधारणाङ्गमिति विस्तरदोषभीत्या न प्रदर्श्यते, स्वयमेव व्याख्यातृभिरवधारणीयमित्याह—पूर्वपक्षभाष्यव्याख्येति ।

राद्धान्तमाह—राद्धान्तस्तु वेदार्थे व्यवहारस्येति । लोकव्युत्पत्तेः वेदार्थावगत्यनुपायत्वं पदपदार्थान्यत्व एव स्यात्; तत्तु नास्तीत्यस्त्येव तदुपायत्वमित्यर्थः । ननु तदनन्यत्वं वाक्यार्थावगतौ न हेतुः, तदन्यत्वात्तस्य । न चानन्यत्वेन पदार्थेऽवगते तल्लक्ष्यतया तदन्वयरूपो वाक्यार्थोऽपि प्रतीयेतेत्युपायता; पदोक्तेस्तात्पर्यनिश्चये हि तल्लक्षणाप्राप्तिः; वेदे तु तन्निश्चये मानान्तराभावात् तथापि नोपायतेति चोदयति—नन्वेकत्वेऽपीति । लक्षणानुपपत्तौ हेत्वन्तरं चाह—किंच कोऽन्वय इति । परिहरति—तन्न पदार्था हीति । व्युत्पत्तिसमयदृष्टा-

र्थेन । अतः शब्देनापि यथास्थिता अभिधेयाः । नन्वावापोद्धाराभ्यां स्वरूपमात्रे शक्तिः, अन्विते च शक्तिकल्पनागौरवम् । किञ्च सामान्येनान्विताभिधा व्यर्था । अर्थशक्त्यापि तत्सिद्धेः । विशेषेण चेदानन्त्येन सम्बन्धग्रहाशक्तिः । किञ्च यदि विशेषेणान्वितोक्तेनान्वितो वाच्यः, तदाऽन्योन्याश्रयः; यद्यनुक्तेन, तदा पदान्तरवैयर्थ्यम् । अत एव पदमात्रापोद्धाराभ्यामर्थस्वरूपे शक्तम्, अर्था एवाकाङ्क्षासन्निधियोग्यतासहिता अदृष्टमेवान्योन्यान्वयमाहुरित्याहुः परे । न च सम्बन्धग्रहाशक्त्यनुयोगः; गृहीतसम्बन्धपदोक्तानामगृहीतसम्बन्धानामेवार्थानामन्वयबोधकत्वदृष्टेः नवकविरचितेषु वैदिकेषु च[1] वाक्येषु तद्बुद्ध्यविवादादिति । तन्न; अन्वित एवावापोद्धाराविति साक्षात्पदान्येवान्वितवाचीनि । न च सम्बन्धग्रहाशक्तिः, आकाङ्क्षाद्यु-

---

न्वितरूपाहानेनैव शब्दबोध्या इति पदार्थोक्त्यन्तर्भूतैव वाक्यार्थोक्तिरिति न हेत्वन्तरापेक्षेत्यर्थः । तदन्तर्भावासिद्धिमापादयति—नन्वावापोद्धाराभ्यामिति । सामान्यविशेषविकल्पमुखेन दोषान्तरं चाह—किंचेत्यादिना । विशेषपक्षेऽभिहितेनानभिहितेन वा अन्वितोऽर्थो न वाच्य इत्याह—किंच यदीत्यादिना । उक्तान्विताभिधानदोषदार्ढ्यार्थं तद्दूषणवाद्येव तद्दोषे पराभ्युपगमं चाह—अत एवेत्यादिना । नन्वर्थानामन्वयबोधकत्वेऽव्युत्पत्त्यसम्भवदोषोऽपरिहार्य इत्याशङ्क्य व्युत्पन्नपदोक्तार्थानामन्वयधीकरणे व्युत्पत्त्यपेक्षा नास्तीत्याश्रयणीयम् तद्दर्शनादेवेति परिहरति—न च सम्बन्धग्रहाशक्त्यनुयोग इति । परिहरति—तन्न; अन्वित एवावापोद्धाराविति । यदा हि पूर्ववाक्यात् पदान्युद्ध्रियन्ते अन्यानि चोप्यन्ते, तदा तदर्थाः सान्वया एवोद्ध्रियन्ते ओप्यन्ते चेत्यन्वयविशिष्टार्थधीकराण्येव पदानि गृहीतानीति न केवलवाचीन्युपेयानीत्यर्थः । नन्वन्वयविशेषाणामानन्त्यान्न पदार्थतुल्यतया तद्व्युत्पत्तिरित्यनन्वितार्थान्येवेत्याशङ्क्य सर्वानुगतोपाध्यपेक्षया तद्व्युत्पत्तिः सुकरेति परिहरति—न च सम्बन्धग्रहाशक्तिरिति । ननु तदपेक्षाश्रय-

---

१. Omitted च. क.

पाधेर्व्युत्पत्तेः । पदार्थबोध्येऽप्यन्वयेऽपि विधेयम् । शक्तिकल्पनापि तुल्या । अथ क्लृप्ता पदार्थानामन्वये शक्तिः । श्वेतिमाश्वत्वगन्तृत्वैः प्रत्येकं मानान्तरमितैरन्योन्यान्वयधीजननात्; तन्न; हेषयाश्वत्वं हेषमाणपुरोवर्तिद्रव्यगतमेवानुमीयते। यत्र हि लिङ्गं तत्रैव लिङ्गिधीः; यस्य तु हेषापादानदेशानिश्चयः; तस्य नाश्वत्वाश्रयनिश्चयः। योऽपि पारिशेष्यादाश्रयं वेत्ति, सोऽर्थापत्तेः, न पदार्थादन्वयः । यदि च श्वेतिमादयो मानान्तरगम्या[1] अन्वयबोधिनः तदा तस्मिन्नन्वयेऽशब्दमूले मानमपरमुपेयम् । शक्तिकल्पना चेत्, वरं मुख्ये-

---

णगौरवहानार्थमनन्वितार्थत्वमुपेयमित्याशङ्क्य अन्वयस्यार्थबोध्यत्वेऽपि विशेषव्यवस्थार्थमुपाधेरहेयत्वान्न तदाश्रयणं दोष इत्याह—पदार्थबोध्येऽप्यन्वय इति । शक्त्यपेक्षयापि लाघवमनन्वितार्थपक्षे नास्तीत्याह—शक्तिकल्पनापीति । ननु पदार्थानामन्वयबोधशक्तिर्मानान्तरसिद्धानामपीति न शब्दव्युत्पत्तिस्तत्कल्पनान्तेति तत्र लाघवमनन्वितार्थवादिन इति शङ्कते—अथ क्लृप्ता पदार्थानामिति । परिहरति—तन्न; हेषयाश्वत्वमिति । प्रत्यक्षदृष्टपुरोवर्तिश्वेतकर्तृके हेषाशब्दे तदनुमेयमश्वत्वं तद्वृत्त्येवानुमानार्हमित्यानुमानिकी तदन्वयधीरिति न तत्र पदार्थस्यान्वयधीशक्तिः क्लृप्तेत्यर्थः । ननु हेषाशब्दस्य तदपादानत्वाग्रहविषय एव क्लृप्ततोक्तेत्याशङ्क्य तत्रान्वयधीरप्यसिद्धेति परिहरति—यस्य तु हेषापादानदेशानिश्चय इति । ननु श्वेतस्यापादानत्वानिश्चयेऽपि सन्निहितदेशे तदन्याभावनिश्चयात् श्वेतवर्त्यश्वत्वं भातीति नासिद्धिदोष इत्याशङ्क्य तत्रार्थापत्तिरन्वयगमिका, न पदार्थमात्रमित्याह—योऽपि पारिशेष्यादिति । सन्निहितवस्त्वन्तराभावेऽपि अनुमितमश्वत्वं श्वेतसम्बन्धं विनान्यथानुपपन्नमिति तत्सम्बन्धेऽन्यथानुपपत्तिरेव प्रमाणमित्यर्थः । तदन्वयस्य पदार्थमात्रमेयत्वोपगमे शब्दतात्पर्याभावाच्छाब्दत्वासम्भवात् सप्तमप्रमाणोपगमश्च स्यादित्याह—यदि श्वेतिमादय इति । एवमनन्वितार्थपक्षेऽपि शक्तिकल्पनामवस्थाप्य कल्पनायां च शब्दशक्तिरेव कल्प्या, नार्थशक्तिरिति विशेषमाह—शक्तिकल्पना चेदिति । ननु गत्यन्तराभावाच्छक्तिगौरवमपि न दोष इति

---

१. गम्या अर्थान्वय. ख.

शब्दे; नार्थे जघन्ये। शब्दस्य चार्थशक्तावन्वयधर्माधिक्यमात्रम्, अर्थस्य शक्त्याधिक्यं शब्दे च शक्त्याधानशक्तिरिति शक्तित्रयम्। न चान्योन्याश्रयम्; स्मृतपदार्थमात्रेण ह्यन्विताभिधानम्; अन्वितान्तर्गतस्वरूपमात्रमपि स्मृत्यर्हम्; न्यायावधृतवचनव्यक्तिकं ह्यन्वितमभिधेयम्। पदार्था अपि स्मृता एवान्वयबोधिन इत्याहुः—

"तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः"। इति।

तात्पर्यं पदानामन्वये चेदिष्टम्, शक्तिरपि तत्रैव युक्ता; किमर्थद्वारतया? अन्वयवत्तयैवाभिधेयत्यन्वयोऽर्थद्वाच्यांशः, न व्यक्तिमत्तयैव जातेरभिधेति न

---

शङ्कां हातुं यत्त्वन्विताभिधानपक्षेऽन्योन्याश्रयतापत्तेरनन्वितार्थत्वमुक्तम्। तत्स्मृतपदार्थप्रतियोगिकान्वयोक्त्याश्रयणेन परिहरति—न चान्योन्याश्रयमिति। ननु अन्विताभिधानपक्षेऽनन्वितस्य सम्बन्धाभावान्न पदस्मार्यतेति न तत्स्मार्यतयान्वयित्वमित्याशङ्क्य वाच्यान्तर्भावरूपप्रत्यासत्तिरपि स्मृतिहेतुः। अन्वयविशेषाणामन्योन्यव्यभिचारात् सर्वानुगतान्वितस्वरूपे संस्कारप्रचयात् तदुद्बोधः शीघ्रभावी चेति तन्मात्रस्मृतिर्नानुपपन्नेति परिहरति—अन्वितान्तर्गतेति। शक्तिविषयप्रमित्युत्पत्तिविलम्बे हि स्मृत्यवकाशः, स किन्निमित्त इत्याशङ्क्य तद्धेतुमाह—न्यायावधृतेति। स्मृतप्रतियोगिकान्वयोक्त्युपगमे प्रत्यासत्तिमात्राधीना स्मृतिर्बहुविषयेति नियतान्वयासिद्धिः, अभिहितान्वये नियतान्वयसिद्धिरिति शङ्काहानाय तन्मतेऽपि स्मृतानामेवान्वयबोधकत्वमुक्तम्, अधिकाभावादुपपत्त्येति वदति—पदार्था अपि स्मृता एवेति। पदानामन्वयतात्पर्योपगमोऽप्यन्विताभिधाननियामक इत्याह—तात्पर्यं पदानामिति। तदर्थिनां तत्करत्वासम्भव एव व्यवधानकल्पना, न सम्भवेऽपीत्यर्थः। कथमन्वितशक्तिकं पदमन्वयशक्ति स्यात्, अन्वयान्वितयोर्भेदात्? व्यक्तेर्जात्यर्थपदशक्त्यविषयत्ववदन्वयस्यापि तदविषयतैव न्याय्येत्याशङ्क्य तद्वैषम्येण शाब्दत्वमाह—अन्वयवत्तयैवेति। नान्वयत्यागेनान्वितस्यानन्वितावस्थाव्युदासेनाभिधानसिद्धिरिति न पदशक्तिबाह्योऽन्वयः, न तथा जातेरिति न साम्यमित्यर्थः। नन्वेवं जातिधीविषतापि व्यक्तेर्न स्यादिति साम्योक्त्य-

व्यक्तिवाच्यांशः; तथापि रूप्यन्तर्भावाद्रूपधीरित्येवं साम्यमुक्तम् । अर्थाद्वाच्यांशतया पृथगनभिधेति न व्यतिषङ्गाभिधोक्ता एवं स्थितेऽन्विताभिधाने कार्यव्युत्पत्त्या च कार्यान्वय[१] उक्ते प्रसिद्धार्थान्वयार्हतया च व्युत्पत्तेरुक्तेः वेदे च साध्यस्वर्गविशिष्टावस्थस्य लिङर्थे कार्ये बोद्धृतोक्तेरन्वयार्हस्थायि कार्यं वेदवाक्यार्थो व्युत्पन्नः । लोकव्युत्पत्तिर्वेदानुसारादपूर्वान्ता— इति पदान्येव वाक्यमेकप्रयोजनतयैकमिति अर्थधीतो न भेदापवादादेकतासिद्धिः । यदि हि पदार्थादन्यो वाक्यार्थः, तदा प्रचितसंस्कारस्य पदार्थानवमर्शेऽपि वाक्यार्थधीः स्यात् । यत्र सम्बन्धस्मृतिर्हेतुः तत्र संस्कारप्रचयमात्रमपि दृष्टम् धूमात् सम्बन्धास्मृतावपि प्रचितसंस्कारादग्निधीः । 'अन्धस्य च प्रचितसंस्कारस्य चक्षुर्निरपक्षमेव चलनम्' इति भाष्योक्तम् ।

---

सम्भवश्च स्यादित्याशङ्क्य तद्विषयतास्त्येवेति तदुपपत्तिमाह—रूप्यन्तर्भावादिति । नन्वभिधेयत्वे व्यतिषङ्गाभिधाननिषेधोवितविरोध इत्याशङ्क्य शक्तिद्वयशङ्कानिवृत्त्यर्थं स्वतन्त्राभिधानं निषिध्यते नान्विताभिधानान्तर्गताभिधानस्पर्श इत्यविरोधमाह—अर्थाद्वाच्यांशतयेति । व्युत्पत्तिमूलापूर्ववाक्यार्थधीसमर्थनार्थान्विताभिधानशक्त्युक्तिरिति ततस्तत्सिद्धिं दर्शयति—एवं स्थितेऽन्विताभिधान इति । ननूक्तविधया अपूर्वव्युत्पत्तिर्वेदवाक्यवर्तिनीति "लोकव्युत्पत्तिफलमात्रं वेदे स्यात्, न व्युत्पत्तिभूमिर्वेदः" इत्यभ्युपगमभङ्ग इत्याशङ्क्य लोकव्युत्पत्तिफलमेवैतदन्वयविशेषवत् समभिव्याहारान्तरात् स्थायिकार्यरूपान्वितार्थे वाक्यपर्यवसानमित्याह—लोकव्युत्पत्तिर्वेदानुसारादिति । तत एव स्फोटवादिमतनिरासोऽप्यर्थसिद्ध इत्याह—इति पदान्येव वाक्यमिति । पदार्थव्यतिरिक्तो वाक्यार्थ इत्युपगमे पदार्थानवमर्शेऽपि तद्धीर्दुर्वारेति दूषणमाह—यदि हि पदार्थादन्य इति । स्मृतिसाध्यावधृतकार्ये दर्शनसाध्यावधृतकार्ये च संस्कारप्रचयमात्रादपि क्वचित्सिद्धिदर्शनात् पदार्थस्मृतिव्यतिरेकेणापि कदाचिद्वाक्यार्थधीः स्यादिति दर्शितम्— "अपि च अन्वयव्यतिरेकाभ्यामेतदवगम्यते" इत्यादिना

---

१. कार्यान्विताभिधाने उक्ते क ।

"पदार्थेभ्यो वाक्यार्थः" इति भाष्येऽन्वयो निष्कर्षाद्वाक्यार्थ उक्तः, सोऽन्वितपदार्थाधीन इत्यभिप्रेत्य । विना पदोच्चारणं शौक्ल्ये बुद्धे शुक्लपदार्थतया गुण्यन्वितगुणस्मृतेरन्वितस्य पदार्थतामाह भाष्यम् । यद्भाष्यं

---

भाष्येणेत्यर्थः । नन्वनेन पदार्थवाक्यार्थैक्योक्तिः, "पदार्थेभ्यो वाक्यार्थः"—इति व्यतिरेकाभिधायिभाष्यान्तरविरुद्धेत्याशङ्क्य अभिधीयमानान्वितार्थानुषङ्गसिद्धान्वयधीरित्येतत्परं तद्भाष्यम्, न तद्व्यतिरेकपरमिति परिहरति - पदार्थेभ्यो वाक्यार्थ इतीति । "अपि च अन्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति अवगच्छत्येवासौ शुक्लगुणकं द्रव्यम्" इति किमनेन भाष्येणोक्तम् ? पूर्वोक्तोऽव्यतिरेको ह्येतदनपेक्ष इत्याशङ्क्य अन्वयस्यापि पदवाच्यान्तर्भावस्मृतिरनेनोक्तेत्याह—विनापि पदोच्चारणमिति । शुक्लशब्दस्यावापोद्धाराभ्यां शौक्ल्यमात्रार्थत्वे गुणिविशेषणतया प्रत्यक्षदृष्टे तस्मिन् तदवस्थस्यान्वितस्य शुक्लपदार्थत्वानुस्मृतिरन्वितार्थत्वमेव गमयति; विशेषणार्थस्य हि तद्द्वारेण विशेष्यवृत्तिरन्वितार्थत्वप्रयुक्ता; अन्यथा रूपादिपदवत्तत्र पदवृत्तिर्न स्यात्, वस्तुस्वभावप्रयुक्तान्वयानुसारात् पदस्य तत्र वृत्तिस्तद्वदेव न स्यात् । अन्वितार्थत्वे स्वभावानुसारित्वादन्वयस्य तदनुसारिणी प्रवृत्तिः क्रियान्वयेऽपि स्वतः स्यात्, रूपादिपदानां गुणस्वभावानतिक्रमेण स्वतन्त्रवृत्तिदर्शनादतथात्वमित्येतदुपपादनार्थं तदित्यर्थः । ननु स्पष्ट एवानन्वितार्थस्य श्रौतत्वाङ्गीकारो भाष्ये "यत्तु श्रौतः पदार्थो न वाक्यानुरोधेन कुतश्चिद्विशेषाद्व्यावर्तितुमर्हति" इति पूर्वोक्तं श्रौतत्वमनुभाष्य श्रौतस्यानर्थकत्वेन हेयत्वे वाक्यार्थोऽप्युपादेय इति परिहारोक्तेः; तेन तद्विरुद्धमन्वितस्य पदार्थत्वाभिधानमित्याशङ्क्य पदश्रुत्यनन्तरभावित्वमात्रेणानन्वितस्मृत्यपेक्षयैव श्रौततोक्ता, नाभिधानशक्त्यपेक्षयेत्यविरोधमाह—यद्भाष्यं पदार्थमात्रं श्रौतमपीति । अनन्वितस्यानुभूताधिकत्वाभावात्तद्धियः स्मृतित्वानपायान्न श्रौतपदं मुख्यार्थं ग्राह्यमित्यर्थः । नन्वेवमपि धीकार्यनिष्पत्तेः शक्त्यनुमानान्मुख्यार्थतैवेत्याशङ्क्य शब्दमात्रोद्बुद्धसंस्कारस्यैव धीकरत्वम्, न शब्दस्येत्य-

---

१. Omitted, भाष्यं क.

पदार्थमात्रं श्रौतमिति, तत् श्रुतिमात्रादन्वितस्मृत्यनभिप्रायम्; स्मृतौ हि पदस्य संस्कारोद्बोधकता, न धीजनकतेति न शङ्कितः। बौद्धाः 'गुणान्तरप्रतिषेधः शुक्लपदार्थः' इत्याहुः। तन्नेति भाष्यम्, अन्यापोहकल्पनाप्रत्युक्तेः। 'करणादिवाचिनामतो विभक्तिस्मृतेः करणत्वेनान्वितो नामार्थः' इति भाष्यम्। एवं मानान्तरावेद्यार्थे वेदे कृतकतानुमा प्रत्युक्ता। लोके तु मानान्तरवेद्येन व्यवहारात् क्रियाकार्ये लक्षणया प्रयोगः। विलम्बते प्रलम्बते विप्र इत्यादौ

---

मुख्यार्थतेत्याह—स्मृतौ हीति। एवं च सति "गुणान्तरप्रतिषेधो न शब्दार्थः—इत्येतदपि परिहृतं भवति" इति भाष्येण किं तदनिष्टं निवृत्ततयोच्यते इत्यत्राह—बौद्धा गुणान्तरप्रतिषेध इति। प्रत्यक्षादेरुक्तविधया बाह्यगुणादिसाधकत्वे सत्यपि शब्दोत्थधियो बौद्धोक्तापोहनिष्ठत्वनिवृत्तिः शुक्लादिशब्दस्योक्तान्वितार्थत्वबललभ्यैव; अनन्वितगुणार्थत्वे लक्षणाया अपि वाक्यावधित्वात् पदव्यापिगुणवृत्त्यसिद्धेः तत्परिहारो दुर्लभ इत्येतदर्थं भाष्यमित्यर्थः। "अपि च प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह" इति भाष्यं किमर्थमित्यत्राह—करणादिवाचिनामत इति। 'करणादिवाचिनः प्रातिपदिकात् तृतीया' इत्यादिस्मृतिविहिता विभक्तयोऽन्वितार्थत्वं प्रकृतीनां नियमयन्ति; ता हि स्वयं तत्स्मृतार्थंगतस्वबोध्यान्वयविशेषार्पणेन तद्द्वारकप्रतियोग्यन्वितार्थाभिधायितां तासां संपादयन्तीत्येतद्दर्शनार्थं तदित्यर्थः। अन्वितार्थत्वसम्भवोक्त्यैव वेदस्य पौरुषेयत्वानुमानमप्यपास्तमित्याह—एवं मानान्तरावेद्यार्थं इति। लोकव्युत्पत्तेर्वेदवाक्यार्थविशेषावगत्यसामर्थ्ये एव लौकिकवाक्यसाम्येन पौरुषेयत्वानुमानमवतरेत्। एवं तत्सामर्थ्ये वेदस्य मानान्तरावेद्यार्थत्वोपपत्तेः पौरुषेयत्वव्यापकनिवृत्तेः तदनुमानं नावतरेदित्यर्थः। ननु लोकव्युत्पत्तिर्मानान्तरविषयनिष्ठैवेति तद्विरुद्धं तदवेद्यार्थत्वमित्यत्राह—लोके तु मानान्तरवेद्येनेति। कार्यार्थत्वमात्रं तावद्व्युत्पत्तिसिद्धम्, न क्रियार्थत्वमपि; तत्र प्रयोगनियमस्तु शक्तिग्रहहेतुव्यवहारस्य मानान्तरविषयनियतत्वात्तदविषये तद्ग्रहाभावात्; न तावता शक्त्यभावनिश्चयः, समभिव्यवहारहेतुकान्यार्थत्वस्य तदविरोधित्वात् लक्षणया क्रियायां प्रयोग इति न विरोध इत्यर्थः। स्फोटवाद्युक्तविरोधं विलम्बादिषु वर्णैक्येऽपि शक्त्यन्यत्वेन परिहरति—विलम्बत इति। राजपुरुषस्य राज्ञः पुरुषस्येत्यत्रोक्तान्वयान्यथात्वानुप-

वर्णतत्त्वेऽप्यभिधानान्यत्वान्नानात्वम्, अभिधाविधान्यत्वात् समासासमासयोरन्यथान्वय इतीयं दिक्। श्रीकरोक्तम्—अन्वितेऽभिधेयेऽन्वयो गम्यो नाभिधानिविष्ट इति न शक्तिगौरवमिति। तन्न; न ह्यन्वयात् बहिरन्विते रूपेऽभिधा शक्येति स्वार्थमात्रमविशिष्टम्; तत्तु नान्वयं गमयितुमलम्। अन्विताान्वययोरस्तु भिदा; अभिधा तु न तथा। यदपरं तेनोक्तम्—अन्वितमात्रे पदार्थे न प्रतियोग्यपेक्षा, किन्तु गम्येऽन्वये; सा च पदान्तरोक्तेऽन्विते तत्प्रतियोगिकोऽमन्वयः—इति धिया पूर्णा। इयं हि शब्दशक्तिः यत्सन्निहिते विशेषे तत्रैव बुद्धिवृत्तिः उत्तरार्धेक्षुखण्डाग्नेयीषूक्तेत्यन्योन्यान्वयसिद्धिः; अन्योन्याश्रयं च न प्रतियोगिस्मृत्यापास्यम्—इति, तन्न; उक्तमन्वयोऽभिधानिवेशी, स चेत् प्रतियोग्यपेक्षः, अभिधैव तदपेक्षेति स्मृत्यैवान्योन्याश्रयमपास्यम्। किञ्च पदार्थः सन्निहित उक्तः, न तु गम्योऽपीति नान्वयविशेषधीसिद्धिः। महोदध्युक्तं सर्वं वृत्तौ निर-

---

पत्तेः परिहारमाह—अभिधाविधान्यत्वादिति। तत्र शक्तिभेदाभावेऽपि तत्कार्यविधान्यत्वं व्युत्पत्तिसिद्धमिति तद्विरोधोऽपि नास्तीत्यर्थः। तदुक्तविषयान्तरेऽप्युक्तविधाद्वयानुवृत्त्यन्वयार्था दिगुक्तिः। अन्विताभिधाने परापादितं गौरवमितरेतराश्रयत्वं च श्रीकरेणान्यथा परिहृतम्, तदभ्युपगमशङ्कानिवृत्त्यर्थमनूद्य दूषयति श्रीकरोक्तमित्यादिना। अन्वितेऽभिधेये तदन्यस्यान्वयस्यार्थसिद्धत्वान्न शक्तिगौरवम्—इत्येतदयुक्तम्; न ह्यन्वितस्यान्वयातिरिक्तमनन्वितावस्थाव्यावृत्तमन्वयाक्षेपक्षमं रूपमस्तीत्यन्वयान्तर्भावेणैव तदभिधानसम्भवात्। प्रतियोगिनिरूप्यत्वमनभिधेयान्वयस्यैव नाभिधेयान्वितस्य, द्वयोर्भेदात्—इत्यन्योन्याश्रयपरिहारोऽप्यत एवायुक्तः। गम्यान्वयनिष्ठप्रतियोग्यपेक्षा पदान्तरसंनिहितान्वितविशेषपूर्णा न्यायबलात्—इत्यन्योन्यान्वयनियमसिद्ध्युक्तिश्चायुक्ता; शब्दवृत्तेरेव सन्निहितपर्यवसायित्वं तत्र तत्र व्युत्पत्तिबलादुक्तम्, न गम्यस्यापीति। महोदधिग्रन्थोक्तमन्विताभिधानदूषणं प्रकरण एव निवारितमिति न यत्नान्तरनिवर्त्यम्, तदभिप्रायविवरणार्थं किञ्चिदुच्यत इत्याह—महोदध्युक्तमिति। स्मृतार्थप्रतियोगिकोऽन्वयः पदवाच्यः—इत्युपगमे 'उखायामोदनं पचति' इत्यत्र श्रुतान्वयो न स्यात्, पद-

स्तम्। तत्र किञ्चिद्व्यज्यते नोक्तम्। साहचर्यात्स्मृतिरन्वित एवेति कलाया-न्विता ज्ञाता उखा स्मृता श्रुतमोदनं नाकाङ्क्षेदिति तदन्वयधीर्न स्यात्। किञ्च उखापदादुखार्थसम्बन्धिनोऽपि स्मृतेस्तदन्विताभिधानं स्यात्। अथो-खापदं न कलायाविनाभूतम्, किन्तु स्वार्थेनैवेति स्वार्थमात्र एव स्मृतिः; तन्न; अनुमाने ह्यविनाभावस्तन्त्रम्, स्मृतिस्तु साहचर्यमात्रात्। तदेतदन-वहितचोद्यम्। अस्त्वन्विते स्मृतिः, अस्त्व[1] स्वार्थेऽपि साहचर्यात्; व्युत्पत्तेस्तु व्याहृतस्वार्थान्वयार्थमाकाङ्क्षाद्यनुसन्धानं स्मृतैकदेशस्वार्थनिष्कर्षाच्छ-क्यमिति नोक्तदोषद्वयं युक्त[2]म्। किञ्च अभिहितान्वयेऽप्याकाङ्क्षाद्यर्थं स्मृतिस्थतापि पदार्थानामुपेयैव।

"तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः"।

इति भट्टोक्तेः। स्वमतं तेनोक्तम्—अनुमानाद्यभावेऽपि दृष्टा पदार्थानामन्वये शक्तिः; स्वार्थमात्रे चतुरिन्द्रियसन्निपाते पश्यतो लिहतः स्पृशतो

---

सम्बन्धिनोऽन्वितस्यैव पदस्मार्यत्वात्तस्य च निराकाङ्क्षत्वात् सति चान्वये स्वसम्बन्धिनोऽर्थान्तरस्यापि स्मृत्यविशेषात्तदन्वयोऽपि स्यात्; स्वार्थेनैव पदस्याविनाभावो न तदन्वय्यर्थान्तरेणेति स्मृत्यसम्भवो न शक्यः, स्मृतौ साहचर्यमात्रस्य व्यापारादिति दूषणमुक्तम्; परिहारमाह—तदेतदनवहितचोद्यमिति। प्रतियोगिविशेषविषयसंस्कारोद्बोधस्य सर्वानुगतानुभूतानन्वितार्थसंस्कारोद्बोधसमकालत्वमभ्युपेत्यापि श्रुतान्वयोपपत्तिमाह—अस्त्वन्वित इति। श्रुतान्वयव्युत्पत्तिबलात् स्मृतिस्थैकदेशपृथक्कारेणाकाङ्क्षामापाद्यान्वयसम्भवान्नोक्तदोषस्पर्श इत्यर्थः। मतान्तरेऽप्यभिहितावस्थानामन्योन्यान्वयो न संभवति; तदुपाध्याकाङ्क्षाद्यवमर्शव्यवधाननियमे स्मृतावस्थानामेवान्वयापत्तेः; ततश्चातिप्रसङ्गसाम्ये व्युत्पत्तिसिद्धनियमानुसन्धाननिवर्त्योऽतिप्रसङ्गस्तन्मतेऽपीति साम्यमाह—किंचाभिहितान्वयेऽपीति। शक्तित्रयकल्पनादुष्टोऽभिहितान्वयपक्ष इत्युक्तगौरवपरिहारेण तदुक्तं स्वपक्षनिर्वाहमनुवदति—स्वमतं तेनोक्तमिति। प्रमाणान्तरशङ्काशून्यविषयेऽपि पदार्थानां पृथगव-

---

१. अस्तु चाखा क.    २. Omitted युक्तम् क.

जिघ्रतः 'आम्रो मधुरः शीतः सुरभिः' इत्यन्वितधीः। अतः स्वार्थमात्रेऽपि पदार्थे सन्निध्यादेरन्वयधीरस्तु इति। तन्न; रसादेराश्रयानुमा; 'द्रव्यम् नान्यदिहाम्रात्' इत्येवं पारिशेष्यानुमयान्वयधीः, नार्थाधीना। न चेन्द्रियसमाहारजा। प्रत्यभिज्ञानेऽपि संस्कारेन्द्रिययोरेकार्थान्वयधीशक्तिः, नार्थयोस्तत्तेदन्तयोः। अतः[1] सन्निध्याद्युपहितान्मानान्तरगम्यान्नान्वयधीरिति शब्दस्पर्शाद्वाच्येऽर्थेऽन्वयशक्त्याधानशक्तिः शब्दस्योपेया[2]। महाव्रतेन— आम्रादन्यत् 'मधुरा शर्करा' इत्युदाहृत्य 'तिक्ता शर्करा' इत्यधिकमुक्तम्— जानत एव मधुरां पित्तदुष्टजिह्वस्य 'तिक्ता' इत्यन्वयधीरनुमानात्मिका बाधिते न स्यात्; सन्निधिस्त्विन्द्रियसमशीलो बाधितेऽपि भ्रमयतीति[3]युक्तमिति। तन्न, जानत एव मधुरां पारिशे[4]ष्यानुमया तत एव 'तिक्ता'

---

गतानाम् 'आम्रोऽयं मधुरः शीतः सुरभिः' इत्यन्वयधीकरत्वदर्शनान्न शब्दस्पर्शाच्छक्तिकल्पनेति। तत्रापि मानान्तरमस्त्येवेति दूषयति—तन्न रसादेराश्रयानुमेति। गुणानां गुण्यनुमानलिङ्गत्वं तावदसंदिग्धम्; तदेवाम्रातिरिक्तद्रव्याभावधीवशादबाधिततद्विशेषान्वयावसायीति नार्थशक्तिस्तत्र कल्प्या, पर्वतस्थाग्न्यनुमाने प्रत्यक्षबाधिताग्न्यन्वयप्रदेशेतरदेशान्वयवदनुमानार्हत्वात्। न चेन्द्रियसमुदायस्य तद्धीकरत्वं कैश्चिदनुमतमप्युपेयं अन्यथोपपत्तेः। न च प्रत्यभिज्ञायां संस्कारेन्द्रियाभ्यां पृथगवगतयोस्तत्तेदन्तात्मकार्थयोः एकार्थसंश्लेषधीकरत्वं दृष्टमिति शङ्कनीयम्, संस्कारेन्द्रिययोरेव धर्मद्वयसंश्लिष्टैकार्थधीकरत्वात्। एवं मानान्तरगम्यार्थानामन्वयबोधशक्त्यसिद्धेः गौरवमपरिहार्यमेवेत्यर्थः। तथाप्युदाहरणान्तरेऽर्थस्यैवासन्दिग्धमन्वयबोधकत्वं दृष्टमिति परोक्तमनुवदति—महाव्रतेनाम्रादन्यदिति। शर्करायाः मधुरस्वभावत्वं जानतोपि पित्तदोषात् 'तिक्ता शर्करा' इति धीर्भवति, सा नानुमानार्हेत्यर्थहेतुकैवेति। दूषयति—तन्न जानत एवेति। पारिशेष्यानुमानेनैव प्राङ्मधुरस्वभावत्वमवगतं नान्येनेति; तेन तिक्तेति धीरपीति न बाधितविषयत्वादिह तन्निवृत्तिः स्यात्। न चैवं मधुरस्वभावत्वहानिः जिह्वास्थतिक्तपित्तसत्तावगमे पारिशेष्यासिद्धेस्तिक्तानुमानहानान्मधुरानुमानस्य पारिशेष्यासिद्धिनिमित्तहानाभावादितरस्यानुमाना-

---

१. तेन. क.
२. पेता. क.
३. Added. उक्तं. ख.
४. ष्योक्त एव. ख.

इत्यपि धीर्दुर्वारा; जिह्वास्थतिक्तपित्तनिश्चये तु पारिशेष्यासिद्धिः । 'म[१]धुरा' इति तु जिह्वास्थमधुरद्रव्यान्तरानिश्चयान्न[२] पारिशेष्यासिद्धिरित्यनुमैवेयम् । 'तिक्तः' इत्यनुमाभासता पश्चाद्बाधात्, न तु प्रत्यक्षबाधितेऽनुमाभासोदय इत्यवधेयम् । विदग्धेनास्मन्मतं दूषितं श्रूयताम्—विरुद्धासिद्धसन्दिग्धोदाहरणानि—

"प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि" इति ॥

न हि पदान्यन्वयधीतः पूर्वम्; अर्थानन्तरं तद्धीरित्यर्थस्य शक्तिरिति विरुद्धम्; अभिधातृत्वं स्वत एवासिद्धम्; तात्पर्यं साक्षात् प्रणाड्या च सिद्धमिति साधारणत्वे सन्देहकरं सन्दिग्धमिति । तन्न, व्युत्पत्तेर्हि शक्तिधीः; सा च पदश्रुत्यनन्तरं प्रयोज्यस्यान्वितेऽर्थे चेष्टादृष्टेः पद एव प्रथमम्;तदा ह्यर्थे

---

भासत्वनिश्चयादिति तत्रापि नार्थशक्तिरुपेयेत्यर्थः । नन्वेवं बाधितविषये अनुमानानुत्पत्त्युपगमो निर्बीज इत्याशङ्क्य प्रत्यक्षबाध एव तदुपगमः; अनुमानबाधे तूक्तविधया तुल्यताभिमानसम्भवादाभासोदयोऽभ्युपेत एव । प्रत्यक्षबाधे पूर्वोत्पन्नप्रत्यक्षविरोधान्नाभासोदय इति वैषम्यमाह—न तु प्रत्यक्षबाधित इति । परापादितमन्विताभिधानहेतुदूषणं दर्शयति असारतां तस्य दर्शयितुम्—विदग्धेनास्मन्मतमिति । प्राथम्यं पदानां वाक्यार्थबुध्यानन्तर्यविरोधित्वाद्विरुद्धम्; अभिधातृत्वं पदानां स्वार्थस्मारकत्वमात्राङ्गीकारादसिद्धम्;तात्पर्यं साक्षाद्व्यवधानसाधारणत्वात् संशयहेतुतया सन्दिग्धमिति । तदसारतामाह—तन्न व्युत्पत्तेर्हीति । व्युत्पत्तेः शक्तिग्राहकत्वात् शक्तिव्यवस्थापकतया विवक्षितं प्राथम्यं व्युत्पत्त्यपेक्षमेव तावदुपेयम्, न तत्कार्यवाक्यार्थधीकालापेक्षम्; तत्काले च पदान्येवार्थधीहेतुतया प्रसक्तानि, तदर्थानां प्रयोज्यवृद्धधीविषयतया तत्प्रवृत्त्यनुमितानां बोध्यकोटितयैवावगमाद्व्युत्पत्त्युत्तरकालभावित्वादाकाङ्क्षादिविषयान्वितस्मृतेरिति शक्तिधीकाले पदानां शक्तिप्राप्तिः प्राथम्यपदोक्तेति न विरुद्धत्वापादनावकाशः । अभिधातृत्वहेतुरभिधातृत्वपक्षापेक्ष एवोक्तः, न स्मारकत्वापेक्ष इति व्यक्तमेव प्रकरणे । तात्पर्यमात्रं पदानां नाभिधातृतेति पक्षे स्वतः साक्षादेव तत्परत्वनिर्वाहः प्राप्तः; तदशक्तावेव प्रणाडूयेति न दूषणशङ्केत्यर्थः । मुख्यार्थपदहीने च वाक्ये अभिधानानिर्वाहादर्थबोध्यत्व-

---

१. मधुरेतु. क.

२. Omitted. न. ख.

शक्यकोटितया धीर्न शक्ततयेति प्राथम्यमविरुद्धम्। द्विधा हि तन्मतम्-पदमभिधातृ वा, स्मारकं वा वाक्यार्थधीपरम् । तत्र अभिधातृपक्षे [1]'नासिद्धाभिधातृता। तात्पर्यपक्षे च यो यत्परः स साक्षात्तत्परत्वसम्भवे न प्रणाड्येति व्याप्तेर्न तात्पर्योपगमादिति सन्दिग्धम्। यत्तेनापादितम्— [2]'अमुख्यार्थैकमेये वाक्ये न किञ्चिदभिधायीत्यर्थादेवान्वयधीरुपेया 'प्रिया सरसीमवगाहते', 'सागरं ददाति' [3]इत्यादौ, तन्न; द्वयेऽपि तिङः कर्तृसंख्यायां [4]मुख्यार्थत्वात्; एवंविधं सर्वत्रावश्यकम् । अत उक्तम्—"न हि सर्वपदान्येवा[5]मुख्यार्थानि वाक्ये" इति । [6]यदि च सर्वममुख्यार्थं परं मुख्यार्थमभिधानपर्यवसानार्थमध्याहार्यमूह्यपदवत्। यद्वा न वाक्यात् [7]स्वार्थधीः, किन्तु अभिप्रायात्, सिद्धार्थपरात्तथानुमितेरित्यवधेयम्। वाचस्पत्युक्तम्—अन्विताभिधानपक्षेऽनेकत्र शक्तिः, अन्वयेऽर्थे च, अभिहितान्वये त्वेकत्र स्वार्थे; अन्वितावस्थे तु लक्षकता सम्बन्धात्तत्परपदप्रयोगव्युत्पत्त्यनुपपत्त्या च । यथा मानान्तरदृष्टोऽ[8]र्थो लिङ्गम-

---

न्वयस्यावश्याभ्युपेयमिति तदापादितमनुवदति—यत्तेनापादितमिति । प्रियासरसीमिति । सरसीपदस्य गौण्या वृत्त्या प्रियात्मकान्वय्युपस्थापकत्वम्, रूपकविशेषणं प्रियापदमिति न स्वार्थान्वयपरम्, अवगाहत इति च गौणार्थमिति नैकमपि मुख्यार्थम् । सागरं ददातीति चान्योन्यान्वयायोग्यमन्वयमुखेनैवादातृत्वोपस्थापकमित्यस्वार्थवृत्त्येव पदजातं वाक्यार्थपरमिति अर्थनिमित्तैव तद्धीरित्यर्थः । परिहरति—तन्न द्वयेऽपीति । प्रकरणादिगम्यकर्तृविशेषनिष्ठं हीदं वाक्यद्वयम्; तद्विशेषणसंख्यायाः तिङर्थत्वादन्विततत्संख्योक्त्यैव तत्परं स्यात् । सर्वत्राप्येवंविधमपेक्ष्यामुख्यार्थाखिलपद वाक्यं नास्तीत्युक्तं प्रकरणे; तत्सम्भवेऽप्यध्याहारापेक्षया तदुक्तिघटते, पदाध्याहारस्याप्यन्यथानुपपत्त्योहविषयेऽङ्गीकृतत्वात्; सिद्धार्थपरवाक्ये वक्तृज्ञानानुमानमात्रावगतार्थेऽभिधानानुपगमाद्वा कार्यार्थवाक्यविषयैव तदुक्तिरिति तद्दूषणापादनमशक्यमेवेत्यर्थः । शक्तिगौरवादन्विताभिधानत्यागः तल्लाभादभिहितान्वयग्रह इति मतान्तरमाह—वाचस्पत्युक्तमिति । ननु लक्षकतयाप्यर्थस्य प्रमितिशक्तिरक्लृप्तेति तत्कल्पना दुर्वारेत्यत्राह—यथा मानान्तरदृष्टोऽर्थं

---

१. न सिद्धा क. ख.
२. अमुख्यार्थमये क.
३. सादरं ददातीत्येवमादौ ख.
४. मुख्यत्वात् क.
५. Omitted अर्थ क.
६. यदि सर्वं क.
७. वाक्यार्थधीः क.
८. अर्थोऽपि ख.

नुपपत्त्यान्वयधीहेतुः तथा पदोक्तो व्युत्पत्त्यनुपपत्त्यास्तु । वाच्येऽन्वयायोग्ये योग्यसम्बन्ध्यन्वयो लक्षणावृत्तिर्निरूढा, नेह तथेति चेन्न; अनन्यलभ्ये [1]शब्दशक्तिरिति परं वाच्यानुपपत्तिमात्रात् सम्बन्धिस्वीकारमात्रं क्वापि लक्षणालक्षणमस्तु । अन्वितभेदावस्थासम्बन्धिनी न पूर्वदृष्टेति चेन्न; सन्निद्ध्याद्युपाधेः सामान्यतोऽन्वितभेदस्य धीस्थ[2]तास्तु । सम्बन्धस्मृतावेव स्मृते स्वार्थमात्रे नाभिधातृतेति चेन्न; [3]शब्दादर्थधीरेवाभिधोच्यते लोके; अतः स्मृतिरप्यभिधा व्युत्पत्तितः । स्मार्यस्मारकत्वादसत्यपि सम्बन्धान्तरे स्मृति-

इति । व्याप्त्यानुपपत्त्या चार्थस्य तच्छक्तिः क्लृप्तैवेत्युपस्थापकव्याप्त्यनुपपत्त्योरवान्तरान्यत्वेऽपि सामान्यप्रयुक्तक्लृप्तशक्त्यनुवृत्तेर्न कल्पनेत्यर्थः । ननु प्रसिद्धलक्षणाप्रयोजकरूपाभावान्नेयं लक्षणेति कथं तदपेक्षया शाब्दतावगम इति शङ्कते—वाच्येऽन्वयायोग्य इति । परिहरति—नानन्यलभ्य इति । यद्यपि प्रसिद्धलक्षणायां स्वार्थस्यान्वयायोग्यत्वम् अन्यस्य तदर्हत्वं चास्ति, तथापि वाच्यानुपपत्तिमात्रात् तत्सम्बन्धिमेयग्रहमात्रं तल्लक्षणमुपेयम्; न सम्बन्धिनोऽन्यान्वयोऽपि, शब्दस्य तद्धीजननशक्तिकल्पनापत्तेः, कल्पनायाश्चान्यथोपपत्तावयोगादिति लक्षणैवेत्यर्थः । ननु गङ्गाघोषादौ वाच्यसम्बन्धितया स्मर्यमाणस्य वाच्यानुपपत्त्या मेयताग्रहस्तत्र प्रसिद्धः, अन्वितविशेषरूपवाक्यार्थस्य त्वननुभूतत्वादस्मर्यमाणस्य मेयत्वग्रहस्तत्तुल्यो नेति नेयं लक्षणेति शङ्कते—अन्वितभेदावस्थेति । परिहरति—न सन्निध्याद्युपाधेरिति । पूर्वदृष्टोपाधिसामान्यस्यापूर्वविशेषवृत्त्यवगमे तदुपाधिसम्बन्ध्यनुभूतान्वितावस्थास्मृतिरननुभूतविशेषनिष्ठानुषङ्गा स्यादिति स्मर्यमाणस्यैवानुपपत्त्या मेयत्वमत्रापीति प्रसिद्धिसाम्याल्लक्षणैवेत्यर्थः । नन्वेवमप्यभिहितान्वयो न सिध्येत्, स्वार्थमात्रस्यानधिगतत्वाभावात् स्मृतिमात्रार्हत्वादिति शङ्कते—सम्बन्धस्मृतावेव स्मृते स्वार्थमात्र इति । परिहरति—न शब्दादर्थधीरेवेति । न स्मृतिव्यतिरेकाभिप्रायाभिधोक्तिः स्मृतिविशेषार्थतया वृद्धप्रसिद्धेरित्यर्थः । ननु स्मृत्यनतिरेके स्मृतिहेतुसम्बन्धासिद्धिदोष इत्यत्राह—स्मार्यस्मारकत्वादिति । संस्कारोद्बोधमात्रं

१. शक्तिः शब्दस्येति क. २. धीस्तथास्तु क.

३. शब्दार्थधीः क.

रस्तु । तन्न, अस्त्वेवम्; एवं चेत् लक्षणा विधान्तरेण कल्प्या; कल्पनाद्वयं दुर्वारम् । स्मारकत्वे, लक्षणाविधा पदस्मारिते च सेति सूक्ष्मम्; स्मारकत्वे कल्पनाद्वयम्; अन्वयविशिष्टेऽर्थे त्वेकत्रैवैकस्य शक्तिः; उपेत्यैवेदमुक्तम्; वृत्त्यन्तरे हि कल्प्ये जघन्यं धीहेतुत्वम्, परं शक्तिकल्पनेति दिक् ॥

---

हि तदपेक्षितम्; न सम्बन्ध एव, पुरुषान्तरस्मृतिकरत्वावगतिमात्रेणापि तदुद्बोधसम्भवात् स्मृत्युपपत्तेः सम्बन्धान्तराभावेऽपि न हानिरित्यर्थः। एवं शक्तिलाघवमुखेनापि तत्समर्थनमयुक्तमित्याह—तन्न अस्त्वेवमिति। विशिष्टार्थपरपदप्रयोगव्युत्पत्तिः पदार्थस्य तत्प्रमितिकरत्वापादिका लक्षणायाम्—इत्येतदेव तावदसिद्धम्, तदभ्युपगमः 'अस्तु' इति दर्शितः। तथापि प्रसिद्धलक्षणातः विधान्तरकल्पनयैव लक्षणागतिरिहोपेयेति कल्पनागौरवं प्रकरणोक्तमलङ्घ्यमेवेत्यर्थः। ननु पदार्थमात्रे स्मारकत्वोपगमान्न गौरवमित्यत्राह—स्मारकत्व इति। लोके व्यवहितलक्षणाया अपि दृष्टत्वादर्थस्मारितस्यापि क्लृप्तप्रमितिशक्तिकत्वाविशेषादव्यवस्थाप्रसङ्गे सर्ववाक्यसाधारणं प्रमितिकरत्वं पदस्मारितमात्रस्यैवेत्युपेयमिति कल्पनाद्वयमुक्तमलङ्घ्यमेव; अन्विताभिधाने त्वेकैव शक्तिरिति स्थितमेवेत्यर्थः। ग्रन्थोक्तानुसारादियं गौरवोक्तिः; वस्तुतस्तु शब्दप्रयोगानुपपत्तिगम्यं प्रमितिकरत्वं शब्दस्यैवोपेयम् स्वतः प्राप्तस्य साक्षात्त्वस्य बाधापत्तेरित्याह—उपेत्यैवेदमुक्तमिति। ननु क्लृप्तशक्त्युपजीवनसम्भवे साक्षात्त्वहानिर्न दोषः; क्लृप्ता च शक्तिर्लक्षणायां स्मर्यमाणस्यार्थस्यान्वयप्रमितौ, तदस्मृतौ तदभावात्; पदस्य चाभिमुख्ये धीशक्त्यनुपगमात्तदन्वयपरपदोक्त्यनुपपत्तिसहायवत्तया चेति शङ्कानिवर्तकहेत्वर्था दिगुक्तिः। स्वान्वयप्रमितिशक्तिः स्मर्यमाणस्यार्थस्य न क्लृप्ता; पदैः स्वार्थान्वयोक्तौ तदनुषङ्गसिद्धं स्मर्यमाणप्रतियोगिनः तदुत्थप्रमितिविषयत्वम्, न स्वार्था सेति न तस्य तज्जननशक्तिः; तस्य कारणत्वस्वाभावेऽपि विषयत्वस्य प्रचुरसिद्धत्वात्; तत्स्मृतेश्च तद्विषयसर्वव्यवहारसाधारणकारणता, न प्रमित्यसाधारणकारणतेति लक्षणायामपि नार्थस्य प्रमाणता क्लृप्तेति शब्दस्यैव कल्प्येत्यभिप्रायः॥

---

# वेदांश्चैके सन्निकर्षं पुरुषाख्याः ।

## वेदापौरुषेयत्वाधिकरणम् ।

अनन्तरचिन्तापर्यन्तेन पदवाक्योत्थमप्रामाण्यं निरस्तम् । विभागतोऽभिधोपाधेः पदता एकपरतोपाधेः पदानामेव वाक्यतेति भेदोक्तिः । अधुना वाक्ये समाख्यानादप्रामाण्यं निरस्यत इति सङ्गतिद्वयम् । पूर्वपक्षस्तु—कर्तुरस्मृतेरलौकिकार्थे कर्तुरनुमानुत्पत्तेरकृतका वेदा इत्युक्तम्; काठकादिसमाख्यया कर्तृस्मृतिरूपया मानान्तराहार्था वेदाः सापेक्षतया न प्रमाणम् । ननु यथा "कृते ग्रन्थे" इति सूत्रात् कृतिनिमित्तता, तथा "तेन प्रोक्तम्" इति सूत्रात् प्रवचननिमित्ततापीति न कृतिनिश्चयः । तन्न; असाधारणेन हि निर्देशाञ्जस्ये कृत्यैवाख्या; प्रोक्तिस्तु बहुभिः शक्येति न "तेन प्रोक्तम्" इत्यस्य विग्रहस्यार्थे समर्थोऽयं तद्धितः । न च सूत्रं निर्विषयम्, यत्र मानान्तरात्तस्मिन् विग्रहार्थे तद्धितनिश्चयः तद्विषयं सामर्थ्यात् सूत्रम् । 'प्रोक्तसूत्रमयु-

---

वेदांश्चैके । कथं पौरुषेयत्वमुखाक्षेपस्यास्मिन् स्थाने निवेश इत्याशङ्क्य तत्परभाष्याभिप्रायविवरणमुखेन सङ्गतिमाह—अनन्तरचिन्तापर्यन्तेनेति । वाक्यमुखाक्षेपसमाध्यनन्तरं वाक्यविषयसमाख्याप्राप्तनिरासात्तदानन्तर्यमित्यर्थः । ननु पौरुषेयत्वानुमाने निरस्तेऽर्थसिद्धः समाख्यानिरास इत्याशङ्क्याधिकशङ्कोद्भावनेन पूर्वपक्षमाह—पूर्वपक्षस्त्विति । कर्त्रस्मृतिहेतुकालौकिकार्थत्वं प्राक् पौरुषेयत्वानुमानविरोध्युक्तम्; समाख्यायास्तु तत्स्मृत्यात्मकत्वाल्लौकिकार्थत्वमेव वेदस्येति न पूर्वपक्षासिद्धिरित्यर्थः । ननु समाख्यायाः कर्तृस्मृतिरूपत्वं कृतिनिमित्तत्वनिश्चय एव स्यात्; "तेन प्रोक्तम्" इत्यपि स्मृतौ न तन्निश्चय इति चोदयति—ननु यथा कृते ग्रन्थ इतीति । परिहरति—तन्न असाधारणेनेति । विशेषणस्य अन्यव्यावर्तकत्वनियमात् कृत्यपेक्षयैव तत्सम्भवात् तन्निमित्तत्वनिश्चय इत्यर्थः । नन्वेवं "तेन प्रोक्तम्" इति सूत्रं निर्विषयं स्यादित्याह—न च सूत्रं निर्विषयमिति ।

---

१. वदना. क. २. मेकवाक्य. क.

कम्' इति यदुक्तं तत्प्रकृतपरम् । कृततानुगुणं च वेदे दर्शनं प्रावाहणिरित्य-पत्यार्थप्रातिपदिकोक्ततद्धितान्तं प्रावाहणिजन्मनः पूर्वं नासीद्वेद इत्येव-मनुगुणम् ॥

राद्धान्तस्तु—कर्तृस्मृतिः साक्षान्नास्ति । मानान्तरावेद्ये चार्थे नानुमा-नार्हः कर्ता । समाख्यास्मिन्नेव विषये प्रवचनात् समर्था; प्रकृष्टं वचनं कस्यचिदेव क्वचिद्यत्वेऽपीत्यसाधारण्यात् निर्देशः । प्रावाहणिरित्याद्यन्यार्थे गुणवादादर्थे लक्षणोक्तकृदिकारादिस्वीकारो वक्ष्यतेऽर्थवादपादे । यद्भाष्ये

---

मानान्तरसंवादापेक्षमेव तद्विषयनिर्धारणम्, तदभावे कृतिनियम उक्तहेतुबलादि-त्यर्थः वेदनिर्देशोऽपि पौरुषेयत्वसूचकोऽस्तीत्याह—कृतकतानुगुणं चेति ।

राद्धान्तमाह—राद्धान्तस्त्विति । साक्षात्कर्तृस्मृतिरेव समभिव्याहारप्राप्ता-लौकिकार्थत्वबाधेन पौरुषेयत्वापादिका, तदभावात्तु कर्त्रनुमानप्रचारान्न प्रामाण्य-क्षतिरित्यर्थः । ननु समाख्याप्युक्तविधया तद्बाधेन तदापादनसमर्थेत्यत्राह — समाख्यास्मिन्नेवेति । वचनप्रकर्षापेक्षयान्यव्यवच्छेदेनैकव्यपदेश्यत्वमेकस्याद्यापि बहूनां सहपाठे दृश्यते; तद्दर्शनादन्येऽपि तथैव व्यपदिशन्तीति पूर्वकालेऽपि नानुपपत्तिरिति न कृतिनियमसिद्धिरित्यर्थः वेदान्तर्गतानित्यतोस्थापकबबरप्रावाहण्यादिगतिर्विधि-वाक्यशेषार्थवादेषु विध्यनुसारेण जघन्यार्थग्रहस्य वक्ष्यमाणत्वात् इहापि तद्धित-प्रत्ययानुपगमेन कृत्प्रत्ययोपगत्या नित्यार्थानुसारिण्येव स्यादिति नानित्यताहेतुरि-त्याह—प्रावाहणिरित्याद्यीति । स्वस्थानव्याख्यास्यमानजघन्यवृत्तेरत्रैव व्याख्याने प्रयोजनमाह—यद्भाष्ये वक्ष्यमाणमिति । जघन्यार्थग्रहोक्तिप्रसङ्गादुन्मत्तवाक्यतुल्य-वनस्पतिसर्पकर्तृकसत्रक्रियाद्यर्थकवाक्यानि चोदाहृत्य तच्छङ्कातपरिहारयोरिहैव कर्तुमुचितत्वात्तदर्थमिहैव तद्व्याख्यानमित्यर्थः । "अपि च अविप्रगीतः सुहृदुपदेशः कथमिवाशङ्क्येतोन्मत्तबालवाक्यसदृशः" इति भाष्यम् कथं शङ्कितदोषार्थवादे हेत्वन्तरपरं घटत इत्याशङ्क्य चोदनाविषयमेव तदुच्यते, नानन्तरार्थवादविषय-मिति परिहारस्तत्रापि प्रामाण्यदार्ढ्यमात्रपरमिति न स्वरूपसाधनार्थम्, बुध्यु-

वक्ष्यमाणं व्याहृतम् 'वक्ष्यामः' इत्येवं नोक्तम्, तदसम्बद्धार्थमेवमाद्युन्मत्तवाक्यतुल्यमस्त्वित्युपन्यस्य निरस्यमिति गुणवादव्याहृतिः, "अपि च अविप्रगीतः, सुहृदुपदेशः" इत्यादि भाष्यम्। तत्सर्वजनाविपर्ययाच्चोदनाप्रामाण्यदार्ढ्यार्थम् ॥

इति महोपाध्यायश्रीभवनाथमिश्रकृतौ नयविवेके
प्रथमस्याध्यायस्य
प्रथमः पादः ।



---

त्पत्तिमात्रेण तस्य स्वतः प्रामाण्यनयसिद्धत्वादित्याह—तत्सर्वजनाविपर्ययादिति। कतिपयार्थवादमात्राकृष्टमप्युन्मत्तादिकृतत्वं तुल्याध्ययनकृत्स्नवाक्यव्यापकमेव स्यादिति चोदनायामपि तत्प्रसङ्गे तन्निरासोऽभ्युच्चयोक्त्यापि क्रियत इति चोदनाप्रामाण्यदार्ढ्यार्थं तदित्यर्थः।

इति रविदेवकृते विवेकतत्त्वे
प्रथमस्याध्यायस्य
प्रथमः पादः ।



# नयविवेकः

महामहोपाध्यायश्रीभवनाथमिश्रविरचितः ।

## प्रथमाध्यायस्य द्वितीयः पादः प्रारभ्यते

त्रिपाद्यामनवद्यं यन्मतं व्यक्तं गुरोः स्वतः ।
विस्तरं सुग्रहं कर्तुं भवः सङ्क्षिप्य वक्ष्यति ॥

---

# नयविवेकदीपिका

महामहोपाध्यायश्रीवरदराजबुधवर्यविरचिता ।

## प्रथमाध्यायस्य द्वितीयः पादः

प्रणताज्ञानसन्दोहध्वान्तध्वंसनकर्मठम् । नमामि तुरगग्रीवं हरिं सारस्वतप्रदम् ॥ १ ॥
यन्नामग्रहमात्रेण क्षीयन्ते विघ्नहेतवः । तमेकदन्तं वन्देऽहं वन्दकाभीष्टदायिनम् ॥ २ ॥
यत्पादपङ्कजद्वन्द्वनिरन्तरनिषेवणात् । विद्यानिधिः शिष्यगणो नमामस्तं सुदर्शनम् ॥ ३ ॥
नमामि पितरौ वृद्धावपि कल्याणचेतसः । यत्प्रसादेन मूकोऽपि भवेद्वाचस्पतेः समः ॥ ४ ॥
नमामि जैमिनिमुनिं[1] भाष्यकारप्रभाकरौ । नाथं भवं निबन्धृंश्च चन्द्रादीन् समुपास्महे ॥ ५ ॥
पुरा शुका[2]पगातीरे किडांम्बिकुलभूषणम् । यज्ञद्रोणात् समभवत् प्रणतार्तिहराभिधः ॥ ६ ॥
तस्मात्समभवत् प्राज्ञो देवराजो बहुश्रुतः । ततः श्रीरङ्गनाथाख्यो विपश्चित्सत्तमोऽजनि ॥ ७ ॥
तत्सूनुना वरदराजबुधाग्रिमेण व्याख्यायते नयविवेक इति प्रबन्धः ।
तत्सम्प्रदायमहिता नयदीपिकेति ख्याता यदीयकृतिरादरणीयभावा ॥ ८ ॥
तत्र त्रिपाद्यां गम्भीरं भवदेवसमीरितम् । अहं नयविवेकं तं व्याचक्षे दुर्ग्रहं परैः ॥ ९ ॥
महान्तं यत्नमास्थाय कर्तुं शक्यं विधान्तरम् । तथापि सम्प्रदायोऽत्र दुर्लभः सम्प्रकाश्यते ॥१०॥
अनेकविधदोषेण दुष्टा यद्यपि मत्कृतिः । अदोषयन्तु तां सन्तः कृपाबहुलचेतसः ॥११॥
अवज्ञां येऽस्माकं विदधति जनाः केचिदपि ते विजानन्ति प्रायः स्वमतिपरिणामावधि कियत् ।
न तानुद्दिश्येयं कृतिरपि तु मत्तुल्यमहिमा जनिष्यत्येकोऽपि स्वकृतगुरुसेवाहततमाः ॥१२॥

---

१. R. मिनिं तद्वत् । २. R. गंगापगा ।

## आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ॥ १ ॥

उक्तं कार्यमर्थं प्रतिपादयतो वेदस्य प्रामाण्यमिति । मतद्वयेपि

---

तत्र प्रथमपादोक्तस्य सर्वग्रन्थसाधारणतया सुगमत्वात् तत्र गुरुणा ग्रन्थः संक्षिप्त इति तदीयगम्भराशयविवृतये स्वेन तत्र [1]ग्रन्थो विस्तृतः । अत्र त्रिपाद्यां वाद्यन्तराप्रसिद्धवा[2]क्यविवृतिविषयत्वान्न्यायानां तत्सुखावगत्युन्मुखशिष्य-व्युत्पत्तये विस्तरप्रधानो गुरुग्रन्थ इति तदभिप्रायमात्रकथनाय [3]तदर्थसंग्रहप्रधानः स्वग्रन्थ इति श्रोतृजनमनस्समाधानार्थमाह–त्रिपाद्यामिति । विनियोगसमुत्थाप्रामाण्य-निरसनरूपार्थैक्यापादकस्त्रिपादीति समाहारनिर्देशः द्वादशलक्षणीतिवत्[4] । ननु स्वत एव [5]गुरुग्रन्थस्य निरवद्यत्वे व्यक्तत्वे च स्वकृतिर्व्यर्थेत्यत्राह सुग्रहमिति । श्रोतृणां सुखग्रहणमपि स्वकृतेः प्रयोजनमेव । ननु व्यक्तत्वादेव स्वतः सुग्रहत्वं सिद्धमेवेत्यत्राह—विस्तरमिति । विस्तरमित्यर्श आदित्वादजन्तः 'ऋदोरप्' इति वा कर्मण्यणन्तः । ननु पूर्वमेव विस्तृतस्य व्याख्याने पुनरतीव विस्तर इति सुग्रहत्वं[6] न स्यादित्यत्राह–संक्षिप्येति । मतस्य संक्षेपो नाम अल्पशब्दैरभिधानम् । अतो नातीव विस्तरः । वक्ष्यतीति पाकं पचतीतिवत् । वेद्यं सुग्रहं कर्तुं विस्तरं संक्षिप्य अल्पीकृत्य तन्मतं वक्ष्यतीति वा योजना । भवो वक्ष्यतीति । स्वोक्तावपि प्रथमपुरुषनिर्देशः उत्तमपुरुषनिर्देशात् कमप्यतिशयं व्यनक्ति । रामः करोतीतिवत् । अतिशयश्च अपक्षपातादिः अनुल्लंघ्यत्वादिर्वा ।

आम्नायस्य । वायव्यं श्वेतमालभेत भूतिकामः वायुर्वै क्षेपिष्ठा देवतेत्यादि-सार्थवादेषु[7] विधिवाक्येषु चिन्ता-किमेतान्यप्रमाणं उत प्रमाणमिति । तदर्थमियं चिन्ता-वायुर्वै क्षेपिष्ठेत्यर्थवादस्य किं हेतुसमर्पकतयाऽन्वयः, किं वा स्तुतिसमर्पकत-येति । यदा हेतुसमर्पकतयाऽन्वयः तदा हेतुसापेक्षत्वादप्रामाण्यम् । यदा स्तुतिसमर्प-कतया तदाऽनपेक्षत्वात् प्रामाण्यमिति फलफलिभावः । एवं सर्वत्र फलफलिभावः ऊह्यः । अत्र टीकायामुक्तानुवादः कृतः । स न युक्तः प्रयोजनाभावादित्याशंक्य तदनुभाषणपूर्वकं प्रयोजनमाह–उक्तमिति । ननु पूर्वपक्षोत्थानहेतुतया उक्तानुवादः स्वपूर्वपक्षावसर एव कार्यो नात्रेत्यत्राह—मतद्वयेऽपीति । यद्यपि परमते सिद्धेपि शब्दशक्तिः तथाप्यध्ययनायाससाफल्याय प्रयोजनवदर्थपरत्वं स्वाध्यायस्य विधिनाऽऽपादितम् । प्रयोजनं च कार्य एवार्थो न सिद्धः तस्य प्रवृत्तिनिवृत्त्यनुपयोगात्, अतः परमतेऽपि कार्यप्रतिपादकतयैव वेदस्य प्रामाण्यम् । गुरुमते तु कार्यपर-त्वाच्छब्दस्य तत्रैव प्रामाण्यमिति मतद्वयेपि कार्यप्रतिपादकतया प्रामाण्यं

---

१. A. प्रपञ्चित २. A. वाक्यवृत्ति ३. A. तदर्थप्रतिपादकः, ४. R. णीवत्
५. R. गुरुमतस्य ६. A. पुनरति ७. R. विधिषु ।

समानमिदं पूर्वपक्षोत्थानायोक्तमत्र। चोदनासूत्रे अर्थाद्वा शब्दाद्वा चोदनात्वेन वेदस्य प्रामाण्यं कार्यार्थतयैवोक्तम्। कृतिसाध्यता कार्यता इष्टसाधनता वा अस्तु, कार्यमेव प्रधानतया वेदार्थः। योऽपि परमते वेदान्तानां सिद्धोऽर्थः सोऽप्यात्मज्ञानचोदनैकवाक्यतया कार्यप्रधानकः अथवा न वेदान्तानां चोदनैकवाक्यता। न चास्मिन् शास्त्रे तत्प्रामाण्य-

---

समानमिति मतद्वयपूर्वपक्षहेतुत्वसाधारण्यात् प्रथमत एव साधारणतया वृत्तं कीर्तितमित्यर्थः।

ननु कार्यप्रतिपादकतया प्रामाण्यं कुत्र? कथं वा उक्तमित्यत्राह—चोदनेति। चोदनालक्षणोऽर्थो धर्मं इति चोदनाप्रमाणकः कार्यरूपो हि वेदार्थ इति प्रतिजानता तत्र चोदनैव प्रमाणमित्यर्थादुक्तं भवति। प्रवर्तकाभिधायि च वाक्यं चोदना। प्रवृत्तिश्च कार्यलभ्येति चोदनात्वेनैव प्रामाण्याभिधानात् कार्यार्थतयैव प्रामाण्यमुक्तं भवति, अन्यथा चोदनात्वाभावात्। अतश्चोदनासूत्रे कार्यार्थतयैव प्रामाण्यमित्यर्थः। ननु येषां मते प्रामाण्यप्रतिज्ञा श्रौती तन्मते नैवमित्यत्राह—अर्थाद्वेति। तथात्वेपि चोदनात्वेनैव प्रामाण्यप्रतिज्ञानात् मतद्वयेपि कार्यपरत्वं वेदस्याविवादमित्यर्थः। ननु परमते इष्टसाधनस्यैव प्रवर्तकत्वेनेष्टत्वात तदेव वेदार्थो न कार्यमित्यत्राह—कृतिसाध्यतेति। इष्टसाधनस्यापि कृतिसाध्यतयैव प्रवर्तकत्वेनाङ्गीकारात तस्यापि कार्यपदाभिधेयतया कार्यं वेदार्थ इति मतद्वयेपि अविरुद्धमित्यर्थः। ननु लिङादेरेव कार्यमर्थो न सर्वस्येत्यत्राह—प्रधानतयेति। सर्वपदानां कार्यान्वितस्वार्थाभिधायकत्वात् सर्वोऽपि वेदः कार्यप्रधानक एवेत्यर्थः। ननु परेषां सिद्धेऽपि व्युत्पत्त्यङ्गीकारात् वेदान्तभागानां सिद्धब्रह्मपरत्वमिति न सर्वो वेदः कार्यपर इति तत्राह—योऽपीति। परमते सिद्धव्युत्पत्त्यङ्गीकारेपि स्वाध्यायाध्ययनविध्यापादितप्रयोजनवदर्थपरत्वाय कार्यपरत्वेऽवश्यवाच्ये वेदान्तभागस्यात्मज्ञानचोदनैकवाक्यतयैव प्रामाण्यं वाच्यमिति वेदान्तभागोऽपि कार्यप्रधानक एवेत्यर्थः। ननु आत्मज्ञानचोदनैवानुपपन्नाः—

कर्तुमकर्तुमन्यथा वा कर्तुमशक्यस्य विधानानङ्गीकारात्। भवतु यथाकथंचित् ज्ञानसाधनश्रवणादिविधिपरतया विधियोग्यता। तथापि न तेन सर्ववेदान्तानामेकवाक्यता सन्निधानाभावादित्यरुच्या पक्षान्तरमाह—अथवेति। सत्यज्ञानादिसिद्धार्थानां वेदान्तानां कार्यपरतैव नास्ति तन्मात्राभिधानेऽपि जिज्ञासोः प्रवृत्तिसम्भवात। ननु कथं तर्हि चोदनासूत्रे प्रामाण्यप्रतिज्ञेत्यत्राह—न चेति। न च वेदान्तभागस्य प्रामाण्यं चोदनासूत्रे प्रतिज्ञातं, किन्तु कार्यंपरभागस्येत्यर्थः। कुत्र

प्रतिज्ञा । अथातो ब्रह्मजिज्ञासेति शास्त्रान्तर एवेति [1]स्थितेः ।

[2]परपूर्वपक्षः—कार्यस्य हि कार्ये वाक्यार्थेऽन्वयः करणेतिकर्तव्यतयोः स्वरूपतस्साध्ययोरेव साधनतयाऽन्वयः, अधिकारिणोऽपि साध्यस्यैवान्वयः । अर्थवादानां तु असाध्यार्थानां नान्वयः, अतस्तेषामप्रामाण्यम् इति । राद्धान्तैकदेशी दूषयति—माभूत्तेषां प्रामाण्यं विध्युद्देशस्यैव प्रामाण्यमस्तु । नहि कृत्स्नो वेदः प्रमाणमिति प्रतिज्ञातम् ।

तर्हि तत्प्रामाण्यप्रतिज्ञेत्यत्राह—अथात इति । कर्ममीमांसायां तदप्रामाण्येपि न काचित् क्षतिरिति भावः । एवं वृत्तकीर्तनमुपपाद्य परपूर्वपक्षमाह–परेति । (अत्रेति) न ह्यर्थवादानां कार्यार्थतया प्रामाण्यं कार्येण सहान्वयाभावात् । कथमभाव इत्यत्राह—कार्यस्येति । नन्वेवं करणेतिकर्तव्यतयोः कार्येणान्वयो न स्यात् साधनतया तयोः कार्यत्वाभावात् प्रत्युत कार्यस्य प्रधानस्य कार्ये प्रधानेऽन्वयो न घटते गुणप्रधानभावेन विना शाब्दान्वयाभावादित्यत्राह—करणेति । न ह्यत्र कार्यत्वं प्रधानत्वमुच्यते येन कार्यानन्वयः[3] स्यात् । किन्तु कृतिव्याप्यत्वं तेन स्वरूपतः साध्ययोरेव क्रियात्वेन स्वभावतः कृतिव्याप्ययोरेव करणेतिकर्तव्यतयो–केन कथमित्याकाङ्क्षाद्वयपूरकत्वेन कार्ये प्रधानभूते वाक्यार्थे साधनतयाऽन्वय इत्यर्थः । ननु कथमधिकारिणः स्वरूपतोऽसाध्यस्य कार्यान्वय इत्यत्राह—अधिकारिणोऽपीति । यद्यप्यधिकारिणः स्वरूपतस्साध्यता नास्ति । तथाप्यैश्वर्यस्य फलभागिताख्यस्य साध्यत्वात् तदुपाधिकं साध्यत्वमस्त्येव । विषयनियोज्ययोस्तु परानङ्गीकृतयोः न कार्यान्वयप्रसाधनायासोपयोगः । यद्वा कार्यं वाक्यार्थ इत्युक्ते निरूढे कार्ये यदन्वयि तत्साध्यमेव । निरूढिदशान्वयिनि तु नियोज्ये नायं नियमः । विषयस्तु स्वरूपतः साध्य एव । कालादेरपि कथञ्चित् क्रियायोगात् साध्यतया कार्यान्वयः । न चैवं क्रियान्वये साध्यता, साध्यतया च क्रियान्वयः इतीतरेतराश्रयता, भाविपरामर्शे तदभावात् । अत एव द्रव्यगुणजातीनामपि कथञ्चित्साध्यतया कार्यान्वयः । अर्थवादस्य तु नैवमन्वयार्हते[4]त्याह—अर्थवादानामिति । राद्धान्तैकेति । अर्थवादाप्रामाण्योपगमेन दूषणाभिधानं स्वपक्षविरुद्धमिति एकदेशिमतेन दूषणमुच्यत इत्यर्थः, दूषणमाह—माभूदिति । अकार्यार्थानामर्थवादानां माभूत् प्रामाण्यं, कार्यार्थस्य तु विध्युद्देशस्य प्रामाण्यमस्तु तथाप्यस्मिन् पूर्वपक्षे प्रतिज्ञाया असर्वविषतया प्रतिज्ञाक्षेपपर्यन्तत्वाभावात् [5]नात्रेदमधिकरणमारभ्यमित्यर्थः ।

कुचभरभूभृत्सेवाहेवाकविपिनकलभेन । मुकुटलुठत्पिच्छेन प्रभुणा वयं सनाथाः स्मः ॥

१. B. तत्सिद्धेः २. B. अत्रपुनः ३. A. परकार्यान्वय । ४. A. इत्यत्राह ५. R. नेद

किन्तु चोदनालक्षणको वेदार्थ इति प्रतिजानता अर्थात् स्वार्थे चोदना प्रमाणमिति प्रतिज्ञातम्[१]। तद्यद्यचोदनात्मको वेदो न प्रमाणं न हानिः। यस्तु अर्थवादेनैकवाक्यत्वे "यजमानः प्रस्तर" इत्यादिः [२]अबोधकः किंपदं गौणमित्यनिश्चयात्, सोऽप्रमाणं एकवाक्यत्वे हि यद्विधेयार्थं [३]ततोऽन्यद्गौणमिति निश्चयात्। बोधकतया योऽपि "आपो वै शान्ताः" इत्येवंविधो बोधको मानान्तरगम्यस्यार्थस्य, सः सति मानान्तरे तथ्यः असति तु वितथः। योऽपि "उत्ताना वै देवगवा वहन्ति" इत्येवंविधो मानान्तरविरुद्धार्थः स्वतः किंपदं मुख्यं किं गौण-मित्यनिश्चयात् सोऽप्रमाणम्[४], एकवाक्यत्वेऽपि हि विधेयानुगुणतया निश्चयः। एवं च त्रिविधमेवाप्रमाणमस्तु न नः प्रतिज्ञाहानिः। अथेदं परमतम्—

सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते॥

विध्युपयोगो विधिवन्निगदाधिकरणे, विधौ हि भाव्यता पश्वादेः तदभावे नेति। अर्थवादानां प्रवृत्तौ रुच्युत्पादः मन्त्राणामनुष्ठेयस्मृति-

---

ननु कृत्स्नवेदप्रामाण्यप्रतिज्ञानात तदेकदेशार्थवादाप्रामाण्येपि प्रतिज्ञा-हानिरस्त्येव तत्राह—नहीति। चोदनासूत्रे अर्थाच्चोदनानामेव प्रामाण्यप्रतिज्ञानाद-चोदनात्मकार्थवादरूपवेदाप्रामाण्येपि न प्रतिज्ञाहानिरित्यर्थः। ननु वेदैकदेशार्थ-वादप्रामाण्याक्षेपो वेदत्वसामान्यादेकदेशान्तरे चोदनारूपेऽपि आपतति इति शङ्कां अप्रामाण्यप्रयोजकाननुवृत्त्याऽपवदति[५]—यस्त्विति। विधान्तरेण परमत-माशङ्कते—अथेति। प्रामाण्यन्तु वेदस्य सर्वस्यापि प्रथमपाद एव सिद्धम्। अधुना तु त्रिपाद्यां तदेकदेशानां विध्यर्थवादमन्त्राणामुपयोगमात्रमुच्यत इत्यर्थः। ननु विध्युपयोगो न क्वचिदपि वक्ष्यते। अर्थवादत्वनिरासेन क्वापि विधिपरत्व-प्रसाधनाभावादित्यत्राह—विधीति। तमेव दर्शयति—विधौ हीति। सत्यं न क्वापि विधिपरत्वं साध्यते तथापि विधिवन्निगदपूर्वपक्षे भावार्थविधिपक्षे यत् फलस्य साध्यत्वमुक्तं तदुपे[६]त्यैव वाक्यभेदापत्त्या विध्यनुपपत्त्या फलपरत्वनिरासात् विधिवन्निगदे विध्युपयोग[७] उक्त एवेत्यर्थः। इतरयोरप्युपयोगमाह—अर्थवादानामिति। अर्थवादनये मन्त्राधिकरणे चोच्यत इति शेषः। ननु स्मृतिपादे नामपादे च कथ-

---

१. निर्ज्ञातं B २. न बो B ३. विधेयं B ४. सोऽपि न B
५. V. अपवादयति ६. V. पेद्यैव ७. R. ष्वप्युपयोगः

रिति । एवमुपयोगकथैव त्रिपाद्यामिति ॥ तन्न ॥ एवं हि द्विविधोऽध्यायार्थ इत्यध्यायभेद एव स्यात् ।

अथायमुपयोगः प्रामाण्यमेव भागशः त्रिपाद्याम्, सर्वशः प्रथमपादे ( उक्तः ) । अतएव एकं प्रामाण्यमध्यायार्थ इति ।

तन्न । भागानामचोदनात्वेनाप्रामाण्येपि न प्रतिज्ञाहानिः । अथ प्रतिज्ञातचोदनाप्रामाण्यचिन्तैवेयं, [१]अन्यथा अर्थानुपयुक्तेऽर्थवादभागे स्वाध्यायविधे[२]रव्याप्त्याऽर्थबोधहानात् प्रयोजनान्तरपरतया चोदनानां प्रामाण्यं न स्यादिति । तन्न । [३]अर्थबोधहानेपि न [४]प्रयोजनान्तरपरत्वानङ्गीकारात् अर्थाविवक्षा स्वाध्यायस्य । स्वसिद्धिरेव हि विधेः प्रयोजनम्,

मुपयोगकथनपरत्वमित्यत्राह—एवमिति । तत्राप्येवमुपयोगपरत्वमूहनीयमित्यर्थः । तन्नेति । उपाधितोप्येवमैक्याभावेऽर्थभेदेऽध्यायभेदो दुर्वारः । ननु कृत्स्नवेदस्यापि सामान्येन कार्यपरतया प्रामाण्यं प्रथमपाद एव सिद्धम् । इह तु तदेव कार्यपरत्वमर्थवादानां स्तावकतया मन्त्राणां अनुष्ठेयावस्थकार्यस्मारकतया विध्येकदेशादीनामुद्भिदादीनां नामतयैव भागशः प्रतिपाद्यत इति प्रामाण्यमेवोपयोगकथनमुखेनोच्यत इति नाध्यायार्थभेद इति शङ्कते—अथेति । तन्नेति । पूर्वोक्तप्रतिज्ञाहान्यभावरूपो दोष आपततीत्यर्थः । अर्थवादमात्रप्रामाण्याक्षेपस्याध्ययनविधिमुखेन चोदनाप्रामाण्याक्षेपकत्वं शङ्कते—अथेति । अर्थवादाप्रामाण्ये तद्भागस्यार्थानुपयुक्तत्वादध्ययनस्य नार्थावबोधः फलं, किं तु प्रयोजनान्तरपरतया फलान्तरमेव स्वर्गादि कल्प्यम् । ततश्च अवैरूप्याय विधिभागाध्ययनस्यापि तदेव प्रयोजनमित्यन्यपरत्वात् स्वाध्यायविधेरविवक्षितार्थतया चोदनानामपि प्रामाण्यं न स्यादित्यर्थः । तन्नेति । मा भूदव्यापितया[५] अर्थावबोधः प्रयोजनम्, तथापि प्रयोजनान्तरकल्पनायोगात् न स्वाध्यायस्याविवक्षितार्थता शङ्क्येत्यर्थः । कथं न प्रयोजनान्तरमित्यत्राह—स्वेति । किं विधेः प्रयोजनान्तराकाङ्क्षा किं वा विधिवाक्यस्य आहोस्वित् विधिसिद्धेः । न तावदाद्यः, विधेः स्वसिद्धिरेव प्रयोजनं यत इत्यर्थः । न द्वितीय इत्याह—विधिवाक्येति । कथं तर्हि कामाधिकारे फलसिद्धिः प्रयोजनमित्यत्राह—कामेति । विधिसिद्धिरेव तत्रापि प्रयोजनं फलसिद्धिस्तु [६]नियोज्यान्वये नान्तरीयकीत्यर्थः । नापि तृतीय इत्यत्राह—विधेश्चेति । प्रयोजनरूपायास्तस्या न प्रयोजनान्तरापेक्षा । [७]सामान्यतः प्रयुक्तस्वाध्यायग्रहणात्मकाध्ययनरूपविषयमात्रलभ्येति

१. Bar. omits २. विधेयस्य Bar ३. R. अर्थबोधाभानेपि ४. A. सप्रयोजनत्वाङ्गी
५. V. भूदस्यापि तथार्थाव ६. B. साचान्यतः ७, R. नियोज्यतार्थं

विधिवाक्यस्य च तद्बोधसिद्धिरेव। कामाधिकारेऽपि विधिसिद्धिरेव प्रधानं प्रयोजनम्। फलसिद्धिस्तु नान्तरीयकी। विधेश्च स्वाध्यायग्रहण-मात्रात् सिद्धिः[1]। अर्थज्ञानं तु विषयस्वभावाज्जातं न विधिज्ञापितम्, यथाजात[2] एवाधिकारी नरः पर्यवसानार्थिना विधिना स्वीकृतः। अतो न नियोज्यार्थिताऽस्य विधेरित्युक्तं शास्त्रादौ। विषयफलं न काम्यतया नियोज्यविशेषणमित्यपि तृतीये शंयुनये वक्ष्यते। परमतमास्थायार्थज्ञान-कामस्य अधिकारशङ्का। यदि तदधिकारः स्यात् तदा कृत्स्नस्वाध्यायस्य विधिरेवार्थज्ञानार्थतामाक्षिपेत् हुमित्येवमादीनामप्यर्थपरता स्यात्। न च सेष्यते। ते हि स्तोभाक्षरतया ऋगक्षराव्याप्तसामभागपरिपूरणार्था नार्थ-ज्ञानपरा इति नवमे वक्ष्यते। तेऽपि न तथाभवेयुः। प्राक्चाध्ययनात् प्रियत्वेनाज्ञानात् कामनानुपपत्तेश्च।

---

न प्रयोजनान्तरकल्पना युक्तेत्यर्थः। नन्वेवं विध्यनपेक्षितत्वे कथमर्थज्ञानस्य फलतया स्वीकार इत्यत्राह—अर्थज्ञानं त्विति। नन्वेवमर्थज्ञानस्याविधिज्ञापितत्वे अव्यापित्वे च कथं विधिना स्वीकार इत्यत्राह—यथेति। [3]अव्यापित्वेऽर्थज्ञानस्य यथा अधिकारिविशेषणत्वस्वीकारः यथा सर्वविधीनामधिकारिनरपर्यवसानार्थित्वं तथा शास्त्रमुख एव [4]प्रपञ्चितमिति भावः। यतएव विषयफलत्वमेवार्थज्ञानस्य न विध्याक्षेप्यत्वं अतोऽध्ययनविधेरनियोज्यत्वं शास्त्रादावुक्तम्। विषयफलस्य नियोज्यविशेषणानर्हत्वं तृतीये शंयुनये वक्ष्यमाणं चोपपन्नमित्याह—अत इति॥ नन्वेवं सति कथमर्थज्ञानकामस्याधिकाराशंका टीकायामित्यत्राह—परमतमिति। कथं तर्हि तन्निरास इत्यत्राह—यदीति। अर्थज्ञानकामस्याधिकारे तद्विधिः कृत्स्नस्यापि स्वाध्यायस्य अर्थपरतामाक्षिपतीति हुमादीनामप्यर्थपरत्वापत्त्या स्थलान्तरसिद्धार्थ-हानापत्तेः तदसंभव इत्यर्थः।

ननु योग्यानामेवार्थपरत्वं विधिराक्षिपति हुमादयस्तु अयोग्याः, इति न तेषामर्थपरत्वापत्तिरित्याशङ्क्य काम्यत्वासंभवमाह—प्राक्चेति। उपलब्धपूर्वे हि कामना नानुपलब्धपूर्वे इत्यर्थज्ञाने अध्ययनात्पूर्वं प्रियत्वेनाज्ञाते कामनाऽनुपपन्नैव। स्वर्गे तु सुखजातीयतया यथा काम्यता तथा षष्ठ एव प्रपञ्चितमिति भावः। ननु ज्ञातवेदवेदार्थाध्यापयितृपुंवाक्यात् वेदार्थेऽभ्युदयकरतया ज्ञाते पश्चात्त-

---

१. A. विधिश्च.....सिद्धं २. A. तं.....नरभेद-कृतं

३. यथाहितमिति ४. शास्त्रादावेव

अथाध्यापयिता ज्ञात[1]वेदार्थोऽध्यापनसिध्यर्थं अध्ययने प्रवर्तयितुं अध्ययनमभ्युदयकरतया बोधयन् कामनामुत्पादयिष्यति । तन्न । न हि सर्वो नित्यनैमित्तिकनिषेधार्थोऽपि तथा । नित्यादिनियोगो हि स्वतो वेदात्[2]व्युत्पत्तिबलात् अर्थबोधे [3]कृतीप्सितः । न परोक्तेः प्रियः । न चैकदेशप्रियतया कृत्स्नस्वाध्यायाध्ययनविधिः कार्यतया बोधार्हः । परोदयकरेषु तु न कामनेति तु नोक्तम् । परोपदेशकरतया लाभादिसंभवात् कामनोपपत्तेः । न चेदमुक्तम्, उदयकरेऽपि न सर्वस्याध्येतुः सर्वत्र कामनेति

द्विषयकामनेति अर्थज्ञानकामाधिकारको विधिरितिशङ्कते—अथेति । तन्नेति । न हि सर्ववेदार्थो लोकप्रसिद्धप्रयोजनरीत्याऽभ्युदयकरतया परोक्तिबोध्यः । नित्यनैमित्तिकनिषेधेषु तदसम्भवात् । ननु माभूल्लोकप्रसिद्धप्रयोजनरीत्या, किन्तु तदप्रसिद्ध[4]निरुपाधिकृतीप्सिततया नित्यादिनियोगः परोक्तेः पुरुषार्थतया ज्ञाप्यतामित्यत्राह—नित्यादीति । नित्यादिनियोगो हि स्वव्युत्पत्तिबलेन स्वतो वेदात्[5] बोधे कृतीप्सितः न परोक्तेः प्रियः पुंवाक्यात् तज्ज्ञानस्यानर्हत्वात्, लोकप्रसिद्धसुखतत्साधनाद्यन्यतमत्वाभावेन कृतीप्सितत्वाद्यभावात् वेदा[6]त्त्वधीतात् तस्य कृतीप्सितताधीर्युक्ता [7]लोकप्रसिद्धकृतीप्सितत्वमात्रस्य वेदव्युत्पत्तिबलेन बाधितत्वात् । अतो नित्यादिनियोगस्य न पुंवाक्यात् प्रियत्वेन ज्ञाप्यतेत्यर्थः । ननु कामाधिकारेष्वर्थज्ञानस्य प्रियत्वमस्ति तावतापि अर्थज्ञानकामाधिकारो घटते । न चाव्यापित्वदोषः । गुरुमते कृत्स्नस्वाध्यायाव्यापिनोऽपि अर्थावबोधस्य अध्ययनप्रयोजनत्वोपगमादित्यत्राह—न चेति । न हि गुरुमते अध्ययने प्रवृत्त्यर्थमधिकारः किन्तु विधेः विधित्वार्थः । स च नार्थज्ञानकामस्य किन्तु अर्थज्ञानवतोऽध्ययनमीमांसाश्रवणयोर्मध्ये कल्प्यते । तत्र च नाव्यापित्वदोषः । परमते त्वर्थज्ञानकामाधिकारः प्रवृत्त्यर्थः । स च व्यापित्व एवेति नैकदेशप्रियतया कृत्स्नस्वाध्यायाध्ययनविधिः कार्यतयाऽवबोधार्ह इत्यर्थः । ननु काम्यनियोगेष्वपि केषुचित् बृहस्पतिसवराजसूयवैश्यस्तोमादिषु वर्णव्यवस्थया श्रुतेषु तत्तद्वर्णोदयकरेषु नेतरवर्णस्य कामनेति तत्तद्विषयवेदाध्ययनविध्यर्थकामित्वायोगात् नार्थज्ञानकामस्याधिकारित्वसंभव इति इदं दूषणं किमिति नोक्तमित्यत्राह—परोदयेति[8] । तत्र हेतुः-परेति । परोपदेशद्वारेणापि स्वोपयोगसंभवेन परोदयकरेपि कामनोपपत्तेरित्यर्थः । ननूदयकरेष्वपि काम्याधिकारनियोगेषु न सर्वस्याध्येतुः सर्वत्र कामनेति कृत्स्नशारवा-

१. ज्ञानपदपदार्थो B  २. वेदव्यु. B  ३. कृतीस्थितः  ४. A नियोज्यरूपाधिकारिकृती  ५. B स्वयमेवार्थबोधेकृतो  ६. B वेदात्तद्विधित्वात्  ७. A लोकप्रसिद्धरीति  ८. R परोद्यमेति ।

न सर्वस्य कृत्स्नाध्ययनेऽधिकारः स्यादिति। स्वपरोपयुक्तकृत्स्नस्वाध्यायार्थज्ञानकामस्यापि कस्यचित् संभवात् कृत्स्नशाखाध्ययनसिद्धेः। यदपि परोक्तं सामान्यतो ज्ञानवतो[1] विशेषजिज्ञासा काव्यालङ्कारादिष्विवेति।

तन्निरस्तम्। न हि कश्चित् अर्थोऽस्तीत्येतावतैव महाप्रयासे प्रवृत्त्युपयोगिनी विशेषज्ञाने कामना। न चोदयकरतया सामान्यं व्यापीत्युक्तम् काव्यालङ्कारादिषु काव्यदोषगुणादिज्ञानकरतया सामान्यज्ञो[2] विशेषजिज्ञासुर्युक्त एव।

अथ स्वाध्यायार्थो विशेषतोऽप्युपनेत्रादिनरवचनतो ज्ञातः अर्थवत्त्वाय नियमार्थविदः स्वाध्यायेनैव पुनर्ज्ञातुं काम्यते।

तन्न। न नियमार्थता। स्वध्यायादन्यतो वेदार्थज्ञानासंभवात् पुंवा-

---

ध्ययनविध्यर्थकामित्वायोगात् नार्थज्ञानकामाधिकारः संभवति इतीदं वा दूषणं किमिति नोक्तमित्यत्राह—न चेति। तत्र हेतुः—स्वपरेति। यद्येकोऽपि तादृशोऽधिकारी न स्यात् तदाऽसंभवः। इह तु स्वपरोपयुक्तकृत्स्नस्वाध्यायार्थज्ञानकामस्यापि कस्यचित् संभवात सर्वशाखाध्ययनविधेः नेदमपि दूषणमित्यर्थः।

ननु यथा काव्यालङ्कारादौ काव्यगुणदोषज्ञानकरतया सामान्यज्ञस्यापि विशेषज्ञाने कामना तथाऽत्राप्युपनेत्रादिवचनतः सामान्यतो ज्ञातवेदार्थस्यापि विशेषतो जिज्ञासा युक्तेति परापादितगुरूक्तदोषस्याप्रसङ्गमनुभाषते—यदपीति। तन्निरस्तमिति। यद्यपि सामान्यज्ञानस्य विशेषजिज्ञासाहेतुत्वं स्वभावसिद्धं तथापि न कश्चिदर्थोऽस्तीत्येतावता उदकाहरणाद्यनेकव्यापारवति अध्ययनरूपे महति प्रयासे प्रवृत्त्युपयोगिनी विशेषज्ञानकामना युक्ता। लोके तथाऽदर्शनात्। लोके हि सप्रयोजनतत्त्वज्ञानं विनापि स्वल्पायाससाध्यदृष्टिप्रणिधानाद्यात्मकव्यापारमात्रकरता दृष्टा, न महाप्रयासकरतापीत्यर्थः। उदयकरतया सामान्यतो ज्ञानत्वयुक्तं अव्यापित्वादित्युक्तमित्याह—न चेति। परोक्तदृष्टान्तवैषम्यमाह—काव्येति। ननु उपनेत्रादिवाक्यात् विशेषतोऽपि स्वाध्यायार्थो ज्ञातोऽपि अधीतेनैव स्वाध्यायेन पुनर्ज्ञातुमेवेष्यते अन्यथा स्वाध्यायनियमफलकाध्ययनविधिवैयर्थ्यापत्तेरिति शङ्कते—अथेति। तन्नेति। न स्वाध्यायनियमार्थता विधेः सम्भवति निवर्त्याभावादित्यर्थः। स कथमित्यत्राह—स्वाध्यायादिति। ननु आचार्यादिपुंवाक्येभ्यो वेदार्थज्ञानसम्भवे कथं निवर्त्याभाव इत्यत्राह—पुमिति। तत्राप्यनुमितवेदादेवार्थ-

---

१. B. ज्ञाने-जिज्ञासा युक्तैव कार्या   २. B. ज्ञातुं काम्यते

क्येभ्योऽपि वेदमेवानुसाय तत एवार्थनिश्चयात्। स्वाध्यायार्थविषयश्चा-ऽनुमितस्वाध्याय एव न नित्यानुमेयो यो निवर्त्यः। अथ तव्येनात्र प्राप्यकर्मतोक्तेः प्राप्तेः ग्रहणपर्यन्तत्वात् ग्रहणान्ततैवात्र स्वाध्यायशब्दे-नोक्तेत्यगृहीतावस्थादर्थज्ञाननिवृत्त्यर्थो नियमः।

तन्न। किमग्रहणे पदानि अर्थबोधकतया गृहीतानि? न तर्हि अगृहीतार्थज्ञाननिवृत्तिः। अथ तथा न ग्रहणं[2] किं तर्हि? वर्णमात्रतया, न च वर्णमात्रतया अर्थज्ञानानुपायस्यैव निवृत्तिः। स्वाध्यायशब्दवाच्य-कृत्स्नशाखया अर्थज्ञाननियम इत्यपि न, अनुपायत्वात् शाखायाः। तदेकदेशानां वाक्यानां गृहीतानामेवोपायत्वात् कस्य नियमः? अध्ययन-

निश्चयात् न निवर्त्यसम्भव इत्यर्थः। ननु अनुमित एव वेदो निवर्त्योऽस्त्वित्राह— स्वाध्यायेति। अनुमितोऽपि वेदः स्वाध्याय एव, स्वाध्यायार्थविषयत्वान्न नित्यानु-मेयः नित्यानु[3]मेयादपि तदवगमे तस्य स्वाध्यायार्थतैव न स्यात्। ननु स्वाध्यायोऽ-ध्येतव्य इति कर्मणि विहिततव्यप्रत्ययेन योग्यतया स्वाध्यायस्य प्राप्यकर्मतोक्ता। प्राप्तिश्च ग्रहणपर्यन्तेति ग्रहणान्ततैव। ग्रहणपर्यन्तप्राप्त्याधारतैव स्वाध्यायशब्दे-नोच्यत इति अगृहीतावस्थस्यानुमितवेदस्य निवर्त्यस्य संभवात् नियमार्थो विधिरस्तु इति शंकते—अथेति। तन्नेति। न तावत् सर्वथैवागृहीतादर्थज्ञानसंभवः। किन्तु केनचिदाकारेण गृहीतान् आकारान्तरेणागृहीतात्[4] तत्राग्रहणे अग्रहणविषये अगृहीतावस्थस्य अनुमितस्य निवर्त्यतेत्यस्मिन् पक्षे किं—विशिष्टे तात्पर्यवन्ति पदानि अर्थबोधकतया गृहीतानि अगृहीतानि वा? अत्राद्ये कल्पे दूषणमाह—न तर्हीति। नागृहीतात् अर्थज्ञाननिवृत्तिः प्रयोजनं नियमस्य—तद्रूपेण गृहीतत्वादित्यर्थः। द्वितीयं कल्पमाह —अथेति। तर्हीति। पदरूपेणाग्रहणे अध्येत्रन्तराधीयमानवर्ण-मात्रतया ग्रहणमविशिष्टमित्यर्थः। ततः किमित्यत्राह —न चेति। न हि वर्णमात्रतया गृहीतावस्थस्य अर्थज्ञानोपायतेति नानुपायस्य निवर्त्यतेत्यर्थः। ननु स्वाध्याय-शब्दवाच्यकृत्स्नशाखयाऽर्थज्ञाननियमात् तदेकदेशादर्थज्ञाननिवृत्त्यर्थत्वमस्त्विति न शङ्कनीयमित्याह—स्वाध्यायेति। तत्र हेतुः—अन्विति। न शाखयाऽर्थबोधः किन्तु तदन्तर्गतैः वाक्यैः। तानि च गृहीतान्येवेति नागहीतात् अर्थज्ञाननिवृत्त्यर्थो नियमः सम्भवतीत्यर्थः। नन्वेवं स्वाध्यायानियमेऽपि लिखितपाठादिनिवृत्त्यर्थोऽध्ययन-नियमः सम्भवतीत्याशङ्का किमिति गुरुणा न कृतेत्यत्राह—अध्ययनेति। तत्र हेतुः—

१. B. यत्वानु　　२. B. अर्थग्रहणं　　३. A. अस्वाध्यायादपि　　४. B. तास्तत्र

नियमस्तु न शङ्कितोऽस्मिन्नवसरे, अनुपयोगात्। न हि ज्ञातोऽप्यर्थः अध्ययनगृहीतेनैव स्वाध्यायेन पुनर्ज्ञातुं काम्यते इत्येवमध्ययन-नियमः अर्थवान्, काम्यकोटिनिविष्टत्वादध्ययनोपायस्य न विधेयता स्यात्। न चाध्ययनं नियमादेव पश्चात् अर्थात् तेन बोधः काम्य-कोटिः[2]। बोधकामनाधिकारपूर्विका; नियमशङ्का यतः[3]।

स्वाध्याये तु काम्यकोटिनिविष्टत्वमुपेत्य निवर्त्याभावादनियम उक्तः। अध्ययने तु नोपेत्यापि काम्यकोटिनिविष्टत्वं निवर्त्याभाव-श्शक्यत इति तन्नियमशङ्का इहेति दिक्।

---

अस्मिन्निति। निवर्त्याभावान्नियमविधिनिरासावसरे निवर्त्याभावरूपोपयोगशून्य-त्वादधीतेनैव स्वाध्यायेनार्थं जानीयादित्येवं नियमे लिखितपाठादेर्निवर्त्यत्वा-सम्भवादित्यर्थः। ननु, गुरुणाऽनाशङ्कितोऽपि स्वमतविरुद्धत्वान्निरसनीय एवेति किं न निरस्यत इत्यत्राह—न हीति। अर्थज्ञानकामस्याध्ययननियमो[4] वाच्यः। न चा-ज्ञाते कामना युक्ता, उपलब्धपूर्वविषयत्वात्तस्याः। नापि ज्ञाते, ज्ञातस्य पुनर्ज्ञेयतया कामनाऽयोगात्। अत उपनेत्रादिवाक्यानुमितस्वाध्यायेन ज्ञातोऽप्यर्थः अध्ययन-गृहीतेनैव स्वाध्यायेन पुनर्ज्ञातुं काम्यत इत्येवमर्थवत्ता वाच्या[6]। न च तथाविधिः शंक्यः, काम्यकोटिनिवेशेन अध्ययनस्य विधेयत्वायोगादित्यर्थः। ननु प्रथम-मेवाध्ययनस्य विधेयतास्तु, पश्चादर्थात् काम्यकोटिता राजसूयवाक्ये राज्ञ इवेत्यत्राह—न चेति। तत्र हेतुः—बोधेति। अर्थज्ञानकामाधिकारपूर्विकैवात्र अध्ययन-नियमशङ्का। तत्र बोधमात्रस्य ज्ञाताज्ञातविकल्पेन काम्यत्वानुपपत्तेः अध्ययनान्त-र्भावेण काम्यता वाच्या। ततश्च काम्यकोटिनिवेशादविधेयतैव। राजसूयवाक्ये तु स्वाराज्यकामपदेनाधिकारयोग्यार्थसमर्पणान्न प्रथमं राज्ञः काम्यकोटितेति विधिपूर्वक एवार्थात काम्यकोटिनिवेश इत्यर्थः। नन्वेवं स्वाध्यायनियमोऽपि काम्य-कोटिनिविष्टतया अध्ययननियमवत् विध्यनर्हतयैव निवर्त्यो न निवर्त्याभावादि-त्यत्राह—स्वाध्याये त्विति। स्वाध्याये काम्यकोटित्वमुपेत्यापि विध्यङ्गीकारे निवर्त्या-भावो वक्तुं शक्यः नाध्ययने, लिखितपाठानुमानयोः निवर्त्यत्वसम्भवात्। अतो विध्यनर्हतयैव तन्नियमविध्यसम्भव इति निवर्त्याभावात् स्वाध्यायनियमविधि-निरासावसरे नाध्ययननियमाशङ्केत्यर्थः। क्रत्वनुप्रवेशाभावादपि न स्वाध्याय-नियमाध्ययननियमसम्भव इत्येतदर्था दिगुक्तिः।

---

१. विषयत्वात्तु B    १. B नियत एवार्थः    २. R. बोधकोटिः    ३. R. सिद्धः।
४. B बोधकामपूर्वकेत्यनियमशंका यतः    ५. B. ज्ञातोऽप्यर्थ    ६. नास्ति B.

शास्त्रादावेव स्वावसरे अध्ययननियमो निरस्तः। अर्थबोधे साक्षादनुपायत्वादध्ययननियमनिरसनं त्वयुक्तम् परम्परोपायस्यापि नियमसंभवात्। यत् परोक्तं ग्रहणं धारणं स्मृतिसन्तानानुवृत्त्यनुगुणसंस्कारविषयत्वमिति यावत्। अस्ति चातथाभूतादप्यर्थज्ञानमिति तन्निवृत्तिकरोऽयं नियम इति।

तदपि निरस्तम्। धारणं हि अर्थबोधानुवृत्त्युपाय नार्थबोधे। स हि तत्कालस्मृतित एव न स्मृत्यनुवृत्तित इति न धारणनियमः। अत एव नाध्ययनविधिमुखेनापि अर्थवादानां प्रामाण्यम्, भिन्नवाक्यत्वे चोदनाप्रामाण्याक्षेपकम्। एवं निरस्ते परपूर्वपक्षे स्वपूर्वपक्षावतारः।

---

ननु स्वाध्यायनियमनिरसनप्रसङ्गेन स्वमतविरुद्धपरोपेताध्ययननियमनिरसनं गुरुणाऽस्मिन्नवसरे किमिति न कृतमित्यत्राह—शास्त्रादाविति। शास्त्रादौ स्वस्थान एव निरस्तत्वान्नेह तन्निरासोऽपेक्षित इत्यर्थः।

अत्र—प्रकाशेन स्वाध्यायस्यार्थबोधोपायतया अर्थज्ञानकामिनस्तन्नियमः शक्यशङ्कः अध्ययनं तु न साक्षादुपाय इति न तन्नियमः शंक्यः इत्यध्ययननियमनिरसनमुक्तम् तदयुक्तमित्याह—अर्थेति। तत्र हेतुः—परम्परेति। भोजने प्राङ्मुखतादिनियमवदिति भावः। अत्र परैः निवर्त्याभावान्न नियमनिरसनं शक्यम्, निवर्त्यसद्भावात्। "स्वाध्यायोऽध्येतव्य इति तव्यान्तसमानाधिकृतस्वाध्यायशब्देन ग्रहणान्तता उक्ता। ग्रहणं हि धारणम्। धारणं च शब्दात्मकस्वाध्यायस्य स्मृतिसन्तानानुगुणसंस्कारविषयत्वमेव। अतो धृतावस्थस्वाध्यायादेवार्थं जानीयादित्येवं नियमः। अस्ति चातथाभूतादप्यर्थज्ञानमिति निवर्त्यसम्भव इत्युक्तम्। तदद्दूषयितुमनुवदति—यत्परोक्तमिति। दूषयति—तदपीति। न हि धारणमर्थबोधोपायः। किन्तु अर्थबोधानुवृत्तौ। अतो नार्थबोधे तन्नियमः शंक्य इत्यर्थः। ननु बोधानुवृत्त्युपायोऽपि बोधोपाय एव। बोधमजनयतस्तदनुवृत्तिजननायोगात्। अतो बोधेऽपि धारणनियमः शंक्य इत्यत्राह—स हीति। स हि बोधो धारणदशायामपि धारणान्तर्गतस्मृतिमात्रान्न धारणशब्दवाच्यस्मृत्यनुवृत्तित इति तन्नियमस्तत्र न शंक्य इत्यर्थः। ननु नार्थज्ञानं स्वतन्त्रतया काम्यम् अपुरुषार्थत्वात्। किन्तु अनुष्ठानहेतुतया। तद्धेतुत्वं चानुवृत्तस्यैवेति अनुवृत्तबोधे काम्ये धारणनियमः शक्य इत्यत्राह—इति नेति। अनुवृत्तार्थबोधस्य धारणैकोपायत्वात् उपायान्तराभावेन नियमः न शक्य इत्यर्थः। निगमयति—अत इति। नन्वर्थवादानां विध्युद्देशेनैकवाक्यत्वासम्भवात् कथमन्यथा पूर्वपक्ष इत्यत्राह—एवमिति।

---

१. भाव इ R. २. R. तन्नियम

सत्यमसाध्यार्थस्य करणेतिकर्तव्यतया अधिकारितया वा नान्वयः तथापि श्रुतसकलपदानां कार्यपरतयाऽन्वयव्युत्पत्तेः, सति संभवे समभिव्याहृतेनैकवाक्यताव्युत्पत्तेश्च। सिद्धस्य च 'साध्ये हेतुतयाऽन्वयदर्शनात् भूतं भव्यायेति न्यायात् भव्योत्पत्त्यर्थतैव। भव्योत्पत्त्यर्थता च 'मलिनः स्नायात्' इत्यादौ दृष्टेति रुद्ररोदनादिहेत्वन्वितं सन्निहितं सत् कार्यं चोदनार्थः।

एवं हि हेत्वपेक्षां कार्यतां वदतोऽनपेक्षताहानिः। न चानपेक्षत्वक्षति-

---

ननु करणेतिकर्तव्यताधिकारिणां साध्यावस्थानामेव कार्यार्थत्वनियमात अतद्विधस्यार्थवादार्थस्य कार्यान्वयानर्हत्वे कथमेकवाक्यतेत्राह—सत्यमिति। सत्यमेवं, तथापि असाध्यार्थस्य कार्यानन्वयनियमो नास्ति। सहश्रुतसकलपदानां कार्यान्वयपरतया व्युत्पत्तेः। ननु अध्याहृतकार्येणापि [2]कार्यपरतोपपत्तेः कथमेकवाक्यतेत्यत्राह—सतीति। योग्यत्वे सति समभिव्याहृतेनैकवाक्यत्वमपि व्युत्पत्तिसिद्धमित्यर्थः। योग्यत्वमेव कथमित्यत्राह— सिद्धस्य चेति। सिद्धस्य साध्यार्थतयाऽन्वयो लोके दृष्ट इति इहापि साध्यार्थतयाऽन्वयो यथासम्भवमुपेय इत्यर्थः। केन प्रकारेणान्वयसम्भव इत्यत्राह—भूतमिति। भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति प्रसिद्धन्यायेन भव्यकार्यज्ञानोत्पत्तौ अर्थवादार्थस्य हेतुतयाऽन्वयः। एवं च यद्यपि न हेतुत्वश्रुतिः तथापि न्यायबलाद्योग्यतया हेतुत्वेनैकवाक्यतयाऽन्वय इत्यर्थः। ननु अविषयनियोज्यात्मकस्य कथं कार्यज्ञानहेतुतेत्यत्राह—भव्येति। यथा मलिनः स्नायादिति मालिन्यं स्वापनये इच्छाद्वारा स्नानकार्यताधीहेतुः[3] तथा रुद्ररोदनाद्यर्थवादार्थोऽपि स्वसाधने बर्हिराधारकरजतदाने द्वेषंजनयत् साध्यार्थंप्रवृत्तकृत्यगोचरोऽपि रजतदाननिवृत्तिकार्यताज्ञाने हेतुर्भवतीति अर्थवादार्थहेत्वन्वितं सन्निहितं कार्यं चोदनार्थः। मलिनः स्नायादिति मालिन्यस्यहेतुत्वेनार्पणविवक्षयैव प्रयुक्तं नाधिकारिसमर्पणविवक्षया पुँवाक्यानां विवक्षापरतन्त्रत्वात्।

एतेनेदं निरस्तं यत् केनचिदुदाहरणदूषणमापादितम्, मलिनः स्नायादिति मालिन्यमधिकारिविशेषणं न हेतुरिति। आदिशब्दाच्च मलिनं ते वासः मा राजकुलं यायाः इति सङ्गृहीतम्। नन्वेवमपि हेत्वन्वितकार्यज्ञाने चोदनाया मानान्तरनिरपेक्षत्वात् कथमप्रामाण्यम्? कथं च हेत्वन्वयः? अपेक्षाभावात्, तन्निरपेक्षचोदनयैव कार्यज्ञानसम्भवादित्यत्राह—एवमिति। यद्यपि चोदनानां

---

१. B. साध्यार्थहे। २. A साध्य ३. हेंतुधीः

दोषात् हेतुतयाऽन्वयहानम्। नहि अनपेक्षत्वं व्युत्पत्तिसिद्धम्। प्रत्युत पुंवाक्ये सापेक्षत्वव्युत्पत्तिः। अपुंवाक्ये या अनपेक्षता सा सिद्धार्थहेत्वन्वयहता। न च हेतुतां हित्वा स्तुत्याऽन्वयो वाच्यः, स्तुतिपरत्वे परोक्षार्थतापत्तेः। न च विध्युद्देशस्वरसावसितानपेक्षतानुरोधात् परोक्षार्थ-

कार्यज्ञाने स्वतो निरपेक्षता, तथापि समभिव्याहृतहेत्वर्थार्थवादपदानां कार्यान्वयार्थं रक्तपटन्यायादपेक्षा उत्थाप्येत्यपेक्षाबलात् हेत्वन्वितं कार्यं वदतो वेदवाक्यस्य व्याप्तौ सत्यामपि मानान्तरसिद्धहेत्वपेक्षकार्याभिधानाद् अनुवादवाक्यस्येवानपेक्षत्वहानादप्रामाण्यम्। असत्यां तु सुतरामप्रामाण्यम्, हेत्वाभासान्वितकार्यप्रतिपादनात्। न च चोदनाबलादेव व्याप्तिसिद्धिः कार्यमात्रपरत्वात् तस्याः, व्याप्तेश्च प्रत्यक्षैकविषयत्वात्। न चैवमप्रामाण्ये सम्भूयार्थबोधकत्वाभावात् कथमेकवाक्यतेति वाच्यम्। यत एकार्थतात्पर्यवत्त्वमेवैकवाक्यत्वं नैकार्थबोधकत्वम्। तच्च क्वचित् स्वतः क्वचिद्भेदाग्रहात्। यद्वा प्रथममापातप्रतीतमपि एकवाक्यत्वं पश्चादप्रामाण्ये आभासीभवतीति। एवं च प्रमाणमनपेक्षत्वादित्युक्ताक्षेपेणेह पूर्वपक्ष इति भावः।

ननु न्यायप्राप्तानपेक्षत्वभङ्गपरिहाराय हेतुतयाऽन्वय एव त्यज्यतामित्यत्राह न चेति। तत्र हेतुः न हीति। यद्यन्वितत्वमिवानपेक्षत्वं व्युत्पत्तिसिद्धं स्यात् तदा स्यादेवम्। न चैतदस्ति। प्रत्युत वृद्धव्यवहारे पुंवाक्यव्युत्पत्तेः सापेक्षत्वमेव व्युत्पत्तिसिद्धमित्यर्थः। ननु अपुंवाक्ये बादरायणस्यानपेक्षत्वादिति न्यायप्राप्तैवानपेक्षतेत्यत्राह अपुंवाक्य इति। अनन्यगतिकवचनबलादवगतसिद्धार्थहेत्वन्वयेन[१] न्यायमात्रगम्यानपेक्षता दुर्बलैव बाध्या। अनन्यगतिकत्वं चार्थवादस्य प्रकारान्तरेणान्वयाभावात्। न तावदनुपादेयस्य विषयत्वकरणत्वेतिकर्तव्यतात्वप्रकारेणान्वयः। नापि साध्यत्वेन व्याप्यत्वेन वा अश्रुतस्याधिकारिविशेषणतयाऽन्वयः। श्रुतविषयाद्यन्तरावरोधाच्च। नापि विध्युद्देशा गतदेवताविशेषणतया, क्षेपिष्ठत्वादेः तद्धितान्तोपसर्जनदेवताविशेषणत्वायोगात्। नापि देवतोद्देशेन क्षेपिष्ठत्वादेः विधेयतयाऽन्वयः वाक्यभेदापत्तेः। अतः प्रकारान्तरेणान्वयाभावेनानन्यगतिकवचनबलायातहेत्वन्वयादनपेक्षता हतैवेत्यर्थः। ननु स्तुत्याप्यन्वयप्रकारोऽस्तीति हेतुतां विहाय स्तुत्यैवान्वयोऽस्तु इत्यत्राह—न चेति। तत्र हेतुः स्तुतीति। परोक्षार्थतापत्तेः इति। अतिजघन्यलक्षणार्थतापत्तेरित्यर्थः।

एतच्च स्तुत्याऽन्वयप्रकारं लोकसिद्ध[२]मङ्गीकृत्य दूषणमुक्तम्। परमार्थतस्तु स्तुत्यैवान्वयो न लोकव्युत्पन्नः गौः क्रय्या बहुक्षीरेत्यादौ बहुक्षीरादिकं यदि सदेवोच्येत न तदा स्तुत्यन्वयः, अन्यगुणस्यान्यत्रारोपणं स्तुतिः। यथा 'बृहस्पतिरयं' इत्यज्ञस्य। अथासत् तदा असदाख्यानादप्रमाणमेव विप्रलम्भक-

१. B. कोटित्वं. २. B. साध्यार्थतया. ३. Badds न।

ताङ्गीकारो वाच्यः वाक्यैकदेशार्थस्याननुरोध्यत्वात् संभूयकारिताव्युत्पत्ते-रित्युक्तम्। अन्यथा नञः परोक्षार्थतैव स्यात्। पदान्तरस्वरसावसितान्वय-बाधभयात् भाष्येऽपि हेतुतयाऽन्वयो दर्शितः "रुद्रः किल रुरोद अतोऽन्येनापि रोदितव्यम्"।

ननु अध्याहारोऽयमुक्तः नैकवाक्यता। मैवम्। उपेत्याप्यध्याहारं सर्वथा हेतुत्वेनान्वय इत्युक्तम्।

---

वाक्यवत्। अतो बहुक्षीरा इत्यादेरपि हेतुतयैवान्वयः। तथा प्राशस्त्यस्वरूपमपि किं तदिति दुर्निरूपम्। अर्थवादपदानां प्राशस्त्योपस्थापकत्वमपि न सम्भवति। न तावत् मुख्यया वृत्त्या, अव्युत्पत्तेः। नापि गौण्या मुख्यसादृश्याभावात्, नापि लक्षणया, लक्षकाभावात् किमेकैकं पदं लक्षकं पदसमुदायो वा ? नाद्यः एकैकपदार्थ-सम्बन्धितया प्राशस्त्याप्रतीतेः। न द्वितीयः। समुदायलक्षकत्वस्य क्वाप्यदर्शनात्। पदवृत्तिर्हि लक्षणा, न पदसङ्घातवृत्तिः। न च प्रामाण्यार्थं लक्षणोपेया, तस्य प्रयोजनत्वात्, वृत्त्यन्तरं तु असम्भवि। अतोऽसम्भविनमपि स्तुत्यन्वयमुपेत्य परोक्षार्थतादूषणमुच्यत इति भावः।

ननु प्रधानभूतविध्युद्देशस्वरसावगतानपेक्षत्वरक्षार्थमर्थवादस्य परोक्षार्थ-तापि युक्तेत्यत्राह—न चेति। तत्र हेतुः—वाक्यैकदेशेति। सत्यं प्रधानता विध्युद्देशस्य तथापि वाक्यशेषेण सन्निहितस्य श्रुतौ नैकदेशात् विध्युद्देश-मात्रादर्थप्रतीतिः[1]। सम्भूयकारित्वव्युत्पत्तेः। न हि पदान्तरस्वारस्याय पदान्तरस्य मुख्यार्थताहानिः। समत्वात्। किन्तु अन्वितत्वायैवेत्यर्थः। विपक्षे दोषमप्याह—अन्यथेति। न कलञ्जं भक्षयेदिति भक्षयतिपदस्वरसावगतविध्य-बाधनाय नञः परोक्षार्थतावगतितापत्तिः। निषेध्यापेक्षवृत्तित्वान्नञ्श्रुतेः अपेक्षणीयनिषेध्यश्रुतेः प्रधानतयाऽनुरोध्यत्वात्। तच्च नेष्टमिति भावः। ननु न भाष्यानुमतोऽयं हेतुतयाऽन्वयप्रकारः इत्यत्राह भाष्येऽपीति। 'रुद्रः किल रुरोद' इति भूतस्यार्थस्य 'अतोऽन्येनापि रोदितव्यम् इति कार्यमर्थं प्रति हेतुतयान्वयोक्तेः। हेतुतयान्वयेन एकवाक्यता भाष्यकारेण स्वाभिमतत्वेन दर्शितेत्यर्थः। ननु अध्याहार-प्रदर्शनेन अर्थवादभागस्य कार्यान्वयमापाद्य प्रामाण्यपरमेतद्भाष्यं न प्रकृत-कार्यैकवाक्यतापरमिति चोदयति—नन्विति। मैवमिति। यद्यप्यध्याहारस्तथापि सर्वथा हेतुत्वान्वयान्न मुक्तिः सिद्धार्थस्य कार्यं प्रतीत्येवंपरोऽध्याहारः नाध्याहारात् प्रामाण्यपर इत्यर्थः।

---

१. B अर्थव्युत्पत्तिः। २. लोक व्युत्पन्नम।

यदप्युक्तं भाष्ये रोदनादयो न शक्यन्त इति तत् सिद्धहेतुकतयैव[1] । आवश्यकत्वे हि इष्टवियोगादिसंपादनेनापि शक्यत्वात् । रुद्ररोदनादौ मानाभावोक्तिस्तु, हेतुस्वरूपासिद्धेः सुतरां हेत्वपेक्षकार्यत्वासिद्धिरिति वक्तुम् । सूत्रेऽपि अतदर्थानामिति अकार्यमुखमिदमप्रामाण्यम् इत्यकार्यार्थ-संबन्धितयोक्तम् । अनर्थवादकेऽपि "वसन्ताय कपिञ्जलानालभेत" इत्यादौ सार्थवादकप्रधानविध्येकवाक्यतया हेत्वपेक्षता । यत्र प्रधान-विधिरेवानर्थवादकः तत्राङ्गार्थवादाद्धेत्वपेक्षता, एकवाक्यतया सर्वाक्षेपो व्यक्तो भाष्ये "तान्येकदेशाक्षेपेणाक्षिप्यन्ते" इति वदता एकदेशता हि एकवाक्यत्वेन, नान्यथा ।

---

'ननु रोदनादयो न शक्यन्त' इति भाष्ये रोदनादेः स्वरूपत एवाशक्य-तोक्ता न सिद्धहेतुकतयेत्याशङ्क्य तस्यापि भाष्यस्य सिद्धहेतुकतयैवाशक्यत्वे तात्पर्यम्, न स्वरूपतोऽशक्यत्वे इत्याह—यदपीति । नन्वेवं हेतुसापेक्षतयैवाप्रामाण्ये भाष्ये किमिति रुद्ररोदनादौ मानाभावोक्तिरित्यत्राह—रुद्रेति । प्रामाण्यस्य दूरोत्सा-रिततां वक्तुं तदुक्तिरित्यर्थः। नन्वेवं कार्यार्थसम्बन्धिचोदनाप्रामाण्याक्षेपे आनर्थ-क्यमतदर्थानामिति पूर्वपक्षसूत्रविरोधः स्यात् अकार्यार्थमात्रानर्थक्योक्तेरित्यत्राह—सूत्रेऽपीति । सिद्धार्थमुखमप्रामाण्यं चोदनानामिति प्रकटयितुं तदानर्थक्यमुक्तम् । न तन्मात्रानर्थक्यपरतयेत्यर्थः । नन्वस्मिन ( सति ) पूर्वपक्षप्रकारे सार्थवादक-चोदनानामेवाप्रामाण्यम्, निरर्थवादका अपि चोदनास्सन्ति 'वसन्ताय कपिञ्ज-लानालभेत' इत्यादिकाः तासां प्रामाण्यं निर्बाधमेव । ततश्च तद्विषयतया चोदना-प्रामाण्योपपत्तेः प्रतिज्ञाक्षेपपर्यन्तता न स्यादित्यत्राह—अनर्थवादकेऽपीति । सत्यं तत्रार्थ-वादो नास्ति तथापि अङ्गचोदनात्वात् तासां सार्थवादकप्रधानचोदनयैकवाक्य-तया हेत्वपेक्षत्वात प्रामाण्यं न स्यादित्यर्थः । यत्र पुनः प्रधानविधिरेवार्थवादशून्यः तत्र कथं हेत्वपेक्षेत्यत्राह—यत्रेति । तत्रापि सार्थवादकाङ्गविध्येकवाक्यतया हेत्व-पेक्षा, यत्र पुनरङ्गवाक्ये प्रधानवाक्ये चार्थवादशून्यता तत्र शाखान्तरविहितसार्थ-वादकाङ्गयोगितया हेत्वपेक्षितेति भावः । वाक्यभेदेनार्थवादमात्रप्रामाण्याक्षेपो भाष्यविरोधीत्याह—एकेति । कथं विरोध इत्यत्राह—एकदेशतेति । वाक्यैकदेशस्या-क्षेप इति पूर्वापरभाष्यपर्यालोचनया अन्तरङ्गतया च वाक्यापेक्षैकदेशता[१] युक्ता न वहिरङ्गवेदसमुदायापेक्षा ।

---

१. B हेतुपरतयैव । २. R. A. अभीष्टवियोग ।
३. अर्थव्युत्पत्तिः ४. वाक्याक्षेप ५. पुनरुक्तोयो

यत्तु भाष्यं वाक्यैकदेशस्याक्षेपो न कृत्स्नस्येति, तदपि आक्षेपकत्वेनैव संबन्धित्वं प्रतिपादयति नाक्षेप्यत्वेन। राद्धान्ते यदेकवाक्यतां प्रति प्रश्नोत्तरे तदभिप्रायस्तत्रैवोक्तः।

शास्त्रदृष्टविरोधाद्यनिरासे हि मूलहेतोर्मन्दधियां प्रबोधनं दुष्करमिति तदुपन्यासनिरासौ; इह यत्नान्तरात्तन्निरास इत्यधिकं शब्दाधिकरणनयात्। तत्रैकेन प्रत्यभिज्ञाप्रत्ययेन सर्वहेतुनिरासः। तस्मादनित्यमुच्यत इति सूत्रम्। नित्यं हि हेत्वनपेक्षत्वं स्वरूपे, अन्यदपि हेत्वनपेक्षं अर्थे गौणं नित्यं

---

ननु वाक्यैकदेशस्याक्षेपो न कृत्स्नस्येति भाष्यं भवन्मते विरुद्धमित्याशङ्क्य तदनूद्य यथा विरोधो न भवति तथा योजयति—यत्त्विति। ननु यद्येकवाक्यतयैव पूर्वोत्तरपक्षौ कथं तर्हि राद्धान्ते "कथमेकवाक्यभाव" इति प्रश्नः तदुत्तरं च। यदि भिन्नवाक्यतया पूर्वपक्षं कृत्वा एकवाक्यतया राद्धान्तः स्यात् तदा राद्धान्ते प्रश्नोत्तरे उपपन्ने; न पुनः यद्येकवाक्यतया पूर्वोत्तरपक्षावित्यत्राह—राद्धान्त इति। भाष्ये राद्धान्ते एकवाक्यतां प्रति प्रश्नोत्तरे कृते इति यत्तादभिप्रायस्तत्रैव राद्धान्तभाष्यव्याख्यानावसरे उक्त इत्यर्थः। ननु हेतुसापेक्षतयैवाप्रामाण्ये सिद्धेऽपि किमिति सूत्रभाष्ययोः शास्त्रदृष्टविरोध-अन्यानर्थक्य-अभागिप्रतिषेध-अनित्यसंयोगादयः पूर्वपक्षहेतवः उपन्यस्ता इत्यत्राह—शास्त्रेति। यदि मूलहेतुमात्रात् राद्धान्त उच्येत तदा मन्दधियां शास्त्रदृष्टविरोधादिदर्शनेन पुनरुक्तोऽन्वयो भवेत् अतस्तत्परिहाराय तेषामप्युपन्यासनिरासौ; यथा शब्दाधिकरणे यावन्तः शब्दानित्यत्वहेतवः ते सर्वे उपन्यस्य निरस्यन्त इति न वैयर्थ्यमाशङ्क्यते तथा अत्रापीति भावः। अस्मिंस्त्वयमपरो विशेषः इत्याह—इहेति। पूर्वपक्षोपसंहारपरं सूत्रखण्डमनुभाषते—तस्मादिति। नन्विदमनित्यत्वमयुक्तं किं तद्वाक्यस्य वर्णात्मकस्य शब्दस्य उत पदार्थानाम्। नाद्यः, सिद्धान्तिनोऽपि सम्मतत्वात्। अनित्यत्वं हि कारणवत्त्वम्। आनुपूर्वीविशेषपरिगृहीतवर्णात्मकपदसङ्घातरूपं वाक्यं आनुपूर्व्याः कारणवत्त्वेन कारणवत्। न च तदनित्यत्वं सिद्धार्थपेक्षम्। न द्वितीयतृतीयौ, वर्णानां पदार्थानां च नित्यत्वात्। पदार्था अपि सर्वे नानित्याः केषाञ्चित् गोत्वादीनां नित्यत्वादित्यत्राह—नित्यं हीति। न ह्यत्र मुख्यमनित्यत्वमुच्यते किन्त्वत्र गौणम्, नित्यं हि गोत्वादि वस्तुस्वरूपे हेत्वनपेक्षम्। अन्यदपि शब्दात्मकं वस्तु हेत्वनपेक्षमर्थे। अतोऽनपेक्षत्वगुणयोगात् गौणं नित्यं तन्न भवतीत्यनित्यम्। सापेक्षत्वं गौणमनित्यत्वं सूत्रोक्तमित्यर्थः।

तन्नेत्यनित्यम् । नपुंसकतया च सामान्येनोक्तिः कृत्स्नसापेक्षत्वार्था ।

यत्तु वाक्ये पुंसामस्वतन्त्रत्वं नित्यत्वं नाम अस्वतन्त्रपुरुषप्रयुक्तमिति यावत् । एवं हि तत्र नित्यधर्मायोग इति न गौण[1]नित्यतापि सुकरा ।

राद्धान्तग्रन्थव्याख्ययैव राद्धान्तो व्यक्त इति न पृथक् गुरुणोक्तः । स उच्यते । स्तुत्याऽन्वयो न हेतुतयाऽन्वयः ।

अयं भावः । असाध्यार्थानां योग्यतयैव हेतुतयाऽन्वय [2]उक्तः । [3]साध्यप्रतिबन्धो हि हेतु[4]तयाऽन्वययोग्यः नाकार्यार्थतामात्रात् । [5]न तु

---

नपुंसकनिर्देशस्तु सर्वव्याप्त्यर्थ इत्याह—नपुंसकतयेति । अत्र केचित् यद्यपि नित्यानि तथापि नित्यकार्यं न कुर्वन्तीति भाष्ये सापेक्षत्वविरोधित्वेन नित्यशब्दार्थोक्तेरपौरुषेयवाक्यत्वं नित्यशब्दार्थमाहुः । तन्मते गौणमपि नित्यत्वमशक्यमिति तदनुभाषणपूर्वकमाह—यत्त्विति । राद्धान्तमुपक्रमते—राद्धान्तेति । कोऽसौ व्यक्तो राद्धान्त इत्यत्राह—स इति ।

ननु राद्धान्तभाष्यव्याख्यायामपि स्तुत्यान्वये निर्वाहमात्रमुक्तम् । न तु हेतुतयाऽन्वये बाधकं किञ्चित । अतो हेतुतयाऽन्वयनिरासाभावे कथं परोक्षार्थतापादकस्तुत्यान्वय इत्यत्राह-अयं भाव इति । नात्र हेतुत्वेनान्वयो युक्तः असाध्यार्थानामपि योग्यतयैव हेतुत्वेनान्वयः । न चात्र योग्यतेत्यर्थः । ननु असाध्यार्थत्वमेव हेतुत्वयोग्यत्वं नान्यत् यथा 'मलिनः स्नायात्' इत्यादौ मालिन्यादेरित्यत्राह-साध्येति । साध्यप्रतिबन्धः साध्येन सह [6]नियतसम्बन्धः । व्याप्तिरिति यावत । असाध्यार्थस्यापि साध्यप्रतिबन्धत्वं हेतुत्वयोग्यत्वम । नासाध्यार्थत्वमात्रम् अनवस्थापातादित्यर्थः । ननु मालिन्यवत साध्यप्रतिबन्धोऽस्तु इत्यत्राह-न तु साध्येति । यथा लोके मालिन्यस्यापि स्नानेन सह नियतसम्बन्धित्वमन्वयव्यतिरेकगम्यं न तथा रुद्ररोदनादीनामसाध्यार्थानामपि साध्यव्याप्यता मानान्तरसिद्धेत्यर्थः । नन्वेवं तर्हि स्तुतियोग्यतापि कथमित्यत्राह-स्तुतीति । सिद्धार्थस्यापि लोके चतुर्धाऽन्वयः—कस्यचित् कारकतया, यथा दण्डादेः, कस्यचित् हेतुतया, यथा मालिन्यादेः; कस्यचित अधिकारिकोटितया, यथा यावज्जीवं वसेदित्यादौ[7] जीवनादेः, कस्यचित् स्तावकतया यथा बहुक्षीरेत्यादेः । तत्रार्थवादानां हेतुत्वाद्यनर्पकत्वे सति सम्भूयकारित्वार्थं स्तुतिपरत्वमात्रात् स्तुतियोग्यता । सर्वस्य साध्य-

---

१. गौणमनित्यं तन्नेत्यनित्यतापि सुतराम्. A. २. युक्त,–A. ३. साध्यार्थ–R.
४. B. हेतुतायोग्यः ५. R. A. न च. ६. A. नित्यसं ७. B. त्यदिः

साध्यव्याप्यता मानसिद्धेति न तथाऽन्वयः। स्तुतियोग्यता तु स्तुतिपरतामात्रात्सर्वस्य।

ननु स्तुतिपरत्वे परोक्षार्थतापत्तेः वरमनुवादमात्रतैवास्तु। तन्न। प्राप्तस्य पश्चाद्वादोऽनुवादः। तत्र वाक्यभेदो दुस्तरः। ननु एकवाक्यत्वेप्यनुवादः पदार्थमात्रस्यास्ति। सत्यं। स्तुतिपर एवासौ नानुवादमात्रम्।

---

प्रतिबन्धस्य चान्यस्य च सता असता च स्तुतेर्लोकसिद्धत्वात। एतेन न लोकव्युत्पन्नः स्तुत्यान्वय इति परिहृतम्। न च स्तुत्युपस्थापनासम्भवः[१] अर्थवादपदानामेव लक्षणया स्तुत्युपस्थापकत्वं मुख्यस्यान्वयायोग्यत्वात्। मुख्यार्थसम्बन्धित्वं च प्राशस्त्यस्यास्त्येव। यद्यप्येकैकपदसम्बन्धिता प्राशस्त्यस्य नास्ति एकैकपदादप्रतीतेः तथापि समुदायसम्बन्धिताऽस्त्येव। न च समुदायसम्बन्धिनि लक्षणा न युक्ता, सम्बन्धानुपपत्त्योः लक्षणाहेत्वोः समत्वात्। दृष्टा च समुदायसम्बन्धिनि लक्षणा लोके, अर्धमन्तर्गृहं अर्धंबहिर्गृहमित्यादौ। वेदे च अर्धमन्तर्वेदि अर्धंबहिर्वेदीति। अतोऽर्थवादपदैः लक्षणया प्राशस्त्योपस्थितिः। तच्च प्राशस्त्यं इष्टेष्टसाधनत्वानिष्टपरिहारत्वानामन्यतमत् तदर्हत्वं वा यथासम्भवमूहनीयम्, तत्रार्थभेदे प्राशस्त्यस्य अक्षादिशब्दवत् भेदेनैव व्युत्पत्तिः अनुकूलवेदनीयत्वेनैकोपाधिना च एकैव व्युत्पत्तिः। यद्वा इष्टत्वादिभ्यो विलक्षणमन्यत्प्राशस्त्यं सर्वप्रतीतिसिद्धं[२] तन्नापन्हवमर्हति। अत एवंविधस्तुतिपरत्वमात्रादेव स्तुतियोग्यता सर्वस्येत्यर्थः। ननु स्तुतिपरत्वे परोक्षार्थतालक्षणा स्यादिति मुख्यार्थत्वाय [२]वरमनुवादतैवास्त्विति चोदयति—नन्विति। तन्नेति। नहि लौकिकवाक्यादिनिष्ठक्षिप्रत्वाद्यनुवाद्यम्[३]। अकार्यपरत्वापत्तेः। किन्तु कार्यसम्बन्धितया प्राप्तस्य च पश्चाद्वादोऽनुवादः। न च वायुक्षेपिष्ठत्वादेः कार्यसम्बन्धोऽन्यतो ज्ञात इत्यनेनैव ज्ञाप्यः। तत्र विध्यनुवादरूपव्यापारभेदाद्वाक्यभेदो दुस्तर इत्यर्थः।

ननु सौर्यं चरुं निर्वपेत् इत्यादौ एकस्मिन् वाक्ये निर्वापादिपदार्थमात्रस्यानुवादो दृष्टः। न च तत्रापि स्तुतिपरता, पदार्थमात्रेण गुणवत्ताऽप्रतीतेः स्तुत्यनवगमात्। तत्कथमनुवादमात्रत्वे वाक्यभेद इति चोदयति—नन्विति। सत्यमिति। असौ निर्वपत्यनुवादः स्तुतिपर एव स्तुत्युपस्थापनार्थ एव। नानुवादमात्रं विध्यनुवादयोर्विरुद्धयोः एकवाक्ये प्रतीत्ययोगात्। विधिर्ह्यप्राप्तत्वेन, अनुवादस्तु प्राप्तत्वेनेति विरोधः। ग्रहादौ तु विधिप्रमितपरत्वात्[४] नानुवादमात्रता। विद्वद्वाक्येपि अनूदितानामेव अधिकारिसम्बन्धापादनम्, नानुवादमात्रता। अतस्तत्राप्यधिकारवाक्यैक-

---

१. R. पस्थापकासं २. A. सर्वभाप्रसिद्धं २. A. पर

३. B. अनुवाद्यत्व ४. A. विधेयप्रतीतिपरत्वात्

अनुवादोक्तिस्तु अविधेयार्थतामात्रात् गौणी। सस्तुतिककार्यपर्यवसानान्नानुवादता। अत एव एकवाक्यत्वे अनुवादमात्रासंभवात् तदाशङ्का न कृता। स्तुत्याऽन्वयनिर्वाहो भाष्यव्याख्यायां वक्ष्यते। अपरानुभाषितस्त्वस्मद्राद्धान्तः अस्मदीयैरादृतः। यथोपेयं उपायप्रवृत्तेः हेतुतया चानपेक्षकार्यानिर्वाहात् हेतुताहानात् स्तुत्यर्थतेति। स न युक्तः। यदि स्वतो हेतुताऽयुक्ता तदा तदधीनं उपेयमेव अनिरूढं वस्तुत एवेति तन्निर्वाहोऽपि नास्त्येव, वाक्यैकदेशस्याहेतुत्वादित्युक्तं विधिनात्वेक-

---

वाक्यता नियोगैक्यलक्षणा युक्ता। यत्र निर्वपत्यादौ चोदकादिप्राप्तानुवादमात्रता तत्र वाक्यभेदापत्तेः स्तुतिपरतैव। न च क्रमेणान्विताभिधानात् तद्वाक्यभेदपरिहारः। सहश्रुतनिखिलपदानां सम्भूय युगपदन्विताभिधानव्युत्पत्तेः। न चैकपदमात्रेण गुणवत्ताऽप्रतीतेः स्तुत्यनवगमः। अनन्यगतिकतया स्तुतिपरत्वेऽवधृते अयं हि यागो निर्वापवानिति कथञ्चिदध्याहारादिनापि गुणवत्ताप्रतीतिरस्त्येव। अतो निष्प्रयोजनानुवादविषये सर्वत्रैकवाक्ये स्तुतिपरतैवेति भावः। कथं तर्हि तत्र तत्र निर्वपत्यादेः चोदकादिप्राप्तानुवादत्वोक्तिरित्यत्राह—अन्विति। ननु स्तुतिपरत्वेप्यविधेयार्थतयाऽनुवादतैव तत्राह—सस्तुतीति। स्तुतिद्वारा कार्य एव पर्यवसानात् विधिपरतैव। नानुवादमात्रतेत्यर्थः। यत एवमेकवाक्यत्वे अनुवादायोगः अतएव ग्रन्थे तदाशङ्का न कृतेत्याह—अत इति। ननु विध्यनपेक्षितत्वात् स्तुत्यन्वयोऽपि न निर्वाहित इत्यत्राह—स्तुत्येति।

अत्र गुरुमतानुसारिषुकेचित् परानुभाषितमभ्युच्चयमात्रसिद्धमस्मद्राद्धान्तमङ्गीकृतवन्तः। तद्दूषयितुमनुवदति—अपरेति। उपेयानुसारी हिउपायः यथोपेयमुपपद्यते तथोदाहरणीयं उपेयं चानपेक्षकार्यावगतिरूपमिति तद्विरोधिहेतुत्वेनान्वय इति स्तुत्यैवान्वय आदृत इत्यर्थः। दूषयति—सनेति। यदि प्रमाणबलायातो हेतुतयान्वयस्तदा तदधीनत्वादुपेयमपि वस्तुत एवानिरूढं प्रमाणायत्तत्वात्प्रमेयसिद्धेः। अतः प्रधानत्वे ह्युपेयस्य तन्निर्वाहो नास्त्येवेत्यर्थः। ननु विध्युद्देशस्वरसावगतानपेक्षकार्यनिर्वाहार्थमर्थवादपदानां हेतुतयोपायता त्यज्यतामित्यत्राह—वाक्यैकदेशेति। स्यादेतदेवं यदि विध्युद्देशमात्रात् वाक्यैकदेशात् प्रथमं अर्थप्रतीतिः स्यात्। सा च नास्तीत्युक्तं प्रयुक्ताद्धि प्रतिपत्तिरिति वदता विवरणकारेणेत्यर्थः। अत्र भाष्योक्तस्तुत्यन्वयनिर्वाहार्थं विधिना त्वेकवाक्यत्वादिति सूत्रस्थविधिपदव्याख्यानमाह—विधिनेति। नन्विदं व्याख्यानमयुक्तं विधिविध्युद्देशयोर्भिन्नत्वात्। न च तदुपपादनं विवरणोक्तं—(टीकोक्तं) युक्तम्, अवयवेन समुदायलक्षणेति। न हि विध्युद्देशस्य विधिरवयवः किन्तु लिङादिः तत्र न लिङादिर्विधिः। अपूर्व-

वाक्यत्वादित्यत्र । विधिनेति विध्युद्देशेनेत्यर्थः । विध्यर्थो[1]ऽपि लिङादिः परम्परया विधिः । तेनावयवेन तत्समुदायो विध्युद्देशो लक्ष्यते । यावदुदाहृतस्तुतिपदानां विधेयस्तुतिपरत्वात् विधेयार्थविध्युद्देशैकवाक्यत्वात् एवं व्याख्या । अत एव प्रश्नः कथमेकत्वमिति ।

कार्यान्वयो हि सर्वस्यातो विधिनाऽनन्वयेऽनन्वयः एव स्यात् । उत्तरं–सस्तुतिक[2] विधेयान्वितकार्यान्वयः । परम्परया विध्युद्देशैकवाक्यता च ।

ननु विध्युद्देशमात्रात् यावदाकाङ्क्षितान्वितकार्यावगतेः किमर्थं सस्तुतिकपदोपायाश्रयणं[3] ? अनेन 'किमर्था स्तुतिः' इति भाष्यं व्याख्यातम् । विनापि स्तुतिपदैः कृत्स्नकार्यावगतेः सस्तुतिकपदोपायता वा कथम् ? अनेन "ननु प्राक्स्तुतिवचनादि"ति व्याख्यातम् ।

---

स्यैव तदर्थस्य प्रेरणात्मकतया विधित्वादित्यत्राह—विध्यर्थोऽपीति । सत्यमपूर्वमेव विधिः लिङादिरपि तदर्थतया परम्परया विधिरेव । तेनावयवेन लिङादिविधिना समुदायो विध्युद्देशो लक्षणयोपस्थाप्यत[4] इति युक्तमित्यर्थः । नन्वेवं [5]लक्ष्यार्थतामाश्रित्य विधिपरं कुतो व्याख्यायत इत्यत्राह—यावदिति । समभिव्याहृतानां सर्वेषामर्थवादपदानां विधेयस्तुतिपरत्वादेवं व्याख्येत्यर्थः । ननु विधेयस्तुतिपरत्वेपि किमिति विधिपदेन विध्युद्देशलक्षणेत्यत्राह—विधेयेति । यत एवमर्थवादपदानां विध्युद्देशेनैकवाक्यत्वं न विधिना अत एव राद्धान्तभाष्ये कथमेकवाक्यभाव इति प्रश्नोऽप्युपपन्न इत्याह—अत एवेति । कथमित्यत्राह—कार्येति । उत्तरमिति । विध्युद्देशेनैकवाक्यत्वेपि सस्तुतिकविधेयान्वितकार्यान्वयात् परम्परया स्तुतिपदानां कार्यान्वयोऽप्यङ्गीकृत एवेत्यर्थः । अत्रभाष्यं–किमर्था स्तुतिरितिचेत् इति तस्याभिप्रायमाह—ननु विध्युद्देशेति । कार्यावगतौ यावदाकाङ्क्षितं विषयनियोज्यात्मकं तत्सर्वं विध्युद्देशमात्राल्लब्धमिति तेनैव केवलं कार्यावगतिसिद्धेः स्तुतिपदसहितस्योपायताश्रयण[6]मयुक्तमित्यर्थः ।

अपरमपि भाष्यं—प्राक् स्तुतिपदादनुष्ठानं भूतिकामान्तात् सिद्धमित्यादि । तदभिप्रायमाह—विनापीति । भाष्यस्थप्राक्शब्दो विनार्थः स्तुतिपदैर्विनापि आकाङ्क्षितसविषयनियोज्यकार्यप्रमितिसिद्धेः तेषां प्रमित्यनुप्रवेशाभावादुपायतैव नास्तीत्यर्थः । यद्यपि प्रथमचोद्यभाष्याभिप्राये कथिते तत्परिहार-

---

१, विध्यर्थो हि B. २. R. A. संस्कृतं ३. A. पायताश्रयणं
४. B इत्यर्थः ५. B लक्षणार्थत्व ६. B व्यर्थमित्यर्थः

प्रथमं चोद्यं परिहर्तुमाह[१] केन चेदं कृतं आश्रितं वा सस्तुतिकपद-मुपायान्तरं एक एवायमुपायोऽनिदंप्रथमः। द्वितीयं परिहर्तुमाह— "स्तुतिपदेषु सत्सु न तैर्विनाऽवगतिः" संभूय पदानामवगत्युपायताव्युत्पत्तेः। रक्तः पटो भवतीतिवत्। नानुपायता स्तुतिपदानाम्। ननु रक्तपदम-धिकार्थमस्तु, स्तुतिपदानि तु न तथेति न प्रयुज्यन्ताम्। अनेन "नन्वेवं सति किं स्तुतिपदेनेति[२] व्याकृतम्"। उत्तरं—प्रयोगे[३] ह्यनिदंप्रथमे कस्योपालम्भ इति। "सत्यपि प्रयोगे अवान्तरवाक्यादवगतिरस्तु"।

---

भाष्यार्थोऽनन्तरं वाच्यः न तु चोद्यान्तरभाष्यार्थः तथापि ग्रन्थानुसारात् तथोक्तम्। अत्र "कथं रोचेत ततोऽनुष्ठीयेत" इति प्रथमचोद्यपरिहारभाष्यम् तस्याभिप्रायष्टीकोक्त इत्याह—प्रथममिति। स्तुतिपदानामुपायत्वमुपेत्यानर्थक्या-पादनं तद्रहितोपायान्तरे सति। तच्च नास्ति। सस्तुतिपदस्यैव विध्युद्देशस्यानिदं-प्रथमोपायत्वादित्यर्थः। द्वितीयचोद्यपरिहारभाष्यं 'न हि यदा स्तुतिपद-सन्निधानं तदा पूर्वेणैव विधिः' इत्यादि तदभिप्रायं टीकोक्तमाह—द्वितीयमिति। स्यादेवं स्तुतिपदानामनुपायता यदि तैर्विना कार्यावगतिः स्यात्। [४]न च तथास्ति। समभिव्याहृतनिखिलपदानां सम्भूयैकवाक्यतया कार्यावगत्युपायताव्युत्पत्तेरित्यर्थः। ननु अनाकाङ्क्षितत्वाद्विधेः तत्पदानां कथमेकवाक्यतेत्यत्राह—रक्त इति। यथा पटो भवतीत्येतावन्मात्रश्रुतौ तावत एव पटभवनरूपवाक्यार्थोपायता यदा तु तस्मिन्नेव वाक्ये रक्तपदमधिकं श्रुतं तदा रागसम्बन्धाकाङ्क्षामुत्थाप्य समभि-व्याहृतरक्तपदसहितस्यैवोपायता, तथात्रापि स्तुत्याकाङ्क्षामुत्थाप्य स्तुतिपद-सहितस्यैवोपायतेति स्तुतिपदानामप्युपायता। न चात्र स्वरूपभङ्गः येनाकाङ्क्षो-त्थापनमशक्यं स्यात्, एतेन हेतुपक्षे यदाकाङ्क्षोत्थापनमुक्तं तत्प्रत्युक्तं निर्दोषा-याश्चोदनाया अनपेक्षत्वस्वरूपभङ्गापत्तेरित्यर्थः।

अपरं चोद्यभाष्यम्—नन्वेवं सति किं स्तुतिपदेनेत्यादि। तदभिप्रायमाह— नन्विति। रक्तः पटो भवतीति रक्तपदप्रयोगे अधिकार्थत्वात् तत्प्रयोगो युक्तः स्तुतिपदानां तु अनधिकार्थत्वान्न तत्प्रयोगो युक्त इत्यर्थः। 'सत्यं विनापि तेन' इत्यादिपरिहारभाष्यतात्पर्यमाह—उत्तरमिति। अनिदंप्रथमत्वात्प्रयोगस्य नानु-योगार्हतेति यथाप्रयुक्तं तथा प्रतिपत्तव्यमित्यर्थः। ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिसरूपत्वात् विधिरभिप्रेतः स्यादित्यादि तदभिप्रायमाह—सत्यपीति। प्रयुज्यन्तां नाम स्तुतिपदानि तथापि विध्युद्देशमात्रात् अवान्तरवाक्यादवगतिरस्तु। स्तुति-

---

१. B. प्रत्याह  २. B. प्रत्याह  २. R. वचनेनेति
३. A. अप्रयोगे  ४. A कार्यमितिः  ५. B न चेहास्ति

अनेन "ननु सत्स्वपि स्तुतिपदेषु" इति व्याख्यातम्। उत्तरं—निमित्तमात्रमवान्तरवाक्यार्थो न नैमित्तिकवाक्यार्थ इति।

ननु यथा स्तुतिपदरहिते विध्युद्देशे तावन्मात्रावगतिः दृष्टा तथा स्तुतिपदसमवहितेष्वस्तु। अनेन "ननु स्तुतिनिरपेक्षादपीति व्याख्यातम्। उत्तरं—अस्तु विध्युद्देशमात्रप्रयुक्तौ तथा। नाधिकप्रयुक्तावपि। न हि तत्र केवलादधिकारावगतिव्युत्पत्तिरिति।

ननु स्तुतिपदानां कार्योपायत्वेनानवगमात् न वैदिकता, किन्तु वेदवाक्यतैव। अनेन यदुक्तं न क्रियाऽवगम्यते, क्रियासंबन्धं वा किञ्चित्। इत्यपुनरुक्ततया व्याख्यातम्, उत्तरं—सस्तुतिककार्यप्रतिपत्त्यौपयिकतया स्तुतिपदानां वेदतैव।

---

पदान्यविवक्षितार्थानि भवन्त्वित्यर्थः। 'आह स्तुतिपदानि अनर्थकान्यभविष्यन् इत्यादिपरिहारभाष्यतात्पर्यमाह—उत्तरमिति। सस्तुतिकपदप्रयोगे अवान्तरान्वयमात्रात् विध्युद्देशावान्तरवाक्याद्योऽर्थः स निमित्तमात्रं न नैमित्तिकरूपो वाक्यार्थः समासपदार्थवदिति न विध्युद्देशमात्राद्वाक्यार्थावगतिरित्यर्थः। अपरं भाष्यं। "ननु निराकाङ्क्षादपि विधिमवगमिष्याम" इति तत्तात्पर्यमाह—नन्विति। यथा स्तुतिपदाश्रुतौ विध्युद्देशमात्रात् कार्यावगतिर्दृश्यते तथा स्तुतिपदश्रुतावपि किं न स्यादित्यर्थः। 'भवतु नैवं सति कश्चिद्विरोधः किन्तु अशक्य' इत्यादिभाष्यतात्पर्यमाह—उत्तरमिति। युक्तं केवलविध्युद्देशप्रयुक्तौ तथा, न पुनरधिकानां स्तुतिपदानामपि प्रयुक्तौ केवलात् विध्युद्देशमात्रादर्थप्रतीतिः शक्या' सम्भूयैकवाक्यताव्युत्पत्तेः। अधिकावगतिस्तु सस्तुतिकवाक्यादेवेत्यर्थः। अत्र भाष्यं—अथ यदुक्तं न क्रियावगम्येति क्रियासम्बन्धं वा किञ्चिदिति तत्पुनरुक्तार्थमिव प्रागेव वाक्यभेदमाशङ्क्य तत्परिहारस्योक्तत्वादित्याशङ्क्य तत्तात्पर्यमाह—ननु स्तुतीति। भाष्यं नैकवाक्यत्वाभावपरं किन्तु स्तुतिपदानां वैदिकत्वाभावपरं, न हि स्तुतिपदानां वैदिकता साक्षात्कार्योपायत्वेनावगमात् किन्तु वेदवाक्यतैव सस्तुतिपदवाक्यादेव कार्यावगतेः। कर्तव्यतावगतिहेतोश्च वेदत्वात्। विध्युद्देशस्य तु वैदिकतापीत्यर्थः। "तदुक्तं-एवं स्तुतिशब्दाः स्तुवन्त" इत्यादि परिहारभाष्यतात्पर्यमाह उत्तरमिति। सत्यं सस्तुतिककार्यप्रतीत्यौपयिकतया, उपाय एवौपयिकता तस्य भावस्तत्ता। स्तुत्यन्वयिकार्यप्रतीत्युपायतया स्तुतिपदानां वेदतैव, न पुनर्विध्युद्देशवत वेदसम्बन्धितारूपं वैदिकत्वमित्येवंरूपभेदाङ्गीकार एवेत्यर्थः।

[1]ननु वेदसंबन्धितारूपं वैदिकत्वं, विध्युद्देशस्य तु साक्षात् कार्यार्थस्यैव वैदिकार्थयोगात् वैदिकतापि। स्तुतिपदानां त्वतथात्वात् वेदतैवेति भेदः। अयं च भेदः प्रसङ्गादुक्तः नाप्रामाण्यसमाधानार्थम्[2]। बालानां कृते प्रक्षिप्ता अर्थवादा इत्यपि न, अकर्तृतास्मृतितुल्यत्वात्। अध्यायानध्यायादरतौल्याच्च। न चानन्वितार्थतया प्रक्षेपकल्पना, उक्ता हि अन्वितार्थता। एवं रुद्ररोदनादि अमानसिद्धं विरुद्धंचेति न वाच्यम्। स्तुतिपरत्वे च यथामानमेव स्तुतिः। स्वरूपपरत्वे अयं दोषः कार्यार्थत्वेऽपि। विधौ हि न परश्शब्दार्थ इति। न चावकाविधौ अपां स्तुतिर्व्यधिकरणतया न युक्ता। एकवाक्यत्वे गौणी लाक्षणिकी वा वृत्तिः[3]।

---

ननु विध्युद्देशस्यापि कार्यावगत्युपायतया वेदतैव न तु वैदिकतेत्यङ्गीकृतभेद एव कथमित्यत्राह विध्युद्देशस्येति। साक्षात्कार्यार्थतया वैदिकार्थयोगात् गौणमपि वैदिकत्वं विध्युद्देशस्यैव, अतथाविधानां स्तुतिपदानां [4]वेदतैवेत्यर्थः। नन्वेतद्भेदकथनमप्रस्तुतं प्रामाण्यसाधनानुपयोगादित्यत्राह—अयमिति। नन्विति। ननु अतिजघन्येतरविलक्षणस्तुतिपरत्वात् वरं बालप्रवृत्त्यर्थं प्रक्षिप्तानि स्तुतिपदानीत्याश्रयणमित्यत्राह—बालानामिति। तत्र हेतुः [5]अकर्तृतास्मृतीति। विध्युद्देशवत् स्ततिपदेष्वपि कर्त्रस्मरणं तुल्यम्। अतो न प्रक्षेपकल्पनेत्यर्थः। सम्प्रदायफलकाध्ययनवर्तिनियमादरसाम्याच्च न प्रक्षेपकल्पनेत्याह—अध्यायेति। अनेन "तुल्यं च साम्प्रदायिकमि"ति सूत्रं तदर्थपरं भाष्यं च व्याख्यातम्। ननु यजमानः प्रस्तर इत्यनन्वितार्थानां स्तुतिपदानां प्रमादपाठार्हतया प्रक्षेपकल्पना युक्तेत्यत्राह—न चेति। तत्र हेतुः - उक्ता हीति। स्वार्थे तात्पर्याभावात् स्तुतिपरतयान्वितार्थतोक्तेरित्यर्थः। यदपि आत्मवपोत्खेदादि मानान्तरविरुद्धं, यदपि च मानान्तरासिद्धं रुद्ररोदनादि तदर्थस्तुतिपदानां कथमन्वितार्थतेति न च वाच्यमित्याह—एवमिति। तत्र हेतुः—स्तुतीति। स्तुतिपरत्वे तदनुगुणप्रकाराश्रयणोपपत्तेः नायं दोष इत्यर्थः। कुत्र तर्हि अप्रसिद्धत्वविरुद्धत्वयोर्दोषत्वं तत्राह—स्वरूपेति। स्वार्थानुवादमात्रपरत्वे तद्धेतुकानुष्ठानविधिपरत्वे वा तयोर्दोषतेत्यर्थः। [6]कथं कार्यार्थत्वेपि विरोध इत्यत्राह—विधौ हीति।

ननु वेतसशाखयाऽवकाभिश्चाग्निं विकर्षतीत्यवकाविधौ 'आपो वै शान्ता' इत्यपां स्तुतिर्व्यधिकरणतया न युक्तेत्यत्राह—न चेति। तत्र हेतुः—एकेति। तत्र

---

१. प्यसमर्थनार्थः २. R. ननु ३. व्यावृत्तिः A. ४. A वैदिकतैवेत्यर्थः
५. B कर्मस्मृति ६. कुत्र तर्हि अनन्वितत्वेपि विरोध इत्यत्राह—विधौहीति।

अभ्युच्चयहेतवः तन्निरसनं च भाष्ये व्यक्तम्।

विवरणोक्तमधिकमुच्यते—वेदानुगतं बाह्यसमुत्थं सापेक्षत्वं निरस्तम्। अधुना वेदवाक्यैकदेशोत्था शङ्का निरस्यते। अनेन पादान्तरतां गतपादानन्तरतां चाह। हेतुतयाऽर्थवादान्वयात् हेतुसापेक्षमानान्तरगम्यं कार्यं

---

साङ्गयात स्मृतिस्थत्वमात्रं गौणीवृत्तिसंबन्धात् लाक्षणिकी वृत्तिरभिप्रेता, न पुनस्साक्षात् गौणी लाक्षणिकी वा वृत्तिरेव, वाक्या[1]र्थान्वयोपस्थापनार्था हि वृत्तिः। न ह्यत्राप्शब्दोपस्थापितावकानां वाक्यार्थान्वयः, किन्तु तदुपस्थापितस्तुतेरेव। तत्रैव शब्दस्य वृत्तिः। अन्यत्सर्वं द्वारमात्रमेव। न हि सकृदुच्चरितशब्दस्य वृत्तिद्वयं व्युत्पत्ति[2]विरोधात्। एवमेवंविधे सर्वत्र गौणलक्षणाव्यवहारे द्रष्टव्यम्। एतेन गुणवादस्त्वितिसूत्रं भाष्यं च च व्याख्यातम्। शास्त्रदृष्टिविरोधाद्यभ्युच्चयहेतुनिरसनं त[3]त्स्वरूपं च भाष्य एव व्यक्तमित्याह—अभ्युच्चयेति। विवरणोक्तमिति। वस्तुबलमते अन्यस्मिन् यदंशे विशेषः तन्मात्रमुच्यत इत्यर्थः। तत्र सङ्गतिकथनपरां सापेक्षत्वमप्रामाण्यनित्यादिविवरणटीकामर्थतोऽनुभाष्य तात्पर्यमाह—वेदानुगतमिति[4]। वाक्यत्वादिबाह्यहेतुसमुत्थं कृत्स्नवेदसम्बन्धिसापेक्षत्वं स्थूलतममनपेक्षत्वप्रसाधनात् प्रथमपादे निरस्तम्। अधुना अर्थवादपादे वेदवाक्ये वेदैकदेशार्थवादाद्यन्वयप्रकारविशेषोत्थसापेक्षत्वाशङ्का स्थूलतरा; अतो निरस्यते। अतोऽर्थभेदात्पादान्तरता, स्थूलतरस्य स्थूलतमाद्विलम्बप्रतीतेः। अनन्तरता च वेदाधिकरणस्य बद्धक्रमतया पादान्त्यत्वात्। अर्थवादनयस्य चैतत्पादाद्यत्वात्, आवान्तरसङ्गतिरपि सुगमेति पृथक्[5]नोक्तमिति भावः।

ननु हेतुसापेक्षत्वकृतमप्रामाण्यं सार्थवादकानां चोदनानामेव न निरर्थवादकानाम्। तत्प्रामाण्ये च तद्विषयतया प्रतिज्ञा सुस्थेति प्रतिज्ञाक्षेपपर्यन्तता न पूर्वपक्षे स्यात्। यद्यपि यथा शेषत्वप्रतिज्ञायां तदनाक्षेपेपि ग्रहादिचिन्ता। तथाऽत्रापि चोदनाप्रामाण्यप्रतिज्ञायामपि युक्ता तथापि न तत्र सामान्यप्रतिज्ञानन्तरं विशेषेणाध्यायार्थे प्रतिज्ञा। अत्र तु द्वितीयसूत्रे चोदनालक्षणोऽर्थो धर्म इति अर्थाच्चोदनाप्रामाण्यप्रतिज्ञायामपि तृतीयसूत्रे तस्य निमित्तपरीष्टिरिति विशेषतश्चोदनाप्रामाण्यपरीक्षा अध्यायार्थतया प्रतिज्ञा[6]ता। परीक्षा चाक्षेपसमाधानरूपा। अतः प्रतिज्ञाक्षेपपर्यन्तत्वे अवश्यवाच्ये निरर्थवादके कथं तदाक्षेप इत्यत्राह—हेतुतयेति। हेत्वन्वयपरसमभिव्याहृतार्थवादपदान्वयबलात सापेक्षे मानान्तरगम्ये

---

१. A र्थान्वितो　　२. A विरहात्　　३. R तत्स्वरूपवत्
४. वेदानां　　५. B पृथगुक्तमित्यर्थं　　६. B प्रत्यज्ञायि

लिङादिवाच्यमिति निश्चयादनर्थवादकोऽपि लिङादिस्तदर्थ एवेति कृत्स्नवेदप्रामाण्याक्षेपः। उपेत्यापि स्तुत्याऽन्वयं स्तुतिपूर्वके कार्यबोधे स्तुतिपदार्थो न गौणादिः तदादरादेव हि कार्यता। कार्यबोधपूर्विकायां तु स्तुतौ कार्यधीबलात् गौणादिः युक्त एव। स्तुतिस्तु कार्यबोधानङ्गमिति न स्तुत्यर्थतोपगमः। राद्धान्ते तु स्तुतिपूर्वकता नेष्टा, यतो हिताहितलाभहानहेतुतया श्रेयानयं अतः कार्यमिति नामान्तरेण हेत्वन्वय एव उक्तः। किन्तु कार्यबोधपूर्विकेयं स्तुतिः कार्यबोधाङ्गं च, वाक्यैकदेशादर्थानवबोधात्। प्रयुक्ताद्धि प्रतिपत्तिरित्युक्तम्।

---

कार्ये लिङ्गादेः शक्तिनिश्चयादनर्थवादकेपि लिङादिस्तदर्थ एवेति यथा वाक्यशेषबलात् यवादिपदस्य दीर्घशूकाद्यर्थनिश्चये वाक्यशेषरहितेऽपि सर्वत्र यवादिपदं तदर्थमेव। यथा वा कामिनियोज्यान्वयबलात् लिङादेः स्थायिकार्ये शक्तिनिश्चये कामिनियोज्यरहिते नित्यादिवाक्येपि लिङादिस्तदर्थ एव। अतः कृत्स्नचोदनाप्रामाण्याक्षेपः निबन्धनेपि। विधिवन्निगदपूर्वपक्षे सर्वाक्षेप इत्थमेव। अत्र तु निबन्धपूर्वपक्षे यत्सर्वत्र सार्थवादकत्वं यत्नेनोक्तं; तदेवमपि सर्वाक्षेपोऽवश्यवाच्य इत्येवंपरमिति भावः। विशेषान्तरमाह—उपेत्येति। वस्तुतः पूर्वपक्षे स्तुत्यान्वयो नास्तीति लोकसिद्धम्, तथापि उपेत्यापि स्तुत्यान्वयं किं स्तुतिपूर्वकः कार्यबोधः किं वा कार्यबोधपूर्विका स्तुतिरिति ? नाद्यः, स्तुतिपूर्वकत्वे प्रथमं कार्यप्रतीत्यभावेन तत्परतन्त्रत्वाभावात् जघन्यवृत्त्यापादकासिद्धेः शब्दस्वरसावगतवृत्तिनियमात् 'यजमानः प्रस्तर' 'आपो वै शान्ता' इति स्तुतिपदानां गौणलाक्षणिकार्थता न स्यात्। सादृश्यसम्बन्धप्रतिपन्नमात्रार्थत्वं न स्यादित्यर्थः। न द्वितीय इत्यत्राह—कार्यबोधेति। यद्यपि स्तुतिप्रतीतेः कार्यधीपूर्वकत्वे प्रथमप्रतीतकार्यधीपारतन्त्र्यबलात् स्तुतिपदानां गौणार्थता युक्ता। तथापि तथात्वे स्तुतिः कार्यबोधं प्रत्यनङ्गमनुपायः स्यात्। कार्यप्रमित्युपायतया हि आर्थवादिकस्तुतेरन्वयः न पृष्ठादिस्तुतिवदुपादेयतया। अतः कार्यानन्वयापत्तेर्न स्तुत्यर्थतोप[1]गम इत्यर्थः। राद्धान्ते विशेषमाह—राद्धान्त इति। कार्यधियः स्तुतिपूर्वकता राद्धान्तिनो नेष्टा नामान्तरेण हेत्वन्वयापत्तेरित्यर्थः। कथं तर्हीत्यत्राह—किन्त्विति।

ननु कार्यधीपूर्वकत्वे स्तुतेः कार्योपायता न स्यादित्यत्राह—कार्येति। तत्र हेतुः वाक्येति। ननु वाक्यैकदेशादर्थधीः कस्मान्न स्यादित्यत्राह—प्रयुक्ताद्धीति। सम्भूयकारित्वव्युत्पत्तेः प्रयुक्तसकलपदैः कार्यप्रतीतिः नैकदेशात्। यथा चैतत् तथा

---

१. B तावगम

शास्त्रदृष्टविरोधः उदाहृते नास्ति; अन्यत्रास्तु न नयहानिः। कल्पनाकाले अक्रत्वर्थत्वेन तदेकविषयतया विरोध इति कस्यचित्समाधिरयुक्तः।

यथाहि—तत्काले न क्रत्वर्थता तथा पुरुषार्थतापि नेत्यविरोध इति अन्यत्रैव न्यायः। भाष्यान्तरव्याख्या [1]विस्तरभयान्नोक्ता। टीकाद्वये पदैकवाक्यतैव यथाभाष्यं रक्तपदसमानतोक्तेः। स्तुतिपदानीत्युक्तेश्च। वाक्यैकवाक्यता हि विधेयान्तरे सति नियोगैक्यात्। इह न तथा।

यद्यपि स्तुतिपदानां वाक्यतुल्यता अवान्तरपदार्थान्वयाहानात् तथापि

---

"प्रयुक्ताद्धि प्रतिपत्तिः न प्रतिपत्तेः प्रयोगः" इति विवरणटीकायामुक्तमित्यर्थः। नन्वत्रभाष्ये "स्तेनं मनः अनृतवादिनीवाक्" इति शास्त्रविरोधे उदाहरणमुक्तं तदयुक्तम्। प्रकरणाप्रकरणाधीतत्वेन क्रत्वर्थंपुरुषार्थत्वेन विधिनिषेधयोर्विषयभेदेन विरोधाभावादित्यत्राह—शास्त्रेति। यद्यप्युदाहृते विरोधो नास्त्येव तथापि यत्र विरोधोऽस्ति तत्र न्यायफलमस्त्वित्यर्थः, कैश्चिदुदाहृतेऽपि विरोध उपपादितः स्तेयं कर्तव्यं मृषोद्यं कर्तव्यमिति विधिकल्पनोत्तरकालं क्रत्वर्थता न कल्पनाकाले अतो विरोध इति। स न युक्त इत्याह—कल्पनेति। कथमित्यत्राह—यथेति। तन्मतोक्तभाष्यान्तरव्याख्याप्रकारो ग्रन्थविस्तरभयात् स्वेन नोक्त इत्याह—भाष्येति। किं स्तुतिपदानां पदैकवाक्यतया एकवाक्यत्वं उत वाक्यैकवाक्यतयेति तत्राह—टीकेति। भाष्यानुसाराद्विवरणनिबन्धनटीकाद्वये स्तुतिपदानां पदैकवाक्यतैवेष्टेत्यर्थः। ननु कथं भाष्यात् पदैकवाक्यताप्रतीतिरित्यत्राह—रक्तेति। अन्यथा स्तुतिवाक्यानीत्युच्येतेति भावः। ननु ग्रन्थार्जवं सति हेतावुपोद्बलकं स एव क इत्यत्राह—वाक्यैकेति। समभिव्याहारादेकवाक्यता तावत्प्रतीता। सा च द्विधा। पदैकवाक्यतया वाक्यैकवाक्यतया वा। तत्र वाक्यैकवाक्यतायाः [2]पदैकवाक्यतैव विशिष्टा। तदनुपपत्तिश्चेत् वाक्यैकवाक्यता तत्र भवति। यत्र विधेयान्तरे सति अनुष्ठेयरूपवाक्यार्थे पृथक् वाक्यार्थतया पुरोवादतया अनुवादतया वा बोध्ये सति नियोगैक्यं प्रयोजनभूतग्राहकैक्यं, यथा समिदादि मन्त्रविद्वद्वाक्यादिषु। स्तुतिपदेषु सिद्धार्थपरेषु न तथा। [3]यतएव पदैकवाक्यतैव स्तुतिपदानाम् अत एव न फलमन्त्रता, आकार्यार्थत्वात् ग्राहकागृहीतत्वात्। स्वपरत्वायोगाच्च, अभियुक्तप्रयोगाभावाच्चेति भावः। नन्वत्राप्यवान्तरान्वयाभानत् वाक्यतुल्यतया अवान्तरवाक्यार्थप्रतीतेः वाक्यैकवाक्यतेत्यत्राह—यद्यपीति। सत्यमेवं तथापि नावान्तरवाक्यता, अवान्तरान्वये तात्पर्याभावात्, तदभावश्चोपादेयोपादानावच्छेदकार्थपरत्वाभावात्, अवान्तरान्वयप्रतीतिस्तु वाक्यसादृश्यकारिता संसर्गाग्रहरूपभ्रमरूपैवेत्यर्थः। नन्वेवं प्रतीता-

---

१. विस्तरापत्तेः A. २. बांधितायाः'''अवशिष्ठ ३. A. अतः

अवान्तरार्थपरत्वाविवक्षया तन्नान्तरीयकं श्रेष्ठत्वं विधेयगतं बोधयितुं प्रयुक्तानां न वाक्यता। किन्तु श्रेष्ठताविशिष्टविधेयपरपदविशेषणता। अत एवान्यपरत्वेऽपि न गौण लाक्षणिकार्थता। अन्वयप्रतीतिपरतैव हि तदा नास्ति यथा विषं भुंक्ष्वेति भोजननिषेधपरे वाक्ये अन्योन्यान्वयबोधोऽप्येवं विधेयान्वययोग्यतास्मृतिरेवेति इयं दिक्।

---

न्वयपरत्वाभावे बोध्यार्थान्तराभावे च स्तुतिपदानां वैयर्थ्यं स्यादित्यत्राह-तन्नान्तरोयकमिति। अन्योन्यान्वयप्रतीतेःनान्तरीयकं दुःखहानपुरुषार्थापादनार्हत्वरूपं श्रेष्ठत्वं विधेयगतं बोधयितुं प्रयुक्तानां [1]स्तुतिपदानां न व्यर्थतापीत्यर्थः। ननु वाक्यत्वाभावे कथमेकवाक्यतेत्राह—किन्त्विति। प्राशस्त्यविशिष्टविधेयपरपदशेषतया पदैकवाक्यतैव। विशेषणत्वं च यद्यपि व्यावर्त्याभावेन न स्वरसतः[2] तथापि यदि रथन्तरसामेतिवदयोगव्यावृत्यापि सम्भवति। न च विधेयविशेषणतया विधेयतयाङ्गतेति वाच्यम्। विनियोगोपादानशून्यत्वात्। तच्छून्यत्वं चोपादेयोपादा[3]नावच्छेदकश्रुत्यभावात्, न चैवमविधेयतया विध्यनन्वयः विधेयगततया विधेयद्वारा परम्परया विध्यन्वयात्। एवं च प्राशस्त्यविशिष्टविधेयपरपदशेषतया विधायकानुप्रवेशात् कार्यप्रमित्युपायतया प्रमाणकोटितयैव स्तुतिपदानामगत्याऽन्वय आश्रीयते। न तु तेषां प्रमेयपरतयाऽन्वयसम्भवस्तेषामपीति भावः। ननु गुणवादस्त्विति सूत्रव्याख्यावसरे यजमानः प्रस्तरः आपो वैशान्ता इत्यादौ गौणलाक्षणिकवृत्त्यभ्युपगमो भाष्य इति तद्विरुद्धत्वादवान्तरवाक्यत्वाभावोक्तिः स्तुतिपदानां न स्यादित्यत्राह—अतएवेति। यत एव श्रेष्ठत्वोपस्थापनपरत्वमर्थवादपदानां, नावान्तरवाक्यान्वयपरत्वं, अतएवान्यपरत्वेपि प्रस्तरावकाद्यन्यपरत्वेपि[4] न गौणलाक्षणिकार्थता न सदृशसम्बन्ध्यर्थता। तयोर्वाक्यार्थकार्येऽनन्वयात् किन्तु प्राशस्त्यस्यैव तत्रान्वयः। कार्यान्वयि च शब्दार्थः अतः प्राशस्त्य एव स्तुतिपदानां [5]वृत्तिः नावान्तरे द्वारभूतेऽर्थे। एवं च तत्र वृत्त्यभावात् गौण्याद्युक्तिः सादृश्यादिमात्रात्। अतो नावान्तरवाक्यतेत्यर्थः। तत्र हेतुः—अन्वयेति। प्रतीतान्वयपरत्वाभावे दृष्टान्तमाह—यथेति। विषं भुङ्क्ष्वेति शत्रुगृहभोजननिषेधपरे वाक्ये यथा प्रयुक्तविषभक्षणान्वयपरता नास्ति तथाऽत्राप्यनभिधेयान्वयद्वारकं स्तुतिपरत्वमर्थवादपदानामित्यर्थः। नन्वेवमुभयत्राप्यन्वये को निर्वाह इत्यत्राह--अन्योन्येति। वक्तृज्ञानलिङ्गभूतलौकिकसिद्धार्थ-

---

१. A प्रवृत्तानां २. B स्वतः ३. B पादानानवछेद

४. B न्वयपरत्वेपि ५. B वृत्तेः न चान्तर

प्रजाहिततया प्रजापतित्वं; मध्यस्थसारतागुणात् वपा; वायोर्वपावृष्टिः, रश्मिरादित्यस्य, वायुराकाशस्य। अग्नौ प्रक्षेपः—वैद्युते वृष्टेः आर्बीसे जाठरे वायोः रश्मेः लौकिके वायोः अजत्वं चिरस्थतागुणात्। तमन्नादिकमुपयुज्य प्रजां पशून् प्रजापतिः कथञ्चित् निमित्ततया, प्रासृजत् इतीयं व्याख्या अन्यत्राप्युन्नेया। शेषं सुगमम्।

॥ २ ॥ विधिर्वा स्यादपूर्वत्वात् वादमात्रं ह्यनर्थकम् ॥ १९ ॥

'स्तुत्यर्थतापि विधिवन्निगदानामध्यवसातुमशक्येत्यप्रामाण्यं पुनरिति

---

वाक्य[2]वदन्वयधीर्योग्यान्वयस्मृतिरेव असंसर्गाग्रहोपस्थापितत्वादित्यर्थः। नन्वबाधोदये कथं भ्रमत्वनिश्चय इत्यत्राह—इति दिगिति। यथा प्रतिपन्नार्थकार्यान्वयनिबन्धनयौक्तिकबाधेपि भ्रमत्वं सुज्ञातमेवेत्यर्थः। ननु "प्रजापतिरात्मनो वयामुदखिदत्" इत्यादौ मानान्तरविरुद्धविषये सर्वथा निरालम्बनैव स्तुतिरित्याशङ्क्य सादृश्यादिना यथाकथञ्चित सालम्बनत्वं वेद्यमित्याह—प्रजाहिततयेति। आर्विस इत्यस्य व्याख्या जाठर इति। सर्वोदाहरणेष्वेवमेवोन्नेयेत्याह—इयमिति।

॥ २ ॥ विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥

इह औदुम्बरो यूपो भवति ऊर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै इत्यादिविधिवन्निगदार्थवादयुक्तासु चोदनासु चिन्ता किमप्रमाणं उत प्रमाणमिति। तदर्थमियं चिन्ता ऊर्जा पशूनाप्नोतीत्यस्य किं विधिपरत्वस्तुतिपरत्वानध्यवसायः उत स्तुतिपरत्वमेवेति। नन्वत्र भाष्ये विधिवन्निगदानां किं विधिः कार्यं उत स्तुतिरिति चिन्ता दर्शिता। तस्याः कथमध्याये सङ्गतिः प्रामाण्यव्युत्पत्तिपरत्वाभावात्। कथं वाऽवान्तरसङ्गतिः पूर्वोक्तार्थोपजीवनाभावादित्यत्राह—स्तुत्यर्थतापीति। या खलु सर्वेषामर्थवादानां स्तुत्यर्थताऽर्थवादनयोक्ता सापि विधिवन्निगदानामध्यवसातुमशक्या, विध्यर्थत्वकोट्यवष्टब्धत्वाद्बुद्धेः। अतः उक्तार्थानध्यवसायनिबन्धनाप्रामाण्योत्थितया सङ्गतिद्वयम्। भाष्यस्याप्ययमेवार्थः किं विधिरस्य कार्यमुत स्तुतिरित्यनध्यवसायः उतास्यापि स्तुतिरेवेत्यावृत्त्या पूर्वोत्तरपक्षस्कन्धयोजनादित्यर्थः। नन्वेवं सति यद्यनध्यवसायादप्रामाण्यं तर्हि यत्रैवानध्यवसायो विधिवन्निगदवतीषु चोदनासु तासामेव चोदनानामप्रामाण्यम् नेतरासाम्। अतएव प्रतिज्ञाक्षेपपर्यन्तत्वं न स्यादिति चोदयति—

---

१. B. स्तुत्यर्थवादता   २. A वाक्यवत्

सङ्गतिद्वयम्। ननु विधिवन्निगदवत्येव चोदना माभूत् प्रमाणं, न प्रतिज्ञाहानिः इति तन्न। अपुंवाक्येपि चेल्लिङादिः स्वार्थे सापेक्षः तदा तत्स्वभावत्वनिश्चयात् सर्वचोदनास्वपि तथात्वात् प्रतिज्ञा[1]हानिनिबन्धना। नत्वेवं समधिः—

स्तुत्यर्थंमपि न व्यापि प्रामाण्यं प्रतीति वृथा परोक्षार्थतेति। हेतुतयैवान्वये हि पूर्वाधिकरणन्यायात् सर्वाक्षेप इति। न हि सर्वव्यापी एक एवान्वयप्रकार इति सर्वाक्षेपः। न चैवं समाधिः—सर्वचोदनाप्रामाण्यप्रतिज्ञानात् एकाप्रामाण्येऽपि प्रतिज्ञाहानिः। पूर्वत्र यत् सर्वानाक्षेपे अचिन्त्यत्वमुक्तम् [ तत् ] तत्र सर्वाक्षेपेपि[2] शक्तेरिति। यतो न हि सर्वचोदनाप्रामाण्यप्रतिज्ञा, किन्तु या चोदना सा प्रमाणमिति। यदि तु चोदनैव न स्यात् सा प्रमाणं वा न भवेत् तदैव निर्विषया प्रतिज्ञा स्यात्,

नन्विति। तन्नेति। अपौरुषेयेपि कार्यपरे विधिवन्निगदवाक्ये विधिपरत्वस्तुतिपरत्वानध्यावसाये यद्यध्यवसितार्थत्वाय लिङादेः बहुक्षीरेत्यादाविव मानान्तरापेक्षितता तथा च सापेक्षार्थबोधकत्वे लिङादेः शक्तिनिष्कर्षात् सर्वचोदनास्वपि लिङादेः सापेक्षार्थत्वेन सर्वाक्षेपात् प्रतिज्ञाक्षेपपर्यन्ततेत्यर्थः। विधिवन्निगदवतीषु स्तुत्यर्थत्वेनापि प्रामाण्यानिर्वाहात् प्रामाण्यं प्रति तदव्याप्तमिति वृथा परोक्षार्थतेति हेतुतयैवान्वये अन्वयप्रकारस्यापि सर्वव्यापित्वाय अन्यत्राप्यर्थवादे हेतुतयाऽन्वये पूर्वाधिकरणपूर्वपक्षन्यायापत्त्या तद्वत्सर्वाक्षेप इति परोक्तसमाधिर्न युक्त इत्याह नत्वेवं समाधिरिति। तत्र हेतुर्नहीति। सर्ववाक्येषु नानाविधान्वयदर्शनात् सर्वव्यापित्वमन्वयप्रकारस्य असम्भावितमेव यत इत्यर्थः। चोदनालक्षणोऽर्थो धर्म इत्यविशेषेण सर्वचोदनाप्रामाण्यप्रतिज्ञानात् एकाप्रामाण्येऽपि सर्वविषयप्रामाण्यप्रतिज्ञाहानिरेव। पूर्वत्र यत्सर्वानाक्षेपे अचिन्त्यत्वमुक्तं तत्तत्र सर्वत्राक्षेपेपि वक्तुं शक्यते इत्येवं प्रौढवादेनेत्ययमपि परोक्तसमाधिर्न युक्त इत्याह—न चैवमिति। यतो द्वितीयसूत्रे न सर्वा चोदना प्रमाणमिति प्रतिज्ञा। किन्तु या चोदना सा प्रमाणमिति। नन्वेवमपि चोदनोद्देशेन प्रामाण्यविधेः प्रत्युद्देशन्यायात् सर्वचोदनाप्रामाण्यप्रतिज्ञैव स्यादित्यत्राह—यदि त्विति। न तावत्सूत्रे सर्वशब्दोऽस्ति येन सर्वविषया प्रतिज्ञा स्यात् किन्तु चोदनाप्रमाणको धर्म इति प्रतिजानता अर्थाच्चोदना धर्मे प्रमाणमिति प्रतिज्ञा न सूत्रवाक्याभिधेयतया श्रौती। अतो न

१. B. निर्विषया   २. B क्षेपोऽपि।

नान्यथेति। पूर्वत्रापि निर्विषयतार्थो यत्नः न शक्यतागात्रादिति गुरुरहस्यम्।

अनध्यवसायोऽत्रैव साध्यद्वयमेकवाक्यता चेत्यन्योन्यविरुद्धद्वय-भानात्। न च सर्वचिन्तानां सन्देहादेव प्रवृत्तेः सर्वत्रानध्यवसायो वाच्यः, प्रवृत्त्युत्तरकालेपि पक्षपरिग्रहाशक्तेरनध्यवसायः। विध्यर्थत्वात्। सर्वत्र विधिना च नियोज्यार्थं साध्यतयैवाकाङ्क्षितत्वात् साध्यपशुविशिष्टनि-योज्यानुगुणो विधिः साध्यो भाति। ऊर्जा पशूनाप्नोतीति श्रुतेः उदुंबर-

---

प्रत्युद्देशन्यायविषयः। सा यदि चोदनैव वेदे न विद्यते विद्यमानापि वा न प्रमाणं तदैव निर्विषया स्यात्, न तु प्रमाणभूतचोदनायां विद्यमानायामपि। अतो न प्रतिज्ञाहानिपर्यन्तता एकाप्रामाण्येपि स्यादित्यर्थः। यदपरमुक्तं सर्वाक्षेपो यत्नतः प्रौढवादेनेति तदपि न तथेत्याह--पूर्वत्रापीति। गुरुरहस्यमिति। प्रतिग्रन्थं गुरुहृदयं सम्प्रदायाविदुषां दुर्बोधमिति सम्प्रदायपरम्परया ज्ञातव्यमिति सूचयति। अतः पूर्वोक्त एव समाधिप्रकारः। न परोक्तप्रकार इत्यर्थः। नन्वेकवाक्यताबलात् स्तुतिपरत्वे निश्चिते कथमनध्यवसायपूर्वपक्ष इत्यत्राह—अनध्यवसाय इति।

ननु यद्यन्योन्यविरुद्धद्वयभानादनध्यवसानं तर्हि सर्वचिन्तानां सन्देहादेव प्रवृत्तेः तस्य च विरुद्धद्वयभानमूलकत्वात् सर्वत्रानध्यवसायादप्रामाण्यं स्यादित्यत्राह न चेति। तत्रहेतुः प्रवृत्तीति। यद्यपि सन्दिग्धेऽर्थे न्यायप्रवर्तनात् न्यायकथनपरसर्व-चिन्तानां प्रवृत्तौ सन्देहो मुखं तथापि सन्देहो। न्यायप्रवृत्त्युत्तरकालेपि पूर्वपक्ष-परिग्रहवेलायामपि यत्रान्यतरपक्षनिर्धारणाशक्तिः तत्रैव मुखभूतः संशयादनव-धारणान्तरं तत्रैवानध्यवसायादप्रामाण्यम्, न मुखभूतसंशयमात्रात् सर्वचिन्तास्व-पीति नातिप्रसङ्ग इत्यर्थः। नन्वन्योन्यविरुद्धद्वयभानमेव कथमित्यत्राह—विध्यर्थत्वा-दिति। ऊर्जं पशूनाप्नोति इत्यत्रापि विधिः साध्यो भाति विध्यर्थत्वात्सर्वस्य साक्षाच्च विध्यर्थत्वे सति न स्तुतिद्वारा तदाश्रयणं युक्तम्। ननु नियोज्याभावात् न विध्यन्तरधीनिर्वाह इत्यत्राह विधिनाचेति। पशूनाप्नोतीति। पश्वाप्तिस्ताव-द्विध्यर्थो वाच्यः तस्याश्च साध्यतयैव विधिनाकाङ्क्षितत्वात् साध्यभूतपश्वाप्ति-विशिष्टनियोज्यानुगुणो विधिः साध्योभाति। अतः पशूनाप्नोतीति शब्द एव नियोज्यपरः पशुकामनियोज्यको विधिरिति यावत्। अतो विधिधीनिर्वाह इत्यर्थः। नन्वेवमपि विषयाभावान्न विधिधीनिर्वाह इत्यत्राह—ऊर्जेति। ऊर्जं पशूनाप्नोति इति पश्वाप्तिसाधनत्वेन ऊर्जश्रुतेः ऊर्जेत्यनेन विषयः समर्पितः। नन्वव्यापारस्योर्जः कथं विधिविषयतेत्यत्राह—उदुम्बरेति। ऊर्वा उदुम्बर इत्युदुम्बरसमानाधिकरणेनो-र्क्पदेनोदुम्बरविषयव्यापारपरेण तद्व्यापारस्यैव विषयत्वेनार्पणात् उदुम्बरव्यापार-

व्यापारविषयोऽयं विधिर्भाति। व्यापारश्च प्रकृत एव औदुंबरं यूपं यूपकार्यं वा कुर्यादिति। विध्यन्तरलब्धो नियोजनादिः। आप्नोतीति आप्तेः फलभूताया एव अविधेयत्वात्। पञ्चमलकाराच्च विधिरित्येवं साध्यद्वयधीः। अत एव न गुणफलसंबन्धोऽयं आख्यातद्वयावगतस्वतन्त्रसाध्यद्वयविरोधात्। संभूयकारित्वात् सर्वस्य स्तुत्याप्यन्वयवर्णनात्। उदुंबरेण पशूनाप्नोतीत्येवं श्रेष्ठः औदुंबरो यूपः कार्यः। इत्येकवाक्यतानुगुणमेकमेव साध्यमित्येकवाक्यताधीः। सतिसंभवे साध्यार्थत्वसंभूयकारित्वयोः व्युत्पत्तिस्तुल्या। न चैकवाक्यता[1] जघन्यान्वयादप्यनुरोध्या

विषयोऽयं विधिर्भातीत्यर्थः। कोऽसावुदुम्बरव्यापार इत्यत्राह—व्यापारश्चेति। औदुम्बरो यूपोभवति औदुम्बरं यूपंकुर्यात इति यूपोत्पत्तेः प्रकृतत्वात् यूपोत्पत्तिक्रियैवौदुम्बरव्यापारः। नन्वौदुम्बरो यूपोभवतीति वैकृतत्वेन यूपकार्ये विधिरयम्। तत्कथं यूपोत्पत्तिक्रियायाः प्रकृततेत्यरुच्या पक्षान्तरमाह—यूपकार्यंवेति। भवत्वेवं यूपकार्ये उदुम्बरविधिः तथापि तस्य यूपकार्यस्य ऊर्क्पदेन कथमुपस्थितिरित्यत्राह—विध्यन्तरेति। यूपे पशुं नियुञ्जीतेति विध्यन्तरलब्धस्य नियोजनादेर्व्यापारस्य प्रकृततया बुद्धिस्थत्वात तस्यैव परम्परया सम्बन्धितया ऊक्पदेन विषयतयोपस्थितिरस्तु। न च यूपक्रियाया यूपकार्यस्य नियोजनादेश्च गुणकर्मतया न विधिविषयतेति वाच्यम्। श्रुतिबलादध्ययनादिवत् विषयतोपपत्तेः। न च पश्वाद्यपूर्वाङ्गस्यनियोजनादेरन्यविषयतानर्हता ऊर्जेति श्रुतेः स्वरूपमात्रस्य विषयतया समर्पणात् अतो विषयसम्बन्धान्न विधिधीव्याघात इत्यर्थः। नन्वाप्तिक्रियायां श्रुतायामपि तां विहाय किमिति व्यापारान्तरस्य विषयतया प्रसाधनमित्यत्राह—आप्तेरिति। नन्वेवं विषयलाभेपि वाचकलिङाद्यभावात् कथं विधिधीरित्यत्राह—पञ्चमेति। निगमयति इत्येवमिति। यत एव विषयनियोज्यान्वितविध्यन्तरधीः अतः साध्यद्वयधीः स्तुत्यर्थविरोधिनीत्यर्थः। ननु गुणफलविधिनैकवाक्यताऽस्तु औदुम्बरो यूपो भवति ऊर्जा पशूनाप्नोतीति कोऽर्थः! पशुकाम औदुम्बरं यूपं कुर्यादित्यर्थः।

अतश्चोर्जेत्यनुवाद इत्यत्राह—अतएवेति। उपजीव्यं हेतुमाह—आख्यातेति। नन्वेवं विध्यर्थत्वमेव निश्चितमिति कथमनध्यवसाय इत्यत्राह—सम्भूयेति। एकवाक्यत्वप्रतीतिबलात् स्तुत्याप्यन्वयधीरित्यर्थः। कथमेकवाक्यताधीरित्यत्राह—उदुम्बरेणेति। ननु स्तुतिपरत्वे परोक्षार्थतेति वरं मुख्यार्थत्वाय भिन्नवाक्यतेत्यत्राह—सतीति। व्युत्पत्तिबललभ्यमुख्यार्थत्वैकवाक्यत्वयोस्तुल्यत्वादित्यर्थः। ननु गङ्गा-

१. जघन्यान्वयिता A.

गङ्गाघोषादौ दृष्टेति वाच्यम्। नहि (सर्वत्र) तत्र साध्यार्थता विध्यपेक्षिता प्रतिपक्षभूत।ऽस्तीति। न चाध्याहारं विना तत्र वाक्यभेदः सिध्यतीति अध्याहाराद्वरं जघन्यार्थता। यत्र नाध्याहारः स्योनं ते मन्त्रे तत्र वाक्यभेद एव साकाङ्क्षेऽपीति। ऊर्गुदुंबरादेः निश्चितस्तुत्यर्थत्वस्य साध्यद्वये यथार्हमन्वयः। साधारणता वा, गौः क्रय्येत्यत्रानेकगुणकथनेपि क्रय-विवक्षया एकं वाक्यं लोकेऽस्तु। इह त्वनध्यवसाय एव।

राद्धान्तस्तु-साकाङ्क्षोऽपि विधिः नैकार्थावगतं विनियोगं बाधते। अस्ति चेयं यस्मादुदुंबरेण पशवो भवन्ति तस्मादौदुंबरं यूपं कुर्यात्

---

घोषादौ जघन्यान्वयादप्येकवाक्यतायाः अनुरोध्यत्वदर्शनात् सैव बलवतीति वाच्यमित्यत्राह—न चेति। तत्र हेतुः—न हीति। युक्तं गङ्गाघोषादावेकवाक्यत्वस्य बलीयस्त्वम् विध्यपेक्षितसाध्यार्थत्वस्य प्रतिपक्षस्याभावात् इह तु तदस्तीति न तुल्यतैवेत्यर्थः। इतोऽपि गङ्गाघोषादौ जघन्यान्वयादप्येकवाक्यताऽनुरोध्येत्याह—न चेति। 'स्नाति' 'कूले' इत्यध्याहारं विना गङ्गाघोषादौ न वाक्यभेद इति वरमश्रुताध्याहारात् जघन्यान्वयिता। नचात्रापि नियोज्याद्यनेकाध्याहारकल्पना-पेक्षा। श्रुतपदानामेव तत्परत्वोक्तेः। प्रयुक्तिकल्पना तु फलमात्राम्। प्रकरणा-न्तरनये च यदेकवाक्यत्वं बलवदित्युक्तम् तत्र हेतुः साध्यार्थप्रतिपक्षाभावः। सति तु तस्मि ने[१]कवाक्यत्वं मुख्यार्थत्वं चात्र तुल्यमित्यर्थः। यत्र त्वध्याहारादिः नास्ति तत्र वाक्यभेद एवेत्याह—यत्रेति। नन्वेवमपि कथमूर्गुदुम्बरादेरन्वय इत्यत्राह—ऊर्गुदुम्बरादेरिति। ऊर्वा उदुम्बर ऊक्पशव इत्यादेः विध्यनर्हत्वात् स्तुत्यर्थत्वे-निश्चिते यथार्हं विधिद्वयान्वयः। ऊर्वा उदुम्बर इत्यस्य पूर्वविध्यन्वयः। ऊर्क् पशव इत्यस्योत्तरेण विधिना विधिद्वयसाधारणतया बा, नात्र विवादः कश्चिदित्यर्थः। ननु लोके गौः क्रय्या बहुक्षीरेत्याद्यनेकफलविवक्षायां सत्यामपि यथैकवाक्यता तथाऽत्राप्यस्त्वित्यत्राह—गौरिति। विवक्षाधीनं लोके वाक्यमिति तदधीनमेक-वाक्यत्वं तत्र युक्तम। अत्र तु वेदे शब्दस्वभावकृतमेवाहृत्यानध्यवसाय एवेत्यर्थः—राद्धान्तस्त्विति। यद्यपि स्वतः सर्वस्य साक्षाद्विध्यर्थत्वमभ्यर्हितं, यद्यपि च विधेः साध्याकाङ्क्षता तथापि यथाविनियोगं नियोग इति विनियोगमूलत्वाद्विधेः न स्वमूलभूतविनियोगबाधकतेति नात्र अवगतविध्यन्तरैकवाक्यतारूपविनियोग-बाधात् साक्षात् विध्यर्हतेति विध्यन्तराप्रतीतेः स्तुत्यर्थतानिश्चय इत्यर्थः। एक-वाक्यतावगतिरेव कथमित्यत्राह—अस्ति चेति। अत्र चाधिकरणे टीकायां सिद्धं

---

१. B तस्य संभवादेक

इत्येकार्थावगतिः । पशूनाप्नोतीति विवृतं पशवो भवन्तीति । भवत्यर्थोऽयं प्रमाणसिद्ध्यर्थः न तूत्पत्तिसिद्ध्यर्थः । तत्र हि भूता इति स्यात् । अतोऽनध्यवसायधीः ।

ननु यथाविनियोगं नियोगः प्रतिपदाधिकरण एवोक्तः, सत्यं, न स्तुतितोऽप्युक्तः । इह [ अ ] प्रवृत्तिविशेषकरोऽपि[1] विनियोगोऽनुरोध्य[2] इति व्युत्पादितम् । पर्णमय्यधिकरणे (तु) एकवाक्यताहानादेव उपादानतः फलविधिताशंका निरस्ता । अभ्युच्चयमाह—यथा अप्सु योनिर्वा अश्वः

तर्हि भवतीत्यस्य सिद्धार्थत्वमित्युक्तम्, तदयुक्तम्, भवतिश्रुतियुक्तस्य वाक्यस्य हि सिद्धार्थत्वमापाद्यम् न चात्र वाक्ये भवति इति श्रुतिरित्यत्राह—पशूनिति । आप्नोतीत्येतद्विवरणार्थं प्रयुक्तभवतीतिशब्दानुवादेन पशूनाप्नोतीत्यस्यैवाविधेयार्थत्वमापाद्यत इत्यर्थः ।

नन्वेवमपि भवतीति वर्तमाननिर्देशेन कथं सिद्धार्थत्वापादनमित्यत्राह—भवत्यर्थ इति । प्रमाणसिद्धिरेवात्र सिद्धत्वेन भवत्यर्थतया विवक्षिता । न वस्तूत्पत्तिरूपा सिद्धिः । यदि तथा स्यात् तदा निष्पन्नपशुफलोक्त्या भूता इत्येव स्यात् । प्रमाणसिद्धि दिवक्षायां तु भवतीति वर्तमाननिर्देशोऽप्युपपन्न इत्यर्थः । निगमयति—अत इति । ननु यथाविनियोगं नियोगः प्रतिपदाधिकरण एवोक्तः इति पुनरुक्तिः स्यादिति चोदयति—नन्विति । सत्यमिति । तथापि स्तुत्याऽन्वयस्तत्र नोक्त इति न पुनरुक्तिरित्यर्थः । ननु प्रतियोगिभेदमात्रात न पुनरुक्तिपरिहार इत्यत्राह—इहेति । अप्रवृत्तिविशेषकरस्तुत्या विनियोगो न विधेरनुरोध्य इत्येतच्छङ्कापूर्वकमप्रवृत्तिविशेषकरोऽपि विनियोगोऽनुरोध्यो मूलत्वादितीह व्युत्पादितमिति व्युत्पाद्यभेदान्न पुनरुक्तिः । न चैवं तदधिकरणव्यर्थता, अरुणैकहायनीन्यायेन विनियोगनिर्वाहशङ्कानिरासार्थत्वादिति भावः ।

ननु चतुर्थपर्णमय्यधिकरणेपि आर्थवादिकफलविधिनिरासात्तेनापुनरुक्तिः कथमित्यत्राह—पर्णमयीति । प्रतीतैकवाक्यताऽहानेनैवोपादानतः फलविधिनिरासस्तत्र । इह तु श्रुतिबलाद्वाक्यभेदेपि तद्विधिशङ्कानिरास इति न पुनरुक्तमित्यर्थः । अत्राभ्युच्चयसूत्रं—'विधिश्चानर्थकः क्वचित तस्मात् स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वं इति । तदयुक्तम् । सामान्यानिरूपणात् । न तावद्विध्यानर्थक्यात् सामान्यं, विधिवन्निगदवतीषु विधेरर्थवत्त्वोक्तेः । नापि विध्यसम्भवात् तत्सम्भवस्य प्रदर्शितत्वादित्याशङ्क्य तात्पर्यमाह—अभ्युच्चयमिति । विध्यसम्भवनिबन्धनमेव

१. B इति   २. नुरुध्यत

कार्यः इत्येवं विध्यसंभवे वेतसेऽपि विधेये कथञ्चित् स्तुतिः। तथा एकवाक्य[1]तया साध्यद्वयासंभवे कथञ्चित् स्तुतिरिति इदं तत्सामान्यम्। किञ्च यो विदग्धः स नैर्ऋत इति स्तुत्या विनियोगः सन्निहिते प्रकरणिनि। निर्ऋतिदेवतान्वयविनियोगसन्निधिमास्थायोत्कर्षो न युक्तः।

विवरणे त्वधिकम्—पूर्वत्र वाक्यभेदेऽपि सिद्धार्थानुगम इति स्तुत्या एकवाक्यतोक्ता। इह तु वाक्यभेदे साध्यार्थलाभात् न परोक्षान्वयात् स्तुत्यैकवाक्यतेति पूर्वः पक्षः।

प्रसङ्गात् सङ्गतिः। यद्यपि परमार्थतः नियोगचिन्तेयं तथापि पूर्वोक्त-वैधर्म्यरूपेण चिन्तेयं प्रसङ्गादत्र कृतेति साक्षाद्युक्तं न प्रसज्यत इति न्यायस्यायमविषयः। हेतुवन्निगदचिन्तापीत्थमेवेति मन्त्राधिकरणे स्वयं

---

तत्सामान्यम्। 'अप्सुयोनिर्वा अश्व' इति अप्सुयोनिरश्वः कार्य इत्येवं विध्यस-म्भवस्तावदविवादः अशक्तेः। ततश्च यद्यपि वेतसो विधेयः तथापि यथा श्रुतिवला-दप्सम्बन्धिन्यपि स्तुतिः कथञ्चित् तत्संबन्धिसम्बन्धस्तुतेर्विधेयवेतसादिस्तुत्यर्थता तथात्रापि एकवाक्यताबलात् साध्यद्वयासम्भवेन विध्यसंभवे कथञ्चित् जघन्यौ-दुम्बरस्तुतिरिति। इदं तत्सामान्यमित्यर्थः। प्रकरणे च सम्भवन्नित्यस्य अभ्युच्चय-सूत्रान्तरस्य तात्पर्यमाह—किञ्चेति। दर्शपूर्णमासप्रकरणाम्नातस्य यो विदग्धः स नैर्ऋत इत्यादेः कार्यपरत्वमवश्यं वाच्यम। तच्च सन्निहितकार्यपरत्वमेव स्वतो युक्तम्। तच्च स्तुत्याविनियोगे सति भवति। अन्यथा विध्यर्थत्वे योग्यतया नैर्ऋ-तोद्देशेन विदग्धताविधिः स्यात् तदा निर्ऋतिदेवतान्वयविनियोगसन्निधिमास्थाय कार्यान्वयादुत्कर्षः स्यात् स चायुक्त इत्यर्थः। विवरणे त्विति। तत्र हि मते वस्तु-बलाद्वाक्यभेदावधारणेन पूर्वपक्षोक्तेरधिकमित्यर्थः। ननु पूर्वत्र वाक्यभेदपरि-हाराय स्तुत्यैकवाक्यतोक्तेः अत्रापि तथा स्यादित्यत्राह— पूर्वत्रेति। नन्वेवं पूर्वपक्षे प्रामाण्याक्षेपाभावात् कथमध्यायसङ्गतिरित्यत्राह—प्रसङ्गादिति।

ननु विनियोगविशेषचिन्तेयं तृतीये साक्षात्सङ्गता, नेह प्रसङ्गात् "साक्षाद्युक्तो न प्रसज्यत" इति नयात् इत्यत्राह—यद्यपीति। सत्यमेवं तथापि न तद्रूपेणेयं चिन्ता किन्तु पूर्वोक्तवैधर्म्यरूपेण। येन च रूपेणेयं चिन्ता न तथा क्वचित्साक्षात्सङ्गता! अतः प्रसङ्गादत्र तु कृतेति साक्षाद्युक्तं न प्रसज्यत इत्यस्य नायं विषय इत्यर्थः। उक्तां सङ्गतिमुत्तरनयेप्यतिदिशति—हेतुवदिति। नन्वयं सङ्गतिप्रकारो विवरणकारेणोत्तरत्र न

---

१. R. एकवाक्यत्वात्

व्यक्तं वक्ष्यति । राद्धान्तः निबन्धनोक्त एव । न च गुणफलविधयैकवाक्यता । यूपाश्रितता हि न मानान्तरात् । न विध्यन्तरात्, तदश्रुतेः । पृष्ठगतसर्वताविधौ पृष्ठतावत् नाक्षेपात्, कल्पनापत्तेः । खादिरं वीर्यकामस्येत्यत्र तु अगत्याऽऽक्षेपः विध्यन्तरं वा । इह त्वेकवाक्यत्वे स्तुत्याऽस्ति गतिः । एकार्थावगमादेव विध्यन्तरावगतिर्निरस्ता । विधौ च वाक्यभेद इत्यत्र शङ्कान्तरनिरासः । तन्त्रेण यूपस्योभयार्थत्वेनान्वयात् एकवाक्यताशङ्का या सा[1] पशुं प्रति गुणत्वं उदुंबरं प्रति प्रधानत्वं इति द्वैरूप्यात् वाक्यभेदापत्तेर्निरस्ता ।

---

क्वाप्युक्त इत्याह—मन्त्रेति । राद्धान्ते नाधिकमित्याह राद्धान्त इति । ननु चैकवाक्यत्वं न स्तुतिपदत्व एव, किन्तु विध्यर्थत्वेपि खादिरं वीर्यकामस्य यूपं कुर्यात् इति तत् गुणफल[2]विधयाप्येकवाक्यतोपपत्तेरित्यत्राह—न चेति । तत्र हेतुः—यूपेति । यदि विधेयगुणस्याश्रयसम्बन्धो मानान्तरसिद्धः स्यात् गोदोहनादेरिव तदा तदनुवादेन तद्द्वारा गुणफलकथनात् फलमात्रार्थता विधेया स्यात् । न चेह तथा उदुम्बरादेः यूपाश्रितता मानान्तरसिद्धा । यूपस्यालौकिकत्वात् । ततश्च सापि विधेया । तत्र फलसम्बन्धेऽपि वाक्यभेदो दुर्वार इत्यर्थः ।

ननु माभूत्तदाश्रितता मानान्तरात् विध्यन्तरादस्तु इत्याशङ्क्य विध्यन्तराश्रुतेर्न युक्तेत्याह—न च विध्यन्तरादिति । ननु विधिबलादेव तदाक्षेपोऽस्तु पृष्ठगतसर्वताविधौ पृष्ठतावदित्यत्राह—नाक्षेपादिति । तत्र हेतुः—कल्पनेति । न हि मुख्यार्थत्वाय कल्पना गङ्गाघोषादावपि तदापत्तेः[3] । सर्वपृष्ठे हि गत्यन्तराभावादाक्षेप उक्तः । न लक्षणाभयात् । अतः कल्पनादोषापत्तेर्नाक्षेप इत्यर्थः । ननु तर्हि खादिरं वीर्यकामस्य यूपं कुर्यादित्यत्र कथं गुणफलविधिरित्यत्राह—खादिरमिति । वीर्यकाम इति स्फुटकामसम्बन्धलाभादगत्या तत्र विधेर्गुणाश्रयसम्बन्धार्थमाक्षेपो विध्यन्तरं वा आश्रितम् । इह तु स्फुटकमिपदसम्बन्धे स्तुत्याप्यन्वयगतिरस्तीति न विध्यन्तराक्षेपौ कल्प्यावित्यर्थः । ननु औदुम्बरौ यूपो भवतीति विधेर्यूपाश्रिततावगतिरस्तु । ऊर्जा पशूनाप्नोतीतिविध्यन्तरात् यूपाश्रितोदुम्बरगुणानुवादात् गुणात् फलविधिरस्त्वित्याशङ्क्य पूर्वोक्तैकवाक्यतावगतिबलान्नैवमित्याह—एकार्थेति । अभ्युच्चयसूत्रं—विधौ च वाक्यभेदः स्यादिति तदयुक्तम् । पूर्वोक्तमूलयुक्तितोऽतिरेकाभावात् इत्याशङ्क्य तात्पर्यमाह—विधौ चेति । शङ्कामाह—तन्त्रेणेति वाजपेयपूर्वपक्षवत्

---

१. A. R. शङ्कायास्याः  २. R. विधिना ।  ३. B. तथापत्तेः ।

## ॥ ३ ॥ हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

इह हे[1]तुत्वेनान्वयश्रुतेः एकवाक्यता चेति न स्तुत्याऽन्वयः। एवं चेत् हेत्वपेक्षं कार्यं वेदेपि लिङ्गाद्यर्थ इति सर्वप्रामाण्याक्षेपः। हिशब्दोऽत्र हेत्वर्थः। शूर्पेण यस्मादन्नं क्रियते तस्मात् तेन होमः कार्य इति अन्नकरण[2]त्वरूपेण होमे शूर्पविधिः। एवं चान्नकरणान्तरेणापि दर्विपिठरादिना

---

तन्त्रोक्तिकल्पनया नोक्तवाक्यभेददोष इत्यर्थः। तन्निरासमाह—सेति। वैरूप्यान्न तन्त्रकल्पनेति [3]नोक्तवाक्यभेदपरिहार इत्यर्थः।

## ॥ ३ ॥ हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

अथ हेतुवन्निगदयुक्ता विधयः शूर्पेण जुहोति तेन ह्यन्नं क्रियत इत्येवमादयः। तेषु चिन्ता—किमप्रमाणमुत प्रमाणमिति। तदर्थमियं चिन्ता—तेन ह्यन्नं क्रियत इत्येवमाद्यर्थवादानां किं हेतुसमर्पकतयान्वय उत स्तुतिसमर्पकतयेति। नन्वर्थवादानां स्तुत्येकवाक्यतयैवान्वयो न हेतुतयेत्यर्थवादनय एव सिद्धम्। तत्कुतो हेतुतयान्वयशङ्का पुनः? कथं वा अवान्तरसङ्गतिरित्याशङ्क्याह—इहेति। युक्तं पूर्वतरे अर्थवादानां हेतुतां विहाय स्तुत्यान्वयः हेतुत्वस्याश्रुतेः। युक्तं च पूर्वत्र विध्यर्थत्वे वाक्यभेदापत्तेरेकवाक्यताबलात् स्तुत्यान्वितत्वम्। इह तु श्रुतिबलाद्धेतुतयान्वयः तथैवान्वयात् एकवाक्यता चेति पूर्वोक्तनयद्वयवैषम्योत्थितेरवान्तरसङ्गतिः शङ्काहेतुश्चेत्यर्थः। नन्वेवमपि कथमध्यायसङ्गतिरित्यत्राह—एवं चेदिति।

ननु कथमत्र [4]हेत्वपेक्षकार्यार्थत्वं यस्मादित्यादिहेतुवाचकशब्दाश्रुतेरित्यत्राह—हि शब्द इति। यद्यपि प्रसिद्धार्थपरो लोके हिशब्दः, तथापीह न तदर्थता स्तावकत्वेन वैयर्थ्यापत्तेः। अतः अर्थवत्त्वाय हिशब्दोऽत्र हेत्वर्थः। ननु शर्पेण जुहोतीत्येतावदेव विधिशक्तम् तच्च निरपेक्षं शूर्पविधायकमिति कथं हेत्वपेक्षविधिपरत्वमित्यत्राह—शूर्पेणेति। समभिव्याहृतान्वयस्यावर्जनीयत्वात् हिशब्दार्थहेत्वन्वित एव विधिर्बोध्यः तथा च वाक्यस्यायमर्थः—शूर्पेण यस्मादन्नं क्रियते तस्मात्तेन होमः कर्तव्य इति। ततश्च हेत्वपेक्षविधिपरत्वमेवेत्यर्थः।

ननुहेत्वपेक्षत्वे निरपेक्षत्वे च शूर्पस्यैव होमकरणतया विधेः हेत्वपेक्षो विधिः व्यर्थः स्यात् अधिकानुष्ठानाभावादित्यत्राह—अन्नकरणेति। स्यादेवम् यदि शूर्परूपेण विधिः स्यात्। इह तु हेत्वन्वयबलादन्नकरणत्वरूपेण होमेकरणतया शूर्पविधिः। ततश्चान्नकरणान्तरेणापि दर्विपिठरादिना होम इति अधिकानुष्ठानं विधिफलमित्यर्थः।

---

१. A. हेतुतया २. A. R. कारणत्वेन ३. B उक्तवाक्यभेदो दृढ इत्यर्थ। ४. B सापेक्ष।

होम इति विधिः । न चान्ननिष्पत्तौ व्यवहितव्यापारस्य शूर्पस्यासाधकतमतया नान्नकरणतेति वाच्यम् । ततोऽपि व्यवहितापेक्षया साधकतमत्वसंभवात् । स्तुतिरप्यापेक्षिकान्नकरणत्वात् । न च क्रियत इति वर्तमानान्नक्रियस्य होमकरणत्वमशक्यमिति वाच्यम् । भूतभविष्यतोरेव प्रत्यासत्त्यपेक्षया वर्तमानता । सेहापि शक्या । न च प्रतिबन्धासिद्धेः न हेतुतयाऽन्वय इति वाच्यम् । पूर्वतरत्र हि योग्यतयैव हेतुतान्वयः उक्तः । प्रतिबन्धाभावात्तन्निरासः । इह तु श्रुतितो हेतुता, प्रतिबन्धाभावे प्रतिभामात्रं नान्यथाऽन्वयः शाब्दः । अथवा आक्षेपात् प्रतिबन्धसिद्धेः हेत्वपेक्षतयैवाप्रामाण्यम् ।

---

ननु शूर्पस्यान्ननिष्पत्तौ व्यवहितव्यापारतया न साधकतमतेति नान्ननिष्पत्तौ करणतेति न वाच्यमित्याह—नचेति । तत्र हेतुः—ततोऽपीति । आपेक्षिकतमबर्थस्वीकारः सिद्धान्तिनोऽपीष्ट इत्याह—स्तुतिरपीति । ननु वर्तमानान्नक्रियस्य होमकरणत्वमशक्यं व्यापृतव्यापारविरोधादित्यपि न वाच्यमित्याह न चेति । तत्र हेतुः—भूतेति । भूतभविष्यतावेव परमार्थतः कालौ न वर्तमानो नाम कश्चित् । बर्तमानव्यवहारस्तु तयोरेव प्रत्यासत्त्यपेक्षः । ततश्च तादृशं वर्तमानत्वमापेक्षिकं इहापि सम्भवतीति न विरोध इत्यर्थः ।

ननु [1]साध्यप्रतिबद्धत्वं हेतुतयाऽन्वयप्रयोजकम् । तदभावे न हेतुतयाऽन्वय इति पूर्वतरनयोक्तम । इहापि तदसिद्धेर्नहेतुतयाऽन्वय इति न वाच्यमित्याह—न चेति । तत्र हेतुः—पूर्वतरेति । युक्तं पूर्वतरनये योग्यतामात्रेण हेतुतयाऽन्वये शङ्किते प्रतिबन्धाभावात्तन्निरासः इति । इह तु श्रुतिबलप्राप्तो हेतुतयान्वयोऽपरिहार्यः । प्रतिबन्धाभावे व्याप्त्यभावे प्रतिभामात्रं मिथ्यात्वमेव स्यात् न प्रकारान्तरेणान्वयः श्रुतिबाधापत्तेरिति यावत् । पूर्वतरत्रेति रूपसिद्धौ यत्नः कर्तव्यः, पूर्वतरशब्दस्य कियत्तच्छब्दोपरि विहितडतरजन्तत्वाभावेनासर्वनामत्वे सप्तम्यर्थत्रलन्तत्वायोगात्—पूर्वतरेहीति वा पाठः ।

ननु योग्यतापि कारणमन्वये । व्याप्तिविधुरस्य च न हेतुतयाऽन्वययोग्यतेति कथमव्याप्तस्य श्रुतिरपि हेतुतयाऽन्वयं सम्बोधयेदित्यरुच्या पक्षान्तरमाह—अथवेति । श्रुत्यवगतहेत्वन्वयबलादाक्षेपतः प्रतिबन्धसिद्धेः हेतुसापेक्षतयैव प्रामाण्याक्षेपात् पूर्वपक्षगतिरित्यर्थः– राद्धान्तस्त्विति । हिशब्दस्य निपातत्वेन मानान्तरसिद्धद्योतक-

---

१. R साध्यं प्रति व्याप्यत्वं

राद्धान्तस्तु—यद्यपीह हेतुतयैव श्रुतिः, तथापि न हेत्वपेक्षा कार्यता, हेतुत्वाप्रसिद्धेः किन्तु कार्यधीपूर्विकैव स्तुतौ हेतुता। शूर्पेण जुहुयात् यस्मात् तेनान्नं क्रियत इति अन्नकरणतोत्कर्षात् होमकरणतामप्यर्हतीति प्रशंसायां हेतुता, न कार्यतायां इत्येवंविधानामपि स्तुत्याऽन्वयः।

किञ्च वेदादपौरुषेयात् कार्यधीः[1] न हेत्वपेक्षिणीति प्रशंसायां हेतुत्वेनान्वयः। एवं च मानान्तरानुसारात् स्तुतिरिति वर्तमानान्नव्यापार[2]तयापि

तया न हेत्वभिधायकतेति परमार्थतो नात्र हेतुश्रुतिः तथापि उपेत्योच्यते—यद्यपीति यद्यपि हेतुश्रुतिः तथापि न तदपेक्षा कार्यता हेतोस्तदन्वयाप्रतीतेः। सा चान्वयोपाधेर्योग्यताया अभावात्। तदभावश्च व्याप्त्यसिद्धेः अतो हेतुत्वाप्रसिद्धेर्न हेत्वन्वयिनी कार्यता। न च आक्षेपात् व्याप्तिसिद्धिः। चक्रकापत्तेः। आक्षेपाद् व्याप्तिः तस्यां च सत्यां च हेतुत्वयोग्यता। ततश्च हेतोः कार्यान्वयः तद्बलाच्चाक्षेप इति। ननु श्रुतसिद्ध्यर्थमश्रुतकल्पना न्याय्येति अनन्यथासिद्धहेतुश्रुतिबलादौपादानिकवत् व्याप्तेरपि कल्पनाऽस्तु इत्यत्राह—किन्त्विति। कार्यधीपूर्वकस्तुतौ हेतुतयापि हेतुत्वश्रुतेरन्यथासिद्धेः नानेकदोषदुष्टान्यथासिद्धकार्यान्वयोपगम इति हेतुवन्निगदानामपि रुद्ररोदनाद्यर्थवादानामिव स्तुत्याऽन्वयः। न चैवं हेतुश्रुतावपि व्याप्त्यभावेन हेतुत्वे निरस्ते अर्थवादनये केवलसमभिव्याहारमात्रेण हेतुत्वशङ्का दण्डापूपनयहतेति वाच्यम्। यतस्तत्रान्यथाऽन्वयवैधुर्यात् हेतुत्वस्य च सम्भवात् हेतुत्वाशङ्का। सा चान्वयान्तरोपपादनात् हेत्वन्वयस्य चायोग्यत्वात् निरस्ता। इह तु स्तुत्यान्वये सत्यपि हेतुत्वश्रुतिबलात् हेतुत्वशङ्कायोग्यत्वाभावात् निरस्तेति नयद्वयमप्यर्थवदेवेति भावः।

आकाङ्क्षाविरहादपि न हेत्वन्वय इत्याह–किञ्चेति। न च रक्तपटवदुत्थापनम्, निर्दोषायाश्चोदनायाः स्वरूपस्यानपेक्षत्वस्य भङ्गप्रसङ्गादिति भावः। अन्नं क्रियत इति वर्तमाननिर्देशोऽपि स्तुतिपक्ष एवोपपन्न इत्याह—एवं चेति। स्तुतिर्हि प्रमाणान्तरानुसारिणीति अवर्तमानेपि वर्तमातपदं कथञ्चिदुपपन्नमिति वर्तमानान्नव्यापारतयापि होमकरणतोपपत्तिः। विधौ तु शब्दस्वरूपादेवार्थो ग्राह्य इति तत्र वर्तमानान्नक्रियस्य न होमकरणतोपपन्ना व्यापृतव्यापारविरोधादिति भावः।

ननु वर्तमानः-कालो नास्त्येव वस्तुतः तद्व्यवहारस्तु प्रत्यासत्त्यपेक्षयेत्युक्त-

१. कार्यमितिः A २. करणतया

होमकरणतोपपत्तिः । न तु तदपह्नवात् समर्थनम् । एकफलकः पूर्वापरीभूतक्रियाक्षणनिचयो वर्तमान इति वृद्धाः । स्तुतावेवापेक्षिकमन्नकरणत्वम् । अन्यथा हि अव्यवहित एव धीः । शूर्पसमभिव्याहृतेः यथा शूर्पस्य तद्धीरिति चेत् । तर्हि दर्वीपिठरादेः न तथेति न तद्विधिः स्यादिति व्यर्थो हेत्वर्थः ।

अथ शूर्पसमभिव्याहृत्या यथाकथञ्चित् अन्नकरणताधीरिति दर्वीपिठरादावर्थवत्ता तर्हि सर्वस्य साक्षात्परम्परया वाऽन्नकरणत्वात् अन्नकरणेन होम इति व्यर्थो विधिः । अथ कृतस्याकरणात् न सर्वं करणं ज्ञातस्य तु ज्ञापनं शक्यमिति । तन्न । क्रियमाण एव हि साक्षात् परम्परया वा सर्वस्य करणतेति व्यर्थतैव ।

विवरणेत्वधिकम्—सङ्गतिरस्य प्रसङ्गात् । इहैकवाक्यत्वाहानादेव

---

मतआह—न त्विति । तत्र हेतुः—एकेति । एकफलकपूर्वापरीभूतक्रियाक्षणनिचयो वर्तमानः । स च वास्तव इति लोकप्रसिद्धस्यापह्नवायोगादित्यर्थः । आपेक्षिकान्नकरणत्वधीश्च स्तुतावेवोपपन्ना नान्यत्रेत्याह— स्तुताविति । विधिपक्षेपि शब्दस्वारस्यादव्यवहितकारणबुद्धिरेव स्यादित्यर्थः ।

ननु शूर्पसमभिव्याहाराद्यथा शूर्पस्य विलक्षणमन्नकरणत्वं प्रतीयते तथैवास्थेयं न त्वत्यन्ताव्यवहितमिति शङ्कते—शूर्पेति । नेति । तर्हि दर्वीपिठरादेः तादृग्विलक्षणान्नकरणत्वानाधारस्य न शूर्पवदन्नकरणतेति न होमकरणतया तद्विधिः स्यादिति हेत्वर्थो व्यर्थः स्यादित्यर्थः ।

ननु न शूर्पसमभिव्याहारस्य विलक्षणान्नकरणत्वे तात्पर्यम् । किन्तु यथाकथञ्चिदन्नकरणत्वे । तेन दर्वीपिठरादावपि करणताधीरनुवृत्तेति तद्विधिर्युक्त एवेति शङ्कते—अथेति । परिहरति-तर्हीति । सर्वस्यापि वस्तुनः साक्षाद्वा परम्परया वा अन्नकरणत्वादन्नकरणेन होमविधिर्व्यर्थः स्यात् निवर्त्याभावादित्यर्थः । ननु ज्ञापकमनेकं भवतु नाम ज्ञातस्यापि ज्ञापनशक्तेः करणकारकं नु नानेकं कृतस्य करणायोगादिति न सर्वस्य करणतेति शङ्कते-अथेति । तन्नेति । क्रियमाणदशायामेव साक्षाद्वा परम्परया वा द्वारभेदेन सर्वस्य करणत्वाविरोधात् निवर्त्याभावाद्विधिवैयर्थ्यं दुर्वारमित्यर्थः । विवरणेत्विति । तन्मते वस्तुबलात् पूर्वपक्षेऽपि न प्रामाण्याक्षेप इत्यधिकमित्यर्थः । कथं तर्हि अध्यायसङ्गतिरित्यत्राह—सङ्गतिरिति । यदि पूर्वत्रैकवाक्यताविनियोगबलात् स्तुत्याऽन्वयः तर्हि अत्र तत एव हेतुद्वारा विधेयार्थता मा भूत् परोक्षार्थतेति पूर्वोक्तप्रसङ्गेनैतन्नयपूर्व-

हेतुद्वारा विधेयार्थतैवेत्येवमुत्थानात् सङ्गतिद्वयम्। अस्तु विनियोगे विशेषः। तथापि न तेन रूपेण चिन्तेयं, इति न तृतीये युक्ता पूर्वचिन्तोत्थापितेति न विनियोगरूपतया चिन्तेयम्। यस्मात्तेनान्नं क्रियते तस्माच्छूर्पेण होमः कर्तव्य इति वाचोभङ्ग्या अन्नकरणे विधेये न हेत्वपेक्षा। हेतोरन्नकरणविधेयधीपर्यवसानात् न तत्सापेक्षतापातात् साक्षात्संगतिः। पूर्वपक्षरीतिरुक्ता।

राद्धान्तस्तु शूर्पेण जुहोतीति श्रुतेः सस्तुतिकविधिरेव। तस्यैवान्न-

---

पक्षोत्थानात् प्रसङ्गादध्यायसङ्गतिः। अत एवावान्तरसङ्गतिरपीति सङ्गतिद्वयमित्यर्थः। नन्वन्नकरणस्य होमकरणत्वविधौ दर्विपिठरादेः शूर्पस्य च नियोगशेषता। अन्यथाशूर्पस्यैवेति शेषविशेषचिन्तेयं तृतीये सङ्गतेति कथमिह प्रसक्तेत्यत्राह—अस्त्विति। सत्यं तथापि न तेन रूपेण चिन्तेयं कृता किन्तु रूपान्तरेण। येन रूपेण चिन्ता न तेन क्वचिदपि साक्षात्सङ्गतेति प्रसङ्गतोऽत्रैव युक्तेत्यर्थः।

ननु हेतुश्रुतितो हेतुतयान्वये तत्सापेक्षतया निबन्धनवदत्रापि [1]मते किमिति साक्षात्सङ्गतिरेव न स्यादित्यत्राह—यस्मादिति। स्यादेवं हेत्वपेक्षया सापेक्षता यदि हेतूपस्थापितान्वयोपजीविता विधेः स्यात। इहतु शूर्पेण जुहोतीति विधायकं निरपेक्षं [2]विध्यन्वयानुगुणोपस्थापकम। तत्र विधेयसमर्पकशूर्पपदस्य कथं विधेयोपस्थापकत्वमित्यपेक्षायां समभिव्याहृतत्वात् हेतुश्रुतेः तदनुगुणं विधेयमर्पयति यस्मात्तेनान्नं क्रियते तस्मात्तेन शूर्पेण होमः कर्तव्य इति वचनभङ्ग्या अन्नकरणत्वरूपेण शूर्पपदं विधेयमर्पयतीति शूर्पश्रुतिरुपलक्षणमेवेति न विधेर्हेत्वपेक्षा, हेतोरन्नकरणरूपविधेयधीपर्यवसानात्। प्रत्युत हेतोरेव विध्युपजीवित्वमन्वयप्रतिपादन इति न तत्सापेक्षतया अनपेक्षत्वहानिरिति वस्तुबलात् प्रासङ्गिक्येव सङ्गतिः, न साक्षात्। निबन्धने तु शब्दानुसारात् हेतूपस्थापितान्वयापेक्षो विधिरिति भेद इति भावः। सङ्गतिकथनमुखेन पूर्वपक्षोप्युक्त इत्याह—पूर्वपक्षे इति। राद्धान्तस्त्विति। शूर्पेण जुहोतीति अनुपसञ्जातविरोधिशूर्पपदमुख्यार्थस्याभ्यर्हितत्वात् तद्बाधकता जघन्यहेतुश्रुतेः न युक्ता स्तुत्यापि तदन्वयोपपत्तेः सस्तुतिकविधिरेवेत्यर्थः।

ननु स्तुतौ परोक्षार्थतापत्तेः अनन्यथासिद्धहेतुश्रुतिबलाच्छूर्पपदं अन्नकरणोपलक्षणार्थमस्तु इत्यत्राह—तस्यैवेति। स्यादेवं यद्यन्यतः सिद्धिः न स्यात् इहतु तेन ह्यन्नं क्रियत इति तच्छब्देन सर्वनाम्ना प्रकृतपरेण सन्निहितविधेयशूर्पस्यैव याऽन्नकरणता सा हेतुत्वेन भाति, न दर्विपिठरादेः। तथा सति शूर्पपदस्य स्वार्थ-

---

१. B फलिते २. B विध्यनुगुणान्वयो।

करणता हेतुः न तु शूर्पशब्दोऽन्नकरणोपलक्षणपरः। हेतुश्रुतेश्चान्यार्थत्वे वरं श्रुतिपरतैव ॥

## ॥ ४ ॥ तदर्थशास्त्रात् ॥ ३१ ॥

चोदनैकदेशोत्थमप्रामाण्यं अन्तरङ्गं निरस्य अचोदनात्मकबहिरङ्गभूतमन्त्रोत्थमप्रामाण्यं निरस्यत इति सङ्गतिद्वयम्।

प्रथमसूत्रे अर्थपरत्वं स्वाध्यायस्योक्त्वा द्वितीयसूत्रे कार्यपरत्वमुक्तम्। चोदनालक्षणतया च कार्यात्मकतोक्ता। अर्थात् चोदनात्मकत्वेन

---

हान्या परोपलक्षणार्थता कल्प्या सा चायुक्तेत्यर्थः। ननु स्तुतिपक्षे परोक्षार्थतेत्युक्तमित्यत्राह—हेत्विति। हेतुपक्षे विध्युद्देशस्थमुख्यशूर्पपदस्य लक्षणा, हेतुश्रुतेश्चानुपस्थितदर्विपिठराद्यन्यार्थपरता। तद्वरं जघन्यार्थवादपरोक्षार्थतया स्तुतिपरतेत्यर्थः।

## ॥ ४ ॥ तदर्थशास्त्रात् ॥ ३१ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमाद्याः प्रयोगचोदनाः किमप्रमाणमिति मुत प्रमाणमितिचिन्ता। तदर्थमियं चिन्ता किमविवक्षितार्था मन्त्रा उत विवक्षितार्था इति। तदर्थं चेयं चिन्ता किं मन्त्राणां विनियोगे मन्त्रलिङ्गतदर्थशास्त्रयोः अन्योन्यव्याघात उत लिङ्गादेव विनियोगः तदर्थशास्त्रमनुवाद इति। नन्वर्थवादाद्यधिकरणेभ्यः कथं मन्त्राधिकरणस्य जघन्यता? कथं वाऽध्यायसङ्गतिरित्याशङ्क्य अथेदानीमिति भाष्याभिप्रेतसङ्गतिद्वयमाह—चोदनेति। अर्थवादानां कार्यप्रतीत्युपायतया पदैकवाक्यत्वेन चोदनैकदेशत्वात् तदुत्थमप्रामाण्यमन्तरङ्गतया शीघ्रम्, मन्त्राणां तु वाक्यैकवाक्यत्वेन चोदनात्मकत्वाभावात् बहिरङ्गतया तदुत्थमप्रामाण्यं विलम्बितमिति तन्निरसनपूर्वकमेतन्निरासो युक्तः। उद्भिदादिपदे विधानप्रभेदोत्थस्य अत्यन्तान्तरङ्गत्वेपि यथा जघन्यता तथा तत्रैव वक्ष्यते। अतः सङ्गतिद्वयमित्यर्थः।

ननु मन्त्रस्य कार्यार्थपरत्वे सिद्धे तदभावाधीनश्चोदनाप्रामाण्याक्षेपः स्यात तदेव तु कथं? द्वितीयसूत्रे चोदनाया एव कार्यपरतोक्तेरित्याह—प्रथमेति। अथातो धर्मजिज्ञासेति सर्वस्य योग्यस्वाध्यायस्य धर्मरूपार्थपरत्वमुक्त्वा को धर्मः कथंलक्षण इति प्रश्नद्वयोत्तरपरे द्वितीयसूत्रे सर्वस्यैव योग्यस्वाध्यायस्य कार्यपरत्वमुक्तमिति मन्त्राणामपि कार्यार्थपरत्वमुक्तमित्यर्थः। नन्वेवमपि कथं कार्यात्मकत्वमर्थस्योक्तमित्यत्राह—चोदनालक्षणतयेति। चोदनायाः कार्यप्रतिपादकत्वात् तत्प्रमितधर्मरूपस्यार्थस्यानेन कार्यतोक्तेत्यर्थः। व्याख्यानान्तरं चोदनेति। चोदनेति प्रवर्तकं वाक्यं अर्थद्वारा च प्रमाणस्य प्रवर्तकता। प्रवृत्तिश्च कार्यरूपे[1]। अतोऽर्थस्य

---

१. कार्यलभ्या।

प्रामाण्यमपि। अचोदनात्मकस्यापि चोदनाप्रमेयार्थलक्षणतया कार्यार्थतेत्यनुष्ठानावस्थ[2]कार्यलक्षणतया मन्त्राणां कार्यपरतोक्ता। सा च

---

चोदनाप्रमाणकतोक्त्या तस्य कार्यात्मकतोक्तैवेत्यर्थः। नन्वेवमपि चोदनात्मकत्वेन प्रामाण्यं द्वितीयसूत्रे नोक्तं सकृदुच्चरितस्योभयपरत्वायोगादित्यत्राह—अर्थादिति। ननु यदि चोदनात्मकत्वेन कार्ये प्रामाण्यं कथं तर्हि अचोदनात्मकमन्त्रस्य कार्यपरतेत्यत्राह—अचोदनेति। सत्यमचोदनात्मको मन्त्रः तथापि तस्य चोदनाप्रमेयो यः कार्यरूपोऽर्थः तल्लक्षणतया तत्प्रतिपादकतया कार्यार्थतेत्यर्थः।

ननु चोदनाप्रमेयस्य चोदनयैव प्रतिपादितत्वात् कथमन्यस्य तत्प्रतिपादकत्वं न च विद्वद्वाक्यवदनुवादमात्रतया। तद्वदेवाविनियोज्यत्वापत्तेः तत्राह—इत्यनुष्ठानेति यद्यपि कार्यस्वरूपं चोदनयैव प्रमितं तथापि अनुष्ठानावस्थकार्यलक्षणतया अनुष्ठेयावस्थकार्यप्रतिपादकतया प्रयोगावस्थकार्यस्मारकतया मन्त्राणां कार्यपरत्वम्। अतो विहितस्मारकतया मन्त्राणां स्मरणस्य च विध्यपेक्षितकिञ्चित्करत्वात् तज्जनकतया अवघातादिवत् पदार्थात्मकतया विनियोज्यतयाऽङ्गत्वमेव। न विद्वद्वाक्यवदनुवादमात्रत्वम्। न च विद्वद्वाक्यस्यापि मन्त्रता, अभियुक्तोपदेशाभावात्। अत एवार्थवादानामपि न मन्त्रता। न च ग्राहकग्रहणपूर्वकत्वाद्विनियोगस्य मन्त्राणां चोपस्थापकाभावेन ग्राहकग्रहणाभावान्न विनियोज्यतयाऽङ्गतेति वाच्यम् मन्त्राम्नानस्यैव मन्त्रार्पणपरत्वात्। न चैवं समिदादिवाक्यानामपि ग्राहकग्रहणापत्तिः तदाम्नानस्यार्थपरत्वेन शब्दपरत्वाभावात्। विद्वद्वाक्यस्य सप्रयोजनानुवादतया न शब्दपरं तदाम्नानम्। निष्प्रयोजनानुवादेष्वपि एकवाक्यविषये स्तुतिपरतया न शब्दपरमाम्नानं भिन्नवाक्यविषयेप्यर्थस्य ग्राहकान्वययोग्यतया न शब्दपरमाम्नानम्। किन्त्वर्थपरमेव। मन्त्रार्थस्य तु न ग्राहकावस्थायामन्वययोग्यता, अनुष्ठानावस्थागतस्यैवार्थस्य मन्त्रावाक्यात्प्रतीतेः। बर्हिर्देवसदनं दामीति वर्तमाननिर्देशात् क्रियमाणावस्थबर्हिर्लवनप्रतीतेः। उरुप्रथस्वेत्यादावपि सम्बोध्यतावस्थस्यैवप्रतीत्याऽनुष्ठानगतताप्रतीतिः। एवं सर्वत्र विनियोज्यमन्त्रेषूहनीयम्[3]। अतो मन्त्राम्नानात् मन्त्रस्यार्पितत्वात् ग्राहकग्रहणं युक्तम्। अत एव पञ्चमाद्ये भवनाथेनोक्तम्—मन्त्राम्नानस्य मन्त्रार्पणपरत्वात् मन्त्रस्य च ग्राहकप्रवेशादिति। यद्वा मन्त्रवाक्यमेव लक्षणया स्वार्पणपरं। अतः सर्वथा ग्राहकप्रवेशात् मन्त्रस्य विनियोज्यतयाऽङ्गत्वं युक्तम्। अतोऽनुष्ठानावस्थकार्यलक्षणतया मन्त्राणां कार्यपरतेति द्वितीयसूत्रे मन्त्राणामपि कार्यपरतोक्तेति भावः।

ननु कथमेवंविधकार्यार्थपरत्वनिवृत्त्या पूर्वपक्ष इत्यत्राह—सा चेति। सा च कार्यार्थपरता मन्त्राणां तदर्थशास्त्रादिभिः कारणैः हता, मन्त्रतुल्यार्थशास्त्रं हि

---

१. A. नावसंभ  २. प्रमेयलक्षणतया  ३. B उह्याव्यम्।

तदर्थशास्त्रादिभिर्हता । तदहाने च तदर्थशास्त्राद्यर्थहानमित्यन्योन्यहतार्थैकवाक्यतापन्ना सर्वैव प्रयोगविधिचोदना न प्रमाणमित्यविवक्षितार्थस्वाध्यायैकदेशमन्त्रद्वारा अप्रामाण्यं वेदस्येति प्रामाण्यप्रतिज्ञा निर्विषया ।

ननु तदर्थशास्त्राद्यहतार्थमन्त्रवति चोदना प्रमाणमस्तु । मैवं, न साऽस्तीत्युक्तम् । यद्यस्ति सा तदा वैदिकलिङ्गादेः सापेक्षार्थत्वनिश्चयात् सर्वाक्षेपः । न च वाच्यं मन्त्राणामर्थपरत्वे तल्लिङ्गात् विनियोगे तदर्थशास्त्रमनुवादोऽस्तु । नत्वन्यो[१]न्यव्याघात इति नानुवादः । यस्मात् तदर्थशास्त्रादेवाग्रतो विनियोगधीः । पश्चान्मन्त्रलिङ्गतः । एवं तर्हि मन्त्र-

---

तदर्थशास्त्रम् आदिशब्दात् बुद्धशास्त्रादि सङ्गृहीतम् । तत्र यदि मन्त्रस्य विवक्षितार्थता स्यात् तदा लिङ्गादेव विनियोगे तदर्थशास्त्रमनर्थकं स्यात् । अतः तदर्थशास्त्रं स्वार्थवत्त्वाय मन्त्रस्यार्थपरत्वं हन्ति । तथा मन्त्रस्यार्थपरत्वाहाने तदर्थशास्त्राद्यर्थपरत्वहानिः इत्यन्योन्यव्याघातादविवक्षितार्थं मन्त्रतदर्थशास्त्रमित्यर्थः । नन्वेवमपि कथं चोदनाप्रामाण्यहानिरित्यत्राह—इत्यन्योन्येति । नन्वत्र भाष्ये अविवक्षितार्था मन्त्रा इति मन्त्रमात्रस्याविवक्षितार्थतया प्रामाण्याक्षेप उक्तः न चोदनाम् तथा च प्रतिज्ञाक्षेपपर्यन्तता पूर्वपक्षे न स्यादित्यत्राह—इत्यविवक्षितेति । चोदनाप्रामाण्याक्षेपद्वार तया भाष्ये तदुक्तेः कृत्स्नचोदनाप्रामाण्याक्षेपात् प्रतिज्ञा निर्विषयेत्यर्थः । नन्वेवमपि [२]उक्तव्याघातविहीनमन्त्रवती चोदना प्रमाणमस्तु प्रतिज्ञायाश्च तद्विषयतया न हानिरिति चोदयति—नन्विति । मैवमिति । सत्यं विरोधहीना न चोदनास्तीत्युक्तं ग्रन्थे । ननु निषेधादिचोदनानां तादृशीनां सम्भवात् कथमसम्भव उक्त इत्याशङ्क्य तदभ्युपगमेनापि विधिवन्निगदपूर्वपक्षवत् सर्वाक्षेपमाह—यदीति ।

ननु मन्त्राणामर्थपरत्वबलात् लिङ्गादेव विनियोगोऽस्तु । तदर्थशास्त्रं त्वनुवादोऽस्तु माभूदन्योन्यव्याहतिरिति न च वाच्यमित्याह—न चेति। तत्र हेतुः—नेति । यतो न तदर्थशास्त्रमनुवादो युक्त इत्यर्थः । कथमयुक्त इत्यत्राह तदर्थेति । अनेनेदं कार्यमिति साध्यसाधनसम्बन्धप्रतीतिस्तदर्थशास्त्राच्छीघ्रेति तदेव विनियोगेऽग्रेसरमिति न तदनुवाद इत्यर्थः ।

ननु तर्हि लिङ्गविनियोगोऽनुवादोऽस्तु तदर्थशास्त्रं तु प्रमापकमस्तु एवमपि नान्योन्यव्याहतिरिति चोदयति—एवं तर्हीति । तन्नेति । ग्राहकग्रहणमन्त्राम्नानयोर-

---

१. न्याहतिः R. २. ताविहत A ।

लिङ्गाद्विनियोगोऽनुवादोऽस्तु माभूदन्योन्यव्याहतिः। तन्न। अगत्या लिङ्गाद्विनियोगः स च वचने सति विगुणे[1]ऽनुगुणे वा नेति नानुवादः।

ननु अनुगुणे विनियोज्यमन्त्रलिङ्गसचिवात् तदर्थशास्त्राद्विनियोगोऽस्तु। तन्न। लिङ्गशास्त्रयोरनपेक्षयोरेव शक्तेः एकैकस्य विनियोजकतेति ध्रुवमन्यतरस्य व्यर्थता। विशेषानिर्धारणे च द्वयोर्व्यर्थता। ननु अविनियोजकमपि लिङ्गं प्रयोगकाले वक्तुमर्थपरम्। तदर्थशास्त्रं तु विनियोक्तुम्। तन्न। विनियोगे प्रयोगे च एकाभिधानशक्तिर्मन्त्रस्य। तामनर्थपरां विनियोगं प्रत्यापादयत् तदर्थशास्त्रं अर्थपरतामेव हन्ति। मन्त्रोऽपि तत्तुल्यरूपतया तदर्थपरतां हन्ति। न चार्थपरता विकल्पार्हैत्य-

---

चरितार्थत्वबलादगत्या लिङ्गाद्विनियोगः कल्प्यः। सः विगुणे मन्त्रातुल्यार्थे अनुगुणे मन्त्रतुल्यार्थे वा वचने सति नेति नानुवादता तस्येत्यर्थः।

ननु अनुगुणविषये वचनाद्विनियोगोऽस्तु। मन्त्रलिङ्गं तु तस्मिन्नेव विषये विनियोगे सहायतयाऽनुप्रविशतु माभून्मन्त्रप्रामाण्यहानिरिति चोदयति—नन्विति। तन्नेति। यद्यप्यधिकारशास्त्रसापेक्षता लिङ्गस्य विनियोगे तथापि न तदर्थशास्त्रापेक्षता, लिङ्गतदर्थशास्त्रयोरन्योन्यनिरपेक्षयोरेव द्वारविनियोगशक्तेरेकैकस्यैव विनियोजकता श्रुतिलिङ्गादीनां षण्णामपि द्वारविनियोगे निरपेक्षप्रमाणत्वव्युत्पत्तेः। द्वारसमर्पकतया च तेषां प्रामाण्यं न तत्रान्योन्यसहायतेति ध्रुवमन्यतरेण विनियोगेऽन्यतरवैयर्थ्यमित्यर्थः। तथापि कथमुभयोर्वैयर्थ्यं तत्राह—विशेष्येति।

ननु तदर्थशास्त्रस्य विनियोजकत्वे मन्त्रलिङ्गस्याविनियोजकत्वेपि न लिङ्गस्य वैयर्थ्यम्। प्रयोगकालीनाभिधानार्थतयाप्यर्थवत्त्वादिति चोदयति—नन्विति। तन्नेति। ययाऽभिधानशक्त्या मन्त्रस्यार्थे विनियोगस्तयैव शक्त्या मन्त्रः प्रयोगकालेप्यर्थममिधत्ते। अतो मन्त्रस्य विनियोगे प्रयोगे च एकाभिधानशक्तिः। ततः किमित्यत्राह—तामिति। तां मन्त्रस्याभिधानशक्तिं विनियोगं प्रत्यनर्थपरामापादयत् तदर्थशास्त्रं मन्त्रस्यार्थपरतामेव हन्ति। यदि मन्त्रोऽर्थपरः स्यात् तदा लिङ्गाद्विनियोग एव न विहन्तुं शक्यः। अभिधयैव हि मन्त्रस्य लिङ्गविनियोगः। सा च मन्त्रस्यार्थपरत्वे सति सिद्धैवेति विनियोगोऽपि सिद्ध एव स्यात्। अतो विनियोगं प्रतिबध्नता तदर्थशास्त्रेण मन्त्रस्यार्थपरतैव हतेत्यर्थः। तथा मन्त्रोऽपि तदर्थशास्त्रस्यार्थपरत्वं हन्तीत्याह—मन्त्रोऽपीति। तत्तुल्यरूपतया। तदर्थशास्त्रातुल्यतया निरपेक्षविनियोजकत्वरूपेणेति यावत्। मन्त्रोऽपि। मन्त्रलिङ्गमपीत्यर्थः।

---

१. B. विगुणोऽनुगुणो वा

न्योन्यव्याहतिः। न च परिसङ्ख्यादिकं निजदोषापेक्षयापि शङ्क्यम्। लिङ्गादेवाग्रतः प्राप्तौ हि तदर्थशास्त्रात् परिसङ्ख्या स्यात्। न च तथेत्युक्तम्, अनर्थपरत्वे च वाक्यनियम-बुद्धशास्त्र-अविद्यमानवचन-अचेतनार्थबन्धन-अर्थविप्रतिषेध-स्वाध्यायवदवचन-अविज्ञेयार्थ-अनित्य-संयोगाः सुस्था [1]भवन्ति।

---

ननु उभयोरपि निरपेक्षप्रमाणतया विकल्पोऽस्त्वित्याशङ्क्य नित्यवच्छ्रवणबलान्नित्यवदेव विनियोगपरत्वप्रतीतेः तदर्थपरता न विकल्पार्हेत्याह--न चेति। यद्यपि अप्राप्तग्रहस्वार्थहानिप्राप्तबाधरूपैः त्रिदोषा परिसंख्या, यद्यपिचानुवादो निष्फलः तथापि मन्त्रलिङ्गात् शक्तिविषयबहुकार्यप्राप्तेः वाक्यमितरपरिसङ्ख्यार्थं स्वार्थवत्त्वायास्त्वित्यत्राह--न चेति। तत्र हेतुः लिङ्गादिति। लिङ्गविनियोगस्य पूर्वभावित्वाभावात् न परिसङ्ख्यादिकं युक्तम्। न च तदर्थशास्त्राणां ग्राहकान्वयपरतास्तु। मन्त्रलिङ्गं तु द्वारे विनियोजकमस्तु माभूदन्योन्यव्याहतिरिति वाच्यम्, सर्वत्र तदर्थशास्त्रेषु इतिशब्देन करणत्वप्रतीतेः ग्राहकसम्बन्धानापादकत्वात्। न हि करणतया ग्राहकान्वयः। अतस्तदर्थशास्त्रं विनियोगपरमेव नोत्पत्तिपरम्। उत्पत्तौ तु ग्राहकान्वयः। व्रीहिभिर्यजेतेति तु उभयपरमिति विनियोगापेक्षया करणता नोत्पत्त्यपेक्षया। अतस्तत्र ग्राहकसम्बन्धोऽप्यविरुद्धः। किञ्च सर्वत्र तदर्थशास्त्रे मन्त्रप्रतीकेन मन्त्रोपादानं तच्चानुवादरूपम्। न चानुवादे अनुवाद्यसन्निधिरिति तदर्थे मन्त्रस्यासन्निधेर्न तद् ग्राहकान्वयापादनमिति व्यर्थतैवेति भावः। भाष्योक्तपूर्वपक्षाभ्युच्चयहेतून् सङ्ग्रहेण दर्शयति--अनर्थपरत्वे चेति। यदि मन्त्राणामर्थपरता स्यात्तदा ऋग्यजुषोर्नियतपदक्रमोच्चारणरूपवाक्यनियमोऽनुपपन्नः। लौकिकवाक्यवदन्यथोक्त्याप्यर्थप्रतीतेः। तथा अग्नीदग्नीन् विहरेत्यादिबुद्धशास्त्रं शास्त्रान्तरेणाग्निविहरणादिकर्तव्यताज्ञानवन्तमेवाग्नीध्रादिकं सम्बोध्य कुर्विति बोधयत् शास्त्रमनर्थकं स्यात्। तथा "चत्वारि शृंगा त्रयो अस्य पादा" इत्यविद्यमानवचनं च न स्यात्। तथा "ओषधे त्रायस्वैनं" इत्याद्यचेतनौषध्यादिप्रतियोगिकपशुत्राणाद्यर्थनिबन्धनं चायुक्तम्। "अदितिद्यौरदितिरन्तरिक्षं" इत्याद्यर्थप्रतिषेधश्च न स्यात्। अध्ययनकाले पूर्णिका उच्छिष्टभोजिनी हन्ति करोति माणवको हन्तिमन्त्रमधीते, न चार्थावबोधमभ्यस्यति यथा स्वाध्यायमभ्यस्यति। अतः स्वाध्यायवचनवदर्थावबोधवचनस्यावचनमपि अनभ्यसनमपि न स्यात्। जर्फरीत्याद्यविज्ञेयार्थमन्त्रस्य ज्ञातुमशक्यार्थमन्त्रस्याध्ययनमपि च न स्यात्। तथा 'किं ते कृण्वन्ति कीकटेषु गाव' इत्याद्यनित्यसंयोगश्च न स्यात्। कीकटो नाम

---

१. B. शक्त्यपेक्षिण एव हि ऋ. वि.--मन्त्रशक्तिनिरूपणेनैव

युक्त्यन्तरं च अनुवादपरिसङ्ख्याद्यसंभवे यन्मन्त्रलिङ्गतदर्थशास्त्रविरोधेन सन्दिग्धेऽर्थपरत्वे नानुवादो न परिसङ्ख्येति। तद्धेयम्। अनुवादात् परिसङ्ख्यया वा सन्देहापगमात्।

भाष्ये तु विनियोगविशेषचिन्तैवेदमिति तु मुखमात्रम्। तत्परत्वे[२] तल्लक्षण एव स्यात्।

राद्धान्तस्तु—व्युत्पत्त्याऽर्थपरत्वं मन्त्राणामविशिष्टम्। न तदर्थशास्त्रादिभिर्बाधितव्यं तदर्थशास्त्रमनुवादकमस्तु। "य एवं विद्वान् पौर्णमासीं यजते" इतिवत्। अनुवादे पृथगर्थप्रमापकता परं नास्ति। कार्यार्थता त्वस्त्येव।

---

जनपदः, नैचाशाखं नाम नगरम्, प्रमगन्दोनाम राजा एवमाद्यनित्यसंयोगः। एतत्सर्वमनर्थपरत्वे सुस्थं भवतीत्यर्थः।

अत्र केचित्—अनुवादपरिसङ्ख्याऽसम्भवमन्यथोचुः। तदर्थशास्त्रस्य नानुवादपरिसङ्ख्यार्थता, मन्त्रलिङ्गविरोधेनार्थपरत्वस्यैव सन्दिग्धत्वात् स्वार्थतात्पर्यनिश्चयमूलत्वात्तयोरिति। तदनूद्य दूषयति—युक्त्यन्तरं चेति। तत्र हेतुः—अनुवादादिति। नन्वेवमन्योन्यव्याघातादप्रामाण्यपूर्वपक्षो भाष्यविरुद्धः। भाष्ये हि मन्त्राः किमर्थप्रकाशनेन याग उपकुर्वन्ति उतोच्चारणमात्रेणेति विनियोगविशेषस्यैव चिन्तनात् इत्यत्राह—भाष्ये त्विति। यद्यपि भाष्यादापाततो विनियोगचिन्तेयम् तथापि प्रामाण्याप्रामाण्यपरैवेयं चिन्ता न विनियोगपरा विनियोगस्तु मुखमात्रम्। ननु विनियोगपरत्वे को दोषः येन भाष्यमन्यथा वर्ण्यत इत्यत्राह—तत्परत्व इति। तथात्वे तृतीय एवेयं चिन्ता सङ्गता स्यात्। नात्र प्रमाणलक्षणे न च प्रसङ्गतोऽत्र युक्ता। साक्षाद्युक्तं न प्रसज्यत इति न्यायात। सम्भवति चात्र साक्षात्सङ्गतिरित्युक्तमेवेति भावः।

राद्धान्तस्त्विति। लोके वाक्यप्रयोगस्यार्थपरत्वेन व्युत्पत्तेः वेदेपि तथैव भाव्यमिपि यथा विधिभागे व्युत्पत्तिसिद्धमर्थपरत्वं अध्ययनविधिस्वीकृतं तथा मन्त्रभागेपि व्युत्पत्त्याऽर्थपरत्वमध्ययनविधिस्वीकृतमविशिष्टमिति मन्त्राणार्थपरत्वमेवेत्यर्थः। ननु तदेवार्थपरत्वं तदर्थशास्त्रादिभिः हतमित्यत्राह—न तदिति। तदर्थशास्त्रस्यानुवादगतिसम्भवान्न तद्बाधकतेत्यर्थः। ननु पदमात्रस्यानुवादत्वं सह्यं न कृत्स्नस्यापि वाक्यस्येत्याशङ्क्य दृष्टान्तेनोपपादयति—य एवमिति। ननु अनुवाद एव दोष इत्यत्राह—अनुवाद इति। पृथक् प्रमितिलक्षणफलासिद्धिमात्रमनुवादे न पुनः कार्यार्थत्वहानिः अनुवाद्यकार्यपरत्वादित्यर्थः।

---

१. समर्थिताः B. २. तु तत्रैव A.

ननु तदर्थशास्त्रं पूर्वं, पश्चाद्वादः अनुवादो मन्त्राणामेवास्तु। तन्न। सति हि वचने मन्त्र उदास्त एव। ननु न तर्हि मन्त्रतः प्राप्तानुवादः। उक्तं पञ्चिकायां मन्त्रलिङ्गापेक्षयैव तदर्थशास्त्राद्विनियोगः। अतो (ऽत्र) लैङ्गिक एव पूर्वमिति तदर्थशास्त्रमनुवादः। अयं भावः—तदर्थशास्त्रात् शेषशेषितामात्रार्पणम्। किञ्चित्करता तु मन्त्रशक्तिनिरूपणात्। तन्निरूपणे च किञ्चित् कार्यात्मा शेष्यपि लब्ध एवेति स्वतो हेतुसाकल्यात् विनियोगधीर्जाता तस्यां दशायां तदर्थशास्त्रमनुवादः। ऐन्द्र्यां तु वचनादेव गार्हपत्यं किञ्चित्कार्यं लब्धम्।

---

ननु मन्त्रस्यावश्यके कार्यान्वये शीघ्रप्रवृत्ति तदर्थशास्त्रमेव तत्प्रमापकमस्तु। मन्त्रलिङ्गं तु विलम्बितम् पश्चाद्वादोऽस्त्विति चोदयति—नन्विति। तन्नेति। ग्राहकमन्त्राम्नानयोरचरितार्थत्वबलान्मन्त्रलिङ्गाद्विनियोगः कल्प्यः। तच्छीघ्रभाविनि वचने सति नास्त्येवेति न तस्यानुवादता। अत्र मन्त्र इति मन्त्रलिङ्गमित्यर्थः। यद्येवं तर्हि मन्त्रलिङ्गप्राप्तानुवादकत्वं तदर्थशास्त्रस्यासम्भावितमेवेति चोदयति—ननु न तर्हीति। अत्र ग्रन्थोक्तं परिहारमाह—उक्तमिति।

ननु इदमनेन कार्यमिति साक्षात् साध्यसाधनभाववाचिनो वाक्यस्य कथं विनियोगे तदवाचिलिङ्गापेक्षा कथं वा तदपेक्षत्वेपि तेन विनियोग इत्यत्राह - अयं भाव इति। शेषः शेषी किञ्चित्कारश्चेत्येतत्त्रयज्ञानं विनियोगे सामग्री। तत्र 'उरुप्रथस्व' इति पुरोडाशं प्रथयतीत्यादितदर्थशास्त्रे शेषशेषिमात्रार्पणम्, न तु शेषसाध्यः शेषिगतोपकारविशेषोऽपीत्यर्थः। कुतस्तल्लाभ इत्यत्राह—किञ्चित्कारेति। किञ्चित्कारता किञ्चित्कारः स च मन्त्रशक्तिनिरूपणान्मन्त्रसामर्थ्यपरामर्शादेव लभ्यः। अतः किञ्चित्कारार्थं मन्त्रलिङ्गापेक्षं तदर्थशास्त्रमित्यर्थः। नन्वेवमपि मन्त्रपरामर्शापेक्षं तदर्थशास्त्रमेव विनियोजकं स्यात् तत्राह—तन्निरूपणे चेति। वाक्यापेक्षापूर्त्यर्थं परामृश्यमानं मन्त्रलिङ्गं स्वस्मिन्नेव विनियोगसामग्रीभूतशेषशेषि-किञ्चिदंशपूर्तेर्न तदर्थं वाक्यावमर्शापेक्षमिति विनियोगहेतुसाकल्यात् निरपेक्षान्मन्त्रलिङ्गादेव विनियोगधीरग्रे जाता। तस्यां दशायां मन्त्रलिङ्गापेक्षितया विलम्बितं तदर्थशास्त्रमनुवाद एवेत्यर्थः। नन्वेवमपि ऐन्द्र्यामपि लिङ्गादिन्द्र एव मन्त्रविनियोगः स्यात्, न वचनाद्गार्हपत्ये इत्यत्राह—ऐन्द्र्यांत्विति। 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्युपपूर्वस्य तिष्ठतेरभिधानार्थत्वात् ऐन्द्र्या ऋचा गार्हपत्यमभिदध्यादिति वचनार्थः। ततश्च वचनादेव किञ्चित्कार्यं गार्हपत्यरूपं किञ्चित्कारता चाभिधानं ऐन्द्री ऋक्शेषश्च लब्ध इति स्वतोऽन्यानपेक्षयैव हेतुसाकल्या

किञ्चित्करताभिधानमिति स्वत एव हेतुतासाकल्यात् विनियोगधीः। अतो न मन्त्रलिङ्गापेक्षा। प्रत्युत लिङ्गं वाचनिकानुसारादन्यथा।

यद्यपि धान्यमसीत्यत्र वचनान्न किञ्चित्करता, मन्त्रलिङ्गादपि न सा। लिङ्गाद्धि धान्यस्य किञ्चित्करतापत्तिः न तण्डुलाधिवापस्य। अतो वचनं किञ्चित्करतापेक्षं मन्त्रलिङ्गं तिरस्कृत्य वाक्यरूपतयाऽभिधानदृष्टमाश्रित्य विनियोजकम्। इह तु विनियोज्यविशेषलिङ्गोपस्थापितकिञ्चित्करताविशेषो न तिरस्कारमर्हतीति दिक्।

---

[1]द्वचनादेव विनियोगधीः। अतो न तत्र वचनस्य लिङ्गापेक्षेति न लिङ्गाद्विनियोगः। यथा च तत्राभिधानं किञ्चित्कारः गार्हपत्यश्च शेषी तथा स्वस्थान एव ततीय एव वक्ष्यत इति भावः। न केवलं तत्र वचनस्य लिङ्गानपेक्षेति लिङ्गाद्विनियोगहानमात्रम्। किन्तु वचनबलाल्लिङ्गमेवान्यथेत्याह—प्रत्युतेति। नन्वेवं 'धान्यमसीति दृषदि तण्डुलानधिवपति' इति धान्यमन्त्रस्य कथं वचनात्तण्डुलाधिवापे विनियोगः। मन्त्रसाध्यकिञ्चित्कारस्य शेषिगतस्य वचनानुपात्तत्वादित्यत्राह—यद्यपीति। सत्यमेवम्। तथापि मन्त्रलिङ्गादपि न विध्यपेक्षितकिञ्चित्कारलाभ इति न तदर्थं मन्त्रशक्तिनिरूपणापेक्षा वचनस्येत्यर्थः। अथ कथंलिङ्गात्तदलाभ इत्यत्राह—लिङ्गाद्धीति। तण्डुलगतकिञ्चित्कारो हि विध्यपेक्षितः तस्यैव शेषित्वेन श्रुतेः स च न धान्यमन्त्रलिङ्गादुपनीत इत्यर्थः।

ननु वचनेपि किञ्चित्कारानुपादानात् हेतुसाकल्याभावे कथं ततोऽपि विनियोग इत्यत्राह—अत इति। यत एव न मन्त्रलिङ्गादपि किञ्चित्कारलाभः अतो वचनमिदं अनेन[2] कार्यमिति साध्यसाधनभावं[3] साक्षाद्बोधयत् विनियोज्यस्य मन्त्रस्य वाक्यरूपतया अभिधानस्यैव तज्जन्यतया किञ्चित्कारतार्हत्वात् दृष्टे सत्यदृष्टकल्पनायोगात् दृष्टं सामान्यरूपं तदेवाश्रित्य विनियोजकम्।

ननु धान्याभिधानरूपविशेषप्रतीतेः कथमभिधानसामान्यापेक्षया विनियोग इत्यत्राह—मन्त्रलिङ्गमिति। ननु तत्तिरस्कार एवानुचित इत्यत्राह—किञ्चित्कारतापेक्षमिति। ऐन्द्रयामिव श्रुतिबलात् लिङ्गस्यान्यथाभावो युक्त इति धान्यपदं लक्षणया तण्डलाभिधानपरम्। पूषमन्त्रादौ नैवं जघन्यपरता तदपवादकश्रुत्यभावादिति भावः।

ननु यदि लिङ्गतिरोधानशक्तिर्वचनस्य तदर्थशास्त्रेणापि मन्त्रलिङ्गं तिरस्कृत्य वाक्यरूपतयाऽभिधानसामान्यदृष्टमाश्रित्य विनियोगोऽस्त्वित्यत्राह—इह

---

१, A ल्यं तस्माद्वच।  २, B अनेक  ३, B संबन्धं

यस्तु समाधिः ग्राहकान्वयसमय एव शक्यद्वारको मन्त्रो विध्यर्थो इति उपक्रान्तविनियोगसमाप्तिमात्रं मन्त्रलिङ्गेनेति पूर्वं लैङ्गिकम्। ऐन्द्रयां तु वचनविरोधेन तदनुगुणशक्यद्वारत्वेधीः[1] इति न लिङ्गात् समाप्तिरिति। लिङ्गवचनसम्प्रतिपत्तौ तु वचनवेगबाधात् लैङ्गिकमेवाग्रे।

त्विति। स्यादेवं यद्यत्र लिङ्गवचनयोर्विप्रतिपत्तिः। इह तु तत्सम्प्रतिपत्तौ विनियोज्यस्य मन्त्रस्य यत् विशेषलिङ्गं विशेषाभिधानशक्तिः तदुपस्थापितो यो योग्यस्वशेषिवर्तिकिञ्चित्कारविशेषः, सः तिरस्कारार्हो न भवति। कारणाभावात्। धान्यमन्त्रे तु अगत्याऽभिधानसामान्याङ्गीकारः। इह त्वपेक्षितसन्निधिः नोपेक्षार्ह इत्यर्थः। ननु तदर्थशास्त्रेपि सर्वत्र इतिकरणबलात् मन्त्रवाक्यस्य करणत्वावगतेः तद्बलेन वाक्यतया शीघ्रावगताभिधानमात्रमेवापे[2]क्ष्यताम्, न विलम्बितविशेषापेक्षा युक्ता, किञ्च उद्भूतविनियोगशक्तिकवचनस्यानुद्भूतशक्तिकमन्त्रलिङ्गबाध्यत्वहानाय विशेषानपेक्षैव[3] युक्ता इति शङ्का दिक्पदनिवर्त्या। निवृत्तिस्तु यद्यपीतिकरणात् करणत्वप्रतीतिः तथापि स्फचेनोद्धन्तीतिवत् न प्रथनाद्युत्पत्तिरूपकिञ्चित्करतया प्रथनादौ शेषता शब्दरूपस्य मन्त्रवाक्यस्य तदुत्पादकत्वेन लोके अप्रतीतेः नाप्यदृष्टद्वारा, दृष्टे सम्भवति तदयोगात्। किन्तु अभिधानद्वारैव। अतः किञ्चित्कारत्वार्थं लिङ्गमपेक्ष्यम् तन्निरूपणदशायामेव विध्यपेक्षितोऽभिधानविशेषो लब्ध इति निश्चितोऽभिधानविशेष एवापेक्षणीयः। नतु करणत्वप्रतीत्यन्यथानुपपत्तिमात्रविमृष्टाभिधानमात्रं तस्य विध्यनपेक्षितत्वात्। धान्यमन्त्रे तूक्तो विशेषः। आग्नेय्या आग्नीध्रमुपतिष्ठत" इति यथा नानुवादस्तथा तदधिकरण एवोक्तम्। यद्यपि वचनं लिङ्गादप्युद्भूतशक्तिकं न तु तच्छक्त्युद्भवः साध्यसाधनतोक्तिमात्रे। विनियोगस्तु तत्फलम्। तत्र फलेऽन्यतोऽपि लब्धे साध्यसाधनतोक्तिमात्रस्यानुवादकतयाप्युपपत्तेः अपेक्षित उपस्थितविशेषो नोपेक्षार्ह इति। श्रुतिबाध्यत्वं च लिङ्गस्य विप्रतिपत्तिविषय एवेति न श्रुतिलिङ्गनयविरोधोऽपीति। प्रकाशेन तु लिङ्गप्राबल्यमन्यथोक्तम् तदाह यस्त्विति। ग्राहकान्वयवेलायामेव शक्यद्वारको मन्त्रो विध्यर्थ इति शक्तिरूपलिङ्गविनियोगः परामृष्टतयोपक्रान्त इति तत्समाप्तिमात्रं लिङ्गेनेति लैङ्गिकमेव शेषत्वम्। पूर्ववचनं त्वनुवाद इत्यर्थः।

नन्वेवं ऐन्द्र्यामपि लिङ्गादिन्द्र एव मन्त्रविनियोगः स्यात् ग्राहकान्वयवेलोपक्रान्तसमाप्तिरूपत्वाविशेषात् तत्राह—ऐन्द्र्यामिति। तत्र लिङ्गवचनविप्रतिपत्तौ गार्हपत्यमिति श्रुत्यवगतशेष्यनुगुणशक्यद्वारकमिति उपाधितया श्रुतिप्रवेशान्न लिङ्गप्राधान्यमिति न तत्र लिङ्गात् समाप्तिरित्यर्थः। नन्वेवं सम्प्रतिपत्तिविषयेपि वचनादेव स्वतः शीघ्राद्विनियोगसमाप्तिर्युक्तेत्यत्राह—लिङ्गेति। सत्यं

१. A विधिः २. पेक्षितं R ३. पेक्षैव B

पश्चादेव वा। त्रिकालायामप्राप्तौ विधिरिति नात्र विधिः, अनुवाद एवेति। स न युक्तः। ( न हि ) लिङ्गात् पश्चादपि ग्राहकमन्त्राम्नानयोः वाचनिकेनैव चरितार्थत्वात्। अथापि यदि लिङ्गात् तथापि लैङ्गिक एवोचितोऽनुवादः। अनवधारणं वा। अत एवाग्रतोऽपि न लैङ्गिकं वाचनिके सति तदनुपपत्तेः, समाप्तिमात्रं तत इति अग्रत इत्यपि वचनादपि समाप्तिमात्रमेव। अतश्शीघ्रतया तत एव समाप्तिः। यदि च शीघ्रं लिङ्गं तदैन्द्रीलिङ्गविनियोज्येति न लिङ्गबाधः स्यादिति पूर्वोक्तैव दिक्।

तदर्थशास्त्रादेरनुवादकता उपेत्योक्ता। गुणविधानादिभिः अर्थवत्ता-

---

शीघ्रं वचनं तथापि तद्वेगोऽत्र सम्प्रतिपत्तौ लिङ्गेन बाधितः। ग्राहकान्वयवेलायामेव लिङ्गस्य परामृष्टत्वेन प्रथमप्रतीतेः। न च श्रुतेरपि तदा परामर्शः, विरोधाभावेन तद्बुभुत्साभावादित्यर्थः।

ननु मानस्वभावात् लिङ्गवृत्तिर्जघन्यैवेति कथं लैङ्गिकस्याग्रिमत्वमित्यरुच्या पक्षान्तरमाह—पश्चादिति। कथं तर्हि वचनस्यानुवादता तत्राह त्रिकालायामिति। दूषयति—न स इति। यत्तावदिदमुक्तं भावित्वेन लिङ्गविनियोगो वचनस्य विधित्वं हन्तीति। तदयुक्तम्। स्यादेव हि वचनस्य विधित्वहानिः त्रिकालायामप्राप्ताविति नयात् यदि लिङ्गाद्विनियोगः पश्चादपि निश्चितः स्यात्। न चेह तथा। प्रथमभाविनि वचने विनियोगत एव ग्राहकमन्त्राम्नानयोश्चरितार्थत्वात्। लिङ्गविनियोगसामग्रीविरहादित्यर्थः। पश्चाल्लिङ्गादपि विनियोगमुपेत्यानिष्टमाह—अथापीति। पश्चाद्भाविन एवानुवादार्हत्वात् तथाविधो लैङ्गिक एवानुवादः स्यादित्यभिमतवचनानुवादो न स्यादित्यर्थः। नन्वेवं शब्दरूपस्य वचनस्यैवान्यत्रानुवादता दृष्टेतीहापि तदेव तदर्हमित्यत्राह—अनवधारणं चेति। किं शब्दरूपतया वचनमनुवादकं भाविप्राप्त्यपेक्षया किंवा पश्चाद्भावित्वात् लिङ्गमित्यनवधारणं स्यादित्यर्थः। यत्पुनर्लिङ्गस्य पूर्वभावित्वमुक्तं तदपि न युक्तमित्याह—अत एवेति। यदुपजीवनेन अत एवेत्युक्तं तदाह—वाचनिक इति। मानस्वभावतो वचनस्य शीघ्रत्वात् तस्मिन् सति लिङ्गस्य पूर्वभावित्वानुपपत्तेरित्यर्थः। समाप्तिमात्रं लिङ्गात् क्रियत इति लिङ्गविनियोगस्य यत्पूर्वभावित्वे कारणमुक्तं तदपि न युक्तमित्याह—समाप्तीति। तत्र हेतुः—वचनादपीति। नन्वेवमपि वचनस्य कथं पूर्वभावित्वमित्यत्राह—अत इति। विपक्षे दोषमाह—यदीति। तथा सति श्रुतिलिङ्गनयविरोधः स्यादिति स्वोक्तः पूर्व एव मार्ग इत्यर्थः।

ननु मन्त्राणामर्थपरत्वेन लिङ्गाद्विनियोगेपि तदर्थशास्त्रादेर्गुणविध्यर्थवादपरिसङ्ख्यादिभिरर्थवत्ताऽस्त्येवेति कथमनुवादतोक्तिरित्यत्राह—तदर्थेति। विनि-

प्युक्तैव। मन्त्रोऽर्थपर इत्यत्र लिङ्गदर्शनं आग्नेय्या आग्नीध्रमुपतिष्ठते इत्येवमादिभाष्ये व्यक्तम्।

विवरणे त्वधिकम्—असत्यर्थपरत्वे योग्यमन्त्राणामप्यर्थबोधो न प्रयोजनमध्ययनविधेः। न चान्यत् चक्रकादित्युक्तम् शास्त्रादौ। अतो

---

योजकत्वं विना तदर्थशास्त्रादेरानर्थक्यमेवेत्यभ्युपगम्य लिङ्गप्राबल्यव्युत्पत्तिरित्यनुवादतोक्तिरुपेत्यवादेन। परमार्थतस्तु गुणविधानादिभिरर्थवत्तापि सूत्रभाष्याभ्यामेवोक्तैवेत्यर्थः। अत्रभाष्ये मन्त्राणामर्थपरत्वे लिङ्गमुक्तम्, आग्नेय्या आग्नीध्रमुपतिष्ठते इत्यग्निप्रकाशने विहिताऽऽग्नेय्येति तदयुक्तम्। अग्निशब्दसम्बन्धादप्याग्नेयीत्वसम्भवात् इत्यत्राह—मन्त्र इति। शब्दयोगात्तद्धितो जघन्यः। सः असति गत्यन्तरे। देवतातद्धितस्तु मुख्य इति लिङ्गस्वारस्यं राद्धान्ते। एतच्च भाष्य एव व्यक्तम्। आदिशब्दात् 'न माता वर्धते न पिता' इत्यूहनिषेधदर्शनं लिङ्गान्तरमपि सूचितमिति भावः। विवरणे त्विति।

ननु भाष्ये मन्त्राः किमर्थप्रकाशनेन यागे उपकुर्वन्ति उतोच्चारणमात्रेणेति चिन्ता। सा न प्रमाणलक्षणे सङ्गता, प्रामाण्यव्युत्पत्तिपरत्वाभावात् अदृष्टार्थत्वेपि जपमन्त्रवत्प्रामाण्योपपत्तेरित्याशङ्क्य पूर्वपक्षे विधान्तरमुक्तम्, उतोच्चारणमात्रेणेति। मन्त्राणामर्थपरत्वासम्भवमात्रं पूर्वपक्षे विवक्षितम्। न त्वदृष्टद्वारेणोपकारकत्वम्। 'दृष्टो हि तस्यार्थः कर्मावबोधनं नाम' इति दृष्टार्थत्वस्य प्रथमसूत्र एव साधितत्वात्। यद्यपि प्रामाण्यमपि स्वाध्यायस्य प्रथमपाद एव सिद्धं तथापि वेदैकदेशमन्त्रोत्थाप्रामाण्यमत्र निरस्यते अर्थवादेष्विव अन्यथा प्रमाणलक्षणे सङ्गतिर्नोपपद्यते इत्युत्तरत्र स्फोरयिष्यते। अतौ वस्तुवलमते पूर्वपक्षेऽधिकमुक्तमित्यर्थः। कथं पुनर्मन्त्राणामनर्थपरत्वे स्वाध्यायस्य प्रामाण्यहानिः तत्राह—असतीति—अध्ययनविधेर्ह्यर्थावबोधः प्रयोजनमुक्तम्। तच्च न, तस्य कृत्स्नस्वाध्यायव्यापिनः तत्प्रयोजनानर्हत्वात्। तत्र प्रयोगावस्थकार्यप्रतिपादनेनार्थपरत्वयोग्यमन्त्राणामर्थपरत्वाभावे सोऽव्यापीति स न प्रयोजनमिति स्वाध्यायस्याविवक्षितार्थता स्यादित्यर्थः।

नन्वेवमप्यध्ययनविध्यनुगुणाचार्यकप्रयोजनान्तरपरतया विधेरधिकारिनरभेदपर्यवसानार्थत्वेन प्रयोजनापेक्षापूर्तिरस्त्वित्यत्राह—न चेति। तत्र हेतुः—चक्रकादिति। यदा आचार्यकं प्रयोजनं तदा अन्यपरत्वादध्ययनविधेः अविवक्षितार्थः स्वाध्यायः स्यात्। ततश्च तदन्तर्गतत्वादध्ययनाध्यापनवाक्ययोरप्यविवक्षितार्थता स्यात्। ततश्च तद्विधिद्वयाभावादन्यपरत्वं न स्यात्। ततश्च विवक्षितार्थता स्वाध्यायस्य स्यात्। ततश्चाध्ययनाध्यापनविध्योर्भावात् पुनरप्यन्यपरता स्यादिति

न स्वाध्यायप्रामाण्यरक्षा। अनर्थपरोच्चारण एव जपपदव्युत्पत्तेः न जपमन्त्रस्यार्थपरतायोग्यतेति नाव्यापिता। अतो योग्यमन्त्राणामनर्थपरत्वेन तत्तुल्यतया चोदनानामपि तथात्वमिति। एवमव्यापितया अर्थधीप्रयोजनताहानिः। अतस्तदर्थशास्त्रादेः अभिधानशक्तिरुद्भूता नास्तीति निश्चयः। नत्त्वभिधानशक्तितो न विनियोगइतिनिश्चयः। विनियोगचिन्तेयमिहाप्रसक्ता तृतीये युक्ता। इह स्थितेऽर्थपरत्वे लिङ्गात् विनियोगस्तृतीये वक्ष्यते। उक्तयुक्तेश्च सर्वत्र अविवक्षेत्यविवक्षितार्था मन्त्रा इति युक्तम्। लिङ्गविनियोगस्तु तदर्थशास्त्राद्यवरुद्धे न युक्तः। वाक्यनिय-

---

व्यक्तं चक्रकं प्रथमसूत्र एवोक्तम्। यत एवमर्थावबोधस्येवान्यस्य च प्रयोजनत्वाभावः अतो न प्रामाण्यं स्वाध्यायस्य। यद्यपि प्रयोजनान्तरपरत्वेऽप्यप्रामाण्यसिद्धिः तथापि यदि व्यापिप्रयोजनाभावादप्रामाण्यं न तर्हि तदाचार्यकस्य प्रयोजनत्वादीति इमां मन्दशङ्कां निराकर्तुं तन्निराकरणं वेद्यम्। नन्वेवं राद्धान्तेप्यर्थावबोधस्याव्यापिता स्यात् स्वाध्यायांशजपमन्त्राणां अनर्थपरत्वादित्यत्राह—अनर्थेति। तेषामर्थपरत्वायोग्यत्वादित्यर्थः। नन्वेवमपि कथं कृत्स्नस्वाध्यायस्यार्थधीप्रयोजनताहानिः तदर्थशास्त्राद्विहताभिधानशक्तिकमन्त्रांश एवार्थपरत्वायोग्यता जपमन्त्रांश इव न पुनश्चोदनांशेपीत्यत्राह—अत इव। यतो जपविनियोगेनैवार्थप्राधान्यनिवृत्तेः जपमन्त्राणामर्थपरत्वायोग्यता मन्त्रान्तराणां तु अतथात्वात् प्रयोगावस्थकार्यपरत्वयोग्यता। अतो योग्यमन्त्राणामनर्थपरत्वे कार्यपरतया तत्तुल्यचोदनानामप्यनर्थपरत्वमित्येवं कृत्स्नप्रामाण्याक्षेपात् प्रतिज्ञाहानिरित्यर्थः। नन्वत्र यथाभाष्यं पूर्वपक्षे मन्त्राणामभिधानशक्तिपरतामङ्गीकृत्य तदर्थशास्त्रादेर्विनियोगाभाव एव किमिति न निश्चीयते इत्यत्राह—अत इति। अभिधानशक्तितः इति। अभिधानशक्तिमङ्गीकृत्येति ल्यब्लोपे पञ्चमी। प्रमाणलक्षणे सङ्गत्यर्थमियंविधाऽऽश्रितेत्यर्थः। विपक्षे दोषमाह—विनियोगेति।

ननु मन्त्राणामर्थपरत्वस्य विनियोगाधीनत्वात् तदर्थं विनियोगोऽप्यत्र प्रसज्यत इत्यत्राह—इह स्थित इति। अध्ययनविध्यापादितस्य मन्त्राणामर्थपरत्वस्य स्वस्थानोक्तविनियोगाधीनत्वापेक्षयापि सम्भवान्न तदतिक्रमे हेतुस्तदपेक्षेत्यर्थः। इतोऽपि न विनियोगपरतेत्याह—उक्तेति। अत्र भाष्ये पूर्वपक्षोपसंहारे तस्मादविवक्षितवचना मन्त्रा इति सामान्योक्त्या सर्वमन्त्राणामविवक्षितार्थत्वमुक्तम्। तच्चानर्थपरत्वेनैव पूर्वपक्षे युक्तम्। न विनियोगाभावेन। तत्परत्वे तु तदर्थशास्त्राद्यवरुद्धमन्त्रमात्रविषयत्वापत्तेरित्यत्राह—लिङ्गेति। वाक्यनियमादीनामुपयोगालोचनयापि अनर्थपर एवायं पूर्वपक्षः। न लिङ्गादविनियोगमात्रपर

मादीनामर्थाविवक्षायामुपयोगो न लिङ्गाद्विनियोगे ।

राद्धान्ते नाधिकम्, भाष्ये तदर्थाद्युपेक्ष्य देवताभिस्सल्लापे न किञ्चिद् दृष्टमित्युक्तम् अर्थधीरेव नास्ति दूरे विवक्षेति वक्तुम् । परिहृतं न सल्लापपरं वाक्यम् यागसाधनस्तुतिपरं तद्धीरस्त्येवेति । जर्भरीत्यादेः अर्थधीरुपायवतामस्त्येवेति ।

इति श्रीभवनाथमिश्रविरचिते नयविवेके
प्रथमाध्यायस्य द्वितीयः पादः ।

---

इत्यत्राह—वाक्येति । राद्धान्ते तु बृहत्या न विशेष इत्याह—राद्धान्त इति । अत्र भाष्ये राद्धान्तमुपक्रम्य पुनः पूर्वपक्षोक्तविरोधोद्भावनसमये सूत्रोपात्ततदर्थशास्त्राद्युपेक्ष्यैवाप्रत्यक्षभूताभिर्देवताभिः प्रत्यक्षवत् व्यवहारे यज्ञाङ्गैश्चाचेतनैः सल्लापे न प्रयोजनमित्युक्तम् । तत्र कोऽभिप्राय इत्याशङ्क्य तदनुभाषणपूर्वकं तात्पर्यमाह—भाष्य इति । यज्ञे यज्ञाङ्गप्रकाशनमेवेत्यादिपरिहारभाष्यस्य तात्पर्यमाह—परिहृतमिति तात्पर्यानुसारिणी सर्वत्र शब्दादर्थावगतिः न पदशक्त्यनुसारिणी । तात्पर्यं चात्र मन्त्रवाक्यस्य यागसाधनस्यानुष्ठेयस्य स्मृतौ विनियोगादिति देवताप्रतियोगिसल्लापाद्यसम्भवेपि यागसाधनधीरस्त्येवेति तत्रैव तात्पर्यमित्यर्थः । या त्वर्थाप्रतिपत्तिः जर्भर्यादिषु पूर्वपक्षोक्ता सा प्रतिपत्त्युपायरहितानामेव । उपायवतां तु तत्राप्यर्थधीरस्त्येवेति । अतोऽपि न सापि शब्दस्याप्रतिपादकत्वापादनक्षमा, यथा आलोकरहिते रूपाप्रतीतिः चक्षुषोऽप्रत्यायकत्वं[1] नापादयतीत्याह—जर्भरीत्यदिरिति । अन्याभ्युच्चयहेतुसमर्थनं तु भाष्ये ग्रन्थे च व्यक्तमिति नोच्यत इति भावः ।

इति श्री वरदराजीयनयविवेकदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः



---

१. B अप्रतीत्युपायत्वम् ।

# नयविवेके प्रथमाध्यायस्य

## तृतीयः पादः

॥ १ ॥ धर्मस्य शब्दमूलत्वादशब्दमनुमानं स्यात् ॥ १ ॥

'यां जना' इत्यादिमन्त्राः मानान्तरापेक्षस्य मन्वादिस्मृताष्टकाकार्यस्य रात्रिप्रकाशनद्वारा तत्कार्यार्थाः। एवमपौरुषेयमपि चेन्मन्त्रवाक्यं मानान्तरापे[1]क्षार्थं तदा स्वाभाविकमेव शब्दस्य सापेक्षार्थबोधकत्वमिति सर्व एव वेदः सापेक्षार्थ इति निर्विषया प्रतिज्ञेति पादान्तरं अनन्तरं च।

ननु अपुंवाक्यस्य मन्त्रस्य मानान्तरगम्यकार्यार्थता न युक्ता। न।

---

तृतीयः पादः

धर्मस्य शब्दमूलत्वात्। अत्राष्टकाः कर्तव्या इत्यादिषु स्मृतिवाक्येषु चिन्ता किमप्रमाणमुत प्रमाणमिति। तदर्थमियं चिन्ता—किं भ्रान्त्यादिमूलान्येतानि उत वेदमूलानीति। ननु चोदनानां प्रामाण्यमत्राध्याये प्रतिज्ञातम् न स्मृतीनाम्। अतोऽप्रतिज्ञातस्मृतिप्रामाण्यचिन्ता कथमिहाध्याये सङ्गता? कथं वा पादभेदः? कथं च न तदानन्तर्यमित्यत्राह—योजना इत्यादिमन्त्र इति। स्यादेवासङ्गतिलक्षणो दोषः यदि स्मृतिमात्रप्रामाण्यपर्यवसायिनी इयं चिन्ता स्यात्, इयं तु सर्वचोदनानां प्रामाण्याक्षेपपूर्वकं तत्प्रामाण्यसाधिकैव। तथाहि—

यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा॥

इति मन्त्रोऽयं मानान्तरापेक्षस्य मन्वादिप्रणीतस्मृत्यर्थस्याष्टकाकार्यस्य या रात्रिः सम्बन्धिनी तत्प्रकाशनद्वारा तत्कार्यार्थः। ततः किमित्यत्राह—एवमिति। यद्यपौरुषेयं प्रयोगावस्थकार्यप्रतिपादकमपि मन्त्रवाक्यं मानान्तरापेक्षकार्यप्रतिपादकं तर्हि कार्यप्रतिपादकतयातत्तुल्यस्य सर्वस्यापि स्वाध्यायस्य विधिवन्निगदपूर्वपक्षवत् सापेक्षार्थत्वं स्वाभाविकमिति कृत्स्नचोदनाप्रामाण्याक्षेपात् प्रतिज्ञाक्षेपपर्यन्ततया अध्यायसङ्गतिः। स्मृतिमूलमप्रामाण्यं स्थूलं निरस्यत इति अर्थभेदात् पादान्तरता। अवेदैकदेशोत्थतया बहिरङ्गत्वादानन्तर्यं चेत्यर्थः। ननु अपौरुषेयस्यानपेक्षस्य मन्त्रवाक्यस्य मन्वादिस्मृतमानान्तरगम्यकार्यार्थता न युक्ता। अतस्तत्परतया पूर्वपक्षोऽ[2]सम्भवीति चोदयति नन्विति। परिहरति—अगत्येति।

---

१. B. M पेक्षमर्थं  २. B न संभवतीति

अगत्या युक्तेत्युक्तं पञ्चिकायाम् । मन्त्रोऽयं रात्रिं प्रकाशयन् प्रकाश्य-रात्रिमत्कार्यार्थताहः । अनिदंप्रथममष्टकाकार्यं रात्रिदेवताकमाह । इदं-प्रथमकार्यं तु रात्रिमदपि नानिदंप्रथममन्त्रार्थताहमिति न तदाह । न च वैदिकस्यैव लाभे अन्यदनिदंप्रथमकार्यं न मन्त्रार्थताहमिति वाच्यम् । वैदिको हि रात्रिः कालतया क्वचित् । न च कालः प्रयोगावस्थकार्य-

ननु काऽत्रागतिः? यथा अनादिर्निरपेक्षश्च वेदः सा चादिमत्स्मार्तकार्यमपेक्षत इत्यत्राह—मन्त्रोऽयमिति । यांजनावाक्यस्य तावन्मन्त्रत्वं अभियुक्तोपदेशपरम्परया सिद्धम् । तस्य चाध्ययनविध्याक्षेपबलात् कार्यरूपार्थपरत्वं दृष्टार्थत्वे सति अदृष्टार्थत्वायोगात् न जपमन्त्रतुल्यताऽस्येति रात्रिप्रकाशनेनैवाध्ययनविध्याक्षेप-कार्याभिधानार्हः । ननु दृष्टार्थत्वेपि अनारभ्याधीतोऽयं मन्त्रः कस्य कार्याभिधाता इत्यत्राह—प्रकाश्येति । प्रकरणाम्नातोऽप्ययं मन्त्रः स्वाभिधानशक्तिविमर्शनात् प्रकाशनार्हरात्रिद्वारा तदङ्गकार्यार्थतार्हः पारिशेष्यादष्टकाकार्यमाह तत्रैव रात्रेर्देव-तात्वेनाङ्गत्वात् ।

ननु अनपेक्षो वेदः कथं सापेक्षं स्मार्तमष्टकाकार्यमाह अयोग्यत्वात् । यद्याह महामारीपूजादिकार्यमपि रात्रिमत्किमिति नाहेत्यत्राह—अनिदंप्रथमेति । सापेक्ष-मष्टकाकार्यमनिदंप्रथमतया अनादिमन्त्रार्थतार्हम्[१] । अष्टकाकार्यस्य चानादित्वं मन्वादिव्यवहारपरम्पराप्राप्तत्वाद्वा अनाद्याचारसम्बन्धाद्वा । अतोऽष्टकाकार्या-भिधायिता यां जना मन्त्रस्येत्यर्थः । महामारीपूजादिकार्यं तु रात्रिमत्त्वेपि नैवमिति न मन्त्रार्थतार्हमित्याह—इदं प्रथमेति । ननु अगत्याहि अवैदिककार्यार्थता उक्ता सा वैदिकरात्रिमत्कार्यसम्भवे नेत्यत्राह—न चेति । क्वचित् निशीष्टचादाविति यावत् । ननु कालस्यापि रात्रेरङ्गत्वात् मन्त्रप्रकाश्यत्वं युक्तं इत्यत्राह—न चेति । अनुष्ठा-नावस्थकार्यप्रकाशकत्वस्वभावत्वान्मन्त्रस्य न कालस्तत्प्रकाश्यतार्ह इत्यर्थः । ननु अङ्गत्वेन विहितस्य कालस्यानुष्ठेयत्वमप्यस्ति अन्यथा अनुपादेयत्वे कथम[२]ङ्गतापि स्यादित्यत्राह कथञ्चिदिति । अङ्गत्वेपि कालस्य पुरुषव्यापारयत्ननिष्पाद्यत्वाभावात् साक्षादनुपादेयतया मुख्यमनुष्ठेयत्वं नास्त्येव । किन्तु प्रतीक्ष्यतया कथञ्चिदनुष्ठेयता एवमनुष्ठेयोऽपि कालोऽधिकारकोटितया प्रयोगात्प्रागेव स्मार्यः । न प्रयोगमध्ये । प्रयोगमध्यस्मार्यं च मन्त्रप्रकाश्यतार्हं नान्यदित्यर्थः । युक्तं चैतदित्याह अत एवेति । स्रुवेण पार्वणहोमौ जुहोतीति पार्वणहोमौ श्रुतौ तौ च पर्वदेवतात्वात् पार्वणा-वित्युच्येते । तयोश्च संस्कारकत्वसिद्ध्यर्थं पर्वशब्दः कालपरः उत कर्मपर इति चिन्ता । तत्र यदा कर्मपरस्तदा स्वाङ्गमन्त्रद्वारा संस्कारकता होमयोः । अथ

१. A मन्त्राभिधानार्हम् । २. B अङ्गतया मन्त्रप्रकाश्यत्वं भविष्यतीत्यत्राह ।

प्रकाशकमन्त्रप्रकाश्यः । कथञ्चिदनुष्ठेयोऽपि प्रयोगात्प्राक् स्मार्यते । अत एव कालाभीज्यापक्षे पार्वणहोमयोरसंस्कारतोक्ता नवमे । न चासति सामान्यसम्बन्धे लिङ्गान्न विनियोग इति वाच्यम् । कार्याभिधायिता मन्त्रस्य साधिता न लिङ्गविनियोगः । अतस्तत्कार्यान्वयात् तद्विनियो-

---

कालपरस्तदा तत एव कालस्य प्रयोगावस्थप्रकाशकमन्त्रप्रकाशनानर्हत्वादेव कालस्य पर्वशब्दावाच्यतया अभिज्यापक्षे पार्वणहोमयोः स्वाङ्गमन्त्रद्वारा नियोगीय-कालसंस्कारकता नास्तीत्युक्तं नवम इत्यर्थः ।

इदं चेह वक्तव्यम्—यद्यपि पुरुषमेधे 'रात्र्यै कृष्णं पिङ्गाक्षं' इति रात्रि-देवताकं कर्मास्ति तथापि तस्य पर्यग्निकरणान्ततयोत्स्रष्टव्यत्वात् यांजनामन्त्रस्य च स्वाहान्ततया न तत्कार्यार्थता युक्ता । नापि नक्षत्रेष्टौ अहोरात्रेभ्यः स्वाहेत्ये-तत्कर्मार्थता । तत्र रात्रिमात्रस्य देवतात्वाभावात् । मन्त्रस्य च केवलरात्रिप्रकाश-कत्वात् । न च देवतात्वाधिष्ठानैकदेशप्रकाशनद्वाराऽन्वयः, उत्पत्तिशिष्टमन्त्रान्त-रावरोधात् । अतएव न विकल्पः विषमशिष्टत्वात् । न चानुवाक्यायाज्यात्वेन व्यवस्थया मन्त्रान्वयः उभयोरपि स्वाहान्ततया अयाज्यात्वात् । अतएव रात्र्यै स्वाहेत्येतन्मन्त्रकल्पितविधिनापि नान्वयः । न चैवं यांजनामन्त्रेऽपि रात्रिदेवत्य-कर्मविधिकल्पना वाच्या क्लृप्तस्याष्टकाकर्मणो रात्रिदैवत्यस्य विद्यमानत्वात् । न चानपेक्षत्वार्थमेवमादिकल्पना । न ह्यन्वितत्ववदनपेक्षत्वं व्युत्पत्तिसिद्धमित्युक्त-त्वात् । न चैवमादिमन्त्राणां वाचस्तोमे उपयोगान्न सापेक्षस्मार्तकार्यपेक्षतेति-वाच्यम् । अदृष्टार्थत्वापत्तेः पाठमात्राद्धि तत्रोपयोगः नार्थाभिधानात् । अतः सापेक्षत्वेपि रात्रिदेवताकाष्टकाकार्यार्थतैव यांजनादिमन्त्रस्येति ।

नन्वत्र लिङ्गात् प्रकाश्यरात्रिद्वारा अष्टकाकार्यार्थता वाच्या, न चात्र लिङ्गा-द्विनियोगः सम्भवी । लिङ्गविनियोगस्य सामान्यसम्बन्धपूर्वकत्वात् । न चेह सामान्यसम्बन्धः तत्कारणस्य प्रकरणादेरभावात् । अतः कथमष्टकाकार्यार्थतया सापेक्षत्वेन पूर्वपक्ष इत्यत्राह—न चेति । तत्र हेतुः कार्येति । यद्यत्र लिङ्गविनियोगः स्यात् स्यादेवेयमनुपपत्तिः । इह तु स्मार्तकार्यार्थताऽर्हस्य मन्त्रस्य तत्कार्यपरत्वमेव पूर्वपक्षनिर्वाहकम् । एवं न ग्राहकग्रहणेनापि लिङ्गनियोगः । तच्च स्मार्त-कार्यार्थत्वं प्रकरणाद्यभावेपि अध्ययनविध्याक्षेपबलादेवानुवादकवाक्यानामिव साधितमित्यर्थः । ननु मन्त्रस्यास्य तत्कार्यार्थतैव लैङ्गिकद्वाराऽन्वयाभावे न निर्वह-तीत्यत्राह—अत इति । यतः तत्कार्याभिधायित्वमात्रं पूर्वपक्षोपयोगी न लिङ्ग-विनियोगोऽपि तन्निर्वाहकः । अतस्तत्कार्यान्वयात् तद्विनियोगो यद्युपपद्यते तदा तथाऽस्तु । नोचेन्मास्तु । तत्रानास्था । अप्रामाण्यापादकपूर्वपक्षिणः तन्निर्वाह-गवेषणनिर्बन्धाभावात् ।

गोऽस्तु वा मा वा। नात्रास्था। अतोऽष्टकालिङ्गमन्त्रा इति भाष्यस्थ-समाख्यया सामान्यसम्बन्ध इति व्यर्थम्। पारिशेष्यान्नियोगे सामान्य-सम्बन्धानपेक्षं लिङ्गं विनियोजकमिति च व्यर्थम्। कालरात्रिके वैदिके देवतारूपरात्रिप्रकाशकोऽयं मन्त्रः नेति न पञ्चिकोक्तम्। न च युक्तम्। चतुर्थ्यन्तताद्यभावे न देवतात्वधीः। न च प्रतिनन्दनं देवताया एव[१]

ननु माभूदेवं पूर्वपक्षिणो निर्बन्धः राद्धान्तिनस्तु निर्बन्धोऽवश्यमिति राद्धान्ते कथं तदुपपत्तिः। उच्यते। यांजनामन्त्रस्य क्रमसमाख्याप्रकरणानामन्य-तमस्याप्यभावात् अगत्याऽध्ययनविधिरेव पारिशेष्यादष्टकाकार्यपरत्वमापादयन् तदैदमर्थ्यपर्यन्तमापादयति। अतोऽध्ययनविधिबलादेव सामान्येनाष्टकाकार्यसम्बन्धे सिद्धे पश्चात् लिङ्गात्तदीयरात्रिशेषतया विनियोगो युक्तः। न चायं प्रकारः सर्वत्र वाच्यः। सति गत्यन्तरे अध्ययनविधेः व्यापारगौरवाङ्गीकारायोगात्। अतएव न लिङ्गक्रमाधिकरणविरोधोऽपीति भावः।

अत्र केचित् अष्टकालिङ्गा मन्त्रा इति भाष्योक्तिमात्रात् तादृशीं समाख्या-मुन्नीय तया सामान्येनाष्टकाविनियोगसम्बन्धे सति तत्पूर्वको लिङ्गाद्विनिनियोग इत्यूचुः। यद्वा पारिशेष्यात् सामान्येन नियोगसम्बन्धानपेक्षमेव लिङ्गं विनि-योजकमेवोचुः तदुभयमप्युक्तप्रकारे सति व्यर्थमित्याह–अत इति। यत एवमुक्त-विधया पूर्वपक्षसम्भवः अतोऽष्टकालिङ्गा मन्त्रा इति भाष्योक्तिमात्रस्य मन्त्र-लिङ्गपर्यालोचनादिना अष्टकान्वयपरस्य समाख्यापरत्वकल्पनं व्यर्थम्। तदाहि अष्टकामन्त्रा इत्येवोक्तिः स्यात्। नाष्टकालिङ्गा इति। तथाऽन्यत्रदृष्टलिङ्ग-विनियोगस्वभावं विहाय तद्विरुद्धप्रकारकल्पनं व्यर्थमित्यर्थः।

अत्रकैश्चित् कालरात्रिकवैदिककार्यानन्वये यांजनामन्त्रस्य देवताभूतरात्र्य-भिधानं हेतुत्वेनोक्तं तत् पञ्चिकानुक्तमिति दूषयति—कालेति। नन्वेवमपि तदभिप्रेतं पञ्चिकायामित्याशङ्क्य युक्तिविरुद्धं चेत्याह—न चेति। तत्र हेतुः—चतुर्थ्यन्तेति। स्यादेवं मन्त्रे शक्तित एव देवतात्वधीः यदि च मन्त्रे चतुर्थ्यन्तेन देवतात्वेनाभिमतस्य निर्देशः स्यात्। इह तु तदभावे नैव देवतात्वेनाधिगति-रित्यर्थः। ननु देवतावाचकचतुर्थ्यन्ताभावेपि मन्त्रस्थैकैक[२]पदस्वारस्यात् देवता-रूपरात्रिधीः। तथाहि–प्रतिनन्दन्तीति प्रतिनन्दनं समृद्धिः त्यक्तेन हविषा देवताया एवोचिता। धेनुमिति ईप्सितप्रदत्वेन प्रसिद्धधेनुसादृश्यमत्रान्तरङ्गं यज्ञोपयोगि-त्वेन पत्नीत्वं सुमङ्गलीति फलदानाशंसनं च देवतायामेवोचितमित्यत्राह—न चेति।

१. A देवता २. B योः संस्कारता

न च धेनुता ( न च ) पत्नीत्वं, सानो अस्तु सुमङ्गलीरिति स्तुतयोऽपि देवताया एव, कालरूपाया अपि रात्रेरङ्गत्वात् सा च स्तुत्यर्हैव देवतेव । यापीयं मानान्तरापेक्षार्थतामन्त्रस्य सा अष्टकादिस्मृतेरवेदमूलत्वे तु मूलभूतानपेक्षवेदापेक्षो[1] न मानान्तरापेक्षः ।

## पूर्वपक्षः

पूर्वपक्षस्तु भाष्यकारादिभिरष्टकादिमूलवेदेषु योग्यानुपलम्भात् स्मर्तॄणामपि योग्यानुपलम्भोऽवधृतः । तेन महाजनादृतमपि मन्वादिवाक्यं न वेदमूलकम् । न च आप्तमन्वादिवाक्यं वेदार्थविषयं वेदजप्रमाकार्यं

---

तत्र हेतुः—कालेति । न ह्येतेषां स्वरूपपरता स्तुतिपरत्वात् । तत्परत्वे च यथा देवतायाः अङ्गत्वेन विधेयत्वात् स्तुत्यर्हता तथा कालस्यापि । धेनुता च कालस्यापीप्सितप्रदत्वेन; संवत्सरपत्नीत्वं च कालस्य यज्ञसम्बन्धित्वादेवोचिता । प्रतिनन्दनादेश्च मुख्यस्य देवतायामप्यसम्भव एव । गौणस्य तु कालेऽपि सम्भव इति न मन्त्रलिङ्गात् देवतार्थत्वनिश्चय इत्युक्तविधया कालस्य मन्त्रप्रकाश्यतानर्हतैव देवतार्थत्वनिश्चयहेतुरित्यर्थः । मन्त्रस्य सापेक्षत्वेनाप्रामाण्यार्थं पूर्वपक्षिणा स्मार्तकार्यनिवेशः साधितः । स च सिद्धान्तेऽप्यङ्गीकृत इति तत्राप्रामाण्यापत्तिर्दुर्वारेत्याह—यापीयमिति । स्मृतेर्ह्यवेदमूलत्वे मन्त्रस्य मानान्तरापेक्षता । न वेदमूलकत्वेन । तत्र हि मूलभूतानपेक्षवेदापेक्ष एव मन्त्रो न मानान्तरापेक्ष इत्यर्थः ।

ननु महाजनादृतत्वात् मन्वादिवाक्यानां मानपूर्वकार्थतया प्रामाण्यं सिद्धमेव अलौकिकार्थविषयतया वेदमूलत्वं च सिद्धमिति कथमवेदमूलत्वादप्रामाण्यमिति पूर्वपक्ष इत्यत्राह—पूर्वपक्षस्त्विति । न तावदष्टकादिस्मृतेः प्रत्यक्षो वेदो मूलम्, तादृशस्यास्मदादिभिः कदाचिदप्यनुपलम्भात् । ननु माभूदस्मदादिभिरुपलम्भः स्मर्तृभिस्तु तदुप[2]लभ्य स्मर्यत इत्यत्राह—स्मर्तॄणामपीति। स्मर्तॄणामप्यनुपलम्भो भाष्यादवधृतः "अथ यत्र न वैदिकं शब्दमुपलभन्ते अथ च स्मरन्ती"त्यस्मात् । ननु भाष्यकारेणापि स्मर्त्रनुपलम्भोऽशक्यलक्षणः परबुद्धेः प्रत्यक्षत्वाभावादित्यत्राह—भाष्यकारेति । भाष्यकारादिभिः स्वानुपलब्ध्यैव स्मर्त्रनुपल[3]ब्धियोग्यत्वस्य साधनात् । अतोऽष्टकादिस्मृतेः वेदमूलत्वहानादप्रामाण्यमित्यर्थः । ननु प्रत्यक्षवेदमूलत्वाभावेपि अनुमितवेदमूलत्वमष्टकादिस्मृतेरस्तु माभूदप्रामाण्यमिति न च वाच्यमित्याह—न चेति ।

---

१. A मन्त्रो　　२. B लंभात् स्मर्यते ।　　३. B. लब्धेरशक्यतोक्ता अयोग्यत्वसाम्यात् ।

स्वकारणीभूतप्रमां पक्षधर्मताबलात् वेदजामेवानुमापयति [ इति ] मूलभूतवेदानुमानसिद्धिरिति वाच्यम् । यद्युत्सन्नोऽसौ अनुमेयो वेदः, न तदुत्सादे हेतुः । यथाहि अनन्तचरणाधारत्वात् अहरहरभ्यासे च कृते संस्कारपाटवादिनाऽतिशयादन्यवेदधारणं तथाऽस्यापि स्यात्[1] । अयमपि केषाञ्चिच्छाखिनां शाखान्तर्गत एव । स्वशाखाधारणे चानन्ता मेधाशालिनोऽभियुक्ता दृश्यन्ते । अतस्त्यागानवकाशः । अवकाशे च सर्ववेदव्यवहाराणां हानम् । सर्वाङ्गाधीना हि विधिसिद्धिः त्यक्तवेदोक्ताङ्ग[2]-प्रहाणशङ्कया नानुष्ठानं स्यात् । त्यक्ते च स्मृतेः सङ्ग्रहाशक्तिः । त्यक्ष्यमाणे च मानाभावः । पदवर्णत्यागशङ्कया च वाक्यार्थावगमो न

---

अत्र विप्रतिपन्नं मन्वादिवाक्यं [4]प्रमापूर्वकं आप्तवाक्यत्वात् इत्येवानुमानशरीरं, तदधिकस्तु ग्रन्थः वेदार्थविषयमित्यादिः प्रमायाः पक्षधर्मताबलात् वेदजत्वोपपादनपरो वेद्यः । वेदार्थविषयं वेदैकार्थ विषयं मानान्तरागोचरार्थमिति यावत् । कुतो न वाच्यमित्यत्राह—यदीति । यद्येवमनुमेयो वेदो मूलम् तर्हि असावुत्सन्न एवानुमेयतया उपेयः न नित्यानुमेयः तस्य वेदत्वाभावात् अनाद्यध्ययनपरम्परावर्तिनो वेदत्वात् । [5]तदुपगमे स्मृतेर्वेदजप्रमाकार्यत्वमपि न स्यात् । आनुमानिकप्रमाजन्यत्वानपायादिति भावः । तर्हि उत्सन्नवेदवाक्यानुमानमस्तु इत्यत्राह—न तदिति । यथा ह्यन्यो वेदोऽनन्ताध्येतृसमूहाधारतया अहरहरभ्यासजनितसंस्कारपाटववशात् अध्येतृभिः धार्यते । तथा अस्यापि स्मृतिमूलवेदस्याध्येतृधारणं भवत्येवेति न तदुत्सादे हेतुरित्यर्थः । ननु स्मृतिमूलवेदस्य कथमहरहरध्ययनमित्यत्राह—अयमपीति । ननु स्वशाखागतत्वेऽप्यालस्यमतिमान्द्यादिना उत्सादोऽस्त्वित्यत्राह—स्वशाखेति । इदानीमपि कस्यचिदालस्यादिसम्भवेपि न सर्वेप्यध्येतारः तादृशाः ध्रियमाणस्वभावानां[6] मेधाबलशालिनामभियुक्तानां बहूनामपि दृश्यमानत्वात् । अतः सर्वथा त्यागस्य नावकाश इत्यर्थः । विपक्षेऽनिष्टमाह—अवकाशे चेति । सर्ववेदव्यवहारहाने ज्योतिष्टोमादिसर्ववैदिककर्मानुष्ठानं न स्यादित्यर्थः । तदेवोपपादयति—सर्वेति । किञ्च वेदस्योत्सादे स्मृतिप्रणयनमनुपपन्नम् । किं स्मर्तृभिः स्मृतिप्रणयनात्पूर्वमेवायं वेदस्त्यक्तः त्यक्ष्यमाणो वा ? नाद्यः, मूलाभावे स्मृतिसंग्रहाशक्तेः स्मृत्यन्तरमूलत्वे वा अन्धपरम्परापत्तेः । न द्वितीयः । शाखाविशेषनियतस्य भाविनस्त्यागस्य निश्चेतुमशक्यत्वात्, तदाह—त्यक्ते चेति । ननु अत्यक्त एव त्यागसम्भावनया कथञ्चित् स्मृतिप्रणयनमस्तु इत्यत्राह—पदेति । अत्यक्तात् प्रत्यक्षात वेदात्

---

१. A तत्स्यात् २. प्रधानं A ३. B. लब्धेरवश्यतोक्ता अयोग्यत्वसाम्यात्
४. R. प्रमाकार्यम् ५. B. तदनुगमे । ६. A. अनपह्रियमाण ।

स्यात्। यदप्यापस्तम्बेनोक्तम् (आ. ध. १-१२-१०) अथ ब्राह्मणोक्ता विधयः तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते इति। तदुक्तानुमाने[1] मूलेऽसति अनादृत्यमेव। विप्रकीर्णवेदानुमा न शङ्किता तुच्छत्वात्।

भट्टमतनिरासः

यत्परोक्तं—शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः।

नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न लक्ष्यते ( तं. वा. १-३-२ ) इति।

यदि स्मर्तृभिरपि न लक्ष्यते कथं तन्मूलत्वं स्मृतेः। लक्ष्यते चेत् 'अथ

---

अर्थमवगम्यैव तदर्थसंङ्ग्रहः स्मृत्या कार्यः। तदर्थधीरेव पदवर्णत्यागशङ्कया नास्ति इति तदर्थसङ्ग्रहयत्नः स्मर्तॄणामनुपपन्नः। लौकिकेषु विवक्षया तदर्थधीः। अतो वेदस्योत्सन्नत्वमेव नास्तीति भावः।

ननु उत्सन्नवेदमूलत्वमापस्तम्बोक्तमित्याशङ्क्य तदनुवादपूर्वकं तदनादरणीयत्वमाह-यदपीति। एतन्न्यायमूलमापस्तम्बवचनं, अस्य च न्यायस्य मूलमनुमानम्। तच्चोक्तदोषदुष्टमिति मूलाभावादनादृत्यमेवेत्यर्थः। नन्वत्र परैः पठ्यमानशाखागतान्येव वाक्यानि स्मृतीनां मूलत्वेनाङ्गीकृतानि। तानि च अर्वाचीनैः प्रमाद्यद्भिः तपोज्ञानातिशयाशालिभिरस्माभिः न लक्ष्यन्ते। मन्वादिभिस्तु सर्वन्यायनिरुक्त्यभिज्ञैः अनन्तमेधाबलशालिभिरप्रमत्तैः यत्नलक्षितानि। अतो नानाशाखागततया नानाप्रकरणस्थतया च अर्वाचीनैः दुर्लक्षणां श्रुतिं मन्वादिभिः यत्नेनोपलक्ष्य स्मृतिप्रणयनं कृतम्। अतो विप्रकीर्णवेदस्य मूलतयाऽनुमानं ग्रन्थे किमिति नाशङ्कितमित्यत्राह—विप्रकीर्णेति। तुच्छत्वादिति। आधुनिकानां सर्वेषां न्यायनिरुक्त्यनभिज्ञत्वे अतिशयिततपोज्ञानशालित्वाभावे च प्रमाणाभावात्। भावे वा एतावतो वैदिकात्कर्मणो बहुतरस्य स्मार्तराशेः प्रतिपादको वेदः सर्वेषां प्रच्छन्न इति युक्तिविरोधात्, विप्रकीर्णप्रत्यक्षश्रुतिमूलत्वे च महाजनादृतश्रौतस्मार्तव्यपदेशानुपपत्तिः। तथा आश्रमान्तरेभ्यो गार्हस्त्यस्य प्रत्यक्षवेदविहितत्वेनाधिक्यपरं गौतमवचनं च विरुद्धम्। अतस्तुच्छत्वात् विप्रकीर्णवेदानुमा नाशङ्कितेत्यर्थः।

पराङ्गीकारे साक्षित्वेन तदुक्तं वार्तिकमाह - यत्परेति। न हि विप्रकीर्णत्वमनुपलब्धौ हेतुः विप्रकीर्णानां घटादीनामुपलम्भदर्शनात्। हेतुत्वे वा किं स्मर्तृभिः मन्वादिभिरपि न लक्ष्यते। लक्ष्यते वा ? तत्राद्यमनूद्य दूषयति—यदीति। द्वितीयपक्षे मूलभाष्यानादरदोष इत्याह—लक्ष्यते चेदिति। अयोग्यैरनुपलम्भात् पूर्वपक्षे न्याय-

---

१. उक्तानामनुमानमूले च B　　　　२. M. V वेदमूलता न

यत्र न वैदिकं शब्दमुपलभामहे अथ 'च स्मरन्ति' इति भाष्यं हेयम्। अयोग्यैरनुपलब्धे पूर्वपक्षस्तुच्छः स्यात्। यत्नलक्षितमूलोद्भूत एव राद्धान्तः स्यात्। न नयव्युत्पत्तिः स्यात्। प्रयोगविधिमूलता मन्त्रार्थवादमूलतापि विप्रकीर्णवादमूलतेव हेया। न च मूलान्तरं विनापि पुंवाक्यपरम्परात एव स्मृत्यर्थधीः[1] शब्दार्थसम्बन्धवदिति वाच्यम्। युक्तं हि स्वदृष्टोऽर्थः सम्बन्धमूलं पुंवाक्ये त्वर्थानिश्चय एव।

ननु कार्यधीः स्मृतिवाक्यकरणिका स्वकारणकारणतया सम्बन्धिना वेदवाक्येन व्याप्ता वेदमनुमापयतु। एवं तर्हि वेदकारणत एव स्मृति-

---

व्युत्पत्तिर्न स्यादित्याह—अयोग्यैरिति। प्रयोगविधिरेव स्वान्विताचमनादिस्मार्तस्य निर्मूलतया आभासीभवन् स्वसिद्धये स्वमूलतामाचमनादिस्मृतेरापादयति। यथा कथञ्चिन्मन्त्रमूलता, यां जनामन्त्रस्य रात्रिदेवतास्मारकत्वलिङ्गात् तत्सिद्धयर्थं तद्देवताकयागकल्पनात्। तथा क्वचिदर्थवादमूलता 'धन्वन्निव प्रपा असि' इत्यर्थवादस्य विधेयस्तावकत्वबलात् प्रपाविधिः क्लृप्तः। तन्मूला च स्मृतिरिति। एवं प्रयोगविधिमन्त्रार्थवादमूलता स्मृतीनां किमिति न भवतीत्यत्राह—प्रयोगविधीति। तन्मूलता च तुच्छत्वादेव न युक्ता। सर्वस्मृतिषु एवमभावात्। मन्त्रार्थवादयोरविधायकत्वा[1]च्च। विधिकल्पनायामपि अष्टकादिरूपस्य मन्त्रमूलत्वायोगात्। तथाहि—[2]मन्त्रादीनां कर्मस्वरूपमात्रकल्पने प्रभुत्वं न तु तस्य तत्तदितिकर्तव्यताकल्पनेऽपीति भावः। ननु अस्यार्थस्यायं शब्दो वाचक इति शब्दार्थसम्बन्धावगतौ यथामूलान्तरानपेक्षा अनादिपुंवाक्यपरम्परैव हेतुः तथाऽत्रापि स्मृत्यर्थावगमे स्मृतिवाक्यपरम्परैवानादिमूलं भवतु किम्प्रमाणान्तरेणेति न च वाच्यमित्यत्राह—न चेति। तत्र हेतुः—युक्तं हीति।

युक्तं शब्दार्थसम्बन्धे मूलान्तरानपेक्षत्वम् यस्यार्थस्य वाच्यत्वं पुंवाक्यपरम्परातोऽवगतम् सोऽर्थः स्वेनैव दृष्टः स च प्रमाणान्तर[3]संवादात् सम्बन्धे मूलम्। वाच्यवाचकभावे मूलं वाचकत्वमपि शब्दस्य व्युत्पत्तिसहकृतश्रोत्रग्राह्यमेव। स्मृतिपरम्परायां तु नैवमित्याह—पुंवाक्येत्विति। तदर्थस्य मानान्तरागोचरत्वात् मूलान्तराभावे स्मृतिपरम्परामात्रस्यान्धपरम्परासाम्यान्न ततः अर्थनिश्चय इत्यर्थः। दोषान्तरं वक्तुं लिङ्गान्तराद्वेदानुमानं शङ्कते—नन्विति। स्मृतिवाक्यजनिता या कार्यधीः तस्याः अलौकिकार्थविषयधीत्वात् तया वेदोऽनुमीयताम्। ननु स्मृतिजधियो वेदस्य च सम्बन्धाभावेन व्याप्त्यभावात् कथं तया वेदानुमानमित्यत्राह—

---

१. A. अव्यापकत्वात्। २. B. मन्त्राफलकर्मान्वयस्य। ३. B. संभवात्

वाक्यं कार्यमित्येवं कारणतः कार्यं विज्ञेयम् । तच्च न। अन्यकारणिकापि स्मृतिः चैत्यवन्दनादिका दृष्टा । कथं पटः तन्तुसंयोगकारणकः कारणकारणकुविन्द व्यापारमनुमापयति । तन्न । तन्तुसंयोगव्यवहितव्यापारस्यापि कुविन्दस्य निमित्तकारणताऽन्वयव्यतिरेकगम्या अस्त्येव न तथा कार्यधीकारणं वेदः ।

ननु आप्तवाक्यात् स्मृतिमनुमाय स्मृतितोऽपि कार्यधीरस्तु सा स्मृति-

---

स्वकारणेति । दूषयति—एवं तर्हीति । यदि कार्यधीलिङ्गाद्वेदमनुमापयितुमिच्छति एवं तर्हि भवता एवमुपेयं स्मृतिवाक्यरूपं कार्यं वेदकारणतो जातं, ततः कार्यधीरित्येवं कारणतः कार्यं जायत इति । ततश्च सम्बन्धद्वयाधीनव्याप्तिभेदेनानुमानभेदात् वेदकारणकतयाऽवगतस्मृतिवाक्यपर्यवसायिवेदानुमानं स्यात् । न कार्यधीपर्यवसायीत्यर्थः । नन्वेवमपि वेदानुमानाविघातात् अविहतमेव स्मृतिप्रामाण्यमित्यत्राह——तच्च नेति । तत स्मृतिवाक्यमात्रकारणतया वेदानुमानं न भवति । चैत्यंवन्देत स्वर्गकाम इत्यादिबौद्धस्मृतिषु व्यभिचारात् । न च तासामनाप्तवाक्यतया वेदाननुमा । अतिकारुणिकस्य निरस्ताशयदोषस्य प्रमादभ्रान्तिवर्जितस्य पटुकरणस्य बुद्धमुनेः मन्वादिवदाप्तत्वात । अतो न स्मृतिवाक्यकारणतया वेदानुमा । एतञ्च स्मृतिवाक्यात् कार्यधियमुपेत्योक्तम । वस्तुतस्तु न साऽस्त्येव । पुंवाक्या मूलज्ञानानुमानमेव[1] न तु कार्यधीरिति भावः ।

ननु नेह कार्यधीलिङ्गकवेदानुमानं भेदापादनेन निरसनार्हं पटादिकार्यतः कारण कारणकुविन्दाद्यनुमानस्य लोकप्रसिद्धत्वादिति चोदयति——कथमिति, तन्नेति । नहि तत्रापि कारणकारणतया पटात् कुविन्दाद्यनुमानं, किन्तु कारणतयैव । यद्यपि कुविन्दः पटोत्पत्तौ तन्तुसंयोगव्यवहितव्यापारः तथापि तस्य निमित्तकारणत्वं अन्वयव्यतिरेकसिद्धमस्त्येवेत्यर्थः । नन्वेवं स्मृतिवाक्यव्यवहितव्यापारस्यापि वेदस्य कार्यधीकारणत्वमस्त्वित्यत्राह – न तथेति । स्मार्तकार्यधियो वेदस्य च न तथाऽन्वयव्यतिरेकानुविधानमिति कारणकारणमेव वेदो न कारणमित्यर्थः । यद्यपि वेदस्य कार्यधियं प्रति कारणकारणतैव न तु कारणता तथापि वेदोऽनुमातुं शक्यत एवेत्याशङ्कते—नन्विति । पूर्वं यद्दूषणमुक्तं स्मृतिवाक्यादर्थधीर्नास्त्येवेति तत्तावन्नास्ति स्मृतितो मूलज्ञानानुमानपूर्वकं कार्यधीरस्त्येवेति ।

तथाहि—विप्रतिपन्नं मन्वादिवाक्यं स्वपदस्मारितार्थसंसर्गज्ञानपूर्वकं आप्त-

---

१. नुमानं विना तदसिद्धिरिति भावः । २. A मेयत्वे ।

कारणिकाऽस्तु। स्मृतेस्त्वलौकिकार्थायाः कारणं वेदोऽनुमीयताम्। चैत्यवन्दनादेस्तु वेदमूलतानुपगमात् न वेदानुमानम्। तन्न। मितिसाधनस्य वेदस्य योग्यानुपलम्भात् निरासे कृते मितिनिरासान्न मित्यनुमितिपूर्विका स्मृतितः कार्यधीरिति[1] न तद्बलात् वेदानुमा। न चानुमानैकगम्ये वेदे योग्यानुपलम्भासिद्धेः अस्तु श्रोत्रग्राह्यवर्णात्मकतया शब्दत्वं अपौरुषेय[2]ग्रन्थात्मकतया च वेदत्वम्। किन्तु अनिरूपितनियतरूप-

---

वाक्यत्वात् सम्प्रतिपन्नवत् इति मूलज्ञानमनुमाय ज्ञानं च ज्ञेयाविनाभावीत्यर्थमपि अनुमानान्निश्चित्य पुंवाक्यान्तरवत् स्मृतितोऽपि कार्यधीसम्भवात्। यद्यपि वक्तृज्ञानविशेषणतया अर्थस्यानुमानत एव प्रतीतत्वान्न स्मृतिवाक्यस्य कार्यप्रमितिजनकता, तथापि श्रोतुः स्मृतिवाक्यात् कार्यधीर्जायत एव। किन्त्वसौ मूलमानापेक्षत्वात् नानपेक्षा अनुवादरूपैव। अतस्सा कार्यधीः मूलमानानुमानसहकृत–स्मृतिवाक्यकारणिकाऽस्तु न वेदकारणिकेत्यर्थः। कथं तर्हि वेदानुमानमिति तत्राह–स्मृतेस्त्विति। विप्रतिपन्नं मन्वादिवाक्यं वेदकारणकं अलौकिकार्थत्वात् सम्प्रतिपन्नवत् इत्यलौकिकार्थस्मृतेः कारणतया वेदोऽनुमीयतामित्यर्थः। कथं तर्हि चैत्यवन्दनादिस्मृतिव्यभिचारपरिहार इत्यत्राह—चैत्येति। न हि बुद्धवाक्यानां मूलतया वेदानुमा "पश्याम्यहं भिक्षवो दिव्येन चक्षुषा सुगतिं दुर्गतिं च" इति वाक्यात् योगिप्रत्यक्षमूलतोपगमेन वेदमूलतानभ्युपगमात्। तदङ्गीकृतस्य च योगिप्रत्यक्षस्य प्रमाणबाधितत्वे तन्मूलतयोपगतवाक्यानामनादरणीयतैव नानभ्युपगतं मूलानुमानम्। मन्वादिवाक्यानां तु उपेतवेदमूलत्वानां मूलतया वेदानुमा युक्तेत्यर्थः।

तन्नेति। योग्यत्वे सति अनुपलम्भान्न मूलवेदानुमानसिद्धिरित्यर्थः। ननु स्मृतिमूलवेदस्य नित्यानुमेय[2]तया योग्यानुपलम्भबाधासिद्धिरिति कथं न मूलवेदानुमानसिद्धिरित्याशङ्क्य अनुमितस्यापि तस्य नित्यपरोक्षस्यार्थबोधानर्हतया न स्मृतेर्मूलतया वेदानुमेत्याह—न चेति। सत्यं अनुमानैकगम्यवेदे तद्विषयानुमानस्य योग्यानुपलम्भादसिद्धिर्वक्तुमशक्या, सत्यं चानुमितवेदस्य शब्दत्वम्। श्रोत्रग्रहणार्हत्वात् तदेव च शब्दशब्दप्रवृत्तौ निमित्तं तदर्हत्वं च तादृशकादिवर्णात्मकत्वात्। तथा चानुमितस्य शब्दस्य वेदत्वमप्यस्तु। यद्यप्यध्येयत्वं[3] नास्ति तथापि अपौरुषेयग्रन्थतया वेदत्वम्। तस्यानुमितस्य पुरुषेणार्थविवक्षापूर्वकमुच्चारणाभावादपौरुषेयत्वम्। [4]नह्यध्ययनाद्वेदत्वम्, वेदस्याध्ययनविधेः। न चाध्ययनमपि, तस्यास्वाध्यायत्वात्। स्वाध्यायस्य हि तद्विधिः न चाविहितस्य करणं दुःखरूपत्वात्। ग्रन्थतयेत्यभिधानान्नित्यानुमितस्य विशिष्टैकार्थपरपदसमूहत्वलक्षणवाक्यत्वाङ्गी-

---

१. M कार्यविधि २. रूपतया B ३. B अध्ययनं ४. A नचाध्ययन

पदजातात् नार्थधीः । लिपितस्तु नियतपदानुमितेरर्थधीर्युक्तैव ।

अथ यथा लिपितो वर्णपदधीः तथैव तदर्थशक्तानि पदानि इत्यनुमितौ नियतपदाबोधेपि तुल्यार्थपदद्वयानिश्चयेपि नियतार्थधीदर्शनात् इहाप्यस्तु । वर्णक्रमोऽपि बुद्धिस्थतया पदताहेतुः, अनुच्चारणेपि लिप्यनुमितपद-

---

कारोऽपि सूचितः । न हि पदानामुच्चारणाधीनमेव वाक्यत्वम्, गौरश्व इत्यादाव-भावात । विशिष्टैकार्थपरमेव वाक्यं चोच्चार्यते । न तूच्चारणाद्वाक्यम्, अनुच्चारितकृतश्लोकादिवत् । अत एव नित्यानुमेयस्य शब्दत्वं वेदत्वं वाक्यत्वं चास्तु नाम । तथाप्यनिरूपितनियतरूपपदजातान्नियतरूपमेकरूपं च तत्पदजातं च नियतरूपपदजातं अनिरूपितं च तन्नियतरूपपदजातं च, तस्मादप्रत्यक्षादनिरूपितनियतरूपपदजातान्नार्थधीः । न हि अनुमितवेदे पदविशेषो नियतः । अष्टका अनुष्ठेया, अष्टकाःकार्या अष्टकाःकर्तव्या-इत्यस्यानिश्चितत्वात् । व्युत्पत्तिसिद्धशक्त्यनुसाराद्धि शब्दस्यार्थाववोधकत्वम् । शक्तिश्च लोके पदविशेषनियता सिद्धेति नानिरूपित-पदविशेषादर्थधीरित्यर्थः ।

ननु लिप्यनुमितानां यथा बोधकत्वं तथा लिपिस्थानीयस्मृत्यनुमितानामस्त्वित्यत्राह—लिपितस्त्विति । लिपिदर्शनानुमितः शब्दः पदविशेषतयैव धीस्थ इति ततोऽर्थधीर्युक्ता । स्मृतितस्तु न नियतरूपपदधीः, प्रत्यक्षश्रुतिमूलेषु स्मृतिवाक्येष्वेवान्यथा दर्शनात्, आचारमात्रादपि वेदानुमानाङ्गीकाराच्चेति भावः । पूर्वपक्षीसिद्धान्तिनो मतमाशङ्कते—अथेति । यथा वर्णपदानुमानंलिपितः तथा स्मृतितोऽपि तत्स्मृत्यर्थप्रतिपादनशक्तपदजातानुमानं तावत् सिद्धम् । तत्र यद्यपि नियतपदबोधो नास्ति तथापि वाक्यार्थधीर्युक्ता, अर्थभेदधीशक्त्यवच्छिन्नतयैवावधारणमर्थप्रतीतावुपयुक्तम्, न समस्तव्यावृत्ततयाऽवधारणम्, यथाहि वृषभमानयेति केनचित् प्रत्यक्षमुच्चारितेऽपि वाक्ये किं ऋषभमानयेत्युच्चरितं उत वृषभमानयेति तुल्यार्थपदद्वयानिश्चयेपि श्रोतुः पुंगवप्रतिपादकं तावदनेन प्रयुक्तं नान्यदित्येतावन्मात्रावगमादर्थधीर्दृश्यते । तद्वदिहाप्यस्तीत्यर्थः । ननु उच्चारणाधीनवर्णक्रमस्यापि पदताहेतुत्वात् तदसिद्धौ पदत्वसिद्धिर्नेति कथं वाचकपदात्मकतया वेदानुमानमित्यत्राह—वर्णेति । स्यादेतदेवं यदि वर्णक्रमस्योच्चारणोपधिकतया पदताहेतुता । स तु बुद्धिस्थतामात्रेणापि पदताहेतुः । तत्रोच्चारणाभावेपि लिप्यनुमितपदवत् आनुमानिकेऽपि बुद्धिस्थतया पदताहेतुत्वाविरोधात् अनुमितपदजातेष्वपि वाचकपदत्वमस्त्येवेत्यर्थः । एतच्चाचार्यमतेपि लिङ्गादिनियोजकश्रुतिकल्पने चाध्याहारात् शब्दकल्पने चाङ्गीकृतम् तद्वदस्यन्मतेप्यनुमेयवेदो

वदस्तु। परमतेपि लिङ्गादेव श्रुतिः कल्पिता विशेषतो'ऽनवधारितापि विनियोजिकैवोक्ता; तद्वदिहाप्यस्तु। न च स्मर्तॄणामपि मूलाश्रवणात् जात्यन्धपरम्परामूलमानशून्यस्मृतिवत् अनुमेयस्मृतिमूलतेति वाच्यम्। उक्तं हि--स्मृतिलिङ्गात् वेदानुमितिसिद्धेः अबाधात् रूपस्वरूपे तु चक्षुरेकग्राह्ये जात्यन्धस्य मानं असम्भवान्निरस्तम्। न जात्यन्धस्मृतेरनुमानार्हम्। अथ चक्षुष्मद्वाक्यानुमितजात्यन्धस्मृतं रूपं न तर्हि जात्यन्धपरम्परामात्रात् स्मृतिः। इह तु श्रोत्रग्राह्योऽपि शब्दः कादिवर्णमयः श्रुतिवाक्यसजातीयतया अर्थधीशक्तः अनुमानार्ह इति अन्धपरम्परा-

---

ऽस्त्वित्याह—परमतेऽपीति। ननु जात्यन्धपरम्परायां या मूलमानशून्या स्मृतिः शुक्लं पय इत्यादिका तया तुल्येयमनुमेयश्रुतिमूलता स्यात स्मर्तॄणामपि मूलवेदस्याश्रवणादिति न च वाच्यमित्याह—न चेति। तत्र हेतुः—उक्तं हीति।

यस्मादेवमुक्तं वेदयोग्यार्थस्मृतिलिङ्गात् वेदानुमानसिद्धेः तस्याश्चाध्ययनाभावादिरूपबाधकैर्बाधाभावान्मूलभूतसिद्धिरिति। ततश्च यथा अस्मदादीनां स्मृतितो वेदानुमानं तथा पूर्वपूर्वस्मर्तृभिरपि पूर्वपूर्वस्मृतिलिङ्गात वक्तृभिर्मिति वेदजामेवानुमाय तदर्थस्मरणम्। तस्मादत्र स्मृतिपरम्परया मूलास्मरणेऽपि मध्ये प्रमाणभूतवेदस्य मूलतयाऽनुप्रवेशान्न मूलमानशून्यतेत्यर्थः। जात्यन्धपरम्परायां तु नैवमित्याह रूपेति। जात्यन्धो नाम[1] अजातचक्षुः। रूपस्वरूपं शुक्लादिवर्णः स्वरूपं चक्षुरेकग्राह्यम्। तत्र रूपस्वरूपे चक्षुरेकग्राह्ये जात्यन्धस्य मूलमानं चक्षुरसम्भवान्निरस्तम्। न जात्यन्धान्तरस्मृतेरनुमानार्हमित्यर्थः।

ननु वेदप्रमार्हार्थस्मृतेः वेदमूलत्वानुमानवत् चक्षुः प्रमार्हार्थजात्यन्धस्मृतेरपि चक्षुष्मद्वाक्यं मध्ये निवेश्य तन्मूलत्वेन तदनुमानमस्त्विति शङ्कते—अथेति। उत्तरं—न तर्हीति। चक्षुष्मद्वाक्यामूलकजात्यन्धपरम्परावाक्यसाम्यमेव भाष्ये शङ्कितम्। न तन्मूलकमपीत्यर्थः। नन्वत्रापि श्रोत्रैकग्राह्यत्वाच्छब्दस्य न नित्यानुमेयता। अथ कस्यचिदग्राह्यत्वं तर्हि नित्यानुमेयताहानिः तत्राह—इहत्विति। कादिवर्णमयत्वेन श्रोत्रग्राह्योऽपि श्रुतवाक्यसजानीयतया एतदर्थप्रतिपादकरूपेण कदाचिदपि न प्रत्यक्ष इत्यनुमानार्ह इति [2]जात्यन्धपरम्परावैषम्यमित्यर्थः। अत्र केनचित् जात्यन्धपरम्परावैषम्यमित्यर्थः। अत्र केनचित् औपधिकं रूपं, चक्षुर्ग्राह्यत्वमुपाधिः तादृशरूपस्मृतिर्न जात्यन्धार्हेति वैषम्यमुक्तम्। तद्रूपस्यौपाधिकत्वानुपगमान्न

---

१. प्रभेदतो २. श्रोत्रवत्त्वेन तदर्हत्वादतो।

वैषम्यम् । नन्वेवं चक्षुर्ग्राह्यतोपाधिकरूपतास्मृतेः जात्यन्धानर्हतेति । न ह्यौपाधिकं रूपत्वम् । अनिदंप्रथमा अन्धपरम्परा नेत्यनुमानाऽपेक्षेति नातुल्यता, कृत्वाचिन्तया तुल्यतापादनात् ।

एवं स्थितेपि मन्वादिस्मृतेर्न वेदजा मितिः शक्याऽनुमातुं, वाक्याद्धि मितिमनुमाय मितितोऽर्थं च मितिसाधनवेदानुमा वाच्या । न च तथा वेदाद्धीर्मितिः अनुवादो हि तदा वेदात्, पुंवाक्यादिवेति न मूलानुमानसिद्धिः । न चेदं वाच्यं स्मृतेः मूलासम्भवनिरासाय पूर्वं वेदमनुमाय ततो वेदात् प्रमितिमुत्पाद्य पश्चात् स्मृतितोऽर्थधीः । अतः प्रमाणभूतवेदानुमानसिद्धिरिति । उक्तं हि—अयथार्थत्वशङ्कापगमाय आप्तवाक्यात् मितिमनुमाय मितितोऽर्थं च अयथार्थत्वशङ्कामपास्य पुंवाक्यादर्थधीः । मितिसाधनवेदादर्शनात् बाध्यमानायां मित्यनुमायां नित्यानुमेयं वेदं

---

युक्त मित्याह—नन्वेवमिति । अपरेण तु अनादिजात्यन्धपरम्परैव नास्तीति तदनुपगमेन वैषम्यमुक्तम् । तदपि कृत्वाचिन्तयापि तुल्यतापादनाविरोधादयुक्तमित्याह—अनिदं प्रथमेति । पूर्वपक्षी दूषयति—एवं स्थितेपीति । एवमनुमितवेदस्य सर्वोपपत्तिमत्त्वेपि मन्वादिस्मृतेः वेदजामितिरनुमातुमशक्या । अनुमेयवेदस्य प्रमितिकरत्वाभावात् । कथमित्यत्राह—पुंवाक्यादिति । यस्मात् स्मृतिवाक्यान्मूलतयामितिमनुमाय तस्या अर्थाविनाभावादर्थं चानुमानान्निश्चित्य पश्चान्मितिसाधनवेदानुमा वाच्या । अतः पश्चाद्भाविनो वेदात् तदा या धीः सा धीर्नप्रमितिः किन्तु अनुवादरूपैव वेदाद्धीः पुंवाक्यादिवेति प्रमितिकरत्वाभावान्न मूलतया वेदानुमानसिद्धिरिति भावः ।

ननु न स्मृतिः स्वतन्त्रा पुंवाक्यत्वात् किन्तु मूलापेक्षा, तत्र न चेन्द्रियादिकं मूलं तस्यालौकिककार्ये शक्त्यभावात् नापि स्मृत्यन्तरं, अन्धपरम्परापत्तेः, नापि वेदः अनुपलब्धेः । अतोऽसम्भावितमलत्वान्मित्यनुमानबाधप्रसङ्गे तद्धानाय पूर्वं वेदमनुमाय ततो वेदात् प्रमितिमुत्पाद्य पश्चात्स्मृतेरर्थधीः वेदंजमितिविषयार्थधीः न पुनरनुमानसिद्धार्थधीरिति प्रमाणभूतवेदानुमानसिद्धिरिति न च वाच्यमित्याह न चेदमिति । तत्र हेतुः—उक्तं हीति । व्युत्पन्नपदात्मकात् स्मृतिवाक्यात्तावदर्थधीर्जायते । सा च विमर्शरूपा । तस्याः अयथार्थत्वशङ्कोत्थाप्या तन्मूलजिज्ञासा । अतस्तच्छङ्कापगमाय आप्तवाक्यान्मितिमनुमाय अयथार्थत्वशङ्कामपास्य पुंवाक्यात्स्मृतिवाक्यादेवार्थधीः । ननु मित्यनुमितिः अनुमेयमूलासम्भवात् बाधितैवेत्यत्राह—मितिसाधनेति । तस्यां मित्यनुमायां मितिसाधनवेदासम्भवेन बाध्यमानायां नित्यान-

पक्षधर्म बलात् ( वेदम ) मित्यनुमितौ निवेश्यानुमित्यन्तरतो वा बाधनिराकरणात् दृढीकृते मित्यनुमाने तदर्थे च पुंवाक्यादेवार्थधीपर्यवसाने जाते अनुमितवेदाद्धीरनुवाद एव । न हि पुंवाक्येन श्रोता वक्तृमितिं ससाधनामनुमाय स्वयमनुमितात् योग्येन्द्रियादेः [1]स्वप्रमामुत्पाद्य पुंवाक्यादर्थं वेत्तीति व्युत्पत्तिः ।

एतेन इदं निरस्तम्—मूलवेदासम्भवहेतोः वक्तृज्ञानानुमाने प्रागेव वेदानुमानं वेदादर्थज्ञानं चेत्यतो नानुवाद इति । अस्तु वेदानुमा [2]अग्रे । श्रोतुस्तु ततो नार्थधीः वक्तृधीहेतोरिन्द्रियादेः अर्थमित्यदर्शनात् ।

---

मेय वेदमित्यनुमितावेव पक्षधर्मताबलान्निवेश्य अनुमित्यन्तरतो वाऽवगम्य तावन्मात्रेणैव बाधो निवर्त्यः न त्वनुमितवेदार्थधीनिवर्त्य इत्येवं बाधनिरासात् दृढीकृते मित्यनुमाने मितिविषयार्थेपि निश्चितस्मृतिवाक्यादेवाग्रे प्रवृत्ता या अर्थधीस्तत्पर्यवसाने जाते अनुमितवेदाद्धीरनुवादः न मितिरित्यर्थः ।

ननु मूलासम्भवनिरासहानाय प्रथममेव मूलानुमाने प्रवृत्ते तत एवाग्रे अनुमितद्विदादवधारिततात्पर्यादर्थप्रमितिरस्तु । पश्चाद्वक्तृज्ञानानुमानेन सहायेनार्थधीनिश्चायकं स्मृतिवाक्यमेवानुवादकमस्तु इत्याशङ्क्य प्रत्यक्षपूर्वकपुंवाक्यान्तरेषु श्रोतुः या अर्थधीः तस्या लोके अनुमितेन्द्रियादिमूलमानसाध्यत्वेन व्युत्पत्त्यदर्शनात् अनुमेयवेदस्य प्रमितिकरणत्वहानिर्दुर्वारेत्याह—न हीति । एवं च वक्तृज्ञानानुमाने मूलासम्भवहते ततः पूर्वमेव वेदानुमानं वेदादर्थज्ञानं च । अतोऽनुमेयानुवादो नानुमेयो वेद इति यदन्यै राद्धान्तितं तन्निरस्तमित्याह— एतेनेति । कथमित्यत्राह— अस्त्विति ।

यद्यप्यग्रे वेदानुमा तथापि श्रोतुस्ततो वेदान्नार्थधीः बुभुत्साभावात् । कथं बुभुत्साभावावगतिः ? लोके वक्तृधीहेतोरिन्द्रियादेः श्रोतुरर्थप्रत्येतुरर्थप्रमित्यदर्शनात् । यद्यपि शब्दश्चक्षुरादिवन्न प्रतिनियतबोधजनकः, किन्तु श्रोतरि वक्तरि च धीजनकत्वेन साधारणः । तथाप्यन्यतो निश्चितेऽर्थे न शब्दाद्बुभुत्सा । न चान्यस्यानुमानादेः व्याप्तिग्रहणस्मरणसव्यपेक्षतया विलम्बितत्वात् वेदादेवार्थनिश्चयः, अनुमेयवेदेपि तत्सापेक्षत्वस्य तुल्यत्वात् । प्रत्युतानुमेयवेदस्य व्युत्पत्तिस्मरणसापेक्षं बोधकत्वमिति अतिविलम्बः। किञ्च वक्तृज्ञानानुमानादेव पक्षधर्मताबलादर्थनिश्चये वेदोऽनुवाद एव न प्रमितिकर इति । न च वेदादेवार्थनिश्चयसम्भवेपक्षधर्मतयानुप्रवेशकल्पना न युक्तेति वाच्यम् । ज्ञानस्वभावबलात् पक्षधर्मतया तदनुप्रवेशस्यावश्यकत्वात् । अतोऽनुमितो वेदोऽनुवाद एव न प्रमितिकर इति भावः।

---

१. A स्वयं प्रमामुत्पाद्य २. अत्र

राद्धान्तस्तु—स्मृतितो वेदवेद्यतार्हकार्य(ता)धीः पुंवाक्यान्तरमर्यादया नतु स्मृत्यर्थानुष्ठानदर्शनात् अनुष्ठानगतकार्यधीः पञ्चिकाविरोधात्। नतु अनुष्ठानमादाय चिन्तेयम्। सा जातापि तादृग्धीशक्तस्मरणानुगुण-कारणभूतमितिसाधनवेदादर्शनात् बाध्यमाना दृढतरस्मरणेनैव स्वकारण-कोटिनिविष्टवेदानुमानात् स्थापिता। परोऽपि—

"भ्रान्तेरनुभवाद्वापि पुंवाक्याद्विप्रलम्भनात्।
दृष्टानुगुण्यसामर्थ्यात् चोदनैव लघीयसी॥ इति।

परेण तु नित्यानुमेयना बहुदोषत्वान्नेष्टा। ते दोषाः प्रत्युक्ताः। यदुक्तमनुमेयवेदादनुवादो न प्रमितिरिति। तदपि न। सापेक्षा-

---

राद्धान्तस्त्विति। स्मृतेस्तावत् पुंवाक्यान्तरमर्यादया मूलमानानुमानपूर्वकं वेदवेद्यतार्हकार्यधीर्मानान्तरगोचरानर्हापूर्वरूपकार्यधीर्जायते। स्मर्तृणामाप्त-तमत्वेन प्रसिद्धेरित्यर्थः। अत्र केनचिदनुष्ठातृगता कार्यधीः पक्षीकृता सा न युक्ता पञ्चिकाविरोधात्। प्रथमभाविस्मृतिजनितकार्यधीदार्ढ्यायत्तत्वात् स्मृत्यर्थानुष्ठा-तृगतकार्यधियः। तद्दार्ढ्याय प्राच्या एव कार्यधियः पक्षीकरणार्हभावात् होला-कादिचिन्तानामेवानुष्ठानविषयत्वेन एतच्चिन्तायास्तदभावादित्याह न त्विति। नन्वेवं स्मृतिवाक्यादेव कार्यधीजनने वेदानुमानं व्यर्थमित्यत्राह—सा जातापीति। सा कार्यधीः अनन्यथासिद्धस्मृतिवाक्यबलाज्जातापि तादृक्धीशक्तस्य यादृशी स्मृतिवाक्यजनिता कार्यधीः तादृशधीशक्तस्य स्मरणानुगुणस्य मानान्तरावेद्यार्थ-स्मृतिवाक्यानुगुणस्य कारणभूतमितिसाधनस्य वेदस्य सर्वशाखास्वनुपलब्धेर्बाध्य-माना दृढतरस्मरणेनैव वेदव्यवहर्तृमहाजनपरिग्रहलक्षणदार्ढ्ययुक्तेनाप्तमन्वादि-स्मृतिवाक्येनैव स्वकारणकोटिनिविष्टवेदानुमानात् स्मृतिवाक्यकारणभूता या वेदजा मितिः तज्जनकत्वेन तत्कोटिनिविष्टो यो वेदः तस्यानुमानैकगम्यस्यानु-मानात्स्थापिता निश्चितादृढार्थीकृता। अतो न वेदानुमानस्य व्यर्थतेत्यर्थः।

स्मृतीनां वेदमूलत्वमाचार्यैरप्युक्तमित्याह—परोऽपीति। दृष्टत्वादनुगुणत्वात् सामर्थ्याच्चेत्यर्थः। इयांस्तु विशेष इत्याह—परेण त्विति। बहुदोषात् वर्णविशेषा-निश्चयः तदधीनपदत्वाभावः पदनियतशक्तिनिश्चयाभावः शक्तिनिश्चयाधीन-बोधकत्वासिद्धिः इत्येवमादिबहुदोषादाचार्यैः नित्यानुमेयता नाङ्गीकृता। तेषां दोषाणां पूर्वपक्षदशायामेव प्रत्युक्तेः सैव सिद्धेत्यर्थः। परेणेति तृतीया चिन्त्या। परस्य नेष्टेति सम्यक्। यद्वा इषिरत्रेच्छार्थं विहायाङ्गीकारार्थः। ननु अनुमेय-वेदस्य अनुवादत्वान्न प्रमितिकरतेत्यस्य दोषस्य प्रागपरिहृतत्वात् तदनुवादेन सोऽपि नास्तीत्याह—यदुक्तमिति। तत्र हेतुः सापेक्षेति। अनुवादत्वसाम्येपि न पुंवाक्य-

नुवादे हि न प्रमितिः न दैवादनुवादेपि, धारावाहिकवत्। न हि वेदः पुंवाक्यवदयथार्थत्वशङ्कापगमाय मानान्तरप्रवृत्त्यपेक्षः। किन्तु पुंवाक्यात् स्मृतिरूपात् तदर्थावगमे अन्यतो वेदान्न बुभुत्सतीति न वेदादर्थमितः[1]। यो यदाऽनुमेयवेदस्य प्रमितिशक्तिपरीक्षार्थं वेदादपि बुभुत्सति स तदा- वेदादप्यवैति इति गुरुरहस्यम्। नित्यानुमेये सति च "प्रत्यक्षविधानाद्गा-

---

वद्मानत्वं वेदस्य प्रमितिकरणत्वात् सापेक्षानुवादे हि न प्रमितिः न दैवादनुवादेपि धारावाहिकवदित्यर्थः। ननु अनुवादत्वे सापेक्षत्वं दुर्वारम्। अन्यथा पुंवाक्येपि सापेक्षता न स्यादित्याशङ्क्य तदेवोपपादयति—न हीति। यथा पुंवाक्यं अयथार्थ- त्वशङ्कापगमाय मानान्तरस्य स्मर्तृज्ञानानुमानस्य प्रवृत्तिमपेक्ष्य बोधकं न तथा- ऽनुमितोऽपि वेदः स्वविषयपरिच्छित्तये तन्निश्चयाय वा मानान्तरमपेक्षते। किन्तु प्रत्यक्षवेदस्य ताल्वो[2]ष्ठादिव्यापारापेक्षत्ववत् स्वाभिव्यक्तये मित्यनुमानसहित- स्मृत्यनुमानमपेक्षत इत्यर्थः। ननु मित्यनुमानस्यापि वेदानुमानात्पूर्वमदृढत्वा- न्नार्थनिश्चायकता अनुमिते तु वेदे तेनैवार्थो निश्चित इति कथमनुमितस्य वेदस्य दैवादप्यनुवादतेत्यत्राह—किन्त्विति।

वेदासम्भवात् बाध्यमानं मित्यनुमानं वेदसद्भावमात्रमपेक्षते न वेदादर्थज्ञान- मपि। अतो वेदानुमानमात्रेणैव दृढीकृतमित्यनुमानसहकृतात्स्मृतिरूपात् पुंवाक्याद- र्थावगतौ सत्यां श्रोतार्थस्यान्यतः सामान्यतोऽवगतत्वान्न वेदादर्थं बुभुत्सतीति बुभुत्साय- अभावात् वेदजप्रमित्याकारो न प्रकाशते किन्त्वनुवादतैवेति दैवादनुवादतेत्यर्थः। नन्वनु मेयवेदस्य कदाचिदपि प्रमापकत्वाप्रकाशात् कथं प्रमितिकरत्वनिश्चय इत्याशङ्क्य अनुमेयवेदस्याधीतवेदस्थवाक्याविलक्षणतया तच्छक्तिपरीक्षार्थं श्रोता यदाऽनुमान सामग्र्यपह्नवेन अनुमितश्रुतितात्पर्यावमर्शेन वेदादप्यर्थं बुभुत्सति स तदा बुभुत्सायां सत्यामधीतवेदवाक्यादिवानुमितवेदादपि कार्यरूपमर्थमवैतीति बुभुत्साधीनः प्रमितिकरत्वनिश्चय इत्याह—यो यदेति। नन्वेवं वेदस्यानुवादत्वे कार्यस्य चोदनैक- गम्यत्वरूपमपूर्वत्वं भज्येत। अनुमानसहकृतपुंवाक्यगम्यत्वात् तथा यदृच्छाप्रवृत्तं वेदजज्ञानं विनापि स्मृत्यन्तरोक्तं ज्ञात्वा मनोः स्मृतिप्रणयनसम्भवान्न वेदस्तज्जं च ज्ञानं मूलं स्यात्, तथा अर्थवादनयोक्तपञ्चिकाविरोधोऽपि। पुरुषवचनेभ्यो धर्मशास्त्रकल्पसूत्रसदस्योपदेशादिभ्यो वेदमनुमाय ततो वेदादेवार्थप्रत्ययः नान्य- स्मादिति हि तत्र पञ्चिका। अतोऽनुमेयवेदस्यानुवादत्वमयुक्तमित्यत्राह—इति गुरुरहस्यमिति।

---

१. न वेदाद्धीः   २. A वदनुवादकत्वं।

हंस्थ्यस्यै इति गौतमोक्तिरप्यञ्जसा। न तदध्ययनविधिः अतस्तद-नाम्नानम्। अतोऽनभिव्यक्तेर्न प्रत्यक्षता। न ह्यनभिव्यक्तं प्रत्यक्षं; यदि स्यात् शब्दविस्मरणं न स्यात्। प्रत्यक्षानुवृत्तेः स्मरणानुवृत्तिः न भवेत्। वेदमूलता च स्मृतेः स्मर्तृभिरेवोक्ता "यः कश्चित् कस्यचिद्धर्मः"[१] इति। श्रुतिरपि "यद्वै किञ्चमनुरवदत्तद्भेषजम्" इत्यादिका। बुद्धस्मृतौ तु विपरीतम्। अष्टकादिलिङ्गा मन्त्रा इति च मान्त्रवर्णिकी रात्रिः स्मृत्योक्तेति दर्शनादन्यदपि वेदोक्तमेव स्मृतिष्विति धीः। पूर्वं मन्त्रस्य

---

अयं भावः नहि चोदनैकगम्यत्वं कार्यस्य भग्नमिति अनमितिसहकृतस्मृति-जनिता यापि कार्यधीः सा चोदनयैव स्मृतिप्रकाशितया अनुवादरूपतयापि दृढीकृता। अतएव न मनोः स्मृत्यन्तरतोऽर्थज्ञानमात्रं मूलं निश्चितस्यैव मूलत्व-योग्यत्वात्। निश्चयश्चानुवादरूपवेदादेवेति वेदजमेव ज्ञानं मूलं स्मृतेः अर्थवादनय-पञ्चिकापि निश्चयाभिप्राया। अतएव नयविवेके तदधिकरणे पुंवाक्येभ्योऽपि वेदमनुमायैवार्थनिश्चयादिति। अतो न सङ्कटं किञ्चिदित्यतिरहस्यत्वादस्य अवहितेन मनसा धार्यमिति सुदर्शनगुरोः पादनिन्तरनिषेविभिः सम्प्रदायायातमार्गोऽ-स्माभिः प्रकाशितः। यद्वा सर्वमिदं उपेत्यवचनमात्रम्। वस्तुतस्तु वक्तृज्ञानानु-मानस्य प्रवृत्तस्यापि कारणाभावशङ्कया निवृत्तिः स्यात् अतस्तच्छङ्कापगमाय कारणसम्भवमाकलय्य वेदजज्ञानमेवानुमेयम्[२]। ततश्चानुमिताद्वेदादेवार्थनिश्चयः स्मृतिवाक्यप्रवृत्तिं तिरोधाय वेदस्यैवाग्रे प्रवृत्तत्वात् वक्तृधीहेतोरप्यनुमेयवेदस्य वक्त्रेकनियतत्वाभावात् बुभुत्सानुसारतः श्रोतुरर्थधीर्युक्ता। ततश्च स्मृतिवाक्यमेव सानुमानमनुवादकं नानुमेयो वेद इति। नित्यानुमेयवेदमूलत्वे च स्मृतेर्गौतमोक्ति-रप्यञ्जसेत्याह—नित्येति। ननु तुल्ये वेदत्वे प्रत्यक्षाप्रत्यक्षविभागोपगमे को हेतुरि-त्यत्राह न तदिति। नित्यानुमेयवेदस्यास्वाध्यायस्य प्रकृताध्ययनस्य विध्याभावाधी-नाम्ना[३]ननिवृत्तिहेतुकानभिव्यक्तेरप्रत्यक्षत्वमनभिव्यक्तस्यप्रत्यक्षत्वायोगादित्यर्थः। विपक्षेऽनिष्टमाह—यदिति। एतेन विस्मरणमुपपद्यत इति भाष्यं व्याख्यातम् मन्वादि स्मृतीनां वेदमूलत्वं स्मृतेरर्थवादश्रुतेश्चावगतं बुद्धस्मृतेस्तु नैवमित्याह—वेदमूलता चेति। लिङ्गदर्शनादपि स्मृतीनां वेदमूलतैवेत्याह—अष्टकेति। यांजनामन्त्रलिङ्गाव-गतरात्रेः स्मृत्युक्तिदर्शनात् अन्यदपि स्मृतिषु दृष्टं वेदोक्तमेव द्योतितं भविष्यती-त्यर्थः। नन्वप्रामाण्यहेतुतयोक्तमेव कथं प्रामाण्यहेतुत्वेनाप्युच्यत इत्यत्राह—पूर्वमिति। मन्त्रस्मृत्योरैक्यं स्मृतेर्वेदमूलत्वाभावे मन्त्राप्रामाण्यापादकम्। वेदमूलत्वे-

---

१. मनुना परिकीर्तितः। स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः (म. स्मृ.)।

२. B. वेद एवज्ञानकरणतयाऽनुमेयः। ३. B. भावादिना आम्नान।

सापेक्षार्थत्वं स्मृत्यैकवाक्यत्वेनोक्तम् । इदानीं स्मृतेः तदेकवाक्यतया वेदमूलतोक्ता । गुर्वनुगमनादिस्मृतेः यद् दृष्टमूलत्वमुक्तं न तत् तदङ्गकाध्ययनविधेः मानान्तरापेक्षत्वावहम् । अङ्गता हि न दृष्टमूला किन्तु वेदमूलैव सा । दृष्टद्वारतामात्रमवघातादिवद्विधेः अनुमतमिति दृष्टमूलता । हेतुदर्शनादवेदमूलतां तु वक्ष्यति ।

विवरणे त्वधिकम्—प्रयोगविधेः स्मार्ताचमनादिविशिष्टत्वात् विशेषणांशे मानान्तरापेक्षता । न चानिदंप्रथमस्मृत्युपस्थापितविशेषणहानमनपेक्षत्वार्थम् । न हि प्रयोजनानुरोधात् मानान्तरावगताङ्गहानम् ।

---

त्वन्यतः सिद्धे तदेव तदर्थावगमे हेतुर्भवत्येवेति पक्षद्वयेऽपि तदुक्तिर्युक्तेत्यर्थः ।

ननु स्मृत्युपस्थापितनियमाचाराणां दृष्टार्थत्वादेव प्रामाण्यमिति भाष्ये गुर्वनुगमनादिस्मृतेर्मानान्तरमूलानुष्ठानतोक्ता । सा न युक्ता तदङ्गकाध्ययनविधेःमानान्तरापेक्षत्वेनाप्रामाण्यापत्तेरित्यत्राह—गुर्वनुगमनेति । कुतो न मानान्तरापेक्षतावहमित्यत्राह—अङ्गता हीति । अपूर्वसाधनत्वरूपस्याङ्गत्वस्य मानान्तरावेद्यत्वात् वेदैकगम्यत्वमेव । तदाश्रित्य गुर्वनुगमनादेरवघातादेरिव द्वारकार्यत्वमात्रं दृष्टमभ्युपेतमिति तदंशे दृष्टमूलता युक्तेत्यर्थः । नन्वत्र दृष्टकार्यस्यापि वेदमूलत्वोपगमे कथमुत्तराधिकरणे हेतुदर्शनादवेदमूलत्वमुच्यत इत्यत्राह—हेतुदर्शनादिति । विवरणे त्विति तत्र हि पूर्वपक्षे प्रयोगविधिमन्त्रार्थवादात्मकत्रिविधवेदस्य स्मार्तान्वयमुखं प्रामाण्यमुच्यते न केवलं गृहत्यामिव मन्त्रमुखमित्यधिकमित्यर्थः । तत्र कथं प्रयोगविधिमुखमप्रामाण्यमित्यत्राह—प्रयोगेति । सर्वस्यापि वैदिकपदार्थस्य प्रयोगापादकादधिकारविधेः आचान्तेन कर्तव्यं इत्यादि प्रयोगाङ्गाचमनादिपदार्थविशिष्टत्वात् विशेषणांशे स्मृतिमूलमानान्तरापेक्षत्वादप्रामाण्यमित्यर्थः । ननु चोदनास्वभावप्राप्तानपेक्षत्वाबाधार्थं स्मृत्युपस्थापिताङ्गमेव त्यज्यतामित्यत्राह—न चेति । न हि चोदनानामनपेक्षत्वं स्वभावतया मानान्तरप्राप्तम् किन्तु सापेक्षत्वापादकहेत्वसिद्धिप्रयोजनमात्रतया प्राप्तम् । न च प्रयोजनानुरोधात् प्रामाण्यावगताङ्गान्वयहानं युक्तमित्यर्थः । अत्र केनचिद्विशेषणहानशङ्कायां अन्यथासमाधिरुक्तः । आचमनमपि वेदोक्तमेव प्रयोगविधिविशेषणं, तदितिकर्तव्यतारूपाङ्गस्पर्शनादिनियममात्रं स्मार्तं तदपेक्षयैवाधिकारविधेरनपेक्षताऽक्षतेर्न विशेषणभूताचमनाङ्गहानमिति । स न युक्तः । दीपशिखाविरोधादित्याह—नत्विति । तथा मन्त्रस्य स्मार्तान्वयमुखमपि चोदनानां सापेक्षत्वमित्याह—यांजनामन्त्रोऽपीति ।

अत्र दीपशिखायां यांजनाः प्रतिनन्दन्तीति वैदिकमन्त्रवाक्यं क्वचित् कर्मणि

न त्वाचमनं वेदोक्तम् तदितिकर्तव्यता स्मार्तापेक्षया विशेषणं हेयमिति समाधिः दीपशिखाविरोधात् । यदाह—'न चाचमनं कार्यमिति साक्षाद्वेदोऽस्ति' इति । यां जनामन्त्रोऽपि स्मार्तरात्र्यपेक्षः । रात्रिदेवताप्रकाशको मन्त्र इति यदुक्तं तत् कालस्य रात्रिमन्त्रप्रकाशनानर्हत्वात् पारिशेष्यात् देवतात्मकरात्रिवाचित्वात् । 'धन्वन्निव प्रपा असि' इत्यनुवादोऽपि[1] स्मार्तप्रपापेक्षः । तदेवं त्रिविधं स्मार्तमुखं [ अ ] प्रामाण्यं न वेदभागोत्थमिति भाष्यं "एवं तावत् कृत्स्नस्य वेदस्ये"ति व्याख्यातम् । न तु भाष्ये स्मृतिमात्राक्षेपः यदाह—"अथ यत्र न वैदिकं शब्दमुपलभन्ते अथ च स्मरन्ति एवमयं पदार्थोऽनुष्ठेय" इति । एवं वैदिकाकाङ्क्षोक्ता । सा च स्मृतिषु वैदिकस्यैवेति तदलाभे चापरिपूर्णं वैदिकं वाक्यमिति न प्रमाणमिति तात्पर्यम् । राद्धान्ते नाधिकम् । तत्तु नानुभवनं इति भाष्यम् ।

---

समवेतां रात्रिं देवतारूपां प्रकाशयत् प्रामाण्यं प्रतिपद्यत इत्युक्तम्, तदेतदधिकरणादौ (एव) स्वोक्तेन विरुद्धमित्याशङ्क्य तदनुवादेन तात्पर्यमाह—रात्रिदेवतेति तथाऽर्थवादेन स्मार्तानुवादाच्चानपेक्षत्वहानिरित्याह—धन्वन्निवेति । ननु च 'एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तं' इत्यादिभाष्यालोचनया स्मृतिमात्रविषयोऽयं प्रामाण्याक्षेप इत्याशङ्क्य स्मार्तमुखं वेदस्याप्रामाण्यं न पूर्ववत् वेदभागोत्थमिति मुखमात्रपरतया स्मृतीनां वेदमूलत्वापह्नवेनाप्रामाण्योक्तिर्न स्मृतिमात्राक्षेपपरतयेति भाष्यतात्पर्यमाह—तदेवमिति । एवंपरत्वं भाष्यस्य कुतोऽवगतमित्यत्राह—यदाहेति । यस्मादेवमाहेत्यर्थः। ननु 'न वैदिकं शब्दमुपलभते अथ च स्मरति' इत्यादि भाष्यस्य कथं तद्गमकत्वमित्यत्राह—एवमिति । वैदिकोपलम्भनिषेधो हि तत्प्रसक्त्यपेक्षः । प्रसक्तिश्च आकाङ्क्षाप्रसूतेति वैदिकोपलम्भनिषेधमुखेन वैदिकाकाङ्क्षोक्तेत्यर्थः। ततः किमित्यत्राह—सा चेति। स्मृतिषु वैदिकशब्दाकाङ्क्षापि प्रयोगविधिमन्त्रार्थवादात्मकत्रिविधवैदिकस्यैव नान्यस्येति वैदिकस्यैव वैदिकशब्दाकाङ्क्षा । तस्य वैदिकशब्दस्यालाभे साकाङ्क्षत्वेनापूर्णत्वान्न स्वस्वार्थनिष्ठत्वमिति त्रिविधस्यापि पदस्याप्रामाण्यमिति भाष्यतात्पर्यमित्यर्थः । राद्धान्तविधा तु बृहत्युक्तैव नाधिकेत्याह—राद्धान्त इति ।

भाष्यव्याख्यायां केवलमाधिक्यं तद्दर्शयितुं व्याख्येयं भाष्यमनुभाषते—तत्त्विति । नन्वनेन भाष्येण किं निवर्त्यते न तावदनुभवनमात्रं प्रमाणमात्रस्यानिवर्त्यत्वात् वेदस्य प्रमाणमूलतयाऽङ्गीकार्यत्वादित्याशङ्क्य वेदातिरिक्तं सर्वमित्याह—

१. M अर्थवादोऽपि

अनुभवनं वेदादतिरिक्तं मानान्तरं तद्वेदार्थकार्यधीशक्तस्मरणाननुगुणत्वाद्धेयम्। ननु अन्वयव्यतिरेकगम्यमष्टकादिकर्म पुष्टिफलकमिति जन्मान्तरानुभवार्हम् । जातिस्मरता च लोकानुभवात् सिद्धेति अनुगुणमनुभवनमपीति । अत्र भाष्यम्—'जन्मान्तरानुभूतं च न स्मर्यते' इति । जन्मान्तरानुभवो हि साध्यसाधनत्वेन तन्न स्मर्यते, स्मृत्या नोच्यते; किन्तु अपूर्वं स्मृत्यर्थः । तन्नेहामुत्र वाऽनुभवार्हम् । वेदार्थता च स्मृतेः स्मर्तृभिरेवोपेता । कर्तृसामान्यमेकाधिकारिता, कर्त्रैकता हि एकप्रयोगत्वे । तच्चैकाधिकारित्वे । अतस्तदेव कर्तृसामान्यादिलक्षितं एकाधिकारत्वम् । तच्च स्मार्ताचमनादेः अङ्गत्वेनाष्टकाकर्मणो मन्त्राङ्गित्वेन । अतः स्मार्तेऽप्यपूर्वपर्यन्ततया वेदानुमानसिद्धिरिति । अष्टकायां प्रयोगविध्यनुमा आचमने उत्पत्तिविध्यनुमा आचमनक्रियाविध्यनुमेत्यर्थः । कर्तृसंस्कारो हि न विध्यन्तरम् । मन्त्रस्य

---

अनुभवनमिति । अत्रापरं भाष्यं—'जन्मान्तरानुभूत च न स्मर्यत' इति तद्व्याख्यातुं तन्निवर्त्यां शङ्कामाह—नन्विति । मानान्तरस्यापि स्मृत्यानुगुण्यमस्त्येव, अष्टकाकर्म तावत् पुष्टिफलकमित्यन्वयव्यतिरेकगम्यम् । तच्च साध्यसाधनत्वं जन्मान्तरानुभवनार्हं तदनुभूतं च लोके प्रसिद्धजातिस्मरतयेह जन्मनि स्मर्यते । तन्मूलकं च स्मृतिप्रणयनमिति मानान्तरमपि स्मृत्यनुगुणमेवेत्यर्थः । तदुत्तरत्वेन भाष्यमवतारयति—अत्रेति । अस्यार्थमाह—जन्मान्तरेति । साध्यसाधनभावो जन्मान्तरानुभूतः स न स्मर्यते । सोऽर्थः स्मृत्या नोच्यते । स्मृतिवाक्यस्य तत्रासामर्थ्यात् किन्त्वपूर्व एव सविधिकस्य स्मृतिवाक्यस्य प्रत्यक्षश्रुतिवाक्यस्येव सामर्थ्यात् । तच्चापूर्वमिहास्मिन् जन्मनि अमुत्र जन्मान्तरे वा नानुभवार्हं न मानान्तरवेद्यतार्हमिति न मानान्तरं स्मृत्यनुगुणमित्यर्थः । यथोक्तापूर्वार्थता च स्मृतेस्तत्कर्तृभिरेव यः कश्चिदित्यादिनोपेतेत्याह—वेदार्थता चेति । वेदतुल्यार्थतेत्यर्थः । कर्तृसामान्यादितिवदता सूत्रकारेण जैमिनिना स्मृतेरपूर्वार्थतैव सूत्रितेत्याह—कर्तृसामान्यमिति । ननु कर्तृत्वाधिकारित्वयोर्भेदात् कथं कर्तृसामान्यादित्येकाधिकारितोक्तिरित्यत्राह—एककर्तृतेति । कारणे कार्योपचारात् एकाधिकारित्वमेव कर्तृसामान्यादिति लक्षितं सूत्रे इत्यर्थः । नन्वेवमप्यपूर्वपर्यन्ततया कथं तदर्थतेत्यत्राह—तदेवेति । कुत्र को विधिरनुमेय इति सन्देहे भेदं ग्रन्थोक्तमाह—अष्टकायामिति । नन्वाचमने उत्पत्तिविध्यनुमोक्तिर्न युक्ता कर्तृसंस्कारतया विध्यनर्हत्वादित्यत्राह—आचमनेति । नन्वष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्त इत्यनेन पूर्वोक्तात् किमधिकमुच्यत इत्याशङ्क्य लिङ्गदर्शनार्थं पुनस्तदुक्तिरित्याह—मन्त्रस्येति। ननु भाष्ये ये दृष्टार्थास्ते तत एव प्रमाणमिति दृष्टार्थगुर्वनु-

प्रयोगविध्यपेक्षायां अष्टकैक्ये स्थिते शेषभूतमन्त्रात् शेषिभूतविध्यनुमेति लिङ्गदर्शनसिद्धिः। गुर्वनुगमनादौ गुरुप्रीत्यर्थस्यावघातादिवत् प्राप्तेर्नोत्पत्तिविधानम् नियममात्रार्थं विधानमस्तु। प्रपादौ च परोपकारः कर्तव्य इति विधिप्राप्तेः नियममात्रे विध्यनुमा।

## ॥ २ ॥ विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥

यदि स्मृतेर्वेदानुमा तर्हि प्रत्यक्षश्रुतिविरुद्धाया अपीति अनुमेयप्रत्यक्षश्रुत्योः परस्परव्याघातादप्रामाण्यं इति सङ्गतिद्वयं पूर्वपक्षबीजं च। ननु तुल्यत्वे विकल्पः, अतुल्यत्वे तु अनुमेयबाधो न त्वन्योन्यव्याघातः। तन्न,

---

गमतादेरवेदमूलतैवोक्तेत्याशङ्क्यावघातादिवदनुष्ठानप्राप्तिमात्रविवक्षया तदुक्तिनं नियमविध्यभावाभिप्रायेणेत्याह—गुर्वनुगमनादाविति। प्रपादावप्येवमेवेत्याह—प्रपादौ चेति। यद्यपि प्रपातटाकादिविधेः अनन्याङ्गत्वं तथापि तस्य स्मार्तविधेः परस्मा उपकर्तव्यमित्यादि प्रत्यक्षविहितपरोपकारविशेषविषयत्वात् तद्विधिप्राप्तविषयत्वे स्वविषयनियमपरत्वस्यैव युक्तत्वान्नियममात्रविध्यनुमेत्यर्थः।

## ॥ २ ॥ विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥

अत्र प्रत्यक्षश्रुतिविरुद्धविषयाः स्मृतयः उदाहरणम्। यथा 'औदुम्बरीं स्पृष्ट्वा उद्गायेत्' इति श्रुतिविरुद्धा "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिरित्याद्या। तत्र चिन्ता-किमनुमेयप्रत्यक्षश्रुत्योः परस्परव्याघातादप्रामाण्यं उत नेति। तदर्थमियं चिन्ता-किं विरोधविषयेपि स्मृतेर्वेदानुमानं सम्भवति उत नेति। तत्राध्यायसङ्गत्यवान्तरसङ्गतिपूर्वपक्षबीजान्याह—यदीति। यद्यपि भाष्यादापातप्रतीत्या प्रत्यक्षश्रुतिविरुद्धस्मृतिमात्रविषया प्रामाण्याप्रामाण्यपरा चिन्ता भाति। तथापि तत्प्रामाण्यं मूलवेदानुमानापेक्षं, तदनुमानं च प्रत्यक्षानुमेयश्रुत्योः व्याघातफलकमिति व्याहतचोदनाया अप्रामाण्ये तत्सामान्यात् कृत्स्नाप्रामाण्ये प्रतिज्ञाक्षेपादध्यायसङ्गतिः। पूर्वनयात् श्रुत्यनुमानोत्थितेरवान्तरसङ्गतिः। प्रत्यक्षश्रुतिविरुद्धाया अपीति। श्रुतिविरोधस्य श्रुत्यनुमानोत्पत्तिप्रतिबन्धकत्वाभावोक्तेः अवान्तरसंगतिः पूर्वपक्षहेतुश्चोक्त इत्यर्थः। नन्वयं व्याघातोऽनुपपन्नः यद्यनुमेयश्रुतिः प्रत्यक्षश्रुत्या तुल्यबला तदा तदर्थयोर्व्रीहियवयोरिव विकल्प एव। अथातुल्यबला तदा अनुमेयश्रुतेर्बाधान्न व्याघात इति चोदयति—नन्विति।

तन्नेति। यद्यप्यनुमेयश्रुतिः प्रत्यक्षश्रुतेर्विलम्बिनी तथाप्यनन्यथासिद्ध्यावश्यकत्वाभ्यां तुल्यप्रमाणभावतया तुल्यबला। एवं तुल्यबलत्वेपि न विकल्पः

अन्योन्याश्रयापातात्। तुल्यं हि विरुद्धद्वयं युगपदुपस्थितमिति[1] विकल्पार्हम् यथा षोडशिग्रहणाग्रहणादि। न च ग्रहणप्रसक्तिपूर्वकं[2] अग्रहणमिति अयुगपद्भाविता वाच्या। द्वयोर्हि प्रत्यक्षश्रुत्योरेकदैवोपस्थितेः तथैव स्वरूपद्वयं क्रत्वर्थमन्योन्यविरुद्धत्वात् विकल्प्यानुष्ठेयम्। न तु विधिनिषेधरूपशब्दद्वयं क्रत्वर्थं, अङ्गविधिरनुवाद एव। यतः प्रयोगवचनादेव विधिनिषेधतेति न ग्रहणप्रसक्त्यपेक्षमग्रहणम्। विरोधस्तु

---

तदनर्हत्वात्। तुल्यसामग्रीकं हि विरुद्धद्वयं युगपदुत्थितमिति युगपद्ग्राहकापूर्वसम्बन्धित्वेनोपस्थितत्वात् विकल्पार्हं इति हेतोः। यथा षोडशिग्रहणाग्रहणादि अतिरात्रे षोडशिनं गृह्णातीति ग्रहणं नातिरात्रे षोडशिनं गृह्णातीति अग्रहणम्। आदिशब्दादुदितानुदितहोमपरिग्रहः। ननु ग्रहणाग्रहणयोरपि विकल्पो न युक्तः अग्रहणस्य ग्रहणप्रसक्तिपूर्वकत्वेन युगपदुपस्थितत्वायोगादिति न वाच्यमित्याह— न चेति। तत्र हेतुः—द्वयोरिति। ग्रहणाग्रहणोपस्थापकवाक्ययोः द्वयोरपि प्रत्यक्षश्रुतत्वेनान्यतरविलम्बाभावात् युगपदेव ग्रहणस्वरूपमग्रहणस्वरूपं चोपस्थितमिति यथा स्वरूपोपस्थिति च ग्राहकान्वयात् तदैव युगपदेव स्वरूपद्वयं क्रत्वर्थं क्रत्वपूर्वार्थम्। अतः स्वरूपावगमे ग्राहकान्वयेपि न विलम्बः। न च विनियोगदशायां विलम्बः। ग्राहकान्वये तत्स्वरूपयोरेव द्वारे विनियोगात्। न चैवमनुष्ठानेऽपि यौगपद्यापत्तिः स्वरूपद्वयस्यान्योन्यविरुद्धत्वात्। विकल्प्यानुष्ठानस्य विधिनाऽपादितत्वादित्यर्थः।

ननु गृह्णाति न गृह्णातीति विधिनिषेधरूपयोरेव उपस्थितत्वात् तयोरेव क्रत्वङ्गत्वम्। तत्र निषेधस्य कृतिसाध्यतया लिङा प्रतीतिः निषेध्ये प्रवृत्तं पुरुषं प्रत्येव, अन्यथा प्रागभावरूपस्य तस्य सिद्धतया कृतिसाध्यत्वायोगात्। षोडशिग्रहणे च निषेध्ये प्रवृत्तिर्न रागतः। किन्तु विधित एवेति विधिवाक्यापेक्षैव निषेधवाक्यार्थावगतिरिति कथं युगपदुपस्थितिरित्यत्राह—न त्विति। विधित्वं हि प्रवर्तककार्यत्वं निषेधत्वं च निवृत्तिविषयकार्यत्वम्। न च तेन रूपेण द्वयं क्रत्वर्थम्। किन्तु ग्रहणाग्रहणस्वरूपद्वयं अङ्गविधीनामनुवादशङ्काकुण्ठितशक्तितया प्रथमं कार्यप्रतिपादनाशक्तेरनुवादकत्वादित्यर्थः। कुतस्तर्हि तद्रूपप्राप्तिरित्यत्राह— प्रयोगवचनादिति। निगमयति—इति न ग्रहणेति। यत एवाग्रहणस्वरूपमात्रमङ्गं न निषेधस्वरूपं, तस्य वाक्यानुमेयत्वात् अतो न ग्रहणप्रसक्त्यपेक्षमग्रहणमित्यर्थः। नन्वेवं स्वरूपमात्रेऽवगते प्रवृत्तिनिवृत्यप्रतीतेः कथं विरोधः? येन विकल्पः स्यादित्यत्राह—विरोधस्त्विति। षोडशिपात्रं तावदेकम्। तत्र ग्रहणाग्रहणयोर्भावाभावयोः युगपत्सम्पादनाशक्तेः विरोध इत्यर्थः। प्रत्यक्षश्रुतत्वेपि ग्रहणाहणयोः

---

१. A उपस्थापितमिति २. M प्रसक्त्यपेक्षं

एकपात्र[1] विषयद्वयायोगादिति दिक्।

यत्र तु क्रमोपस्थितद्वयं विरुद्धं तत्र [2]चरमबाधे स्थिते व्याघातो दुर्वारः। पूर्वमनुपसञ्जातविरोधि न विकल्पार्हम्। अपरमपि अवश्यंभाविपूर्वाबाधादशक्यम्। पूर्वमपि परबाधकं तुल्यशक्ति। न च "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इत्यस्यायं विषयः येन प्रत्यक्षतः श्रुतेर्बाध एव स्यात्। तत्र हि एकैकशोऽपि नैमित्तिकद्वयं सावकाशमिति क्वचित्पूर्व-

---

युगपदुपस्थानमयुक्तम् अग्रहणस्य ग्रहाणाभावरूपतया प्रतियोगिभावधीपूर्वकत्वनियमादेकदा प्रतीत्ययोगादिति शङ्का दिक्पदनिवर्त्या।

निवृत्तिस्तु पदार्थप्रतीतिविलम्बमात्रं न ग्राहकान्वयेपि विलम्बावहम्। किञ्च स्ववाक्य एव प्रतियोगिनो ग्रहणस्य न गृह्णीयात् इति धातुनोपादानात् न वाक्यान्तरतस्तत्प्रतीत्यपेक्षा। अभावस्य प्रतियोगिप्रतीतिमात्रमपेक्षितम् न तु तत्प्राप्तिरपि। अन्यथा नान्तरिक्षे न दिवीत्यादिनित्यानुवादचयननिषेधादेः प्रतीतिरेव न स्यात्। अत्यन्तमप्राप्तेः। अतो युगपदुपस्थितत्वात् ग्रहणाग्रहणयोर्विकल्पः। या पुनः पर्युदासनयपूर्वपक्षे आर्षेयवरणावरणयोरतुल्यप्रमाणशिष्टयोरपि विकल्पोक्तिः, सैवं, नार्षेयं वृणीत इति निषेधोऽयं प्रयोगवचनापादितनिषेधभावो वरणे वैकृतापूर्वान्विते युक्तो नान्यथा। अप्रत्यक्षत्वात्। तत्र न समुच्चयः। अप्रयुक्तेः। नापि सर्वथा बाधः रागतोऽप्रवृत्तेः। अतः प्रवृत्तिनिवृत्त्योर्विषमशिष्टयोरपि 'न ब्रह्मा सामानि गायति' इति वदगत्या विकल्पः। अवगतनियोगान्वयबलात्। अत एव तत्र तन्निरासात् पर्युदासता। एवं सर्वत्र विषमशिष्टविकल्पशङ्कायां वेद्यमिति। इह तु प्रत्यक्षश्रुत्यनुमेयश्रुत्यवगम्ययोः क्रमोपस्थितयोर्नैवमित्याह—यत्रेति। ननु चरमस्यावश्यकत्वे विकल्प एव किं न स्यादित्यत्राह—पूर्वमिति। पूर्वस्यानुपजातविरोधिनो नातुल्योत्तरेण विकल्पार्हता। ग्राहकसमये विरोध्यन्तराप्रतीतेः। तदैव सर्वप्रयोगान्वयावगमादित्यर्थः।

नन्वेवं अनुपजातविरोधिनः पूर्वस्य बाधोऽपि न युक्त इति कथं व्याघात इत्याशङ्क्य पूर्वापरयोरन्योन्यबाधकत्वेन व्याघातमाह—अपरमिति। नन्वेवमपि क्रमप्राप्तविषयत्वात् पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् इति नयात् प्रत्यक्षश्रुतिबाध एव युक्त इत्यत्राह—न चेति। तत्र हेतुः—तत्र हीति। तत्रोद्गातृप्रतिहर्तृविच्छेदनिमित्तकयोः अदक्षिण सर्वस्वदानशास्त्रयोः एकैकशः केवलोद्गात्रपच्छेदवत्प्रयोगे केवलप्रतिहर्त्रपच्छेदवत्प्रयोगे च सिद्धप्रमाणभावत्वात् क्वचित्प्रयोगे निमित्तद्वये सति नैमित्तिकयोः समुच्चायानर्हयोः अवश्यंभाविनि अन्यतरबाधे न्यायानुसारात्पूर्वबाधेऽपि न

---

१. पात्रे द्वया २. मावाध A

बाधेपि न सर्वथा बाधः। न त्वेवं, व्याघातः विधौ, अन्योन्यव्याघातः प्रत्यक्षश्रुतयोरपि। स तु विकल्पादपास्यः। इह स्थायिसिद्धान्तेन बाधादिनेति। एवं तर्हि व्याघातो राद्धान्तात् प्रागदृढ एव विकल्पापास्यत्वात्। न चैवं व्याघातविधा-वेदानुमानसिद्धान्तात् तद्विरोधिश्रुत-वेदाप्रामाण्यशङ्कारूपो व्याघातः। अनपेक्षतया कृत्स्नश्रुतवेदप्रामाण्या-दनुमानव्याघातशङ्केति सिद्धान्तद्वयदर्शनादन्योन्यव्याघात इति। यतः सिद्धान्तद्वयसिद्धश्रुतानुमेयवेदद्वयप्रामाण्याद्विकल्पापत्तिः। नापि सिद्धान्त-द्वयादन्योन्यव्याघातः।

### पूर्वपक्षः

पूर्वपक्षस्तु आप्तस्मर्तृवाक्यात् श्रुत्यविरोधे यदि वेदानुमा तर्हि विरोधेऽपि। न च प्रत्यक्षश्रुतिविरोधे नानुमेति वाच्यम्। यद्विधं हि

---

तत्सर्वथा बाधः, न सर्वथा तस्य बाधः अन्यत्र सावकाशत्वात्। इह तु न तथेति व्याघातो दुर्वार इत्यर्थः।

अत्र केचिदेवं व्याघातमूचुः विरुद्धयोरन्योन्यव्याघातः सर्वत्र प्रत्यक्षश्रुति-विषयेऽप्यस्त्येव सतु तुल्यत्वाद्विकल्पापास्यः। इह तु न क्रमोपस्थितविषयत्वेन विकल्पापास्यः। किन्तु स्थायिना सिद्धान्तेन बाधस्यावश्यकत्वात् बाधापनेय एवेति पूर्वपक्षावस्थायां व्याघातः प्राप्त इति, तन्न युक्तमित्याह—न त्वेवमिति। तत्र हेतुः एवं तर्हीति। विकल्पापास्यत्वशङ्काग्रस्तत्वेन राद्धान्तात्पूर्वं व्याघातस्यादृढतया तन्निमित्तकाप्रामाण्यायोगादित्यर्थः। अपरे तु स्मृत्यधिकरणराद्धान्तबलात् प्रसिद्धाप्तत्वस्मर्तृवाक्यात् मूलवेदानुमानस्यावश्यकत्वात् तद्बलात् तद्विरोधिश्रुत-वेदाप्रामाण्यशङ्कारूपो व्याघातः। तथा औत्पत्तिकसूत्रसिद्धान्तबलात् अनपेक्षतया कृत्स्नश्रुतवेदप्रामाण्यसिद्धेः तद्बलादनुमानव्याघात इत्येवं सिद्धान्तद्वयदर्शनाद-न्योन्यव्याघात इत्यूचुः। तदपि उभयप्रामाण्यबलात् विकल्पापास्यत्वसम्भावनया न युक्तमित्याह—न चैवमिति। इतोऽपि नायं प्रकार इत्याह—नापि सिद्धान्तेति न चायमपीति ग्रन्थे तथाऽनुक्तेरिति भावः। ननु प्रत्यक्षश्रुतिबाधेऽनुमानमेव नोदेतीति कथं पूर्वपक्ष इत्यत्राह—पूर्वपक्षस्त्विति। आप्तस्मर्तृवाक्यत्वाविशेषात् अविरोध-विषयवद्विरोधविषयेप्यनुमानं दुर्वारमित्यर्थः। नन्वबाधितविषयत्वस्याप्यनुमान-सामग्रीत्वात् प्रत्यक्षविरोधे अनुमा न युक्तेति न वाच्यमित्याह—न चेति। तत्र हेतुः यद्विधं हीति। स्यादेतदेवं यदि दृष्टविपरीतता विरोधस्य स्यात्। न च साऽत्रास्ति यद्विधं विरुद्धं न दृष्टं यथा उष्णस्वभावस्यैव वस्तुनः शैत्यं तत्रैव परमननुमा दृष्ट-

विरुद्धद्वयं न दृष्टं यथा उष्णस्वभावं न शीतं न तत्रानुमितिः । श्रुत्योस्त्वन्योन्यविरुद्धार्थत्वं दृष्टम् । तदुक्तम् भङ्गवादिना—

परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि ।
स्मृतेः श्रुतिविरुद्धायाः ततोमूलान्तरं भवेत् ॥

अथानाप्तत्वात् विरुद्धार्थे स्मर्तॄणां नानुमा तर्हि अष्टकादिविषयेपि नानुमा । तदुक्तं तेनैव—

कदाचिच्छ्रुतिमूलत्वं उक्त्वा भ्रान्त्यादिमूलता ।
स्मृतिभिः प्रतिपन्ना चेत् कस्तामिन्द्रोपि वारयेत" ॥ इति ।

राद्धान्तस्तु—"साक्षाच्छ्रुतवेदविरोधे नानुमानम् सिद्धेन हि साध्यं उत्पत्तिप्रतिबन्धाद्बाध्यते वह्नाविव शैत्यानुमा । यत्तु विरुद्धश्रुतिद्वयं दृष्टमिति तद्धि तुल्यवद्दृष्टं अगत्या विकल्प्य व्यवस्थाप्यम् । अतुल्ये त्वस्मिन् जघन्यबाध एवेति वेदमूलत्वभ्रमात् स्मृत्यनुवृत्तिः । अविरुद्धेन विरुद्धापि मन्वादिस्मृतित्वसामान्यात् वेदमूलेति भ्रमबीजम् । यदि विरुद्धा

---

विपरीतविरुद्धत्वस्यैवानुमानबाधकत्वात् इह तु गृह्णाति न गृह्णाति इति विरुद्धयोरपि श्रुत्योर्दर्शनात् न प्रत्यक्षश्रुतिविरोधः तद्विरुद्धश्रुत्यनुमानबाधक इत्यर्थः । तदिदं भङ्गसमये आचार्यैरप्युक्तमित्याह—तदुक्तमिति ।

ननु प्रत्यक्षश्रुतिविरुद्धेऽर्थे स्मर्तॄणामनाप्तत्वात् तद्वाक्यान्न वेदमूलानुमितिरिति शङ्कते—अथेति । दूषयति—तर्हीति । यद्यनाप्तवाक्यत्वात् वेदाननुमा तर्हि तत एव हेतोरष्टकादिवाक्यादपि वेदानुमा न स्यात् । अथ तत्र वेदानुमा तर्हि अत्रापीति प्रतिबन्दिग्रहात्पूर्वपक्षपरिग्रह इत्यर्थः । एतदपि भङ्गसमये आचार्यैरप्युक्तमित्याह—तदुक्तमिति । राद्धान्तस्त्विति । प्रत्यक्षश्रुतिविरोधे अनुमानं नोदेति । तत्र हेतुः—सिद्धेन हीति । सिद्धेन पूर्वप्राप्तेन साध्यं स्वविरोधिजघन्यमुत्पत्तिप्रतिबन्धाद्बाध्यम् । यथा प्रत्यक्षसिद्धेन वह्नावुष्णत्वेन शैत्यानुमानम् । एवमिह प्रत्यक्षश्रुतविषये स्वाध्यायात् स्वतः सिद्धस्य संसर्गग्रहस्य तद्विरुद्धजघन्यान्यथासिद्धस्मृतेर्वेदानुमानबाधकत्वादित्यर्थः । विरुद्धयोरपि श्रुत्योर्दर्शनान्नानुमानबाध इति पूर्वपक्षोक्तमनूद्य परिहरति—यत्त्विति । तत्रापि विरोधे सत्युभयोस्तुल्यवद्दर्शनादगत्या विकल्पापास्यो विरोधः । इह तु क्रमोपस्थितयोरतुल्यत्वात् जघन्यबाध एव युक्त इत्यर्थः । नन्वेवमवेदमूलत्वे स्मृत्यनुवृत्तिर्न स्यादित्यत्राह—इति वेदेति । भ्रमबीजमाह विरुद्धापीति । अविरुद्धा स्मृतिर्यथा मन्वादिकृतत्वेन वेदमूला तथा विरुद्धापि स्मृतिः

न तथा तत्सामान्यादविरुद्धापि न तथा स्यादिति च भ्रमबीजम् । इष्यते हि पूर्वपक्षनयमूला स्मृतिः । 'अधीत्य स्नायात्' इति । स्मर्त्रापि स्वयं न्यायाभासमूलत्वं 'पिण्डपितृयज्ञस्य दर्शाङ्गतास्मृतेरुक्तम् । अङ्गं वा समभिव्याहारादित्युक्तेः । [2]विरुद्धाविरुद्धयोरतुल्यत्वान्न तुल्यमूलतेति परोक्तं निरस्तम् । अविरोधे स्मृतिर्मूलं न मूलान्तरसम्भवः । विरोधे त्वन्यमूलत्वं इति स्यादर्धवैशसम् ॥ इति अधिकरणारम्भभङ्गमाहुः ।

विरोधसमर्थनम्

ननु विरोध एवेह नास्ति । कथमन्योन्यव्याघातात् पूर्वपक्षः । कथं वा अनुमानबाधाद्राद्धान्तः । न हि कार्यार्थशास्त्रयोर्विरोधः । सिद्धस्य हि

---

स्मृतित्वसामान्याद्वेदमूलैवेति कर्तृसामान्यं भ्रमहेतुरित्यर्थः । अपरमपि भ्रमहेतुमाह–यदीति । यदि विरुद्धार्थे मन्वादेरनाप्ततया तत्स्मृतेरवेदमूलता तदा तदविरुद्धार्थेऽपि न वेदमूलता । अनाप्तत्वसाम्यादित्येवं पूर्वपक्षन्यायेन वेदार्थस्मृतित्वभ्रमदार्ढ्यात् स्मृत्यनुवृत्तिरविरुद्धा । एवमस्माकमिवान्यस्य मनोरपि स्मृत्यन्तरे वेदार्थमूलत्वेन वेदार्थस्मृतित्वेन भ्राम्यतः एतत्पूर्वपक्षन्यायानुमानाभासोपस्थापितवेदाभासजनितानुभवाभासमूलको वेदार्थस्मृत्यभ्यासः । एवं मन्वन्तरस्यापि वेदमूलत्वभ्रमात् स्मृतिपरम्परानुवृत्तिरित्यर्थः । पूर्वपक्षन्यायमूला स्मृतिरन्यत्रापि प्रसिद्धेत्याह—इष्यते हीति । ननु स्मर्तॄणां हि स्वोक्तेर्न्यायाभासमूलत्वं नानुमतमित्यत्राह—स्मर्त्रेति । समभिव्याहारादिति । न्यायाभासोक्तेरित्यर्थः । अष्टकासर्ववेष्टनस्मृत्योरलौकिकार्थतया तुल्यत्वे आप्तमनुप्रणीतत्वेन च तुल्यत्वे सति अन्यमूलत्वं न युक्तमिति यत् 'अविरोधे श्रुतिर्मूलं' इत्यादि परैरापादितं तदपि निरस्तमित्याह—विरुद्धेति । स्यादेवं यदि तयोः स्मृत्योः तुल्यता स्यात् । न चात्र तुल्यता, विरोधाविरोधाभ्यामतुल्यत्वात् । न चाप्तप्रणीततयापि तुल्यता, विरुद्धविषये तस्यैवानाप्तत्वात् । न हि प्रतिपुरुषमाप्तत्वमवधार्यम् । किन्तु प्रतिवाक्यम् । एतच्चार्थासंस्पर्शितावादे निपुणतरमुक्तम् । अतो विरुद्धाविरुद्धयोरतुल्यत्वान्न तुल्यमूलतेति नार्धवैशसं दोष इत्यर्थः ।

अत्र यथाभाष्यमधिकरणारम्भः परैर्भग्नः । विरोधाभावेन तन्मूलव्याघातबाधात्मकपूर्वोत्तरपक्षयोरभावात् । तदाह —अधिकरणेति । कुतो न विरोध इत्यत्राह—न हीति । यद्यपि स्पर्शनसर्ववेष्टनयोस्सहानवस्थानविरोधः एकौदुम्बर्याश्रयद्वयायोगात् । तथापि न तद्रूपेण शास्त्रार्थता किन्तु इष्टसाधनतारूपकार्यतया तयोः

---

१. A पितृ २. B. ननु विरुद्धाविरुद्धार्थयोः स्मृत्योः वेदमूलत्वाभ्युपगमे अर्धवैशसदोषः स्यादिति यत्परोक्तं तदित्थं निरस्तमित्याह–विरुद्धेति ।

वस्तुनः एकस्वभावस्य तदतत्स्वभावतया धीद्वये विरोधः। कार्यं त्वेकतया न वेद्यं [1]कार्यानुरूपानुबन्धभेदात् भिन्नमेव। अनपेक्षैकद्वारतया सहानुष्ठानविरोधमात्रं; न च स्वरूपविरोधः अन्यदनुष्ठानं अन्यच्च स्वरूपं यतः। ज्ञातस्वरूपस्य हि अनुष्ठानं अर्थिभिः क्रियते सकृदसकृद्वा। अत एव कर्मभेदेऽपि क्वचित्तन्त्रमनुष्ठानम् ऐन्द्रदधिपयसोरिव। कर्माभेदेऽप्यावृत्त्या अनुष्ठानं सोमयाग इव। अनुष्ठानविरोधश्च[2] विकल्पापास्यः प्रसङ्गात् कार्यसिद्धेः। अतो विकल्प एवेह न व्याघातबाधौ अतो न यथाभाष्य-

---

शास्त्रप्रतिपाद्यत्वान्न तत्र विरोधः। न ह्येकस्येष्टसाधनत्वमन्येष्टसाधनतया विरुद्ध्यते। यथा सोमेष्ट्योः स्वर्गेष्टसाधनत्वं, यथा वा व्रीहियवयोः पुरोडाशेष्टसाधनत्वम्। अतो न कार्यार्थतया शास्त्रस्य विरोध इत्यर्थः। एतदेवोपपादयति—सिद्धस्य हीति। एकस्मिन् सिद्धे वस्तुनि एकस्वभावे विरुद्धरूपद्वयेन बुद्धिद्वये विरोधः यथा उष्णस्वभावस्य वह्नेः शीतोष्णस्वभावतया। ननु कार्यमप्येकरूपमेव शास्त्रवेद्यमस्त्वित्यत्राह—कार्यं त्विति। तत्र हेतुः—कार्येति। तत्तत्कार्यानुरूपानुबन्धभेदात् कार्यं नैकतया वेद्यम्। तत्र तावदपूर्वमनुबन्धभेदाद्भिन्नं स्पर्शनसर्ववेष्टने तु स्वरूपभेदाद्भिन्ने इति तयोः कार्यत्वमप्याश्रयभूतस्वरूपभेदात् कृतिभेदाच्च भिन्नम्। एतच्च कृतिसाध्यता कार्यतेत्यपि पक्षे समानमेव। न चैकस्यापूर्वस्य निरपेक्षोभयसाध्यतयाऽवगम्यमानत्वे विरोध इति वाच्यम्। अपूर्वव्यक्तिभेदात्। न ह्येकमेवापूर्वं विरुद्धकृतिद्वयसाध्यं वदामः शास्त्रार्थतया च तस्यैकत्वमौपाधिकम्। अतो न शास्त्रार्थदशायां विरोध इत्यर्थः। कथं तर्हि विरोधाभावे व्रीहियवादौ विकल्पाङ्गीकारः। किमित्यवहन्तिप्रोक्षणवदेकस्मिन् प्रयोगे न सहानुष्ठानमित्यत्राह—अनपेक्षेति। व्रीहियवादावपि निरपेक्षैकद्वारतया सहानुष्ठानविरोधमात्रं न कार्यस्वरूपविरोधः तन्निबन्धनश्च विकल्पः। एकप्रयोगे सहानन[3]ुष्ठानं च। अतोऽनुष्ठान एव विरोधो न शास्त्रार्थे कार्ये कार्यस्वरूप इति यावत्। ननु अनुष्ठानविरोधेऽपि कार्यविरोध एव तयोरेकत्वादित्यत्राह—अन्यदिति। अन्यत्वमेवोपपादयति—ज्ञातेति। युक्तं चैतदित्याह—अत एवेति। भवत्वेवमनुष्ठानविरोधः ततः किमित्यत्राह—अनुष्ठानेति। प्रसङ्गादिति। प्रतीतसाधनद्वये एकेन कार्यसिद्धौ प्रसङ्गादन्यकार्यसिद्धेरित्यर्थः। स्पर्शनसर्ववेष्टनविषयेऽपि ग्रहणाग्रहणवद्विरोधो विकल्पापास्य इत्याह—अत इति। भङ्गमुपसंहरति—अत इति। का पुनः सूत्रस्य गतिरित्यत्राह—किन्त्विति। भङ्गपरिहारं ग्रन्थोक्तमाह—तन्नेति। ननु अन्यदनुष्ठानं अन्यत्कार्यं ज्ञातं ज्ञातस्वरूपस्य कार्यस्यानुष्ठानमर्थिभिः क्रियते। अतः कार्यधीपूर्वकविनियोगो-

---

१. A कार्यानुबन्ध  २. A अनुष्ठानविकल्पश्च  ३. B. न नास्ति

मधिकरणं किन्तु वेदविरुद्धबौद्धादिस्मृतिविषयं सूत्रम् । तन्न, अनुष्ठानमेव हि कार्यमुच्यते नापरं कार्यम् । अयं भावः—कृतियोग्यतावस्था हि कार्यता नापराऽतदवस्था । सैव कृतिरनुष्ठानम् । अतोऽनुष्ठानविरोधः कार्यविरोध एव । न त्वयं भावः अनुष्ठानं कृतिः सैवेच्छादिव्यापारात् कार्या तद्द्वारा कर्मापि कार्यमिति ऋज्वेवानुष्ठानं कार्यमिति[1] । एवं हि विवक्षया कृतिः कार्या कृतिसाध्यं तु कार्यशब्दार्थो न कृतिरिति पूर्वोक्त एव भावः । दधिपयसोर्यत्कर्मभेदेऽपि तन्त्रमनुष्ठानं तत् कार्यावस्थायामपि तथात्वात्, तत्रापि त्याज्यभेदात् त्यागभेद एव अतः एकदेवतोद्देशोपाध्यैक्यात् यागानुष्ठाने तन्त्रव्यवहारः । एवमावृत्तिरपि कार्यावस्थायामपि तथात्वात् ।

---

त्तरभावित्वादनुष्ठानस्य कथमनुष्ठानमेव कार्यमित्युच्यत इत्यत्राह—अयं भाव इति ।

सत्यमन्यदनुष्ठानमन्यत् कार्यम् तथापि स्वरूपे निरूप्यमाणे अनुष्ठानविरोधः कार्यविरोध आपद्यते । कार्यस्य हि कार्यता कृतियोगितावस्था अनुष्ठानमपि कार्ययोग्यवस्था कृतिरेव । अतोऽनुष्ठानकार्ययोरेकलोलीभावादनुष्ठानविरोधः कार्यविरोधान्त एवेति उपचारादनुष्ठानमेव कार्यमित्युक्तं ग्रन्थे । अतो विरोधाभावोक्तिः परेषामयुक्तेति भावः । केचित्तु अनुष्ठानमेव कार्यमिति ग्रन्थोक्तिर्मुख्यैव अनुष्ठानं हि कृतिः सैवेच्छाव्यापारात् कार्या । तत्पूर्वकत्वात् कर्मादि कार्यमिति ग्रन्थाभिप्रायमूचुः तन्न युक्तमित्याह—न त्वयमिति । तत्र हेतुः—एवं हीति । एवमिच्छाव्यापारसाध्यायाः कृतेः कार्यत्वे वक्तृविवक्षाधीनैव कार्यता उक्ता भवति । न शास्त्रार्थरूपा, कृतिसाध्यकार्यस्यैव लिङादिशब्दार्थत्वात् । ततश्च शब्दार्थरूपकार्यविरोधो नोपपादितो भवति । अतोऽनृजुरपि पूर्वोक्त एव भाव इत्यर्थः । यत्पुनर्भङ्गसमये अनुष्ठानकार्ययोरैक्येपि इन्द्रदधिपयसोः कार्यरूपकर्मभेदादनुष्ठानं तन्त्रं न स्यादित्युक्तम् । तदनुवादेन तत्परिहारमाह—दधिपयसोरिति । अनुष्ठानपर्यन्तत्वात्कार्यबुद्धेः तत्र कार्यस्य यथाऽनुष्ठानतन्त्रत्वं भवति तथैव कार्यावस्थयाऽऽपादितत्वादित्यर्थः । एतच्चोपेत्योक्तम् । वस्तुतः तत्रापि त्यागभेदात् तदनुष्ठानमपि भेदेनैव । त्यागभेदश्च त्याज्यनिरूपणीयतया तद्भेदात् । तदाह—तत्रापीति । कथं तर्हि दधिपयसोस्तन्त्रमनुष्ठानमिति व्यवहार इत्यत्राह—एकेति । देवतोद्देशरूपयागशब्दवाच्यत्वोपाध्यैक्यमात्रात् त्यागानुष्ठाने तन्त्रव्यवहारस्तत्र तत्रेत्यर्थः । तथा सोमयागे विधेयरसैक्ये अनुष्ठानावृत्तिः कार्यावस्थया तथात्वादित्यत्राह—एवमिति । तथा बहुभिरपि सत्त्रिभिः अनुष्ठातृभिरेकस्यैव सत्त्रयागस्यावृत्त्याऽनुष्ठानं तथा एकस्यैव ज्योतिष्टोमादिकर्मण एकेनैवानुष्ठात्रा कर्मण्यारम्भन्यायेनाधिकारा-

---

१. B इति

तथा बहुभिरप्येकस्य चाधिकारावृत्त्या आवृत्तिरपि[1]। न चैवमनुष्ठानविरोधे कार्यविरोधे व्याघातः[2]। प्रत्यक्षश्रुतिद्वयेप्येकाधिकारशास्त्रेणैकीकृत्य कार्यद्वयस्य पाक्षिकतापादनात्। न चेह स्पर्शनवत् सर्ववेष्टनमेकीभूतं तद्विरोधे वेष्टनस्यानादेयत्वादितीह न विकल्पः। उपेत्यापि विरोधं श्रुतानुमेयश्रुत्योः तुल्यबलत्वात् विकल्पो नानुमेयबाधः इत्येवं भङ्गः।

यथाहि पाठाच्छ्रुत्यभिव्यक्तिः[3] तथा श्रुतेरनुमानं स्मृतेरित्यपि न भेदः। पाठेऽपि हि श्रौततोऽनुमेयैव। तदाहुः—

वेदो हीदृश एवायं पुरुषैर्यः प्रकाश्यते।
स पठद्भिः प्रकाश्येत स्मरद्भिर्वेति तुल्यता॥[4]

---

वृत्त्या आवृत्तिरपि कार्यावस्थया तथात्वादित्याह—तथेति। नन्वेवं व्रीहियवादौ ग्रहणाग्रहणादौ च प्रत्यक्षश्रुतिद्वयप्रतिपाद्येपि अनुष्ठानविरोधे कार्यविरोधाद्व्याघातः स्यादित्यत्राह—न चेति। तत्र हेतुः—एकेति। सत्यं तत्रापि विरोधोऽस्त्येव तथापि प्रत्यक्षश्रुतिभ्यां युगपदुपस्थितकार्यद्वयस्य तद्द्वयग्राहिणैकेनाधिकारशास्त्रेण स्वार्थेन तत्कार्यद्वयमेकीकृत्य प्रयोगभेदमन्तर्भाव्य स्वार्थव्यक्तिद्वयनिष्ठतया पाक्षिकतापादनादित्यर्थः। नन्वेवं स्पर्शनसर्ववेष्टनयोरप्येकाधिकारशास्त्रेण पाक्षिकतापादनमस्त्वित्यत्राह—न चेति।

प्रत्यक्षश्रुतत्वेन स्पर्शनस्य प्रथममेव ग्राहकान्वयात् तद्विरोधिनः सर्ववेष्टनस्य ग्राहकान्वयासिद्धेः। न चैकस्मिन्शास्त्रे युगपदनुपसंहार्यकार्यद्वयप्रतीतौ विरोधः, स्पर्शनवेष्टनयोस्तु अनेकशास्त्रार्थतेति क्व विरोध इति वाच्यम्। यतोऽधिकारशास्त्रमेव तदुभयकार्यत्वबोधकं नाङ्गशास्त्रम् अङ्गविधीनामनुवादकत्वात्, अतोऽधिकारशास्त्रे विरोधः, व्रीहियवादावप्येवमेव। अतः स्पर्शनविरोधे सर्ववेष्टनस्यानादेयत्वात् बाध एव न विकल्प इत्यर्थः। एवं तावदविरोधमुखनयभङ्गनिरासः कृतः। अतः परं विरोधमभ्युपेत्यैव परैर्यो भङ्गप्रकार उक्तस्तमनुभाषते निरसितुं उपेत्यापीति। यद्यपि श्रुतेर्दुर्बला स्मृतिः तथापि श्रुतानुमेयश्रुत्योः तल्यबलत्वाद्विकल्प एव न बाध इत्यर्थः। ननु श्रुतानुमेयश्रुत्योः कथं तुल्यत्वम् अनुमेयश्रुतेः अनुमानापेक्षत्वेन दुर्बलत्वमित्याशङ्क्यानुमानापेक्षत्वं श्रुतश्रुतेरपि समानम्। श्रुतित्वस्यानुमानगम्यत्वात् प्रत्यक्षात्तु वर्णरूपमात्रावगमादिति। तुल्यतामेवोपपादयति—तथेति। तदुक्तं वार्तिककारैरपीत्याह—तदाहुरिति। एवं तुल्यत्वेपि विकल्प इति

---

१. A आवृत्तिरिति २. A कार्यव्याघातः ३. R अभिख्यातिः ४. M तुल्यभाक्

एवं तुल्यत्वे विकल्पः। तदाहुः—

परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि।
स्मृतेः श्रुतिविरुद्धायाः ततो मूलान्तरं भवेत्॥

श्रुतिमूलत्वे च विकल्प एवोक्तः। तुल्यत्वे चैकत्र भ्रममूलत्वे अन्यत्रापि तथा स्यात्। तदाहुः—

कदाचिच्छ्रुतिमूलत्वं मुक्त्वा भ्रान्त्यादिमूलता।
स्मृतिभिः प्रतिपन्ना चेत् कस्तामिन्द्रोऽपि वारयेत्॥

स्मृत्योरपि तौल्यान्न नानामूलतेत्याहुः—

अविरोधे श्रुतिर्मूलं न मूलान्तरसम्भवः।
विरोधे त्वन्यमूलत्वं इति स्यादर्धवैशसम्॥ इति।

अत्रानन्तरोक्तं वार्तिकत्रयं पूर्वपक्षे प्रक्षिप्य प्रतिक्षिप्तमेव। ततः प्रागुक्तं पूर्वपक्षाक्षमम्। पाठाद्धि श्रुतिस्मृत्योरभिव्यक्तिस्तुल्या। श्रुतिता स्मृतिता च वृद्धव्यवहारगम्या तुल्या स्मृतेस्तु श्रुत्यनुमेयतेत्यतुल्यता व्यक्ता। यत् काठकादिशाखागतश्रुतिमूलकस्मृतिमध्ये पठितमपि अप-

---

वार्तिककारैरेवोक्तमित्याह—एवमिति। नन्वनेन वार्तिकेन श्रुतिमूलत्वमेवोक्तं न तु विकल्प इत्यत्राह—श्रुतिमूलत्व इति। एवं तुल्यत्वे सत्यपि यद्येकत्र भ्रममूलता तर्हि सर्वत्र तदापत्तिरिति सोपपादं वार्तिकमाह—तुल्यत्वे चेति। इन्द्रोऽपि समर्थोऽपि को वारयेदित्यर्थः। वेदार्थस्मृतित्वेन स्मृतिद्वयस्य तुल्यत्वाऽपि न नानामूलतेत्युत्तरवार्तिकेनोक्तमित्याह स्मृत्योरिति।

भङ्गं निरस्यति—अत्रेति। अत्रानन्तरोक्तवार्तिकत्रयस्य दूषणं भङ्गनिरासार्थं पृथङ् न वाच्यम्। पूर्वपक्षवेलायामेव प्रक्षिप्य प्रतिक्षिप्तत्वात्। ततः प्रागुक्तं तु यद्वार्तिकं तत् पूर्वपक्षायापि नालमिति न तत्रोक्तमिति निरस्यम्। यद्यपि तृतीयं वार्तिकं न पूर्वपक्षवेलायां प्रक्षिप्तं किन्तु राद्धान्ते तथापि तत्रापि पूर्वपक्षाशयेनोक्त्वा निरस्तत्वात् पूर्वपक्षे प्रतिक्षिप्येत्युक्तम्। कथं प्रागुक्तस्य निरास इत्यत्राह—पाठाद्धीति। श्रुतेर्या पाठादभिव्यक्तिः सा स्मृतेरपि तुल्या। ततोऽभिव्यक्तायाः स्मृतेः श्रुत्यनुमित्यनुमेयश्रुतेर्विलम्बेनातुल्यता व्यक्तेत्युत्तरेण सम्बन्धः। ननु प्रत्यक्षश्रुतेरपि श्रुतित्वमनुमेयमित्युक्तमित्यत्राह—श्रुतितेति। वृद्धप्रयोगादेव स्मृतित्ववत् श्रुतित्वमपि गम्यम्। नानुमानापेक्षम्। अन्यथा स्मृतित्वस्याप्यनुमेयतापत्तिरित्यतुल्यता व्यक्तैवेति भावः। यदपरं भङ्गकारणं परैरुक्तं कठमैत्रायणीयादीति वार्तिकद्वयेन तदनुभाषते दूषयितुम्—यदिति। यत्काठकादि-

श्रुतिस्मृतिवाक्यं किञ्चिदित्यवाच्यम् । तदाहुः—

कठमैत्रायणीयादिपठितश्रुतिमूलिकाः ।
दृश्यन्ते स्मृतयस्सर्वाः यथोपनयनादिषु ॥
"तदा तन्मध्यपात्येकं किञ्चिद्वाक्यमपश्रुतिः[1] ।
मूलान्तरोद्भवं वक्तुं जिह्वा नो न प्रवर्तते ॥ इति ।

तदपि पूर्वपक्षाक्षमम् । मध्यस्थत्वेपि विरोधात् भ्रममूलता वाच्यैव । यद्बाधिता न्यायविदा भूत्वा स्मृतिः शाखान्तरमूलिका तदैव यदि दृश्येत तदा ते मुखच्छायाहानिः । तदाहुः—

बाधिता च स्मृतिर्भूत्वा काचिन्न्यायविदा यदा ।
श्रूयते न चिरादेव शाखान्तरगता श्रुतिः ॥
तदा का ते मुखच्छाया स्यान्नैयायिकमानिनः ।
बाधाबाधानवस्थानं ध्रुवमेवं प्रसज्यते ॥ इति ।

तदपि न पूर्वपक्षार्हम् योग्यानुपलम्भे हि बाधः[2] । तदसिद्धावबाधेपि न नयहानिः ।

यत्कथञ्चित् समुच्चयमाश्रित्य बाधहानं सर्वशब्दो हि दित्राङ्गुलभागेतरकृत्स्नौदुम्बर्यामस्तु द्वित्राङ्गुलभागे स्पर्शोऽस्त्विति । तदाहुः—

---

शाखागतश्रुतिमूलस्मृतिद्वयमध्यपठितमपि किञ्चित्स्मृतिवाक्यमपि श्रुतिमूलं न भवतीति वक्तुमयोग्यमित्यर्थः । दूषयति — तदपीति । न हि श्रुतिमूलस्मृतिमध्यस्थत्वमात्रात् श्रुतिमूलता । किन्तु अविरोधिस्मृतित्वात् । अतो विरोधे सति मध्यस्थत्वेपि भ्रममूलता वक्तुं योग्येत्यर्थः । अत्र परैः बाधाबाधानवस्थानं मुखच्छायाहानिश्च येन वार्तिकद्वयेनोक्तं तस्य क्लिष्टार्थस्यार्थं प्रदर्शयन् तदनुभाषते यद्बाधितेति । दूषयति—तदपीति ।

मूलवेदस्य योग्यप्रमाणानुपलम्भेनानुमानबाधोक्तेः तदनुपलम्भासिद्धौ अबाधेपि न न्यायहानिः । यत्र च न प्रत्यक्षमूलता किन्तु विरुद्धार्थता तत्र न वेदानुमानमितिहि न्यायः । अतोनानवस्थानं न मुखछायाहानिरित्यर्थः प्रकारान्तरेण भङ्गं परापादितमाह-यत्कथञ्चिदिति । स्पर्शनसर्ववेष्टनयोः कथञ्चित् समुञ्चयोपपत्तेर्न बाधो युक्त इत्यर्थः । कथं समुच्चयसम्भव इत्यत्राह—सर्वेति । यद्यपि सर्वशब्दात् स्वतः कृत्स्नौदुम्बरीवेष्टनं भाति तथापि सर्वशब्दो द्वित्राङ्लिभागहानात् तदितरकृत्स्नौदुम्बर्यामस्तु तथापि सर्वशब्दार्थाहानात् स्पर्शनं द्वित्राङ्गुलभागेऽस्तु । एवमप्युभयोरप्यविरोधात् न स्मृतिबाध इत्यर्थः । तत्र साक्षित्वेन वार्तिकमाह-तदाहुरिति ।

---

१. B अश्रुति २. A प्रमाणानुपलम्भेन बाधात्

यदि द्वित्राङ्गुलं मध्ये विमुच्येतरभागतः ।
वेष्टितौदुम्बरी तत्र किन्नाम न कृतं भवेत् ॥ इति ।

तन्न । तस्य सर्वशब्दस्य कृत्स्नार्थत्वात् द्व्यङ्गुलमात्रेप्यवेष्टिते तदर्थहानात् स्मृत्यर्थहानमेव । यदन्तरितस्पर्शात् बाधहानं अन्तरितस्पर्शश्चात्र अन्यथापि, कुशैः वेष्टनस्मृतेः अलोभमूलत्वात् अबाध्यत्वात् । यद्यपि तन्न सर्ववेष्टनं तथापि प्रमादात् सर्ववेष्टने वेष्टितदेशे वा प्रमादात् स्पर्शे अन्तरितस्पर्शः । तदाहुः—

प्राक् च लोभादिह स्पर्शः कुशैरेवान्तरीयते ।
वेष्टितैषा कुशैः पूर्वं वाससापरिवेष्ट्यते ॥ इति ।

तन्न । अन्तरितस्पर्शो न स्पर्शः । किन्तु उपस्पर्श एव, लोके प्रयोगात् । अतः श्रुत्यर्थहानमेव । प्रमादादिति च वदन् नायं शास्त्रार्थः इति स्वयमाह । यत्सर्ववेष्टनमनुदाहरणमाहुः शाट्यायनशाखास्थश्रुतिमूलत्वात् तामुभयतो वाससा परिवेष्टयन्तीति श्रुतेरिति । तदुभयतो वेष्टन-

---

तन्नेति । कृत्स्नार्थत्वात्सर्वशब्दस्य एकाङ्गुलभागेप्यवेष्टिते सर्वशब्दार्थहानात् तद्युक्तस्मृत्यर्थहानिरेव । सर्वेभ्यः कामेभ्य इत्यत्र तु सर्वशब्दस्य सर्वनामतया प्रकृतपरत्वात् प्रकृतपश्वादिसर्वकामपरता न पुनरप्रकृतकामपरतापि । इह कृत्स्नौदुम्बर्याः प्रकृतत्वात् न तदेकदेशहानं युक्तमित्यर्थः । अपरं स्पर्शनसर्ववेष्टनयोः समुच्चयप्रकारं परापादितमाह—यदन्तरितेति । औदुम्बरीं स्पृष्ट्वा उद्गायेदिति शास्त्रार्थो वाससा सर्ववेष्टनाभावेपि अन्तरितस्पर्श एव कुशैर्वेष्टनस्मृतेः । न च साऽनादेया लोभमूलत्वासम्भवात् । अतो वाससा सर्ववेष्टनेपि स्पर्शनशास्त्रार्थाविरोधान्न बाधो युक्त इत्यर्थः । ननु न कुशैर्वेष्टनं सर्ववेष्टनं, अतः कथमन्यथाप्यन्तरितस्पर्श एव शास्त्रार्थ इति शङ्कामनूद्य परिहरति—यद्यपीति ।

वार्तिककारैरपि तदुक्तमित्याह—तदाहुरिति । प्राक्शब्दो विनार्थे । तन्नेति । अन्तरितस्पर्शस्योपस्पर्शत्वेनैव लोकप्रसिद्धेरस्पर्शरूपत्वान्न स्पर्शनशास्त्रार्थतेति स्पर्शनसर्ववेष्टनयोर्विरोध एवेत्यर्थः । ननु अन्यथाप्यन्तरितस्पर्श एव शास्त्रार्थः कुशैर्वेष्टनस्मृतेरित्युक्तमित्यत्राह—प्रमादादिति चेति । वदन् वार्तिकव्याख्यातेति शेषः । अत्र तामुभयतो वाससावेष्टयन्तीति शाट्यायनशाखास्थश्रुतिमूलत्वात् यदनुदाहरणत्वं सर्ववेष्टनस्मृतेरापादितं तदनूद्य सर्ववेष्टनोभयतोवेष्टनयोर्भिन्नविषयत्वान्न युक्तमित्याह—यत्सर्वेति । अत्र भाष्यकारेण क्रीतराजको भोज्यान्न इति स्मृतिः तस्मात्संस्थितेऽग्नीषोमीये यजमानस्य गृहेऽशितव्यं इति श्रुत्य

सर्ववेष्टनयोः भेदात् हेयम् । यदपरमनुदाहरणमाहुः क्रीतराजको भोज्यान्न इति क्रीतराजकान्नभोजनं पुरुषार्थं "अग्नीषोमीये संस्थिते यजमानस्य गृहे अशितव्यं" अग्नीषोमीयसंस्थाऽपूर्वार्थत्वेनाविरुद्धमिति । तन्न । अर्थात्तुल्यार्थतां प्राप्यापि विरुद्धमेव ।

यदपि अष्टाचत्वारिंशद्वर्षं ब्रह्मचर्यं कृष्णकेशाधानविरुद्धमुक्तं शक्ताशक्तविभागव्यवस्थितत्वादिति । तद्व्यवस्थापि विरोधहानापेक्षैवेति हेयम् । यन्महाजनपरिग्रहलक्षणमुक्तबाधे तल्लक्षणमपि बाधितं स्यादिति तत् विरोधलक्षणयुक्तबाधाद्धेयम् । यच्च प्रतिबन्दिग्रहात् भङ्गभङ्गे

---

विरुद्धेति यदुदाहरणमुक्तं तद्भग्नं परैः तद्भङ्गप्रकारमनुवदति—यदपरमिति । क्रीतराजकान्नभोजनं सोमक्रयोत्तरकालं, दीक्षितान्नभोजननिषेधावधिपरतया भोक्तृपुरुषार्थत्वादस्य विधेः । तदाऽग्नीषोमीये संस्थिते इति श्रौतो विधिः दीक्षितो न पचते इति दीक्षितपाकनिषेधस्य क्रत्वर्थस्याग्नीषोमीयसंस्थानरूपावधिपरतया क्रत्वर्थ इति श्रौतस्मार्तयोर्भिन्नविषयत्वान्न विरुद्धतेत्यर्थः । तन्नेति । यद्यपि क्रत्वर्थः श्रौतो विधिः तथापि गोदोहनचमसादिवदर्थात् तुल्यार्थतया विरोध एव । भोजयितृनिषेधेनैवार्थात् भोक्तृक्रियानिवृत्तेरपि नित्यसिद्धत्वात्, अतः क्रत्वर्थपुरुषार्थयोरप्यनयोर्विरोधो दुर्वार इत्यर्थः । अष्टाचत्वारिंशद्वर्षं ब्रह्मचर्यं स्मार्तं कृष्णकेशाधानेन श्रौतेन विरुद्धमिति यदुदाहरणान्तरं भाष्योक्तं तद्भङ्गं परापादितमनुभाषते—यदष्टेति । दूषयति—तद्व्यवस्थापीति । व्यवस्थापि विरोधे सत्येव, विरोधहानार्थत्वात्तस्याः । ततश्च विरोधे सति बाध एव स्मृतेः स्यादिति तद्भङ्गापादनं हेयमित्यर्थः । अत्र स्मृतिवाक्यानां महाजनपरिग्रहलक्षणयुक्तत्वनिबन्धनं प्रामाण्यमिति तत्साम्ये सत्यपि तल्लक्षणयुक्तस्य कस्यचित् बाधेऽन्यदपि तल्लक्षणयुक्तं बाधितं स्यादिति यत्परापादितं दूषणं तदनूद्य दूषयति—यन्महाजनेति । विरोधप्रयुक्तत्वाद्बाधस्य महाजनपरिग्रहलक्षणस्य हानिरित्यर्थः । अत्र यथा परमते श्रुतिविरोधे लिङ्गान्नश्रुत्यनुमा तथाऽत्रापीति स्मृत्यापि श्रुतिलिङ्गप्रतिबन्द्या यो भङ्गभङ्गोऽस्माभिरुक्तः तस्य वैषम्योक्त्या यत्समाधानं परैरुक्तं श्रुतिलिङ्गविषये श्रुत्या शीघ्रभाविनि विनियोगे लिंगाज्जिज्ञासाभावान्नानुमानं, प्रत्यक्षश्रुतिविरुद्धस्मृतिविषये तु जिज्ञासायामनुमानमिति यत्प्रतिविधानमुक्तं तदनुवदति दूषयितुम्—यच्च प्रतिबन्दीति ।

दूषयति—तदिति । युक्तमुक्तं प्रत्यक्षश्रुतिविरोधे स्मृतेर्भ्रान्त्यादिकारणत्वनिश्चयात् कारणजिज्ञासानिवृत्तेर्न वेदानुमानमिति युक्ता प्रतिबन्दितेति परोक्तं

प्रतिविहितं साक्षाच्छ्रुत्या विनियोगे लिङ्गान्न श्रुत्यन्तरानुमेति युक्तम्। तत्र मन्त्रप्रकरणिनोः आकाङ्क्षानिवृत्तेरजिज्ञासितेऽननुमानात्। स्मृतेस्तु—कारणजिज्ञासा न निवृत्तेति प्रतिबन्दितेति तच्छ्रुतिविरोधे भ्रान्त्यादिकारणनिश्चयात् कारणजिज्ञासानिवृत्तेः नानुमेति प्रतिविहितम्।

यद्यज्ञशालास्थूणोदुम्बर्याः कर्णे मूले च स्पर्शावकाशादविरोध इति तत् सर्वशब्दात् मूलाग्रवेष्टनाद्धेयम्। यत् वेदानधीत्येति विकल्पस्मृतेः कृष्णकेशाधानादविरोध इति तत् कृष्णकेशश्रुतेः मेधादियोगातिशयात् कृष्णकेशोऽपि वेदानधीयाधत्ते इति सम्भवात् हेयम्। यत्तु स्पर्शनपूर्वके सर्ववेष्टने न विरोध इति। तत् पूर्वस्य शालानिर्माणस्याङ्गं सर्ववेष्टनम्। परस्य पृष्ठस्तोत्रस्याङ्गं स्पर्शनं न तयोर्मिथः क्रमः विरोधहानायापीति हेयम्। एवं तावत् उपेत्यापिविरोधमुक्तम् तदुदाहरणदूषणं तन्निरासादरानर्हमिति गुरुणाऽवधीरितम्। अविरोधात्। भङ्गस्तु विरोधोक्तेः प्रत्युक्तः। प्रमाणायां स्मृतौ इति भाष्ये प्रमाणपदमेवम्। यदाहुः—

---

प्रतिविधानं हेयमित्यर्थः। प्रतिविहितमिति भावे निष्ठा। अत्र सर्ववेष्टने सत्यपि न स्पर्शनविरोधः। औदुम्बरी हि यज्ञशालास्थूणा। तस्याः कर्णमूलयोरवेष्टनार्हयोः स्पर्शावकाशादविरोध एवेति यत्परोक्तमविरोधापादनं तदनुवदति दूषयितुम्—यद्यज्ञेति। कर्णाग्रप्रदेशं दूषयति —तत्सर्वेति सर्वशब्दबलात् मूलाग्रप्रदेशयोरपि यत्नाद्वेष्टनसम्पादनाद्विरोध एवेति तदपि हेयमित्यर्थः। पठितवेदार्थविचारणपरतया वेदानधीत्येति विकल्पस्मृत्यापि कृत्स्नवेदाध्ययनस्य बहुवर्षसाध्यत्वेन अकृष्णकेशाधानाङ्गीकारान्नाष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतेः श्रुतिविरोध इति यदुदाहरणभङ्गापादनं परेषां तत् कृष्णकेशश्रुतेः मेधोद्योगाद्यतिशयशाली कश्चित् कृष्णकेशोऽपि कृत्स्नवेदानधीत्याधानकृत् सम्भवतीति हेयमित्याह—यद्वेदानिति। स्पर्शनसर्ववेष्टनयोर्विरोधमुपेत्यैव प्रधानबाधाद्गुणबाधो न्याय्य इति क्रममात्रबाधेन पूर्वं स्पर्शः पश्चात् सर्ववेष्टनमिति न विरोध इति यद्विधान्तरेण भङ्गापादनं तदपि द्वयोरन्यशेषत्वान्न मिथः क्रमसम्भव इति हेयमित्याह—यत्तु स्पर्शनेति।

किमित्येतद्दिक्दूषणनिरासो गुरुणा न कृत इत्याशङ्क्य तुच्छत्वादवधीरितमित्याह— एवमिति। यस्तु विरोधाभावद्भङ्गः स दुष्परिहर इति विरोधोपपादनेन यत्नाद्गुरुणा [1]निराकृत इत्याह अविरोधादिति। प्रमाणायामिति भाष्यं, तदयक्तं

---

१. B. वधारितमिति भावः। ननु भाष्ये प्रमाणापदमुक्तं तदयुक्तं।

प्रमाणमयते याति मूलभूतां श्रुतिं यतः।
क्लीबान्तादयतेस्तस्मात् प्रमाणा स्मृतिरिष्यते ॥ इति ।

॥ अधिकरणान्तरं वा ॥

युक्त्यन्तरापेक्षिणी युक्तिः पूर्वत्रोपपादिता। अत्र पुनः निरपेक्षतयोच्यमानाऽधिकरणान्तरमित्यपुनरुक्तिः। सङ्गतिद्वयं च। हेतुदर्शनं च श्रुतिविरोधयुक्तेः वेदानुमानबाधदार्ढ्यार्थं पूर्वमुक्तम्। यद्यपि विरोधमात्रादेव बाधधीः सुधियां; मन्दधियां चाभ्युच्चयापेक्षेति सर्वगामितया सर्वबाधधीदार्ढ्यार्थमुक्तम्। इह हेतुदर्शनमात्रात् बाधव्युत्पत्तेः पूर्वोक्तयुक्तिशक्ति-

---

असाधुत्वात् प्रमाणपदं ल्युडन्तं भावे नित्यनपुंसकतया प्रमाणे स्मृताविति स्यात्। करणे विशेष्यनिघ्नतया स्त्रीत्वे टित्वात् ङीपि कृते प्रमाण्यामिति स्यात्। तत्कथमित्याशङ्क्य वार्तिकोक्तप्रकारेण साधुत्वमाह—प्रमाणायामिति। प्रमाणमयत इति विगृह्य प्रमाणोपपदात् अयतेर्धातोः क्विपि लोपो व्योर्वलि इति यलोपे क्विपश्च लोपे टापि प्रमाणापदं कृत्वा कृतः। प्रसङ्गेन नित्यतया वेरपृक्तस्येति लोपस्य प्राथम्यात् वल्परत्वाभावात् यल्लोपाभावो यद्यपि तथापि लोपो व्योर्वलीति विधेयोद्देश्यव्युत्क्रमात् ज्ञाप्यते विलोपविधेर्यलोपः प्रथमभावीति तद्यलोपे कृते विलोपः। न चैवमपि प्रमाण अ इति स्थिते अन्तरङ्गतया सवर्णदीर्घे कृते अदन्तत्वाभावेन टाप् न स्यादिति वाच्यम्। अनेकाश्रयत्वेन सवर्णदीर्घस्यैव बहिरङ्गत्वात्। एकाश्रयतयाऽन्तरङ्गत्वात् टाबुत्पत्तिरेवाग्रे। ततश्च सवर्णदीर्घद्वये प्रमाणारूपनिष्पत्तिः। यद्वा एकादेशस्यान्तादिवद्भावाट्टाबुत्पत्तिः। आगमविधीनां त्वनित्यत्वात्तुको न प्राप्तिः। यद्वा अन्येभ्योऽपि दृश्यन्त इति विजन्तं प्रमाणापदं दृशिग्रहणाद्भाषायामपि विजन्ततैवेति वेद्यम्।

अधिकरणान्तरं ॥ ३ ॥ हेतुदर्शनाच्च ॥ ४ ॥

वैसर्जनीयं वासोऽध्वर्युर्गृह्णाति यूपहस्तिनो दानमाचरन्तीत्यादिस्मृतयः किं वेदमूला उत लोभमूला इति चिन्ता। ननु हेतुदर्शनात् वेदानुमाबाधः पूर्वत्रोक्तः। इहापि स एवोच्यत इति पुनरुक्तिः विषयमात्रभेदो ह्यत्र, न न्यायभेदः युक्तेरेकत्वात् कथं चाध्यायसङ्गतिः? चोदनाप्रामाण्यव्युत्पत्तिपरत्वाभावादित्यत्राह—युक्त्यन्तरेति। यद्यपि युक्तिस्वरूपमेकं तथापि हेत्वन्तरसापेक्षत्वनिरपेक्षत्वभेदेन युक्तिभेदादधिकरणान्तरत्वमिति न पुनरुक्तिः। सङ्गतिद्वयं च। यथा च सङ्गतिस्तथोत्तरत्र स्फोरयिष्यते। एतमेव युक्तिभेदमुपपादयति—हेतुदर्शनं चेति। नन्वेवमपि कथं सङ्गतिस्तत्राह—पूर्वोक्तेति। पूर्वनयशेषत्वान्न पृथक् सङ्गत्यपेक्षा। केचित्तु हेतु-

निष्कर्षात् पूर्वचिन्ताशेषतया न पृथक् सङ्गतिद्वयम् । न त्वेवं सङ्गतिः— यदि हेतुदर्शनमात्रात् वेदानुमानबाधः तर्हि सर्वस्मिन् कथञ्चित् हेतुसम्भवात् सर्वत्र स्मृत्यधिकरणपूर्वपक्षापत्तेः प्रामाण्याक्षेप इति । न च सर्वत्र हेतुदर्शनसम्भावनयाऽत्र पूर्वः पक्षः । किं तर्हि ? हेतुदर्शनमात्रं न बाधहेतुरिति । दृष्टमपि मूलं लोभादि न स्मृत्यनुगुणमिति तद्धानादनुगुणवेदानुमेति स्मृत्यधिकरणराद्धान्तनयात् पूर्वः पक्षः ।

राद्धान्तस्तु दृष्टे मूले लोभे नादृष्टानुमा । सति हि कल्पनेऽनुगुणकल्पना न क्लृप्तहाने । दृश्यन्ते हि ऋत्विजां लोभानुगुणाचारानुगुणोपदेशाः । तदादरोऽत्रैगुण्यशङ्कया तदादराच्च स्मृतिः; अमीमांसितत्वात् । सान्दृष्टिकी याज्ञिकानामिवामीमांसातो "मृगोऽसी"त्यूहः ।

---

दर्शनमात्रात् स्मृत्यप्रामाण्ये सर्वत्र तत्सम्भवेन सर्वस्मृत्यप्रामाण्यापत्त्या स्मृत्यधिकरणपूर्वपक्षापत्तेः स्वातन्त्र्येणैव सङ्गतिरित्यूचुः । तन्नेत्याह–न त्वेवमिति । सर्वस्मृतिषु हेतुदर्शनानुवृत्तेः ग्रन्थेऽनुक्तत्वान्न सर्वत्र हेतुदर्शनसम्भावनयाऽत्र पूर्वपक्षः । कथं तर्हीत्यत्राह—किं तर्हीति । ननु त्वत्पक्षेऽपि पूर्वपक्षो मन्दः क्लृप्तदृष्टहेतौ सति अदृष्टकल्पनायोगात तत्राह –दृष्टमपीति । दृष्टत्वेपि लोभस्यालौकिकार्थस्मृत्यानुगुण्यं नास्तीति तदनुगुणो मूलतया वेद एवानुमेय इति स्मृत्यधिकरणराद्धान्तादेवात्र पूर्वपक्षो न तदधिकरणपूर्वपक्षापत्त्येत्यर्थः । राद्धान्तस्त्विवति । न हि दृष्टे सम्भवत्यदृष्टकल्पना न्याय्येति दृष्टे लोभमूले सति नात्यन्तादृष्टवेदानुमा युक्तेत्यर्थः । ननु दृष्टत्वेप्यननुगुणो लोभः स्मृतेरित्यनुगुणवेदानुमैवौचित्याद्युक्ता तत्राह– सति हीति ।

स्यादेवमौचित्याद्वेदानुमा यदि तुल्यवद्धीस्थौ लोभवेदौ स्याताम् । इह तु ऋत्विक्सम्प्रदानकदानस्मृतेः तद्वृत्तिलोभः स्वरूपतः क्लृप्तः । सम्भावितं च तस्य मूलत्वं वेदस्तु कल्प्यः । न हि क्लृप्तकल्प्ययोः तुल्यवत् धीस्थता । अतः कल्पनायां सत्यामौचित्यात अनुगुणकल्पनं नतु क्लृप्तहानादिति दृष्टः क्लृप्तो लोभो मूलम् नात्यन्तादृष्टवेदकल्पना । लोभमूलत्वस्य सम्भावनामाह—दृश्यते चेति । अद्यत्वेपीति शेषः । कथं लोभमूलत्वे तदनुष्ठानादरस्तत्राह –तदादर इति । ननु लोभमूलाचारमूलकं कथं स्मृतिप्रणयनं स्मर्तॄणां नैयायिकानां कथं वा स्मृत्यनुवृत्तिः तत्राह— तदादरादिति । अविदुषामनुष्ठानदर्शनमात्रेण स्मर्तॄणां न्यायापरामर्शनिबन्धनं स्मृतिप्रणयनं अनुष्ठानानुवृत्त्या च स्मृत्यनुवृत्तिरिति युक्ता सान्दृष्टिकी याज्ञिकानामिति । धान्यमसीत्यस्य मन्त्रस्य मांसहविष्कविकृतौ नावमिकन्यायं

भ्रान्तिमूलता च स्मृतेः स्ववचनात् । क्वचिदङ्गं वा समभिव्याहारादित्या-भासोक्तेः । न चैवमष्टकादिस्मृतिः । न हि अष्टकोपदेशे विशेषलाभो ऋत्विजाम् । न च स्मर्तृभ्रमो निर्बीजः । स्मर्तॄणां धर्मैकभावनान्नाशयदोषो बीजम् । न च स्मृतिविषये प्रमादाशक्ती बीजम् । कल्प्यं चेद्वरं अनुगुणो वेदः कल्प्यः । एतेन परापादितं निरस्तम्—

रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।
क्वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः ॥ ( त. वा. १-३-२ )

उक्तदोषचतुष्कमेव वार्तिककृता प्रपञ्चितम् । उत्प्रेक्षितुं आरोपयितुं शक्या इति वदतैव निरस्तप्रायम् । न भङ्गतया निराकरणार्हम् । यदपि

---

सम्यगनुसन्दधतां प्रकृतिद्रव्यवाचिपदस्थाने तादृशमेव पदमूह्यमिति सामान्यन्याय-मेवानुसन्दधतां याज्ञिकानां मीमांसातो यथा मृगोऽसीत्यूहः । तथा भ्रान्त्यादि-मूलत्वमपि क्वचित् स्मर्तृवचनादेव सूचितमित्याह—भ्रान्तीति । नन्वेवमष्टकादि-स्मृतीनामपि लोभादिमूलतया प्रामाण्यं न स्यादित्यत्राह—न चैवमिति । न तावदष्ट-कादौ लोभमूलतासम्भवः पुरुषविशेषगतलोभनियमाभावात् । तर्हि भ्रममूलताऽस्तु तत्राह—न चेति । निर्मूलभ्रमायोगात् । एवमाशयदोषप्रमादाशक्तीनामसम्भवमाह—स्मर्तॄणामिति ।

नन्वेवमप्यत्यन्तादृष्टवेदाद्भ्रान्त्याद्येव कल्पयितुं वरमित्यत्राह—कल्प्यं चेदिति कल्प्यं चेदौचित्यात् स्मृत्यनुगुणो वेदो मूलतयाऽष्टकादौ कल्प्यः । आनुगुण्यं चेह दृष्टत्वसामर्थ्ययोरप्युपलक्षणम् । अन्यथा न क्वापि स्मृतिः वेदमूला स्यात् । इह तु यूपहस्तिदानादौ ऋत्विग्वर्तिलोभः क्लृप्त एवेति मूलजिज्ञासायाः अभावान्नौ-चित्याद्वेदकल्पनेति बाधितविषयमनुमानमित्यर्थः । एवं चाचार्यैरापादितं न युक्त-मित्याह—एतेनेति । नन्वन्य एव मूलत्वेन वार्तिकोक्ताः न भ्रान्त्यादिचतुष्कमेवे-त्यत्राह—उक्तेति । नन्वेतद्ग्रन्थे किमिति नोपन्यस्य निरस्तम् तत्राह—उत्प्रेक्षितुमिति । ननु ऋत्विग्विषया सर्वापि स्मृतिः लोभमूला स्यादित्यत्राह—यदपीति। दृष्टार्थत्वाद्द-क्षिणादानस्य क्रतुविधिनैव तदाक्षिप्तम् । केवलं तत्राध्वर्य्वादिवर्गप्राप्तदक्षिणाया अर्धतदर्धतत्पादतृतीयांशादिनियममात्रे तत्तत्कर्मानुरूपे स्मृतिवचनव्यापारः, न च नियमांशे पुरुषानुपयुक्ते लोभमूलतासम्भवः । तथा अनृत्विजे च यद्दानस्मरणं तत्रापि पुरुषविशेषसम्प्रदानकत्वाभावान्न लोभमूलार्हतेति वेदमूलतैव कल्प्येत्यर्थः । ननु यत्रानियमस्मृतेरपि अधिकलाभकरत्वं तत्र लोभमूलता सम्भवति यथा सुवर्ण-

क्रत्वर्थाक्षिप्तानुरूपदक्षिणाश्रिततया प्रकारभेदनियमस्मरणं अनृत्विजे च दानस्मरणं तत् न ऋत्विग्लोभविषयमिति कल्प्यवेदमूलमेव। प्रत्यक्षवेदविहितपरोपकाराक्षिप्तदानाश्रयं सुवर्णशृङ्गि[1]काद्यनेकनियमस्मरणं न लोभमूलमिति कल्प्यवेदमूलमेव। नन्वत्र ऋत्विगप्यादेयवाक् स्वार्थदापनात् स्मर्तु[1]र्भ्रान्तिकरः। तन्न। एवंभूतपुंसन्निधिः कल्प्यः। ऋत्विक् तु तत्र क्रतौ क्लृप्त एवेति ऋत्विग्दानं दक्षिणाधिकं हेतुदर्शनमूलं युक्तम्।

## ॥ ४ ॥ शिष्टाकोपेऽविरुद्धमिति चेत् ॥ ६ ॥

[2]स्मृतिमुखमप्रामाण्यमविरोधे विरोधे च प्रतिविहितम्। इहाविरोधादहानं स्मृतेरित्येवं स्मृत्यधिकरणनयस्य विषयव्याप्तये नयान्तरमुच्यते।

---

शृङ्गी रूप्यखुरा कांस्यदोहा गौर्देयेति तत्राह – प्रत्यक्षेति।

स्मृतेः ऋत्विग्विषयत्वे तथा स्यात्। न ऋत्विग्विषयत्वम्, अनारभ्याधीततया क्रत्वन्वयाप्रतीतेः क्रत्वाक्षिप्तदक्षिणादानाश्रयत्वाभावात्। किन्तु परस्मा उपकर्तव्यमिति प्रत्यक्षवेदविहितदानाश्रयतया। तत्र चा[3]विहितसम्प्रदानत्वात् नियमांशस्य पुरुषानुपयोगान्न लोभः किन्तु वेदो मूलम्। ननु ऋत्विगपि आदेयवाक् कश्चित् कञ्चन धर्माभिमुखं यजमानं अनृत्विजे दानमवश्यं कार्यमिति स्वलाभाय दाने प्रवर्तयेत्। ततश्च तत्प्रवृत्तिः स्मर्तृभ्रममूलमिति चोदयति – नन्विति। तन्नेति। तादृशपुंसन्निधिः क्रतौ कल्प्यः। तल्लोभोऽपि मूलतया कल्प्यः। कल्प्यश्चेदानुगुण्याद्वेद एव। ऋत्विक्सन्निधिस्तु क्रतौ क्लृप्त इति तल्लोभोऽपि स्वत एव क्लृप्त इति न क्लृप्तहानेन वेदकल्पनेति पुंभेदर्त्विक्सम्प्रदानकं दक्षिणाधिकदानं हेतुदर्शनमूलं युक्तमित्यर्थः।

## ॥ ४ ॥ शिष्टाकोपे विरुद्धमिति चेत् ॥ ६ ॥

आचान्तेन कर्तव्यं दक्षिणाचारेण कर्तव्यं यज्ञोपवीतिना कर्तव्यमित्यादिस्मृतौ चिन्ता-किमस्याः भ्रान्त्यादि मूलं उत वेद इति। तदर्थमियं चिन्ता-किं प्रत्यक्षश्रुतिविरोधोऽस्याः उत नेति। ननु स्मृतिमुखस्याप्रामाण्यस्य स्मृतिविरोधनयाभ्यामेवाविरोधे विरोधे च प्रतिहतेरिह तदतिरिक्तव्युत्पाद्यन्यायान्तराभावात् कथं शास्त्रेऽस्य सङ्गतिः। कथं वा चोदनाप्रामाण्यव्युत्पत्तिविधुरस्य अध्याये, कथं चावान्तरसङ्गतिः हेतुनयोक्तानुपजीवित्वात् तत्राह—स्मृतिमुखमिति। सत्यं स्मृतिमुखमप्रामाण्यं अविरोधे विरोधे च प्रतिहतम्, तथापीह विरोधाभावादहानं स्मृते-

---

१. शृंगित्वाद्य R २. स्मृतमुखं A ३. A अनियत–की

अतः शास्त्रेऽध्याये गतानन्तरं च सङ्गतिः। नयान्तरव्युत्पत्तेः शास्त्रे स्मृत्यधिकरणविषयताव्युत्पत्तिः तच्चिन्तानिवेशात् तत्सङ्गतिरेवास्य अध्याये। विरोधे हानं पूर्वोक्तमिह शङ्कितमिति तदुत्तरता। तदभ्युच्चयहेतु-दर्शनशक्ति[1]निष्कर्षोक्तिविश्रान्तये विरोधहाननये चिन्तेयमनन्तरं युक्ता।

पूर्वपक्षस्तु—मन्दधि[2]यां श्रुतवेदार्थक्रमकालविरुद्धक्षुताद्याचमनदक्षिणा-चारादिस्मृतिराभाति। क्षुतादिनिमित्तेपि अन्तरा आचमने वेदं कृत्वा वेदिं करोतीति श्रौतोऽयं क्रमो बाध्येत। विततेरन्यत्वापत्तेः। तथा श्रुत-वेदार्थप्रधानता अङ्गानां दक्षिणैककरेणानुष्ठाने प्राप्ते स्मार्ते विलम्बा-पत्तेर्बाध्येत। ननु गृहीतकृत्स्नश्रौतस्मार्तानुष्ठेयानुगुणक्रमकालग्रहविषयेयं

---

रिति स्मृत्यधिकरणस्य विषयव्याप्तिरूपतया नयान्तरेण साध्यत इति शास्त्रे-ऽध्याये सगतीअनन्तरं च सङ्गतिः सिद्धा। एतदेव विविच्य दर्शयति—नयान्तरेति। ननु विरोधनयोत्तरत्वेपि कथं हेतुनयानन्तर्यम् तदाह—तदभ्युच्चयेति। यद्यपि न हेतुनयापेक्षा अविरोधनयस्य तथापि विरोधनयोक्ताभ्युच्चयहेतुशक्तिनिष्कर्षरूप-त्वात् हेतुनयस्यान्तरङ्गतया पूर्वं जिज्ञासितत्वात् तेनासौ विश्रान्त इति तदानन्तर्य-मिति भावः। ननु कथमत्र पूर्वपक्षः तीक्ष्णधियां स्मार्ताचमनादेः श्रौतक्रमकालविरो-धित्वाप्रतिभासात् इत्यत्राह—पूर्वपक्षस्त्विति।

सत्यमेवं तथापि मन्दधियां स्थूलबुद्धीनां श्रुतवेदार्थक्रमकालविरुद्धा प्रत्यक्ष-वेदप्रतिपाद्यक्रमकालविरुद्धा आचमनदक्षिणाचारादिस्मृतिर्भाति। अतस्तन्नि-वृत्तिरपि वृश्चकादिमन्दविषचिकित्सावत् कार्येति भावः। नन्वाचमनं प्रयोगाङ्गं कर्तृसंस्काररूपत्वात्। तत्प्रयोगोपक्रमे सकृदेव कार्यम्। न वेदं वेदीं चान्तरेति न श्रौतक्रमविरोधितेत्यत्राह—क्षुतादीति। क्षुतादिनिमित्तकं हि स्मृतमाचमनमत्र विषयः नाचमनमात्रम्। तत्र वेदे कृते वेद्यां करिष्यमाणायां मध्ये क्षुतादौ जाते तन्निमित्ते ह्याचमने वेदवेद्योर्मध्ये कृते वेदं कृत्वा वेदिं करोतीति योऽयं क्त्वाश्रुति-[3]विहितः क्रमः स बाध्येत विततेरन्यत्वापत्तेः व्यवधानापत्तेरित्यर्थः। एवं दक्षिणा-चारेण कर्तव्यं यज्ञोपवीतिना कर्तव्यमिति दक्षिणैककरानुष्ठानयज्ञोपवीतयोः स्मार्तयोः श्रौतकालविरोधमाह—तथेति। पूर्वपक्षमाक्षिपति—नन्विति। श्रौतस्मार्त-पदार्थान्वयोत्तरकालं हि अङ्गानुष्ठानेऽपेक्षितान्वयः। क्रमो ह्यङ्गगुणो अङ्गानां प्रधानकालता चेति न पूर्वकालीनपदार्थविरोधिता तयोः। तथा च प्रधानभूतं

---

१. R विरोधनये २. कार्यधियां ३. श्रुतिनिमित्ताः।

चिन्तेति न क्रमकालयोः स्मार्तग्रहविपरीतता। तन्न। श्रौतानुष्ठेयमात्रानुगुणः श्रुत्यादिगम्यः क्रम इति पञ्चमे स्थितम्। प्रत्यक्षचोदनालक्षणानुज्ञानात् क्रमस्य स्मार्तानामनुमेयचोदनार्थतया जघन्यत्वात् न तद्गुणता क्रमस्येति फलतः पञ्चमे स्थितम्। अतश्च क्रमाविरोधी स्मार्तनिवेशः। एवं प्रत्यक्षचोदनालक्षणं अङ्गानां मुख्यकालत्वं विरोधिस्मार्तनिवेशनिरोधकं दक्षिणैककराचारे यज्ञोपवीते चलति च प्रयोगविलम्बापत्तेः मुख्यकालताहानिः।

राद्धान्तस्तु—विलम्बिनोऽपि स्मार्तस्य कार्यत्वात् कार्ये च शब्देन तात्पर्यतः प्रमिते पश्चात् तदनुष्ठानानुगुणतया क्रमोऽपि शाब्द इति स्मार्तमपि कार्यं विलम्बितं प्रतीक्ष्य प्रत्यक्षशाब्दान्तर्गतक्रमग्रह इति स्मार्तनिवेशानुरोधो क्रमः इति। पञ्चमे तु यच्छ्रौतमात्रागुणत्वं फलत उक्तं तदेतन्नयानुसन्धानादुक्तमिव फलतो भाति।

---

स्मार्तमङ्गं गुणभूतौ क्रमकालाविति न तयोः पदार्थबाधनक्षमतेति भावः। समाधत्ते—तन्नेति। सत्यमङ्गगुणः क्रमः सत्यं चान्वयोत्तरकालीनः तथापि श्रौतांगमात्रगुणः क्रमः न स्मार्ताङ्गगुणोऽपि प्रत्यक्षश्रुत्यादिप्रमाणा[१]वगतत्वादिति पञ्चमे स्थितेरित्यर्थः। नन्वयमर्थः पञ्चमेऽपि न साक्षात्साधित इत्यत्राह—प्रत्यक्षेति। ननु यदि प्रत्यक्षचोदनालक्षणतयाऽनुज्ञानात् क्रमस्य स्मार्ताङ्गानामनुमेयचोदनार्थतया जघन्यत्वान्न तद्गुणताक्रमस्य तर्हि श्रौतैः सह स्मार्तानां बद्धक्रमतया[२]ऽनुष्ठाने निवेशो न स्यादित्यत्राह—अत इति। शीघ्रभाविश्रौताङ्गैरेव ग्राहकविनियोजकप्रयोजकरूपविधेर्निराकाङ्क्षत्वात् स्मार्तानामप्याकाङ्क्षामुत्थाप्यैवान्वयः, स च श्रौताविरोध एव। न तु श्रौतक्रममाकाङ्क्षितं च विरुद्धयति इति न क्रमविरोधि स्मार्तनिवेश इत्यर्थः। अङ्गानां प्रधानकालताप्येवं श्रौताङ्गमात्रगुणतया विरोधिस्मार्तनिवेशनिरोधिकेत्याह— एवमिति। विरोधमुपपादयति—दक्षिणेति।

राद्धान्तस्त्विति। यद्यप्यनुमेयचोदनार्थतया स्मार्तमङ्गं विलम्बितम्, तथापि तस्य चोदनाप्रतिपाद्यत्वेन चोदनातात्पर्यविषयतालब्धसाधनभावस्य तदधीनानुष्ठानभागितया कार्यत्वात प्रथमभावित्वम्। क्रमस्त्वनुष्ठेयतया कार्यभूतेऽङ्गवर्गे शब्देन तात्पर्यतः प्रमिते सति पश्चात् तदनुष्ठानानुगुणतया अनुष्ठानप्रवेशेन[३] शब्दविषयो जायत इति प्रथमभावि प्रधानभूतं कार्यं विलम्बितमपि प्रतीक्ष्य गुणभूतः पश्चाद्भाविप्रत्यक्षचोदनान्तर्गतश्रुत्यादिगम्योऽपि ग्राह्य इति स्मार्ताङ्ग-

---

१. प्रमाणायत्तत्वात्—B २. अनुबन्धक्रमतया A ३. A अनुष्ठानप्रमितिनिवेशेन

कालोऽपि प्रचयः कार्याणां, ततः स्मार्तकार्यनिवेशात् पश्चात् तदनुरोधी।

अत्र भाष्यम्–'अपि च प्राप्तानां पदार्थानामुत्तरकालं क्रम आपतति' इति पूर्वोक्तैव युक्तिः 'अन्तरा[1] 'अपि चे'ति कृत्वोक्तेति शङ्कामपनेतुं व्याख्यातम्। क्रमकालयोरपि कार्यत्वान्न कार्यगुणतया राद्धान्तसिद्धिरित्यपि च न विप्रतिपत्तव्यमित्यर्थः। अतो न पुनरुक्तिः। पौर्णमासीकालोऽपि विहितत्वात् कार्यरूप एव। नतु विधेयक्रियाप्रचितिः कालः तस्य द्वितीयादिष्वपि[2] तुल्यत्वात् न पौर्णमासीत्वम्। न चैतदतिरिक्तोऽत्रान्वयी कालः विधेयप्रचयात्मा लौकिकः। तथा क्रमोऽपि क्त्वाश्रुतिविहितोऽध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति (न) कार्य एव

---

निवेशानुरोधात् क्रमस्य न तद्विरोधितेत्यर्थः। नन्वेवं पञ्चमोक्तविरोध इत्यत्राह— पञ्चमे त्विति। कालस्यापि स्मार्ताविरोधित्वमाह—कालोऽपीति। कार्याणां प्रचयः अनुष्ठेयभूतपदार्थप्रचयात्मा प्रधानसन्निकर्षरूपः कालोऽपि स्मार्ताङ्गान्वयोत्तरकालीनः तदनुरोध्येव न विरोधीत्यर्थः। अत्र भाष्यं—"अपि च प्राप्तानां पदार्थानां उत्तरकालं क्रम आपतति। यदा पदार्थास्तदा क्रम एव नास्ती"ति यत्—तदयुक्तं पुनरुक्तत्वात् आचमनं पदार्थ इत्यादिभाष्येण गुणभावोक्त्यैव यदा पदार्थास्तदा क्रम एव नास्तीत्येतदपि उक्तप्रायमेव न युक्त्यन्तरतया कथनीयमितीमामाशङ्कां भाष्यानुभाषणपूर्वकमुक्त्वा ग्रन्थोक्तं भाष्यार्थमाह— अत्र भाष्यमिति।

क्रमकालयोरपि कार्यभूतपदार्थतैव न पदार्थगुणतेत्येवंविधशङ्कानिरासार्थत्वात् भाष्यस्य न पुनरुक्तार्थतेति भावः। अथ कथं तयोः कार्यार्थतेत्याशङ्क्य कालस्य तावदाह—पौर्णमासीति। पौर्णमास्यां पौर्णमास्येति वाक्येन साधनतया विहितत्वेन कालस्य कार्यतैवेत्यर्थः। ननु विधेयक्रियाप्रचित्यात्मकस्य तस्य कथं कार्यतेत्याशङ्क्य तस्य विधेयक्रियाप्रचित्यात्मकत्वं नास्तीत्याह – नत्विति। तत्र हेतुः—तस्येति। किं पौर्णमासीकालस्यैव विधेयप्रचयात्मकत्वमुच्यते, किं वा तदन्यस्य। नाद्यः। विधेयक्रियाप्रचित्यात्मककालस्य द्वितीयादितिथिष्वपि तुल्यत्वात् न पौर्णमासीत्वम्। न द्वितीयः। पौर्णमासीतोऽतिरिक्तस्यात्रानुष्ठेयपदार्थैरन्वयिनः कालस्य लोकाप्रसिद्धत्वादित्यर्थः। एवं क्रमोऽपि वाक्यप्रमेयतया विहितत्वात् कार्यरूप एव न कार्यगुण इत्याह—तथेति। कथं तयोः कार्यत्वशङ्कायाः

---

१. B अन्तरा	२. B पि

न कार्यगुणः[३] । अत्रोत्तरं—अपि च प्राप्तानां पदार्थानामुत्तरकालः क्रमः प्रवर्तत इति भाष्यमेवमाह ।

प्राप्तायां दीक्षायां कर्तृनियमार्थं वाक्यं, न क्रमनियमार्थम् क्रमादरः कथञ्चित् क्त्वाश्रुतिबोधितः कार्यानुष्ठानानुगुणतया पश्चादापतित इति स्वावसरे पञ्चमे वक्ष्यामः । कालोऽपि प्रचयो विधेयक्रियाणां तदुत्तरकालमापततीति न साक्षाद्विधेयः । पौर्णमास्यपि प्रचितिकाल एव । न हि काल एको विभुर्नित्यः, पौर्णमासीद्वितीयादिष्वपि नित्यस्याविशेषात् । किन्तु ग्रहक्रियान्तरप्रचितिरेव । संयोगजा प्रतिपदादिः पौर्णमास्यन्ता । विभागजा प्रतिपदादिरेवामावास्यान्तेति नित्यकालोपहित-

---

निरास इत्यत्राह—अत्रोत्तरमिति । एतद्भाष्यस्थोऽपिचेति निपातसमुदायः आशङ्कितपक्षव्युदासार्थ इति भावः । कथं तयोरकार्यतेत्याशङ्क्यक्रमे तावदाह—प्राप्तायामिति । अध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिवाक्यं चोदकतः प्राप्तायां दीक्षायामध्वर्य्वादिकर्तृनियमार्थमेव न क्रमनियमार्थमेवेति वाक्यप्रमेयत्वाभावात् क्रमस्य न विहिततया कार्यतेत्यर्थः ।

कथं तर्हि क्रमादर इत्यत्राह—कथञ्चिदिति । क्त्वार्थोपाधिपूर्वकालताबलात् कथञ्चित् प्रतीतत्वमात्रेण अनुष्ठेयपदार्थगुणतया पश्चादनुष्ठानावसरेऽनुगुणतया क्रयस्यादरो न विहिततयैवेति पञ्चम एव स्पष्टमुक्तत्वादिति न क्रमस्य कार्यभूतस्मार्ताङ्गविरोधितेत्यर्थः । एवं कालोऽपि विधेयपदार्थोत्तरकालीन एव विधेयक्रियाप्रचयात्मकत्वात् न साक्षाद्विधेयतया कार्य इत्याह—कालोऽपीति । यद्यपि कालमात्रस्य पदार्थप्रतीत्युत्तरकालता नास्ति तथापि विधेयक्रियाप्रचित्यात्मकस्य कालस्य तदुत्तरकालतैवेति भावः । ननु विधेयक्रियाप्रचित्यात्मकस्य कालस्य लोकाप्रसिद्धेर्न तदुपगमो युक्त इत्याशङ्क्य प्रसिद्धपौर्णमास्यादिकालोऽपि क्रियाप्रचित्यात्मक एवेति दर्शयति—पौर्णमास्यपीति । ननु काल एको विभुर्नित्य इति प्रसिद्धकालस्यैव पौर्णमासीत्वं युक्तं न क्रियाप्रचितेरित्यत्राह—नहीति । ननु क्रियाप्रचितेः पौर्णमासीकालत्वे प्रधानकालवत् तस्यापि विधेयत्वं न स्यादित्यत्राह—किन्त्विति क्रियान्तरेति । स्यादेवाविधेयत्वं यदि विधेयक्रियाप्रचितिः पौर्णमासी स्यात् । सा तु क्रियान्तरप्रचितिरेव चन्द्रादिग्रहक्रियाप्रचितिरेव । एतदेव प्रतिपादयति—संयोगजेति । अमावास्यायां सूर्याचन्द्रमसोरत्यन्तसंयोगे सति जाता चन्द्रक्रियाप्रचितिः तद्विभागफलका प्रतिपदादिः पौर्णमास्यन्ता । तथा पौर्णमास्यां तयोरत्यन्तविभागे सति जाता तत्संयोगफलका चन्द्रक्रियाप्रचितिरेव

---

३. कार्यानुगुणः A

प्रचितिभेदे प्रतिपदादिप्रयोगात् प्रचितिवाचिता। प्रगीतमन्त्रे सामशब्दप्रयोगात् गीतिवाचित्ववत्। एवं विधेयप्रचितिरपि कालः। तस्यां प्रधानप्रचितौ सत्यामङ्गानीति प्रधानकालता। एवं कालोपाधेः प्रचितौ कालशब्दः। एवं च कार्या पौर्णमासी दक्षिणाद्वारेप्यविरुद्धा। प्रधानकालता तु न कार्या। कार्यानुगुण एव तु भवति। सर्वस्यास्य स्मार्तस्य कर्तृसंस्कारकस्य प्रयोगाङ्गतया [3]प्रतिप्रयोज्यमङ्गतेति न स्वाङ्गस्य व्यवधायकत्वमिति न क्रमकालविरोधिता। स्वाङ्गवत एव क्रमादरादिति अधिकरणाधिकं सौहार्दमात्रम्। एवं च तार्तीयक्रमे साक्षाद्विहितकाल[2]-

प्रतिपदादिरमावास्यान्ता। ततश्च क्रियान्तरप्रचित्यात्मकत्वात् पौर्णमासीकालस्य विधेयत्वं युक्तमित्यर्थः।

ननु कालभेदवाचितया प्रसिद्धस्य कथं प्रतिपदादेः क्रियाप्रचितिवाचितेत्यत्राह—इति नित्येति। नित्यकालोपहितः नित्यकालसम्बन्धः नित्यकालविशेषणीभूत इति यावत्। स चासौ प्रचितिभेदश्चेतिनित्यकालोपहितप्रचितिभेदः। तस्मिन् प्रतिपदादिपदस्य प्रयोगात् नागृहीतविशेषणनयात् प्रचितिवाचितैव तस्य। यद्वा नित्यः कालः उपहितो विशेषितो येन स नित्यकालोपहितः। ततः प्रचितिभेदपदेन विशेषणसमासः प्रचितिभेदोपहितनित्यकाल इति वा पाठः। तत्र दृष्टान्तमाह—प्रगीतेति। एवं ग्रहक्रियाप्रचितेः कालत्वं प्रसाध्य तद्वत् विधेयक्रियाप्रचितेरपि कालत्वं सम्भवतीत्याह—एवमिति। ननु विधेयप्रचितिकालस्याङ्गानुष्ठानाधारत्वायोगात् कथमङ्गानां प्रधानकालतेत्यत्राह—तस्यामिति। तस्यां विधेयप्रधानक्रियाप्रचितौ सत्यामङ्गान्यनुष्ठेयानि प्रधानसन्निकर्षेऽनुष्ठेयानीत्येवं प्रधानकालता न तु साक्षादाधारतयेत्यर्थः। ग्रहक्रियाप्रचिताविवात्रापि विधेयक्रियाप्रचितौ कालोपाधेः कालविशेषणत्वादेव कालशब्दप्रयोग इत्यत्राह—एवमिति। भवत्वेवं प्रचितिवाचिता तथापि किमित्यत्राह—एवं चेति। अत्र भाष्ये युक्त्यन्तरमुक्तम्—अपि चैवंजातीयका आचमनादयोऽर्थाः पदार्थानामव्यवधातारो भविष्यन्तीति तदभिप्रायमाह—सर्वस्येति। आचमनादेः कर्तृसंस्कारतया प्रयोगाङ्गत्वात् तस्य प्रतिप्रयोज्यमङ्गत्वात् वेदवेद्याङ्गत्वमपीति स्वाङ्गवत एव क्रमस्वीकारान्न स्वाङ्गस्य व्यवधायकत्वमित्यर्थः। ननु पूर्वोक्तयुक्त्यैव सिद्धान्ते सिद्धे युक्त्यन्तरोक्तिरेषा व्यर्थेत्यत्राह—अधिकरणेति। ननु वषट्कर्तुः प्रथमभक्ष इत्यादिविधेयतार्तीयक्रमविरोधविषये साक्षाद्विहितपौर्णमास्यादिकालविरोधे च कथं निर्वाह इत्यत्राह एवमिति। तार्तीये क्रमे तार्तीयविषये क्रमेतेन सह स्मार्तस्य विरोधे सतीति

१. प्रचितिभेदोपहितकाले A २. काले च R ३. प्रतिनियोज्यं A ४. B बाधादिरन्या

विरोधे च स्मृत्यधिकरणविषयव्याप्तिरनेन न कृतेति व्यक्तम् ।

॥५॥ तेष्वदर्शनाद्विरोधस्य समाविप्रतिपत्तिः स्यात् ॥७॥

यत्र न श्रुतिः न च स्मृतिः किन्तु विरोधात् पदार्थानध्यवसानं[१] तत्र तर्ह्यप्रामाण्यं वेदस्यायातीति सङ्गतिद्वयं पूर्वपक्षबीजं च । यथा केषांचित् व्यवहारतो दीर्घशूको यवशब्दार्थोऽवसीयते । केषांचित् प्रियङ्गुः । एकस्य शब्दार्थत्वेऽन्यस्य च गौणत्वसम्भवान्नानेकार्थता ।

---

शेषः तत्र स्मृत्यधिकरणविषयव्याप्तिरनेन न कृतेति तत्र बाधित[१]स्यान्यातिराश्रयणीयेति व्यक्तमित्यर्थः ।

॥ ५ ॥ तेष्वदर्शनाद्विरोधस्य समाविप्रतिपत्तिः स्यात् ॥ ८ ॥

"यवमयश्चरुर्भवति," "वाराही उपानहावुपमुञ्चते" "वैतसे कटे प्राजापत्यान् सञ्चिनोति" इत्यादिषु यवादिपदवतीषु चोदनासु चिन्ता—ताः किं अप्रमाणं उत प्रमाणमिति । तदर्थं चिन्ता यववराहवेतसशब्दाः किं म्लेच्छप्रयोगात् प्रियङ्गुवायसजम्बर्थाः आर्यप्रयोगात् दीर्घशूकसूकरवञ्जुलार्था वेत्यनध्यवसितार्था उतार्यप्रयोगबलवत्तया दीर्घशूकाद्यर्थतया व्यवस्थितार्था इति[२] । नन्वियं चिन्ता पदार्थविशेषमात्रपरा भाष्यादाभाति । सा चासङ्गता प्रमाणलक्षणे । तथा स्मृत्यधिकरणविषयव्याप्त्यनन्तरं विरोधनयविषयव्याप्तिरूपकल्पसूत्रनय एव युक्तः । कथमियं मध्ये चिन्ता । तथा विरोधनिवन्धनप्रामाण्यं विरोधनय एव वारितमिति कथमिहाप्रामाण्यशङ्केत्याशङ्क्य सङ्गतिद्वयं पूर्वपक्षबीजं चाह—यत्रेति ।

युक्तं विरोधनये श्रुतिस्मृतिविरोधे स्मृतिबाधादप्रामाण्यनिवारणं[३], यत्र तु विषये न स्मृतिः श्रुतिविरुद्धा नापि श्रुतिः स्मृतिविरुद्धा । यत्रान्योन्यविरुद्धे श्रुतिस्मृती न स्त इति यावत् । किन्तु व्यवहारद्वयविरोधात् पदार्थानध्यवसानं तत्र ह्यप्रामाण्यं वेदस्यानिवार्यम् । एवं विरोधादप्रामाण्यशङ्कोत्थितेः विरोधनयानन्तरता यववराहनयस्य । पिकनेमनयान्तैव विरोधनयस्थितिरिति तदुत्तरं तद्विषयव्याप्तिरिति कल्पसूत्रनय एव वक्ष्यत इति सङ्गतिद्वयं पूर्वपक्षबीजं चेत्यर्थः । पदार्थानध्यवसानं वक्तुं व्यवहारद्वयादर्थभेदमुदाहरणनिष्ठमाह—यथेति । नन्वेवमपि कथं पदार्थानध्यवसायः[४] व्यवहारद्वयादनेकार्थतैवाक्षादिवदस्तु इत्यत्राह—एकस्येति । अक्षादौ तु अर्थान्तरप्रयोगस्यानन्यथासिद्धतया युक्तमनेकार्थत्वम् । इह तु

---

१. A R पदार्थानध्य २. B किमार्यानार्यव्यवहारविप्रतिपत्त्या यवादिपदार्थानध्यवसानं उतार्यव्यवहारवशात् तदर्थाध्यवसानम् । ३. B निराकरणं ४. B कथमप्रामाण्यं ।

न च विशेषावधारणे हेतुरप्यस्तीत्यभिधानस्यानध्यवसायादप्रामाण्यं वेदस्येति। ननु [1]विशेषानवगमाद्व्रसुभयार्थता नत्वनवगतिर्युक्ता। मैवम्। सदृशयोरन्यतरत्र गौणता न्याय्येति नोभयत्र शक्तिर्युक्तेति अनवगतिरेव न्याय्या। ननु वाक्यशेषाद्विशेषाध्यवसानं युक्तम्। मैवम्। न वाक्यशेषः शक्तिं कल्पयति [2]गौणतयापि वाक्यशेषोपपत्तेः। अतो नाध्यवसायः।

ननु वाक्यशेषान्वयानुगुणार्थपरता शब्दस्य गौणपक्षेपीति पदशक्त्यनवधारणेपि पदतात्पर्यावधारणात् वाक्यार्थधीर्युक्ता। मैवम्। शक्त्यनवधारणे हि गौणमुख्ययोरुद्भूतत्वात् कतरार्थपरता। विध्युद्देश-

---

एकस्य शब्दार्थत्वे परस्य गौणतयाप्युपपत्तिसम्भवान्नानेकार्थतेत्यर्थः। नन्वेवमपि पदार्थानध्यवसाये आर्यव्यवहारो मुख्योऽस्तु व्यवहारान्तरं तु गौणमित्यत्राह— न चेति। ननु विशेषावधारणहेत्वभावादुभयार्थतैव कल्पयितुं युक्ता, न तु व्युत्पत्तिसिद्धार्थावबोधकत्वहानिरिति चोदयति—नन्विति। मैवमिति। अन्यतरत्र गौणादिवृत्त्यसम्भवनियतैव शक्तिकल्पना। न चेह तदसम्भव इति अनवगतिरेवात्र न्याय्येत्यर्थः। ननु विशेषानवगमे हि स्यादुक्तविधयाऽनध्यवसातम्। इह तु वाक्यशेषाद्यवादिपदानां दीर्घशूकाद्यर्थविशेषाध्यवसानं युक्तमिति चोदयति—नन्विति। मैवमिति। वाक्यशेषस्याप्यनन्यथासिद्धत्वाभावान्न शक्तिकल्पकतेति न ततोऽपि विशेषाध्यसानमित्यर्थः। ननु वाक्यशेषस्यशक्तिनिर्णायकत्वाभावेपि तात्पर्यनिर्णायकत्वमस्त्येव अक्ता इत्यत्र तेजो वै घृतमितिवत् अक्तशब्दस्य गौणपक्षेपि वाक्यशेषानुगुणार्थपरतया निश्चिततया वाक्यार्थधीक्तेतिर्यु चोदयति—नन्विति।

मैवमिति। युक्तमक्ता इत्यत्र वाक्यशेषात् तात्पर्याध्यवसानम्। अञ्जनद्रव्यसंयुक्तं अक्तपदस्यार्थ इत्येवं शक्तेरवधृतत्वात्। यत्र हि संशयो मुख्यार्थद्वयविषयो गौणार्थद्वयविषयो वा तत्र भवेद्वाक्यशेषादर्थनिश्चयः। इह तु शक्त्यनवधारणे शब्दश्रवणसमनन्तरं यत्र गौणमुख्ययोरप्युद्भूतत्वात् द्वयोरपि गौणत्वाक्रान्तं मुख्यत्वमिति कतरार्थपरतेति वाक्यशेषान्निर्णेतुमशक्यम्। तथापि कथञ्चित् पाक्षिकगौणत्वाङ्गीकारेणापि वाक्यशेषः स्वानुगुणार्थपरतां विध्युद्देशस्यापादयेत् यदि तत्परतन्त्रो न स्यात्। विध्युद्देशपरतन्त्रस्तु वाक्यशेषः। अतः शक्त्यनवधारणे वाक्यशेषान्न निर्णय इति अनध्यवसायान्न वाक्यार्थधीर्युक्तेत्यर्थः। ननु वाक्यशेषरूपवेदस्वरसोपस्थितार्थविरुद्धोऽनार्याणां प्रियङ्गुव्यवहारः सर्ववेष्टनस्मृतिवत् बाध्यत इति तद्बाधादार्यव्यवहारादध्यवसाय

---

१. R नन्वविशेषा　२. M गौणेनापि　३. B अविशिष्टाद्व्र

परतन्त्रार्थवाक्यशेषानुगुण्येनावधार्यतामित्यनध्यवसायः। न च वेदविरोधात् सर्ववेष्टनस्मृतिवत् प्रियङ्गुव्यवहारबाधादध्यवसायः। चरोः प्रियङ्गुभिरपि सम्भवात्।

ननु चोपानहौ वायसचर्मणा न प्रसरतः न तर्हि सूकरचर्मणापि। यदि कथञ्चित् सम्भावना सा वायसचर्मणापीति न वेदविरोध इति पूर्वः पक्षः।

राद्धान्तस्तु—वाक्यशेषरूपवेदविरोधो वायसादिरूपविषयव्यवहारादर्थावगमस्य। वाक्यशेषाद्धि गोसदृशता व्यवहारस्य। न च वायसे गोसदृशताधीः। सूकरे तु बहुतरावयवसामान्ययोगात् सदृशताधीः, गवयवत् सुसदृशताभावेपि। अतो वाक्यशेषात् सूकरव्यवहारो बलीयान् वायस-

---

इत्यत्राह—न चेति। तत्र हेतुः—चरोरिति। स्यादेव बाधो यद्यनुष्ठेयभूतवेदार्थविरोधः स्यात्। न चात्र विरोधः। प्रियङ्गुभिरपि चरोः सम्भवादित्यर्थः लोकव्यवहारप्रसिद्धोपानत्करणं वायसचर्मणा न शक्यमिति वाराही उपानहावित्येतद्विधेयविरोधो वायसव्यवहारस्येति परिचोदयति—नन्विति। यच्चोद्यं तदशक्तिः सूकरचर्मण्यप्यविशिष्टेति परिहरति—न तर्हीति। ननु चर्मान्तरोपधानेन कथञ्चित् सूकरचर्मणा उपानत्करणं सम्भवतीत्यत्राह—कथञ्चिदिति। पूर्वपक्षमुपसंहरति—न वेदेति। इत्युक्तप्रकारेण न सर्वत्र विधेयपरवेदविरोध इत्यर्थः।

राद्धान्तस्त्विति। यद्यपि विधेयप्रतिपादकवेदविरोधो नास्ति तथापि वाक्यशेषरूपवेदविरोधोऽनार्यव्यवहारस्येति न ततोऽर्थावगम इत्यर्थः। ननु कथं वाक्यशेषविरोध इत्याशङ्क्य वराहोदाहरणे तावदाह—वाक्यशेषाद्धीति। वराहं गावोऽनुधावन्तीति वाक्यशेषात् गोसदृशता वराहस्य वराहशब्दवाच्यस्यावगता। न च वायसस्य गोसादृश्यमिति तद्विषयो व्यवहारो वाक्यशेषविरोधीत्यर्थः। ननु यथा गोसदृशो गवयः न तथा सूकरो गोसदृश इति कथं तत्रापि गोसदृशतेत्यत्राह—सूकरेत्विति। यद्यपि गवयवत् सुसदृशता नास्ति तथापि बहुतरावयवसामान्यात् सूकरे गोसदृशताधीरस्त्येवेति तद्विषयव्यवहारो वाक्यशेषानुगुण इत्यर्थः। ननु भवत्वेवमानुगुण्यं ततः किमित्यत्राह—अत इति। यत एवं वाक्यशेषानुगुण्यं अतः तद्बलात् सूकरव्यवहारः तदननुगुणवायसव्यवहाराद्बलवान्। यत एवं प्राबल्यमतः प्रतिपक्षादार्यव्यवहारात् सूकरवचनताध्यवसाय इति नाप्रामाण्यमित्यर्थः। यवोदाहरणेपि वाक्यशेषस्य दीर्घशूकव्यवहारप्राबल्यहेतुत्वं वार्तिकोपपादितमित्याह—

व्यवहारात् । अतः सूकरवचनताऽध्यवसायः । तथावाक्यशेषात् दीर्घशूकावगमो वार्तिककृता प्रपञ्चितः । तदुक्तम् ।

फाल्गुने ह्योषधीनां तु जायते पत्रशातनम् ।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥
यदा वर्षासु मोदन्ते सम्यग्जाताः प्रियङ्गवः ।
तदा नान्योषधिग्लानिः सर्वासामेव मोदनात् ॥
प्रियङ्गवश्शरत्पक्वाः तावद्गच्छन्ति संक्षयम् ॥ इति ।

ननु वाक्यशेषान्न शक्तिकल्पनेत्युक्तम् । तन्न । वाक्यशेषानुगुणस्तावदर्थः शब्देन बोध्यः । स च तदा यदि तत्तुल्यवदपरपदार्थोत्थानं मुख्यगौणानध्यवसायद्वारेण बोध्यान्तरमेव न विहन्ति इत्यर्थवादानुगुणमेव

---

तथेति । यवमयकरम्भपात्रविधौ वाक्यशेषः–यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति इत्यस्माद्वाक्यशेषात् ओषध्यन्तरशोषणकाले यवानां मोदमानताऽवगता। न च सा प्रियङ्गुषु सम्भवतीत्येतद्वार्तिककृता प्रपञ्चेनोपपादितमित्यर्थः ।

कथमित्यत्राह—तदुक्तमिति । यस्मिन् फाल्गुनमासे दीर्घशूकानां कणिशशालिनां मोदमानत्वं तत्रेतरासामोषधीनां शोषणमेव पत्रशातनात् अतो दीर्घशूकव्यवहारस्य वाक्यशेषावगतार्थानुगुण्यं प्रियङ्गुव्यवहारस्य नानुगुण्यमित्याह—यदेति । यस्मिन् वर्षाकाले प्रियङ्गूणां मोदः तत्रेतरासामपि मोदमानतैव न म्लानिरित्यर्थः । यत्र पुनः फाल्गुने अन्योषधिम्लानिः न तत्र प्रियङ्गवः सन्ति । वर्षानन्तरशरत्काले फलपाकान्ततया तत्क्षयादित्याह—प्रियङ्गव इति । ननु कथं वाक्यशेषबलात् वाच्यनिर्णयः तस्य शक्तिकल्पकत्वायोगात् इत्युक्तमिति पूर्वोक्तं स्मारयति—नन्विति । तन्नेति । सत्यं न वाक्यशेषः साक्षाच्छक्तिकल्पकः तथापि तदनुगुण एव तावदर्थो विध्युद्देशेन बोध्यः सम्भूयकारित्वव्युत्पत्तेः । अतः किमित्यत्राह—स चेति । पदस्यार्थः अपरश्चासौ पदार्थश्चेत्यपरपदार्थः वाक्यशेषाननुगुणो वायसादिः तस्य या तुल्यवद्व्यवहारत उत्थितिः सा यदि बोध्यान्तरं सूकरादिमेव मुख्यगौणानध्यावसायद्वारा न विहन्ति तदा वाक्यशेषानुगुणोऽर्थो बोध्यो भवति नान्यथा । कथं तदविहतिरित्यत्राह—इत्यर्थवादेति । अर्थवादानुगुणबोध्यस्य प्राबल्यात् तदेव बोध्यान्तरं वारयतीति तस्य बोध्यान्तरेणाविहतिः । ननु न वाक्यशेषाच्छक्तिः किन्तु व्यवहारात् स चोभयोरपि तुल्य इति कथं बोध्यविशेषे शक्तिरित्यत्राह—इति वाक्यशेषेति । वाक्यशेषस्य साक्षाच्छक्त्यनापादकत्वेऽपि

बोध्यं तुल्यवद्व्यवहारः बोध्यान्तरं वारयतीति वाक्यशेषानुगुणव्यवहार-विषय एव बोध्यत इति तत्रैव शक्तिः। व्यवहारान्तरं तु अतुल्यतया गौणमेव युक्तम्।

यत्तूच्यते यद्वाच्यं शब्दस्य तत्रानादिता। सा अनादिता च वैदिक-प्रयोगस्यावधृतेति वाक्यशेषाद्वाच्यावधारणम्। तन्न। वैदिकस्यानादि-त्वनिश्चयेपि गौणस्याप्यनादेर्वेदे। दर्शनात् न वाक्यशेषाद्वाच्यनिर्णयः। अनादिता च वृद्धव्यवहारपरम्परया वायसादावप्यवधृता। गौणता हि तत्रेष्यते न त्वादिमत्ता गाव्यादिवत्। अत्र परोक्तभङ्गोपन्यासो गुरोः। प्रथमं तावत् ( ननु ) सन्दिग्धे वाक्यशेषादित्युद्घृतमिदमप्रामाण्यं इति। चरमं तु तदेवेदमापतितं वाक्यशेषाद्वाच्यनिर्णय इति। तेनात्रायं विचारो न युक्त एवेत्युक्तम्।

---

स्वानुगुणव्यवहारप्राबल्यापादनद्वारा शक्त्यापादकत्वमिति वाक्यशेषानुगुणार्थ-व्यवहारविषयतया दीर्घशूकाद्यर्थो यवादिपदैर्बोध्यत इति तत्रैव तेषां शक्तिरित्यर्थः ननु तर्हि अनादिव्यवहारान्तरं कथं नेयमित्यत्राह—व्यवहारान्तरमिति। एवं च वाक्य-शेषानुगृहीतार्यव्यवहारत एव शक्तिकल्पनेति। यदि वाक्यशेषात् गोसदृशे शक्ति-स्तर्हिसुसदृशेगवय एव शक्तिः स्यादिति चोद्यस्य नावकाशः। गवये व्यवहाराभावात्।

अत्र प्रकाशेन वाक्यशेषाद्वाच्यनिर्णयोऽन्यथोक्तः यद्धि वाच्यं शब्दस्य तत्र शब्दस्यानादितां वैदिकप्रयोगस्य चानादित्वं सिद्धमित्यनादिवाक्यशेषानुगुणस्यैव वाच्यत्वं युक्तमिति तदनु वदति—यत्त्विति। तन्नेति। अनादित्वेऽपि वाक्यशेषस्य न ततो वाच्यनिर्णयः ततो नानादितास्य वाच्यनियता, गौणादेरप्यनादेर्वेदे दर्शनादित्यर्थः। माभूदनादिता वाच्यनियता। वाच्यता त्वनादिप्रयोगनियतैव। तत्रानादिवेदसम्बन्धात् सूकरे प्रयोगोऽनादिरिति शक्तिरपि तत्रैव कल्प्येति वाक्यशेषाद्वाच्यनिर्णयो युक्तः। अन्यत्र प्रयोगस्यानादिताशक्तिश्च कल्प्येति कल्पनागौरवमित्यत्राह—अनादिता चेति। स्यादेवं यदि प्रयोगान्तरस्य अनादिता कल्प्या स्यात्। सातु वृद्धव्यवहारपरम्परया वायसादौ क्लृप्तैवेति तत्रापि शक्तिः स्यादिति न वाच्यनिर्णय इत्यर्थः। ननु प्रयोगान्तरं गाव्यादिप्रयोगवदादिमत् इत्यत्राह—गौणेति। ग्रन्थकृतेति शेषः। अत्र परैरधिकरणं भग्नं तदुपन्यासो गुरुणा कृत इति तदनुभाषणपूर्वकं तदभिप्रायमाह—अत्रेति। ननु सन्दिग्धेतु

नन्वस्मिन् सति [1]स व्यर्थः स्यात् । तन्न । तत्र हि सूत्रं व्यक्तमस्य न्यायस्येति तत्कर्तव्यमित्येतस्यैव व्यर्थता। अथवा तद्वा इदं वा व्यर्थमिति भङ्गार्थः । ननु प्रयोगेदंपरत्वसन्देहे तत्र निर्णयः । स च वाक्यशेषैकवाक्यतया युक्त एव । अभिधाने त्वयं सन्देहः । तन्निर्णयस्तु वाक्यशेषानन्वितेपि प्रयोगे वाच्य इति न वाक्यशेषस्य निर्णयहेतुता सिद्धा । मैवम् । अभिधानस्वभावात् सर्वविषयता, वाक्यशेषस्य तु अभिधेयनिर्णायकतैव । सा च सिद्धैवेति व्यर्थतैव । ननु विपर्ययोऽत्र निराक्रियत इत्युक्तम् । मैवम् । अभिधानसन्देहोऽयमिति पूर्वोक्तेन विरोधात् । न च व्यवहारद्वयदर्शनाद्विपर्ययः किन्तु सन्देह एव । तन्निरसनं तु वाक्यशेषाद्भक्ष्यत एव । तदाह भङ्गवादी—

वाक्यशेषात् इति यो नयः स एव पाश्चात्यः । अतोऽस्मिन् सति तस्यैव व्यर्थतेत्याशङ्कते—नन्विति । तन्नेति । तत्रैवं न्यायं सूत्रमेव व्यनक्तीत्यस्फुटसूत्रोक्तस्यैव अस्य व्यर्थतेत्यर्थः । ननु [2]सूत्रोक्तेः स्फुटास्फुटत्वमनुपयुक्तमिति भङ्गतात्पर्यं प्रकारान्तरेणाह—अथवेति । ननु नात्र पौनरुक्त्यं सम्भवति तत्र हि उपान्त्याधिकरणे पदार्थनिर्णये [3]सत्येवेदंपरत्वसन्देहे निर्णयः साधितः स च वाक्यशेषेणैकवाक्यताबलाद्युक्तः । अत्र पदार्थ एव सन्देहः । तस्य च सर्ववाक्यव्यापित्वात् तन्निर्णयो वाक्यशेषानन्वितेपि वाक्ये वाच्य इति न वाक्यशेषस्य तन्निर्णयहेतुता सिद्धेति तत्सिद्ध्यर्थमेतदधिकरणमर्थवदेवेति चोदयति—नन्विति । मैवमिति । प्रयोगेदंपरत्वसंशयेन स नयः । अयं तु पदार्थसंशय इति विषयभेदमात्रात् न नयनभेद इति भावः । ननु वाक्यशेषस्य सर्ववाक्याव्यापित्वान्न ततोऽत्रनिर्णयसिद्धिरित्यत्राह—अभिधानेति । अव्यापिनोपि वाक्यशेषात् क्वचिदभिधाननिर्णये पदशक्तिनिर्णये तत्स्वभावादेव सर्वविषयता सिद्धा । वाक्यशेषान्निर्णयश्चोपान्त्यनयसिद्ध एवेति व्यर्थता दृढैवेत्यर्थः । नन्विति । विपर्ययोऽत्र निराक्रियते तत्र तु सन्देह इति पौनरुक्त्यसमाधानं निवर्त्यभेदात् टीकोक्तमित्यर्थः । मैवमिति । अभिधानसन्देहोऽयमिति पूर्वोक्तेनविरोधात् । सन्देहे सति स एव साक्षान्निवर्त्यो न विपर्यय इति वस्तुविरोधोऽपीति भावः । एवं तावत् विपर्ययमुपेत्योक्तम् स एव न सम्भवति किन्तु सन्देह एवेत्याह—न चेति । तन्निरसनं चोपान्त्यनयसिद्धमेवेति व्यर्थ एवायं नय इत्याह—तन्निरसनमिति । उक्तभङ्गसाक्षित्वेन परोक्तं वार्तिकमाह—तदाहेति ।

१. M न व्यर्थः २. B सूत्रोक्तस्फुटत्वभ ३. B सत्येवप्रयोगपरत्व ।

सन्दिग्धेषु तु सर्वेषु वाक्यशेषेण निर्णयम् ।
वक्ष्यत्येव न तेनात्र पृथक्कार्या विचारणा ॥

अत्र समाधिः । अभिधानसन्देहे विपर्ययोऽत्र निराक्रियत इति । इदमत्राभिप्रेतम् । न वाक्यशेषः साक्षात् सूकरविषय इति न तत एव सूकरनिर्णयः । किन्तु गोसदृशतामाह । सा च गवयादेरपीति न सूकरनिर्णयः । किन्तु सूकरे योऽयं वराहव्यवहारः तदनुगुणो वाक्यशेष इति ततः सूकरव्यवहारबलवत्ता । तयातु तद्विपर्ययव्यवहारो बाध्यते । तद्द्वारेण च सन्देहापगम इति सूक्तमभिधानसन्देहे विपर्ययोऽत्र निराक्रियते वाक्यशेषादिति । न चानेन प्रकारेण वाक्यशेषान्निर्णयो वक्ष्यत इत्यर्थवानेवायं विचार इति । एवं च विपर्ययव्यवहारनिराकरणद्वारा सन्देहापाकरणात् सन्देहे विपर्ययनिराकरण[1]मुक्तम् । न हि वाक्यशेषात् साक्षाच्छक्तिकल्पनेत्युक्तम् । किन्तु तुल्यवद्व्यवहारात् अर्थान्तरवाचकतारूपविपर्ययनिवृत्तिद्वारेणेति दर्शयितुमिदमुक्तम्[2] ।

---

अत्र समाधिरिति । यथोक्ताभिधानसन्देह एव विपर्ययोऽत्र निराक्रियत इत्युक्ते विरोधपरिहारमुखेन ग्रन्थोक्तं परिहारमनुवदति—अभिधानेति । ननु व्यवहारद्वयदर्शनादभिधानसन्देह एव न विपर्ययः । अभिधानसन्देहे च साक्षात्स एव निराकार्य इत्यत्राह—इदमिति । न हि वाक्यशेषः साक्षादभिधानसंशयनिराकरणे समर्थः सन्देहविषयसूकरानभिधानात् किन्तु गोसदृशतामात्राभिधानं वाक्यशेष इति न ततः सूकरनिर्णय इत्यर्थः । ननु गोसदृशताद्वारा सूकरनिर्णयोऽस्त्वित्यत्राह—सा चेति । गोसादृश्यस्य गवयादावतिव्याप्तत्वेन न तद्द्वारापि निर्णय इत्यर्थः । कथं तर्हि सूकरार्थत्वनिर्णय इत्यत्राह—किन्त्विति । वाक्यशेषस्य साक्षात्सूकरार्थत्वनिर्णायकत्वाभावेपि तन्निर्णायकव्यवहारप्राबल्यापादनेन तत्सहायतया तद्विरोधिव्यवहारबाधनद्वारेण सन्देहापाकरणहेतुत्वात् अभिधानसन्देहे विपर्ययोऽत्र निराक्रियते वाक्यशेषात् इति ग्रन्थोक्तं सूक्तमित्यर्थः । नन्वेवमपि कथं पौनरुक्त्यपरिहार इत्यत्राह—न चेति । दौवारिकसन्देहनिराकरणस्यान्यत्र क्वाप्यसाधितत्वादपौनरुक्त्यमित्यर्थः । ननु सन्देहात्मके पूर्वपक्षे स एव प्राधान्येन निराकार्यः न विपर्यय इत्याशङ्क्य सन्देहनिरसन एव तात्पर्यमित्याह—एवमिति । ननु किमित्यन्यद्वारा निराक्रियोक्तिरित्यत्राह—न हीति । यद्यप्यार्यानार्य-

---

१. निरसन A २. तुमेव युक्तं B

यत्त्वपरं भङ्क्त्वा निमित्तमुक्तम् व्यवहारविप्रतिपत्त्युदाहरणत्वं यववराहवेतसानां नास्तीति तत्र चिन्तेयं न युक्ता किन्तु पील्वादौ युक्ता चिन्तेति। तदुक्तम्—

नैवोच्यन्ते क्वचिद्देशे यवश्रुत्या प्रियङ्गवः।
जम्बूं न वेतसं प्राहुर्वराहं नैव वायसम्॥
अध्यारोप्य विचारेण किं मुधा खिद्यते मनः।
तस्मात्पील्वादिशब्दानां वृक्षहस्त्यादिबोधने॥
समाविप्रतिपत्तिः स्यात् आर्यम्लेच्छप्रयोगतः॥ इति।

तदिदं निराकरणानर्हमिति गुरुणाऽवधीरितम्। न्यायनिष्ठत्वाद्विचारस्याध्यारोप्य विचारो न दोष इति तत्र तत्रोक्तम्। सर्वथा निर्विषयता तु पील्वाद्युपन्यासात् स्वयमेव परिहृता। किञ्च योग्यानुपलम्भस्य सर्वत्रदुष्करत्वात् नैवोच्यत इति दुर्वचं वचः। विवरणे तु उदाहरणदोषपरिहारार्थमेव सामान्येनोक्तं यत्र निमित्तविप्रतिपत्तिरित्यादिना।

ननूभयाभिधानं युक्तं पील्वादिवत् पील्वादौ हि असदृशतया न गौणमुख्यता। किन्तु उभयाभिधायकमेव। तथाऽत्रापि भवत्विति। मैवम्। तथापि यत्र वेदे प्रकरणवाक्यशेषाद्यभावः तत्र विशेषानवगतेरनध्यवसाय एव।

---

व्यवहारयोः वस्तुगत्या न तुल्यता तथापि सिद्धान्तन्यायात्प्राक् तुल्यवत्प्रतिभासोऽस्तीति तुल्यवदित्युक्तिः। अत्र परैः भाष्योक्तं यववराहवेतसशब्दानामुदाहरणत्वं भङ्क्त्वा पील्वादिशब्दानामुदाहरणत्वमुक्तं तत्सोपपत्तिकं सवार्तिकमनुवदति—यत्त्वपरमिति। किमिति तद्गुरुणा नोपन्यस्य निरस्तं पौनरुक्त्यभङ्गवदित्यत्राह—तदिदमिति। कथमनर्हतेत्यत्राह—न्यायेति। ननु विषयशून्यत्वे न्याय एव वक्तुं न शक्यत इत्यत्राह—सर्वथेति। सर्वदेशेषु व्यवहाराभावस्याशक्यावधारणत्वादपि परोक्तं न युक्तमित्याह किञ्चेति। बर्हिराज्याधिकरणपौनरुक्त्यं तु तत्रैव भवदेवेन परिहृतमनुसन्धेयम्। परापादितोदाहरणभङ्गाप्रसक्तये विवरणकृता सामान्येन विषयो दर्शित इत्याह—विवरणे त्विति। पूर्वपक्षमाक्षिपति—नन्विति। यत्र यत्र व्यवहारविप्रतिपत्तिः तत्र तत्र पील्वादिवदुभयाभिधानमेव युक्तम्। नन्वसिद्धो दृष्टान्त इत्यत्राह—पील्वादाविति। यथा पील्वादौ स्फुटसादृश्याभावात् मुख्यगौणत्वासम्भवेनोभयाभिधानं तथा विप्रतिपत्तिविषयेऽपीत्याह—तथेति। मैवमिति।

राद्धान्तस्तु कथञ्चित् सदृशतया गौणमुख्यतानुसन्धानेन अन्यगतवाक्यशेषादपि मुख्यनिर्णये जाते मुख्यस्यैव वाक्यान्तरेऽप्यवगतिर्युक्तेति प्रकारान्तरात् चिन्तान्तरं युक्तमिति । चरावेवायं वाक्यशेषो न करम्भपात्र इति तु न्यायनिष्ठतया न दूषणम् । एवं च न यूपादिवत् वेदादेव शब्दार्थावधारणं किन्तु वेदोपबृंहितादार्यव्यवहारात्[1] ।

॥ ६ ॥ चोदितं तु प्रतीयेताविरोधात् प्रमाणेन ॥ १० ॥

यद्यनार्यव्यवहारो गौणस्तर्हि तन्मात्रप्रसिद्धपिकाद्यर्थानध्यवसायात्

भवत्वेवमुभयाभिधानम् । तथापि यत्र प्रकरणवाक्यशेषमन्त्राद्यभावः तत्र तावत् विशेषानवगतेः अनध्यवसाय एव । न चोभयार्थत्वे उभयाभिधानेन विकल्पान्नानध्यवसायः अत एव[2] भाष्ये विकल्पोक्तिरिति वाच्यम् । उभयत्राप्येकशक्तिकत्वाभावेन एकेन शब्देनोभयाभिधानायोगात् । भाष्ये विकल्पवाचोयुक्तिरनध्यवसायपरा उभयथा शब्दार्थावगम इति उभयथेति शक्तिप्रकारभेदोक्तेः । अतोऽनध्यवसायान्न प्रामाण्यमेवेति पूर्वपक्ष इत्यर्थः ।

राद्धान्तस्त्विति । स्यादेवमुभयार्थता यदि पील्वादिवत् प्रतिप्रयोगं शक्तिकल्पना स्यात् । किन्तु एकस्य शब्दस्यानेकार्थत्वमन्याय्यमित्येकत्रैव शक्तिः । तत्रान्यतरव्यवहारस्य वाक्यशेषसहायत्वादन्यस्य च तदभावात् कथञ्चित् मन्दसादृश्येनापि गौणमुख्यतानिश्चयात् वाक्यशेषविधुरवाक्यान्तरे चान्यगतवाक्यशेषेणापि मुख्यार्थवृत्त्या व्यवस्थोपपत्तेः अर्थावगतिर्युक्तैवेति नानध्यवसायादप्रामाण्यमित्यर्थः । एवं पूर्वपक्षप्रकारभेदं व्युत्पाद्य तद्भेदेनोपान्त्याधिकरणपौनरुक्त्यशङ्कापि नास्तीत्याह—इति प्रकारान्तरादिति । अत्र भाष्ये यत्रान्या इत्यर्थवादोऽयं करम्भपात्रविधिशेष इत्युक्तम् । तदयुक्तम् । चरावेवायं वाक्यशेषः न करम्भपात्रे इति परैर्दूषितम् । तदनूद्य न्यायनिष्ठत्वान्नैतद्दूषणमित्याह—चराविति । ननु न वाक्यशेषान्मुख्यनिर्णयो युक्तः लौकिके व्यवहारे प्रत्यर्थिनि वेदाच्छक्तिनिर्णयायोगात् । यूपादौ तु नैवं व्यवहारान्तरप्रत्यर्थिता । यद्यपि लौकिकव्यवहारप्रत्यर्थित्वेपि त्रिवृदादिपदवद्वेदादेव निर्णयसिद्धिः तथापि इह वाक्यशेषान्न सूकरादिविशेषधीरिति नात्र ततो निर्णय इति यत्परापादितं दूषणं तदप्युक्तप्रकारेण नास्तीत्याह—एवं चेति । यूपादिवदिति वैधर्म्यदृष्टान्तः ।

1. M वचनात्     १. अत्र तत एव ।

तद्वती चोदना न प्रमाणमिति सङ्गतिद्वयं पूर्वपक्षबीजं च। न च निगमनिरुक्तव्याकरणबलादर्थोहनं जर्फर्यादिवद्युक्तम्। आदेयप्रयोगेदंपरत्वे हि विनियोगादिवशात् स्थिते मन्त्रार्थवादानां तद्गतपदभेदस्य वृद्धप्रयोगप्रसिद्धार्थस्य प्रकृतिप्रत्ययविभागोहनादर्थधीरित्युपयोगो निगमादेः। विध्युद्देशे तु पदार्थधीत एव प्रयोगेदंपरतेति न निगमादिना ऊहः।

॥ ६ ॥ चोदितं तु प्रतीयेताविरोधात् प्रमाणेन ॥ १० ॥

यत्र पुनः पिकनेमसततामरसशब्देषु आर्याणां प्रयोग एव नास्ति अनार्याणामेव पिकशब्दस्य कोकिले, नेमशब्दस्यार्धे, सतशब्दस्य शतच्छिद्रे दारुमये पात्रे, तामरसशब्दस्य पद्मे, प्रयोगः। तत्र तत्पदवतीषु चोदनासु चिन्ता-किमप्रमाणं उत प्रमाणमिति। तदर्थमियं चिन्ता—किं पिकादिशब्दादर्थबोधो न सम्भवति उत सम्भवतीति। ननु आर्यव्यवहाराभावेऽप्यानार्यव्यवहारमात्रात् शब्दार्थाध्यवसानं युक्तमिति कथं सङ्गतिपूर्वपक्षावित्यत्राह—यदीति। यदि पूर्वाधिकरणराद्धान्तन्यायात् अनार्यव्यवहारो गौणः नार्थनिश्चायकः न शक्तिकल्पक इति यावत् तर्हि शाब्दव्यवहारानभिज्ञानार्यमात्रप्रसिद्धपिकादिपदान्नार्थावबोधः शक्त्यवधारणाभावादिति तत्पदवती चोदना न प्रमाणं इति सङ्गतिद्वयं पूर्वपक्षबीजं चेत्यर्थः। नन्वेवमपि कथं पिकादिपदान्नार्थावबोधः 'जर्भरी'त्यादिमन्त्रगतपदवत् 'स प्रजापतिरात्मन' इत्यर्थवादगतपदवच्च निगमादिबलादर्थोहनस्य प्रकृतिप्रत्ययविभागोहनेन युक्तत्वात्। अन्यथा निगमादीनामुपयोगाभावप्रसङ्गादित्यत्राह—न चेति। तत्र हेतुः—आदेयेति। विनियोगादिवशादित्यत्र आदिपदेन विध्येकवाक्यत्वमुक्तम्। निगमादेरित्यादिशब्दान्निरुक्तव्याकरणसङ्ग्रहः। वृद्धव्यवहाराप्रसिद्धस्यापि जर्भर्यादेः मन्त्रगतपदस्य प्रकृतिप्रत्ययविभागोहनादर्थधीर्युक्ता। वैदिकत्वेनादेयस्य प्रयोगस्य विनियोगवशादैदंपर्यावधारणे तदनुगुणार्थोहनस्य युक्तत्वादर्थवादेऽपि विध्येकवाक्यत्वबलात् तात्पर्यावधारणे विध्यनुगुणार्थविशेषोहनस्य युक्तत्वात् प्रकृतिप्रत्ययविभागोहनादर्थधीर्युक्ता। तदुभयोपायतया निगमादेरप्युपयोगः। नन्वेवं विध्युद्देशेऽप्यर्थोहनमस्त्वित्यत्राह—विध्युद्देशे त्विति। विध्युद्देशे न प्रमाणान्तरेणार्थविशेषे प्रयोगैदम्पर्यावगतिः। किन्तु व्यवहारसिद्धव्युत्पत्तिमात्रगम्यपदार्थधीत एव, तदसम्भवेत्वर्थबोधकत्वासिद्धेरप्रामाण्यमेव। ननु प्रयोगैदम्पर्यानवधारणेपि निगमादिसामर्थ्यादेवार्थोहनं युक्तमित्यत्राह इति नेति।

निगमादिनाऽनेकार्थोहनसम्भवात् तात्पर्यानवधारणे नार्थनिश्चयः। कथञ्चिन्निश्चयेऽपि प्रयोगमूलत्वान्निगमादेः लभूतप्रयोगप्रमाणाभावात् अनादरणीय

भाष्ये तु धातुतोऽर्थः कल्पयितव्यः स च न शक्यः काल्पनिक एवेति शेषः। ननु वेदविरुद्धानार्यव्यवहारो नादेयः। पिकादिविषयस्तु न तथा। अथ सामान्यतोदृष्टं पिकादावनार्यव्यवहारो नार्थनिश्चायकः अनार्यव्यवहारत्वात् यवादिविषयवदिति। तन्न। विशेषविरोधात्[1]। पिकादिव्यवहारादर्थधीदर्शनात्। अनार्यव्यवहारादपि राजार्थानुज्ञानादनैकान्त्याच्च। मैवम्। राज्ञः कर्म भावो वा राज्यमित्येवमर्थपरपाणिनिस्मृतिमूलत्वमेव। अनार्यप्रयोगस्तु पूर्वाधिकरणसिद्धान्तबलादनादेयो न मूलमिति न

---

निगमादिनाऽर्थोहनमित्यर्थः। नन्वेवमर्थानवबोधकत्वेन पूर्वपक्षकरणं भाष्यविरुद्धं इत्याशङ्क्य विरोधिभाष्यमनुभाष्य सोपस्करं व्याचष्टे—भाष्ये त्विति। स च न शक्य इत्युपस्कारः। ननु पिकादिपदार्थः प्रतीयते स कथमित्यत्राह—काल्पनिक इति। प्रतिभामात्रमित्यर्थः। नन्वनार्यव्यवहारस्य वेदविरुद्धत्वेन अनादेयत्वमुक्तं, यवादौ पिकविषयानार्यव्यवहारस्तु न वेदविरुद्ध इति कथं हेयइति चोदयति—नन्विति। चोदयितैव परिहर्तुमंतमाशङ्कते अथेति। पिकादिविषयानार्यव्यवहारो नार्थनिश्चायकः अनार्यव्यवहारत्वात् यवादिविषयवदिति सामान्यतो दृष्टानुमानेनार्थानिश्चायकत्वादनादेयत्वमिति चेदित्यर्थः। तन्नेति। विशेषविरोधात्। पिकादिविषयानार्यव्यवहारोऽर्थनिश्चायकः अर्थधीजनकव्यवहारत्वात् सम्प्रतिपन्नवदिति विशेषानुमानविरोधात् सामान्यानुमानस्य बाधितत्वादित्यर्थः। अर्थधीजनकत्वं च नासिद्धम्। तदधीनार्थप्रतीतेः प्रत्यक्षत्वादित्याह—पिकादीति। तथा राजशब्देऽनार्यव्यवहारादिनाऽभिधायकत्वानुज्ञानात् सामान्यानुमानमनैकान्तिकमित्याह—अनार्येति।

मैवमिति। न तावद्राजपदविषयोक्तमनैकान्तिकत्वं, राज्ञः कर्म राज्यमित्यर्थविशेषनिबन्धनरूपार्यवरपाणिनिस्मृतेः तन्मूलतया राजपदार्थानुज्ञानात्। न च प्रथमचरमसूत्रे नेमपदस्यापि पाणिनिप्रयोगात् स्मृतितः नेमपदार्थानुज्ञानम्। तत्रार्थविशेषप्रतीत्यभावात्। न चार्याणां कोशकारादीनां पिकादिप्रयोगादर्थविशेषसाधुत्वं स्यादिति वाच्यम्। यत एतत्सिद्धान्तमूलकः पिकनेमादेः कोशकारादिभिः प्रयोगः। न चैवं राजपदेपि तुल्यमिति वाच्यम्। आर्यवरत्वेन पाणिनेऽर्थविशेषे तत्प्रयोगादनादेयत्वशङ्काऽयोगात्। नेमपदे तु नार्थविशेषधीः स्मृतित इत्युक्तम्। अन्यथा एतदधिकरणानुन्मेषापत्तेरिति भावः। यच्च विशेषानुमानबाध्यत्वं सामान्यतोदृष्टस्योक्तं। तदयुक्तम्। अर्थधीमूलकविशेषानुमानस्यापि अनैकान्तिकत्वादित्याह—अर्थधीश्चेति।

---

१. विशेषव्यवहारविरोधात्

तथाऽनुज्ञानात् । अर्थधीश्च यवादावपीत्य[1]नैकान्त्यात् ।

राद्धान्तस्तु यवादावर्थधीरिव बाधाभावात् । अतस्सामान्यतोदृष्टबाधा[2]दनार्यव्यवहारादेव पिकाद्यर्थाध्यवसायात् पिकमालभेतेत्यादि प्रमाणम् । अतोऽनार्यव्यव[3]हारमूलैव पिकः कोकिल इत्याद्यभिधानकोशस्मृतिः ।

विवरणे तु अनार्याणां अवेदव्यवहारितया शब्दार्थानादरात् अपभ्रंशादपि व्यवहारोपपत्तेः निगमादिवशात् प्रसिद्धार्थप्रकृतिप्रत्ययवर्णबाहुल्यात् पिकाद्यर्थधीरिति पूर्वः पक्षः । प्रसङ्गात् सङ्गतिः । राद्धान्तस्तु

---

राद्धान्तस्त्विति । स्यादेवं विशेषानुमानस्यानैकान्तिकता यदि यवादौ पिकादौ चार्थप्रतीतेस्तुल्यता स्यात् । न चेह तुल्यता यवादावनार्यव्यवहारादर्थधीरेव भेदाग्रहरूपा; श्रुतिविरोधेन तत्पदोत्थार्थप्रतीत्यनुमानबाधात् । इह पिकादावर्थधीरेव प्रमितिरूपैव श्रुतिविरोधलक्षणबाधकाभावादित्यर्थः । नन्वेवमपि सामान्यानुमानेन पिकादिव्यवहारो नार्थनिश्चायक इत्यत्राह—अत इति । यत एवं विशेषानुमानमप्रतिहतबलं अतः प्रबलेन तेन सामान्यतो दृष्टबाधादनार्यव्यवहारात् स्वतः प्राप्ताभिधानानुमानानपायात् तत एव पिकार्थाध्यवसानात् पिकमालभेतेत्यादिपिकादिपदवती चोदना प्रमाणमेवेत्यर्थः । ननु पिकः कोकिल इत्याद्यभिधानकोशस्मृतितः पिकादिपदस्याप्यार्यव्यवहारप्रसिद्धतैव । ततश्च पूर्वनयगतार्थतेत्यत्राह—अत इति ।

लघ्व्यां तु सङ्गतिपूर्वपक्षौ प्रकारान्तरेणेत्याह—विवरणे त्विति । अनार्याणां म्लेच्छनामवेदव्यवहारितया वेदव्यवहारानधिकारितया तद्व्यवहारस्यापभ्रंशप्रचुरत्वेनापभ्रंशत्वेनापि तदुपपत्तेः शब्दार्थविषये तदनादरात् नानार्यव्यवहाराद्वेदे पिकाद्यर्थनिश्चय इत्यर्थः । कुतस्तर्हि तन्निश्चयस्तत्राह—निगमादीति । यद्यपि धातुप्रत्ययविभागोऽनेकप्रकारः सम्भवति ततश्च नार्थविशेषधीः तथापि प्रसिद्धार्थप्रकृतिप्रत्ययबाहुल्यात् प्रसिद्धार्थप्रकृतिप्रत्ययरूपवर्णबाल्यात् व[4]र्णविकारकल्पनालाघवगौरवालोचनयापि पिकाद्यर्थविशेषधीव्यवस्थोपपत्तेः निगमादिनैव पिकाद्यर्थनिश्चय इति पूर्वपक्ष इत्यर्थः । एवं च पूर्वपक्षेप्यर्थाध्यवसानान्न साक्षात्सङ्गतिः । किन्तु प्रसङ्गादित्याह—प्रसङ्गादिति ।

राद्धान्तस्त्विति । यद्यपि निगमादितो न व्यवस्थितार्थः प्रकृतिप्रत्ययोहः अनेकप्रकारसम्भवात् अथापि कथञ्चिद्व्यवस्थासम्भवः, तथापि तस्य मूलापेक्षत्वमा-

---

१. अर्थवादादावपि A  २. A हाना  ३. B प्रयोग  ४. B वर्णान्तर

निगमादिस्मृतिरपि प्रयोगमूलतया दृष्टमनार्यप्रयोगमप्यनुवर्तते । यत्रार्यैः अनार्यैर्वा न सर्वैः क्वचित् केनचित् कदाचिददृष्टः तत्र निगमादिस्मृतेरर्थवत्ता । न तु स्पष्टदृष्टेपि पिकादौ । अवेदार्थव्यवहारित्वात् शब्दार्थानादरेपि व्यवहारान्तरान्मुख्यान्तरादर्शने अपभ्रंशमूलादर्शने च शब्दार्थव्यवहारिता अस्मिन् विषये सिद्धा ।

॥ ७ ॥ प्रयोगशास्त्रमिति चेत् ॥ १७ ॥

विरोधाधिकरणविषयव्याप्तिरिहेति न पृथक् सङ्गतिः । विरोधनयस्य

---

वश्यकमिति तदपेक्षायां दृष्टमर्थाभिधानसमर्थमनार्यप्रयोगमनुवर्तते । न पुनः तदतिक्रमेण अदृष्टं प्रयोगान्तरं कल्पयितुमीष्ट इत्यनार्यप्रयोगादेव शक्तिनिश्चय इति तदनुवर्ति निगमादिः तदुचितप्रकृतिप्रत्ययकल्पनपरः । नन्वेवं निगमादेरर्थवत्त्वं न स्यात् तत्राह—यत्रेति । यत्र विषये प्रयोगदर्शनं न सर्वेषां तादृशपदविषयेनिगमादिस्मृतेरर्थवत्त्वम्[1] । ननु प्रयोगमूला निगमादिस्मृतिः कथं तददर्शने घटते तत्राह—केनचिदिति । स्यादेव स्मृतेरनुपपत्तिः यदि सर्वथा प्रयोगाभावः अस्पष्टदृष्टप्रयोगपदविषयेतु स्मृतेरुपयोगः न तु स्पष्टदृष्टप्रयोगपिकादिविषयेऽपि । नन्वनार्याणां वेदानधिकारात् शब्दार्थानादृतेः तदर्थनिश्चयोऽशक्यः तत्राह—अवेदेति । सत्यमनार्याणां शब्दार्थानादरः तथाप्यत्रविषये अनादिवेदप्रयुक्तपिकादिपदविषये अपभ्रंशमूलत्वाद्विधेः व्यवहारादार्यप्रयोगान्मुख्यान्तराबोधेऽनार्याणामपि शब्दार्थव्यवहारितासिद्धेत्यनार्यप्रयोगस्याप्येतदेकविषयार्थनिश्चायकत्वमित्यर्थः ।

॥७॥ प्रयोगशास्त्रमिति चेत् ॥१७॥

माशकं हास्तिकं कौण्डिन्यं इत्यादिषु कल्पसूत्रेषु चिन्ता—किं तेषां वेदत्वमुतावेदत्वमिति । यदि वेदत्वं ततश्च सिद्धवेदसाध्यवेदयोरतुल्यत्वे परस्परव्याघातादप्रामाण्यं चोदनायाः । अथावेदत्वं अतश्च तेषां वेदविरोधे बाध्यत्वात् व्याघाताभावात् प्रामाण्यं चोदनायाः इति । नन्वत्र(साध्य)भाष्ये माशकादिकल्पसूत्रप्रामाण्यपरोऽयं विचारो भाति कथमिह तस्य सङ्गतिरित्याशङ्क्य विरोधनयविषयव्याप्तिसाधनत्वादस्य न स्वातन्त्र्येण सङ्गत्यपेक्षा । किन्तु तत्सङ्गतिरेवास्यापि सङ्गतिरित्याह—विरोधेति—ननु विरोधनयानन्तरमेवैतन्न्याय्यमित्यत्राह—विरोधनयस्येति । विरोधनयापवादचिन्तायाः प्रथमभावित्वात् सप्रतिपक्षस्य विरोधनयस्य विरामा-

---

1. B. उपयोग

सप्रतिपक्षस्य विरामानन्तरं तन्नयव्याप्तिरित्यवान्तरसङ्गतिः । तथाहि— शिष्टाकोपे स्मृत्यधिकरणविषयव्याप्त्यनन्तरं वाक्यशेषविरोधे बाधः तद्व्यतिरेकादबाधः एव विरोधनये स्थिते तद्व्याप्तये नयान्तरमिदम् ।

पूर्वपक्षस्तु वेदवाक्यान्येव नानाशाखाप्रकरणानि अनारभ्यवाद-विप्रकीर्णानि कल्पसूत्रकारैरनुक्रमेण संहृत्यपठितानि इति वेदवाक्यत्वात् अनपेक्षिता । पुरुषाधीनरचनतया पौरुषेयता । स्वरविध्यर्थवादहीनं पठितं वेदवाक्यमेवेति प्रत्यभिज्ञा । वर्णादिविकारेपि शाखान्तरपाठे यथा स एवायं वेद इति, यथा च महावाक्ये वेदस्यैकदेशमभ्यस्यन् 'वेदमधीते' इत्युच्यते, यथा वा आर्षपदबाधात् पदान्तरोहे स एवायं मन्त्र इति । वेदोऽप्याह—आचार्यवचः प्रमाणमिति । अनपेक्षता वेदत्वादेवोक्ता ।

---

नन्तरमिहैव तद्विषयव्याप्तिसाधकमेतद्युक्तमित्यर्थः । ननु कथं पिकाधिकरणान्तैव विरोधनयस्थितिः । कथं वा शिष्टाकोपस्य तदपवादकत्वेपि पिकपूर्वभावितेत्याशङ्क्य तदुपपादयति—तथाहीति ।

शिष्टाकोपनयस्योभयरूपस्मृत्यधिकरणविषयव्याप्तिसाधकत्वं विरोधनयापवादकत्वं च । तत्र पूर्वभाविस्मृत्यधिकरणविषयव्याप्तेरभ्यर्हितत्वात् पूर्वभाविता, विरोधनयापवादकतया च तदनन्तरता । अतः पूर्वभावित्वे शिष्टाकोपनयस्य तदनन्तरं विरोधप्रकारविशेषनिरूपणं यववराहाधिकरणपिकाधिकरणयोः कृतमिति पिकनयान्तैव विरोधनयस्थितिः तदनन्तरमधुना तद्विषयव्याप्तिरुच्यत इति सङ्गतिप्रकारोऽनुसन्धेय इत्यर्थः । ननु पुंवाक्यत्वेन प्रसिद्धानां कल्पसूत्राणामवेदत्वेऽनपेक्षतया कथं पूर्वपक्ष इत्यत्राह—पूर्वपक्षस्त्विति । नानाशाखासु नानाप्रकरणेषु अनारभ्यवादेषु च विप्रकीर्णानि वेदवाक्यान्येव मन्दमतिभिः यथास्वप्रकरणं बोद्धुमशक्यानीति कल्पकारैः प्रयोगसौकर्यार्थमनुक्रमेण यथास्वप्रकरणं संहृत्य संक्षिप्य स्वरविध्यर्थवादान् प्रयोगसौकर्यानुपयुक्तान् विहाय पठितानीति पठितपाठाद्वेदत्वेनानपेक्षतेत्यर्थः । नन्वेवं तर्हि कथं पौरुषेयत्वं कल्पसूत्राणामित्यत्राह—पुरुषेति । पुरुषबुद्ध्यधीनरचनतया पौरुषेयत्वमपि युक्तम् । ननु तर्हि कुतः कल्पसूत्राणां वेदतेत्यत्राह—स्वरेति । ननु वर्णान्यत्वे कथं तत्त्वमित्याशङ्क्य दृष्टान्तेनोपपादयति—वर्णादीति । ननु वर्णाद्यन्यत्वमात्रे भवेदपि तत्त्वम् । वाक्यैकदेशान्यत्वे पदान्यत्वे च कथं तत्त्वमित्याशङ्क्य दृष्टान्तान्तरेणोपपादयति—यथाचेति । तथा वेदोऽपि कल्पसूत्राणां वेदत्वं वदतीत्याह—वेदोऽपीति ।

धीद्वयबलादिह पौरुषेयता अनपेक्षता च। माशकादिसमाख्या [1]प्रवचनादपि तत्कर्तृत्वस्मृतेः तत्कृतिता दुर्वारा। यतः सूत्राणां वेदता एवं साध्यते अतः सिद्धवेदोक्ततिथिनियमविधिः[2] पूर्वं, पश्चात्तु सूत्रोक्ततिथ्य-

नन्वाचार्यवचः प्रमाणमिति प्रामाण्योक्त्या अनपेक्षतैवोक्ता न वेदत्वमित्यत्राह—अनपेक्षतेति। यद्यप्याग्नेयविधिशेषोऽयमर्थवादः तथापि अन्यपरादपि वेदवाक्यान्मशकाद्याचार्यवचसां कल्पसूत्राणामनपेक्षताऽवगम्यमाना न हेयेति भावः। ननु अनपेक्षत्वं पौरुषेयत्वं चान्योन्यविरुद्धं कथमेकत्रोच्यत इत्यत्राह—धीद्वयेति। विज्ञातविपरीतं हि विरुद्धद्वयं नावगम्यत इति धीद्वयबलादुभयाङ्गीकारः। तत्रैकैकवाक्यं पदं वा वेदः, तत्समाहारस्तु पौरुषेयः यथा वैदिकानां वर्णानां लोकसाधारण्येपि तत्समाहारस्य पौरुषेयत्वं, अतो विषयव्यवस्थया वेदत्वं पौरुषेयत्वं च एकत्र युक्तमिति भावः। नन्वेवं वेदत्वे सति माशकादिसमाख्यायाः प्रवचननिमित्ततयाप्युपपत्तेः कथं तद्विरुद्धपौरुषेयत्वाङ्गीकार इत्यत्राह—माशकादिति। यद्यपि समाख्यायाः प्रवचनादप्युपपत्तिः तथापि मशकादिकृतेः सर्वाध्येतृप्रसिद्धत्वात् तत्कृतिता पौरुषेयता न निवार्येत्यर्थः। नन्वेवं कल्पसूत्राणां वेदत्वे सति तदुक्तो यः तिथ्यनियमः पूर्वपक्षे सर्वासु तिथिषु अमावास्या कर्तव्येति। यश्च वेदोक्तोऽमावास्यामवास्यया यजेत पौर्णमास्यां पौर्णमास्येति तिथिदियमः तयोस्तुल्यशिष्टतया विकल्प एवेति न विरोधाधिकरणपूर्वपक्षप्राप्तिः येन तद्विषयव्याप्तिसाधकोऽयं नयः स्यादित्यत्राह—यत इति।

यत एवमुक्तन्यायेन सूत्राणां वेदत्वं साध्यं अतः सिद्धसाध्यवेदोक्तयोः तिथिनियमानियमयोः अतुल्यप्राप्तयोरुभयोरपि अन्योन्यव्याघात एव। न विकल्पः। न च सूत्राणां वेदत्वे पठितपाठो मूलयुक्तिः अतः तिथ्यनियमवाक्यमपि क्वचिद्वेदे पठितमिति नियमानियमयोरुभयोरपि तुल्यवेदोक्ततया विकल्प एवेति वाच्यम्। यतो नास्मिन् वाक्ये पठितः पाठः। किन्तु इतरसूत्राणां पठितपाठत्वबलात् प्रत्यभिज्ञया वेदत्वं प्रसाध्य तद्दृष्टान्तबलेनैतद्वाक्यस्य वेदत्वं साध्यम् तिथ्यनियमवाक्यं वेदभूतं कल्पसूत्रवाक्यत्वात् इतरवाक्यवत्। यद्वा अयं प्रयोगः–सर्वतिथिवाक्यं वेदभूतं सनियमं अध्येतृभिः पठ्यमानत्वात् वेदान्तरवाक्यवत् इति। अतएव तद्वाक्यस्य वेदत्वं हेत्वन्तरसाध्यमिति पठितपाठाभावान्न तुल्यशिष्टतेति न बिकल्पः। किन्तु व्याघात एवेति भावः। कथं तर्हि तन्निरास इत्यत्राह–सूत्राणामवेदत्वादिति। ननु वाक्यैकदेशप्रत्यभिज्ञायां सत्यामपि कथमवेदत्वमिति शङ्कामनूद्य परिहरति—यद्यपीति। सत्यं वेदैकदेशप्रत्यभिज्ञानं तथापि कल्प-

१. A- प्रवचनादिति २. धी। M

नियम इति। [1]अतुल्यविरोधादन्योन्यव्याघाते प्राप्ते सूत्राणामवेदत्वात् विरोधाधिकरणीय एव राद्धान्तः। यद्यपि वेदैकदेशप्रत्यभिज्ञा तथापि पुरुषैः वेदादवगतोऽर्थः स्ववचनेनोक्तः। इयमेव हि वाक्यस्य कृतिः यो यथाप्रयुक्तवाक्याननुगत्या स्वेच्छया पदवाक्यप्रयुक्तिः। वर्णपदानुपूर्व्योस्तु वेदेपि पुरुषोच्चारणाधीनत्वाविशेषात्। अभ्यासार्थं वेदैकदेशपाठे बाधोहविषये च न पुरुषेच्छाधीनो वेदस्यान्यथाप्रयोग इति न तत्कृतिरिति। सूत्राणि तु निरन्तरं शीघ्रं च स्मारकाणि प्रयोगग्रथनपराणि स्वेच्छया कृतानीति वेदवाक्येभ्यः प्रमितिपरेभ्यः अन्यान्यार्थान्येव

---

सूत्रतया प्रसिद्धपुरुषप्रणीतवाक्यस्य एकैकस्यापि वेदत्वं वक्तुमशक्यम् वेदावगतार्थस्य पुरुषैः स्ववचनैरेवोक्तत्वात्। भवत्वेवं तथापि कथं पौरुषेयत्वं तत्राह—इयमिति।

पौरुषेयत्वं पुरुषकृतत्वं कृतिश्च वाक्यस्येयमेव या वाक्यप्रयोक्तृपुरुषज्ञापकयथाप्रयुक्तवाक्याननुगत्या तद्वाक्यस्थक्रमान्यथाभावेन स्वेच्छया स्वातन्त्र्येण स्वेप्सितानां पदानां प्रयुक्तिः, यद्धेत्वन्तरादर्थमवगम्य स्वातन्त्र्यात् तद्बोधकपदप्रतिसन्धानमिति यावत्। अत एव नानुच्चारितकृतश्लोकादौ व्यभिचारः। पूर्ववाक्यानुगतौ तु स्वतन्त्रतयानुशिष्टकर्तृत्वं न स्यादिति भावः। ननु पुरुषोच्चारणाधीनवर्णपदानुपूर्वीमात्रापेक्षया स्वातन्त्र्यात् पौरुषेयत्वं किमिति नोच्यत इत्यत्राह—वर्णेति। न हि तत्पौरुषेयत्वप्रयोजकं वेदेप्यनुगतत्वादिति भावः। नन्वेवमभ्यासार्थंपठितवेदैकदेशादेरपि पौरुषेयत्वापत्तेर्वेदत्वं न स्यात् कल्पसूत्रवत्, वक्तव्यो वा विशेषः इत्याशङ्क्य विशेषमाह—अभ्यासेति। नन्वेवमत्रापि पठितवेदवाक्यान्येव पुनः पुनः पठ्यन्त इति न पुरुषेच्छाधीनोऽन्यथाभावः तत्राह—सूत्राणीति।

स्यादेवं यदि वाक्यान्येव यथावत् पुनः पठ्यन्तेऽभ्यासवत्। इह तु सूत्राणि तत्तत्स्मर्तृभिः मेधाभ्यासशालिभिः नानाशाखानानाप्रकरणानारभ्याधीतात् सार्थवादकात् वेदवाक्यादर्थं ज्ञात्वा अनधिगतन्यायतत्त्वानां अनुन्मिषितमेधाबलानां स्वत एव यथाविहितानुष्ठेयज्ञानाशक्तानामनुष्ठातॄणां कृते निरन्तरं शीघ्रं चानुष्ठेयस्मृतिकरणानि प्रयोगकथनमात्रपराणि स्वेच्छया स्वेप्सितक्रमेण स्वेप्सितपदप्रयोगात् कृतानि। अतः प्रमितिपरेभ्यो वेदवाक्येभ्योऽन्यानि पुंवाक्यतया मूलप्रमाणापेक्षीणि अन्यार्थानि प्रयोगसौकर्यमात्रप्रयोजनानि स्मर्तृभिः कृतानीति स्मृतित्वमेव कल्पसूत्राणां न वेदत्वम्। लाघवार्थं स्ववचनेष्वादरार्थं वा वेदवर्तिपदैरेव तेषां वाक्यरचनम्। अत एव तत्र प्रत्यभिज्ञापि ज्वाला-

---

१. M तुल्य

कृतानीति न वेदभूतानि। न च वेदोऽपि सिद्धरूपं वेदत्वं वक्तुमर्हतीति कार्यानुगुणतया यथार्हमुन्नेयः। वेदो वा आचार्यः, सत्यं वा प्रमाणं यत्सत्यं तदेवोक्तम् आदेयं वा प्रमाणं उपनेत्राचार्यादेर्वचः; गुरोर्वचनमौषधमितिवत्। मशकाद्याचार्यवचोविषयत्वे चानित्यसंयोगापत्तिः। अत एव हि कल्पसूत्रं—कल्पना हि रचना मणेरिव हारतया प्रयोगार्था रचनेति प्रयोगशास्त्रम्। अध्ययनधर्मादरस्तु वेदमिश्रिततया। प्रयोजनोक्त्यैव गुरुणा सङ्गतिः स्फोरिता।

॥८॥ अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात् ॥२५॥

अत्र सूत्र भाष्योक्तचिन्ता विषयशुद्ध्यर्था। अर्थप्रकरणादिगम्या

---

वद्भ्रान्ता। अत एव स्मृतित्वे सति प्रत्यक्षश्रुतिविरोधे मूलवेदानुमाभावात् बाध एवेति विरोधाधिकरणीय एव राद्धान्त इत्यर्थः। यत्पुनः आचार्यवचःप्रमाणमिति वेदवाक्यमेव कल्पसूत्राणां वेदत्वमाहेत्युक्तं तदपि वेदस्य कार्ये प्रामाण्यात् सिद्धरूपवेदत्वाभिधाने न योग्यतेत्ययुक्तमित्याह—न चेति। कथं तर्हि तत्सङ्गतिरित्यत्राह—यथेति। आग्नेयस्तुतिपरत्वात्तस्य यथा कार्यानुगुण्यं तथा नयनं कार्यमित्यर्थः। नयनप्रकारमाह—वेदोवेति। आचिनोत्यस्य बुद्धिमिति व्युत्पत्त्या आचार्यपदेन वेद उच्यते वेदवचः प्रमाणमिति सिद्धार्थवादः। प्रकारान्तरमाह—सत्यंवेति। आचार्यपदं मशक्याद्याचार्यपरमेव प्रमाणपदेनाध्याहृतसत्यपदस्यान्वय इत्यर्थात् कोऽर्थ इत्यत्राह—यदीति। आचार्यवचः प्रमाणमिति मशकाद्याचार्यवचः यत्सत्यं तदेव प्रमाणतयोक्तमित्यर्थः। प्रकारान्तरं श्रीकरोक्तमाह—आदेयं वेति। आचार्यपदमुपनेत्रादिपरं प्रमाणपदमप्युपचारादादेयपरम्। उपनेत्राद्याचार्यवचः आदेयम् आदर्तव्यमित्यर्थः। उमचारादादेयपरत्वे दृष्टान्तमाह—गुरुवचनमिति। मशकाद्याचार्यपरत्वे तदुक्तदोषमाह —मशकेति। उप नेत्रादिपरत्वे प्रवाहनित्यतया नानित्यसंयोगः मशकादिविशेषपरत्वे तु मैवमिति भावः। कल्पसूत्रादिसमाख्यापि च सूत्राणां पौरुषेयत्वं सूचयतीत्याह—अत एवेति। कल्पना हि रचना ज्ञात्वा हि क्लृप्तिः रचनेत्यर्थः। ननु सनियमाध्ययनात् कल्पानां वेदतेत्यत्राह—अध्ययनेति। वेदमिश्रिततया सोऽन्यथासिद्ध इत्यर्थः। ननु विरोधनयविषयव्याप्तिसाधकतया अस्याधिकरणस्य या सङ्गतिस्त्वयोक्ता सा न ग्रन्थानुमतेत्याह—प्रयोजनेति। किं पुनश्चिन्तायाः प्रयोजनमित्याक्षिप्य प्रयोजनकथनमुखेन गुरुणा यथोक्ता सङ्गतिः स्फोरितेत्यर्थः।

॥ ८ ॥ अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ २५ ॥

इह यच्छाखागृह्यस्मृत्याचारादिगृहीतं किञ्चिद्धोलाकादि अभिमान-

मूलचिन्ता आचारादपि। शिष्यव्युत्पत्त्यर्थेयं विधा। यच्छाखागृह्यस्मृत्याचारादिगतं किञ्चित् होलाकादि अभिमानमात्रात् केषाञ्चिदित्येवं कैश्चिदेवानुष्ठीयते तत्तेषामेव उतान्येषामपीति विषयशुद्ध्यर्था चिन्ता। आचारादपि महाजनादृतात् विरोधहेतुदर्शनहीनात् स्मृत्यधिकरणनयात् वेदानुमा। गृह्यतोऽपि [1]तन्नयादेव वेदानुमा। शाखातु वेद एव। कल्प-

मात्रात् केषाञ्चिदित्येव कैश्चिदनुष्ठीयते। तत्र विषयशुद्धिश्चिन्ता—तत् किं तेषामेव कर्तव्यमुतान्येषामपीति। मूलचिन्ता तु होलाकादिमूलवेदत्वेनानुमिता चोदना किमप्रमाणमुत प्रमाणमिति। नन्वत्र सूत्रभाष्ययोः होलाकादिविषयानुष्ठानविशेषपरा चिन्तोक्ता सा च न सङ्गता प्रमाणलक्षणे इत्याशङ्क्य तदाश्रिताभिमतमूलचिन्तापेक्षया सङ्गतिः सुलभेति वक्तुं तस्या विषयशुद्धचर्थतामाह—अत्रेति। नन्वेवं भाष्यानुक्तौ कुतो मूलचिन्तावगतिरित्यत्राह—अर्थेति। भाष्योक्तचिन्तायाः प्रस्तुतत्वाभावात् तदाश्रितचिन्तान्तरस्य प्रस्तुतत्वात् तस्याश्च तदभिव्यक्तिसमर्थत्वादर्थप्रकरणादिगम्या मूलचिन्तेत्यर्थः। ननु तर्हि साक्षात्सङ्गतचिन्तान्तरानुक्तिरेव भाष्ये न युक्तेत्यत्राह—शिष्येति। अर्थप्रकरणादिलभ्यापि चिन्ता भवतीति शिष्यान् व्युत्पादयितुं मूलचिन्ता भाष्ये कण्ठोक्त्या न कृतेत्यर्थः। अत्र भाष्ये आचारप्राप्तमात्रविषया चिन्तोक्तेति तन्मात्रविषयत्वभ्रमो माभूदिति निबन्धकाराभिमतं पञ्चिकोक्तं विषयं दर्शयन् विषयशुद्धिचिन्तास्वरूपमाह—यच्छाखेति आचारादेः प्रमाण्यं अद्याप्यसिद्धमिति कथं तद्विशेषचिन्तेत्याह—आचारादपीति। स्मृत्यधिकरणन्यायादेव वेदानुमानात् वेदमूलतया तत्प्रामाण्यसिद्धिरित्यर्थः। नन्वाचारो नाम शिष्टानुष्ठानम्। तेन च कार्येण कारणतया कार्यज्ञानमात्रानुमानं शक्यं न पुनः वेदवेद्यतार्हकार्यज्ञानं येन वेदानुमानं स्यादित्यत्राह—महाजनेति। शिष्टानुष्ठानं मानान्तरावेद्यधर्मसाधनं वेदवेद्यतार्हकार्यज्ञानजनितमित्येवं महाजनैरादृतत्वादित्यर्थः।

नन धर्मसाधनमिति ज्ञात्वा तैरनुष्ठितमित्यत्र किं लिङ्गम्; कार्यत्वमिति चेत्। तन्न। तस्य विप्रलम्भकाद्यनुष्ठानसाधारण्यादित्याह—विरोधेति। दृष्टरूपहेतुदर्शनहीनात् प्रत्यक्षश्रुतिविरोधरहिताच्चाचारादेव तथाविधधर्मज्ञानं तेषामनुचितमिति तदनुगुणदृष्टसमर्थवेदानुमेत्यर्थः। एवं गृह्यतोऽपि स्मृतितुल्यात् तन्नयादेव वेदानुमेत्याह—गृह्यत इति। शाखायास्तु वेदत्वादेव प्रामाण्यं सिद्धमित्याह—शाखेति। एवं सर्वव्यापित्वादस्याश्चिन्तायाः सर्वाक्षेपत्वादवान्तरसङ्गतिरपि सिद्धेत्याह—कल्पेति। कथं मूलचिन्तायाः साक्षात्सङ्गतिरित्यत्राह—मूलेति।

१. A तन्नयवदेव

सूत्राणामपि स्मृतितुल्यतास्थापनानन्तरं एतत्सर्वगतचिन्तेयं अवान्तरसङ्गता। मूलचिन्ता तु साक्षात्सङ्गतेति वक्ष्यते।

विषयशुद्धिचिन्तापूर्वपक्षस्तु यत्प्राच्यैरेव क्रियते तत्तेषामेव प्राच्याख्यालिङ्गितत्वान्मूलस्य। शाखागतेऽश्रुतेपि कर्मणि प्राच्यैरिदं कर्तव्यमित्यनुमा। गृह्यादौ कर्मेदं प्राच्यैः क्रियतामित्यनुमा।

राद्धान्तस्तु न यद्यैः क्रियते तत्तेषामेव। न हि तदाख्या कारणम्, आख्या हि 'तत्र जातः' 'तत्र वसति' 'तत आगतः' इत्येवम्। एतत्त्रितयहानेपि प्राच्यसुतः पित्र्यमेवाचारमनुवर्तते, न तु यत्र जातः स्थितः आगतो वा तदाचारम्। न च यथापुंसंस्थानादि आचार इति सर्वेषां तत्कर्मेति

---

ननु होलाकादि कर्तव्यमिति सामान्यत एव वेदानुमानं युक्तम् न तु तत्कर्तृमात्रनिष्ठतया विशेषतो गौरवादिति कथं पूर्वपक्ष इत्याशङ्क्य विषयशुद्धिचिन्तापूर्वपक्षमाह—विषयेति। यथाकार्यं हि कारणमनुमेयम्। कार्यं चात्राचारः प्राच्याद्यालिङ्गित इति तथैव मूलवेदानुमानात् यत्प्राच्यैः क्रियते तत्तेषामेव नान्येषामित्यर्थः। ननु शखागते कर्मणि कथं प्राच्यैरेवेति नियमः तस्य प्रत्यक्षश्रुतिगम्यत्वात्। तत्र च प्राच्यादिपदाभावादित्यत्राह—शाखेति। सत्यं कर्मस्वरूपं कर्तव्यतया प्रत्यक्षश्रुतिगम्यम्, तथापि तस्य नियताचारत्वात् प्राच्यैरिदमित्येवं कर्तृनियमांशे वेदानुमेत्यर्थः। गृह्यादौ तु कर्मस्वरूपे कर्तृनियमेपि वेदानुमेत्याह—गृह्यादाविति।

राद्धान्तस्त्विति। स्यादेवं यद्यैः क्रियते तत्तेषामिति कर्तृनियमः श्रुतिगम्यः यदि प्राच्यादिपदवद्वेदानुमानं सम्भवेत्। न च तत्सम्भव इत्यर्थः। कथं तर्हि तदसम्भव इत्यत्राह—न हीति। आख्या प्राच्यात्वादिकारणमनुष्ठाने कार्यरूपस्यानुष्ठानस्य प्राच्याद्याख्याननुवर्तित्वात्। अननुवर्तित्वमुपपादयितुं आख्यास्वरूपमाह—आख्येति। प्राचीदेशेभव इति प्राच्यः प्राग्देशोऽस्य निवास इति वा प्राचीदेशादागत इति वा। एतत्त्रयान्यतमे हि प्राच्याख्या। ततः किं तत्राह—एतत्त्रयेति। प्राग्देशजन्माद्यभावेपि प्राच्यसुतः पित्र्याचारमेवानुवर्तते न तु स्वयं यत्र जातः यत्र वसति यत आगतः तद्देशस्थमाचारं अतो न देशनिबन्धनाख्यानुवर्त्यनुष्ठानम्। तथा लोहिताक्षत्वादिपुंसंस्थानादिनापि नाचारनियम इत्याह—न चेति। निगमयति इति सर्वेति। इत्युक्तप्रकारेण सर्वानुष्ठात्रनुगताननुष्ठातृव्यावृत्तविशेषरूपासिद्धेः न कर्तृनियममूलश्रुत्यनुमेति सर्वेषामेव होलाकाद्यनुष्ठानम्। एवं विषयशुद्धि-

स्थिते मूलचिन्ता—

पूर्वपक्षः—प्राच्याभिमानालिङ्गिताचारमूलवेदानुमानमयुक्तं, अवधृतभ्रममूलप्राच्यत्वांशे वेदमूलकल्पनानुपपत्तेः होलाकादिमात्रे च मूलतया कल्प्यमानस्यायथार्थत्वात्। यथाकार्यं हि वैदिकं मानं कारणतया कल्प्यम्। इह तु भ्रममूलप्राच्यत्वांशवतः कार्यस्य कल्पितप्राच्यत्वांशे न मानं, अतो न यद्रूपकार्यपरं मानं उपस्थितं तद्रूपे न मानतामर्हतीति अप्रमाणमनुमितचोदना। तत्तुल्यतया च सर्वासामप्रामाण्यमित्येवं

---

चिन्तामुक्त्वा तदभिव्यङ्ग्यमूलचिन्तापूर्वपक्षमाह—इति स्थित इति। इत्येवं विषयशुद्धिराद्धान्तनयादाभिमानिक प्राच्यादिनिमित्तहोलाकाद्यनुष्ठाननियम इति स्थिते आचारानुमितहोलाकादिचोदना न प्रमाणमिति मूलचिन्ता पूर्वपक्षः। कथमित्यत्राह - प्राच्येति। प्राच्योऽहं तस्मान्ममेदं कर्तव्यं इत्येवमाभिमानिकप्राच्याद्यालिङ्गितोयमाचारः। तथा च तन्मूलतया वेदानुमानमयुक्तम्। अशक्यम्। अवधृतभ्रममूलप्राच्यांशे मूलत्वेनावधृतो भ्रमो यस्य सोऽवधृतभ्रममूलः सोऽसौ प्राच्यांशश्चेति अवधृतभ्रममूलप्राच्यांशः तस्मिन् वेदमूलत्वकल्पनानुपपत्तेः। यस्य प्राच्यांशस्यानुष्ठाननिमित्तत्वं भ्रान्तिमूलं तस्य वेदमूलत्वासम्भवादित्यर्थः। ननु तर्हि होलाकादिमात्रे वेदो मूलतया कल्प्यतामित्यत्राह—होलाकादिति। सत्यं कल्प्यते स तु न प्रमाणं अयथार्थत्वात् अयथाकार्थत्वादित्यर्थः। ननु भवत्वयथाकार्यत्वं का हानिरनुमितवेदस्येत्यत्राह—यथाकार्यमिति। कार्यभूताचारोपपत्त्यर्थं कारणतया कल्प्यमानो वेदः यथाकार्यमेव युक्त इत्यर्थः। कथं पुनरत्र यथाकार्यतया प्रामाण्याभाव इत्यत्राह—इह त्विति। प्राच्याद्यभिमानवदाचारोऽत्र कार्यम्। तदुपपत्त्यर्थं कल्प्यमानो वेदः भ्रममूलप्राच्यांशे न मानम्। न चैवमननुमापत्तिः। अविगीताचारलिङ्गबलादनुमानस्योक्तेः। यदि परमनुमितस्यापि तस्य यथादृष्टाचारकार्यज्ञानजननानर्हत्वादप्रामाण्यं भवेत् कामं भवतु। न चाप्रामाण्यादनुमानमेव व्यर्थमिति वाच्यम्। न हि प्रयोजनानुसारि प्रमाणम्। अतो लिङ्गबलात् वेदानुमा दुर्वारेति भावः। ननु होलाकादिमात्रे वेदो मूलतया कल्पितः। स च तावति प्रमाणमेवेति कथमप्रामाण्यमित्यत्राह—अत इति। यतः प्राच्यांशवत्कार्यं प्राच्यत्वादिविशिष्टहोलाकं कार्यमिति तत्परत्वेन वेदोऽनुमेयः न कार्यांशपरत्वेन। अतो यद्रूपकार्यपरं मानमुपस्थापितं तत्र प्रमाणं भवितुमर्हति तत्र चेन्न तदर्हमप्रमाणमेवानुमितचोदनेत्यर्थः। नन्वेवं अनुमितचोदनामात्राप्रामण्येऽपि प्रतिज्ञाऽक्षतेः कथं सङ्गतिरित्यत्राह—तत्तुल्येति। अत्र केचित्। अनुष्ठानहेतुज्ञानकारणतया वेदानमा। अनुष्ठानं च प्राच्याद्यभिमाना-

सङ्गतिरपि। न त्वेवं सङ्गतिपूर्वपक्षौ-प्राच्यादिपदवत्येव चोदना यथभिमाननतातु अर्थानुमेया। अतः अनवस्थितार्थ प्राच्यादिपदवती चोदना न प्रमाणमिति। एवं हि केवलहोलाकादिबोधिका चोदना न प्रमाणम् अयथार्थतयेति ग्रन्थो हेयः। न च भ्रममूलांशो वेदमूलतामर्हतीति पूर्वोक्तैव विधा।

राद्धान्तस्तु यद्यपि प्राच्याद्यभिमानालिङ्गितं कार्यं, कारणं तु वैदिकं मानं यावत्यंशेयोग्यता तावत्येव। यथा दृष्टार्थेषु नियमांशे वेदमूलतेति नानुमेयो वेदो यत्परस्तत्राप्रमाणम्। ननु अनवस्थितार्थप्राच्याभिमानपदवद्वेदानुमा माभूत् अवस्थितार्थप्राच्याभिमानपदवद्वेदानुमास्तु। नेदं

---

लिङ्गितमिति प्राच्यादिपदवत्येव चोदनाऽनुमेया। सा च अनुमितऽपि न प्रमाणम्, अनवस्थितार्थप्राच्यादिपदवत्त्वात् अनवस्थितार्थत्वं व मधुरामभिप्रस्थित इत्यादिभाष्ये व्यक्तं इत्यन्यथा सङ्गतिपूर्वपक्षावित्यूचुः तन्मूलभूतटीकाग्रन्थविरोधाद्धेयमित्याह— न त्विति। युक्तिहीनं चेत्याह—न चैवमिति।

राद्धान्तस्त्विति। वेदानुमापकानुष्ठानस्य प्राच्याद्यभिमानालिङ्गितत्वं वस्तुतो नास्त्येव। तत्स्वरूपविवेकिनां तदसम्भवात्। तथापि तदङ्गीकारेणाप्यनुमितस्य वेदस्य प्रामाण्यमुच्यते। यद्यपि विशिष्टमेकं कार्यं तथापि तत्सांशमिति यावत्यंशे वेदस्य कारणत्वयोग्यता तत्परतयैव वैदिकस्य मानस्य कल्पनम्। तच्च होलाकादिमात्रपरमेव तत्रैव मूलमानस्य जिज्ञासितत्वात् नांशान्तरे प्राच्यत्वादावपि भ्रमादिदृष्टहेतोः क्लप्तत्वेनादृष्टकारणान्तरजिज्ञासाभावादित्यर्थः। अंशमात्रस्य वेदमूलत्वे दृष्टान्तमाह—यथेति। गुर्वनुगमनादौ दृष्टार्थे नियमांशमात्रे वेदमूलत्वादित्यर्थः। ननु होलाकादिमात्रपरत्वेनानुमानेपि कार्यस्य भ्रममूलांशान्तरवत्तया कारणभूतवेदस्यायथार्थत्वमित्यत्राह—इति नानुमेय इति। स्यादेवायथार्थत्वं यदि विशिष्टकार्यपरतया वेदानुमानं स्यात्। इह तु होलाकादिमात्रपरतयैव वेदानुमानम्। अतोऽनुमेयो वेदो यत्परः तत्र नायथार्थं इति प्रामाण्यमेवेत्यर्थः।

एवमधिकरणे समाप्ते कश्चित् यथादृष्टकार्यरूपानुष्ठानानुगुणमपि वेदानुमानंनसम्भवतीति चोदयति—नन्विति। यद्यपि प्राच्यत्वस्याव्यवस्थितत्वात् तत्पदवद्वेदानुमानं न युक्तं तथापि प्राच्यत्वाभिमानस्य सर्वत्रैकरूपत्वेन व्यवस्थितत्वात् व्यवस्थितार्थपदवद्वेदानुमाने को विरोध इत्यर्थः। परिहरति—नेदमिति। इदं शङ्कितुमपि न योग्यम्। अत एव ग्रन्थकारेण नोद्भावितमित्यर्थः तत्र हेतुः—न हीति।

शङ्काहम् । न हि प्राच्यताभिमानवद्भिः कार्यमित्येवमपि यथावस्थितकार्यानुगुणता । न हि येऽनुतिष्ठन्ति ते भ्रमवत्तां स्वीयां मन्यन्ते । अतो नानुष्ठात्रनुगुणता । न च प्राच्यताधीमद्भिः कार्यमित्येवमनुगुणता, सत्यधीर्हि निरस्ता । भ्रमधीस्तु नानुगुणेत्युक्तम् । न त्वेवं प्राच्याभिमानवद्भिरित्येवमननुमा, प्राच्यत्वानवस्थया अनवस्थितेरिति । न हि यावदनुष्ठात्रनुगता अभिमानितानवस्थितिरिति शक्यं वक्तुम् ।

विवरणे तु अनुमेयवेदमूलेष्वाचारेषु विशेषचिन्ता । प्रसङ्गात् सङ्गतिः । पूर्वपक्षस्तु यत्र पुंसि कार्यं तत्र कारणानुमा; यथा यत्र धूमस्तत्राग्न्यनुमा । अन्यथा सर्वे होलाकादिविषयापूर्वज्ञानवन्तः केषाञ्चिद्धोलाकाचारवत्त्वादित्येवं साधने लिङ्गलिङ्गिनोरेकैकदेशता न स्यात् ।

---

प्राच्याभिमानो नाम प्राच्यताभ्रमः धीमात्रं वा ? नाद्यः प्राच्यताभ्रमवद्भिः कार्यमित्येवं वेदानुमानेपि न यथावस्थितकार्यरूपानुष्ठानानुगुणता यत इत्यर्थः । तदेवोपपादयति—नहीति ननु धीमात्रमभिमानः । अतो नोक्तदोष इत्यत्राह—न चेति । तत्रापि द्वैधं भवति । सत्यधीर्वा भ्रमधीर्वा ? नाद्य इत्याह—सत्येवेति । न द्वितीय इत्याह—भ्रमधीस्त्विति । न च धीमात्रमनुगुणमिति वाच्यम् । यतो न प्राच्यधीमन्तो वयं इत्येवमनुष्ठानं किन्तु प्राच्या वयमिति । अत्र कैश्चित् प्राच्याभिमानपदवद्वेदानुमानासम्भवेपि प्राच्यत्वाद्यनवस्थितिरेव हेतुरित्युक्तम् तन्न युक्तमित्याह—नत्वेवमिति । तत्र हेतुः—न हीति । सर्वानुष्ठातृव्याप्यभिमानानवस्थितत्वस्य दुर्ज्ञानत्वात् तद्व्याप्तिमुपेत्यैव नयव्युत्पत्तेरित्यर्थः ।

विवरणे त्विति । वस्तुबलमते हि यथासूत्रमेकैव चिन्ता—किं यत् यैः क्रियते तत् तेषामेव उत सर्वेषामित्येवंरूपा । सा चानुष्ठानविशेषपरा । प्रमाणलक्षणे यद्यपि न साक्षात्सङ्गता तथापि स्मृत्यधिकरणादिकल्पसूत्रान्तैरनुमेयवेदमूलेषु चिन्ता कृता । अत्राप्यनुमेयवेदमूलेषु चिन्ता प्रसङ्गात् क्रियत इति सङ्गतिद्वयमित्यर्थः । पूर्वपक्षे विशेषमाह —पूर्वपक्षस्त्विति । अत्र हि आचाररूपकार्यात् कारणभूतवेदानुमानम् । तच्च कार्यं प्राच्याद्यनुष्ठातृविशेषवर्तीति यत्र प्राच्यादौ पुंसि कार्यं तत्रैव कारणानुमानम् अनुष्ठातुरेव पक्षत्वात् । यथा यत्र पर्वते धूमः तत्रैवाग्न्यनुमानम् । अतः प्राच्याद्यधिकारिविशेषयुक्तवेदानुमानमित्यर्थः । विपक्षेऽनिष्टमाह—अन्यथेति । लिङ्गलिङ्गिनोर्हेतुसाध्ययोः एकदेशता एकविषयता पक्षधर्मता न स्यादित्यर्थः ।

राद्धान्तस्तु होलाकादेरेव कार्यता लिङ्गं वैदिकमानकारणवत्ता गम्या। होलाकादेरेव गम्येत्येकैकदेशता। धूमस्यापि यदि कार्यता लिङ्गं तदा अग्निकारणता गम्या। धूमवत्त्वे तु लिङ्गे अग्निमत्त्वं गम्यम्। नन्विह कर्म एकदेशि न कर्तेति कुतः ?। उच्यते। यावतोंशस्य दृष्टमूलताऽर्हता न तावतो मूलं वेदः कल्प्यः। इह यन्नाचरन्ति केचित् न तत् वेदमूलकं दृष्टम्। दुःखं कर्मेत्यकरणं दृष्टमूलम्। साक्षाच्छ्रुतेपि सर्वेषां कर्मणि दुःखत्वात् बहूनामकरणम्। अतो होलाकादिकार्यं मानकारणकमित्येवं अनुमा। शिखाकर्म तु किञ्चित् कस्यचिद्वेदमूलमेव। न हि तत्र कस्यचिदकरणं यत् तद्दुःखमूलम्। अतो नियमोऽसौ वैदिक एवेत्युक्तम्। तदनुरूपं च लिङ्गलिङ्गित्वं, गोत्रचिन्हे प्राप्ते तदाश्रितो नियमो विभागत

---

राद्धान्तस्त्विवति। स्यादेतदेवं यद्यनुष्ठाता पक्षः। तत्तु नाङ्गीक्रियते। इह त्वनुष्ठेयभूतहोलाकादि कर्म पक्षः। तस्यैव कार्यता लिङ्गं अनुमापको हेतुः तस्यैव वैदिकमानकारणवत्तागम्या अनुमेया। अतो लिङ्गलिङ्गितोः एकैकदेशता। एकस्यैकदेशावेकैकदेशौ तयोर्भावः तत्ता पक्षधर्मतासिद्धेत्यर्थः। प्रसिद्धेऽनुमानेप्येवं विधान्वयेन पक्षीकरणं दृष्टमित्याह—धूमस्येति। ननु भवत्वेवं अनुष्ठेयानुष्ठात्रोरुभयोरपि पक्षत्वसम्भवः तथापि कर्मैव पक्षो न कर्तेति विनिगमनायां को हेतुरिति चोदयति—नन्विति। उच्यत इति। कर्तुः पक्षत्वे हि विशिष्टाधिकारिमद्वेदानुमानं स्यात्। तथा च गौरवम्। यद्यपि व्यवस्थितकार्यदर्शनात् गौरवं न दोषस्तथापि यावतोंशस्यानुष्ठानरूपस्य कार्यस्य दृष्टं क्लृप्तं दुखं मूलं न तावतो वेदः कारणतया कल्प्य इत्यर्थः। दृष्टमूलत्वमुपपादयति—इह त्विति। ननु सर्वेषां कर्तव्यतया चोदिते कर्मणि केषाञ्चित् दुःखनिमित्ताकरणमयुक्तमित्यत्राह—साथादिति। न केवलमनुमितविषय एवायम्। किन्तु प्रत्यक्षश्रुतिमूलविषयेपि बहूनां दुःखमूलमकरणं दृष्टमित्यर्थः। कर्मणः पक्षत्वमुपसंहरन्नाह—अत इति।

कथं तर्हि शिखाकरणे केषांचित् द्वित्रिशिखत्वं केषांचित् पञ्चशिखत्वमिति व्यवस्था वेदमूला। तत्रापि कस्यचिदकरणस्य दुःखमूलत्वसम्भवात्। अतस्तत्रापि कर्मैव एकदेशी न कर्तेति न विशिष्टाधिकारिमद्वेदानुमानं युक्तमित्याशङ्क्य वैषम्यमाह—शिखाकर्मेति। व्यवस्थिताचारे समानेपि होलाकादौ कस्यचित्तदकरणं दुःखमूलं शिखाकर्मणि तु नेति कथमिदं वैषम्यमित्यत्राह—गोत्रेति। गोत्रचिन्हत्वेन शिखाभेदे अवश्यकर्तव्यत्वेन प्राप्ते तदाश्रितो द्वित्रिशिखत्वादिनियमांशो वैदिक

एव । नेह होलाकादिप्राच्योदीच्यचिन्हे प्राप्ते नियमार्हं अतस्सर्वेषाम् ।

यत्तु स्मृत्यादिनिबद्धवर्णाश्रमादिविभागेन न तत्र अकरणं दुःखमूलमिति विभागेनैव वेदानुमा । अत्र व्यवस्थिताचारमात्रविषयोऽयं विवरणीयो व्युत्पादः । अनुष्ठातृमात्रगतं न क्वचिदेकमस्तीत्यभ्युच्चयः । यथैकं नास्ति तथोक्तं शुक्लो होतेति शुक्लवेषता कार्यविषयतयैव[1] व्यवस्थिता । अथ माभूदेकं किञ्चित् अनेकपदवद्वेदानुमास्तु । तन्न । प्राच्याख्यः तत्सुतश्चेत्येवमपि नानुष्ठातृसङ्ग्रहः । तत्सुतोऽपि देशान्त-

एव, कस्यचित्तदकरणस्य दुःखमूलत्वासम्भवात् अतस्तन्नियमो विभागत एव । विशिष्टाधिकारिमानेवानुमेयवेदगम्यः । होलाकादिषु नैवं प्राच्यादिचिन्हे प्राप्ते नियमार्हम् । अप्राच्ये प्राच्यसुतेऽपि विद्यमानतया व्यभिचादित्वेन चिन्हत्वायोगात् अप्रत्यक्षत्वाच्चेत्यर्थः । नन्वेवं व्यवस्थिताचारसिद्धस्याव्यवस्थितत्वोपगमे ब्राह्मणादिवर्णविभागेन ब्रह्मचर्याद्याश्रमविभागेन च स्मृतिशाखागृह्यनिबन्धनकर्मविषयेऽव्यवस्थापत्तिः ।

अकरणस्य दुःखमूलत्वेन विभागेन वेदानुमानायोगादित्यत्राह—यत्त्विति । शाखानिबद्धकर्मणि कस्यचिदकरणे दुःखमूलत्वं न सम्भवति । विशिष्टाधिकारिमत्तयैव श्रुतेः । गृह्यस्मृतिनिबद्धेपि विशिष्टाधिकारिमद्वाक्यस्यैव प्रत्यक्षत्वात् । ततोऽनुमेयोऽपि वेदो विशिष्टाधिकारिपदवानिति वर्णाश्रमविभागेन स्मृत्यादि निबद्धविषये व्यवस्था वेदमूलैवेत्यर्थः । कथं तर्हि शाखादिविषयत्वं अस्य नयस्येत्यत्राह—अत्रेति । अत्राधिकरणे विवरणमतसम्बन्धिव्युत्पाद्यो न्यायः अनुमेयवेदमूलेषु व्यवस्थिताचारेष्वेव न पुनः निबन्धनमतवत् शाखागृह्यस्मृत्याचारविषयोऽपीत्यर्थः । नन्वत्र भाष्ये समस्तानुष्ठातृगतैकोपाध्यभावो राद्धान्तहेतुरुक्तः । स च स्मृत्यादि-[2]निबद्धविषयेऽपि सम इति कथमतद्विषयता न्यायस्येत्यत्राह–अन्विति । इतराकरणस्य दुःखमूलत्वमेव राद्धान्ते मूलयुक्तिः सर्वानुष्ठातृगतैकोपाध्यभावस्तु अभ्युच्चयमात्रमित्यर्थः । कथं तर्हि एकाभावः इत्यत्राह—यथेति । विषयशुद्ध्यधिकरण इति शेषः । नन्वयमयुक्तः शक्लो होतेति शुक्लिम्नो व्यवस्थितत्वात् । यथा होतृत्वं व्यवतिष्ठते तथाश्यामत्वादेः कस्यचिल्लिङ्गस्य व्यवस्थितत्वात् होलाकादीनामपि व्यवस्था स्यादित्यत्राह—शुक्लेति । युक्तं शुक्लिम्नो व्यवस्थितत्वम् । उपादेयत्वात् श्यामत्वादि तु न स्वयमुपादेयम् । किन्तु अन्योपादानोपाधिभूतम् । तथाचानुगतैकरूपापेक्षा दुर्वारेत्यर्थः । ननु अनुगतैकरूपोपाध्यभावेपि अनेकोपाधियुक्तवेदानुमानमस्तु इत्याशङ्कते—अथेति । तन्नेति । अनेकपदत्वं नाम प्राच्याख्यस्तत्सुतश्चेत्येव । एव-

१. M कार्यतया २. R निबन्धन ।

रीयतानुरागात्[1] तदनभिमानी सन् तन्नानुतिष्ठति । न चाभिमानाद्व्यवस्थेति पूर्वमेवोक्तम् ।

॥९॥ प्रयोगोत्पत्त्यशास्त्रत्वात् शब्देषु न व्यवस्था स्यात् ॥२४॥

धर्मस्मृत्यादिमुखमप्रामाण्यमन्तरङ्गं निरस्य पदपदार्थस्मृतिनिर्मूलतोत्थं वार्यत इति सङ्गतिद्वयम् । निर्मूलत्वे हि वैदिकाश्वादिपदात् न हयाद्यध्यवसायः अश्वशब्दस्य हये निस्स्वे च प्रयोगात् । उपपदप्रकरणा-

---

मपि न सर्वानुष्ठातृसङ्ग्रहः । कथमित्यत्राह—तदिति । ननु तर्हि प्राच्यसुतत्वाद्यभिमानाद्व्यवस्थास्त्वित्यत्राह—न चेति ।

॥९॥ प्रयोगोत्पत्त्यशास्त्रत्वात् शब्देषु न व्यवस्थानात् ॥२४॥

इह तु गौर्गावीगोणी गोपोतलिकेत्येवमादय उदाहरणम् । तत्र संशयः—किमेते सर्वे सास्नादिमति साधवः, उतगोशब्द एवेति । तदर्थमियचिन्ता—किं शाब्दस्मृतिः साध्वसाधुविवेकक्षमा न भवति उत भवतीति । तदर्थमप्यपरा चिन्ता—किं सा न प्रमाणमुत प्रमाणमिति तदर्थं चापरा चिन्ता—किं सा निर्मूला उत समूलेति । नन्वस्याश्चिन्तायाः कथमध्याये सङ्गतिः चोदनाप्रामाण्याक्षेपसमर्थनरूपत्वाभावात् कथं चावान्तरसङ्गतिस्तत्राह—धर्मेति । पदपदार्थयोर्यानियामिका स्मृतिः तस्याः निर्मूलत्वमपि चोदनाप्रामाण्याक्षेपकमिति तदपनयनादध्याये सङ्गतिः । अवान्तरसङ्गतिस्तु स्मृतिमुखाप्रामाण्यनिरासपरेऽत्र पादे धर्मस्मृत्यादिमुखचोदनाप्रामाण्यनिरासानन्तरं शाब्दस्मृतिनिर्मूलत्वोत्थाप्रामाण्यनिरसनमत्रेति सङ्गतिः सिद्धैव । यद्यप्येतत्पूर्वकमपि[2] धर्मस्मृत्यादिमुखाप्रामाण्यनिरसनं शक्यम् । तथाप्यन्तरङ्गत्वात् तत्पूर्वकमेतच्चिन्त्यते । अन्तरङ्गत्वं च धर्मस्मृतेः साक्षादनुष्ठेयविषयत्वादित्यर्थः । ननु निर्मूलत्वेपि शाब्दस्मृतेः कथं चोदनाप्रामाण्याक्षेप इत्यत्राह—निर्मूलत्वे हीति । ननु न स्मृतेर्व्युत्पत्तिः किन्तु व्यवहारात् ततश्च व्यवहारतः प्रसिद्धहयाद्यध्यवसायो वैदिकाश्वादिपदाद्युक्त इत्यत्राह—अश्वेति । व्यवहारोऽश्वपदस्य हये निर्धने चाविशिष्ट इत्युभयत्र साधुत्वादनध्यवसाय एवेत्यर्थः । ननु अनेकार्थाक्षादिपदे यथोपपदप्रकरणादिवशादध्यवसायः तथाऽत्राप्यस्त्वित्यत्राह—उपपदेति । शाब्दस्मृतेर्निर्मूलत्वे नाध्यवसाय एव । उपपदप्रकरणादेरसंभवात् स्वार्थे सन्देह एवेत्यर्थः । ननु स्मृतेः समूलत्व एव तत्संगृहीतानेकार्थानामक्षादिपदानामध्यवसायकरप्रकरणादिकमस्ति निर्मूलत्व एव तदभाव इति नेदं प्रमाणोपेतम् नियमहेतो-

---

१. M नुरोधात् २. B पूर्वकमिव ।

द्यसम्भवेऽश्वशब्दार्थसन्देहः स्यात्। ननु स्मृतिसङ्गृहीतानेकार्थानां प्रकरणाद्यध्यवसायकरं इहैव तदभाव इति स्वहस्त[१]रचितम्। मैवम्। निर्मलत्वे हि स्मृतेः प्रकरणादिगतोऽपि शब्दोऽनध्यवसितार्थ एव। प्रयोगमात्रस्य क्वचित् कदाचित् कस्यचित् सम्भवात्। समूलस्मृतिनिबन्धनानेकार्थता तु कतिपयपदवर्तिनीति प्रकरणादिसम्भवः। न तु सदपि[२] प्रकरणादि अपभ्रंशशङ्कापनयनाशक्तत्वात् न हयाद्यध्यवसायकरमिति। यतः अपभ्रंशशङ्कापि प्रकरणादिना हयादेः वेदार्थत्वेऽनादिप्रयोगनिवेशादपैति वाक्यशेषसादृश्याद्यभावे च शास्त्रस्थन्याय इति न निःस्वे गवि च गौणता।

---

रभावादिति चोदयति—नन्विति। मैवमिति। स्मृतेर्निर्मूलत्वे प्रकरणगतोऽपि शब्दोऽनध्यवसितार्थ एव। सर्वपदानामनेकार्थत्वात्। अतोऽध्यवसायकरं प्रकरणादिकं स्मृतेर्निर्मूलत्वे नास्तीत्यर्थः।

ननु तदा सर्वपदानां कथमनेकार्थत्वमित्यत्राह—प्रयोगेति। निर्मूलत्वे स्मृतेर्न प्रयोगमात्रात् शब्दानामर्थनिश्चयः। तत्रकदाचित् शब्दशक्त्यज्ञावस्थायां कस्यचिच्छब्दस्य क्वचिदर्थविशेषे सम्भावितत्वे सति तद्बलात् सर्वशब्दानामनेकार्थता। ततश्च सर्वपदेष्वर्थानिश्चयात् भावान्तरवत् नार्थधीरिति प्रकरणादिरेव नास्तीत्यर्थः। ननु समूलत्वेपि वा कथं प्रकरणादिलाभ इत्यत्राह—समूलेति। अत्र प्रकाशेन सदपि प्रकरणादिकमश्वशब्दस्य न हयाद्यध्यवसायकरं वाच्यद्वयसन्देहे स्वानुगुणवाच्यव्यवस्थापकमात्रस्यापभ्रंशशङ्कापनयाशक्तत्वात्। अश्वशब्दस्तावत् हये निःस्वे च प्रयुक्तः तस्य च शक्तिकल्पनालाघवादेकत्र साधुता। अपरत्रापभ्रंशता। तत्र किं हये अश्वपदमपभ्रंशः, साधुः निःस्वे उत विपरीतमितिशङ्कायां अनादिवेदस्थतया साधोरश्वपदस्य हयेऽपभ्रंशत्वे तद्बाधकत्वं[३] प्रकरणेनापि निश्चेतुमशक्यम्। एवं च प्रमाणत्वेन प्रकरणाभावोक्तिर्ग्रन्थे न स्वरूपेणेत्युक्तम। तन्न युक्तमित्याह—ननु सदपीति। यत इति। प्रकरणादिसत्त्वे तदुपस्थितस्य हयादेर्वेदार्थत्वेनावगमे अनादिवेदनिवेशात्[४] तद्विषयप्रयोगानादितासिद्धेः आदिमत्तारूपापभ्रंशशङ्काप्यपैति इति स्वोक्तेन तदसत्वेनैवानध्यवसायः सुवच इति भावः।

ननु व्यवहारद्वयविप्रतिपत्तौ 'शास्त्रस्था वा' इति यववराहराद्धान्तनयेन वाक्यशेषानुगुण्यात् अश्वपदस्य हयार्थतैव, निःस्वे गौणता। गोणीशब्दस्यावपनार्थता गवि गौणतेति गौणमुख्यताध्यवसायः शक्यस्तत्राह—वाक्यशेषेति। सत्यमेव

---

१. R विर　　२. R सम्भवदपि　　३. B तद्बोधकत्वं　　४. B संयोगात्

पूर्वपक्षस्तु—शाब्दस्मृतिपरम्परेयं अनादिप्रयोगपरम्परानिबन्धनरूपा। अनादिवेद[२]गतपदपदार्थनियमार्था। वृद्धव्यवहारपरम्परा च असति च सङ्केतादिदर्शने प्रयोगानादितागमिकेत्युक्तं सम्बन्धपरिहारे। अतो हये निस्स्वे च तुल्या अनादितेति न हय एवानादितास्मृतिनियमाप्रयोगमूलः।

किञ्च स्मृतिरेव न नियतार्था, स्मृतिर्हि धातोः परे प्रत्यया भवन्तीति भूवादयो धातव इति च ग्रन्थे भ्वादित्वात् गडेः गण्डतीति साधुत्वं

---

यदि वाक्यशेषसादृश्ये स्तः इह तु तयोरभावान्न शास्त्रस्थन्यायान्निस्वादौ गौणतेत्यर्थः ननु अनादिवेदगतपदपदार्थनियमार्थतया महाजनादृतायाः शाब्दस्मृतेरनादिवैदिकप्रयोगमूलत्वात् कथं निर्मूलत्वेन पूर्वपक्षः इत्यत्राह—पूर्वपक्षस्त्विति।

सत्यमनादिवेदगतपदपदार्थनियन्तृत्वं शाब्दस्मृतेः। तत्तु अनादिलौकिकप्रयोगनिबन्धनरूपतयैव लोकव्युत्पत्तिपूर्वत्वात् वेदे शब्दार्थावगतेः। अतः स्वमूलभूतप्रयोगानादितां गमयत्येव स्मृतिः वैदिकपदपदार्थनियमार्था नान्यथा। यद्यपि पाणिन्युपज्ञा स्मृतिः नानादिप्रयोगनिबन्धनरूपार्हा तथापि शाब्दस्मृतिपरम्परायाः तदर्हत्वमस्त्येवेत्यर्थः। नन्वेवं सति गाव्यादेः स्मृतिनिबद्धत्वाभावात् [१]सादितैवेत्यत्राह—वृद्धेति। यथा शाब्दस्मृतेः प्रयोगानादितागमकत्वं तथा वृद्धप्रयोगपरम्पराया अपि सङ्केतदर्शनाभावे प्रयोगानादितागमकत्वमित्युक्तं सम्बन्धपरिहारे। वृद्धप्रयोगपरम्पराविषयत्वं च गाव्यादेरपीति तस्याप्यनादितेत्यर्थः। नन्वेवमपि गवादिपदानामप्यनादिवृद्धप्रयोगपरम्पराविषयत्वात् तत्सङ्ग्रहपरायाः स्मृतेः कथं निर्मूलत्वमित्यत्राह—अत इति। अश्वशब्दस्य हये निःस्वे च प्रयोगानादित्वे तुल्येपि हय एवानादिता न निःस्व इति [४]नियमस्मृतिः न प्रयोगमूलेति निर्मूलत्वाद्व्याकरणस्मृतिरप्रमाणमित्यर्थः। स्वोक्तार्थव्यवस्थापनशक्त्यभावादपि स्मृतेरप्रामाण्यमित्याह—किञ्चेति। अनियतार्थत्वं वक्तुं स्मृतिस्वरूपमाह—स्मृतिरिति। प्रत्ययः परश्च धातोः इति सूत्रत्रयेणैकवाक्यभूतेन धातोः परे प्रत्यया भवन्तीति स्मृतिस्तृतीयाध्यायादारभ्य साक्षाच्छब्दानुशासनम्। प्रथमद्वितीययोस्तु तदुपयोगिसंज्ञाकरणमात्रमिति मत्वा प्रथममेवेयं स्मृतिरुपात्ता दूषयितुम्। तथा को नामायं धातुरित्यपेक्षायामाह—भूवादयो धातव इति। कयाचित्परिपाट्या पठितानां भू इत्येवमादीनां शब्दानां धातुसंज्ञा च स्मृतेत्यर्थः। गडेरिति। यद्यपि गण्डेरिति वक्तव्यं तथापि गणपाठान्तर्गततच्छब्दप्रत्यभिज्ञार्थं गडेरित्युक्तिः, गण्डेरिति वा

---

१. R विनियोगाद २. A गतं ३. B न साधुते। ४. B स्मृतिनियमः।

स्यात्। घटं भूयत इति दुस्तरं च स्यात्। भवतीति भूरिति क्विपि कृते क्विबन्ता धातुत्वं न जहतीति "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति भावे लकारे आत्मनेपदे यकि कृते भूयत इति 'घटस्य धात्वर्थीभूतभवितृविशेषणत्वात्। क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चेति। एवं घटमिति च भूवादित्वात् सत्तादीनां तृतीयाध्यायोक्तप्रत्ययः स्यात्। अनार्षः सत्तादीनां गणपाठः स्यात् इत्यत्रापि न मानम्। अस्तु वा अनार्षत्वं सत्तादेः गण्डति घटं भूयत इति दुस्तरम्। अथ क्रियावचनो धातुरिति गण्डिः वदनैकदेशवाची न धातुः, भवतीति भूरिति च कर्तृवाची न क्रियावाची, सत्तादि च न क्रियेति तर्हि भवति तिष्ठतीत्य-

---

वा पाठः। तस्य गणपाठान्तर्गततया धातुसंज्ञायां तृतीयाध्यायोक्तप्रत्ययोत्पत्त्यविशेषात् गण्डतीति साधुः स्यात्। तच्च नेष्टमित्यर्थः।

अनिष्टान्तरमाह—घटमिति। तच्च नेष्टमिति शेषः। कथं पुनः घटं भूयत इत्यस्य साधुत्वप्रसक्तिरित्याह—भवतीति भवतेर्धातोः भवतीति भूरिति विगृह्य क्विप्त्वेति कर्तरि क्विपि कृते भूरिति रूपं भवति। तस्य क्विबन्ता धातुत्वं न जहतीति धातुत्वं, तदर्थस्य च भवितुर्भावत्वम्। धात्वर्थः केवलः शुद्धो भावे इति स्मृतेः। ततश्च भावे लकारे भावकर्मणोरित्यात्मनेपदे यकि च कृते भूयत इति भवतीत्यर्थः कथं तर्हि घटं इत्यत्राह—घटस्येति। धात्वर्थीभूतभवितृविशेषणत्वाद्घटस्य धात्वर्थस्य (च) क्रियात्वेन क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चेति स्मृतेः कर्मत्वं नपुंसकत्वं चेत्येवं घटमिति रूपं भवति। ततश्च घटो भवतीत्यस्मिन्नर्थे घटं भूयत इति साधुः स्यादित्यर्थः। ततोऽवान्तरदूषणमाह—भूवादित्वादिति। ननु सत्तादेर्गणपाठोऽनार्षः भीमसेनकृतत्वेन प्रसिद्धत्वात् ततश्च भूवादित्वाभावान्न धातुता सत्तादेरित्यत्राह—अनार्ष इति। अनार्षत्वे मानाभावान्नायं परिहारः सत्तादेर्भीमसेन कृतत्वेन प्रसिद्धिर्निर्मूलेति भावः। अनार्षत्वमुपेत्यापि पूर्वोक्तदूषणदार्ढ्यं न स्मृतेरनियतार्थत्वं स्थापयति—अस्तु वेति।

ननु भूवादयो धातव इति क्रियावचनानामेव धातुसंज्ञा तद्व्याख्यातृभिरुक्तेति वदनैकदेशद्रव्यवाचिनो गडेर्न क्रियावाचितेति न धातुता। तथा भवतीति विगृह्य क्विबन्ततया सिद्धस्य भूरित्यस्य कर्तृवाचितैव न क्रियावाचितेति न धातुता सत्तादीनां गमेरिवाक्रियावाचित्वादेव न धातुतेति न पूर्वोक्तानिष्टापत्तिरिति शङ्कते—अथेति। सत्ताद्युक्तीरनास्थया दूषयति—तर्हीति। भवत्यादेरक्रियावाचि

---

१. M घटान्यत्वधीभूतभवितृ

साधुः स्यात् । गडेश्च गणे पाठो व्यर्थः । अक्रियार्थत्वात् । अक्रियापि क्रियाव[1]त् स्वीकार्येति नास्ति स्मृतिः, प्रयोगतश्चेत् स एव शरणम् । भ्रान्त्या क्रियावगतिरपि निरस्ता विपरीतख्यात्यभावात् । अथ पाठक्रियावचनाभ्यां धातुतेति गण्डेर्व्युदासे भवत्यादेरपि स्यात् । एकैकं धातुताहेतुः यदि ततो भवत्यादेरपि धातुता । यदि न तदा गडेरपि स्यात् इति स्थूलमुपेक्ष्यैव पचत्यादेः [2]पाठानर्थक्यमुक्तम् क्रियावाचित्वादेव धातुतासिद्धेः । अथ पठितस्यैव क्रियावाचितेति पचत्यादेः पाठः तेन आणवयत्यादेरधातुतेति तर्हि मिलितादेव धातुतेति स एव भवत्यादिषु[3] प्रसङ्गः इति प्रयोगत एव नियमो वाच्यः । ततश्चेत्सर्वः साधुः ।

---

त्वेनाधातुत्वात् धातुविहितप्रत्ययाभावात् भवतितिष्ठतीत्यदिरसाधुः स्यादित्यर्थः । गण्डयादेः अक्रियावचनत्वेन अधातुत्वात् तस्य गणे पाठोऽनर्थकः स्यादित्यत्राह—गडेरिति । नन्वक्रियापि कदाचित् क्रियावत् प्रतीयते । तेन भवत्यादेर्धातुत्वम् । गडेश्च कदाचित् क्रियार्थत्वधीमात्रेण गणपाठार्थवत्तेत्याह—अक्रियेति । स्यादेवं यदि ईदृशी स्मृतिः स्यात् । सा तु नास्तीत्यर्थः । ननु स्मृत्यभावेपि प्रयोगमात्रात्तथाऽङ्गीक्रियत इति शङ्कते—प्रयोगत इति । दूषयति--स एवेति । प्रयोगस्य स्वातन्त्र्ये तत्सिद्धः सर्व एव साधुः स्यादित्यर्थः किञ्च क्रियावाचित्वं विना भ्रान्त्या क्रियावगतिरख्यातौ निरस्तेत्याह—भ्रान्त्येति । पाठक्रियावचनत्वाभ्यां समुदिताभ्यां धातुसंज्ञानियमः । तेन गडेः पाठेपि क्रियावचनत्वाभावान्न धातुतेति गडिव्युदास इत्याशङ्क्य पाठानर्थक्यमुपेक्ष्य भवत्यादेरपि व्युदासापत्ति दोषान्तरमाह–पठिति। ननु तर्हि पाठक्रियावचनत्वयोरुभयोरेकैकं धातुताहेतुः । ततश्च पाठाद्भवत्यादेः सङ्ग्रह इति शङ्कते—एकैकमिति । दूषयति—तदेति । ननु गडेरपि स्यादित्यादिकं विहाय ग्रन्थे किमिति पचत्यादेः पाठोऽनर्थक इत्युक्तम् तत्राह—इति स्थूलमिति ।

पचत्यादेः पाठस्य नियमार्थत्वात् क्रियावाचित्वेऽपि पठितस्यैव धातुता नापठितस्याणवयत्यादेः आज्ञापनादिक्रियावचनस्येति शङ्कते—अर्थेति । तर्हीति । तदा मिलितस्य धातुताहेतुत्वमिति पूर्वोक्तो भवत्यादिषु धातुत्वाभावप्रसक्तिलक्षणो दोषः आपद्यत इत्यर्थः । एवं स्मृतेर्नियमाशक्तौ प्रयोगत एव नियमो वाच्यः ततश्चेन्नियमः तर्हि सर्वं गोगाव्यादि साधुः स्यादित्यर्थः । स्मृत्यन्तरमप्यनियतार्थ-

---

१. A क्रियैव २. पाठानर्हत्वमुक्तम् B ३. M भवति भवत्यादेरपि

तथाकारकनियमासिद्धिः-प्रथमं "ध्रुवमपायेऽपादानं इत्यपादानकारकं स्मृतम्। ध्रुवं च निष्क्रियं इत्यकारकम् । निष्क्रियस्य च कारकत्वेऽतिप्रसङ्गः । न हि रथात् पतित इत्यत्र रथस्य पातक्रियायोगः यत्र ध्रुवता। गतियोगेतु कर्तृता ।

कर्मणा यमभिप्रैति तत्कारकं सम्प्रदानं स्मृतम् [१]यः कश्चित् कर्ता स्वक्रियया स्वसम्बन्धी क्रियते स न कारकम् । कर्तृक्रियाननुनिष्पादात्[२] । यमिति निर्देशात् स्वर्गवत् फलं तत् न कारकम् । कर्मणेति [३]च सिद्धावगतेः । अथ कर्मणा कारकेणेति व्याख्यायते तर्हि सुतरामकारकता क्रियायोगाभावात् । क्रिययेति पक्षे हि क्रियायोगो विपरीतोऽप्यस्ति । अनन्तरपक्षे तु कारकयोगः स्यात् न क्रियायोगः । परम्परयापि यदि क्रियायोगः तर्हि सर्वस्य स इति किञ्चित्कारकं किञ्चिन्नेति विभागो न

---

मित्याह—तथेति । तत्स्मृत्यन्तरमाह —प्रथममिति । अनुशासनक्रमेण प्राथम्यं वेद्यम् । अनियतार्थत्वमाह—ध्रुव चेति । ध्रुवं हि निष्क्रियं व्यापारगम्यं तस्य च कारकत्वमयुक्तमित्यर्थः । अव्यापारस्य च कारकत्वे को दोष इत्यत्राह निष्क्रियस्येति । सर्वं सर्वत्र कारकं प्रसज्येतेत्यर्थः । ननु अपादाने निष्क्रियत्वमसिद्धम् रथात्पतित इत्यत्र रथस्य क्रियायोगोपलब्धेरित्यत्राह—न हीति । न हि तत्रापि रथस्य पतनक्रियायोगः यत्र पतनक्रियायां ध्रुवता अवधिता । ननु गतियोगोपलब्धेः क्रियावत्त्वमित्यत्राह—गतियोगेत्विति । गतिक्रियायोगाद्धि गतौ कर्तृता न पातेऽपादानता न हि अन्यक्रियाकर्तुः अन्यक्रियायामपादानता । तथासति पविक्रियां प्रति गमिभुजिकर्तुरपि अपादानतापत्तिरित्यर्थः । कारकान्तरनियममप्यनुभाषते दूषयितुम्—कर्मणेति । कर्मशब्दः क्रियावचनोऽप्यस्ति, कारकवचनोऽपि । तत्र क्रियावचनत्वपक्षे दूषणमाह-क्रिययेति । यः कश्चित् कर्ता स्वक्रियया सम्बन्धीक्रियते स साध्यत्वापत्तेर्नकारकम् कर्तृव्यापारानुनिष्पादितत्वाभावात् । कथं पुनस्तदभाव इत्यत्राह यमिति द्वितीयानिर्देशात् साध्यत्वप्रतीतेः । फलं न कारकम् । इतोऽपि न कारकतेत्याह—कर्मणेति । क्रियायाः सिद्धार्थतावगतेः न तत्र साध्यस्य कारकता स्वर्गादिवदित्यर्थः । सूत्रस्थकर्मशब्दस्य कारकवचनत्वं शङ्कते—अथेति तर्हीति । तत्पक्षे कथञ्चिदपि क्रियायोगाभावात् कारकत्वं दूरापेतमित्यर्थः ।

ननु अनयोः पक्षयोः को विशेषः येन सुतरामित्यतिशयोक्तिरित्यत्राह—क्रिययेति । पक्षे हीति । विपरीतः साध्यतया । ननु कारकयोगेऽपि परम्परया क्रियायोगोऽस्तीति शङ्कते—परम्परयेति । तर्हीति । एवं सति सर्वस्यापि क्रियायोगात्

---

१. W कश्चित् क्रियायाः कर्ता २. निष्पादनात् ३. कर्मणा च

स्यात्। क्रियायोगसामान्येनाभिमते सर्वत्र षष्ठी स्यात्। स्वर्गोऽपि यजतिकारकं स्यात्। प्रयाजादेश्च दर्शपूर्णमासे कारकता स्यात्। प्रयोगाश्रयणं तु निरस्तम्।

साधकतमं करणमिति करणं स्मृतम्। यदि यद्व्यापारानन्तरं क्रियासिद्धिः तत् तमपा उक्तं प्राप्तं तर्हि तण्डुलैरोदनमिति। यदि व्यापारप्राचुर्यं तमबर्थः कस्य न स्यादिदमाफलसिद्धेः।

आधारोऽधिकरणं इत्यधिकरणं स्मृतम् यदि यत्र क्रियते क्रियेति तर्हि तत्र कारकमात्रमधिकरणं स्यात्, क्रियासमवायात्, अथ कर्म यत्र आधीयते तर्हि समे पचतीति न स्यात् पाक्यस्य न समे स्थितिः किन्त्वप्सु

---

कारकाकारकविभागो न स्यादित्यर्थः। किञ्च साक्षात् परम्परया वा सामान्येन क्रियायोगात् कारकत्वे सर्वत्र कारके षष्ठ्यापत्तेः षष्ठ्येकार्थत्वं कारकविभक्तीनां स्यादित्यापादयति—क्रियायोग इति। अनिष्टान्तरमाह—स्वर्गोऽपीति। स्वर्गस्यापि यागे सम्प्रदानवत् कारकत्वं स्यात्। न च तदिष्टम् साधनत्वेन हि यागं प्रति स्वर्गोऽपि फलतयाऽभिमतो न कारकत्वेन। तथा प्रयाजादीनामपि दर्शपूर्णमासे कारकता स्यात् सा च नेष्टा तेषांहि उपकारकत्वमात्रमभिमतम् न कारकत्वमित्यर्थः।

ननु यत्र कारकवाचिशब्दः प्रयुज्यते तत्कारकमिति नियमान्नातिप्रसङ्ग इत्यत्राह—प्रयोगेति। तथात्वे प्रयोगादेव कारकनियमसिद्धेः शास्त्रं तु निरर्थकं स्यात्। दूष्यान्तरमनुभाषते—साधकतममिति। तमबर्थाज्ञानान्नैतद्युक्तमिति शेषः। ननु यद्व्यापारानन्तरं क्रियासिद्धिः तत् साधकतममिति तमपोच्यत इति शङ्कते—यदीति। दूषयति—प्राप्तमिति। तण्डुलव्यापारानन्तरं पचिक्रियासिद्धेः तण्डुलैरोदनं पचतीति प्रयोगः स्यात् न च तथा प्रयोग इत्यर्थः। ननु तर्हि क्रियासिद्धौ यस्य व्यापारप्राचुर्यं तत् साधकतममित्युच्यते इति शङ्कते—यदीति। दूषयति—कस्येति। व्यापारप्राचुर्यं नाम आफलप्राप्तेः पुनः पुनर्व्यापारः स सर्वस्याप्यस्तीति सर्वमपि कारकचक्रं करणं स्यादित्यर्थः। आधार इति। कस्याधार इत्यज्ञानात् तदप्ययुक्तमिति शेषः। क्रियाया यदाधारभूतं तदधिकरणमिति सूत्रार्थ इति शङ्कते—यदीति। तर्हीति। सर्वेष्वपि कारकेषु क्रियासमवायात् सर्वस्यापि कारकस्याधिकरणतापत्तिरित्यर्थः।

ननु कर्मकारकं यत्राधीयते तदधिकरणं कर्माधारत्वं च न सर्वस्येति शङ्कते—अथेति। तर्हीति। पाक्यस्य तण्डुलादेः समदेशस्थित्यभावात् समे पचती-

इति अप्सु पचतीति स्यात् । कटे स्थितो भुङ्क्ते इति न स्यात् । भोक्तुर्हि तदधिकरणम् । यदि सर्वकारकस्थितिर्यत्र तर्हि स्थाल्यां पचतीति न स्यात्, तस्यां सर्वास्थितेः । अधिकरणं चाकारकं स्यात् । स्वस्मिन् स्वस्यास्थितेः । निष्क्रियस्य च कालादेरधिकरणता न स्यात् ।

कर्तुरीप्सिततमं कर्मेति यदि क्रियासिद्ध्यर्थमीप्सिततमं (त्वं) तर्हि सर्वस्य स्यात् । अथावाप्त्यर्था क्रियेति न तर्हि कारकं क्रियाफलत्वात् ।

तथा युक्तं चानीप्सितं इति चायुक्तम् । तथा युक्तं तमवर्थयुक्तमित्येवमीप्सिततममेवोक्तं तदनीप्सितमित्यनन्वयः । अकथितं कारकं कर्मेत्युक्ते किं तदकथितमिति न ज्ञायते ।

स्वतन्त्रः कर्तेति यदि स्वातन्त्र्यमिच्छातः प्रवृत्तिः तर्हि जायते

---

त्यभिमतप्रयोगो न साधुः स्यात् । अनभिमतश्च अप्सु पचतीति साधुः स्यात् । पाक्यस्याप्सु स्थितेः । तथा कर्त्राधाराणां कटादीनां कर्माधारत्वाभावेनानधिकरणत्वात् कटे स्थितो भुङ्क्ते इत्याद्यप्यसाधुः स्यादित्यर्थः । सम्भावितत्वमात्रेणार्थान्तरं शङ्कते—यदि सर्वेति । तर्हीति । प्रसिद्धाधिकरणस्थाल्यां सर्वकारकास्थितेः अनधिकरणत्वात् स्थाल्यां पचतीत्यसाधुः स्यादित्यर्थः । दोषान्तरं चाह—अधिकरणं चेति । सर्वकारकाधारस्याधिकरणत्वे साध्ये अधिकरणस्याप्यकारकत्वमवश्योपेयम् अन्यथा स्वस्मिन् स्वस्य अनवस्थाने सर्वशब्दानुपपत्तेरित्यर्थः । किञ्च यद्यपि पौर्णमास्यादिकालस्य स्वेतरसर्वकारकाधारता तथापि निष्क्रियत्वेन क्रियायोगाभावात् कारकतैव नास्ति दूरे तद्विशेषाधिकरणत्वमित्याह—निष्क्रियस्येति । दूष्यान्तरमुपादत्ते—कर्तुरिति । दूषयति—यदीति । यदि क्रियासिद्ध्यर्थं कर्तुर्यदिष्टं तत्कर्मेत्युच्यते तर्हि सर्वस्यापि कारकस्य क्रियासिद्ध्यर्थमिष्टत्वात् सर्वं कारकं कर्म स्यादित्यर्थः । ननु कर्तुः क्रियया यदाप्तुमिष्टतमं साध्यत्वेन अभिमतं तत्कर्मेति सूत्रार्थ इति शङ्कते—अथेति । तर्हीति । क्रियासाध्यस्य क्रियाफलत्वेन न कारकत्वं स्वर्गस्येवेति सम्प्रदानसूत्राक्षेपसमय एवोक्तमिति भावः । तथा युक्तं चानीप्सितमिति तु अनुशासनमनन्वितार्थत्वादयुक्तमित्याह—तथेति । कथमनन्वितार्थत्वमित्यत्राह—तमवर्थेति । तथाशब्दस्य प्रकृतावमर्शित्वात् तथायुक्तमिति तमवर्थयुक्तमेवोच्यते तच्च इप्सितमेवेति तस्यैवानीप्सितत्वोक्तिरनन्विनार्थैवेत्यर्थः । अकथितसूत्रमपि अभिमतार्थानवगमादयुक्तमित्याह—अकथितमिति ।

स्वतन्त्रः कर्तेति यत् कर्त्रनुशासनं स्वतन्त्रतया तत् स्वातन्त्र्यानिरूपणान्न युक्तमित्याशयेन दूष्यमनुभाषते—स्वतन्त्र इति । कथमनिरूपणमित्याशङ्क्य किं

म्रियते कूलं पतति इति कर्तृता न स्यात्। इच्छाया अभावात्। इच्छा-कर्तृता च पिपतिषतीति सुदूरम्। अथ यदधीनः कारकान्तरव्यापारः स्वतन्त्रः इति तर्हि अन्योन्याधीनव्यापारं कारकचक्रं सर्वमेव कर्तृ स्यात्। अथ यस्य धातुनोच्यते व्यापारः स कर्ता इति तथापि सर्व एव तथेति। अत एव काष्ठानि पचन्तीति प्रयोगः। अथ विवक्षया कर्तृता विवक्षानियमे हेत्वभावात् न कर्तृत्वव्यवस्थितिः। तथा प्रयोज्यास्थितेः तत्प्रयोजकास्थितिः। तथा अर्थोपपदक्रियोपाधयस्तु मिथः कारकनियामकाः। तथा अर्थोऽर्थान्तरसहितो नियामकः स्मृतः। अन्तर्धौ येनादर्शनमिच्छ-तीति व्यवधानार्थसहितोऽर्थः अदर्शनप्रतियोग्यपादानमित्युपाध्यायाद-न्तर्धत्ते, तथा उपपदसहितोऽर्थः नियामकः। क्रुधद्रुहोरुपसृष्टयोः कर्मेति यं प्रति कोप इति अनुवृत्तोऽर्थ उपसृष्टोपपदसहितः कर्मत्वहेतुः देवदत्त-मभिक्रुध्यतीति क्रियासहितोऽर्थो नियामकः।

भीत्रार्थानां भयहेतुरिति। भीत्रार्थक्रियासहितो यो भयहेतुः अर्थोऽ-

---

स्वेच्छया प्रवृत्तिर्यस्य स स्वतन्त्रः उत यदधीनः कारकान्तरव्यापारः स इति विकल्प्य प्रथमं पक्षमाह—यदीति। तर्हीति। जायमानस्य म्रियमाणस्य च जन्तोः पततश्च कूलस्य स्वेच्छातः प्रवृत्त्यभावात् स्वातन्त्र्याभावेनाकर्तृत्वात् जायते म्रियते कूलं पतति इति प्रयोगो न साधुः स्यादित्यर्थः। कूलं पिपतिषतीति यदिच्छायां कर्तृत्वं तदिच्छाया एवाभावात् दूरापेतमित्याह—इच्छेति। द्वितीयं पक्षमाह—अथेति। तर्हीति। अन्योन्याधीनव्यापारतया सर्वस्यापि कारकस्य कर्तृत्वा-पत्तिरित्यर्थः। धातूपात्तव्यापारः कर्तेति कर्तृलक्षणाङ्गीकारेपि पूर्वोक्तदोषा-पत्तिर्दुर्वारेत्याह—अथेति। प्रयोगदर्शनमपि सर्वेषां कर्तृत्वानुरूपमित्याह—अतएवेति। ननु विवक्षया कर्तृत्वनियमोऽस्त्विति शङ्कते—अथेति। दूषयति—विवक्षेति। विवक्षायां नियतकारणाभावान्न विवक्षातः कर्तृव्यवस्थितिः कर्तृनियमः प्रयोगस्य कारणत्वे शास्त्रस्य प्रामाण्यं दत्तजलाञ्जलिः स्यादिति भावः। अतएव तत्प्रयोजको हेतुश्चेति प्रयोजककर्त्रनुशासनमपि दुष्टम् तस्य कर्तुर्दुष्टत्वादित्याह—तथेति। अन्यान्यपि दूष्याण्यनुशासनान्यनुभावते तथेति। तदर्थं सोदाहरणमाह—दूषयितुम्-तथार्थ इति।

अन्तर्धाविति। अन्तर्धौ येनादर्शनमिच्छतीति व्यवधानार्थसहितः अदर्शन-प्रतियोग्यर्थोऽपादानं इत्यस्यार्थस्यार्थान्तरसहितस्य साधुत्वनियामकं उपाध्यायात् कुड्ये निलीयते इति। तथा उपपदसहितस्याप्यर्थस्यानियामकत्वं क्रुधद्रुहोरुप-

पादानता हेतुरिति वृश्चिकेभ्यो बिभेतीति। उपपदमर्थसहितमित्यस्यापि क्रुधद्रुहोरुपसृष्टयोरित्येतदेवोदाहरणं, क्रियासहितमित्यस्यापि। इदमेव क्रुधद्रुहक्रियासहितोपसर्गसहितोपपदमत्रास्ति। उपाधिरर्थनिसन्निहितेत्यत्र आख्यातोपयोगे इत्युदाहरणम्। नियमपूर्वकविद्याग्रहणोपाधिराख्यात्रर्थ-सहित आख्यातुरपादानताहेतुः उपाध्यायादधीत इति। प्रीयमाणोपाधिरपि रुच्यर्थक्रियासहितः सम्प्रदानताहेतुः। उपाधिरुपपदसहितः उपपदमुपपद-सहितमिति नोदाहृतः विस्तरभयात्। उदाहृतमध्येऽव्यक्तदोषं प्रत्युच्यते। यदि रुच्यर्थोच्चारणं तर्हि देवदत्ताय मोदकाः दीयन्तामिति न स्यात्। रुचिर्हि प्रीतिः। तद्धेतुत्वात् रुच्यर्था मोदकाः तदुच्चारणे तद्योग एवेयं

---

सृष्टयोः कर्मेति स्मृतम्। तत्र यद्यप्यत्र सूत्रे अर्थो न निर्दिष्टः तथापि पूर्वसूत्रादनु-वर्तमानो यं प्रति कोपः इत्येवंरूपोऽर्थः अत्रोपसृष्टोपपदसहितः उपसर्गान्वितः क्रुधद्रुहरूपोपपदसहितः कर्मत्वनियामकः अर्थसहितस्य क्रियासहितस्याप्युपपदस्य क्रुधद्रुहोरुपसृष्टयोः कर्मेति इदमेवोदाहरणम्। यं प्रति कोप इत्यस्य उपसर्गरूपो-पपदसहितत्वात् क्रुधद्रुहार्थक्रियासहितत्वाच्च। तथा आख्यातोपयोगे इति नियमपूर्वविद्याग्रहणरूपोपाधिराख्यात्रर्थसहित आख्यातुरपादानत्वे हेतुः। उपाध्या-यादधीत इति। तथा रुच्यर्थानां प्रीयमाण इति प्रीयमाणतोपाधिरपि रुच्यर्थक्रिया-सहितः सम्प्रदानत्वे हेतुः। देवदत्ताय मोदका रोचन्त इति। नन्वत्र ग्रन्थे उपाधेरुप-पदस्य उपपदसहितस्य वा नियामकत्वे किमिति पृथगुदाहरणं न प्रदर्शित-मित्यत्राह—उपाधिरिति। ग्रन्थविस्तरभयात् उदाहृतविषय एवानुद्घाटितमपि शिष्याः कथंनामोन्नयन्तामिति शिष्यव्युत्पत्त्यर्थं वा ग्रन्थे पृथङ्नोदाहरणमपि प्रदर्शितम्। यत्नात्तदुन्नयनमपि शक्यं उभयत्रापि क्रुधद्रुहोरुपसृष्टयोरित्येतदेवो-दाहरणं यं प्रतिकोप इत्यर्थस्यैत्र विवक्षयोपाधित्वे उपसृष्टक्रुधद्रुहोपपदसहितस्यैव नियामकत्वात् क्रियाया अपि विवक्षोपपदत्वात्। अत एव ग्रन्थे उपाधिः क्रिया-सहित इत्यत्र भीत्रार्थानां भयहेतुरित्युदाहरणं दत्तम्। तथोपसर्गरूपोपपदसहित-क्रुधद्रुहरूपोपदं कर्मत्वनियामकमित्यर्थः।

ननु सर्वेष सत्स्वपि रुच्यर्थसूत्रं भीत्रार्थसूत्रं च ग्रन्थे किमिति प्रत्युक्तमित्यत्राह—उदाहृतेति। रुच्यर्थसूत्रं तावदयुक्तम् प्रीयमाणतोपाधिर्हि रुच्यर्थोच्चारणमपेक्षते, किं वा रुच्यर्थधातूच्चारणं इत्यपेक्षणीयानिरूपणात् कस्मिन् सति किं स्यादित्य-त्राह—यदीति। तर्हि देवदत्ताय मोदका दीयन्तां इति प्रयोगो न स्यादित्यर्थः। तत्र हेतुः—रुचिर्हीति। रुचिर्नाम प्रीतिः तद्धेतुत्वान्मोदकानां रुचिप्रयोजनतया रुच्यर्था

चतुर्थीति दीयन्तामित्यनन्वयः स्यात् । दानानपेक्षचतुर्थ्यन्तस्य दानान्वयायोग्यत्वात् । अथ रुचेर्धातोरर्थो रुच्यर्थः तर्हि सोऽपि रुचिविषयमोदकाभिधानात् धीस्थ इति तद्योग एवेयं चतुर्थीति पूर्वपदानन्वय एव नोक्तदोषः । अथ रुच्यर्थधातूच्चारणात् तद्योगे चतुर्थीति नोक्तदोषप्रसंगः तर्हि देवदत्ताय मोदकाः किं रोचन्ते इति प्रश्नोत्तरानुपपत्तिः । देवदत्ताय मोदका इत्युक्ते किमिति प्रश्नः रोचन्ते इति चोत्तरं न स्यात् । देवदत्तायेति चतुर्थ्यन्तः रुचिधात्वनुच्चारणे हेत्वन्तरे चासति अपभ्रंशः । ततश्चार्थधीरभिप्रायवशात् । स च नोन्नीत इति प्रश्नाल्लक्ष्यत इत्यर्थधीरेव नास्तीति विशेषापेक्षया प्रश्नः । असति प्रश्ने तु कुत उत्तरम् । अथ उत्तरगतरुच्य-

---

मोदकाः तेषामुच्चारणे देवदत्ताय मोदका दीयन्तामित्यादिवाक्ये अतिसन्निहितत्वान्मोदकपदस्य तद्योग एव देवदत्तायेति चतुर्थीति समभिव्याहृतदीयन्तामित्यनेनान्वयो न स्यात् । देवदत्तायेति दानानपेक्षस्यचतुर्थ्यन्तस्य दानान्वयायोग्यत्वात् ।

आकाङ्क्षादिप्रसूतत्वादन्वयस्य, क्रियापेक्षात्वौत्सर्गिकत्वात् अस्तिभवतिभ्यामेव पूरणीया । अथ रुचेर्धातोरर्थ इति तत्प्रयोगे सम्प्रदानता देवदत्ताय मोदकादीयन्तामित्यत्र तु तदभावान्नोक्तदोष इति शङ्कते—अथेति । तर्हीति । विषयाधीनस्फूर्तिकत्वाद्रुच्यर्थस्य प्रीतेः रुचिविषयमोदकप्रयोगादेव तद्धीरिति सोऽपि प्रयुक्तप्राय एवेति तद्योग एवेयं चतुर्थीति पूर्ववदन्वयो दुर्वार इत्यर्थः । द्वितीयं पक्षमाशङ्कते—अथेति । रुचिरर्थो यस्य स रुच्यर्थः । रुचिधातुसमानार्थ इति यावत् । तस्योच्चारणे सति तद्योगे सम्प्रदानसंज्ञायां चतुर्थीति सूत्रार्थ इति नोक्तदोष इत्यर्थः । तर्हीति । देवदत्ताय मोदकाः किं रोचन्त इति लोके प्रसिद्धप्रश्नोत्तरानुपपत्तेः अयं पक्षो न युक्त इत्यर्थः। प्रश्नोत्तरे तद्विषयं च विविच्य दर्शयति देवदत्तायेति । देवदत्ताय मोदका इत्येतावन्मात्र उक्ते केनचित् अपरः पृच्छति किमिति । पूर्व उत्तरं ददाति रोचन्त इति । एवरूपे प्रश्नोत्तरे अनुपपन्ने इत्यर्थः। कथमित्यत्राह—

देवदत्तायेति । सर्वत्र प्रश्नः सामान्येनार्थेप्रतीते विशेषबुभुत्सया । अत्र च देवदत्ताय मोदकाः इत्येतावन्मात्रात् अर्थस्य प्रतीतिरेव नास्ति देवदत्तायेत्यस्य रुच्यर्थधातुयोगाभावे दानयोगादि हेत्वन्तराभावे च अपभ्रंशत्वात् । ननु अपभ्रंशत्वेपि अभिप्रायवशादर्थधीरस्त्वित्यत्राह— ततश्चेति । वक्त्रभिप्रायोऽपि नात्रविदित इति श्रोतुः प्रश्नाल्लक्ष्यते । अतोऽर्थधीरेव नास्तीति प्रश्नोऽनुपपन्न इत्यर्थः । नन्वेवमपि कथमुत्तरानुपपत्तिरित्यत्राह—असतीति । उत्तरवाक्यस्थरुच्यर्थधातूच्चारणापेक्षया

र्थधातूच्चारणापेक्षया चतुर्थी तर्हि ज्ञात उत्तरे न प्रश्नोत्तरे। अथ चतुर्थ्यसाधुत्वादेव प्रश्नः उत्तरं च साधुत्वार्थं तर्हि नार्थपरः प्रश्नः। न चोत्तरमर्थपरमिति रोचन्ते इति शब्दपरं इति नोत्तरं न तदन्वयीप्रश्नः इति प्रश्नोत्तरानुपपत्तिः[1]।

भयहेतुरपादानमुक्तं, सर्वकारकाधीना च भीतिरिति कर्त्रादिकमप्यपादानं स्यात् उपपदादियोगे कारकत्वाभावात् कारकाधिकारे तत्संज्ञा न स्यात्। एवं कर्मादेरनवस्थानात् तद्विषया विभक्त्यादयोऽनवस्थिताः। एवं वाक्यार्थधीपूर्विका साधुत्वधीः न वाक्यार्थबोधोपायः। वेदवाक्यार्थबोधोपायतया च वेदाङ्गतेष्टा स्मृतेः। साचानुपायत्वे न स्यात्। विभक्तिव्यत्ययस्मृतिश्च वाक्यार्थे स्मृतिविनाऽनवबुद्धेर्नान्यथेहि न स्मृतेः वाक्यार्थधीः स्यात्।

---

चतुर्थ्याः साधत्वादर्थप्रतीतिरिति शङ्कते—अथेति। तर्हीति। चतुर्थीसाधुत्वार्थमुत्तरे रुच्यर्थधातूच्चारणेऽवगते सति विशेषस्यापि ज्ञातत्वात् प्रश्नानुपपत्तौ रोचन्त इत्यस्योत्तरत्वमनुपपन्नमिति प्रश्नोत्तरानुपपत्तिरित्यर्थः।

ननु देवदत्ताय मोदका इत्येतावन्मात्र उक्ते देवदत्तायेत्यसाधुरय शब्दो भवता किमिति प्रयुक्त इति प्रश्नश्चतुर्थ्या असाधुत्वादेव। ततश्च रोचन्त इत्युत्तरमपि तत्साधुत्वार्थमेव। अतो नानुपपन्नं किञ्चिदिति शङ्कते—अथ चतुर्थीति। तर्हिनेति। एवं सति शब्दसाधुत्वार्थतया प्रश्नो नार्थपरः ततश्च रोचन्त इत्युत्तरमपि रुचिधातुरूपशब्दोच्चारणपरम् नार्थपरम्। ततश्च तन्नोत्तरम्। अर्थपरत्वेहि प्रश्ननिराकरणादुत्तरता। न च सकृच्छ्रुतस्य चतुर्थीसाधुत्वाय शब्दपरता प्रश्ननिराकरणार्थमर्थपरता च सम्भवति। तस्मात् चतुर्थीसाधुत्वार्थतया एतन्नोत्तरम्। अनुत्तरत्वे च न तदन्वयी प्रश्न इति प्रश्नोत्तरानुपपत्तिरित्यर्थः। तथा भयहेतुरूपोपाधेः भीत्रार्थक्रियासहितस्य अपादाननियामकत्वेऽतिप्रसङ्गमाह—भयहेतुरिति। किञ्चैवमादीनामुपपदविभक्तितया कारकत्वाभावात् कारकाधिकारे तत्प्रणयनमपि न युक्तमित्याह—उपपदेति। उक्तरीत्या कर्मत्वाद्यनवस्थाने तद्विषये विभक्त्यनुशासनमप्यनवस्थितार्थमेवेत्याह—एवं कर्मेति। किञ्च शाब्दस्मृतेः वेदवाक्यार्थोपायत्वमपि न स्यात् वाक्यार्थधीपूर्वकत्वात्साधुत्वनियमस्येत्याह—एवं वाक्यार्थेति। ननु माभूदुपायत्वं का हानिरित्यत्राह—वेदेति। ननु साधुत्वस्मृतेः वाक्यार्थधीपूर्वकत्वमेव कुत इत्यत्राह—विभक्तीति। तृतीया च होश्छन्दसीति विभक्तिव्यत्ययस्मृतिः। तथा

---

१. रासंभवः B

एवं कृतां कर्त्रादिषु स्मृतानां अनिरूपितार्थता। तिङां च कालादिरुपाधिः नार्थः। न चान्यतः कालादिधीरिति वर्तमानेऽर्थे वर्तमानाद्धातोः लडिति दुर्निरूपम्। भूते भविष्यति च यत् स्मृतं तदपि दुर्निरूपम्। महाभाष्ये पातञ्जल एवोक्तम्–नहि तिङोच्यन्ते कालादय इति। न धातुतः कालभेदधीः धात्वर्थस्य कालत्रयेपि तुल्यत्वात्। लिङादयोऽपि विध्यर्थादिषु दुर्निरूपाः। उपपदवशाच्च विधिप्रैषादिविभागो न लिङादेः। अतो लिङाद्यर्थता तेषां न स्यात्।

तद्धितसमासौ च समर्थवचनाद्दुर्निरूपौ। समर्थानां प्रथमाद्वा–इति तद्धितः। समर्थः पदविधिः–इति समासः। एकार्थान्वयिता च सामर्थ्यम्। तल्लक्षयितुं च तद्धितसमासभेदस्मृतिः। सामर्थ्येन च तौ लक्ष्येते। सति सामर्थ्ये तयोः प्रयोगः। तयोश्च प्रयोगे सति सामर्थ्यं इत्यन्योन्याश्रयः। असमर्थसमाससमर्थतद्धितानुत्पत्त्योः लक्षणाऽसिद्धयोः प्रयोगवशादुपगमे स्मृतेरनियामकतैव। असमर्थसमासः अश्राद्धभोजीति भुजिना नञोऽन्वयः

---

कर्त्राद्यनिरूपणे तदर्थतया कृत्प्रत्ययानुशासनमपि अनिरूपितार्थमेवेत्याह—एवमिति। तथा वर्तमाने लडिति लकारानुशासनमपि दुर्निरूपम् वर्तमानादेरप्रतीतेः वर्तमानत्वादि हि उपाधिरेव। नार्थः। न चोपाधिरूपकालधीरन्यतः। अतस्तदादेशरूपतिङनुशासनमपि अयुक्तमेव। तदाह—तिङामिति। कालो ह्यर्थउपाधिरेव तिङ्प्रत्ययेन नोच्यत इति केनवोक्तमित्यत्राह—महाभाष्य इति। ननु तिङा नोच्यन्तां धातुत एव कालविशेषधीरस्तु इत्यत्राह—न चेति। तत्र हेतुः–धात्वर्थस्येति। तथाविध्याद्यर्थतया लिङाद्यनुशासनमपि अयुक्तम्। प्रैषादिविभागस्य उपपदादिनैवावगतेः लिङाद्यर्थत्वायोगात् इत्याह – लिङादयोऽपीति।

तथा तद्धितसमासानुशासनमप्ययुक्तमित्याह—तद्धितसमासाविति। ननु तद्धितसमासयोः कथं समर्थवचनता–तत्राह—समर्थानामिति। ननु भवत्वेवं समर्थवचनं तथापि कथं ततस्तयोः दुर्निरूपतेत्यत्राह—एकार्थेति। सामर्थ्यं चैकार्थान्वयित्वम्। तदवगमयितुं च तद्धितविशेषः समासविशेषश्च स्मृतः। 'सामर्थ्येन च तद्धितसमासौ लक्ष्येते। ततः किमित्यत्राह—सतीति। अन्यो याश्रयापत्तेर्दुर्निरूपतेत्यर्थः। एवमसमर्थसमासोपसङ्ख्यानं समर्थाच्च तद्धितानुत्पत्तिः प्रयोगादेवोपेयेति प्रयोगस्यैव नियाम ःत्वात् शाब्दस्मृतिरनियामिकैवेत्याह—असमर्थेति। एतदेव सोदाहरणं

---

१. B लिङर्थस्य।

श्राद्धेन च समासः। दधिघट इति दध्नापूर्णो घट इत्यन्वयः। अत्र दध्नः पूर्णेन घटेन च समासः। गोरथ इति गोभिर्युक्तो रथ इत्यन्वयः। अत्र गोः युक्तेन रथेन च समासः। समर्थात्तद्धितानुत्पत्तिः अङ्गुल्या खनतीति 'तेन दीव्यति खनति' इति ठकोऽनुत्पत्तिः वृक्षमूलादागत इति तत आगत इति प्राग्दीव्यतीयाणः अनुत्पत्तिः।

अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति यदि कार्यमर्थवत्त्वं तर्हि सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते, शब्दशास्त्रेण धर्मिनियम इति वार्तिकहानम्। अथ औत्पत्तिकमर्थवत्त्वमुपायः साधुताप्यौत्पत्तिकार्थतैवेति उपेयमेवोपायः स्यात्। उपायादुपेयं उपेयादुपायमित्यन्योन्याश्रयः स्यात्। प्रातिपदिकानिर्णये च तन्निबन्धनस्वरकार्यप्रत्ययादिः न स्यात्।

अधातुरप्रत्यय इति च अवयवातिरेकः। अर्थवच्छब्दरूपं धातुप्रत्ययव्यतिरिक्तं प्रातिपदिकसंज्ञमिति सूत्रार्थः। अत्र चान्ताश्रुतेः न प्रत्ययान्तव्युदासः। न च विशेषणेनाप्रत्ययेनविधिः। यतः येन विधिः तदन्तस्येत्यन्ततालाभः। नहि अर्थवद्विशेषणं पुंलिङ्गात् स्वपरत्वसम्भवे अन्यपरत्वानुपपत्तेः। अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति

---

प्रपञ्चयति—असमर्थेति। प्रातिपदिकानुशासनं दूषयितुमनुभाषते—अर्थवदिति। अर्थवत् प्रातिपदिकमित्यत्र अर्थवत्त्वं किं कार्यमुत औत्पत्तिकं नित्यमेवेति विकल्प्य प्रथमं पक्षं दूषयति—यदीति। अनादिवृद्धपरम्परासिद्धः शब्दार्थसम्बन्ध इति वदत् कात्यायनवार्तिकं हेयं स्यादित्यर्थः। द्वितीयमनुभाष्य दूषयति—अथेति। साधुत्वं नाम औत्पत्तिकार्थवत्त्वं अर्थवत्त्वेनैव साधुत्वनियमे उपेयस्यैवोपायता स्यात् ततश्च को दोष इत्यत्राह—उपेयमिति। यद्यप्यर्थवत्त्वादेवार्थवत्त्वमित्यात्माश्रयता तथापि तस्योपायोपेयभावभेदेन तद्रूपविवक्षया अन्योन्याश्रयतेति भावः। प्रातिपदिकानिरूपणेनैव तन्निबन्धनस्वर उदात्तादिः कार्यं आदेशादिः प्रत्ययः स्वादिः ते न भवेयुरित्याह—प्रातिपदिकेति। एवमर्थवत्सूत्रं समुदायेन दूषयित्वा अवयवशो दूषयति—अधातुरिति। अवयवातिरेकमुपपादयितुं सूत्रार्थं दर्शयति—अर्थवदिति। ननु प्रत्ययान्तपर्युदासः किमिति न भवतीत्यत्राह—किमिति। अन्तशब्दाश्रवणेपि येनविधिस्तदन्तस्येति परिभाषाबलात् अन्तलाभोऽस्तु तत्राह—न चेति। तत्र हेतुः—न हीति। पुंलिङ्गसामर्थ्यतः स्वपरत्वसम्भवे विशेषणत्वेनान्यपरत्वायोगादित्यर्थः। इतोऽपि

---

१. R अन्यविशेषणत्वायोगः।

सुप्तिङन्तं पदमिति ज्ञापितम्। संज्ञाविधिरेवाप्रत्यय इति न संज्ञाप्रतिषेधः। एकवाक्यतया पर्युदासोऽयं विधिशेषः। वृत्तिकारोऽप्याह—पूर्वसूत्रे अप्रत्यय इति पर्युदासात् कृदन्तस्य तद्धितान्तस्य चानेन संज्ञाविधिरिति कृत्तद्धितसूत्रे वदन्।

ननु प्रत्ययान्तपर्युदासे प्रत्ययान्तनिवृत्तेः कृदन्ततद्धितान्तयोः[1] संज्ञाविधिप्रतिप्रसवो भवेत्। इमामेवाशङ्कामपनेतुमुक्तं यदि कृत्तद्धित-सूत्रे[2] संज्ञाविधिः तदा पूर्वसूत्रे अप्रत्यय इति व्यर्थः। प्रत्ययविशेषनियमेन प्रत्ययान्तरनिवृत्तेः। कृतं चाप्रत्यय इति। तेन जानीमः कृदन्ततद्धि-तान्तयोः संज्ञाविधिरिति। ये च प्रत्ययान्तस्य निषेधमाहुः तन्मते प्रत्ययमात्रस्य च संज्ञा दुर्निवारा। एवं स्थिते सूत्रार्थे अधातुरप्रत्यय इति व्यर्थम्। यदि प्रातिपदिकार्थवत्त्वेन संज्ञानिवृत्त्यर्थं; तर्हि वाक्यस्य स्यात्। समासग्रहणान्निवृत्तिरिति चेत् अर्थवत्त्वेनैव समासस्यापि

---

न पारिभाषिकान्तलाभ इत्याह—अन्यत्रेति। ननु अप्रत्यय इति संज्ञाप्रतिषेधोऽयम् न संज्ञाविधिः येन ज्ञापकबलादन्तलाभ इत्यत्राह—संज्ञेति। सम्भवदेकवाक्यता-बलात् पर्युदासोऽयं प्रसज्यप्रतिषेधे वाक्यभेदापत्तेः। अतः संज्ञाविधित्वे सति ज्ञापकान्न पारिभाषिकान्तलाभ इत्यर्थः। तद्व्याख्यातृभिरपि पर्युदास एवोक्त इत्याह—वृत्तीति।

ननु कृत्तद्धितसूत्रे कृदन्तस्य तद्धितान्तस्य च संज्ञाविधिः। पूर्वसूत्रे अप्रत्यय इति प्रत्ययान्तनिषेधे सति प्रतिप्रसवतया युज्यते नान्यथेति चोदयति—नन्विति। परिहरति—मैवमिति अप्रत्यय इति। पूर्वसूत्र इत्यादिवृत्तिकारेणेति शेषः। नन्वप्रत्यय इति पूर्वसूत्रे ( इत्यादि ) प्रत्ययमात्रपर्युदासे उत्तरसूत्रेऽपि कृत्तद्धित-प्रत्ययमात्रस्य प्रतिप्रसवः स्यादित्यत्राह—यदीति। तथा च पूर्वसूत्रे अप्रत्यय इति व्यर्थं स्यादित्यर्थः। कथं वैयर्थ्यमित्यत्राह—प्रत्ययेति। प्रत्ययमात्रपर्युदासेऽपि कृत्तद्धित-सूत्रे कृत्तद्धितान्तयोः संज्ञाविधिरित्यप्रत्ययग्रहणात् ज्ञायत इत्यर्थः। प्रत्ययान्त-निषेध इति वदतामनिष्टमाह—ये चेति। प्रत्ययान्तस्य संज्ञानिवृत्तिस्तु कृदन्त-तद्धितान्तरूपप्रत्ययान्तस्य संज्ञानियमादेव सिद्धेति भावः। एवं सूत्रार्थं विशदीकृत्य दूषयति—एवं स्थित इति।

---

१. प्रतिप्रसवतयापि धीर्युज्यते नान्यथा। मैवं यदि प्रत्ययपर्युदासः तदा अप्रत्यय इति व्यर्थम्–B.
२. प्रत्ययसूत्रे–m.

संज्ञाप्राप्तौ नियमो वाक्यनिवृत्त्यर्थः। तर्हि धातुप्रत्यययोरपि निवृत्तिरस्तु। अथ एकार्थस्य वाक्यस्यैव निवृत्तिः समानजातीयस्य, न धातुप्रत्यययोः, तर्हि वाक्यस्यापि समासादन्यार्थस्य न निवृत्तिः।

विभाषासूत्रं विकल्पार्थं न कार्यम्। समासविधौ ततोऽन्यार्थतया वाक्यानिवृत्तेः व्यर्थमिति कात्यायनोक्तेः। अथ कात्यायनानादरात् अर्थवत्समुदायतया सजातीयवाक्यनिवृत्तौ विभाषेत्यनेन विकल्पः तर्हि प्रातिस्विकार्थभेदेपि अर्थवत्तया सजातीयधातुप्रत्ययनिवृत्तिः यथा अर्थवत्समुदायमात्रतया सजातीयकृदन्ततद्धितान्तनिवृत्तिः माभूदिति कृत्तद्धितग्रहणं कृदन्ततद्धितान्तपरम्। एवं च समासग्रहणात् वाक्यस्येव

---

ननु अन्वयव्यतिरेकगम्यप्रातिस्विकार्थवत्तया धातुप्रत्यययोः प्रातिपदिकसंज्ञाप्रसक्तौ तन्निवृत्त्यर्थतया न व्यर्थतेति शङ्कते—यदीति तर्हीति। वाक्यस्यापि संज्ञापत्तेर्न प्रातिस्विकार्थनिबन्धना संज्ञेत्यर्थः। समासग्रहणबलात् वाक्यस्य संज्ञानिर्वृत्ति शङ्कते—समासेति। कथं तद्ग्रहणात्तन्निवृत्तिरित्यत्राह—अर्थवत्त्वेनेति। दूषयति—तर्हीति। समासग्रहणादेव धातुप्रत्यययोरपि संज्ञानिवृत्तिरस्तीत्यर्थः। ननु समासग्रहणादेकार्थत्वेन समानजानीयस्य वाक्यस्यैव निवृत्तिर्न विजातीययोर्धातुप्रत्यययोरिति शङ्कते—अथेति। तर्हीति। वाक्यस्यापि समासाद्भिन्नार्थतया निवृत्तिर्न स्यादित्यर्थः। केन वोक्तं भिन्नार्थत्वमित्यत्राह—विभाषेति। नन्वसद्वादित्वात् कात्यानस्य तदनादरादर्थवत्समुदायतया सजातीयस्य वाक्यस्य निवृत्तिः। तस्यां च नियमेन प्रसज्यमानायां महाविभाषासूत्रे विकल्पः क्रियत इति शंकते—अथेति। तर्हीति। यद्यपि धातुप्रत्यययोः समासस्य च प्रातिस्विकार्थभेदस्तथापि अर्थवत्तामात्रेण सजातीयतया धातुप्रत्यययोरपि समासग्रहणान्निवृत्तिर्युक्ता। न चैवं जातिक्रियागुणद्रव्यवाचिनां निवृत्तिः अर्थवत्सूत्रस्य निर्विषयत्वापत्तेः। अर्थवत्त्वेन प्राप्तसंज्ञायाः प्रतिषेधे प्रयोगासिद्धानिष्टविषये नियमान्निवर्त्यत्वान्नानिर्दिष्टार्थशास्त्रप्रवृत्तिरिति शब्दानां नियमादित्यर्थः। अत्र अन्तरङ्गमपि साजात्यं विहाय बहिरङ्गं साजात्यं सिद्धान्तिनाप्यवश्योपेयमित्याह—यथेति। यथा वाक्यसमासयोरर्थवत्पदसमुदायात्मकमन्तरङ्गं साजात्यं विहायार्थवत्समुदायमात्रात् सजातीयकृदन्ततद्धितान्तनिवृत्तिर्मा भूदिति कृत्तद्धितग्रहणम् अन्यथातिरिच्येत समासग्रहणान्निवृत्त्ययोगात्। न च कृत्तद्धितग्रहणं कृन्मात्रतद्धितमात्रपरम् किन्तु तदन्तपरम् कृदन्तस्य तद्धितान्तस्य चेति वृत्तिकारेणाभिधानात्। तथा च समासग्रहणाद्वाक्यस्येव धातुप्रत्यययोरप्यर्थवत्तया साजात्यान्निवृत्तिसिद्धेः। अधातुरप्रत्यय इत्यवयवातिरेक

धातुप्रत्यययोरपि निवृत्तेः अधातुरप्रत्यय इति अवयवातिरेकः दुरुक्तानुक्तोद्वेदश्च व्याख्यातृणाम्। स्मृतेः न नियमो युक्तः। स्मृतितः साधुत्वे दुरुक्तानुक्तता कुतो ज्ञेया। न च मात्रावर्णाधिक्यमिष्टार्थवाचि। [1]ततः [2]इष्टार्थाग्रहणान्न स्मृतितो नियमः। छन्दसि विशेषाभिधानं अप्रसिद्धे वेदार्थे व्यर्थम्। न्यायतः प्रसिद्धौ सुतराम्। स्मर्तॄणां च अन्योन्यविरुद्धार्थनिबन्धनात् न स्मृतेर्नियमः।

यत्तु लक्षणसङ्गतमप्यप्रयोगान्न साध्विति तत् अतिव्यापकं लक्षणादज्ञात्वा मूलप्रयोगे स्मर्तॄणाम्। आकृतिगणोक्तिश्च प्रयोगधीपूर्विकैव। बहुलग्रहणाच्च स्वेच्छाप्रचारः प्रयोगाधीन एव। एवं च स्मृतेरनादिप्रयोगनियमोपगमात् उपगतमज्ञत्वं स्वीयं मीमांसकैः। एवं च सन्मार्गानुसारिलोको मोहितः। अथ वा लोको वा श्रद्धया स्वयं मूर्खः। यश्चायं

---

एवेत्यर्थः। तथा दुरुक्तानुक्तपरीक्षणं च तद्व्याख्यातृभिरेव क्रियते तदपि प्रयोगादेव साधुत्वनियमे घटते न स्मृतेः। स्मृतितस्साधुत्वे हि यावदेव स्मृतिराह तावदेव साधु अतो दुरुक्तानुक्तता कुतो ज्ञेया तदाह—दुरुक्तेति। अवाचकमात्रावर्णाधिक्यादिष्टाग्रहणे लक्षणस्याव्यापकत्वकथनमपि स्मृतितो नियमाभावं सूचयतीत्याह—न चेति। तथा छन्दसि विशेषभिधानं च लोकतोऽप्रसिद्धे वेदार्थे न शक्यमिति व्यर्थमित्याह—छन्दसीति। ननु न्यायबलेन वेदार्थमवगम्य तदर्थपरत्वेन छन्दसि विशेषाभिधानं युज्यत इत्यत्राह—न्यायत इति। तथा प्रातिशाख्यस्मर्तॄणां परस्परविरुद्धार्थनिबन्धनान्न स्मृतितो नियम इत्याह—स्मर्तॄणां चेति। यदपि व्याख्यातृवचनं स्मृतमप्यप्रयोगान्न साध्विति तदपि सूत्रकृतो मूलप्रयोगाज्ञानं गमयतीत्याह—यत्त्विति। आकृतिगणाभिधानं बहुलग्रहणं च न स्मृतितो नियमः किन्तु प्रयोगादेवेति सूचयतीत्याह—आकृतीति। एवं स्मृतेरनियतार्थत्वं प्रसाध्य पूर्वपक्षी सिद्धान्तिनमुपहसति—एवं चेति। स्मृतेः साधुत्वनियमनशक्त्यभावात् तदधीनं गवादिशब्दानां अनादित्वमभ्युपगच्छद्भिर्मीमांसकैः सिद्धान्तिभिः स्वीयमज्ञत्वमेवोपगतमित्यर्थः। न केवलमेतावदेव लोकोऽपि तैर्व्यामोहित इत्याह—एवं चेति। अनिर्णीतपदपदार्थाद्वेदात् अनुष्ठेयार्थज्ञानमिति वदद्भिः तैः सदाचारानुवर्तिनो विप्रलब्धा इत्यर्थः।

यद्वा विप्रलम्भकान् मीमांसकान् आप्तान्मत्वा तदनुसारिलोक एव वा हास्य इत्याह—अथवेति। नन्वेवं पाणिनिस्मृतेरनियतार्थत्वेपि अन्यत आपिशलादिस्मृतेर्नियमोऽस्त्वित्यत्राह—यश्चेति। एवमनियतार्थत्वमभ्युच्चययुक्ति प्रसाध्य मूलयुक्ति-

---

१. M यतः २. M इष्टार्थग्रह

पाणिनीयस्मृतेः दोषः सोऽन्यस्यापिशलादिस्मृतेरपि, धातुसंज्ञाद्युपाय-तुल्यत्वात् । एवं स्वतोऽशक्ता स्मृतिः अमूला च । स्मर्तृभिः प्रयोग-तौल्यात् कुतः साध्वसाधुविवेकोऽवगतः ? स्मृत्यन्तरपरम्परात इति चेन्न, अन्धपरम्परापत्तेः । मूलमानशून्यत्वाद्विभागस्य मूलिन एव।नियतार्थत्वे निर्विषया मूलचिन्तापि इत्यास्तां तावत् मूलचिन्तेत्युक्तम् । तावच्छब्दा-न्मूलचिन्तापि मता तथाप्यमूलतैव ।

राद्धान्तस्तु—आस्तां तावत् स्मृतेरनियतार्थत्वं सुपरिहरम् । [1]अमूलत्वं तु दुस्समाधेयम् । [2]असमाहिते तस्मिन् निष्फलमनियतार्थत्वं[3] [4]समाहित-[5]मपीत्यमूलत्वं पूर्वं निरस्यते । आदिमतापि व्यवहारः सिद्ध्यतीति ।

सत्यं, गाव्यादौ परम्परानादिरित्युक्तम् । या च स्वव्यवहारार्था संज्ञा परिभाषा वा तत्रादिमत्ता स्मृतेः । यथा आदैचोर्वृद्धिसंज्ञा । या

---

मुपपादयितुमुपक्रममाणः तां प्रस्तौति—एवं स्वतः इति । कथं मूलत्वमित्यत्राह—स्मर्तृभिरिति । स्मृतिप्रणेतृभिः गोशब्दः सास्नादिमति साधुः गावीशब्दोऽसाधु-रित्येवमयं विवेकः कुतोऽवगतः ? किमनादिप्रयोगात् किंवा स्मृत्यन्तरपरम्परातः ? नाद्यः इत्याह—प्रयोगेति । अनादिप्रयोगस्य गाव्यादौ तुल्यत्वात् न तन्मूलं स्मृति-प्रणयनमित्यर्थः । द्वितीयं पक्षमाह—स्मृत्यन्तरेति । नेति । साध्वसाधुविभागस्य मूलप्रमाणशून्यत्वात् स्मृतिपरम्पराया अन्धपरम्परासाम्यापत्तेर्मूलत्वानर्हता स्यादि-त्यर्थः । ननु ग्रन्थे आस्तां तावत् मूलचिन्तेत्यभिधानात् मूलचिन्ताऽनभिमतेव लक्ष्यते । तत्कथमित्यत्राह—मूलिन इति । अनियतार्थत्वप्राधान्यविवक्षया तदुक्तिः न पुनर्मूलस्याचिन्त्यतया मूलचिन्तापि तावच्छब्दादभिमतेति लक्ष्यते । तन्मूलं चिन्त्यमानमपि नास्ति एतयोक्तयुक्त्येति भावः ।

राद्धान्तस्त्विति । स्मृतेरनियतार्थत्वशङ्कानिरसनादपि पूर्वं निर्मूलत्वशङ्कानिरसन-मेवावश्यवाच्यमिति तदेव यथाग्रन्थमुच्यते । स्यादेवं निर्मूलतया शाब्दस्मृतिरप्रमाणं यद्यादिमता व्यवहारो न सिद्ध्येत् इह तु सिद्ध्यत्येवादिमतापि शब्देन व्यवहारः अतो गाव्यादिशब्दानामादिमत्तावगमात् गवादीनान्त्वनादित्वमेव । तन्नियमार्था स्मृतिरपि समूलैवेत्यर्थः । पूर्वपक्षी चोदयति—सत्यमिति । सत्यमादिमतापि व्यवहार-स्सिद्ध्यतीति गाव्यादौ तु नादिमत्ता सम्भवति । अनादिवृद्धव्यवहारपरम्परासिद्ध-त्वादित्यर्थः । नन्वेवं ( वाक्याप्त्या ) आदिमतापि व्यवहारो न स्यादित्यत्राह—याचेति । यत्रैवं संज्ञापरिभाषादावादिमत्ता स्मृतितः कस्यचित् स्वसंव्यवहारार्था

---

१. R मूलत्वं २. R समाहिते ३. R नियतार्थत्वं ४. A साधित ५. समाहितमेवे

संज्ञिन उपाध्यन्तरापेक्षा संज्ञा सा परिभाषा । यथा कर्मधारयशब्दवाच्यत्वे तत्पुरुषस्य समानाधिकरणता उपाधिः । अथ आदिमत्ताऽस्मृतावपि विष्णूच्चारणेच्छोरशक्तस्य विण्णूच्चारणवत् सामान्यतो दृष्ट्या गाव्यादि अशक्तिजमिति । तन्न । स्मर्यमाणप्रभवं हि व्यवहाराङ्गं अशक्तिजत्वेन व्याप्तं दृष्टं न तथा गाव्यादीति न तेनेदं तुल्यम् । उपगतानादित्व-गवादिना अनेकान्तं च । तत्राप्यशक्तिजत्वापत्तौ इष्टविघातलक्षण-विरुद्धता च ।

अथ स्मृतेरसम्भावितमूलतानिरासायाशक्तिजत्वदर्शनमुक्तम्, अन्यायो ह्यनेकशब्दानामेकस्मिन्नर्थे सम्भाव्यमानशक्तिजत्वानां सदृशानामना-

---

तत्रैव परमादिमत्ता कर्तृस्मृतेः न पुनरनादिव्यवहारसिद्धगाव्यादावित्यर्थः । संज्ञा-परिभाषे विविच्य दर्शयति—यथेति । यद्यपि वृद्धिसंज्ञाकर्मधारयसंज्ञयोः संज्ञात्वे भेदो नास्ति तथापि संज्ञिन उपाध्यन्तरापेक्षसंज्ञात्वेन भेदं विवक्षित्वा ग्रन्थे संज्ञापरि-भाषेति भेदोक्तिरित्यर्थः । आदिमत्तायामस्मृतायामपि सामान्यतो दृष्ट्या गाव्या-देरादिमत्त्वं साध्यते गाव्याद्यादिमद्व्यवहाराङ्गत्वात् विष्णशब्दवदिति शङ्कले-अथेति । सामान्यतो दर्शनमेवाह—विष्णूच्चारणेति । यथा बालानामपटुकरणानां विष्णू-च्चारणेच्छनामपि अशक्त्या विण्णच्चारणमद्यत्वेपि दृश्यते तथा गोशब्दोच्चारणे-च्छोरपि अशक्त्या गाव्याद्युच्चारणमशक्तिजमित्यर्थः ।

तन्नेति । यद्यदशक्तिजं व्यवहाराङ्गमुच्चारणं तत्सर्वं स्मर्यमाणकरण-तयैवाशक्तिजत्वनियतं दृष्टं गाव्यादिषु तु न तथेति न विष्ण्वादिना तुल्यमित्यर्थः । अनैकान्तिकत्वादपि नायं हेतुरित्याह—उपगतेति । यो गवादिशब्दो भवद्भिरनादि-रङ्गीकृतः तत्रापि हेतोर्वृत्तेरनैकान्तिकमित्यर्थः। तथा इष्टविघातित्वलक्षणा विरुद्ध-तापि हेतोरित्यत्राह—तत्रेति । अत्र गवादौ । पुनश्शङ्कते—अथेति । स्यादेवं यद्य-शक्तिजविष्ण्वादिदर्शनात् गाव्यादेरशक्तिजत्वमुच्यते । किन्तु स्मृतेरशक्तिजत्व-दर्शनं तु तस्याः स्मृतेरसम्भावितमूलताशङ्कानिरासायोक्तमित्यर्थः । कथं स्मर्तॄणां गाव्यादेरादिमत्त्वनिश्चय इत्यत्राह—अन्यायो हीति । एकस्मिन्नर्थे एकशब्दोऽनादिः नानेकः । अन्यथाऽनेकशक्तिकल्पनागौरवापत्तेः । अतः अनेकशब्दानामेकस्मिन्नर्थे अनादित्वमन्याय्यमित्यर्थः । नन्वेवं हस्तकरादीनामेकस्मिन्नर्थेऽनादित्वमन्याय्य-मित्यत्राह—सम्भाव्यमानेति । अन्यथोपपत्त्यसम्भवे हि अनेकशक्तितापि युक्ता हस्तकरादौ । इह तु गाव्यादौ सम्भाव्यमानाशक्तिजत्वेनान्यथोपपत्तिरित्यर्थः । ननु कथमशक्तिजत्वसम्भावनेत्यत्राह—सदृशानामिति । नन्वसदृशे कथमशक्ति-

दित्वम् । अशक्तिप्रकर्षाच्च असदृशोऽपि अशक्तिजोऽन्यत्वे । यथा देवदत्तोच्चारणादिप्रयत्नेनाभिनुन्नमिति[1] । क्वचिद्विभक्तेरनन्यत्वमशक्तिजम्[2] । अश्मकेभ्य आगत इति वाच्ये अश्मकेनिर्गत इति । अतः कथञ्चिदभिप्रायावगतेरर्थधीर्वृद्धस्य । तां दृष्ट्वा व्युत्पित्सोः उच्चरितादर्थधीरिति भ्रमः । तत्प्रभवोऽपभ्रंशव्यवहार इति नामूला स्मृतिः । नियतार्था च अव्यापकत्वातिव्यापकत्वे सूत्रस्मृतेः वृत्तिवार्तिकभाष्यैः कथञ्चित् समर्थिते । तेन सर्वाभियुक्तस्मृत्यनुसारात् शक्यं नियतार्थत्वं विस्तरभयान्नोक्तमिति ।

---

जत्वमित्यत्राह—अशक्तिप्रकर्षादिति ।

नानाविधत्वादशक्तेः नैकप्रकारमशक्तिजत्वमित्याह—क्वचिदिति । नन्वशक्तिजत्वे यन्नरोपज्ञमशक्तिजपदं तदवधिकम् एव तेन व्यवहारः स्यात् नानुवर्तेतेत्यत्राह—अतः कथञ्चिदिति । ततोऽशक्तिजादप्यपभ्रंशात् प्रयोजकवृद्धप्रयुक्तात् अर्थप्रकरणादिना वक्तुः कथञ्चिदभिप्रायमवगम्य प्रयोज्यवृद्धस्यार्थधीः तत्पूर्वकश्च हानोपादानादिव्यवहारः तांधियं दृष्ट्वा पार्श्वस्थस्य व्युत्पित्सुद्वयस्य उच्चरिताच्छब्दादेवार्थधीर्वृद्धस्येति भ्रमः । तद्भ्रममूलो व्युत्पित्सुद्वयकारितोऽपभ्रंश व्यवहारः तन्मूलकश्चापर इति आदिमत्ताव्यवहारानुवृत्तिर्युक्तेति नामूला स्मृतिरित्यर्थः । ननु समूलत्वेऽप्यनियतार्थतया न स्मृतितो नियम इत्यत्राह—नियतेति । सूत्ररूपत्वेन स्मृतेः संक्षेपत्वात् व्याख्यानादेव तदर्थावगतिः शक्येति तद्व्याख्यातृभाष्यकारादिवाक्यैरव्यापकत्वातिव्यापकत्वयोः कथञ्चित् समर्थितत्वादित्यर्थः । ननु भाष्यकारादेः अर्वाचीनतया कथं तद्वाक्यान्नियम इत्यत्राह—तेनेति । भाष्यकारादीनामपि यद्वाक्यं तदपि स्मरणमेव न केवलं सूत्रकारस्य, त्रिमुनित्वात् व्याकरणस्य । तदनुसारित्वाच्च वृत्तिकारस्य । तेन सर्वाभियुक्तवचनानुसारात् शाब्दस्मृतेर्नियतार्थत्वं शक्यमित्यर्थः । ननु किमिति तन्नियतार्थत्वं ग्रन्थकारेण नोक्तमित्यत्राह—विस्तरेति । तद्भयादेव भवनाथेनापि नोक्तम् । तत एवास्माभिरपि नोच्यते ।

पूर्वपक्षी दूषयति—न स्मृतितोऽशक्तिजत्वं शक्यमवगन्तुम् । गाव्यादि तु अशक्तिजमित्येवमभिधायिन्याः स्मृतेः व्याकरणे सर्वत्रादर्शनादित्यर्थः । ननु गवादयो नाशक्तिजा इति स्मृतेः तदितरत् गाव्यादि अशक्तिजमित्यवगम्यत एव । यद्यपि गवाद्यनादित्वस्मृतेः तदनादित्वमात्रे शक्तिः नेतरेषामादिमत्त्वेपि तथापि

---

१. A अद्रितुन्नमिति   २. B भक्त्यन्य

तन्न । न हि स्मृतिः अशक्तिजं गाव्यादीत्याह । अथ गवाद्यनादितास्मृतेः तदितरदर्थादशक्तिजं गाव्यादि इति । औत्पत्तिकं गवादेः सास्नादिमदर्थबोधकत्वं स्मृतं तदनिदंप्रथममित्यनादि । एवं गाव्यादिकमपि वृद्धव्यवहारादनाद्यस्तु । अथ व्यर्था स्मृतिः माभूदिति स्मृतिनिबद्धेतरत् गाव्यादि [आदिमत्] तन्न । यद्यादिमतः आदिमत्तामाह स्मृतिः तदाऽसौ नैवानादिपरम्परानुवृत्ता । आदिमद्विषयत्वात् आदिमद्दर्शनमूला वाच्या यतः । किञ्च गौणलाक्षणिकयोः वाच्यपूर्वकत्वयोगादादिमत्ता स्यात् । तदर्थता च वैदिकपदस्य न स्यात् । अथ वाच्यपूर्वकमपि अनादि

---

अर्थादवगम्यत एवेति शङ्कते—अथेति । दूषयति—औत्पत्तिकमिति । न हि स्मृतिः साक्षाद्गवादीनामनादित्वमाचष्टे किन्तु गवादिशब्दानां नित्यं सास्नादिमदाद्यर्थबोधकत्वं दृष्टं स्मृतम् तदनिदंप्रथममित्यनादि अनादिस्मृतिनिबद्धत्वात् । ततः किमित्यत्राह—एवमिति । यथा स्मृतिबलाद्गवादेरनादिता एवमनादिवृद्धव्यवहारपरम्पराबलात् गाव्यादिकमप्यनाद्यस्तु को दोष इत्यर्थः । ननु यदि स्मृतिनिबद्धेतरत् गाव्यादिकमप्यनादिवृद्धव्यवहारात् साधु तर्हि तत एव गवादीनामप्यनादितासिद्धेस्तेषां स्मृतिनिबन्धनं व्यर्थं स्यात् । अतः तद्वैयर्थ्यपरिहाराय स्मृतिनिबद्धेतरत् गाव्यादिकं आदिमदेव । व्यवहारस्त्वादिमतापि सम्भवतीत्युक्तमिति शङ्कते—अथ व्यर्थेति ।

तन्नेति । यदि स्मृतिवैयर्थ्यपरिहारान्यथानुपपत्त्या स्मृतेरादिमतो गाव्यादेरादिमत्तायामपि तात्पर्यं तदा स्मृतेरप्यादिमद्विषयत्वेनादिमद्दर्शनमूलत्वेन आदिमत्त्वापत्तिः । न च स्मर्तॄणां गाव्यादेरादिमत्त्वनिश्चये कारणमप्यस्ति येन स्मृतेरादिमत आदिमत्त्वे तात्पर्यं स्यात् व्यवहारस्य गवादिना तुल्यत्वात् । स्मृत्यन्तरालम्बने च अन्धपरम्परापत्तेः । न चातीतानागतवर्तमानानां सर्वेषामादिमत्ता अशक्तिजनिता स्मर्तृभिरपि शक्यावगमा, अनन्तत्वात् । अतो न स्मृतिरादिमतः आदिमत्तामाहेति भावः । किञ्चेति । अनादिमत्त्वमेव दुर्निरूपम्, पदस्य, येन तद्विपर्ययादादिमत्त्वावगमः । यद्यर्थ प्रतीतिजनकत्वं तर्हि गाव्यादेरप्यर्थप्रतीतिजनकत्वेन अनादिमत्त्वापत्तिः । यदि साक्षादर्थप्रतिपादकत्वं गाव्यादिषु न तथेति तर्हि गौणलाक्षणिकयोः वाच्यपूर्वकत्वादादिमत्ता स्यादित्यर्थः । भवतु तथोक्तादिमत्ता को दोष इत्यत्राह—तदर्थेति । ननु न केवलं साक्षादर्थप्रतिपादकत्वमनादित्वं किन्तु वाच्यपूर्वकत्वमपि । तथा च गौणलाक्षणिकयोः वाच्यपूर्वकत्वादनादितेति

---

१. A पूर्वका

तर्हि मन्त्रगतोरूकमित्यत्र कमित्यस्यावाच्यकासशब्दोपस्थापनपूर्वककासार्थपरः आदिमान् वेदः स्यात्। गाव्यादेरपि गोबुद्धिर्मूलशब्दानुसारत इत्येवं कमितुल्यता गाव्यादेः स्यात्। किञ्च शाब्दैरनिबद्धेपि भाषान्तरे च [1]स्मृत्यन्तरान्नियतार्थः परम्परानुवृत्तां आदिमदिति न युक्तम्। एवं च स्मृतिसहायप्रत्यक्षगम्यं साधुत्वमिति परमतं हेयम्, उक्तरीत्या स्मृतेरसहायत्वात्।

अत्रेदं तत्त्वम्—साधुत्वमनादित्वं अपुंप्रभवत्वमिति यावत्। पुंप्रभवता हि पुरुषाभिप्रायभ्रमाशक्तिप्रमादैः। सङ्केतिते अभिप्रायप्रभवता, स्मृत्यर्थाविवेके भ्रमप्रभवता, उच्चारणवैगुण्ये चाशक्तिप्रमादप्रभवता।

---

शङ्कते—अथ वाच्येति। तर्हीति। उरूकं मन्यमाना इत्यत्र मन्त्रे कमित्यस्यावाच्यकासशब्दोपस्थापनद्वारा कासार्थस्य[2] वाच्यपूर्वकत्वाभावेन आदिमत्त्वं वेदस्य स्यादित्यर्थः। यदि वाचकशब्दोपस्थापकमपिकमित्यनादि तर्हि गाव्यादेरपि तत्तुल्यता स्यात् गोशब्दोपस्थापनद्वारा गोधीहेतुत्वात् तदाह—गाव्यादेरपीति।

किञ्चेति। यदि शाब्दस्मृत्यनिबद्धस्यादिमत्त्वं तर्हि पाणिनिप्रभृतिभिः शाब्दैरनिबद्धेपि भाषान्तरे प्राकृतादौ प्राकृतव्याकरणादिस्मृत्यन्तरात् नियतार्थस्य कपिशब्दस्यादिमत्त्वं स्यात्। तच्च न युक्तम्। परम्परानुवृत्तत्वात्। न च स्मृत्यन्तरमप्रमाणम्, आप्तप्रणीतत्वमहाजनपरिगृहीतत्वाविशेषादित्यर्थः। यत एवं स्मृतिवशात् साधुत्वमशक्यावगमं अतः प्रत्यक्षसहायत्वमपि तस्या न युक्तमिति स्मृतिसहायप्रत्यक्षगम्यं साधुत्वमपि परोक्तं हेयमित्याह—एवं चेति। तथा सति प्राकृतादेरपि साधुता स्यात् तत्तत्स्मृतिसहायप्रत्यक्षगम्यत्वात् साधु[3]त्वस्येति भावः। राद्धान्ती परिहरति—अत्रेदं तत्त्वमिति। साधुत्वासाधुत्वविवेकार्था स्मृतिरिति। साधुत्वं नामानादित्वम्। ननु अनादित्वं नामनित्यत्व तच्च वर्णात्मकगाव्यादेरप्यस्ति इत्यत्राह—अपुंप्रभवत्वमिति। नात्र नित्यत्वमनादित्वमभिप्रेतं, किन्तु अपुंप्रभवत्त्वम्।

ननु पुंप्रभवत्वे ज्ञाते तद्व्यतिरेकेणापुप्रभवत्वज्ञानं तदेव कथमित्यत्राह—पुंप्रभवता हीति। पुमभिप्रायाद्यधीनप्रयोगतेत्यर्थः। कुत्र किमधीनतेति विविच्य इत्थं दर्शयति—सङ्केतित इति। पुंसोऽभिप्रायप्रभवत्वं सङ्केतविषये यथा पाणिन्यभिप्रायादादैचोर्वृद्धिशब्दः। व्याकरणस्मृत्यर्थाविवेकात् पुंभ्रमप्रभवता यथा [4]पचन्तीति अपटुकरणत्वादशक्तिः। अन्यासक्तेर्वा शब्दोच्चारणवैगुण्यात् अशक्तिप्रमाद-

---

१. न्तरनिय २. B कार्यार्थपरस्य। ३. B तानेष्टेति ४. B भवतीति वचने

चतुष्कमिदं मुख्ये गौणे[1] लाक्षणिके मन्त्रगते च कमित्यादौ नास्ति। भाषान्तरे तु सङ्केतसंवादार्थं[2] स्मृत्यपेक्षा। अपभ्रंशादिरूपेणैव स्मृतेः पुंप्रभवत्वमेव। एवं विसंवादोऽपि देशादिभेदात्। हस्तसङ्केतादितुल्यता च। गवाद्यतिरिक्तमशक्तिजमित्यपि। एवं हि स्मृत्यर्थेऽङ्गीक्रियमाणे न गाव्यादिविशेषस्यादिमत्ता नियामिका येनादिमती स्मृतिः। न च गौणाद्यर्थधीः मुख्यार्थधीपूर्विका; किन्तु गौणत्वधीः मुख्यत्वधीपूर्विकैव। यदि तु कमित्यस्मात् काशार्थधीपूर्विकैव काशशब्दोपस्थापनद्वारकत्वधीः

प्रभवता। ततः किमित्यत्राह—चतुष्कमिति। मुख्य इति। सहोक्तिदृष्टान्ततया, यथा मुख्ये पुंप्रभवत्वं नास्ति तथा गौणे मुख्यार्थसदृशे लाक्षणिके मुख्यार्थसम्बन्धिनि मन्त्रगते अनादिवेदगते कमित्यादौ गौणलाक्षणिकयोरनादिस्मृतिसङ्गृहीततया पुंप्रभवता नास्ति। कमित्यत्र तु अनादिवेदगतत्वादेवेत्यर्थः। नन्वेवं प्राकृतादिभाषान्तरस्यापि तत्तत्स्मृतिसङ्गृहीततया पुंप्रभवता न स्यादित्यत्राह—भाषान्तरे चेति। सत्यं तत्तत्स्मृतिसङ्गृहीतत्वं तास्ताः स्मृतयस्तु सङ्केतसंवादार्थमेव लक्ष्यन्ते संस्कृतभवम् देशीत्येतद्विधया अपभ्रंशरूपेणैव स्मृतेः भाषान्तरं पुंप्रभवमेव। गवादिविषया स्मृतिस्तु नैवमित्यर्थः। युक्तं चैतत् सङ्केतप्रभवत्वं प्राकृतादेरित्यत्राह—एवमिति। महाराष्ट्रशूरसेनपाञ्चालादिदेशभेदादन्योन्यं विसंवादो व्यक्त एव। गवादिशब्दानां तु न क्वचिद्विसंवाद इत्यर्थः। इतोऽप्यनादिता भाषान्तराणां नास्तीत्याह—हस्तेति। यथा हस्तसङ्केतादिर्वाचकशब्दोपस्थापनद्वाराऽर्थधीहेतुः, तथा भाषान्तराणामित्यर्थः।

ननु स्मृतिनिबद्धेतरेषामादिमत्त्वे स्मृतिगम्ये स्मृतेरप्यादिमत्त्वापत्तिः इत्यत्राह—गवादीति। स्यादेवं स्मृतिरादिमती यदि गाव्यादिविशेषस्यादिमत्ता नियामिका स्यात्। इयं तु गवादिः साधुः तदितरपदमशक्तिजमित्येवं सामान्येनाह अतो नादिमती स्मृतिरित्यर्थः। एवं गौणादेर्मुख्यधीपूर्वकत्वमुपेत्यापुंप्रभवत्वादनादित्वमुक्तम्। अधुना मुख्यधीपूर्वकत्वमपि गौणादौ न नियमेनेत्याह—न चेति। [3]अज्ञातमुख्यस्य गौणाद्यर्थ एव व्युत्पत्तेरिति भावः। अत्र पूर्वपक्षिणा गाव्यादेर्मन्त्रगतकमित्यनेन साम्यमापादितं तत्र कैश्चित्प्रतिविहितं तच्छङ्कते—यदि त्विति। साक्षादर्थप्रतिपादकत्वमेवानादित्वं नापुंप्रभवत्वं तथा वाच्यपूर्वकत्वमपि; वाचकपूर्वकत्वं चादिमत्त्वं गाव्यादेरेव। उरूकमित्यत्र तु कमित्येतच्छब्दादेव कासार्थधीः। पश्चात्कथमित्यपेक्षायां तत्पूर्विकैव कासशब्दोपस्थापनद्वारत्वधीः। ततः किमित्यवाचक-

१. गौण M २. स्यातुवादार्था B ३. अश्रुत B।

तर्हि गावीत्यस्मात् उपस्थापितगवार्थधीपूर्विकैव गोद्वारकत्वधीरस्तु। गाव्यादीत्यनेनैव व्यवहारबाहुल्यमस्तु स्मृतिनिबद्धात् बहिरिदं पुंशक्तिप्रभवं नानादिवेदे बोधकम्। एवं च प्रयोगानादितास्मृतिपरम्परा दृढा प्रयोगानादितां स्वविषयामुपस्थापयन्ती स्वकारणमनुमैकगम्यं प्रयोगानादित्वमनुमापयति। अथवा व्यवहारानादितयैव प्रयोगानादितासिद्धौ सदृशानेकशब्दानामशक्तिजताशङ्का स्मृतेरेकस्यापनीतेति स्मृतेरनादिता। दृढस्मृति-

---

पूर्वकमनाद्येवेति यद्येवं वैषम्यमित्यर्थः। दूषयति—तर्हीति। गाव्यादिशब्दादपि गोरूपार्थधीपूर्विकैव गोशब्दोपस्थापनद्वारकत्वधीरस्तु। ततश्च तत्रापि वाचकपूर्वकतया कमितिवदनादित्वमस्तु किं वैषम्यमित्यर्थः। कथं तर्हि प्रचुरव्यवहारतया गवादितुल्यानां गाव्यादीनामशक्तिजत्वं कथं च वैषम्यं कमित्यनेनेत्यत्राह—गाव्यादीत्यनेनैवेति।

अस्तु नाम गाव्यादीत्यनेनैव व्यवहारबाहुल्यं तथापि स्मृतिनिबद्धाद्गवादेरन्यत् इदं गाव्यादि पुमशक्तिप्रभवम्। अपुंप्रभवत्वमेवानादित्वं गाव्यादेर्हि स्मृतिनिबद्धेतरतया पुमशक्तिप्रभवत्वेनादिमत्त्वं; गवादेस्तु स्मृतिनिबद्धतया नाशक्तिजतेत्यनादितैव। तथा कमित्यस्याप्यनादिवेदेबोधकतया न पुमशक्तिप्रभवत्वेनादिमत्त्वमित्यर्थः। ननु कथं गवादीनामनादित्वं स्मृत्याऽवगम्यत इत्यत्राह-एवं चेति प्रयोगानादिताविषया स्मृतिपरम्परा अविगीतमहाजनादृतत्वेन दृढा स्वविषयतया प्रयोगानादित्वमुपस्थापयति। कारणतया स्वेन सम्बन्धं नित्यानुमेयप्रयोगानादित्वमनुमापयति धर्मस्मृतिरिव वेदः। अत्र प्रयोगः शाब्दस्मृतिः गवादिप्रयोगानादिताज्ञानपूर्विका तद्विषयाप्तवाक्यत्वात्। यद्यद्विषयमाप्तवाक्यं तत् तज्ज्ञानपूर्वकं यथा नदीतीरादिवाक्यम्। एवं च स्मृतिलिङ्गानुमानेन गवादेरनादित्वज्ञानम् एवं पाणिनेरपि। स्मृत्यन्तरलिङ्गकानुमानात् स्मृत्यन्तरकर्तुरपि तथेति नान्धपरम्परादोष इत्यर्थः।

प्रकारान्तरमाह—अथवेति। व्यवहारस्य प्रवाहानादितयैव तद्विषयाणां गवादीनां गाव्यादीनां च प्रयोगानादित्वं स्वत एव सिद्धम्। नन्वेवं स्मृतेरकिञ्चित्करतया न ततोऽनादितेत्यत्राह—सदृशेति। तत्रानादित्वे सिद्धेऽपि इयमाशङ्का जायते कथमेकस्मिन्नर्थे सदृशानामनेकशब्दानां सम्भाव्यमानाशक्तिजत्वानामनादिता। आदिमतामपि व्यवहारदर्शनात् सा सर्वथा न सम्भवति इति। अतो गवादिर्वाऽनादिः गाव्यादिर्वेति। सेयमाशङ्का स्मृतित एकस्य गवादेरपनीयते इति स्मृतितोऽनादितादार्ढ्यमित्यर्थः। कथं स्मृतितः शङ्कापगम इत्यत्राह—दृढस्मृतीति।

संवाद्योऽयं प्रयोग[1] इत्येवं शङ्कापगमः। प्रवाहानादिस्मृतिसंवादो हि नाशक्तिजस्य इतीयं दिक्।

ऋषभवृषभादीनां सदृशानामपि सर्वेषां स्मृतिसंवादान्न कस्यचित् अशक्तिजतेति अनेकशब्द एवैकार्थः। वाचकापभ्रंशविभागार्था स्मृतिरिति शाब्दोक्तेः अपभ्रंशादन्यद्वाचकमभिमतम् अवाचकसमासाद्यनुशासनात्। यदि तु वाचकतापुरस्काराल्लक्षणादि इति तर्हि न कमिति वाचकतापुरस्कारात् कासार्थः। अथ कमित्युपस्थापितस्य वाचकता तर्हि गावीत्युपस्थापितस्य गोरपि वाचकता तुल्या। अव्यापकत्वातिव्यापकत्वे च

---

ननु पौरुषेयत्वात्स्मृतेः तत्संवादोऽशक्तिजस्यापि सम्भवतीत्याह—प्रवाहेति। स्मृतेः पौरुषेयत्वेपि प्रवाहानादित्वात् अनादिस्मृतिपरम्परानुवर्तिता आदिमतोऽशक्तिजस्य न सम्भवतीत्यर्थः! नन्वनादिस्मृतिसंवादात् गवादेः साधुतास्तु। गाव्यादेरप्यनादिव्यवहारविषयतायां को दोष इति शङ्का दिक्पदनिवर्त्या। निवृत्तिस्तु उक्तमुभयेषामप्यनादित्वे गवादिविषयस्मृतेर्वैयर्थ्यमिति। ननु सदृशानेकशब्दानामेकस्मिन्नर्थे साधुत्वस्य एकस्यानेकस्मिन्नर्थे साधुत्वस्येवाऽन्याय्यत्वे ऋषभवृषभादीनां पुंगवादौ साधुत्वं न स्यादित्यत्राह—ऋषभेति। नन्वेवमनेकेषु शक्तिकल्पनागौरवं स्यादित्यत्राह—इत्यनेकेति। अनादिस्मृतिसंवादबलादक्षादेः एकस्यानेकेष्वर्थेष्विव ऋषभवृषभादेरनेकस्य एकस्मिन्नर्थे शक्तिकल्पनागौरवं सह्यमेवेत्यर्थः।

ननु वाचकापभ्रंशविभागार्था स्मृतिरिति शाब्दोक्तेः वाचकादन्यदपभ्रंशमुक्तमिव भाति। तत्कथं? गौणादेरपभ्रंशतापत्तेरित्यत्राह—वाचकेति। शाब्दोक्तौ वाचकपदेनापभ्रंशादन्यदभिमतं शाब्दैरेव वाचकेतरसमासाद्यनुशासनात्। अतो न दोषः। अत्र केचित्। शाब्दोक्तवाचकशब्दात् वाचकत्वपुरस्कृतत्वं चाभिप्रेतम्। अतो लक्षणादेर्नापभ्रंशता, वाचकत्वपुरस्कारादित्यूचुः। तच्छङ्कते—यदि त्विति। तर्हीति। वैदिके कमित्यत्र [2]काशार्थप्रतीतौ वाचकतापुरस्काराभावात् अपभ्रंशतापत्तिः। ननु कमित्यनेनोपस्थापितस्य कासशब्दस्य वाचकत्वात् वाचकतापुरस्काराभावेऽपि वाचकद्वारतया वाचकपदसङ्गृहीततेति शङ्कते—अथेति। तर्हीति। गाव्यादेरपि तत्तुल्यतया वाचकपदसंगृहीतत्वापत्तिरित्यर्थः। यत्पुनर्लक्षणतः प्राप्तमपि अप्रयोगान्निवर्तयन्ति लक्षणाप्राप्तमपि प्रयोगादङ्गीकुर्वन्तीति लक्षणमव्यापकमतिव्यापकं चेत्युक्तं तदपि नास्तीत्याह—अव्यापकत्वेति। दृढतरस्मृत्यन्तरबलेनैव

---

१. B अप्रयोगः २. B कास

एकस्याः स्मृतेः स्मृत्यन्तरद्रढिम्नैवेति स्मृत्यन्तरान्नियमसिद्धिरस्तु ।

विवरणे तु सङ्गतेर्विधान्तरम् । पदार्थसन्देहे शाब्दस्मृतितः बेदे निर्णयो वेदविदाम् । स्मृतितः अनेकार्थत्वे प्रकरणादिवशात् । अतः स्मृतेरमूलत्वादनध्यवसाय एव ।

---

एकस्याः पाणिनीयायाः स्मृतेरव्यापकता अतिव्यापकता चोच्यते नान्यथा । ततश्च तत एव स्मृत्यन्तरान्नियमासिद्धिरस्तु न ह्येकस्य पुरुषस्य सम्यग् लक्षणप्रणयनाशक्तौ व्याकरणस्मृतेर्व्यभिचारिता । पुरुषान्तरप्रणीतायाः सम्यक्त्वसम्भवात् । अतः समस्तस्मृतिपर्यालोचनया नियमसम्भव इत्यर्थः ।

इदमिह वक्तव्यम् । स्मृतिसङ्ग्रहवशात् यः शब्दः साधुतया निर्णीतः स द्विविधः अर्थसाधुः प्रयोगसाधुश्चेति । तत्र यः शब्दो यदर्थप्रतिपादकतयाऽनादिव्यवहारसिद्धः स तत्रैव तात्पर्यतः प्रयुज्यमानोऽर्थसाधुः यथा सास्नादिमदादौ गवादिः । यस्तु अर्थान्तरपरतया प्रसिद्धोऽपि स्वार्थं विहाय शब्दान्तरस्यार्थप्रतिपादकस्यानुग्राहकः स प्रयोगसाधुः । यथा नदी गङ्गा अरुणेत्यत्र स्त्रीप्रत्ययाः [1]स्वाभिहितलिङ्गविशेष[2]वत्तया प्रसिद्धा अप्यतत्पराः स्वार्थं प्रतिपादयतः प्रातिपदिकस्यानुग्राहकाः । तद्व्यतिरेकेण तस्यार्थप्रतिपादनाशक्तेः । तदशक्तिश्च तयोः [3]सहप्रयोगनियमात् । न चैवं प्रातिपदिकस्यापि प्रयोगसाधुता क्वापि स्वार्थहानाभावात् । अत एवार्थसाधुतः प्रयोगसाधोर्जघन्यता अभ्यर्हितस्वार्थपरत्वहानस्यायुक्तत्वात् । न चैवमन्वयव्यतिरेकगम्यपृथगर्थयोः प्रकृतिप्रत्यययोः विपर्ययेणापि साधुत्वापातः । उपात्तपूर्वतया प्रकृतेः प्रत्ययस्य च परतया प्रयोगनियमात् । तथैवानादित्वम् । नान्यथा । यत्रापि बहुजादौ [2]विपर्ययः तत्रापि तथैव स्मृतेः अनादिप्रयोगाच्चानादिता । यद्यपि प्रलम्बत इत्यादौ प्रादिव्यतिरेकेणापि लम्बत इत्यादेः प्रयोगसम्भवात् प्रादिव्यतिरेकेणाप्यर्थाभिधानसामर्थ्योपपत्तेः । तथापि यत्र सहप्रयुक्तिः तत्र प्रयुक्ताद्धि प्रतिपत्तिरिति नयात् प्रादिव्यतिरेकेणार्थानवबोधात् अभिधायकशब्दानुग्राहकतया प्रादेः प्रयोगसाधुत्वम् । अध्ययनादौ तु अध्यादेरव्यभिचारात सुतरां प्रयोगसाधुत्वम् । एवमन्यत्रापि ऊह्यम् ।

विवरणे त्विति । अस्मिन्नर्थे इदं पदं साध्विति पाणिनिप्रभृतेः स्मरणम् । आदृतं च तद्वेदव्यवहारिभिः । अवेदे पदपदार्थसन्देहे वेदव्यवहारिणां शाब्दस्मृतितो

---

१. B अभ्यर्हित　　२. B विशेषवचनतया

३. B सह नास्ति

## ॥ १० ॥ प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥

आकृत्यधिकरणीयं सन्देहमुपक्रम्य मध्ये किं लौकिका एव वेदे शब्दाः अर्थाश्च उतान्य एवेति चिन्ता व्यक्त्यर्थत्वमुखमप्रामाण्यमपनेतुं आकृत्यधिकरणमारब्धम् । अन्यथा वेदेऽन्यत्वात् अव्युत्पत्तेर्नार्थधीः । न तु लोके व्यक्त्यर्थतया वेदे नार्थधीरिति । यतः एवमप्रयोजना[1] आकृतिचिन्ता न त्वशक्योपक्रमेत्यतः उपक्रम्योपोद्घाततया मध्यस्थः । साक्षा-

---

निर्णयः स्वरादिविशेषात् । यत्रापि स्मृतेरनेकार्थत्वमक्षादौ तत्र प्रकरणादिवशात् । अतः स्मृतेरेववेदार्थाध्यवसायः । अतः स्मृतेरमूलत्वेनाप्रामाण्ये तन्निबन्धनोऽर्थाध्यवसायोऽपि वेदेनास्तीत्यनध्यवसितार्थतया वेदो न प्रमाणमिति विवरणे सङ्गतिः प्रकारान्तरेणोक्तेत्यर्थः ।

## ॥१०॥ प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥३०॥

उक्तं गवादिशब्दाः साधव इति तेषां चाकृतिरेवार्थ इत्युत्तरनये वक्ष्यते । इयमिदानीं चिन्ता । ये लौकिकाः शब्दा अर्थाश्च ततोऽन्ये वेदे उत त एवेति । नन्वत्र भाष्ये गवादयः शब्दाः किमाकृतेः प्रमाणं उत व्यक्तेरित्यधिकरणीयां चिन्तामुपन्यस्य तस्मिन् अपरिसमाप्त एव मध्ये अस्य लोकवेदाधिकरणस्य चिन्ता प्रारब्धा अस्या मध्योपन्यासे किं प्रयोजनं इत्यत्राह—आकृत्यधिकरणीयमिति । व्यक्त्यर्थकत्वमुखाप्रामाण्यापनयनप्रयोजनकाकृत्यधिकरणस्य प्रयोजनांशोपोद्घाततया मध्योपन्यास इत्यर्थः । कथमुपोद्घातेत्यत्राह—अन्यथेति । अन्यथा एतदधिकरणपूर्वपक्षे वेदे शब्दस्य लौकिकादन्यत्वादव्युत्पत्तेरर्थधीरेव नास्तीत्येवमप्रामाण्यम् । न पुनर्लोके व्यक्त्यर्थतया वेदे नार्थधीरित्येवम् । एतच्चाकृत्यधिकरणीयविवरणपूर्वपक्षानुसारेणोक्तम् ।

यद्वा निबन्धने लोके या व्यक्त्यर्थता दृष्टा तयाऽनध्यवसायद्वारा वेदे नार्थधीरित्येवमिति योजना । भवत्वेवं तथापि कथं मध्योपन्यास इत्यत्राह—यत इति । यत एवमाकृतिचिन्तायाः प्रयोजनाभावमात्रं नोपक्रमस्याशक्यता । न तु शब्दः साधुरित्युक्ते अर्थः क इति झटिति बुभुत्सया शक्य एवेत्यतः प्रयोजनांशोपोद्घाततां अतिस्फुटीकर्तुमस्य मध्यस्थतेति तदुपक्रम्योपोद्घाततया मध्यस्थतेत्यर्थः । ननु साक्षादध्यायसङ्गतौ सिद्धायामवान्तरसङ्गतिरूपा मध्यस्थता वाच्या सा कथमित्यत्राह—साक्षादिति । यद्यप्यन्योपोद्घातानामध्यायसङ्गतिर्न पृथग्वाच्या तथापि

---

१. एवं प्रयोजना

त्सङ्गतेरध्यायस्थः। तदुक्तं "व्यक्त्यर्थत्वे लोके वेदे अर्थासंस्पर्शितैवे"ति।

पूर्वपक्षस्तु शाब्दैरन्यतोक्तेः "लौकिकानां वैदिकानां चे"ति। रूपान्यत्वाच्च देवासः त्मना अग्निः इति वर्णागमलोपविकारैः। अर्थान्यतापि "उत्ताना वै देवगवा वहन्ति" इति "हिरण्यवर्णो वनस्पतिः" इति "घृतं मधु" इति। ननु तत्रापिशब्दार्थयोः तत्तापि प्रायेण। मैवम्। तत्ता अन्यता वेति न लोकव्युत्पत्तिः नियता। छेदनादिव्युत्पत्तिर्नियता। छेदनादिव्युत्पत्तिनियमपूर्विकैव यूपादावपि वेदे व्युत्पत्तिः नान्यथा। ननु वर्णागमादावपि यूपप्रत्यभिज्ञानादर्थतत्ता। तन्न। लोके न तथा साधुतेति नौत्पत्तिकी पदपदार्थधीर्वेदे।

---

साक्षात्सङ्गतस्याप्यन्योपोद्घाततापीति स्फुटीकर्तुमस्य मध्यस्थतेति मध्योपन्यासप्रयोजनं सूचयितुं साक्षात्सङ्गतिरध्याय उक्तेति भावः। अस्य साक्षात्सङ्गतिर्ग्रन्थेप्युक्तेत्याह—तदुक्तमिति। ननु कथमत्र पूर्वपक्षः गवादिशब्दानामर्थानां च लोके वेदे चैकत्वेन प्रतीतेरित्यत्राह—पूर्वपक्षस्त्विति। शब्दस्य तावद्भेदोऽस्ति 'अथ शब्दानुशासनम्। केषां शब्दानां ? लौकिकानां वैदिकानां च" इति शाब्दैर्भेदेन व्यपदेशात् देवासः त्मना अग्निः इति वर्णागमलोपविकारैः रूपान्यथाभावाच्च। तथा अर्थेपि भेदमाह—अर्थेति। नन्वेवं क्वचिदेव भेदेपि तत्तच्छब्दार्थयोर्बहुशोऽभेदो दृश्यत इति चोदयति—नन्विति।

मैवमिति। किं क्वचित् विकारेण भेदप्रतीतेः अविकारेपि भेदः किं वा क्वचित्तत्ताबलात् विकारेपि तत्तेति भेदाभेदशङ्कया न तत्ता अन्यता वेति निश्चयः। ततश्च न लोकव्युत्पत्तिः नियतेत्यर्थः। ननु यूपादिवत् वेद एव व्युत्पत्तिरस्तु इत्यत्राह—छेदनादीति। छेदनादीनामन्येषां बहूनां शब्दानां अर्थानां चाभेदे निश्चिते तद्व्युत्पत्तिनियमपूर्विकैव वेदे व्युत्पत्तिः। नान्यथेति न चेह तथा निश्चय इत्यर्थः। ननु वर्णागमादावपि वर्णसङ्घातात्मकपदप्रत्यभिज्ञया अर्थतत्ता युक्तेति लोके व्युत्पत्तिर्नियतैवेति चोदयति-नन्विति तन्नेति। स्यादेतदेवं यदि लोके तथा[1] स्यात्। न च सास्ति। न हि लोके बहूनां वर्णानाम् भेदेपि क्रमान्यत्वमात्रेणापि तत्ता। किं पुनर्वर्णभेदे लोपे विकारे च। अतो न लोके साधुतेत्यर्थः। कथं तर्हि वैदिकपदार्थप्रतीतिरित्यत्राह—नौत्पत्तिरिति। सत्यं धीः सा तु नौत्पत्तिकी, किन्तु अभिप्रायाधीना। तादृशी च पौरुषेय्येवेति पौरुषेयत्वेन सापेक्षत्वेन वेदस्याप्रामाण्यमित्यर्थः।

---

१. तत्ता B.

राद्धान्तस्तु—वर्णतोऽन्यत्वेपि अर्थधीहेतुवर्णसङ्घातप्रत्यभिज्ञानमेव। वर्णतो विकारेपि तरुच्छेदनादौ वनतत्तेव वर्णगणतत्तयैव हि तदर्थधीः। न तु सजातीयशक्तिप्रत्यभिज्ञया पदतत्ता, पर्यायेपि तत्तापत्तेः। न च शक्तिव्यक्तितत्ता, वर्णग[1]ततयैव हि सा। न च लोके तथा न साधुतेति वेदेपि नेति वक्तुं शक्यम् तथा वेदेऽनादिप्रयोगात्। अत एवावस्थान्यत्वात् लौकिकवैदिकप्रभेदः शब्दानां सापेक्षत्वानपेक्षत्वावस्थानात् अल्पवर्णतत्वे उरूकमित्यत्र कवर्णेन काशशब्दलक्षणयाऽर्थधीः।

---

राद्धान्तस्त्विति। न तावद्रूपान्यत्वादन्यता, कतिपयवर्णस्यान्यत्वेपि विकारेप्यदर्शनेपि बहूनां वर्णानामभेदात् अर्थधीहेतोर्वर्णसङ्घातात्मकस्य पदस्य वेदे तदेवेदं पदं विकृतमिति प्रत्यभिज्ञानात्। अत्र विकारेपि इत्यदर्शनस्याप्युपलक्षणम्। अत्र दृष्टान्तः—तरुच्छेदनेति। ननु यस्मिन् वर्णसङ्घे वृद्धव्यवहारेण शक्तिकल्पना तत्समुदायस्य वर्णभेदे असंभवात् कथं तदर्थधीरित्यत्राह—वर्णगणेति। न हि प्रतिवर्णं शक्तिकल्पना किन्तु समुदाये। तत्र वर्णभेदादावपि वर्णसङ्घातता तया चार्थधीर्युक्तैवेत्यर्थः। केचित्तु वर्णगणतत्तां विहाय शक्तितत्तयैव पदतत्तामूचुः। तत्र द्वैधं भवति। किं सजातीयशक्तितत्तया तच्छक्तिः व्यक्तितत्तया वेति। तत्राद्यं दूषयति—न त्विति। पर्यायपदेष्वर्थैक्ये शक्तेः सजातीयत्वेन तत्तापत्तेरित्यर्थः। नापि द्वितीय इत्याह न चेति। शक्तिव्यक्तितत्ता हि वर्णगणतत्तयैवेत्येवं मत्पक्ष आपद्यत इति भावः। ननु न लोके तथा विकृततया साधुतेति न लोकव्युत्पत्तिर्नियतेत्यत्राह—न चेति। तत्र हेतुः तथेति। यद्यपि लोके तथा न प्रयोगः तथापि वैदिकानादिप्रयोगसद्भावात् साधुता तावदविवादा। न च नार्थधीः वर्णगततत्ताधीनपदतत्तया तच्छक्तितत्तया तदर्थधियः सम्भवात्। वेदस्य स्वतोऽर्थपरत्वाच्च। न चाग्निरित्यत्र नकारणकारयोः पृथक् शक्तिरित्युक्तमेव। नन्वेवमग्णिपदादपि लोके ह्यग्निधीः स्यात्। बाढं भवत्येव।

नन्वेवं तथैव साधुतापातः। तन्न तथा लोके अनादिप्रयोगाभावात्। अतोऽग्निरिति स नकार एव लोके साधुः। वेदे तु द्वयमपि द्वयोरप्यनादिवेदे प्रयोगात्। न चैवं नदीदीनादौ वर्णव्यत्यासमात्रे, करः करभ इत्यादौ वर्णान्तरे, काशः कुश इति वर्णविकारे च वर्णगणतत्तायां तदन्यतरार्थधीः स्यादिति वाच्यम्। अर्थान्तरपरतयैव तत्र लोकव्युत्पत्तेः। न चैवं वैदिकविकारादिषु, अतोऽत्र वर्णगणतत्तया पदतत्तैवेति भावः। तथा सापेक्षत्वासापेक्षत्वावस्थाभेदमात्रान्यथासिद्धलौकिकवैदिकतया शाब्दधीव्यपदेशभेदादपि न भेद इत्याह—अत एवेति। ननु वेदे यत्राल्पवर्णसाम्यं तत्र कथं पदतत्तेत्यत्राह—अल्पेति। न हि तत्र पदतत्तयाऽर्थधीः।

---

१. वर्णगणतत्तयैव A

एवमपि लोकव्युत्पत्तितो[1]ऽन्यादौ व्युत्पत्तेः वेदेपि[2] पदपदार्थधी-सिद्धेर्नानध्यवसायः। न चोत्तानवहनादि मानसिद्धं येन तदर्थता। अर्थान्यत्वे च वहनाद्यर्थाज्ञानमेवेति न ततोऽन्यत्र[3] धीः उत्तानवहनादि स्तुत्यन्वितम्। कृतणत्वोऽग्निरिति वदता प्रत्यभिज्ञोक्ता। साधुशब्दे स्थितेपि लोके अन्यतया वेदे शङ्कोत्थानात् उत्तरतश्चिन्ता तुल्यरूपार्थे वक्ष्यमाणेपीत्यन्तराचिन्तेयं कृता।

---

किन्तु अवयवेन समुदायलक्षणया यथा उरूक्रमित्यत्र कशब्देन कासशब्दलक्षणा। लोकेपि [4]विकृतिरेवा सत्या सत्यभामेत्यादावित्यर्थः। उक्तेन प्रकारेण कथञ्चिच्-दर्थोपपत्तौ न वेदस्य स्वतः सिद्धार्थपरत्वहानं युक्तमित्याह—वेदेपीति। तथाऽर्थान्य-त्वमपि नास्तीत्याह—न चेति। उत्तानवहनादेः मानान्तराप्रसिद्धतया न तदर्थता गवादेरित्यर्थः। किञ्च लोकवेदयोरर्थान्यत्वे उत्तानवहनादिशब्दात् प्रत्येतुमपि न शक्यते लोकव्युत्पत्त्यभावादर्थधीरेव न स्यादित्याह—अर्थेति।

कथं तर्हि उत्ताना वै देवगवा वहन्ति इत्यस्यान्वय इत्यत्राह उत्तानेति। पूर्वपक्षिवाक्यालोचनयापि न पदभेद इत्याह—कृतणत्व इति। ननु व्याकरणाधि-करणात्पूर्वमेवेयं चिन्ता युक्ता लोके वेदे च शब्दार्थयोरैक्ये सिद्धेपि लोके अश्वशब्दस्य हयार्थत्वात् वेदेपि तदर्थाध्यवसायः शक्यः। यद्वा आकृतिनयादुपरिष्टा-दियं चिन्ता। अर्थविशेषे निर्धारिते हि किं स एव उतान्य एवेति चिन्ता युक्ता। अतः कथमन्तरानिवेश इत्याशङ्क्य विवरणोक्तप्रकारमाह—साधुशब्द इति। साधु-श्चासौ शब्दश्चेति साधुशब्दः तस्मिन् व्याकरणाधिकरणन्यायेन लोके स्थितेपि वेदे अन्यतया शङ्कोत्थानात् तदुत्तरं तच्चिन्ता युक्ता। व्याकरणनयश्च होलाकनया-वान्तरसङ्गतिबलेन पूर्वं युक्तः। तत्र च स्वारसिकप्रत्यभिज्ञाबलेन वैदिका-श्वादिशब्देन हयाद्यध्यवसाय उक्ते तदाक्षेपेणोत्थानात् तदनन्तरत्वं युक्तमित्यर्थः। आकृतिनयादप्युत्तरतावाच्या। कथं मध्ये पात इत्यत्राह—तुल्यरूपेति। शब्दार्थोभय-विषयत्वादस्याश्चिन्तायाः उभयत्र प्रत्यासत्त्यर्थमनागतावेक्षणन्यायेन अर्थविशेषं वक्ष्यमाणमप्याश्रित्यात्रैवेयं चिन्ता युक्तेति अन्तरा चिन्तेयं कृतेत्यर्थः।

---

१. पिलौकिके M

२. A लोकेपि

३. अन्यार्थ M

४. व्युत्पत्तिः शेषेत्यादावपीत्यर्थः।

## ॥ ११ ॥ प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥

किमाकृतिद्वारकं कार्यपरत्वं गवादिशब्दानां उत व्यक्तिद्वारकमिति सन्देहोऽयं तुल्यः । तथैवाकृतिव्यक्त्योः शाब्दधीविषयता तुल्या । व्यक्तितः आकृतेः कार्यान्वयः आकृतितो व्यक्तेः धीविषयतेति तुल्यतैव। यदि व्यक्त्युपादानेनावच्छेदात् आकृतेप्यन्वयः तर्हि प्रत्ययमात्रमाकृता-वुक्तं अनन्वयं वक्तुं; अनन्वितस्य पदार्थत्वोपगमे तत्पदवान् वेदो न प्रमाणं स्यादिति च ग्रन्थो हेयः । मैवम् आपाततस्तुल्यतया सन्देहः सूक्ष्मेक्षणादाकृतेः अनन्वय एव । न हि कारकावच्छेदात् क्रियान्वयः । आकृत्यर्थवाद्यपि उपदेशे व्यक्त्यर्थतामिच्छति । ननु न व्यक्तिधीः व्यक्तेः

---

## ॥११॥ प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥३०॥

इह गवादिशब्देषु चिन्ता । किं व्यक्तिः शब्दार्थः आकृतिर्वेत्यनध्यवसायः उताकृतिरेव शब्दार्थ इति । अत्र भाष्ये किमाकृतिरेव शब्दार्थ उत व्यक्तितरिति सन्देह उक्तः सोऽयुक्तः सर्वपदानां कार्यपरत्वेन तदर्थत्वादित्याशङ्क्य ग्रन्थोक्त-संशयव्याख्यानेन भाष्यतात्पर्यमाह—किमाकृतीति । कथं तुल्यतेत्यत्राह—आकृति-व्यक्त्योरिति । यद्यपि न शब्दाद्व्यक्तिविशेषधीः तथापि व्यक्तिमात्रधीरस्त्येवेति शाब्दधीविषयता तुल्येत्युक्तम् । नन्वेवमपि कथं तुल्यता कार्यान्वये आकृतेर्व्यक्ति-सापेक्षत्वात् व्यक्तेश्च तन्निरपेक्षत्वादित्यत्राह—व्यक्तित इति । सत्यं व्यक्तितः कार्यान्वयः आकृतेः तथापि धीविषयत्वमाकृतितो व्यक्तेरित्युभयोरपि एकैकत्र सापेक्षत्वात् तुल्यतेत्यर्थः । नन्वेवमाकृतेर्व्यक्तिद्वारा कार्यान्वयाभ्युपगमे ग्रन्थ-विरोधः, अनभ्युपगमे वा आकृतेः सर्वथा कार्याननन्वितत्वात् सन्देहानुपपत्तिरिति चोदयति—यदीति ।

मैवमिति । आपाततस्तुल्यतया सामान्येन विशेषणानां विशेष्यद्वारा कार्या-न्वयित्वम् । आकृतेरपि विशेषणत्वं सामान्यत इत्यापाततस्तुल्यतया सन्देहः। सूक्ष्म-दृष्ट्या तु ग्रन्थोक्तरीत्या आकृतेरनन्वय एवेत्यर्थः । कुतोऽनन्वय इत्यत्राह—न हीति । नन्वाकृतेः प्रत्ययात् प्रतीयमानस्यैव शब्दार्थत्वं युक्तं न व्यक्तेरिति कथं सन्देह इत्याशङ्क्य आकृत्यर्थवादिनापि उद्देश्ये व्यक्त्यर्थत्वमवश्याभ्युपेयमिति व्यक्तेरपि शब्दार्थता युक्तेत्याह—आकृत्यर्थेति । एवं च संशयोपपादनव्याजेन अनध्यवसायात्मकः पूर्वपक्षः सूचितः । तमाक्षिपति—नन्विति । न हि शब्दादाकृतौ प्रतीयमानायां व्यक्ति-प्रतीतिः सम्भवति । ततो भिन्नत्वात् । न हि व्यक्तेः प्रातिस्विकं रूपं शब्दाद्भाति । अतो व्यक्तेः प्रतीत्ययोगात् न तच्छब्दार्थतया पूर्वपक्षः सम्भवतीत्यर्थः । अत्र

प्रातिस्विकरूपाभानात्। तन्न। आकृतिर्हि सामान्यं सम्बन्धिस्वभावं तत्सम्बन्धित्वेनाभातं अभातमेव स्यात्। विशेषतश्चात्र रूपरूपितया सम्बन्धिता। न च रूपिशून्या रूपबुद्धिः, यदि स्यात् रूपतैव न स्यात्।

अत्रेदं तत्त्वम्। व्यक्तिपरतन्त्र[1]स्वभावैवाकृतिः प्रत्यक्षसिद्धा। न व्यक्त्यन्तरवत् स्वतन्त्रा। परतन्त्रा च [2]परान्तर्भावघटितमूर्तिरिति शब्दादप्याकृतिर्दीप्तिरेव। [3]आकृत्यादिशब्दास्तु तत्स्वभावासहितामाहुः न तत्स्व-

---

ग्रन्थोक्तं परिहारमाह—तन्नेति। आकृतेः सामान्यत्वेन सम्बन्धिस्वभावतया तत्सम्बन्ध्यन्तर्भावादेव तद्धीः नान्यथा। अत्रायमपरो विशेषः–आकृतिर्हि रूपं व्यक्तिश्च रूपिणी न हि रूपिव्यतिरेकेण रूपधीः सम्भवति रूपत्वव्याघातापत्तेः। अतः आकृतिप्रतीतौ व्यक्तिप्रतीतिरस्त्येवेत्यर्थः। नन्वाकृतिव्यक्त्योस्तादात्म्याभावेन अत्यन्तभिन्नत्वात् व्यक्त्यन्तरवत स्वतन्त्रतैव युक्ता। न परतन्त्रता। अतः कथं आकृतिप्रतीतौ व्यक्त्यन्तर्भावः। अन्यथा आकृत्यादिशब्देष्वपि व्यक्त्यन्तर्भावो दुर्वार इत्यत्राह—अत्रेदं तत्त्वमिति।

सत्यमाकृतिर्व्यक्तितो भिन्ना तथापि व्यक्तिपरतन्त्रस्वभावैव प्रत्यक्षसिद्धा। व्यक्तिविशेषणत्वेनैव तस्याः प्रत्यक्षसिद्धेः न व्यक्त्यन्तरवत् स्वतन्त्रता कदाचिदपि। तथा प्रतीत्यभावात्। भवत्वेवमाकृतेः पारतन्त्र्यं तथापि कथमाकृतिप्रतीतौ व्यक्त्यन्तर्भाव इत्यत्राह—परतन्त्रा चेति। यत्परतन्त्रं यद्वस्तु तत् तस्मिन् प्रकाशमान एव प्रकाशते यथा अर्थप्रकाश एव ज्ञानप्रकाशः। आकृतिश्च परतन्त्रस्वभावा परभूतव्यक्त्यन्तर्भावघटितमूर्तिरित्याकृतिप्रतीतौ व्यक्त्यन्तर्भाव इत्यर्थः। ननु प्रत्यक्षावगतौ तथास्तु। शाब्दे तु ज्ञाने कथं तदन्तर्भाव इत्यत्राह—इति शब्दादिति। यत्स्वभावो यत्पदार्थः स तद्भावापरित्यागेनैव शब्दादप्यवगतो भवतीति शब्दादप्याकृतिस्तथैव प्रतीयत इत्यर्थः। नन्वेवमाकृतिसामान्यजातिशब्दैरपि तत्स्वभावाकृतिप्रतीतौ तत्रापि व्यक्तिधीः स्यादित्याशङ्क्याह–आकृत्यादीति। ते तु शब्दाः तत्स्वभावासहितां परतन्त्रस्वभावानालिङ्गितामाकृतिमाहुः। तत्स्वभावाधिष्ठानमात्रमाहुरिति यावत्। न तत्स्वभावामेव न परतन्त्रस्वभावाकृतिमाहुरिति न व्यक्त्यन्तर्भावः। तत्र प्रतीतिभेदः शब्दस्वभाववैचित्र्यनिबन्धनः। तच्चानादिवृद्धव्यवहारव्युत्पत्तिबलात्। न चैतावता वाच्यत्वापातः। यथा चैतत् तथा राद्धान्ते वक्ष्यत इति भावः।

---

१. परतन्त्रत्व–A २. आकृतिधीः तथैव B ३. स्वभावासहिता–A

भावामेवेति न गवादिशब्दतुल्याः । रूपतया चेयं परतन्त्रा रूप्यपि तन्निरूपिततया धीस्थां तां परतन्त्रयति । न च गवादिशब्देभ्यः प्रातिस्विकधर्मनिरूपितरूपिधीः प्रत्यक्षवत् प्रातिस्विकरूपाभानात् । न चैवं अभानमेव, अविशदतया रूप्यध्यवसानात् । जात्यादिकल्पनाया अपि मेयतास्थापनात् । धीभेदे च इत्थं वेद्यत्वमशक्यमिति एकधीस्थतासिद्धिः तदुक्तं "अहोवतानुभवेपि नावमर्श"[1] इति । व्यक्त्यर्थत्वे च कार्यान्वयबलात् स्थिते सम्बन्धग्रहणार्थं नयनिरस्तसमयकृतत्वहानात् वृद्धव्यवहारतो

---

किञ्च आकृतिव्यक्त्योः रूपरूपित्वपर्यालोचनयाप्याकृतेः परतन्त्रस्वभावतेत्याह—रूपतया चेति । रूप्यतेऽनेनेति रूपं जातिः रूप्यत इति रूपि द्रव्यं व्यक्तिः । तदपि तन्निरूपिततया धीस्थं आकृतिनिरूपिततया धीस्थम् । तामाकृतिं परतन्त्रयति परतन्त्रां करोति । न ह्याकृतिनिरूपितत्व द्रव्यस्याकृतेः पारतन्त्र्यं विनोपपद्यते । न च तन्निरूपिततया धीस्थितिरेवासिद्धा । रूपिव्यतिरेकेण रूपप्रतीत्ययोगादित्यर्थः ननु यथा प्रत्यक्षज्ञाने व्यक्त्यन्तरव्यावृत्तविशेषधर्मनिरूपितव्यक्तिधीः तथा गवादिशब्देभ्योऽप्यस्तु कथमाकृत्येकनिरूपितत्वमित्यत्राह—न चेति । तत्र हेतुः—प्रत्यक्षवदिति । युक्तं प्रत्यक्षतः प्रातिस्विकरूपनिरूपितत्वं रूपान्तराणामपि भानात् । गवादिशब्दैस्तु न तथा रूपान्तराणामभानादित्यर्थः । ननु प्रातिस्विकधर्माप्रतीतौ व्यक्तिप्रतीतिरेव न स्यात् इत्यत्राह—न चेति । तत्र हेतुः–अविशदेति । गवादिशब्दैस्तु विशेषणावस्थजातिप्रतीतेः तस्याश्च रूपतया रूपिशून्याया अप्रतीतेः रूपिण्या व्यक्तेरध्यवसानात्, यदि परमस्फुटा सा प्रतीतिः । न चैतावता व्यक्तेः प्रतीत्यविषयत्वमिति भावः । ननु जात्यादिकल्पनानां बाह्यविषयत्वाभावेन ज्ञानाकारतैव । न मेयतेतिकथं रूप्यध्यवसानमित्यत्राह—जात्यादीति । वृत्तिकारग्रन्थे जात्यादिमेयत्वस्य व्यवस्थापितत्वात् नैतच्छङ्कार्हमित्यर्थः ।

ननु आक्षेपापरपर्यायायाः अर्थापत्तेः अनुमानाद्वा व्यक्तिः प्रतीयते कथं शाब्दधीविषयत्वमित्यत्राह- धीभेदे चेति । व्यक्तेरर्थापत्त्यादिगम्यत्वे आकृतिव्यक्त्योः भिन्नधीविषयत्वं स्यात् ततश्चेत्थं आकृत्येकधर्मकतया व्यक्तेः प्रतीयमानत्वमशक्यम् । अतस्तयोरेकधीवेद्यता सिद्धेति व्यक्तेरपि शाब्दधीविषयत्वमित्यर्थः । यदेतत् परतन्त्रस्वभावतया जातेः आकृतिव्यक्त्योरेकधीविषयत्वमुक्तं तद्ग्रन्थेप्युक्तमित्याह—तदुक्तमिति । नन्वेवमपि व्यक्तेः शाब्दधीविषयत्वेपि न शब्दार्थता युक्ता अनन्तत्वात् व्यक्तीनाम् प्रतिव्यक्ति सम्बन्धग्रहणाशक्तेरित्यत्राह-व्यक्त्यर्थत्वे

---

१. M अनवमर्श M प्रतिमेयता

व्युत्पत्त्यर्थमाकृत्युपलक्षणाश्रयणम्। अतः शाब्दैकदेशी व्याडिः व्यक्त्यर्थतां मेने। एवं च व्यक्तिमङ्गमवच्छिद्य सङ्ख्यादेरङ्गता। अन्योक्तिश्च वेदे व्युत्पत्त्यपेक्षया युक्ता। न चायमेकदेशिपक्षो युक्तः। कार्यान्वयानैकान्त्यात्। श्येनचितमित्यत्र व्यक्त्यनन्वयात् कर्मतेह श्येनस्य। कर्मण्यग्न्याख्यायामिति स्मृतेः। न चेष्टकाचयनान्मुख्यस्य कर्मतेति सदृशान्वये जातिसदृशता शक्येति प्रतीत्यन्वयोऽत्र जातेः। ननु उपलक्षणतया आकृतिः सर्वत्र प्रतीत्यन्वयिन्यस्तु नोपलक्षणम् कार्यधीकालेऽन्वयिनी। किन्तुसम्बन्ध-

---

चेति। यद्यपि समयकृतत्वं तर्कपादोक्तरीत्या निरस्तं तथापि वृद्धव्यवहारतो व्युत्पत्त्यर्थमाकृत्युपलक्षणाश्रयणान्न विरोध इति व्यक्तेः शब्दार्थत्वं युक्तम्। एतच्च शाब्दैकदेशिना व्याडिनाप्युक्तमित्याह—अत इति। इतोऽपि व्यक्तिरेव शब्दार्थ इत्याह—एवं चेति। षट्देया इति। सङ्ख्याया अङ्गत्वमङ्गभूतपदार्थावच्छेदाद्वाच्यम्। अङ्गत्वं च शब्दार्थस्यैव विनियोगात्। सङ्ख्यावच्छेदश्च साक्षात्सम्बन्धिन्या व्यक्तेरेव। अतः सङ्ख्याङ्गत्वबलादपि व्यक्तिरेव शब्दार्थः। तथा "यदि पशुरुपाकृतः पलायेत अन्यं तद्रूपवर्णवयसं" इत्यन्योक्तिबलात् व्यक्तिरेव शब्दार्थः। अन्यथाजातेरेकत्वात् अन्यतोक्तिर्विरुद्धा स्यादित्यर्थः।

इममेकदेश्यनुमतं व्यक्तिपक्षं दूषयित्वा आकृतिपक्षमुज्जीवयति—न चेति। कथं व्यक्तिपक्षो न युक्त इत्यत्राह—कार्येति। कथं कार्यान्वयस्यानैकान्त्यमित्यत्राह—श्येनेति। श्येनचितं चिन्वीतेत्यत्र श्येनाकृतेरेव वाक्यार्थान्वयो न व्यक्तेः। अतः तस्याः कार्यान्वयोऽनैकान्तइत्यर्थः। कथमाकृतेरेवान्वय इत्यत्राह-कर्मेति। कर्मण्यग्न्याख्यायामिति। कर्मण्युपपदे अग्न्याख्यायां अग्निपदाभिधेमस्थण्डिलाख्यायां चिनोतेर्धातोः क्विप्प्रत्ययस्मृतेः उपपदार्थभूतस्य श्येनस्यात्र कर्मता तावद्गम्यते। ततः किमित्यत्राह—न चेति। इष्टकाभिरग्निंचिनुत इति इष्टकाभिश्चयनश्रुतेः मुख्यस्य श्येनपदार्थस्य न कर्मता। किन्तु श्येनसदृशं चितं कुर्यादिति श्येनसदृशस्यैव कर्मतयान्वयः। आकृतिसादृश्यं चेष्टकाभिः शक्यम्, न व्यक्तिसादृश्यम्। तदुक्तमाचार्यैः नैकव्यक्तिसदृक्विम्बमित्यादिना। ननु चैवमपि प्रतीत्यन्वय एव जातेः न कार्यान्वय इत्यत्राह—इति प्रतीत्यन्वय इति। प्रतीत्यन्वयोऽपि श्येनचितमित्यत्र जातेरेव न व्यक्तेरित्यर्थः। ननु सर्वत्र गृह इव काकः सम्बन्धग्रहोपलक्षणतया आकृतिः प्रतीत्यन्वयिन्यस्तु किमिति श्येनचितमित्यादौ क्वचिदेव जातेरन्वय उक्तो ग्रन्थे इति चोदयति—नन्विति। परिहरति—नोपलक्षणमिति। व्युत्पत्त्युपायतया जातेः संवन्धग्रहणकाल एवान्वयो न कार्यरूपवाक्यार्थग्रहणकाले तत्काले तु तद्योग्यव्यक्ते-

ग्रहणकाले तेन क्वचिदन्वय उक्तः । एवं च क्वचिज्जातिः क्वचिद्व्यक्ति-रन्वयिनीत्यनवधृतपदार्थयुक्तपदवद्वेदवाक्यमप्रमाणमिति सङ्गतिपूर्वपक्षौ ।

राद्धान्तस्तु सर्वो हि धर्मी केनचिद्धर्मेण प्रतीयते प्रातिस्विकेन वा सामान्येन वा । गवादिशब्दान्न प्रातिस्विकधर्मेण धीः । न हि प्रत्यक्षा-दिवत् अन्योन्यविलक्षणव्यक्तिधीः शब्दात् किन्तु आकृतिधर्मकतया । न चोपलक्षणपक्षे तेन धर्मेण धर्मिता । पृथग्भूतेहि धर्मिणि उपलक्षणम् । ननु कार्यान्वयो व्यक्तिमात्रस्येति तदेव शब्दार्थः सिंहवदाकृतिः पञ्जर-वत् शब्दार्थगम्या । तन्न । आकृतिधर्मिकैव व्यक्तिरन्वयिनी इत्याकृता-वेवान्वयिधीः । यद्याकृतिः पञ्जरवदिष्यते तदा प्रातिस्विक एव व्यक्त्य-

---

रेवान्वय इति न सर्वत्र वाक्यार्थप्रतीत्यन्तर्भावाज्जातेरिति तस्याः क्वचिदन्वय इत्यर्थः । एवं पक्षद्वयमुपपाद्य एकस्यात्यन्वयनियमाभावात् अनध्यवसायात्मक-पूर्वपक्षमुपसंहरन् अध्यायसङ्गतिमाह—एवं चेति ।

राद्धान्तस्त्विति । धर्मिरूपाया व्यक्तेः धर्मप्रतीतिं विना प्रतीत्ययोगात् धर्म-भूतसामान्याकृतेः प्रतीतिस्तावदविवादा । ननु धर्मिप्रतीतेर्धर्ममात्रप्रतीतिर-पेक्षिता सा तु प्रातिस्विकधर्मप्रतीतेरस्तु किमाकृतिप्रतीत्येत्यत्राह—गवादीति । स्यादेतदेवं यदि गवादिशब्दात् प्रातिस्विकधर्मरूपितव्यक्तिधीः स्यात् न चैतदस्ती-त्यर्थः । तत्र हेतुः—न हीति । नन्वेवं प्रतीताप्याकृतिः उपलक्षणमस्तु तत्राह—न चेति । आकृतिधर्मकतयैव शब्दाद्व्यक्तिधीः उपलक्षणपक्षे च न तेन धर्मेण धर्मिता, कथमित्यत्राह—पृथगिति । पृथग्भूते धर्मिणि । धर्मान्तरेण व्यावृत्तया धीस्थे धर्मिणि धर्मान्तरं प्रतीयमानमुपलक्षणं, यथा गृहतया प्रतीते काकः । इह तु न शब्दात् धर्मान्तरेण व्यावृत्ततया प्रतीतिः । किन्तु आकृतिधर्मकतयैवेति आकृतिर्विशेषणमेव । ततश्च नागृहीतविशेषणान्यायेन सैव शब्दार्थ इति भावः । नन्वेवमपि व्यक्ति-प्रतीतिनिवेशित्वमात्रमेवाकृतेः कार्यान्वयस्तु तन्निष्पादनयोग्यव्यक्तेरेवेति सैव शब्दार्थः । यथा कश्चित् सिंहं पञ्जरस्थमेवानुभूतवान् तमेव प्रति अन्येन सिंह-मानयेत्युक्ते पञ्जरान्विततया सिंहे प्रतीयमानेपि कार्यान्वयी सिंह एव शब्दार्थः । आकृतिस्तु शब्दार्थभूतव्यक्त्यनुषङ्गसिद्धधीः पञ्जरवदिति चोदयति नन्विति ।

तन्नेति । यथैव शब्दादवगतिः तथैव शाब्दः कार्यान्वयोऽपीत्याकतिधर्मक-तयैव व्यक्तिप्रतीतेः तथैव कार्यान्वये जातेरपि कार्यान्वयोऽस्त्येवेत्यर्थः । विप-क्षेऽनिष्टमाह—यदि चेति । विशिष्टप्रतीतेः विशेषणपरतन्त्रत्वे स्वभावसिद्धेपि यदि व्युत्पत्तिसिद्धा जातिः पञ्जरवदन्वये बहिष्ठाऽभ्युपगम्यते तदा प्राति-

न्वयो वाच्यः तदा सर्वव्यक्त्यन्वये अनध्यवसायी शब्दः स्यात्। [1]सर्वव्यक्त्यन्वयस्याशक्यानुष्ठानत्वात्। एकव्यक्तेरन्वयेपि कस्या इत्यनध्यवसायिता। अथास्त्विति चेत् न तर्हि आकृतेरन्वयः अध्यवसायकरमन्वीयते यतः[2] यथा अक्ताश्शर्करा इत्यनध्यवसिते घृतान्वयः। अथ शब्दस्वभावात् गोत्वसम्बन्धितया व्यक्तिधीः अन्वयोऽपि तत्सम्बन्धाया एव व्यक्तेः इत्यध्यवसायः तर्हि गोत्वाकारेण व्यक्तिधीरित्यङ्गीकृतम्। एवं च गोत्वमेव वाच्यम्। अथ कार्यपर्यवसाय्यन्वयो न धीपर्यवसायी कार्यं च व्यक्तौ यथा दण्डिनोऽन्वये दण्डो धीपर्यवसाय्येव। तन्न। यत्र दण्ड उपलक्षणं तत्र दण्डो धीपर्यवसायी। यत्र तु दण्डितयैव विशिष्टधीः तत्र दण्डान्वयोऽस्त्येव। अखण्डशब्दे तु गवादौ गोत्वान्वय-

---

स्विक एव व्यक्त्यन्वयो वाच्यः अन्योन्यन्यावृत्तरूपेण व्यक्तेः कार्यान्वयोक्तिः स्यात् तदा को दोष इत्यत्राह तदेति। ननु कथं शब्दस्यानध्यवसायित्वमित्याशङ्क्य किं सर्वव्यक्त्यन्वय उत एकव्यक्त्यन्वय इति विकल्प्य प्रथमं पक्षं दूषयति—सर्वेति। द्वितीयं दूषयति—एकेति। एवमनध्यवसायात् तद्विधायकशास्त्रमेव न स्यात्। न च प्रकरणादिनाऽध्यवसानम् प्रकरणादिगतशब्दानामपि व्यक्तितया अनध्यवसितार्थत्वादिति भावः। ननु नैनत्पूर्वपक्षिणोऽनिष्टमिति शङ्कते—न तर्हीति। यथा अक्ता इत्यत्र अनध्यवसामेऽध्यवसायकरस्य घृतस्यान्वयः तथाऽत्रापि अध्यवसायकराकृतेरेवान्वयः व्युत्पत्त्यनुसारेण यथाप्रतीत्यन्वयोपपत्तौ तद्धानायोगादित्यर्थः। ननु व्यक्त्यन्वयपक्षेपि नानध्यवसायः यथावगति अन्वयस्य युक्तत्वात् अवगतिर्हि गोशब्दात् गोत्वाकृतिसम्बन्धितयैव व्यक्तेः न तु तद्व्यतिरिक्तप्रातिस्विकरूपान्तरसम्बन्धितया। अतो व्यक्त्यन्वयेऽपि नानध्यवसाय इति शङ्कते—अथ शब्देति। तर्हीति। विशिष्टधीर्विशेषणपरतन्त्रेति नागृहीतविशेषणान्यायेनाकृतिरेव शब्दवाच्येति मत्पक्ष एव त्वया आश्रितः स्यादित्यर्थः। स्यादेतदेवं यदि अवगतिमात्रनिष्ठोऽन्वयः स्यात्। स तु कार्यनिष्ठः कार्यं च व्यक्ताविति सैव शब्दार्थः। यथा दण्डिनमित्यत्र पुरुषस्यैव कार्यान्वयात् दण्डस्य धीपर्यवसायित्वमात्रमिति चोदयति—अथेति। तन्नेति। दण्डिनमित्यत्रापि यदादण्डस्याकारान्तरोपलक्षणविवक्षा तदैव धीपर्यवसायितया न कार्यान्वयित्वम्। यदा तु विशेषणविवक्षा तदा दण्डित्वेनैव विशिष्टधीः। तत्र विशिष्टस्य कार्यान्वयात् विशेषणस्य दण्डस्याप्यन्वयोऽस्त्येव।

---

१. A अश्वादि २. M करमन्वीयते यतः।

परता । सखण्डे दण्डान्वयो दण्डभागात् इति भेदः ।

कथं तर्हि व्रीहीन् प्रोक्षतीति व्यक्तिपर्यवसायितया अर्धवैसशम् । एवम् । अपूर्वीय[1] एव असाधारणे भाविकार्यवत्युपात्ते प्रोक्षणान्वय-इति योग्यव्यक्तिलक्षणा न तु व्यक्तेः शब्दार्थत्वात् । नन्वाकृतिः निर्व्यापारा । न क्रियासाधनतयाऽन्वयिनीति न शब्दार्थः । क्रियासाधनावच्छेदोऽपि न तया निर्व्यापारया । तन्न । न हि व्यापारकारितैव क्रियासाधनता ; किन्तु सति तस्मिन् भावः असति चाभावः । बुद्ध्या हि व्यक्त्या क्रिया साध्यत इति धीद्वारा अस्तु[2] साधनता । शब्दादाकृति-

नन्वेवं दण्डिशब्दवत् गवादिशब्दानामपि विशिष्टवाचकता स्यादित्यत्राह—अखण्डेति । अखण्डे तु गवादिशब्दे विशिष्टप्रतीतावपि नागृहीतविशेषणान्यायेन गोत्वान्वयपरता । सखण्डे तु दण्डयादौ प्रकृतिप्रत्ययाख्यावयवद्वयस्य विद्यमानत्वात् प्रकृतिभूतदण्डभागात् दण्डान्वयः प्रत्ययभागात् पुरुषान्वय इति युक्ता तत्र विशिष्टान्वयपरतेति भेद इत्यर्थः । नन्वेवं जातेरेव वाच्यतेति व्रीहीन् प्रोक्षतीत्यादौ कथं व्यक्तेः प्रोक्षणान्वय इति चोदयति—कथं तर्हीति । उत्तरं—एवमिति । न हि तत्रापि क्रियान्वयनियमबलात् व्यक्त्यन्वयः । किन्तु नियोगीयसंस्कारप्रोक्षणाद्यन्वयार्हत्व बलाद्यद्यपि अपूर्वीयत्वं जातेरपि तथापि न भाविकार्यवत्तया उपात्तत्वं साधारणत्वेनापरिमितत्वात् परिमितं चोपादेयम् । अतोऽपूर्वीय एवासाधारणभाविकार्यवत्युपात्ते प्रोक्षणादिसंस्कारान्वय इति तद्योग्यव्यक्तिपरता लक्षणावृत्त्या । न तु शब्दवाच्यतयेति नार्धवैशसं दोष इत्यर्थः । ननु सव्यापारस्यैव पश्वादेः क्रियासाधनत्वं लोके प्रसिद्धमिति निर्व्यापारतया आकृतेर्न तदर्हतेति क्रियान्वयाभावान्न शब्दार्थतेति चोदयति--नन्वाकृतिरिति । ननु साक्षात्साधनताभावेपि साधनावच्छेदादन्वयोऽस्त्विति तत्राह—साधनेति । निर्व्यापारतया अस्याः क्रियोत्पत्तियोग्यावच्छेदानर्हत्वादित्यर्थः ।

तन्नेति । न हि कारकत्वं व्यापारयोगित्वं नियतव्यापारोत्पत्तौ व्यापारान्तरोत्पत्तौ व्यापारान्तराभ्युपगमेऽनवस्थापत्तेः । किन्तु पूर्वक्षणस्थितिनियतत्वमात्रं कारकत्वोपयोगीत्यर्थः नन्वेवं व्यक्तिनिष्ठाया आकृतेर्न स्वरूपेण क्रियापूर्वक्षणस्थितिरिति न तदपेक्षमपि क्रियासाधनत्वमाकतेरित्यत्राह—बुद्धया हीति । न ह्यनवगतया व्यक्त्या क्रिया साध्यते व्यक्त्याकृतिश्चाकृतिधर्मकतयैवेति व्यक्त्यध्यव-

१. अपूर्वधिय A २. B अस्ति

¹रूपेणैव व्यक्तिधीरुक्ता। उपादेयव्यक्त्यपेक्षया सङ्ख्यान्वयः अन्यत्वव्यपदेशश्च। एवं क्रियागुणयोरपि शब्दार्थता नागृहीतविशेषणान्यायेन सिद्धा। आकृतिस्तु उदाहरणमात्रम्। सामारुणादिशब्देभ्यः तद्रूपतयैव धर्मिबुद्धेः। भाष्यव्याख्या टीकायां स्फुटा।

कथं पुनराकृतिव्यक्त्योरेकधीवेद्यत्वेपि आकृतेरेव शब्दार्थता न व्यक्तेरिति। न हि वेद्ये शक्तिः किन्तु वित्तिजनके वित्तिविषयतया शब्दार्थता आकृतिव्यक्त्योस्तुल्या। उक्तोत्तरमिदम्। उक्तं हि आकृति-

---

सायद्वारा अस्त्येवाकृतेरपि साधनत्वम् न च धर्मान्तरेण व्यक्तिधीः शक्या शब्दादाकृतिद्वारेणैव व्यक्तिप्रतीतेरुक्तत्वात्। एतदुक्तं भवति–यद्यपि यागोत्पत्त्यपेक्षया व्यक्तेरेव पूर्वस्थितिः तथापि अनुष्ठानापेक्षया पूर्वस्थितिराकृतेरेव। उपादानोत्तरकालभावित्वाद्व्यक्तिस्थितेः उपादानस्य चानुष्ठानाङ्गत्वात्। अत उपादानपूर्वस्थितिरेव साधनत्वापादिका। यथा चोदितार्थज्ञानानुवृत्तिश्चानुष्ठानहेतुरिति धीस्थतयाऽऽकृतिरेव पूर्वभावितया कारकम्। तच्च व्यक्तिपर्यन्तमिति सिद्धम्। द्रव्यविशेषावगमकाले तदुपादानकाले च यागनिष्पत्तिकाले च जातेरुपयोगात् साधनत्वमिति। ननु जातेरेव शब्दार्थत्वे कथं सङ्ख्यान्वयोऽन्यत्वव्यपदेशश्चेत्यत्राह— उपादेयेति। उपादेयव्यक्त्युपादानद्वारेणैवाकृतेः साधनत्वनियमात् उपादेयव्यक्त्यपेक्षया सङ्ख्याङ्गत्वं अन्यव्यपदेशश्चाकृत्यर्थत्वेपि घटत एवेत्यर्थः।

आकृत्यर्थगवादिशब्दे व्युत्पादितं राद्धान्तं क्रियागुणवाचिसामारुणादिशब्देष्वतिदिशति—एवं क्रियेति। अनुपात्तद्रव्यकवाक्यवर्तिगुणशब्दे अयं नयः उपात्तद्रव्यविषये गुणमात्रवाचित्वस्य वक्ष्यमाणत्वात् इयांस्तु विशेषः—जातिशब्दे जातिमात्रे शक्तिः। गुणशब्दे तु गुणे च गुणिद्रव्ये च इति। एतच्चारुणाधिकरणे स्पष्टयिष्यते। अथ व्यक्त्यन्तरेपि प्रयुज्यते न तर्हि व्यक्तिः शब्दार्थः सर्वसामान्यविशेषवियुक्ता व्यक्तिरित्यादिभाष्यव्याख्याटीकायामेव व्यक्तेत्याह भाष्येति। नन्वाकृतिव्यक्त्योः शाब्दधीवेद्यत्वे तुल्येपि आकृतिरेव शब्दार्थो न व्यक्तिरिति नियमे न कोऽपि हेतुरिति चोदयति कथं पुनरिति। एकग्रन्थेनाह–नहीति। यदि वेद्यनिष्ठा शक्तिः स्यात् तदा वेद्यभेदादेकत्र शक्तिरन्यत्र नेति शक्येतापि वक्तुमित्यन्वयव्यतिरेकापेक्षत्वात्। न च तथा वेद्ये शक्तिः किन्तु वित्तिजनके शब्दे। ततश्च वेद्यद्वयविषयाया अपि वित्तेरेकत्वात् तस्यां वित्तौ शक्तस्य शब्दस्य तदुभयविशेषसम्बन्धितया व्यपदेशात् तद्वित्तिविषययोराकृतिव्यक्त्योः शब्दार्थता तुल्यैवेत्यर्थः। उक्तोत्तरमिति। शब्दात धर्मिणि व्यक्तौ

---

१. A द्वारेणैव

धर्मेण धर्मिणि शब्दजाधीः। आकृतेर्हि प्रातिस्विकरूपं धर्मत्वं स्फुरत् धर्म्यालीढमेव स्फुरति नान्यथा। तदत्र अनन्यलभ्याकृत्यंशस्फूर्तौ शब्दशक्तिकल्पने धर्म्यंशस्फूर्तेरन्तर्भावो नान्तरीयक एव। अस्ति च एकधीवेद्यांशविशेषेपि हेतुशक्तिव्यवस्था प्रत्यभिज्ञायाम्। अत एव गुरुनये संविज्जन्मन्येव हेतुशक्तिः, न तत्स्वप्रकाशत्वे प्रातिस्विकतत्स्वभावान्तर्भावादेव तत्सिद्धेः।

---

धीराकृतिधर्मेणैव न प्रातिस्विकेन धर्मान्तरेण तस्याः स्फूर्तिरित्युक्तमेवेत्यर्थः। नन्वेतदयुक्तं किमाकृतिः प्रतीता व्यक्तिधीहेतुः उताप्रतीता। नाद्यःधीभेदापत्तेः। न द्वितीयः हेतुत्वासम्भवात्। तथा शाब्दधीविषयत्वमपि व्यक्तेः कथं ? अन्यव्यावृत्त विशेषरूपाहि व्यक्तिः न च शब्दात् तथा प्रतीयते इत्यत्राह—आकृतेर्हीति।

न हि अज्ञाता ज्ञाता वा आकृतिर्व्यक्तिधीहेतुः। किन्तु ज्ञायमानावस्थैव। द्विधाहि लोकेपदार्थाः स्वतन्त्राः परतन्त्राश्च। तत्र स्वतन्त्राणां ज्ञातानामेव हेतुत्वम्। परतन्त्राणां तु ज्ञायमानतयैव। तत्राकृतेः प्रातिस्विकमसाधारणं स्वरूपं धर्मत्वमन्यपरतन्त्रत्वं तच्छब्दात् स्फुरत् ज्ञायमानमेव धर्म्यालीढमेवान्तर्भावितमधर्मीभूतव्यक्तिकमेव स्फुरति। ज्ञायते नान्यथा। अतो न धीभेदापत्तिः व्यक्तेः शाब्दधीविषयत्वं च सिद्धम्। इदमेवापर्यवसानमपि यदन्तर्भावितधर्मिका धर्मधीरिति। अत एव आक्षेपादनुमादर्थापत्तेर्वा व्यक्तिधीरिति निरस्तम्। नन्वेवं व्यक्तेरपि शाब्दधीविषयत्वे तस्यामपि व्यक्तिरिति वाच्यतापत्तिरित्यत्राह—तदत्रेति। यस्मादेवमाकृतिधर्मस्वभावादेव व्यक्त्यन्तर्भावः तस्मादेवात्र गवादिशब्दविषये यस्यां स्फूर्तौ ज्ञाने शक्तिः शब्दस्य कल्प्यते तत् ज्ञानं द्व्यंशं, आकृतिरेकोंऽशः व्यक्तिरपरः तत्रानन्य लभ्याकृत्यंशस्फूर्तौ शब्दशक्तिकल्पने धर्म्यंशस्फूर्तेरन्तर्भावो नान्तरीयकः अवर्जनीयतयाभवति अनन्यलभ्यविषयत्वात् शक्तिकल्पनायाः। एवं च व्यक्त्यंशोऽकारणकः स्यादिति चोद्यं निरस्तम्। नान्तरीयकस्य पृथक्कारणापेक्षाभावात्। अत एव न, विशिष्टस्य वाच्यता। शक्तिकल्पनागौरवाच्च। न च शाब्दमतवदुभयापेक्षया उभयार्थविषयस्वीकारः शक्तेरनन्यलभ्यविषयत्वादेवेति भावः।

अत्र दृष्टान्तः—अस्ति चेति। यथा एकस्मिन्नेव सोयमिति प्रत्यभिज्ञाने द्व्यंशे तत्तांश एव संस्कारस्य शक्तिः नेदन्तांशे तथा अत्राप्याकृत्यंशस्फूर्तौ शक्तिः न व्यक्त्यशस्फूर्ताविर्त्यर्थः। ननु प्रत्यभिज्ञायामिदंतांशस्यावर्जनीयतया शब्दार्थस्वभाववत् संस्कारविषयत्वप्राप्त्यभावात् नेदं निदर्शनं युक्तमित्यत्राह—अत एवेति। यथा गुरुदर्शने संविद्धेतोरात्ममनः संयोगादेः तज्जन्मन्येव शक्तिः न तस्याः प्रकाश-

न चेयं समाधिविधा। आकृतिवाचिपदानन्तरं स्मृतिस्थैवाकृतिः सहचरितां व्यक्तिं स्वविशिष्टामप्यनुस्मारयति। तदेवमुद्बुद्धसंस्कारसचिवात् शब्दात् आकृतिविशिष्टमेकधीस्थम्। निष्कर्षादाकृतेर्व्यक्तिधीरित्युक्तम्। न व्यक्तौ शब्दवृत्तिः अतत्परत्वाच्छब्दस्येति। यतो व्यवस्थिते जातिवाचित्वे विधेयं तदेव तु कुतः। यदि तु संस्कारसचिवाच्छब्दात् स्वार्थविशिष्टधीः तर्हि जात्युपाधिशब्देभ्योऽपि स्यात्। न तु गोऽरुणादिशब्देभ्य एव विशिष्टधीरित्यभ्युपगमः स्यात्।

न च बहुसम्मतापि समाधिविधा—यच्छब्दात् बुद्धात् यद्बुद्धं शब्द-

---

कत्वेपि तत्र हेतुः प्रातिस्विकेति। तस्याः स्वभावस्तत्स्वभावः। प्रातिस्विकश्चासौ तत्स्वभावश्चेति प्रातिस्विकतत्स्वभावः तद्बलाधीनान्तर्भावादेव तत्सिद्धेः। अयमर्थः स्वेतरसमस्तविलक्षणसंवित्स्वभावादेव प्रकाशकत्वसिद्धेः संविदः प्रकाशस्वभावत्वात् तत्सिद्धौ तत्प्रकाशत्वमप्यवर्जनीयतया सिद्धमेवेति न तत्रापि हेतुशक्तिः तथाऽत्रापीति। कथं पुनराकृतिव्यक्त्योरित्यस्य परैरन्यथा समाधिरुक्तः स नोपेय इत्याह—न चेयमिति। तत्समाधिस्वरूपमाह—आकृतीति। निमित्तार्थस्मृतिकाले आकृतिवाचिगवादिपदश्रवणानन्तरमन्वयव्यतिरेकवती आकृतिस्मृतिः तथैव स्वसहचरितां स्वविशिष्टां व्यक्तिमप्यनुस्मारयति। ततः किमित्यत्राह—तदेवमिति। तस्मादेवमुद्बुद्धसंस्कारसचिवाच्छब्दादाकृतिविशिष्टा व्यक्तिर्धीस्था। तत्राभिधानकाले शब्दस्य विशेषणांश एव व्यापारः विशेष्यांशे तु संस्कारस्यैवेति शब्दस्पर्शाभावान्न व्यक्तेर्वाच्यतेत्यर्थः।

नन्वेवं संस्कारादेव व्यक्तिप्रतीतौ ग्रन्थकारेण किमिति आकृतितो व्यक्तिधीरित्युक्तमित्यत्राह—निष्कर्षादिति। संस्कारोद्बोधकत्वमात्रात् तथोक्तिः। आकृत्यभिधाने व्यापृतस्य न व्यक्तावपि वृत्तिरित्यनेनाभिप्रायेण शब्दस्य व्यक्तौ तात्पर्याभावादित्यर्थः। अयं समाधिः कुतो नोपेय इत्यत्राह—यत इति। स्यादेतदेवं यदि आकृतिवाचित्वं गवादिपदानां व्यवस्थितं स्यात् तत्र हेतोरभावादित्यर्थः। तथा आकृतिजातिरूपादिशब्दानामपि गोरुणादिशब्दसाम्यं च दुर्वारमित्याह—यदित्विति। तच्च नाभिमतमित्यर्थः। तथान्यैर्बहुभिर्व्याख्यातृभिः वाच्यलक्षणमुक्त्वा व्यक्तेरवाच्यत्वमुक्तं तच्च न युक्तमित्याह—न चेति। किंच तल्लक्षणं कथं च तद्बलाद्व्यक्तेरवाच्यत्वमित्यत्राह—यच्छब्दादिति। यद्बुद्धाच्छब्दात् बुद्धं शब्दस्य प्रयोगे निमित्तं च तस्य शब्दार्थता। शाब्दज्ञानविषयस्वात्मनिवृत्त्यर्थं शब्दप्रयोगे च निमित्तमिति विशेषणम् प्रत्यक्षादिविषयवत् शब्दस्यापि स्वबोधे हेतुत्वं सिद्धम्। तत्र घटादिपद-

प्रयोगे च निमित्तं तस्य शब्दार्थता। यद्यपि विशिष्टस्य शब्दप्रयोगे अन्वयव्यतिरेकानुविधानं तथापि विशेषणे निमित्तत्वकल्पनेनैव विशिष्टप्रयोगसिद्धेः न विशिष्टे शक्तिकल्पना। अथ विशेषणे निमित्ते तत्रैव धीः स्यात् न व्यक्तावपि। तन्न। नहि भवितारमजानतो भावधीरस्तीति सूक्तं विशिष्टमभिधानगोचरो विशेषणमभिधेयम्। अतः शब्दव्यापारावैषम्यात् न मुख्यताहानिरिति।

तन्न। कथं शब्दव्यापारविषयत्वेपि अनभिधेया व्यक्तिः। अतत्परत्वादिति चेत्। नहि शक्तिः तात्पर्यात्। गौणादावप्यापत्तेः। तात्पर्यं च कार्यासन्नतया व्यक्तावेव युक्तम्। अतात्पर्ये च मुख्यवृत्तिता कथं? स्वाभिमते तु प्रकारे शब्दस्पर्शाभावात् व्यक्तेः न तस्यां वृत्तिः।

---

वर्तिवर्णद्वयादिप्रतीतौ प्रतीयमानविशिष्टावस्थबोधहेतुत्वं च सिद्धमिति शब्दव्युदासाय बुद्धादित्युक्तम्। व्युत्पन्नादित्यर्थः। ननु गामानयेत्यादिशब्दप्रयोगे आकृतिविशिष्टाया व्यक्तेरेवान्वयाद्यनुविधानमिति विशिष्टस्यैव शब्दप्रयोगे निमित्तत्वात् विशिष्टस्यैव वाच्यत्वं युक्तमित्यत्राह—यद्यपीति। सत्यमेवं तथापि विशेषणाकृतिमात्रस्यैव शब्दप्रयोगे निमित्तत्वकल्पनेनापि तद्धिया नान्तरीयकसिद्धत्वात् विशिष्टप्रतीतेर्न विशिष्टे कल्पना युक्ता गौरवापत्तेरित्यर्थः।

ननु विशेषणमात्रस्य शब्दप्रयोगनिमित्तत्वे तन्मात्र एव धीः स्यात् न विशेष्यभूतव्यक्तावपीति शङ्कते--अथेति तन्नेति। भावरूपाकृतिसिद्धेर्भवितृरूपव्यक्त्यधीनसिद्धिकत्वात् शब्दस्य प्रातिस्विकप्रमितिसामग्रीभूतत्वाभावेपि सर्वसाधारणरूपेणैव व्यक्तिसिद्धेः विशिष्टस्य शाब्दव्यापाररूपाभिधानगोचरत्वं, अभिधेयत्वं च विशेषणमात्रस्यैवेत्यर्थः। यत एव शब्दव्यापारगोचरत्वं व्यक्तेरविशिष्टं अत एव तस्या मुख्यत्वमपीत्याह—अत इति। तन्नेति। तदुक्तस्यात्यन्तायुक्ततया पुनर्निषेधः कथमत्यन्तायुक्ततेत्यत्राह—कथं शब्देति। व्यापारविषयत्वे सत्यपि व्यक्तेः कथमनभिधेयत्वमुच्यते न कथञ्चिदपीत्यर्थः। ननु व्यक्तौ तात्पर्याभावादनभिधेयत्वमिति शङ्कते—अतदिति। दूषयति—न हीति। न हि शक्तिः तात्पर्यहेतुका किन्तु शब्दव्यापारविषयत्वे सति अनन्यथासिद्धप्रयोगविषयत्वं यत्र तत्र शक्तिः अन्यथा गौणलक्षणादिविषयेपि तात्पर्ये सति शक्त्यापत्तेरित्यर्थः। किञ्च तात्पर्यमपि व्यक्तावेव युक्तमनुष्ठानासन्नत्वादित्याह—तात्पर्यं चेति। तात्पर्यानुपगमे च तदङ्गीकृतमुख्यताहानिरित्याह—अतात्पर्ये वेति। ननु स्वाभिमतेऽपि प्रकारे एकधीवेद्यत्वात् शाब्दधीविषयतया तत्रापि शक्तिर्दुर्वारेत्यत्राह—स्वाभिमते त्विति।

आसन्नतया तद्द्वारता जातेः ।

विवरणे तु सङ्गतेर्विधान्तरं—व्यक्त्यर्थत्वे प्रतिव्यक्ति सम्बन्धग्रहणाशक्तेः[1] नौत्पत्तिकता सम्बन्धस्येति वेदाप्रामाण्यम् । न चाकृत्युपलक्षणात् सम्बन्धग्रहः उपलक्षणविलक्षणत्वादाकृतेः विशेषणत्वे तु आकृतेः शब्दार्थतापत्तेः व्यक्तिरशब्दार्थः स्यादिति । व्यक्त्यर्थत्वपक्षे नौत्पत्तिकता । अत एव आकृतिग्रन्थशेषता चास्याश्चिन्तायाः तत्रैव चोक्ता आकृत्यधि-

स्वपक्षे तु एकधीवेद्यत्वेपि शब्दस्पर्शाभावात् शाब्दव्यापारविषयत्वाभावात् व्यक्तेर्न तस्यां वृत्तिः शब्दस्य । न चैवमशाब्दत्वापातः शाब्दधीविषयत्वात्तत्सिद्धेः । एतेन यत्परैरुक्तं आकृतौ शब्दस्य मुख्या वृत्तिः व्यक्तौ लक्षणेति तन्निरस्तम् । सकृदुच्चरितस्य वृत्तिद्वयायोगात् । किञ्च क्वचित्प्रयोगे मुख्येऽर्थे वृत्तस्य प्रयोगान्तरे अर्थान्तरे मुख्यसम्बन्धिनि लक्षणा । न चाकृतिव्यक्त्योः क्वचिदपि व्यतिरेक इति न लोकसिद्धा लक्षणा । अतो व्यक्तौ शब्दस्य वृत्तिरेव नास्तीत्यर्थः ।

नन्वेवं यदि शब्दस्य व्यक्तौ वृत्तिरेव नास्ति कथं तर्हि व्यक्तिद्वारा जात्यङ्गता निर्वाहः येन व्यक्तेरप्यनुष्ठाननिवेश इत्यत्राह—आसन्नतयेति । जातिस्तावदमूर्ता द्रव्यद्वारैव साधनं, तत्राकृतिव्यक्त्योरेकधीवेद्ययोरेकप्रतीतिगतयोरत्यन्तासन्नतया व्यक्तिद्वारता, जातेः कार्यासन्नतया वा तद्द्वारता जातेः । एवं च व्यक्तिं विना जातिविनियोगापर्यवसानात् व्यक्तेरप्यङ्गताऽऽपद्येतेति भावः । वस्तुबलमते तु व्यक्त्यर्थतयैव पूर्वः पक्षः । तत्र शब्दार्थसम्बन्धस्य च औत्पत्तिकत्वहानापत्तेः वेदस्याप्रामाण्यमिति प्रकारान्तरेण सङ्गतिरुक्तेत्याह—विवरण इति । कथमौत्पत्तिकत्वहानिरित्यत्राह—व्यक्त्यर्थत्व इति । अन्योन्यव्यावृत्तस्वरूपत्वात् व्यक्तीनां तदपेक्षया अन्वयव्यतिरेकासम्भव इति न तदधीना अनादिव्यवहाराद्व्युत्पत्तिरिति समयकृतत्वापत्तेरनित्यत्ता सम्बन्धस्येति वेदस्याप्रामाण्यापत्तेः लक्षणासङ्गतिरित्यर्थः ननु सर्वव्यक्त्यनुगताकृत्युपलक्षणाक्षेपः सम्बन्धग्राहोऽस्तु इत्यत्राह—न चेति । तत्र हेतुः—उपलक्षणेति । यद्युपलक्षणत्वायोग्यता आकृतेस्तर्हि विशेषणतैवास्तु इत्यत्राह—विशेषणत्वेति । यत एवं व्यक्त्यर्थत्वरूपमपेक्ष्य सम्बन्धग्रहस्य

१. णासिद्धेः

करणे निपुणतरं वक्ष्याम इति वदता। इह तु व्यक्तेः क्रियान्वयमुखेन आकृत्यर्थत्वाक्षेपो विनियोगत एवेति विनियोगोत्थाप्रामाण्यसमाधानार्थायां त्रिपाद्यां इयं चिन्ता नाद्यपादे युक्ता। शेषं सुगमम्।

इति श्रीभवनाथमिश्रविरचिते नयविवेके
प्रथमाध्यायस्य तृतीयः पादः।



---

नौत्पत्तिकता। अत एव एतदधिकरणस्य आकृतिग्रन्थशेषता तत्रैव ग्रन्थकारेणोक्तेत्याह—अत एवमिति। नन्वेवं तर्हि तत्रैवेयं चिन्ता किमिति न कृतेत्यत्राह—इह त्विति। विनियोगमुखाप्रामाण्यनिराकरणार्थेयं त्रिपादी। इह तु आकृत्यधिकरणे व्यक्तेः क्रियान्वयरूपविनियोगमुखेनाकृत्यर्थताक्षेपो व्यक्त्यर्थत्वेन यदप्रामाण्यं तन्निरासः क्रियत इति त्रिपाद्यामेवेयं चिन्ता युक्ता न प्रथमपाद इत्यर्थः। संशयाक्षेपसमाधानभाष्यव्याख्यानं दीपशिखायां व्यक्तमित्याह—शेषमिति।

इति श्रीवरदराजबुधवर्यविरचितायां नयविवेकदीपिकायां
प्रथमाध्यायस्य तृतीयः पादः समाप्तः

# नयविवेके प्रथमाध्यायस्य

## चतुर्थः पादः

### ।।१।। उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ।।१।।

तस्य निमित्तपरीष्टिरिति प्रामाण्यमध्यायार्थ इति प्रतिज्ञातम् । तदर्थं बाह्यहेतूत्थमप्रामाण्यं स्थूलतमं आद्यपादे निरस्य द्वितीये स्थूलतरं अर्थवादमन्त्रोत्थं निरस्तम् । तृतीये स्थूलं स्मृत्युत्थं निरस्तम् ।

अधुना विधिप्रभेदोत्थं[1] सूक्ष्मं निरस्यत इति पादार्थभेदः अनुक्रमश्च । [2]कर्मगुणश्रुतौ गुणविधिरेव गुणपरत्वाद्वाक्यस्य रक्तः पटो भवतीति हि

---

अथ चतुर्थः पादः

### ।।१।। उक्तं समाम्नाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ।।१।।

'ज्योतिष्टोमेन यजेत स्वर्गकामः' 'विश्वजिता यजेत पशुकामः' 'उद्भिदा यजेत पशुकामः' 'बलभिदा यजेत' इत्यादिसोपपदाश्चोदना उदाहरणम् । तत्र संशयः–किमप्रमाणमुत प्रमाणमिति । तदर्थमियं चिन्ता–किमुद्भिदादिपदानां गुणविधिपरत्वमुत कर्मनामत्वमिति । नन्वत्र यथाभाष्यं गुणविधिनामधेयपरतैव विचारस्य युक्ता, न पुनरप्रामाण्यपरता यथा परेषामित्यत्राह—तस्येति । प्रामाण्यस्यैवाध्यायार्थतया प्रतिज्ञातत्वात् तस्यैव प्रतिपाद्यत्वात् तत्परतयैव भाष्यमपि व्याख्येयम् । अन्यथा सङ्गत्यभावापत्तेरित्यर्थः । नन्वेवमपि कथं पादान्तरता ? कथं वा पादानन्तर्यमत आह—तदर्थमिति । प्रामाण्यप्रतिपादनमप्रामाण्यनिरासेनैव शक्यम् नान्यथा । अतस्तदर्थं स्थूलतमस्थूलतरस्थूलसूक्ष्मभेदेन समुत्थितमप्रामाण्यं अस्मिन्नध्याये पादचतुष्टयेन निरस्यत इति पादार्थभेदात् पादान्तरता गतपादानन्तर्यं च । अयं च शिष्याणां सुखग्रहणार्थं सर्वपादव्यापितयाऽत्रोक्त इति वेद्यम् । ननु यत्र कर्म प्राप्तं तत्र गुणविधिः न चोद्भिदादिषु कर्मप्राप्तिरिति कथं गुणविधितया पूर्वपक्षइत्याशङ्क्य ग्रन्थोक्तं पूर्वपक्षमनुभाषते—कर्मगुणेति । कर्मणो गुणस्य च श्रवणे गुणविधिरेव न कर्मविधिः गुणपरत्वाद्वाक्यस्य रक्तपटवाक्यवदित्यर्थः ।

---

१. R विधान भेदोत्थं  २. B सगुणकर्म

गुणसंबन्धार्थं वाक्यं दृष्टम् । अयं भावः—उभयपरत्वे तात्पर्यगौरवात् वाक्यस्य एकमात्रपरत्वम् । तत्र कर्ममात्रपरत्वे गुणश्रुतिर्व्यर्था । गुणपरत्वे तु आश्रयसमर्पकतया कर्मश्रुतिरप्यर्थवतीति गुणविधिरेव । सर्वत्रैवं कर्माविधेः लौकिककर्माश्रयो गुणविधिरेव । अतो मानान्तरतः कर्मकर्तव्यतयैव गुणकर्तव्यतेति वेदो मानान्तरापेक्षः कर्तव्यतायामित्यप्रमाणम् ।

न च लोकतः प्रवृत्ते भोजनेप्राङ्मुखतादिनियमवदनपेक्षता । प्राङ्मुखता हि भोजने प्रवृत्तस्य पुरुषार्थतया नियम्यते, न कर्माङ्गतया उद्भिदादेस्तु कर्माङ्गतया विधिः ।

---

ननु कर्मगुणोभयश्रवणे उभयोरप्यप्राप्तत्वात् उभयविधिपरतैव युक्ता न गुणमात्रपरतेत्याशङ्क्याह—अयं भाव इति । सहश्रुतनिखिलपदानां सम्भूयैकार्थबोधकत्वं स्वतो व्युत्पत्तिसिद्धम् । तत्रोभयविधिपरत्वे तात्पर्यगौरवाद्वाक्यस्य व्युत्पत्तिसिद्धैकार्थबोधकत्वस्य बाधापत्तेरेकविधिपरतैवाश्रयणीया । नन्वेवमपि कर्ममात्रपरतैवास्त्वित्यत्राह—तत्रेति । केवलकर्मविधौ गुणस्य विध्यसंस्पर्शात् गुणश्रुतेर्वैयर्थ्यं स्यात् । ननु गुणविधिपरत्वेऽपि कर्मश्रुतेर्वैयर्थ्यं समानमित्यत्राह—गुणपरत्वे त्विति । गुणविधिपरत्वे हि विधिसमर्पकतया गुणश्रुतिस्तावदर्थवती । कर्मश्रुतिरपि निराश्रयगुणविध्ययोगात् आश्रयसमर्पकतया अर्थवतीति गुणविधिपरतैव युक्तेत्यर्थः । नन्वेवं गुणविधिपरत्वेऽपि कथमप्रामाण्यं वेदस्येत्यत्राह—सर्वत्रेति । वेदे सर्वत्र सोपपदत्वाद्वाक्यानां उपपदाकृष्टगुणपरतया[1] उक्तप्रकारेण कर्मविध्यसम्भवे वेदे कर्माभावात् लौकिककर्माश्रयोऽयं गुणविधिः स्यात् । यद्यपि 'उद्धन्ति' 'उपव्ययते' इत्यादिका निरुपपदापि कर्मश्रुतिरस्ति तथापि एकस्य तिङन्तस्य पदस्यान्विताभिधानाय कारकापेक्षायां प्रकरणादिसन्निहितोपपदेनैवाभिधानपर्यवसानमिति तत्राप्युपपदाकृष्टतात्पर्यतयैवेति लौकिककर्माश्रय एव गुणविधिरिति भावः । ननु भवत्वेवं लौकिककर्माश्रयत्वं ततः किमित्यत्राह—अत इति । प्रधानकार्यता हि यत्प्रमाणाधीना तदधीनैवाङ्गकार्यता । अतो गुणकार्यतापि प्रधानभूताश्रयकर्मकार्यताप्रामाण्याधीनेति वेदो गुणकार्यतायामाश्रयकर्मप्रापकमानान्तरापेक्ष इति सापेक्षतया न प्रमाणमित्यर्थः । ननु यथा लोकतः प्रवृत्ते भोजने तदाश्रित्य प्राङ्मुखतादिविधौ नानपेक्षत्वहानिः तथाऽत्राप्यस्तु तत्राह—न चेति । तत्र हेतुः प्राङ्मुखता हीति । कर्मानङ्गत्वाङ्गत्वाभ्यां वैषम्यान्न तद्वदनपेक्षत्वमिहेति ग्रन्थोक्तमित्यर्थः । नन्वेवं प्राङ्मुखतावदत्रापि कर्मानङ्गतयैव फलार्थो गुणविधिरस्तु इत्यत्राह—

---

१. B गुणतात्पर्यतया

अयं भावः—प्रसिद्धेऽन्यतः प्रवृत्ते कर्मण्याश्रितो विधिः पुरुषार्थ एव। यत्र तु यागादावन्यतः प्रवृत्तिरसिद्धा तदाश्रितो गुणः तत्रैव विधेयः। नहि अदृष्टफले यागादौ लोकतः प्रवृत्तिः सिद्धा। एवं कर्मणि गुणविधौ स्थिते वेदे कर्मविधेः[1] पारिशेष्यात् लौकिकं[2] कर्म मृग्यम्। लोकेऽपि चेन्नास्ति वरं दृष्टार्थस्त्यागादिरेव यजेतेत्यनेनोक्तः प्राप्तार्थे यथाप्राप्ति तात्पर्यम्।

न चैवं सापेक्षतेति व्यावृत्य न्याय्यो यागविध्यङ्गीकारः, लौकिके

---

अयं भाव इति। युक्तं प्राङ्मुखतादौ विधेः पुरुषार्थत्वम् कारकविशेषसाध्यतया फलविशेषसाधनतया भोजनादेर्लोकप्रसिद्धतया च तत्र रागत एव प्रवृत्तौ सिद्धायां तदाश्रितस्य कर्माङ्गत्वानर्हस्य तत्प्रवृत्तपुरुषार्थतयैव विध्यर्हत्वात्। इह तु यागादौ अन्यतो रागात् प्रवृत्त्यभावात् प्रवृत्तपुरुषार्थतया विध्यसम्भवात् सिद्धसाध्यसमभिव्याहारात् कर्मणः शब्दात् साध्यत्वावगतेः तदाश्रितो गुणस्तत्रैव कर्मण्यङ्गतया विधेयः इत्यर्थः। ननु यागादौ कथं न लोकतः प्रवृत्तिरित्यत्राह—न हीति। लोकतोहि अन्वयव्यतिरेकगम्यफले प्रवृत्तिसिद्धिः यागादौ तु न तथा अदृष्टफलत्वादित्यर्थः। नन्वेवमपि कथं कर्माङ्गतया गुणविधिः? गणविधिर्हि विहितकर्मप्रत्यभिज्ञया भवति। न हि वेदे क्वचिदपि कर्मणो विधिः, अतो गुणविधिपक्षोऽयमनुपपन्न इत्यत्राह—एवमिति। एवं कर्मणि गुणविधौ स्थिते उक्तप्रकारेण तात्पर्यलाघवादिना कर्माङ्गतया गुणमात्रविधौ तात्पर्येऽवधृते सति आश्रयकर्मान्वेषणे एतत्तुल्यतया वेदे सर्वत्र कर्मणो विहितस्याभावात् पारिशेष्याल्लौकिकं कर्माश्रयणीयम्। तत्रापि यदि कर्म यागादिकं नास्ति तदा यज्यादिपदैर्लक्षणया दृष्टार्थत्यागादिकं लौकिकमेवानूदितमित्यर्थः। ननु लौकिककर्माश्रयणेन गुणविधौ लक्षणैव दोष इत्यत्राह—प्राप्तार्थ इति। श्रुतिबलेन गुणविधौ कर्मश्रुतेरनुवादतात्पर्येऽवधृते प्राप्तार्थेऽनुवादके पदे यथाप्राप्ति यादृशं कर्म लोकप्राप्तं तत्रैव तात्पर्यं युक्तमिति अनुवादे न लक्षणा दोषायेत्यर्थः। ननु लौकिककर्माश्रयणेन गुणविधौ सापेक्षतापत्तेः व्यावृत्य लौकिकात् वेद एव यागविधिरस्तु अनपेक्षत्वार्थमित्यत्राह—न चैवमिति।

अनपेक्षत्वस्यैव व्युत्पत्तिसिद्धत्वाभावात् प्रत्युत सापेक्षत्वस्यैव व्युत्पत्तिसिद्धत्वात् सापेक्षतैवोचिता। न चैवं त्यागलक्षणायां तस्य रागतः प्राप्तिप्रतिसन्धानात् पुनरपि प्राङ्मुखतावत्पुरुषार्थतया विधिः स्यादिति वाच्यम्। प्रथमप्रतीतकर्माङ्गत्वबाधापत्तेरित्यर्थः। ननु लक्षणापरिहारार्थं लौकिकसिद्धमातृगणयागं यजेतेत्यनूद्य तत्रैव गुणविधिरिति परोक्तैव रीतिरस्तु अत आह—लौकिक इति।

---

१. कर्मविधिः B  २. लोकतः A

मातृगणयागे गुणविधिरिति च मन्दम्। नानुमेयवेदमूलो मातृगणयागः, श्रुतवेदे [1]कर्मविध्ययोग्ये न योग्यानुमा। अवेदमूलकश्चेत् भ्रममूलो न यागः स्यात्। वेदस्पृष्टदेवतान्वयी हि यागः, न च देवतागुणविधेरेव लौकिके देवतालाभः, गुणविधेरेवाभावात्। तदा हि वेदोक्तापि देवता न वेदमेयेति न देवता स्यादिति त्यागमात्र एव गुणविधिः। किञ्चोपपदार्थोऽपि कामी विधातुमशक्यः तत्परत्वे विधिशून्यता। कामिपदं न कर्तृपरं किन्तु फलिपरं, न च फलं विधेयम्।

ननु [2]गुणवत्कर्मविधौ कामीचान्वयी गुणोऽपि सन्निहितकर्माश्रयः।

---

कथं मन्दतेत्यत्राह—नानुमेयेति। गणयागस्य प्रत्यक्षवेदमूलत्वाभावेनानुमेयवेदमूलता वाच्या। सा च न सम्भवतीत्यर्थः। कथमित्यत्राह—श्रुतेति। पूर्वपक्षन्यायेन प्रत्यक्षवेदस्य कर्मविध्यनर्हत्वे तत्पूर्वकानुमानानवतारात् कर्मविधायकवेदानुमा न सम्भवतीत्यर्थः। ननु मामूदनुमेयवेदमूलता को दोष इत्यत्राह अवेदेति। श्रुतानुमेय वेदमूलत्वासम्भवे अन्वयव्यतिरेकाननुविधायिफलतया पारिशेष्यात् भ्रममूलतैव गणयागस्य। ततश्च याग एव न स्यात्। वेदगम्यदेवतायुक्तस्यैव यागत्वादित्यर्थः। नन्वस्मिन् पक्षे गुणविध्यङ्गीकारात् देवतारूपगुणविधेः देवतालाभात् लौकिकस्यापि यागत्वं युक्तमित्यत्राह—न चेति। तत्र हेतुः—गुणविधेरिति। पदन्नये चेत्यादिवाक्यस्य देवतारूपगुणविधायकस्य भावात् कथमभाव इत्यत्राह—तदा हीति। वेदमेया हि देवता न च पूर्वपक्षे वेदो गुणविषये प्रमाणम् प्रधानानुविधायित्वेन अङ्गानां प्रधानक्रियासंबन्धिहेतुमानान्तरसापेक्षत्वात्गुणविधेः। अतः प्रमाणभूतवेदगम्यदेवतासंसृष्टयागरूपाभावात् लौकिकत्यागमात्र एव गुणविधेरप्रामाण्यमित्येतावता पूर्वपक्षिणोऽभिमतसिद्धिः न गुणविधिनिर्वाहोऽपीत्यर्थः। एवं विधियोग्योपपदार्थे तदाकृष्टतात्पर्यतया लौकिके तद्विधानादप्रामाण्यमुपपादितम्। स्वर्गकामादौ तु [3]उपपदार्थत्वेपि विधातुमशक्यतया विध्यसंस्पर्शात् सुतरामप्रामाण्यमित्याह—किञ्चेति। कथमशक्यतेत्यत्राह—तत्परत्व इति।

कामिविधिपरत्वे हिरण्यस्रज इतिवदुपसर्जनार्थकामनाविधिपरता स्यात्। सा चेच्छारूपा न विधियोग्येति विधिशून्यतैव स्यादित्यर्थः। कामिनः कर्तृत्वेन विधिरस्त्वित्यत्राह—कामीति। कामिपदं हि न कर्तृपरं अपि तु नियोज्यपरं, न च नियोज्यस्य विधिः अनुपादेयत्वात्। अत एव न फलस्यापि विधिः। एतच्च षष्ठाद्ये स्पष्टयिष्यते। ननु लौकिककर्माश्रयाद्वरं गुणविशिष्टकर्मविधिरेव। तथा

---

१. योगे M २. गुणविधौ A ३. B उपपदार्थस्यापि।

भावार्थस्य च विधिविषयता भावार्थनयसिद्धा। गुणस्य च विधिस्पर्श इति सर्वं सुस्थम्। यथा दण्डिशब्दात् दण्डवति धीः तथैव गुणवत्कर्म धीस्थं विधेयमिति न विरुद्धत्रिकद्वयं बाधकम्। न चानेकविधिः।

मैवम्। मत्वर्थीयनिर्देशाद्धि तद्वति धीः। नेह तथा। अथ कारकतया निर्देशेऽपि तद्युक्तक्रियाधीः। सत्यम्। [1]पदद्वयान्वयात्तु सा, नैकपदार्थतया। न च स्वकरणयोगितया करणीभूता क्रिया धीस्था। साध्या हि तथा सोमेन यजेतेतिवत्। [2]मत्वर्थादेव हि एकपदार्थतया, एकार्थे धीस्थे विधिः। न चात्र मतुब्लोपः। गुणवचनेषु तल्लोपानुशासनात्। न चात्र

सति समभिव्याहृतसकलपदान्वयोपपत्तिः स्यात्, भावार्थनयोक्ताविरोधश्चेति चोदयति—नन्विति। ननु विशिष्टप्रतीतिहेत्वभावे न विशिष्टविधिः किन्तु गुणस्य कर्मणि विधिः कर्मणश्च फले विधिरिति विरुद्धत्रिकद्वयापत्तिरनेकार्थविधिश्चेत्याशङ्क्य दृष्टान्तेनोपपादयति—यथेति। यथा दण्डिशब्दात् प्रकृतिप्रत्ययसमभिव्याहारात् दण्डवति धीः। तथेहाप्युद्भिदा यजेत पशुकाम इति क्रियाकारकसमभिव्याहारबलात् गुणविशिष्टं कर्म धीस्थं विधेयमिति न विरुद्धत्रिकद्वयं, नाप्यनेकार्थविधिरित्यर्थः। मैवमिति। स्यादेतदेवं यदि विशिष्टप्रतीतिर्भवेत्। न च सात्र सम्भवति मत्वर्थनिर्देशाभावात् दण्डीत्यत्र तु मत्वर्थीयेनिप्रत्ययबलादुक्ता विशिष्टधीरित्यर्थः। ननु मत्वर्थनिर्देशे यथा विशिष्टधीस्तथा कारकतया निर्देशेऽपि कारकयुक्तक्रियाधीरस्त्येवेति चोदयति—अथेति। सत्यमिति। सत्यं कारकान्वये तद्युक्तक्रियाधीः। किन्तु सा नैकपदार्थतया, पदद्वयान्वयाधीनत्वात्। ततश्च विध्यावृत्तिर्दुर्वारेत्यर्थः। ननु पदद्वयाधीनत्वेपि न विध्यावृत्तिः किन्तु गौरवं सोमेन यजेतेतिवत् इत्यत्राह—न चेति। कामिपदान्वयात् फलभावनाकरणत्वेन प्रतीयमानायाः क्रियायाः न स्वकरणयोगितया धीस्थितिर्युक्ता करणस्य करणाना[3]-काङ्क्षित्वात्। कथं तर्हि सिद्धान्ते सोमेन यजेतेति विशिष्टधीरित्यत्राह—साध्येति। या क्रिया कामिपदविरहात् साध्यतयैव प्रतीयते सा स्वकरणयोगितया प्रत्येतुं योग्येत्यर्थः। ननु यथा कृष्णग्रीवेण पशुना यजेतेत्यादौ कृष्णग्रीवत्वादिशिष्टपशोः करणत्वं तथेहास्तु तत्राह—मत्वर्थादेवेति। मतुप्समानार्थबहुव्रीहिबलादेव एकपदार्थतया एकार्थे धीस्थे विधिः न पदद्वयमात्रात् मत्वर्थशब्दनियतत्वात् वाक्यार्थविशिष्टप्रतीतिः। न चेह तथा मत्वर्थशब्द इत्यर्थः। ननु शुक्लः पट इत्यत्र मत्वर्थीयाभावेपि यथा पदद्वयान्वयमात्रात् विशिष्टप्रतीतिस्तथेहाप्यस्तु अत आह

१. पदद्वयान्वयान्तं M २. मत्वर्थीयादेव M ३. करणान्तरानर्हत्वात् B।

मत्वर्थलक्षणया उद्भिद्वत्तेति[1] वाच्यम् । मुख्यार्थस्यान्वये हेत्वभावे लक्षणाश्रयणं मानान्तरापेक्षत्वादेव नान्यथा । मत्वर्थलक्षणायां हि सावयवोऽप्येक एव पदार्थ इति न विध्यावृत्तिः समासार्थविधाविव । मत्वर्थे चाख्यातार्थनिवेशादाख्यातार्थविधिरदोषः[2] इति । नामार्थत्वे तु कार्यपरता न स्यात् । यच्च भाष्ये मन्त्रार्थवादत्वा[3]सम्भवात् गुणविधित्वमुक्तं, तदिह गुणविधिरेवावशिष्यत इत्यभिमतम् ।

ननु च कर्मनामतया याज्ञिकप्रसिद्धिः । तन्न । निर्मूलत्वात्प्रसिद्धेः । लोकव्यवहारे हि खनित्रादौ प्रसिद्धिः । एतन्नयमूलता तु साध्या ।

---

न चात्रेति । युक्तं तत्र गुणवचनेषु मतुब्लोपानुशासनात् मत्वर्थप्रतीतेर्विशिष्टत्वम् । न चोद्भिदादौ मतुब्लोपानुशासनमित्यर्थः ।

ननु तर्हि मत्वर्थलक्षणया विशिष्टधीरस्तु अत आह—न चेति । तत्र हेतुः मुख्येति । मुख्यार्थस्यान्वयोग्यत्वे लक्षणाहेतुसम्बन्धानुपपत्त्यभावेपि यल्लक्षणाश्रयणं तन्मानान्तरापेक्षत्वादेव नान्यथेति सापेक्षत्वापत्तिरित्यर्थः । ननु मत्वर्थलक्षणायामपि कथं न विध्यावृत्तिः येन यत्नात्तन्निरास इत्यत्राह—मत्वर्थेति । तत्पक्षे हि त्र्यङ्गैरित्यादिसमासाद्यर्थविधाविव गौरवमात्रम् न विध्यावृत्तिः । सावयवत्वेप्येकपदार्थत्वादित्यर्थः । ननु मत्वर्थलक्षणायामपि नाख्यातार्थविधिः पदार्थान्तरस्यैव तद्वत्तया लक्ष्यत्वेनाख्यातार्थस्य विध्यननुप्रवेशादित्यत्राह– मत्वर्थ इति । उद्भित्पदस्य मत्वर्थलक्षणावत्वे आख्यातार्थ एव तद्वत्तयोपपदलक्ष्यः समभिव्याहारात् इत्याख्यातार्थस्य मत्वर्थेऽनुप्रवेशात् आख्यातार्थस्य विधिरदोष इत्यर्थः ।

ननु अन्यस्यापि तद्वत्त्वसम्भवे कथं समभिव्याहारमात्रादाख्यातार्थानुप्रवेश इत्याशङ्क्य विपक्षे दोषमाह--नामार्थ इति । यद्याख्यातार्थानुप्रवेशो न स्यात् तदा नामार्थपरमेवेदं वाच्यम् तच्चायुक्तम् भावार्थविषयत्वाद्विधेः । अतो नामार्थमात्रे विधेये कार्यपरता न स्यादित्यर्थः । नन्वत्र भाष्ये न तावदर्थवाद इत्यादिना मन्त्रार्थवादत्वासम्भवो गुणविधौ हेतुरुक्तः । न स हेतुः किन्तु क्रियाप्राप्तिः अन्यथा विशिष्टविध्यापत्तेः [4]स्तावकत्वाद्यभावस्य च गुणविधिहेतुत्वे स्वर्गकामो यजेतेत्यपि गुणविधिः स्यादित्याशङ्क्य भाष्यमनुभाष्य तात्पर्यमाह—यच्चेति । पारिशेष्यप्रदर्शनार्था तदुक्तिः न साक्षाद्धेतुत्वेनेति भावः ।

ननु नामत्वेनापि याज्ञिकप्रसिद्धेः पारिशेष्यासम्भव इति चोदयति—नन्विति । कर्मनामतया याज्ञिकप्रसिद्धिः मूलशून्यतया नादरणीयेत्यर्थः । ननु याज्ञिक-

---

१. M तद्भिद्यत इति २. A विधिरप्येष ३. M वादार्थत्व ४. B अर्थवादत्वा ।

खनित्रादिस्तु यथार्हं करणमस्तु। भाष्ये तु प्रकृतौ ज्योतिष्टोमे गुणविधिरिति, गुणविधिः प्रकृतौ तु लौकिके ज्योतिष्टोमे तदीयसोमविधौ यदङ्गीकारार्हं लौकिकं कर्म तत्रेति यावत्। न च परमतेपि ऋजु भाष्यम्। भट्टोक्तोऽपि ज्योतिष्टोमे गुणविधिरनुपदे निरस्तः। व्यवहितो ह्युद्भिदादेः ज्योतिष्टोमः सहस्रदक्षिणेन यजेतेत्यनेन। अनस्सहस्रदक्षिणे गौणे ज्योतिष्टोमे गुणविधिरनुपदोक्तः। न च विध्यन्तरार्थं प्रकृत्यपेक्षणाद्वरं गुणार्थमपेक्षेति प्रकृतौ विधिर्युक्त इति वाच्यम्। गुणविधिपक्षेहि प्रकृतिरपि

---

प्रसिद्धेः लोकव्यवहारो मूलमस्तु तत्राह--लोकेति। खनित्रादावुद्भिदादेः लौकिकप्रसिद्धेः स तावन्न मूलमित्यर्थः। ननु तर्हि एतद्राद्धान्तनयो मूलमस्तु तत्राह--एतन्नयेति। पूर्वपक्षावस्थायां तदसिद्धेः न तन्मूलतापीत्यर्थः। ननु खनित्रादेः यागसाधनत्वप्रकारे अप्रसिद्धे कथं गुणविधिरित्यत्राह--खनित्रादिश्चेति। यस्य यस्य गुणस्य यथा यथा करणत्वं सम्भवति तस्य तस्य तथा करणत्वमस्तु न तद्विशेषनिरूपणे अस्माकं पूर्वपक्षिणामास्था अनुष्ठानोपयोगित्वात्तस्येत्यर्थः। ननु लौकिककर्माश्रयो गुणविधिरित्येवंरूपे गुरुमते प्रकृतौ ज्योष्टोमे गुणविधिरिति भाष्यं विरुद्धमित्याशङ्क्य तद्भाष्यमपि गुरुमतानुरोधेन योजयति--भाष्ये त्विति। प्रकृतौ गुणविधिः प्रकृतौ गुणविध्याश्रये इति प्रकृतिः लौकिके कर्मणि वर्तते। कथं तर्हि ज्योतिष्टोमत्वमित्यत्राह—ज्योतिष्टोमेति। ज्योतिष्टोमे ज्योतिष्टोमसदृशे वस्तुगत्या सिद्धान्ते सोमेन यजेतेति सोमाख्यगुणविधेराश्रयभूतं ज्योतिष्टोमाख्यं कर्म तद्वाचकं च ज्योतिष्टोमपदम् तत्र पूर्वपक्षावस्थायां सोमगुणविध्याश्रयत्वं लौकिकस्य कर्मण इति सोमगुणविध्याश्रयत्वगुणयोगात् गौण्या वृत्त्या सिद्धान्ताभिमतकर्मनामरूप ज्योतिष्टोमपदं लौकिके कर्मणि वर्तते भाष्यस्थमित्यर्थः।

नन्वेवं भाष्यानार्जवापत्तेः तदार्जवानुगुणं ज्योतिष्टोमे गुणविधिरिति परमतमेवास्थेयमित्यत्राह—न चेति। ननु परैः ज्योतिष्टोम एव गुणविध्युक्तेः कथं भाष्यानार्जवमित्यत्राह—भट्टेति। अनुपदं नामाचार्यवार्तिकव्याख्यानम्। तत्राचार्योक्तौ ज्योतिष्टोमे गुणविधिर्निरस्त इत्यर्थः। कथमित्यत्राह—व्यवहित इति। यद्येवं ज्योतिष्टोमे गुणविधिर्निरस्तः कुत्र तर्हि तन्मते गुणविधिरित्यत्राह—अत इति। यत एव ज्योतिष्टोमो व्यवहितः अत एव सन्निहिते सहस्रदक्षिणे गौणे ज्योतिष्टोमे गुणविधिरनुपदोक्त इति भाष्यानार्जवं समानमित्यर्थः। सर्वेषां विध्यन्तार्थं प्रकृत्यवेक्षणस्यावश्यकत्वात् वरं गुणविध्यर्थं तदपेक्षणमस्त्विति तत्रैव गुणविधिरस्त्विति न च वाच्यमित्याह—न चेति। तत्र हेतुः—गुणविधीति। उद्भिदा-

तथेति नापेक्षणीया। ज्योतिस्संज्ञकस्तोत्रविध्यर्था हि प्रकृतिः [1]सन्निध्यर्थश्च स्तोत्राम्नानमिति न तत्प्रख्य [2]नयात् गुणविधिहानम्। सोमेन यजेतेत्यपि सम्प्रति गुणविधिः। विशिष्टविधिपक्षेपि गुणावरोधे दुस्तरे नोद्भिदादिगुणविधिसहता। कामिपदञ्च लौकिकसाध्योपलक्षणमस्तु।

राद्धान्तस्तु—नैतत्। स्वतस्साध्यभावार्थश्रुतौ तद्विधिरेवेत्युक्तम्। गुणविधावपि गुणविभक्तरूपे भावार्थ एव विधिरिति चोक्तम्। आधाराग्निहोत्रनये फलतो गुणविधिव्यवहारः। अत्रापि तथास्त्विति चेन्न,

---

दिवत् ज्योतिष्टोमवाक्यस्यापि गुणविधिपूर्वपक्षे गुणविधायकत्वाविशेषात् धर्मग्रहार्थं तदपेक्षणाभावान्न धर्मग्रहणकाले तदपेक्षेति विधिकालेपि तदपेक्षाया अनुचितत्वदिति भावः। ननु ज्योतिष्टोमवाक्ये कस्य गुणस्य विधिरित्यत्राह—ज्योतिरिति। ननु त्रिवृत्पञ्चदश इत्यादिवाक्यान्तरादेव स्तोत्राणां प्राप्तत्वात् तत्प्रख्यनयात् ज्योतिष्टोमवाक्यस्य न गुणविधितेत्यत्राह—सन्निध्यर्थमिति। पदार्थस्वरूपसन्निधिमात्रे तद्वाक्यम्। एतद्वाक्यं तु विनियोजकं स्फ्येनोद्धन्तीतिवत् अतो ज्योतिस्संज्ञकस्तोत्रविधिपरतैवेत्यर्थः। ननु सिद्धान्तेपि सोमेन यजेतेत्यस्य विशिष्टकर्मविधायकत्वात् पूर्वपक्षेप्यस्मिन् विशिष्टविधौ तत्कर्माश्रय उद्भिदादिगुणविधिरस्तु किं लौकिककर्माश्रयणेनेत्यत्राह—सोमेनेति। सम्प्रति पूर्वपक्षावस्थायामेतद्वाक्यं केवलगुणविधायकमेव उपपदाकृष्टतात्पर्यकत्वादुद्भिदादिवदित्यर्थः। उपेत्यापि विशिष्टविधिं न तत्र गुणविधिः शक्यः उत्पत्तिशिष्टगुणान्तरावरोधादित्याह—विशिष्टेतिः। एतेन यत्राप्यनेकगुणश्रवणं तत्र विशिष्टकर्मविधावपि न लाभलेश इत्युक्तं भवति। वस्तुगत्या अनेकगुणविधाने वाक्यभेदेपि न पूर्वपक्षिणोऽप्रामाण्यवादिनो हानिरिति भावः। ननु कथं कामिपदान्वय इत्यत्राह—कामिपदं चेति। अन्वयव्यतिरेकसमधिगम्यारोग्यादिरूपलौकिकसाध्योपलक्षणार्थं कामिपदमित्यर्थः।

राद्धान्तत्विति। स्वभावत एव कृतिसाध्यस्य भावार्थस्य श्रुतौ तद्विधिरेव कृतिसाध्यविषयत्वनियमाद्विधेः। न पुनस्तद्व्यवहितकृतिसाध्यगुणस्येत्युक्तं भावार्थाधिकरण इत्यर्थः। ननु तर्हि दध्ना जुहोतीत्यादौ कथं गुणविधिरित्यत्राह—गुणविधाविति। यत्रापि दध्यादिवाक्ये गुणविधिस्तत्रापि गुणविभक्तकर्मरूपतया विस्तीर्णविस्थो भावार्थ एव विधेयः। प्राप्ताप्राप्तविवेकेन फलतो गुणविधिव्यवहार इत्यर्थः। नन्वेवमपि सगुणश्रुतितया गुणानुरक्तत्वाल्लौकिककर्मणो विस्ती-

---

१. असन्नि M   २. M न तत्राभ्यासपरात् गुणविधिनयहानम्।

अविभक्तरूपे विहिते धीस्थे तत्र तथा । इह तु विपरीतम्[१] । अगतस्तर्हि रक्तपटनयः । न, विधिमहिम्ना क्वचिदपोद्यते[२] । अगुणोऽपि नामतया भावार्थविशेषणम् । नामापि विशेषणं डित्थोऽयं विप्र इतिवत् । नामता च

---

गुणावस्थभावार्थस्य विधिरस्त्विति शङ्कते—अत्रापीति । नेति । स्यादेतदेवं यदि गुणश्रुतिमात्रात् गुणविधिः स्यात् । स तु अविभक्तरूपे केवलभावार्थरूपे वाक्यान्तरेण विहिते धीस्थे प्रत्यभिज्ञायमाने भवति । न चेह तथा लौकिककर्मप्रत्यभिज्ञेति अत्र भावार्थविधिर्न गुणस्येत्यर्थः ।

नन्वेवं लोकप्रसिद्धन्यायबाधः स्यादिति चोदयति—गते इति । नेति । रक्तपटन्यायस्य विधिस्वभावबलात् क्वचिदेवंविधविषयेऽपवादेपि न सर्वथाबाधः इत्यर्थः । ननु उद्भिदादेरुपपदस्य कथं वाक्यार्थेऽन्वयः सम्भूयकारित्वव्युत्पत्तेः अन्वयस्यावश्यकत्वात् । स च भावार्थविशेषणतयैव, तद्विशेषणत्वं च गुणत्वे सति । न चोद्भिदादेर्गुणत्वं सामानाधिकरण्येन गुणत्वे मत्वर्थलक्षणापत्तेः । न हि उद्भिद्वता यागेनेत्यर्थे उद्भिदा यागेनेति भवति सामानाधिकरण्यं; वैयधिकरण्येन गुणत्वे विरुद्धत्रिकद्वयापत्तेरित्यत्राह—अगुणोऽपीति । माभूदुद्भिदादिर्गुणः तथापि नामतया भावार्थविशेणत्वं युक्तमित्यर्थः ।

ननु नामत्वेपि कथं लक्षणादिदोषाभावः । कथं शब्दात्मकस्य नाम्नोऽर्थविशेषणत्वमित्यत्राह—नामापीति । शब्दात्मकस्यापि नाम्नो लोके डित्थो विप्र इत्यादौ लक्षणां विनैव सामानाधिकरण्येनार्थविशेषणत्वदर्शनात् शब्दात्मकमपि नाम अर्थविशेषणं युक्तम् । तदिदं गुणत्वेन सामानाधिकरण्ये मत्वर्थलक्षणा; नामत्वे तु नेति शब्दवृत्तिवैचित्र्यं अनादिवृद्धव्यवहारव्युत्पन्नमेव तच्चनामानुपस्थितमेव विशेषणम् । न चैवमशब्दोपस्थितत्वेन शाब्दविशेषणत्वानुपपत्तिः उद्भिदा यजेतेति यजतिशब्दसमभिव्याहृतेपि नामतयैव यागविशेषणत्वेनैव समर्पणात् शाब्दत्वसिद्धिः । प्रकरणाम्नातालिङ्गविनियोज्यमन्त्रवत् । न चैवं सर्वशब्दानां नामतापातः। अभिधेयतया वा अनूद्यतया वाऽर्थपरत्वे सम्भवति संज्ञात्वेन विशेषणमात्रत्वायोगात् । यद्वा लक्षणया स्वोपस्थितं नाम विशेषणम् । न चैवं लक्षणायां तुल्यायां मत्वर्थलक्षणाया न त्याग इति वाच्यम् । वाक्यस्य भावार्थैकविधिपरत्वनियमात् । न चैवं नामत्वे तृतीयानुपपत्तिः औपादानिककरणत्वस्यैव तृतीयानुवाद्यत्वात् । न चैवं मन्त्रवन्नाम्नोग्राहकार्थत्वापातः अननुष्ठेयत्वात् । अतः नामापि विधेयभावार्थविशेषणं युक्तमिति भावः । ननु खनित्रादौ प्रसिद्धानामुद्भिदादीनां नामताव्युत्पत्तिरेव कथं येन तथा विशेषणत्वमेव कल्प्येतेत्यत्राह—नामता

---

१. A विलम्बितम् २. असङ्गतः A ३. M आपाद्यते

भावार्थे विधेये, गुणे च विध्यनुवादानर्हे, अभ्यर्हिते चैकार्थतयाऽन्वये, मत्वर्थे चाकल्प्ये, क्लृप्ते च प्रवृत्तिनिमित्ते विभक्तेश्चाविरोधे प्रसिद्धार्थ समभिव्याहारात् ।

तृतीयाबलादेव तृतीयार्थैकार्थतया नामतेति परमतं हेयम् । एक-विभक्तितो हि मिथोऽनन्वयः । अन्वये हि अरुणयैकहायन्येति गौरश्व इति च स्यात् । ¹विधेयं सिद्धावस्थं वदत् नाम अप्रवृत्तिविशेषकरमपि

चेति । सत्यं खनित्रादौ प्रसिद्धिः तथापि अनन्यथासिद्धप्रसिद्धार्थयजत्यादिसमभि-व्याहारात् उद्भिदादिपदानां नामतयाऽन्वयव्युत्पत्तिः ।

ननु कथं समभिव्याहारस्यानन्यथासिद्धिः तत्राह—भावार्थ इति । न ताव-दुद्दिश्य गुणविधिना समभिव्याहारः अप्राप्तत्वेन भावार्थस्य विधेयत्वात् । नापि गुणानुवादेन, गुणस्याप्राप्तेः । नाप्युभयविधिता, विरुद्धत्रिकद्वयापत्तेः । अतो भावार्थस्य विधेयत्वात् गुणस्य विध्यनुवादानर्हतया नामतयैव समभिव्याहारः । एतच्चभावार्थस्य विधेयत्वं गुणस्य विध्यनुवादासम्भवार्थमुक्तम् न नामताहेतुत्वेन वैश्वदेववाक्ये विद्वद्वाक्ययोश्च भावार्थस्याविधेयत्वेपि नामत्वदर्शनात् । इतोऽपि गुणविध्यनुवादानुपपत्तिरित्याह—अभ्यर्हित इति । सामानाधिकरण्येनान्वयस्याभ्यर्हि-तत्वादपि गुणविध्यसम्भवात् नामतयाऽयं समभिव्याहारः ।

ननु गुणवत्कर्मविधिना सामानाधिकरण्यमस्त्वित्यत्राह—मत्वर्थेति । तथासति मत्वर्थलक्षणादोषापत्तिः । सा च नामत्वे सति नास्ति । एवमपि नामता न स्यादेव यदि प्रवृत्तिनिमित्तं न लभ्येत यथा गोदोहनदध्यादेः, तच्चात्र क्लृप्तमस्तीत्याह—क्लृप्ते चेति । उद्भेदनं प्रकाशनं स्वाङ्गभूतमन्त्रद्वारा करोतीत्येवमाद्युद्भिदादेः प्रवृत्तिनिमित्तं क्लृप्तमस्त्येव । एवमपि नामता न स्यादेव यदि विभक्तिविरोधः स्यात् यथा वसन्ते ज्योतिषेत्यादौ । न चात्र विभक्तिविरोधोऽपि उद्भिदा यजेतेति श्रुतेः । अत एवमनन्यथासिद्धप्रसिद्धार्थपदसमभिव्याहारान्नामतासिद्धिरित्यर्थः । अत्र परे तृतीयाबलादेव तृतीयार्थकरणीभूतभावार्थसमानाधिकरणता तया च नामतेत्यूचुः तन्नोपेयमित्याह—तृतीयेति । तत्र हेतुः–एकेति । सामानाधिकरण्यस्य एकविभक्तिनिबन्धनत्वायोगादित्यर्थः । तथात्वे को दोष इत्यत्राह—अन्वये हीति । नन्वनुष्ठानविशेषकरमेव विधिवाक्येऽन्वयार्हं नाम तु न तथेति नान्वयार्हतेत्यत्राह—विधेयमिति । नामपदानां सुबन्ततया सिद्धावस्थार्थनियमात् विधेयं यागादिकं सिद्धावस्थं वदत् नामपदं प्रवृत्तिविशेषकरत्वाभावेपि वाक्यसाध्यविधेयधीविशेष-

१. M विधि

धीविशेषकम्, विधिस्पृष्टार्थश्च। वाक्यान्तरे प्रवृत्तिविशेषकरञ्च गुणफलोपबन्धात्। अतो लौकिकात् गुणविधिप्रकृतितयाऽऽरोपितात् कर्मान्तरम्। भाष्ये तु लौकिके गुणविधिप्रकृतितया गौणो ज्योतिष्टोमशब्दः। सोमेन यजेतेति तु विशिष्टविधिः उत्पत्तावकरणं यजिरिति न विरुद्धत्रिकता। करणावस्थे हि यजौ न स्वकरणान्वयः उत्पत्तौ च साध्यावस्थे करणविशिष्टे विधिः मत्वर्थानपेक्षः। समिदादेस्तु प्राप्तत्वान्नामता। राजा राजसूयेनेत्यत्र करणावस्थेपि यागे राजा कर्तृसङ्ख्यावाचयाख्यातान्तर्भावात् भावार्थविधिनिविष्टः कर्तृसङ्ख्येव।

---

त्वात् विधिस्पृष्टार्थतयाऽन्वयार्हमेव स्तुतिवदित्यर्थः। एतच्चोपेत्योक्तम्। वस्तुतस्तु वाक्यान्तरापेक्षया गुणसम्बन्धार्थतया फलसम्बन्धार्थतया च अनुष्ठानविशेषकरत्वमप्यस्तीत्याह—वाक्यान्तर इति। अत्र भाष्यं ज्योतिष्टोमात् कर्मान्तरं इति तदयुक्तं ज्योतिष्टोमस्याप्युदाहरणत्वादित्याशङ्क्य भाष्यं व्याकुर्वन् उपसंहरति—अत इति। लौकिककर्मापेक्षया कर्मान्तरत्वं न वैदिकादित्यर्थः। कथं तर्हि ज्योतिष्टोमपदमित्यत्राह—भाष्ये त्विति। गुणविध्याश्रयत्वगुणयोगात् गौणं ज्योतिष्टोमपदं लौकिककर्मपरमित्यर्थः। नन्वेवं सोमेन यजेतेत्यत्रापि सामानाधिकरण्यस्याभ्यर्हितत्वात् गुणविध्यसम्भवेन नामता स्यादित्यत्राह—सोमेनेति। गुणविशिष्टविशिष्टकर्मविध्यङ्गीकारे न गुणविध्यसम्भव इत्यर्थः। ननु गुणवत्कर्मविधौ कथं न विरुद्धत्रिकता तत्राह—उत्पत्ताविति।

ननु उद्भिदादिवाक्यवद्विशिष्टविधौ मत्वर्थलक्षणा स्यात् तत्राह—करणेति। युक्तमुद्भिदेत्यत्र मत्वर्थलक्षणापत्तिरिति क्रियाकारकाद्यन्विताभिधानेनैव विशिष्टत्वानपगतेः करणावस्थस्य यजेः स्वकरणान्वयायोग्यत्वात् सोमेन यजेतेत्यत्रोत्पत्तौ फलाश्रवणान्नकरणधीरिति साध्यावस्थे यजौ स्वकरणान्वययोग्यतया विशिष्टधीर्युक्तेति विशिष्टे विधिर्न मत्वर्थापेक्ष इति साक्षात् प्रवृत्तिविशेषकरः गुणविशिष्टकर्मविधिरेव न नामार्थतेत्यर्थः। नन्वेवं समिधो यजतीत्यादावपि फलाश्रणात् साध्यावस्थस्य यजेरन्विताभिधानादेव समिदाद्यनीप्सितकर्मकारकान्विततया प्रतीत्यर्हत्वात् मत्वर्थलक्षणां विनैव विशिष्टविधिसम्भवान्न गुणविध्यसम्भव इत्यत्राह—समिदादेस्त्विति। अस्तु नामैवं तथापि मन्त्रवर्णप्राप्तार्थतया तत्प्रख्यन्यायान्नामतैव न गुणविधिरित्यर्थः। नन्वेवं राजा राजसूयेन स्वाराज्यकामो यजेतेति राज्ञो नन्वयः स्यात्। न तावद्विधेयतयान्वयः फलश्रवणेन करणावस्थयागप्रतीतेः विरुद्धत्रिकद्वयापत्तेः। नापि नामतया। नामान्तरश्रुतेः। अक्लृप्तप्रवृत्तिनिमित्तत्वाच्चेत्यत्राह—राजाराजसूयेनेति। सत्यमत्र करणावस्थो यागः तथापि राज्ञो विधेयत्वेपि

अथवा ससङ्ख्यकर्तृविशिष्टविषयेऽधिकारात् तदुपसंहारशक्त एक एव राजाऽधिकारीति राजा तदधीनां कर्तृतां भजत इत्यविधेयत्वेऽप्यन्वयसिद्धिः। एतस्यैव रेवतीष्वित्यत्र कृत्वेति समान कर्तृतया क्रियाद्वयस्यैकप्रयोगावस्थया एकीभूतस्य विधेः न विरुद्धत्रिकद्वयम्। न च मत्वर्थलक्षणेति दिङ्मात्रम्।

---

न विरुद्धत्रिकता, आख्यातोक्तकर्तृसङ्ख्याश्रयतया राज्ञो भावार्थविधिनिविष्टतया संख्यायाइव पृथक् विधेयत्वाभावेन विरस्य व्यापाराभावात्। तथा च राजाश्रितसङ्ख्याविशिष्टयागकृतिसाध्यमपूर्वमित्येवं यागविधिः। ततश्च राज्ञः सङ्ख्याद्वारा यागान्वयो न साक्षात् राज कर्तृको याग इति। कथं तर्हि राजसूये राज्ञः कर्तृत्वमधिकारश्च इत्थं–सङ्ख्याया हि राजाश्रितत्वं तदा भवति यदा राजा कर्ता स्यादिति राज्ञः कर्तृता कल्प्या। राजकर्तृकविषयोपसंहारे सामर्थ्यं च राज्ञ एवेति अधिकारोऽपि राज्ञ एवार्थात् सिद्धः। अतः सङ्ख्याया इव भावार्थविध्यन्तर्भतत्वेन विधिरन्वयश्च सिद्ध इत्यर्थः।

नन्वेवमपि विधौ गौरवदोषो दुर्वार इति पक्षान्तरमाह—अथवेति। न ह्यत्र राज्ञो विधिः नापि सङ्ख्यायाः। समभिव्याहारमात्रात् ससङ्ख्यराजकर्तृकतयाऽधिगतस्य यागस्यैव विधिः। न चैवमविधेयत्वेऽनन्वय इति वाच्यम्। यतः ससङ्ख्यकर्तृविशिष्टे विषयेऽधिकारात् तत्सम्पादनशक्त एक एव राजा स्वाराज्यकामाधिकारादीनां कर्तृतां भजत इति अविधेयत्वेऽप्यन्वय[1]सिद्धिः। इयं च विधा सर्वथा प्रकारान्तरेणान्वयासम्भवे वाच्या, न च यथाकञ्चिदन्वयसम्भवेऽपीति वेद्यम। नन्वेवं एतस्यैव रेवतीष्वित्यत्र सफले वाक्ये गुणवत्कर्मविधौ न कथं विध्यावृत्तिः कथं वा न मत्वर्थलक्षणेत्यत्राह—एतस्यैवेति। अत्र हि कृत्वेति। समानकर्तृकत्वार्थे क्त्वाप्रत्ययबलात् रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रसमानकर्तृको याग इत्यन्वयः न पुनः स्तोत्रयागयोः क्रियाकारकभावेन। समानकर्तृकत्वं चाङ्गाङ्गिक्रियाद्वयस्य एकस्मिन् प्रयोग इत्येकप्रयोगावस्थया एकीभूतस्य क्रियाद्वयस्य विधेर्न विरुद्धत्रिकता। नापि मत्वर्थलक्षणेत्यर्थः। नन्वेवमुद्भिदादावपि प्रयोगावस्थया एकीकृत्य उभयविधिः स्यात्। तथा वसन्ते वसन्ते ज्योतिषा यजेतेति फलशून्ये वाक्ये साध्यावस्थयागप्रतीतेः स्वकरणज्योतिर्विशिष्टयागविधिः स्यादित्यत्राह—इति दिङ्मात्रमिति। सङ्क्षेपमात्रमत्रोक्तं प्रपञ्चस्तु तत्र तत्र प्रसङ्गाद्वक्ष्यत इत्यर्थः।

---

1. B अनन्वय।

ननु च नामापि किञ्चिल्लक्षणया दर्शादीति न मत्वर्थलक्षणा हेया। तन्न, अस्येयं संज्ञेति स्थिते शक्त्यन्तरकल्पनापरिहाराय लक्षणादिः। नतु यावल्लक्षणागम्यार्थं संज्ञात्वम्। अतो धीतः श्रुतितुल्यतानिमित्ततो लक्षणेति मत्वर्थलक्षणातोऽन्तरङ्गता। विधौ च न परशब्दार्थतेति भेदः। श्रुतितो हीनत्वात् पिण्डपितृयज्ञस्य न दर्शाङ्गतेत्युक्तम्।

## ॥ २ ॥ यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ३ ॥

नामापि गुणफलोपबन्धेनार्थवदित्युक्तम्। तत् क्वचिदाक्षिप्य

---

अयमाशयः। नहि उद्भिदेत्यत्र प्रथमं प्रयोगावस्थाधीः तद्बोधकशब्दाश्रुतेः रेवतीवाक्ये क्त्वाश्रुतेः तदवस्थाधीरिति प्रयोगावस्थविधिधीर्युक्ता। वसन्ते वसन्ते ज्योतिषेत्यत्रापि वाक्यान्तरे ज्योतिषां विहितत्वात् तत्प्रख्यनयान्नामतैव। न चोत्पत्तिविनियोगभेदात् वाक्यद्वयस्यार्थवत्ता, एकेनैवोभयसिद्धेः वैयर्थ्यस्याः परिहार्यत्वात्। न च स्फचादावप्येवमेवेति वाच्यम्। गत्यन्तराभावात् तत्र तथा। इह तु नामतयाऽस्तु गतिः गौरवपरिहारश्चेति। ननु दर्शादौ क्वचिल्लक्षणयैव नामत्वं उद्भिदादिवत् यौगिकतया वाचकत्वाभावात्। तद्वरमनुष्ठानविशेषकरत्वार्थं मत्वर्थलक्षणया गुणविधिरेवेति चोदयति—नन्विति। तन्नेति। न्यायबलादस्येयं संज्ञेति नामत्वे तात्पर्ये स्थिते कथं तत्र प्रवृत्तिरिति वृत्तिनिरूपणे शक्त्यन्तरकल्पनापरिहाराय लक्षणाद्याश्रयः, न तु यावन्तो लक्षणयाऽवगमार्हाः अर्थाः तावतां संज्ञात्वम्। अतो दर्शादिपदस्य धीतोऽर्थप्रतीतिं पर्यालोच्य मुख्यतुल्यतैव। लक्षणात्वं तु निमित्तपर्यालोचनया। मत्वर्थलक्षणा तु नेत्थमित्यन्तरङ्गत्वादियमेव लक्षणा युक्तेत्यर्थः। इतोऽपि न मत्वर्थलक्षणा युक्तेत्याह—विधौ चेति। नन्वेवममावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यर्थधीतः श्रुतितुल्यतया अमावास्यायामिति नाम्ना दर्शोद्देशेन पितृयज्ञविधेः पितृयज्ञस्य दर्शाङ्गता स्यादित्यत्राह—श्रुतित इति। सत्यं श्रुतितुल्यत्वं तथापि नामावास्यापदं यागनाम श्रुतितुल्याया अपि लक्षणायाः श्रुतितो हीनत्वात् मुख्यतो जघन्यत्वात्। अतो मुख्यकालपरत्वादमावास्यापदस्य न दर्शकर्मनामतेति न तदङ्गं पितृयज्ञः। अहीनत्वाच्छ्रुतित इति पाठे आग्नेयवाक्ये कालवाच्यमावास्याश्रुतिः सप्तम्यन्ततया अमावास्यावाक्ये अमावास्यायामिति श्रुतेरहीनत्वात् तुल्यत्वात् कालविधिरेवायम् न नामेति न दर्शाङ्गता यज्ञस्येत्युक्तं चतुर्थ इत्यर्थः।

## ॥ २ ॥ यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ३ ॥

चित्रया यजेत पशुकामः तथा पञ्चदशान्याज्यानि भवन्तीति श्रुतम्। तत्र

समर्थ्यते । तेनाध्यायसङ्गतिः । अयं भावः—पूर्वोक्ताभ्युच्चययुक्तिसमर्थन-रूपत्वात् पूर्वचिन्ताशेषो न पृथक्सङ्गतिमपेक्षते नयान्तरमपि, विषय-शुद्धिनयवत् । न च श्रीकरोक्ता प्रसङ्गसङ्गतिः । न चेयं त्रिधा नाम्नोऽर्थ-वत्ता मूलयुक्तिः तदाक्षेपात् पूर्वोक्तगुणविधिविधया प्रामाण्यहानिरिति ।

यतः न सर्वत्रार्थवत्ताक्षेपोऽयं न चार्थवत्ता मूलयुक्तिः । पूर्वपक्षस्तु पञ्चदशान्याज्यानि भवन्तीत्यत्र नाज्यनाम्नि स्तोत्रभेदे पञ्चदशता-गुणोपबन्धः । इह सामानाधिकरण्यान्नामत्वासिद्धेः । यत्र तु तत् तत्रास्तु

---

चित्राज्यशब्दयोश्चिन्ता । किं गुणविधिरुत कर्मनामधेयमिति । ननु गुणविधि-नामधेयत्वमात्रविचारस्य प्रामाण्यव्युत्पत्तिविरहिणः कथं प्रमाणलक्षणे सङ्गति-रित्यत्राह—नामापीति । नन्वेवमुक्ताक्षेपसमाधानपरत्वोक्त्या कथमध्यायसङ्गतिः समर्थिता भवति ग्रन्थकारेणेत्यत्राह—अयं भाव इति । पूर्वत्र हि अप्रवृत्तिविशेषकर-त्वेपि सामानाधिकरण्यक्लृप्तप्रवृत्तिनिमित्तत्वादिबलात् नामतया राद्धान्तमुक्त्वा वाक्यान्तरापेक्षया गुणफलोपबन्धात् प्रवृत्तिविशेषकरत्वमस्तीत्यभ्युच्चय उक्तः । सोऽत्राक्षिप्य समर्थ्यंत इति पूर्वचिन्ताशेषत्वेन तत्सङ्गतिरस्या अपि सङ्गतिः न पृथक् सङ्गत्यपेक्षेत्यर्थः ।

ननु नयान्तरस्य कथं नयान्तरशेषत्वमित्याशङ्क्य यथा होलाके विषयशुद्धि-चिन्तायाः चिन्तान्तरत्वेपि मूलचिन्तापेक्षा शेषता तथेयमपीत्याह—नयान्तरमपीति । एवमन्यशेषतयापि साक्षात्सङ्गतौ सम्भवन्त्यां न श्रीकरोक्तप्रसङ्गसङ्गतिर्युक्तेत्याह—नचेति । प्रकाशेन तु पूर्वत्रार्थवत्त्वबलात् नामत्वम् । इह तु अर्थवत्ताया आक्षेपे पुनः पूर्वाधिकरणपूर्वपक्षापत्तेः वेदस्याप्रामाण्यमिति स्वतन्त्रतया साक्षात्सङ्गतिरुक्ता । सा न युक्तेत्याह—न चेति । यत इति । स्यादेवं यदि सर्वत्राक्षेपोऽयं स्यात् । न च तथा । चित्राज्यादौ क्वचिदेवाक्षेपो न सर्वत्रेत्यर्थः । किञ्च पूर्वराद्धान्ते अर्थवत्त्व-मभ्युच्चयः मूलयुक्तिस्तु सामानाधिकरण्यादिः । न चाभ्युच्चयाक्षेपे नामताक्षेप इति न पूर्वपक्षापत्तिरित्याह—न चेति ।

कथं पुनः चित्राज्यादौ क्वचिदर्थवत्त्वमाक्षिप्यत इत्यत्राह—पूर्वपक्षस्त्विति । पञ्चदशान्याज्यानीत्याज्यनाम्नि स्तोत्रे पञ्चदशतागुणोपबन्धान्नाम्नोऽर्थवत्ता वाच्या सा चायुक्ता । सामानाधिकरण्याभावेनात्र नामत्वासिद्धेः। ननु आज्यैः स्तुवत इत्यत्र स्तोत्रसामानाधिकरण्यान्नामत्वं स्यादित्यत्राह—यत्र त्विति । यस्मिन् वाक्ये सामानाधिकरण्यं तत्रैव नामत्वं, न वाक्यान्तरेपि अन्यथा आज्यशेषमित्यत्रापि आज्यपदं स्तोत्रनाम स्यात् । अतः स्तोत्रसामानाधिकरण्यविहीनवाक्ये लोकप्रसिद्ध-घृतरूपार्थस्य शीघ्रोपस्थितत्वान्न स्तोत्रधीरिति पञ्चदशत्वगुणविधित्वेपि नात्र

नामत्वम् आज्यैः स्तुवत इति। चित्रयेत्यत्र न फलोपबन्धार्थता। दधिमधुवाक्योत्पन्नस्य प्रकृतस्य यागस्य यजेतेत्यनेन प्रकृतवाचिता फलोपबन्धात्। अस्तु व्यर्थं नाम तावत्। न च नामापि अप्रवृत्तिविशेषकरमपि विशेषरूपेण ज्ञातुं नामाकाङ्क्षान्वयि। ज्ञाते च दधिमधुवाक्यान्नाकाङ्क्षेति नान्वयी तर्हि अप्रकृते अस्त्वन्वयि, न, अप्रकृतं हि कर्म फलं प्रति विधेयम्। तत्र नामापि परशब्दतया धर्मविध्यर्थं क्वचित्। प्रकृते त्वत्र नामता दूरे। अतः चित्रयेति गुणविधिः, योग्यतया प्रकृतिपशौ। वाक्या-

---

गुणोपबन्धेनार्थवत्त्वमित्यर्थः।

ननु चित्रयेत्यत्र यजिसामानाधिकरण्यान्नामतोपपत्तौ फलोपबन्धेनार्थवत्त्वाक्षेपः[1] कथमित्यत्राह—चित्रयेति। यजिसामानाधिकरण्येपि न फलोपबन्धेन नाम्नोऽर्थवत्तेत्यर्थः। अत्र हेतुः-दधीति। दधिमधुवाक्योत्पन्नस्य सन्निहितत्वात् तस्य च प्रकृतवाचिना यजतीति पदेनैव फलसम्बन्धसिद्धौ तदर्थं नाम्नोऽनपेक्षितत्वेन व्यर्थत्वादित्यर्थः। ननु वैयर्थ्येपि यजिसामानाधिकरण्यान्नामत्वस्य न हानिरिति शङ्कते अस्त्विति। दूषयति—न चेति। नामान्वये त्वाकाङ्क्षा हेतुः अप्रवृत्तिविशेषकरत्वेपि नाम्नो विशेषरूपेण ज्ञातुमाकाङ्क्षयाऽन्वयः। न चात्र तथाऽऽकाङ्क्षा, दधिमधुवाक्यादेव विशेषरूपेण ज्ञातत्वात्। अतोऽनाकाङ्क्षितत्वान्न नामतयान्वयः इत्यर्थः। नन्वेवं र्तार्ह यत्र प्रकृतं कर्मनास्ति तत्र फलोपबन्धेन अर्थवत्तया नाम्नोऽन्वयः अस्त्विति शङ्कते—तर्हीति। नेति। अप्रकृतविषये हि फलार्थं कर्मैव विधेयम् न तु विहितस्य कर्मणो नाम्ना फलसम्बन्ध इति न तत्रापि नाम्नः फलोपबन्धेनार्थवत्त्वम्। ननु र्तार्ह तत्र कथं नामान्वय इत्यत्राह—तत्रेति। तत्राप्रकृतविषये क्वचिन्नामापि परशब्दतया धर्मातिदेशकत्वेन नेयम्। क्वचिच्चान्यथेति यावत्। ननु यथा उद्भिदादिषु अर्थवत्त्वाभावेपि धीविशेषकरतया नामता। तथा चित्रया यजेतेत्यत्राप्यस्त्वित्यत्राह—प्रकृतेत्विति। युक्तमुद्भिदादौ कर्मविशेषस्यासन्निधानात् कर्मविशेषधीजनकत्वेन नामत्वम्। चित्रयेत्यत्र तु कर्मविशेषे प्रकृते प्रकृतवाचियजिपदेनैव विशेषधीसिद्धेर्न तदर्थं नामाकाङ्क्षेत्यनाकाङ्क्षितत्वात् नामता दूरे अत्यन्तं न घटत इत्यर्थः।

ननु कर्मविशेषे प्रकृतेपि राजसूयादिपदवत् कथञ्चित् नामताऽस्त्वित्याशङ्क्य उपसंहरन्नाह—अत इति। गुणविधित्वेनार्थवत्त्वे सम्भवति न राजसूयादि-

---

१. B वत्त्वे कोबाधइत्यत्राह

द्विच्छेदश्च । न हि हविरन्तरे प्राण्यतिरिक्ते चित्रता शक्या, अवयवगतैः शुक्लत्वादिभिरवयविनि चित्रता आज्यौषधसान्नाय्यादीनां नेत्युक्तम् ।

अयं भावः—न दधिमधुघृताद्यवयवेषु व्यवस्थितं शुक्लत्वादिकं उत्पत्तौ पुरोडाशाद्यपि संयवनादिजन्यं न व्यवस्थितशुक्लत्वादिजन्यम्[१] । पटादिकं तु तथाभूतमपि न हविः । अतः प्राणिहविरेव योग्यं चित्रान्वये । अतः प्राणिहविष्के प्रकृतावग्नीषोमीये पशुयागे चित्रताविधिः ।

---

वत् व्यर्था नामतेत्यर्थः । नन्वेकस्मिन् वाक्ये कथं यागफलसम्बन्धो गुणश्च द्वयं विधीयते । विधीयमानो गुणः कस्मिन्नाश्रयत इत्यत्राह–योग्यतयेति । चित्रेयचित्राख्य-गुणान्वययोग्यत्वमग्नीषोमीयपशोरेवेति तत्रैव चित्राख्यगुणविधिः चित्रयेत्येतस्य वाक्ये कथञ्चिदप्यनन्वयात् वाक्यं भित्वा चित्रयेत्येकं गुणविधायकम् । यजेत पशुकाम इत्यपरं यागफलसम्बन्धविधिपरमित्यर्थः । ननु सान्नाय्यादिहविरन्तरेषु सत्स्वपि कथं पशोरेव योग्यतेत्याशङ्क्य विवरणग्रन्थोक्तं हेतुमनुभाषते—न हीति । नन्वाज्यौषधिसान्नाय्या दीनामपि सावयवत्वेन पशुवच्चित्रत्वं शक्यमेवेत्यत्राह–अयं भाव इति । प्रकृतेषु दधिमधुघृताद्यवयविषु ये आरम्भका अवयवा तेषु अवयवि द्रव्योत्पत्तौ शुक्लत्वादिकं शुक्लत्वादीनि नानास्वरूपाणि न व्यवस्थितानि अवयवगतैर्व्यवस्थितैः शुक्लत्वादिभिरवयविनि चित्रता । अतो दधिमधुघृताद्यवयविनां व्यवस्थितशुक्ल-त्वाद्यनेकरूप ावयवजन्यत्वाभावान्न चित्रत्वयोग्यतेत्यर्थः ।

ननु तर्हि ऐष्टिके पुरोडाशादौ क्रतुमध्य उत्पाद्ये कठिनद्रव्यतया चित्रत्वे-नोत्पादयितुं शक्यत्वात् तत्र चित्रत्वविधिरस्तु तत्राह—पुरोडाशादीति । पुरोडा-शादेः संयवनादिजन्यत्वात् नोत्पत्तौ व्यवस्थित[२] शुक्लाद्यवयवजन्यत्वं[३] यद्यपि पटादिद्रव्यमुत्पत्तौ व्यवस्थितशुक्लत्वाद्यवयववत् तथापि न तद्धविरिति न तत्र चित्रताविधिः । हविरन्वये सम्भवति अन्यान्वयस्यायोग्यत्वात् साक्षात्कार्या-न्वयायोग्यत्वात्[४] तदाह—पटादिकं त्विति । कुत्र तर्हि चित्रत्वविधिरित्याशङ्क्य उपसंहरन्नाह—अत इति । प्राणिगामित्वादस्य चित्राख्यगुणस्य प्राणिहविरेव तदन्वययोग्यमिति तत्रैव विधिरित्यर्थः । नन्वेवमपि कथमग्नीषोमीयपशौ तद्विधिरित्यत्राह—अतः प्राणिहविष्क इति । यद्यप्यन्यदपि प्राणिहविरस्ति तथापि प्रकृतित्वेन निरपेक्षतया अग्नीषोमीय एव चित्रत्वविधिरित्यर्थः । ननु वाक्यभेदे चित्रयेत्येतदपि अनुपात्तद्रव्यकं वाक्यम् । ततश्च गुणशब्दो गुणवद्द्रव्यपर इति कथं

---

१. शुक्लत्वादिकम् B २. अव्यवस्थित B । ३. वयवित्वं B । ४. लोभात् B ।

यद्यप्यनुपात्ताद्द्रव्ये चित्रद्रव्यपरता तथापि लाघवात्तु चित्रताविधिः तथापि पशुव्यक्तेः स्त्रीत्वात् स्त्रीलिङ्गता, परोक्तं तु चित्रत्वस्त्रीत्वाभ्यां प्राण्यन्वयित्वम् । तदुक्तम्—

चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावतः ।
तेनैते प्राणियागाङ्गप्रकृतिं दैक्षमाश्रिते ॥ इति ।

तन्न । [1]स्त्रीत्वनिर्देशो ह्यसत्यपि स्त्रीत्वे तुल्यः । तटः तटीति यथा । अत एव स्त्रीत्वानुरोधान्न विकृतिस्त्रीपशुके निवेशः । पञ्चदशसंख्याविशिष्टाज्यविधिः स्तोत्रे पञ्चदशानीति । स्तोमावृत्तौ ड इति स्तोत्र एव विशिष्टगुणविधिरर्थात् । यथासम्भवं चाज्यस्य द्वारमस्तु । सङ्ख्या स्वभावादेव सङ्ख्येयविशेषणं विभक्तिरप्यनुगुणेति विशिष्टत्वमसमासेऽपि ।

---

चित्रत्वगुणविधिरित्याशङ्कामनूद्य परिहरति—यद्यपीति । सत्यं गुणवद्द्रव्यपरमेव तथापि लाघवाच्चित्रत्वमात्रविधिरित्यर्थः । नन्वेवं दैक्षे पशौ चित्रत्वमात्रविधौ कथं स्त्रीलिङ्गान्वय इत्यत्राह—पशुव्यक्तेरिति । एवं विधेयरूपचित्रत्वगुणान्वययोग्यत्वात् प्राणिहविरन्वय उक्तः । परैस्तु स्त्रीलिङ्गश्रुतिबलादपि प्राण्यन्वयित्वमुक्तम् तदाह—परोक्तमिति । साक्षित्वेन तदुक्तं वार्तिकमाह—तदुक्तमिति । तन्नेति । स्त्रीत्वान्वयं विनापि स्त्रीलिङ्गनिर्देशो लोके तटी करुणा इत्यादौ दृष्ट इति स नोत्कर्षहेतुः सर्वं च लिङ्गं स्वतः प्रयोगसाध्वेव नार्थसाध्विति दर्शयितुं तट इत्युक्तिः । युक्तं चैतदित्याह—अत एवेति । स्त्रीत्वस्योत्कर्षहेतुत्वे सारस्वत्यामेवोत्कर्ष इत्युच्येत प्रकृतिं दैक्षमाश्रिते इत्युक्तिरयुक्ता स्यादित्यर्थः ।

ननु पञ्चदशान्याज्यानीत्यत्र कथं गुणविधिः सङ्ख्याज्यरूपानेकगुणविधाने वाक्यभेदापत्तेरित्यत्राह—पञ्चदशेति । स्तोत्रे सङ्ख्याविशिष्टाज्यविधेर्न वाक्यभेद इत्यर्थः । ननु कथं गुणविधेः स्तोत्ररूपाश्रयलाभः तदुद्देशकशब्दाभावादित्यत्राह—पञ्चदशानीति । विधिरिति स्तोमावृत्तौ ड इति डान्ततया पञ्चदशपदस्य स्तोत्रप्रतीतेः तत्रैव सङ्ख्याविशिष्टाज्यगुणविधिरुद्देशकपदाभावेपि, अर्थात् । न च सङ्ख्याया आज्यान्वये स्तोत्रावृत्तिर्न स्यादिति वाच्यम् । यत आज्यावृत्त्यौपाधिकी स्तोत्रावृत्तिरपीति भावः । नन्वाज्यस्य कथं स्तोत्रे साधनत्वमित्यत आह—यथासम्भवमिति । दृष्टमदृष्टं वा आज्यस्य स्तोत्रसाधनत्वे यथासम्भवं द्वारमस्तु उपदेशानुरोधित्वात् कार्यकल्पनाया इत्यर्थः । नन्वत्र समासाभावे कथं विशिष्टप्रतीतिरित्यत्राह—सङ्ख्येति । सङ्ख्यासामर्थ्यादेवात्र विशिष्टत्वधीः । एवमपि न विशिष्ट-

---

१. M स्त्रीत्वयोगो

राद्धान्तस्तु—यत्र द्वितीयो गुणश्चित्रत्वे स्त्रीत्वमाज्ये च सङ्ख्या तत्र वरं नामता, नाम्ना हि साध्यावस्थे लक्षिते एकगुणविधिस्सुकरः। अस्ति चाज्यैस्तुवत इत्यत्राज्यनामत्वम्। न च संख्येह सङ्ख्येयविशेषणं डान्ततया स्तोमान्वयात्। चित्रयेत्यत्रापि यदि न नाम स्यात् प्रकृतस्य

घीः स्यात् यदि विभक्तिविरोधो भवेत्। यथा अरुणयैकहायन्येत्यत्र। अत्र तु पञ्चदशान्याज्यानि भवन्तीत्यत्र विभक्तिरप्यनुगुणेति सङ्ख्यासामर्थ्यात् विशिष्टत्वमसमासेपीत्यर्थः।

राद्धान्तस्त्विति। यत्र गुणद्वयश्रवणं यथा चित्रत्वगुणे सत्येव स्त्रीत्वमपरो गुणः यथा वा आज्ये पञ्चदशसङ्ख्या तत्र गुणद्वयविधौ वाक्यभेदापत्तेरवगतैकवाक्यविनियोगविरोधात् गुणविधेरसम्भवे नामतयैवान्वयोयुक्तः इति उदाहरणद्वयसाधारणो राद्धान्त इत्यर्थः। नामत्वे वा कथं न वाक्यभेद इत्याशङ्क्य भेदेन दर्शयति—नाम्नेति। पञ्चदशान्याज्यानीति आज्यनाम्नि स्तोत्रे पञ्चदशाख्यैकगुणविधेर्न वाक्यभेदः। न च साध्यस्यैव गुणाकाङ्क्षित्वात् नाम्नापि सिद्धावस्थतया स्तोत्रस्यार्पितत्वात् न तत्र गुणविधिर्युक्त इति वाच्यम्। यतः सिद्धार्थेनापि नाम्ना लक्षणया साध्यावस्थामुपस्थाप्य तत्र गुणविधिः सुकरः लक्षणाप्युद्देशे न दोषायेत्यर्थः। ननु स्तोत्रसामानाधिकरण्याभावात् कथमाज्यपदस्य नामत्वमित्यत्राह—अस्ति चेति। आज्यैः स्तुवतइत्यत्र वाक्यान्तरे स्तोत्रसामानाधिकरण्या[1]न्नामत्वमाज्यपदस्यावगतम। अतः पञ्चदशान्याज्यानीत्यत्र स्तोत्रनाम्ना आज्यपदेन तदुद्देशो युक्तः। डान्तपदसमभिव्याहारबलात् आज्यपदस्य स्तोत्रपरत्वप्रतीतिः न तु घृतपरत्वप्रतीतिः। आज्यशेषं इत्यादौ तु नैवं समभिव्याहार इत्यतिप्रसिद्धघृतप्रतीतिरिति भावः।

ननु सङ्ख्यासामर्थ्यात् सङ्ख्येयाज्यनिष्ठत्वावगमात् विशिष्टैकार्थविधेः न वाक्यभेद इत्यत्राह—न चेति। तत्र हेतुः–डान्ततयेति। सङ्ख्यासामर्थ्याद्धि सङ्ख्येयनिष्ठत्वमात्रं, तच्च सङ्ख्येयं स्तोत्ररूपं डान्ततया स्तोमान्वयावगतेः। अतो नाज्यविशेषणं सङ्ख्येति न सङ्ख्याविशिष्टाज्यविधिः। किन्त्वाज्यनाम्ना स्तोत्रमुद्दिश्य तत्र सङ्ख्यागुणविधिः। एवं च स्तोमावृत्तिरपि नौपाधिकीति लाभ इति भावः। चित्रोदाहरणेपि चित्रापदस्य नामतैवावश्याभ्युपेया अन्यथा गुणार्थत्वे वाक्यर्थानध्यवसायापत्तेरित्याह—चित्रयेति। नामत्वे वा कथमध्यवसाय इत्यत्राह—तेनेति। नामत्वे सति प्रकृतयागस्य फलार्थतैवाध्यवसितेति फलोपबन्धेनार्थवत्तेत्यर्थः। ननु

1 A व्याभावान्नामत्व

फलार्थता न स्यात्, किं गुणार्थमुत फलार्थमित्यनध्यवसायात्। तेन नामतयैव फलार्थता ; वाक्यभेदस्त्रीकारस्सत्यां गतावयुक्तः।

पूर्वपक्षभाष्यं—"न चामी यौगिकाः। अस्यार्थः-यौगिको हि व्यक्तिवाचीति प्रकृतयागनाम स्यात्। चित्राशब्दस्तु जातितुल्यगुण-वाचीति न प्रकृतनाम ; न चायौगिको व्यक्त्यभिधायीति व्याख्यातम्।

अयं भावः—चित्रयेति यदि योगात् स्यात् तदा बलात् व्यक्त्यर्थः पङ्कजपदवत्। अन्यथा गुणार्थः। अयन्त्वयौगिकोऽपि यजिर्व्यक्त्यर्थः एव। अपरं भाष्यम्-गुणफलकल्पनायां यजेरविवक्षेति।

---

वाक्यभेदे सति प्रकृतस्य यागस्य फलार्थताध्यवसायः चित्रयेत्यनेन दैक्षे गुणविधे-रित्यत्राह—वाक्यभेद इति। प्रकृतैकवाक्यत्वस्य नामतयापि कथञ्चिन्निर्वाहे सति तद्भेदायोगादित्यर्थः। "न चामीयौगिका" इति पूर्वपक्षभाष्यमनुभाषते व्याख्या-तुम्—पूर्वपक्षेति। नन्विदं यौगिकत्वनिराकरणं कथं पूर्वपक्षसाधकम्? यौगिकत्वस्य पूर्वपक्षाविरोधादित्याशङ्क्य व्याचष्टे—अस्यार्थ इति। यद्यपि यौगिकत्वं न स्वरूपेण पूर्वपक्षविरोधि तथापि व्यक्त्यर्थत्वापादनेन सन्निहितवृत्तित्वापादनद्वारा प्रकृत-यागनामत्वा[1]पत्तेः पूर्वपक्षविरोध्येवेति तन्निरसनं भाष्ये क्रियते "न चामी-यौगिका" इति।

ननु आज्यशब्दस्य जातिवाचित्वात् युक्तं अप्रकृतवचनत्वं, चित्राशब्दस्य त्वजातिवाचिनः कथं न प्रकृतपरतेत्यत्राह—चित्रेति। यद्यपि चित्राशब्दस्य न जाति-वचनत्वं तथापि तत्तुल्यगुणवाचितया न प्रकृतपरनामतेत्युक्तं भाष्य इत्यर्थः। ननु अयौगिकत्वेपि किमिति न व्यक्त्यर्थतेत्यत्राह—न च यौगिक इति। अयौगिकस्य व्यक्त्यभिधायित्वं नास्तीति यौगिकत्वनिरसनपरभाष्यव्याख्याग्रन्थोक्तेत्यर्थः। ननु न चायौगिको व्यक्त्यभिधायी इति व्याख्या न युक्ता अयौगिकानामपि यजत्या-दीनां व्यक्त्यभिधायित्वस्य लोके दर्शनादित्यत्राह—अयं भाव इति। न चायौगिको व्यक्त्यभिधायीति प्रकृतचित्रापेक्षयोक्तम्, न सामान्यापेक्षया। शब्दान्तरमयौगि-कमपि व्यक्त्यर्थमिष्टमेव। तत्र चित्रादिशब्दानां यदि यौगिकता स्यात् तदा बलात् पङ्कजादिशब्दवत् व्यक्त्यर्थत्वं स्यात् लोके दर्शनात्। अयौगिकत्वे तु गुणार्थ-तैवेत्यर्थः। गुणफलकल्पनायां यजेरविवक्षेति पूर्वपक्षभाष्यान्तरमनुभाषते—अपरमिति। ननु गुणफलसम्बन्धनिरसनं पूर्वपक्षिणो न युक्तम्। अनुपयोगात् प्रत्युत

---

१. A त्वावगतेः

तस्यार्थः। अन्यतः प्रवृत्तं यागमाश्रित्य गुणफलपरतायां यजेरत्र वाक्ये न विवक्षा। न चान्यतो यजौ प्रवृत्तिरिति व्यावृत्यफले यजिविधिर्वाच्यः। तदा[1] एकवाक्यतानुरोधान्नामतैव स्यात्। सा माभूदिति पूर्वपक्ष्येव गुणफलाधिकारं निराचष्टे।

राद्धान्तभाष्यं "पुंपशौ प्राप्ते स्त्रीपशुः पशवः फलं चित्रो गुण इति न शक्या एकेने"ति। तस्यार्थः—चित्रत्वं स्त्रीत्वञ्च विधेयम्। अतो भिन्नमपि वाक्यं पुनर्भेद्यं; अथ सारस्वत्यां स्त्रीत्वलाभाच्चित्रत्वमात्रविधिः तथाप्येको वाक्यभेदः अग्नीषोमीयगतलौहित्यबाधश्च। वरं प्राकृताग्नीषोमीये विधिः वाक्यभेदस्यावश्यकत्वात्। तत्र[2] चित्रत्वस्त्रीत्वयोर्विधिरस्तु।

---

राद्धान्तिनैव तत् कार्यमित्याशङ्क्य तस्यार्थमाह—तस्यार्थ इति। गुणफलयोः सहश्रुतेः तत्सम्बन्धः स्वतो भाति। स त्वत्र न सम्भवति, अन्यतः प्रवृत्तयागमाश्रित्य हि गुणफलपरता वाच्या। न च पशुकामविधिं विना अन्यतो यजौ प्रवृत्तिरित्युत्तरेण सम्बन्धः। अतोऽत्र वाक्ये यजेर्विधेयत्वेन आश्रयत्वेन वा स्वार्थासमर्पणात् अनन्वयादविवक्षा प्राप्नोति। सा चायुक्तेत्ययोग्याया गुणफलकल्पनातो व्यावृत्त्य फले यागविधिर्वाच्यः। ततश्च तदुपपत्त्यर्थमेकवाक्यतानुरोधात् चित्रापदस्य नामताऽऽपद्येत। सा माभूदिति दूरभीरुः पूर्वपक्ष्येव गुणफलसम्बन्धं निराकृतवानित्यर्थः। अत्र चाधिकरणे राद्धान्ते यो विधेयानेकत्वमूलको वाक्यभेदो नामत्वहेतुरुक्तः तत्प्रतिपादनपरं राद्धान्तभाष्यमनुभाषते व्याख्यातुं—राद्धान्तभाष्यमिति। नन्विदमयुक्तं वाक्यभेदस्य पूर्वपक्षिणाङ्गीकृतत्वेनादोषादित्याशङ्क्य व्याचष्टे—तस्यार्थ इति। सत्यमेवं तथापि भिन्नस्यापि वाक्यस्य पुनर्भेदः स्यादित्यर्थः।

ननु तर्हि विकृतिपशौ सारस्वत्यां गुणविधिरस्तु। तस्य च स्त्रीत्वप्राप्तेः चित्रत्वमात्रविधेर्न वाक्यभेदद्वयमिति शङ्कते—अथेति। दूषयति—तथापीति। एकोऽपि तावद्वाक्यभेदोऽस्त्येव। तथापि अग्नीषोमीयगतलौहित्यबाधश्चेति न सारस्वत्यामपि गुणविधिः। किन्तु नामतैवेत्यर्थः। वस्तुतस्तु गुणविधिपक्षेपि अग्नीषोमीय एव गुणविधिः वाक्यभेदस्यावश्यकत्वे निरपेक्षप्रकृतिहानायोगात्। तत्र चेद्विधिस्तर्हि चित्रत्वस्त्रीत्वयोरुभयोर्विधानात् वाक्यभेदद्वयं स्थितमेवेत्याह—वरमिति।

---

१. तथा च M २. तेन

नन्वेवमुपदिष्टपुंस्त्ववर्णयोः [1]बाधः तद्भयात् सारस्वत्यामतिदिष्टवर्णमात्रबाधादेकगुणविधिर्युक्तः । नैवम् । गुणविधिर्हि आश्रयाकाङ्क्षः प्रकृतिगामी लब्धाश्रयः प्रातिपदिकार्थं विधातुं, न तु तद्गुणभूतस्त्रीत्वप्राप्त्यनुरोधात् उत्कर्षार्हः, पाशवत् । अतो[2] न्यायागतोपदिष्टपुंस्त्वबाधः । पक्षे लोहितादि तु यद्यर्थाक्षिप्तं तर्हि नित्यवद्बाध्यम् । यद्युपदिष्टं तथापि पक्षे बाध्यम् । सारस्वत्यान्तु वर्णबाधोऽभ्युच्चयमात्रम् साप्तदश्यन्तु न गुणानुरोधात् विकृतिगामि, न चाश्रयाकाङ्क्षम् । अनुवचनाश्रयस्यैव श्रुतेः आश्रयतः निराकाङ्क्षमेव इति सुस्थम् । अत्र चिन्त्यते—किमुपदिष्टबाधात् प्रकृतिगामि किमतिदिष्टबाधात् विकृतिगामीति । पुनराम्नानोपसंहृतं विकृतिविशेषेष्विति दिङ्मात्रम् ।

अत्र भाष्यम्—"अथ कस्मात्, पुनः सङ्ख्याविशिष्टान्याज्यानि

नन्वेवमुपदिष्टगुणद्वयबाधापत्तेः तत्परिहाराय सारस्वत्यामेव विधिरस्तु । तत्रातिदिष्टैकवर्णगुणबाधमात्रमेकगुणविधिश्चेति चोदयति—नन्विति । नैवमिति । गुणविधिः गुणं विधातुं आश्रयमपेक्षमाणः तदर्थं निरपेक्षतया प्रथमं प्रकृतिं गच्छति तत्र प्रधानभूतप्रातिपदिकार्थचित्रत्वं विधातुं लब्धाश्रयो न प्रातिपदिकार्थगुणभूत[3]-पाशवत् प्रातिपदिकार्थबलीयस्तया मूलयुक्त्या प्रकृतिनिवेशित्वमुक्तम् । वर्णबाधस्त्वभ्युच्चयमात्रमित्यर्थः । नन्वेवं साप्तदश्यमपि प्रकृतिनिवेशि स्यादित्यत्राह—साप्तदश्यं त्विति । न हि साप्तदश्यं गुणानुरोधात् विकृतिगामि । न चाश्रयापेक्षया स्थानान्तरगामि अनुवचनरूपाश्रयस्य श्रुतेः । किं तर्हि तत्र चिन्त्यत इत्यत्राह—आश्रयत इति । आश्रयतोनिराकाङ्क्षमेव उपदिष्टातिदिष्टबाधं प्रति चिन्त्यमानं पुनराम्नानबलात् विकृतिविशेषेषु उपसंहृतमिति न विरोध इत्यर्थः ।

ननु पुनराम्नानादभ्यर्हितप्रकृतिनिवेशत्यागो न युक्तः तस्यान्यथापि वर्णनसम्भवादिति शङ्का दिङ्मात्रग्रहणनिवर्त्या । निवृत्तिस्तु यद्यप्यनपेक्षतया प्रथमावगतप्रकृतिनिवेशस्वारस्यं तथापि अनारभ्याधीतवाक्यस्य ग्राहकान्वयापादनद्वारा अन्वयापादनरूपव्यापारगौरवापत्तेः तत्परिहाराय यत्र पुनराम्नानं तत्रैव पुनराम्नानापादितग्राहकान्वयस्य द्वारान्वयमात्रापादनेन निवेशो युक्त इत्यर्थः । तत्र भाष्ये अथ कस्मान्न पञ्चदशसङ्ख्याविशिष्टाज्यानि स्तोत्रे न विधीयन्ते इत्युक्तं तत्पुनरुक्तं मन्वानस्तदनुभाष्य तात्पर्यमाह—अत्र भाष्यमिति । शङ्कास्वरूपमाह—अग्नय इति । पृथक् श्रुतपदविषयेपि यथा अग्नये पावकायेति

१. A धभयात् २. A न ३. स्त्रीत्वानुरोधात् सारस्वत्यामुत्कर्षः इति शेषः ।

स्तोत्रे न विधीयन्त" इति तदधिकाशङ्कार्थम् । अग्नये पावकायेतिवद्विशिष्टविधौ न विध्यावृत्तिः । तत्रोत्तरम्—प्राग्विधानात् अग्नेः पावकता सिद्धा न ह्याज्यानां सङ्ख्याभेदो विधिं विनेति भेदः । अथाग्निप्रजापत्योरिवैककारकतया एकार्थविधिः । तन्न । इह मिथोऽन्वयानुग्रहायोद्देश्यविधेयतयान्वयः । तत्र तु नैवमन्वयार्हतेति भेदः ।

चित्राख्यायाः प्रवृत्तिस्तु नानावर्णहविर्गुणात् ।
आज्यनामाऽऽजियानात् वाक्यशेषविशेषतः ॥

## ॥ ३ ॥ तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

अत्रापि उद्भिदधिकरणशेषतया न पृथक् सङ्गतिः । तत्र हि सामाना-

---

पावकत्वविशिष्टाग्निधीः तथेहाप्यस्त्विति शङ्काभाष्यतात्पर्यमित्यर्थः । उत्तरभाष्यतात्पर्यमाह—तत्रेपि । प्राग्विधानात् विधिं विनापि अन्यत एवाग्निपावकयोः विशेषणविशेष्यभावसम्बन्धावगमात् । आज्यानां तु सङ्ख्याविशेषो न विधिं विना सिद्ध इति भेद इत्यर्थः ।

ननु अन्यतोऽनवगतसम्बन्धविषयेपि यदग्नये च प्रजापतये चेत्यत्र अग्निप्रजापत्योः पृथक्श्रुतयोरपि यथा विशिष्टावस्थविधिः तथेहाप्यस्त्विति शङ्कते–अथेति । तन्नेति । युक्तं तत्रोभयाधिष्ठितैककारकताविधिरित्यन्योन्यान्वयानवगमात् । इह तु मिथोऽन्वयावगतेः तदनुग्रहायोद्देश्यविधेयतयैवान्वयः । तत्र तु नैवमन्वयार्हतेति भेद इत्यर्थः । ननु चित्राज्यशब्दयोः अक्लृप्तप्रवृत्तिनिमित्तकत्वे कथं नामतेत्याशङ्क्य प्रवृत्तिनिमित्तक्लृप्तिं दर्शयति—चित्राख्येति । स्थिते चैतन्नये गुणफलोपबन्धेन अर्थवत्तेति पूर्वोक्ताभ्युच्चयः स्थित इति भावः ।

## ॥ ३ ॥ तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

अग्निहोत्रं जुहोति आघारमाघारयति इति श्रुतम् । तत्र चिन्ता-तत्र किमग्निहोत्राघारशब्दौ गुणविधी उत कर्मनामधेये इति । ननु गुणविधिनामधेयपरा चिन्ता कथं प्रमाणलक्षणे सङ्गतेत्याशङ्क्य चित्राधिकरणवदत्रापि उद्भिदधिकरणशेषतया लक्षणसङ्गतिरित्याह—अत्रापीति । ननु चित्रानयवदस्य उद्भिन्नयाभ्युच्चयसमर्थनपरत्वाभावात् कुतस्तच्छेषतेत्यत्राह—तत्र हीति । अभ्युच्चयसमर्थनरूपत्वाभावेपि तत्साधितनामत्वस्यैव क्वचिदुदाहरणविशेषे आक्षेपसमर्थनरूपत्वात् तच्छेषता । अत एव चित्रानयानन्तर्यमपि । चित्रानयस्याभ्युच्चयसमर्थनरूपतया नामत्वसाधनसमर्थ एवान्तर्भूतत्वात् पूर्वता । अस्य तु साधितनामत्वाक्षेपसमर्थनरूपतया चरमतेति भावः ।

धिकरणेन गुणविधौ मत्वर्थलक्षणापत्तेर्नामतोक्ता। इह तत् क्वचिदाक्षिप्य समर्थ्यते। अग्निहोत्रपदं हि होमे प्रवृत्तं तदुपसर्जनाग्निगुणविधिरस्त्वित्याक्षेपः। यदि हि पृथक् चिन्तेयमभिमता स्यात् तदा प्रसङ्गात्[१] सङ्गतिरुच्येत। साक्षाद्वा तत्प्रख्याग्निहोत्रवाक्ययोर्मध्ये केन गुणविधिरिति अनध्यवसायात् अव्यवस्थयैव पूर्वपक्षस्थितिरित्युच्येत। न च तथा ग्रन्थः। किन्तु उक्तनामाक्षेपपरतयैव। उत्पत्तिस्थमधिकारस्थं वाग्निहोत्रपदं गुणपरमिति न चिन्तितम्। वस्तुतस्तु अधिकारस्थं न गुणार्थमन्यपरत्वाद्वाक्यस्य। उत्पत्तिस्थमेव गुणपरमित्यनास्थया भाष्ये अधिकारवाक्यमुदाहृतम्, उत्पत्तौ चाकरणं क्रियेति द्वितीयान्तं समानाधिकरणम्।

---

आक्षेपमाह—अग्निहोत्रेति। सामानाधिकरण्येपि मत्वर्थलक्षणाभावात्। कश्चित्तु गुणविधिनामधेयप्रसङ्गात् अध्याये सङ्गतिरित्यूचे। अपरे तु तत्प्रख्यवाक्याग्निहोत्रवाक्ययोर्मध्ये केन गुणविधिरित्यनध्यवसायात् सङ्गतिरित्यूचुः। तदुभयमपि परशेषतया साक्षात् सङ्गतौ सम्भवन्त्यां न प्रसङ्गसङ्गतिर्युक्ता। तथा स्वतन्त्रतया साक्षात्सङ्गतिः ग्रन्थानुक्ता न युक्तेत्युपन्यस्य निरस्यति—यदि हीति। ननु किमिहोदाहरणं किमुत्पत्तिवाक्यस्थं अग्निहोत्रपदं किं वा अधिकारवाक्यस्थम्? नाद्यः, भाष्यानुक्तेः। न द्वितीयः, अन्यार्थत्वाद्वाक्यस्येति किमिति टीकाकृता उदाहरणं न निरूपितमित्यत्राह—उत्पत्तिस्थमिति। स्फुटत्वादिति शेषः। ननु पूर्वोक्तविकल्पदुस्थतया कथं स्फुटतेत्यत्राह—वस्तुतस्त्विति। अधिकारस्थोऽग्निहोत्रशब्दो न गुणविध्यर्थः अधिकारान्वयविध्यर्थत्वात तस्य वाक्यस्यतत्र गुणान्वयेऽपि विधीयमाने वाक्यभेदापत्तेः। अत उत्पत्तिस्थमेवाग्निहोत्रपदं गुणविधिपरमिति तदेवोदाहरणमित्यर्थः। ननु तर्हि किमिति भाष्यकारोऽधिकारस्थमुदाहृतवानित्यत्राह—अनास्थयेति। द्वितीयान्तपदसामानाधिकरण्याञ्जस्यादपि तदेवोदाहरणमित्याह—उत्पत्तौ चेति। उत्पत्तौ क्रियायाः साध्यत्वावगमेन करणत्वाभावात् द्वितीयान्तेन सह सामानाधिकरण्यमाञ्जस्येन घटते अन्यथा कृत्यनीप्सितकर्मतया कथञ्चिन्नेयमिति भावः। ननु अग्निहोत्रपदस्य होमपरत्वे सिद्धे सामानाधिकरण्यं मत्वर्थलक्षणाभावश्च तदेव तु कुत इत्यत्राह—बहुव्रीहिणेति। बहुव्रीहिसमासाङ्गीकारेण अग्निहोत्रशब्दस्य होमवचनत्वं ग्रन्थोक्तमित्यर्थः।

ननु अग्नये होत्रं हवनमग्निहोत्रमिति हुयामाश्रुभसिभ्यस्त्रन् (उ ६०७) इति त्रन्नन्तं उणादयो बहुलमिति भावसाधनं होत्रपदमादाय चतुर्थीतत्पुरुषेण

---

१. M अपनयात्

बहुव्रीहिणा होमे प्रवृत्तिरुक्ता। होमकरणे होत्रपदप्रवृत्तेः। होमसामानाधिकरण्यस्य बलवतो[1] बहुव्रीह्यधीनत्वात् व्यधिकरणोऽपि जघन्योऽपि बहुव्रीहिरेव। स च न सप्तमीगर्भः अग्नौ होमस्य प्राप्तेः अतोऽपेक्षितदेवतार्थं चतुर्थीगर्भ एवेत्युपसर्जनदेवताविधिः हिरण्यस्रज ऋत्विज इतिवत्।

---

होमवचनत्वे सिद्धे किमिति बहुव्रीह्यङ्गीकारो ग्रन्थे इत्यत्राह—होमकरण इति। होमकरणे मन्त्रे द्रव्ये वा होत्रपदस्य व्युत्पत्तेः न भावसाधनत्वनिबन्धनतत्पुरुषाङ्गीकारेण होमवचत्वं न्याय्यमिति भावः। ननु सर्वसमासेभ्यो जघन्यो बहुव्रीहिः तत्रापि व्यधिकरणः तद्वरमग्निश्चासौ होत्रं चेति सर्वश्रेष्ठकर्मधारयाङ्गीकारेण होमसाधनत्वमात्रविवक्षयापि होत्रपदोपपत्तेः तदुपसर्जनाग्निविधिरस्तु तत्राह—होमसामाधिकरण्यस्येति। यदेतदविरुद्धविभक्तितया अग्निहोत्रं जुहोतीति सामानाधिकरण्यमवगतं तद्वैयधिकरण्याद्बलवत्। अतो बलवत्सामानाधिकरण्यस्य बहुव्रीह्यधीनत्वात् व्यधिकरणोऽपि जघन्योऽपि बहुव्रीहिरेवाङ्गीकरणीयः। एतदुक्तं भवति—यद्यग्निश्चासौ होत्रं चेति कर्मधारयः स्वीक्रियते तदा देवतात्वेन विना प्रकारान्तरेण तस्य विधानानुपपत्तेः तदनुगुणचतुर्थ्यन्ततया अग्निहोत्रायेति रूपं स्यात। तच्च न तथा। अथ विष्णुं यजतीतिवत् उद्देशकर्म तया द्वितीयेति चेत् तथापि होत्रपदेनाग्निपदस्य सामानाधिकरण्यानुपपत्तिः होमकरणे होत्रपदप्रसिद्धेः। होमे च करणं मन्त्रो द्रव्यं वा न देवता। अतः कर्मधारयोऽपि क्लिष्टक्लृप्त्याऽङ्गीकार्यः तद्वरं बलवत्सामानाधिकरण्यानुगुणबहुव्रीहिरेव। अत एव सामानाधिकरण्याननुगुणत्वात् द्वन्द्वोऽपि प्रत्युक्तः।

ननु भवतु बहुव्रीहिः सा तु सप्तमीगर्भ एव न्याय्यः सप्तमीविशेषणे बहुव्रीहौ इति ज्ञापकबलात् व्यधिकरणस्यापि तस्यानुमतत्वादित्यत्राह—स चेति। यदाहवनीये जुहोतीत्यनेन अनुपसर्जनाग्निविधायकेन होमस्य झटिति अग्न्याधारत्वप्राप्तेः। ननु शास्त्राननुमतत्वात् चतुर्थीगर्भस्वीकारः कथमित्याशङ्क्य निगमयन् परिहरति अत इति। अपेक्षितविधिबलात् तदङ्गीकार इत्यर्थः। ननु उपसर्जनविधावप्युत्तरपदार्थंभूतमन्त्रो द्रव्यं वा किमिति न विधीयत इत्यत्राह—इत्युपसर्जनेति। होत्रपदस्य द्रव्यविशेषमन्त्रविशेषानुपस्थापकत्वात् तद्विध्यनुपपत्तेः देवताविधिरेवेत्यर्थः। ननु उपसर्जनविधिरेव दोषः तद्वरं भावार्थविधिरेवेति शङ्कां दृष्टान्तव्याजेनापवदति—हिरण्येति। अयं भावः सगुणश्रुतौ गुणपरं वाक्यं रक्तपटवत्। अतः प्रवृत्तिविशेषकरत्वादिना गुणविधौ तात्पर्येऽवधृते मत्वर्थलक्षणादिगुणविधिदोषाभावाच्च हिरण्यस्रज ऋत्विज इतिवत् उपसर्जनविधिरपि न दोष इति। ननु

---

१. बलवत्त्वात् तस्य M. R

न च विशिष्टविधिः गौरवादित्याश्रयासन्निधेः धर्माकाङ्क्षव्यवहितदर्वीहोमेषु विधिः। दध्यादिविधिरपि तत्रैव। यदि तेषु गुणान्तरश्रुतिः अगत्या विकल्पोऽस्तु। न च फलवाक्यादपि(दर्वी)होमविधिः उत्पत्तिस्थाग्निहोत्रपदप्रत्यभिज्ञया "फलश्चाकर्मसन्निधावि"त्यस्य हानादितीयं दिक्।

---

सर्वोपपत्त्यर्थं गुणविशिष्टकर्मविधिरस्तु इत्यत्राह—न चेति। होमोद्देशेन गुणमात्रविधौ सम्भवति न विशिष्टविधानं युक्तं गौरवापत्तेरित्यर्थः।

नन्वत्र गुणमात्रविधिर्नसम्भवति सन्निहितस्याश्रयस्याभावादित्यत्राह—इत्याश्रयेति। इत्यनेन प्रकारेण गुणविधिपरत्वेऽवधृते यद्याश्रयासन्निधिस्तदा व्यवहितदर्विहोमोद्देशेन विधिरस्तु तेषामसम्पूर्णोपदेशत्वादपूर्वतयाऽतिदेशाभावाच्च धर्माकाङ्क्षित्वादित्यर्थः। नन्वेवं यद्यग्निहोत्रवाक्ये न कर्मविधिस्तर्हि दध्यादिविधेर्निराश्रयापत्तिरित्यत्राह—दध्यादीति। अग्निहोत्रविधिवत् दध्यादिविधिरपि तत्रैव दर्विहोमे गुणविधायक इत्यर्थः। ननु दर्विहोमेषु सन्निधिश्रुतवाक्यान्तरात् गुणान्तरप्राप्तेर्न तत्र गुणविधिरित्यत्राह—यदीति। यदि तेषु गुणान्तरप्राप्तिस्तदा गत्यन्तराभावात् द्वयोर्वाक्यशिष्टत्वात् विकल्पोऽस्त्वित्यर्थः। ननु अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यधिकारवाक्यस्थजुहोतिना होमविधेराश्रयलाभात् तत्रैव गुणविधिरस्तु माभूदुत्कर्ष इत्यत्राह—न च फलेति। अधिकारवाक्यस्य होमाधिकारसम्बन्धविधिपरत्वात् न होमविधिपरत्वम् उभयविधिपरत्वे वाक्यभेदापत्तेः। अतो नाधिकारवाक्येन होमसन्निधिरिति न तत्र गुणविधिरित्यर्थः। ननु आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः इतिवत् फलं चाकर्मसन्निधाविति नयात् अधिकारवाक्यस्यैवोभयपरत्वमस्त्वित्यत्राह—उत्पत्तिस्थेति। अधिकारवाक्यस्थाग्निहोत्रपदेन उत्पत्तिस्थाग्निहोत्रपदप्रत्यभिज्ञया तस्य च दर्विहोमवचनतया तस्य होमस्यात्र प्रत्यभिज्ञानात तस्याधिका[1]रान्वयसिध्यर्थमिदं वाक्यान्तरं न कर्मान्तरविध्यर्थमिति फलं चाकर्मसन्निधावित्यस्य नायं विषय इत्यर्थः।

नन्वत्र दर्विहोमे वाक्यान्तरेण वा स्ववाक्यत एव वा अधिकारान्वयसिद्धेर्नेदं काम्यवाक्यम् तद्विधिपरम्। किन्तु कर्मान्तरस्यैव फलान्वयपरमिति न गुणविध्युत्कर्ष इति शङ्का आदिवत्पदनिवर्त्या। निवृत्तिस्तु तत्कर्मप्रत्यभिज्ञाप्राबल्यात् क्लिष्टक्लृप्त्यापि दर्विहोमस्यैवाधिकारान्वयपरः अनुवादो वा न पुनः कर्मान्तरस्येति। ननु आधारोदाहरणे आधार्यद्रव्योद्देशेन आधारणक्रियाविधिरिति पूर्वपक्षितं ग्रन्थे तदनुपपन्नं गुणविधिरेव पूर्वपक्षतया वाच्यः न क्रियाविधिः। तथा

---

१. A धिकारार्थमिदं।

आघार्ये द्रव्ये गुणकर्माघारणविधिः। इह सामानाधिकरण्यमनुपयोगि मत्वर्थलक्षणां विना गुणविधिरित्यैकाधिकरणता, आघारणं हि स्वभावात् कर्मकारकनिष्ठमित्याकाङ्क्षायोग्यताभ्यां द्वितीयान्तमीप्सितपरम्। अकर्तरि चेति ईप्सित एव घञन्तम्। आघारार्हे प्रकृते प्रधानोपांशुयाजाज्ये

---

यदेव नामतया राद्धान्तिनोऽभिमतं तस्यैव विधेयार्थता पूर्वपक्षिणा वाच्या यथा उद्भिदादिषु। न चात्र तथा किन्तु आघारपदस्य नामता राद्धान्ते, आघारयतीत्यस्य पूर्वपक्षे विधेयार्थता। अतस्तत्र कथं पूर्वपक्ष इत्यत्राह—आघार्य इति। अस्यार्थः उद्भिदादीनामपि गुणत्वं क्रियां प्रति गुणभूततया न तु शौक्ल्यादिवत् गुणवचनतया, द्रव्यवचनत्वात्तेषां अतोऽत्रापि द्रव्यं प्रति गुणभूतसंस्कारकर्मणो विधानात् गुणविधित्वम्। तथा यदेवाघारपदं नाम तस्यैव द्रव्यपरतया उद्देश्यसमर्पकतया गुणभूतकर्मविधानार्थतया नामताप्रतिपक्षत्वात्। अतः आघारमाघारयतीत्याघार्यद्रव्यमुद्दिश्य गुणकर्माघारणविधिरिति पूर्वपक्ष इति।

नन्वेवमधिकरणभेदः स्यात् पूर्वपक्षभेदात् एकत्र सामानाधिकरण्येनाग्निगुणविधिः अपरत्र वैयधिकरण्येन द्रव्योद्देशेनाघारणविधिरिति तत्राह—इहेति। इह गुणविधौ सामानाधिकरण्यमनुपयुक्तं किन्तु मत्वर्थलक्षणाया अभावः। स चोभयत्राप्यविशिष्ट इत्यैकरूप्यात् पूर्वपक्षस्य ऐकाधिकरण्यमित्यर्थः। ननु कथमाघारपदस्य द्रव्यपरता आघार इति णमुलन्ततया भावपरत्वेन पेषं पिनष्टीतिवत् अन्वयोपपत्तेरित्यत्राह—आघारणमिति। आघारणं हि स्वभावात् कर्मकारकनिष्ठमिति कर्मकारकाकाङ्क्षायां द्वितीयान्तमाघारपदं स्वतः ईप्सितद्रव्यपरत्वयोग्यमिति आकाङ्क्षायोग्यताभ्यामीप्सितद्रव्यपरम्। अन्यथा णमुलन्तत्वे स्ववाक्ये द्रव्याश्रुतेः सकर्मकमिदं तिङन्तपदमन्विताभिधानाय कर्मापेक्षं प्रकरणासन्निहितद्रव्यान्वितं स्यात्। तच्च स्ववाक्य एवाघारपदस्य द्रव्यपरत्वेन द्रव्यसन्निधौ सम्भवति न युक्तम्। णमुलुत्पत्तेर्दुर्निरूपत्वादपि न तदन्तत्वं युक्तमिति भावः। ननु णमुलन्तत्वाभावे घञन्तत्वमाघारणपदस्य वाच्यं घञपि भावे विहित इति न द्रव्यपरत्वमित्यत्राह—अकर्तरि चेति। सत्यं सामान्यानुशासनापेक्षया भावधीः तथापि अकर्तरि च कारके संज्ञायां इति विशेषानुशासनात् कर्मणि विहितघञन्ततया ईप्सितद्रव्यपरमेव। अन्यथा भावसाधनत्वे आर्तिमार्च्छेदितिवत् आघारयति इति कर्तव्यतामात्रपरतया प्रकृत्यंशोऽनुवादः स्यात्। स च गत्यन्तरे सति न युक्त इति भावः।

ननु द्रव्यमात्रान्वये कार्यानन्वयः स्यात् नियोगीयतयाऽन्वयेपि प्रकृतसर्वद्रव्यान्वयः स्यात् तत्राह—आघारार्ह इति। आघारार्हप्रकृतोपांशुयाजाज्य एवाघारण-

अप्राप्ताघारसंस्कारविधिः ।

यद्यप्याघारणं दीर्घधारयाक्षारणं तत् सान्नाय्येऽपि तथापि न तत्परमाघारपदम् । नासोमयाजीत्यनित्यत्वात्तस्य । अपितु आज्यपरं आज्यस्य नित्यत्वात् प्रयोगव्यवस्थया च तदित्याज्यविषयमेव । अथ प्रयोगे विमतिः । न । चतुर्गृहीतादिसमभिव्याहारात् । आज्यविषय एव हि चतुर्गृहीतविधिः । "इन्द्र ऊर्ध्व" इति च मन्त्रविधिराघारसंयोगादा-

---

विधेः तद्द्वारा कार्यान्वयोपपत्तिः । नापि सर्वद्रव्यान्वयः आज्यव्यतिरिक्तानामाघारणानर्हत्वात् । ननु आघारार्हत्वं प्रकृतत्वं च प्रयाजाद्याज्यानामपि तुल्यमिति तदर्थमपीदं किं न स्यात् इत्यत्राह—प्रधानेति । प्रकरणात् प्रधानान्वये सति नाङ्गान्वय इति भावः । ननु आज्यहविष्कोपांशुयाजस्य तिष्ठद्धोमत्वात् आघारः प्राप्त इति तद्विधिर्व्यर्थः तत्राह—अप्राप्तेति । होमे अर्थप्राप्ताघारादिदमाघारान्तरं द्रव्यसंस्कारतया विधीयत इत्यर्थः । ननु आघारार्हत्वप्रकृतत्वप्रधानान्वयित्वानि सान्नाय्यस्यापीति किमिति न तदर्थतेत्यत्राह—यद्यपीति । यद्यपि दीर्घधाराक्षरणरूपमाघारणं सान्नाय्येपि तथापि न तत्परमाघारपदं नासोमयाजीत्यनेन असोमयाजिनं प्रति सान्नाय्यनिषेधात् अनित्यत्वात्तस्य; नित्यश्रुतसंस्कारस्य नित्यमेवाज्यं द्वारतार्हम् नानित्यं सान्नाय्यहविः नित्यानित्यसंयोगविरोधादित्यर्थः । ननु अनित्यत्वेपि सान्नाय्यस्य द्व्यवदानसंस्कारान्वयदर्शनात् नेदमनित्यत्वं संस्कारानन्वये तन्त्रमित्यरुच्या हेत्वन्तरमाह—प्रयोगेति । तदाघारपदं प्रयोगव्यवस्थया नित्यमेवाज्यपरमिति तद्विषयमेवेत्यर्थः । शङ्कते—अथेति । प्रयोगनियमे कारणाभावात् तत्र विमतिरित्यर्थः । नेति । प्रयोगनियमे चतुर्गृहीतादिसमभिव्याहारः कारणमस्तीत्यर्थः । ननु चतुर्गृहीतादिसमभिव्याहारेपि कथमाज्यविषयत्वमित्यत्राह—आज्येति । यस्मात् चतुर्गृहीतादिविधिराज्यविषय एव अन्यत्र तु चतुरवत्तविधिः । तस्मात् तत्समभिव्याहारे तद्विषयत्वमाघारपदस्यावगतं इत्यर्थः । ननु 'इन्द्र ऊर्ध्वो अध्वर' इति मन्त्रवर्णावगतदेवतान्वयबलात् स्ववाक्ये द्रव्यलाभाच्च आघारयतीति प्रस्तरप्रहरणवद्यागविधिरेवेत्यत्राह—इन्द्र ऊर्ध्व इति चेति । अयं मन्त्रोऽपि द्रव्यं प्रत्येव विधीयते आघार्यद्रव्यसंयोगात् । ननु इतिशब्दान्मन्त्रस्य करणत्वावगतेः देवताप्रकाशनसमर्थस्य द्रव्यान्वयायोग्यत्वाच्च न द्रव्यसंबन्धो युक्त इत्यत्राह—तद्द्वारा चेति । तदाघार्यद्रव्यं द्वारीकृत्य उपांशुयाज एव मन्त्रान्वयादितिशब्दावगतकरणत्वोपपत्तिः । ततश्च तत्प्रकाशितदेवताया अपि उपांशुयाज एव निवेश इत्यर्थः । ननु च विष्ण्वादयो देवतास्तत्र प्राप्ता इति किं देवतान्तरविधानेन, तथा आघार्यद्रव्योद्देशेन मन्त्राघारणोभयविधौ वाक्यभेदः स्यात् । तद्वरं यागविधि-

घार्यद्रव्ये, तद्द्वारा चोपांशुयाज एव मान्त्रवर्णिकी देवतेति दिक्। प्रस्तरस्तु न हविः पूर्वमिति न मान्त्रिक्या देवतया पूर्वयागनिवेशीति हरतिर्यजतिः। सूक्तवाकान्वयादिति भेदः।

भाष्येऽपि आघार्यद्रव्यविधिरेवोपांशुयाज उक्तः। तत्र यद्यप्याघारयतीति नोपांशुयाजोद्देशः अन्योन्याश्रयत्वात् आघार्यद्रव्यविधौ हि तद्योगात् आघारयतीति तदुद्देशः। तदुद्देशेन च तद्विधिरिति तथापि 'चतुर्गृहीतं वा एतदभूत्' इत्ययं विधिः चतुर्गृहीतेनाज्येन कर्म कुर्यादिति। स च द्रव्यशून्ये उपांशुयाजे। तदेवमाज्यवत्त्वात्प्राप्तमाघारयतीत्यनूद्यते। एतच्च द्रव्यविधिपक्षेपि तत्प्रख्यान्नाम्नैवेति वक्तुम्।

---

रित्यत्राह—इति दिगिति। अयं मार्गोऽनुसन्धेय इत्यर्थः।

अयं भावः एकवाक्यत्वे सम्भवति हि वाक्यभेदो नेष्टः। इह तु द्रव्योद्देशेन मन्त्राघारणोभयविधौ प्रमाणबलायातो वाक्यभेदोऽपि युक्तः। आर्थवादिकविष्णवादिदेवताभिरगत्या मान्त्रवर्णिकदेवताया विकल्पोऽस्तु तासामपि विकल्प्यत्वादिति। कथं तर्हि प्रस्तरं प्रहरति इति सूक्तवाकान्वयात् यागविधिरित्यत्राह—प्रस्तरस्त्विति। इतः पूर्वं प्रस्तरस्य न क्वापि यागे हविष्ट्वेन विधानमिति तदुद्देशेन मन्त्रविधानासम्भवान्न तद्द्वारा तदीययागनिवेश इति हरतिर्यजतिरेव युक्त इत्यर्थः। अत्र भाष्योक्तं पूर्वपक्षमनुभाषते उपपादयितुं—भाष्येपि इति। आघारयतीत्यनेन उपांशुयाजमुद्दिश्याघार्यद्रव्यविधिः आघारणस्यार्थप्राप्तत्वात्। द्वितीया चानीप्सिते उपांशुयाजोद्देशद्वारभूतार्थप्राप्ताघारणकर्मतयेति भावः। ननु कथमाघारयतीत्युपांशुयाजोद्देशः अन्योन्याश्रयात् आघार्यद्रव्यविधौ हि तद्योगादाघारयतीत्युपांशुयाजोद्देशः तदुद्देशे च तद्विधिरिति इमां शङ्कामनूद्य परिहरति-तत्र यद्यपीति। चतुर्गृहीतं वा एतदभूदित्यनेन चतुर्गृहीताज्येन कर्म कुर्यादिति वचनव्यक्तिमाश्रित्याज्यविधिः। स चोपांशुयाज एव, अपेक्षितविधेः। अत्र चोद्देशे विशेषाश्रवणात् तस्य च द्रव्यशून्यत्वादपेक्षितविधिः "सर्वस्मै वा एतद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यं" इत्येतदप्येतद्वाक्यबलादुपांशुयाज आज्यप्राप्तेस्तदितरयज्ञपरमित्यनुसन्धेयम्। अतो वाक्यान्तरतो लब्धाज्यमुपांशुयाजमुद्दिश्याघार्यद्रव्यविधिरुपपन्न इति भावः।

ननु किं विधीयमानमाघारद्रव्यं आज्यं, आघारणार्हद्रव्यान्तरं वा? नाद्यः प्राप्तत्वात्। न द्वितीयः विकल्पापत्तेः। अतो द्रव्यविधिपूर्वपक्षो न युक्त इत्यत्राह—एतच्चेति। भवतु काशं कुशंवाऽवलम्ब्य द्रव्यविधिघटनम् तथापि तत्प्रख्यन्या-

राद्धान्तस्तु यो गुणो विधेयः सोऽन्यतो लब्धः । अग्निर्हि यदग्नये च प्रजापतये चेत्यनेन लब्धः । विपरीतं न कुतः, (प्रजापतेश्च विधानादेव) एवम्, अगत्या ह्युपसर्जनपरो विधिः यदग्नये च प्रजापतये चेति विधौ स न

---

यान्नामतैवेति वक्तुमेतदुक्तं भाष्ये । वस्तुतस्तु संस्कारविधितयैवात्र पूर्वपक्ष इत्यभिप्रायः । राद्धान्तस्त्विति । उदाहरणद्वयेपि यो गुणो विधेयतयोपन्यस्तः सोऽन्यतो ऽलब्धो वाक्यान्तरतो लब्धः। एवं सामान्येनोक्त्वा विशेषतो दर्शयति—अग्निर्हीति । नन्वनेन वाक्येनाग्निविधौ तद्वाक्यमनुवादकमस्त्विति चोदयति–विपरीतमिति । उत्तरं एवमिति । स्वतः साध्यसमानपदोपात्तभावार्थविधिपरत्वं विहाय उपसर्जनीभूतगुणविधिपरत्वमसति गत्यन्तरे । तदिह यदग्नये चेत्याद्यनुपसर्जनाग्निविधौ गतौ सत्यां न युक्तमित्यर्थः । एतेनेदं निरस्तम्–यदाह कश्चित्–अग्निर्ज्योतिरिति मन्त्रवर्णात् अग्नेर्देवतात्वेन प्राप्तेः यदग्नयेचेति वाक्यं प्रजापतेः समुच्चयार्थमिति । यतोऽग्नयेचेति स्फुटदेवतात्वे सम्भवति नास्फुटमन्त्रवर्णतो देवतास्वीकारो युक्तः । न च यदग्नये चेति वाक्यस्य प्रजापतिसमुच्चयविध्यर्थत्वान्न देवताविधित्वमिति वाच्यम् । यतः समुच्चयविधिरेवायुक्तः । तत्र हि यदग्नये जुहोति तत्प्रजापतये जुहोतीति वचनव्यक्तिः स्यात् । तथाचाग्निदेवताविशिष्टजुहोतौ प्रजापतिदेवतायाः समुच्चेतव्यतया विधावुत्पत्तिशिष्टगुणावरोधतुल्यो दोषः स्यात् । किञ्च लिङ्गविनियोज्यत्वादप्यस्य मन्त्रस्य न देवताप्रापकत्वम् । अतोऽस्मिन् देवताविधौ सम्भवति न मन्त्रवर्णतो देवताकल्पनमुचितम् । अन्यथा न क्वापि देवताविधिः स्यात् । सर्वत्र मन्त्रवर्णादेव प्राप्तेः । यथा आग्नेयादौ । समिधो यजतीत्यत्र तु देवताविध्यन्तराभावात् मन्त्रवर्णतो देवतालाभः । अतो यदग्नये चेत्येतदेव वाक्यं तत्प्रख्यशास्त्रं न मन्त्रवर्णः यदुपबन्धोऽपि वाक्यस्यानन्यगतिकतया यदाग्नेय इतिवन्न दोषाय ।

नन्विदमपि न तत्प्रख्यतार्हम् । अत्र हि अग्निप्रजापत्युभयाश्रितैकदेवताविधेरुत्तरत्र यत्नेन साधयिष्यमाणत्वात् अग्निप्रजापतिर्देवता । अग्निहोत्रवाक्ये तु केवलाग्निरिति विधेयदेवताभेदात् । न च वाक्यान्तरेण देवतागुणप्राप्तेः तस्य चानुपसर्जनविधितया शीघ्रभावित्वात् तद्विपर्ययादनेन देवतागुणान्तरमविधेयमुपसर्जनतया विलम्बितं विधेयमित्येवं तत्प्रख्यता वाच्या । अग्निर्हि यदग्नये चेत्यनेनेत्यादिग्रन्थविरोधात् । उच्यते । नात्र स्थायित्वेन तत्प्रख्यत्वं ब्रह्मणापि सुवचम् किन्तु विमर्शदशावगतविधेयालोचनया । तथाहि—यदग्नये च प्रजापतये च सायं जुहोति इति वाक्यश्रवणसमनन्तरं भेदेन चतुर्थीचकारयोः श्रवणात् भेदेन देवताद्वयं विधातुं योग्यमिति गम्यते । पश्चादेकस्मिन् वाक्ये उद्दिश्य गुणद्वय-

युक्तः। नन्वयमेकवाक्येऽनेकगुणविधिः। तन्न। अग्निप्रजापत्योराश्रययोरत्रानेकता कर्मान्वयिनस्तु देवतारूपकारकस्यात्रैकतयैव विधिः। न च प्रत्येकं चतुर्थीतः प्रत्येकं देवतात्वं, चतुर्थीतो हि तत्कल्प्यम्। एकवाक्ये हि गुणपरे ऽनेकाश्रितमेकमेव कल्प्यं विधेयम्। चतुर्थी चशब्दश्च आश्रयमात्रसमुच्चयेऽपि हि साधुः। प्रत्यभिज्ञालाघवाभ्यां न होमान्तरविधिः

---

विधानानुपपत्तेः उभयाधिष्ठितमेकदेवतात्वं विधेयमित्याश्रीयते। अतो विमर्शरूपप्राथमिकावगमादादायात्र तत्प्रख्यतोच्यते। न तु स्थायिनं पाश्चात्यम्। अन्यथा आघारोदाहरणेपि तत्प्रख्यता न स्यात्। तत्रापि सन्ततादिवाक्यानां प्रमुखावगतविशिष्टविधिनैव तत्प्रख्यता। नतु पाश्चात्येन स्थायिना सान्तत्यादिगुणविधित्वात्। यद्वा यदग्नये चेत्यनुपसर्जनो विधिः शीघ्रं अग्निहोत्रमित्युपसर्जनपरो विलम्बी, अतोऽत्रापि विषमशिष्टविकल्पहानाय देवतांशभूताग्निविधिर्वाच्यः। तथा च तस्य वाक्यान्तर एव प्राप्तेः तद्विधिर्न स्यात् इत्येवमापाद्यते तत्प्रख्यता। तदुक्तं भाष्ये—अग्निं ह्येष विधातुं न शक्नोति न प्रजापतिं निषेद्धुम्-इति।

यद्वा अधिष्ठानपर्यन्तैव देवताया विधेयता। अतोऽधिष्ठानमपि विधिमूलाक्षेपप्राप्ततया विधिप्राप्तमेव परम् न विधेस्तत्र व्यापारः। अतोऽत्र यदग्नये चेति वाक्ये देवताधिष्ठानरूपाग्निः प्राप्त इति नाग्निहोत्रवाक्ये देवताधिष्ठानाग्निविधिरित्येवमधिष्ठानापेक्षया तत्प्रख्यतेत्यलमतिचर्चया। प्रकृतमनुसरामः। यदग्नये चेत्यादिवाक्येनाग्नेर्लब्धत्वात् गुणविधितात्पर्याभावादग्निहोत्रपदं नामैव। नन्वेकेन वाक्येन अग्निप्रजापतिरूपगुणविधौ वाक्यभेदः स्यादिति चोदयति—नन्विति। तन्नेति। अग्निप्रजापत्योर्देवतात्वाश्रययोः अत्रानेकता। देवतारूपकारकं तु कर्मसम्बन्धितया विधीयमानमेकमेवेति न वाक्यभेद इत्यर्थः। ननु देवताप्रतिपादकचतुर्थीचकारयोर्भेदे भेदेनैव भिन्नदेवतात्वं युक्तमित्यत्राह—न चेति। तत्र हेतुः—चतुर्थीतो हीति। न तावत् तद्धितवत् चतुर्थी देवतात्वमाह। तद्वत्तत्रास्मृतेः किन्त्वनुष्ठानकाले देवतोद्देशोपयोगावगमात् तत्सिद्धये देवताकल्पकत्वमात्रमित्यर्थः। ननु भवतु तर्हि कल्पकभेदात् कल्प्यदेवताभेद इत्यत्राह-एकेति। एकस्मिन वाक्ये कल्प्यरूपं विधेयं कल्पकभेदेपि अनेकाश्रयमेकमेव कल्प्यम्। अन्यथा वाक्यभेदापत्तेरित्यर्थः। कथं तर्हि चतुर्थीचकारयोर्निर्वाह इत्यत्राह—चतुर्थीति। प्रमाणबलादेकवाक्यत्वे स्थिते चतुर्थीचकारयोराश्रयमात्रे तत्समुच्चये च साधुत्वमास्थेयमित्यर्थः।

ननु अनेन वाक्येन देवताद्वयविशिष्टहोमान्तरमेव विधीयताम्। तथा च चतुर्थीचकारयोः आञ्जस्यमेकवाक्यता च सेत्स्यतीत्यत्राह—प्रत्यभिज्ञेति। प्रकृतहोमप्रत्यभिज्ञया विधेयलाघवेन च न होमान्तरविधिरित्यर्थः। यत्परोक्तमिति।

यत्परोक्तम्—अनेकपदसम्बन्धं यद्येकमपि कारकम्।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते ॥ इति।

तन्निरस्तम्। न ह्यनेकाश्रयत्वं विधेयम्। आक्षेप्यन्तु तत्। नन्वेकपदार्थतैव युगपदधिकरणवचनतयैवेति। न। द्वन्द्वेऽप्यगतया सा। तस्मिन्नेवं वाक्ये सायमिति श्रुतिरगत्या हविरुभयतेवाविवक्षिता। अपेक्षासंभवे चोद्देश्यकोटिः। सायं समभिव्याहारतो वा विशेषावगतेः नित्यानुवादः।

---

यद्यपि विधीयमानं कारकमेकमेव तथापि अनेकपदोपस्थापिताश्रयनिष्ठत्वेन विधेयत्वादाश्रयस्यापि विधेयत्वम्। तदेव च न विध्यावृत्तिं विनेति वाक्यभेदो दुर्वार इत्यर्थः। तन्निरस्तमिति। यद्यप्यनेकाश्रयगतदेवताविधौ नागृहीतविशेषणान्यायेन अनेकाश्रयत्वमपि विधेयम्। तथापि लाघवादनेकाश्रयकारकमेव विधेयम् अनेकाश्रयत्वं तु आक्षेपगम्यम् पृष्ठगतसर्वताविधौ पृष्ठवत्। अतो विधिमूलत्वेपि विधिव्यापाराविषयत्वादाश्रयस्य न विधेयतया विधिविषयतेति न वाक्यभेदः इत्यर्थः। ननु अग्नये च प्रजापतये चेति चकारात् द्वन्द्वार्थतावगतेः अग्नीषोमावितिवत युगपदधिकरणवचनतया एकपदार्थत्वेनैव किमिति विधिर्नाश्रीयत इत्याशयेन तटस्थः कश्चिच्चोदयति—नन्विति। नेति। अग्नीषोमावित्यत्र द्वन्द्वसमासे वृत्तिविग्रहवाक्ययोरैकार्थ्याय अगत्या युगपदधिकरणवचनत्वमाश्रितम्। नेह तद्वदगतिरित्यर्थः। ननु अस्मिन्नेव वाक्ये सायमिति श्रुतेः सायंकालोऽपि विधेयः, तथा च वाक्यभेदः स्यादित्यत्राह—तस्मिन्निति। गत्यन्तराभावात् हविरुभयतेव सायंश्रुतिरविवक्षितेति भावः।

ननु पदार्थाविवक्षातो वरं विशिष्टविधिगौरवमित्याशङ्क्य पक्षान्तरमाह—अपेक्षासम्भवे चेति। यथा द्वयोर्यजमानयोरित्यत्र द्वयोरित्युद्दिश्य कयोरित्यपेक्षायां यजमानयोरिति पदमन्वितं तथा यत्सायमित्युद्दिश्य किं तदित्यपेक्षायां जुहोतीत्यन्वीयताम् ततश्चापेक्षासम्भवे उद्देश्यकोटितया न[1] पदार्थाविवक्षेति भावः। ननु द्वयोर्यजमानयोरित्यत्र वाक्यानर्थक्यमुद्देश्यानर्हायाः सङ्ख्यायाः उद्देश्यत्वापादकं न पदार्थानर्थक्यम्। तथा चोक्तं वार्त्रघ्नीनये, नेह तथा वाक्यानर्थक्यमिति कथं सायमित्यस्य उद्देश्यत्वमित्याशङ्क्य पक्षान्तरमाह—सायमिति। राजा राजसूयेनेत्यत्र राजपदस्य विधेयार्थकत्वेपि समभिव्याहारमात्रेण राजकर्तृकविषयविशेषावगतेर्नित्यानुवादतयाऽन्वयः तथा सायंपदस्यापीत्यर्थः। यद्यपि प्रकृतहोमे सायं जुहोति प्रातर्जुहोतीति सायंप्रातरूपकालविधानात् सायंकालीनहोमविशेष-

---

१. B. न यद्वाविवक्षेति।

आघारणमपि सन्ततादिवाक्यैर्लब्धम् ।

अथ सन्ततादिविध्यर्थानि तानि तथापि व्यर्थता, विशिष्टविधिस्तेष्वस्तु । विशिष्टविधौ वाऽऽघारणभेद इत्यपि न, गुणकर्मणामपि सुतरां कार्याभेदेऽभेदात् सोमक्रयणवत् । अतोऽर्थवत्ताकाङ्क्षायां मन्त्रवर्णादेर्यागविधिः । तस्मिन्नाघार्यद्रव्यके प्राप्ताघाराश्रितसन्ततादिविधिः । यथाभाष्यं तु द्रव्यविधिः । स च व्यर्थः । चतुर्गृहीतं वेति प्राप्तेः । विपरीतं न कुतः ? न, आघारे भावकर्मसन्देहात् । चतुर्गृहीतं हि स्फुटं द्रव्यम् ।

---

प्रतीत्यर्थं सायं पदस्याप्युद्देशकता वाच्या । तथापि समभिव्याहारमात्रेणापि होमविशेषप्रतीतिसिद्धेः न वाक्यभेदापादकविशिष्टोद्देश्यतेति सायंश्रुतिर्नित्यानुवाद एवेति । आघारोदाहरणेपि राद्धान्तमाह— आघारणमपीति । आघारणस्यापि सन्ततादिवाक्यैः प्राप्तत्वान्न तद्विधिरित्यर्थः । ननु तेषां गुणविधायकत्वेनाधारणप्राप्तिर्नास्तीति शङ्कते —अथेति उत्तरं—तथापीति । सन्ततादिवाक्यानां विशिष्टाधारण[1] विधियोग्यत्वादाघारणप्राप्तेः आधारणवाक्यमनर्थकमापद्येतेत्यर्थः। ननु यथा दध्यादिवाक्यानां विशिष्टहोमविधायकत्वे होमभेदप्रसङ्गेन अग्निहोत्रवाक्यस्यैव होमविधायकत्वं तथा सन्ततादिवाक्यानां विशिष्टाघारणविधायकत्वेनाधारणभेदे सान्तत्यार्जवयोः नयान्तरसिद्धेराघारणसम्बन्धहानापत्तेः आधारवाक्यमेव विधायकमित्यत्राह—विशिष्टविधेरिति । तत्र हेतुः—गुणकर्मणामिति । युक्तो दध्यादिविशिष्टहोमविधौ होमभेदः अर्थकर्मत्वात् । गुणकर्मणि तु कर्मनिरूपणीयतया कर्मकारकभूतकार्यभेदाभावे भेदो नास्ति सोमक्रयणवदित्यर्थः ।

ननु विशिष्टविधावाघारवाक्यानर्थक्यात् तद्वरमाघारवाक्यार्थवत्त्वार्थं आधारवाक्ये आधारणविधिः । सन्ततादिवाक्यानां तु तत्र गुणविधित्वमित्यत्राह—अत इति । यद्याधारणवाक्यार्थवत्त्वाय आधारणविधित्वं तद्वरं मन्त्रलिङ्गावगतदेवतान्वयबलात् यागविधिरेव प्रस्तरं प्रहरतीतिवत् । ननु सन्ततादिवाक्ये विधिगौरवं तदवस्थमेवेत्यत्राह—तस्मिन्निति । तस्मिन्नाधारवाक्येन विहिते यागे चतुर्गृहीतवाक्यलब्धाधारणयोग्यद्रव्यके अर्थप्राप्ताघारणमुद्दिश्य सन्ततादिवाक्यैः तत्र गुणविधेर्न गौरवमित्यर्थः । तत्र द्रव्यविधि[2] पक्षे राद्धान्तमाह—यथाभाष्यं त्विति । वाक्यान्तरेण द्रव्यस्य प्राप्तेः तद्विधिर्व्यर्थः इत्यर्थः । केनेत्यत्राह— चतुर्गृहीतमिति । नन्वनेन विधित्सितद्रव्यप्राप्तेः तद्वाक्यं न विधायकमिति चोदयति—विपरीतमिति । परिहरति चतुर्गृहीतमिति । चतुर्गृहीतवाक्ये हि द्रव्यप्रतीतिः स्फुटा । आधारवाक्ये

---

१, B विधायकत्वेन । २. विशेषपक्षे ।

ननु दर्वीहोमोपांशुयाजयोः गुणविधिः शङ्कितः । तत्प्रख्यन्त्विहैवेति न प्राप्तिः । मैवम् । गुणविधिपक्षे तत्र प्राप्तिः । निवृत्ते त्वत्रेति । न च चक्रकादिदोषादनध्यवसायः, गुणविधिनिरसनात् । न च पूर्वोत्तर-पक्षानध्यवसायात् संगतिः, ग्रन्थास्वरसात् । नाममात्रमग्निहोत्रम्

---

तु आधारपदस्य घञन्ततया स्वतो भावपरत्वप्रतीतेः द्रव्यधीरस्फुटेति चतुर्गृहीत-वाक्यमेव विधायकं नेतरदित्यर्थः । अत्र पूर्वपक्षावस्थायां यदग्नये चेति वाक्यमपि दर्विहोम एव गुणविधायकमित्येतदबुद्ध्वा चोदयति—नन्विति । मैवमिति । तद्वाक्य-स्यापि पूर्वपक्षावस्थायां गुणविधायकत्वाद्युक्तं तत्प्रख्यत्वमिति विधित्वे निवृत्ते स्वतः साध्यतया समानपदोपात्ततया च भावार्थे विहिते तत्र यदग्नये चेति गुण-विधायकमिति तत्रैव प्राप्तिरित्यर्थः ।

ननु तत्प्रख्यशास्त्रस्य क्वचित् स्थानविशेषे गुणविधित्वाध्यवसायो वक्तुं न शक्यते चक्रकदोषप्रसङ्गात् । तथाहि—यदग्नये चेति वाक्येन दर्विहोमे विधि-त्सितो गुणः प्राप्त इति ततोऽग्निहोत्रवाक्यं परावृत्त्य स्वस्थान एव भावार्थं विधातुमुद्युङ्क्ते । ततश्च स्वस्थान एवाश्रयसम्भवात् यदग्नये चेति वाक्यमपि परावृत्य तत्रैव गुणं विधातुमारभते । ततश्च दर्विहोमस्य तत्प्रख्यशास्त्रविधुर-त्वात पुनरप्यग्निहोत्रवाक्यं गुणं विधातुं तत्र गच्छेति । तस्मिन गते तत्प्रख्य-शास्त्रमपि स्वस्थाने सन्निहिताश्रयाभावात् पृष्ठतस्तत्रानुव्रजति । आगतं दृष्ट्वा अग्निहोत्रवाक्यं परावर्तते । तस्मिन् परावृत्ते तदपि परावर्तत इति तत्राह—न चेति । चक्राकादीत्यादिशब्दात् नामत्वापादकसामानाधिकरण्यासिद्धिः सूचिता । तत्र हेतुः—गुणविधीति । अग्निहोत्रवाक्यस्य दर्विहोमात्परावृत्त्य पुनर्गुणविधित्वनिरासादित्यर्थः । एतदुक्तं भवति । सर्वस्य हि वाक्यस्य यत्र पाठस्तत्रैव स्थितिः स्वतो युक्ता । तथा विधिपरत्वं च । तत्र गुणपरत्वं क्रियापरत्वं वा द्वयमेव सम्भवति । तत्र तत्प्रख्यात् गुणपरत्वे निरस्ते क्रियाविधिपरत्वमेव पर्यवस्यति । सम्भावितयोर्द्वयोरन्यतरनिषेधे अन्यतरपर्यवसानात । दृढीकृतश्च स्वतः साध्यस्वपदोपात्तत्वादिनेति तत्र पठितं तत्रैव तत्प्रख्यशास्त्रं गुणपरमिति न चक्रकादिदोषः ।

अत्र केचित् पूर्वोत्तरपक्षानध्यवसायात् सङ्गतिमूचुः तत् ग्रन्थास्वारस्याद्धे-यमित्याह—न चेति । ननु सङ्गतिकथनसमय एव परोक्तसङ्गतिनिरासो वक्तुं-युक्तः नेह । मैवम् । पूर्वोत्तरपक्षानध्यवसायहेतुसङ्गतिप्रकारनिरासः तदुभयाभि-धानोत्तरकाल एव स्वतो बुभुत्सित इतीह कृतः । ननु पूर्वोत्तरपक्षयोरुभयोरग्नि-होत्रपदं होमवचनं आघारेप्युभयत्रापि पक्षे भावार्थधीरिति पूर्वोत्तरपक्षयोः को भेद इत्यत्राह—नाममात्रमिति । सत्यमग्निहोत्रपदं पक्षद्वयेपि होमवचनं तथापि

आघारश्च । याग एव विधेयः ।

॥ ४ ॥ तद्व्यपदेशाच्च ॥ ५ ॥

अत्राप्युद्भिदधिकरणोक्तमाक्षिप्य समर्थ्यत इति तच्छेषतया न पृथक् सङ्गतिः । न तु प्रसङ्गो ऽनध्यवसायो वा ऽनुसन्धेयः । ग्रन्थास्वरसात् । तत्र हि द्रव्ये कर्मणि च योगात् प्रवृत्तेः नामतोक्ता । इह तु रूढिशब्देषु चिन्ता । रूढ्यनुगत्या वरं मत्वर्थलक्षणा प्रोद्गातॄणामितिवत् । धान्यमसीतिवच्च । न तु कथञ्चिद्योगादाज्यादेर्नामता । न च श्येनादेः वतिलोपान्नामता, अग्निर्माणवक इतिवत् । लोपाश्रयणे हि वरं प्रवृत्ति-

---

पूर्वपक्षे गुणविधिपरमपि । राद्धान्ते तु नामत्वमात्रमिति । आघारेऽपि पूर्वपक्षेऽपि गुणकर्म आघारणविधिः । राद्धान्ते तु यागविधिरिति भेद इत्यर्थः ।

॥ ४ ॥ तद्व्यपदेशाच्च ॥ ५ ॥

श्येनेनाभिचरन् यजेत सन्दंशेनाभिचरन् यजेत गवाभिचर्यमाणो यजेतेत्यत्र श्येनसन्दंशगवादिशब्देषु चिन्ता—किं गुणविधयः उत कर्मनामधेयानीति । ननु गुणविधिनामधेयमात्रपरचिन्ता प्रमाणाध्याये असङ्गतेत्याशङ्क्य अत्रापि तत्प्रख्यनयवत् चित्रानयवच्च उद्भिदधिकरणोक्ताक्षेपसमर्थनरूपत्वात् तच्छेषतयैव संगतिः न पृथक् संगतिः इत्याह—अत्रापीति । श्रीकरस्तु प्रसङ्गात् सङ्गतिमाह । प्रकाशस्तु वत्यर्थे मत्वर्थे च लक्षणायां न विशेषः । कार्यानन्वय एकत्र । अन्यत्र विधिगौरवमित्यनध्यवसायादेव सङ्गतिरित्याह । तदुभयमपि ग्रन्थास्वारस्यान्नोपादेयमित्याह—न तु प्रसङ्ग इति । ननु कथमुद्भिदधिकरणोक्ताक्षेप इत्यत्राह—तत्र हीति । उद्भिदधिकरणे उद्भिदादिशब्दानां कर्मणि यथा योगात् वृत्तिः तथा द्रव्येऽपि योगात् प्रवृत्तिरेव । तत्र द्रव्यवृत्तित्वे मत्वर्थलक्षणापत्तेः कर्मनामतैवेत्युक्तम् । इह तु श्येनाज्यपृष्ठादिषु रूढिशब्देषु चिन्ता । तत्र यत्र लक्षणात्वेपि रूढिपूर्वतया प्रोद्गातॄणामित्यत्रेव मत्वर्थलक्षणैव आश्रयणीया, न पुनः यदाजिमीयुः तदाज्यानामाज्यत्वं इत्येवमाद्यर्थवादात् कथञ्चिद्योगादाज्यादेर्नामता । रूढेर्योगापहारित्वात् । ननु श्येनोदाहरणे रूढिपूर्वकवत्यर्थलोपादेव अग्निर्माणवक इतिवत् कर्मणि प्रयुक्तेर्नामता युक्तैवेत्यत्राह—न चेति । तत्र हेतुः—लोपाश्रयणे हीति । रूढिपूर्वकलक्षणात्वे पक्षद्वये समानेपि प्रवृत्तिविशेषकरत्वान्मुख्यार्थान्वयानुसारात्

करतया मुख्यान्वयानुसाराच्च मतुब्लोपाश्रयणेन विशिष्टविधिः। लुप्तवतिका हि गौणीनां वृत्तिः। एवं मत्वर्थलक्षणादोषाक्षेपादुद्भिदधिकरणशेषता। आज्यादावपि चिन्तेयम्। राद्धान्तेऽपि रूढतानपायात् अनुदाहरणशङ्का माभूदिति श्येनाद्युदाहृतम्। लुप्तवतिका हि गौणी वृत्तिरिति। तस्यार्थः—सवतिकस्थाने गौणीवृत्तिरिति अर्थात् लुप्तवतिकता।

राद्धान्तस्तु—इह अवयवार्थे सापेक्षो योग एव युक्तः। [1]वाक्यकार्यं हि भावार्थैकविधिपरत्वम् तत्पूर्वकमिह पदार्थत्वम्। अतः कर्मनामतापेक्षायां वाक्यशेषादाजिगमनयोगधिया कर्मनामनिश्चये रूढिरेव हेया। एवं

---

मत्वर्थलक्षणैव ज्यायसी। यद्यपि तदाश्रयणेपि विधिगौरवं तथापि अप्राप्तौ तन्न दोषायेति गुणविशिष्टकर्मविधिरेव युक्त इत्यर्थः। ननु गौण्यां वृत्तौ कथं वत्यर्थलोप इत्याशङ्क्य ग्रन्थोक्तमाह—लुप्तेति। निगमयति—एवमिति। ननु यद्याज्यादावियं चिन्ता किमिति तर्हि भाष्ये श्येनाद्येवोदाहृतमित्यत्राह—आज्यादावपीति। यद्यपि[2] आज्यादावपीयं चिन्ता तथापि श्येनादेः राद्धान्तेपि रूढतानपायात् कस्यचिदनुदाहरणत्वमिति शङ्का स्यात् तदपनुत्तये श्येनाद्युदाहृतमित्यर्थः। ननु गौणवृत्तेर्वत्यर्थलोपविषयत्वस्य शाब्दस्मृत्यभावात् कथं लुप्तवतिकत्वं ग्रन्थोक्तमित्यत्राह-लुप्तवतिका हीति। सवतिकशब्दप्रयोगे प्रसक्ते तत्र गौणवृत्तेः वृद्धव्यवहारदर्शनात् अर्थाल्लुप्तवतिकत्वमित्यनुसन्धाय ग्रन्थे तथोक्तिरित्यर्थः।

राद्धान्तस्त्विति। आज्यैः स्तुवत इत्याज्यपदं नामैव आजिगमनयोगात् कर्मणि वृत्तेः। यद्यपि रूढिर्योगमपहरतीति अवयवार्थसापेक्षाद्योगात् रूढिर्बलीयसी तथापीह योग एवादेयः। ननु रूढ्यनुगतार्थस्य प्रथमं धीस्थतया तद्विहाय कुतो योगावगतार्थस्यादेयता तत्राह—वाक्यकार्यं हीति। सत्यं पदार्थमुखजिज्ञासायामेवं; इह तु वाक्यार्थमुखैव जिज्ञासा प्रधानत्वाद्वाक्यस्य। तत्रचैकस्यैकार्थविधिः कार्यम्। स च भावार्थस्यैव भावार्थविषयत्वाद्विधेः। विशिष्टविधावनेकार्थविधेस्तात्पर्यगौरवापत्तिरिति भावार्थैकविधिपरत्वरूपकार्यार्थानुसारेण इह पदार्थवर्णनं यत एव निमित्तमपेक्षं प्रधानभूतवाक्यस्य एकार्थविधौ तात्पर्यवर्णनम्। अतः कथं भावार्थैकविधिपरत्वरूपकार्यार्थानुसार्थेकार्थतात्पर्यं निर्वहतीति निमित्तचिन्तायां नामतायां तन्निर्वाह इति निमित्तकर्मनामतापेक्षायां वाक्यशेषादाजिगमनयोगप्रतीतेः तदबलात् कर्मनामत्वे निश्चिते रूढिरेवात्र हेया। यत्र त्वेवं प्रधानीभूत-

---

१. M वाक्यतात्पर्यं २. सत्यं।

श्येनादेर्नामतापेक्षायां वाक्यशेषानुसारात् गौणतया सामानाधिकरण्ये सति वत्यर्थाविधेः नामता । इह साधितेन रूढानां नामत्वेन[1] चित्राधिकरणे विशेषचिन्ता ।

॥ ५ ॥ नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥

इह यावदुक्तं नामाक्षिप्य समर्थ्यते तेन व्यक्तमुद्भिदधिकरणशेषतया सङ्गतत्वम् । प्रामाण्येनैव पूर्वपक्षोपसंहारान्न साक्षात् तत् । वाजपेये तु लिङ्गदर्शनं द्योतकमस्तीति तदुदाहृतम् । विधान्तरेण मत्वर्थलक्षणाहाना-

वाक्यस्वरसविरोधो नास्ति तत्रैव परं रूढेर्योगापहारित्वमित्यर्थः । कथं तर्हि श्येन-नामत्वं वाक्यशेषाद्यागावगतेरित्यत्राह—एवं श्येनादेरिति । उक्तप्रकारेण तत्रापि प्रधानीभूतवाक्यस्वरसायत्तैकार्थविधितात्पर्यबलान्नामतानिश्चये यथा श्येनो-निपत्यादत्ते तथाऽसौ द्विषन्तं भ्रातृव्यं निपत्यादत्ते इति वाक्यशेषावगतगुणयोगात् गौणतया कर्मसामानाधिकरण्ये कर्मनामतैव वत्यर्थस्य सादृश्यस्य कथञ्चिदपि विधानायोगादित्यर्थः ।

ननु चित्राधिकरणे जातिशब्दस्य आज्यपृष्ठादेर्गुणशब्दस्य चित्रादेश्च नामत्वं साधितमेव, किमर्थमिदमधिकरणमित्याशङ्क्य विवरणोक्तं व्युत्पाद्यभेदमाह इह साधितेनेति । रूढानां शब्दानां नामत्वं आज्यैः स्तुवत इत्यादाविहैव साधितम् पञ्चदशान्याज्यानीति वाक्यान्तरस्थानामपि तेषां कर्मनामतयैवोपादानमिति व्युत्पाद्यभेद इत्यर्थः ।

॥ ५ ॥ नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥

वाजपेयेन स्वाराज्यकामो यजेतेति श्रुतम् । तत्र चिन्ता–किं वाजपेयशब्दो गुणविधिरुत कर्मनामधेयमिति । ननु उद्भिदधिकरणन्यायेन वाजपेयपदस्य नामत्वं सिद्धमेव तत् किमर्थमिदमधिकरणं ? कथं चाध्यायसङ्गतिरित्याशङ्क्य अधिकरण-प्रयोजनकथनमुखेन लक्षणसङ्गतिं व्यक्तीकरोति—इह यावदिति । नन्वत्र पूर्वपक्षे उक्तसर्वनामाक्षेपे उद्भिदधिकरणपूर्वपक्षन्यायेनाप्रामाण्यापत्तेः साक्षात्सङ्गतिरेव स्यात् । नोद्भिन्नयशेत्यत्राह - प्रामाण्येनैवेति । सिद्धो गुणविधिः प्रामाण्यं च सिद्धमित्येवं ग्रन्थप्रामाण्येनैव पूर्वपक्षोपसंहारान्न साक्षात्सङ्गतिः । यथा चैतत्तथा स्फोरयिष्यते । ननु यदि सर्वनामाक्षेपः किमिति तर्हि वाजपेयमात्रमुदाहृतमित्यत्राह–वाजपेये त्विति । सप्तदशदीक्षो वाजपेयः सप्तदशोपसत्को वाजपेय इति दीक्षोप-सल्लिङ्गदर्शनं सिद्धान्तन्यायद्योतकमस्तीति वाजपेयमात्रमुदाहृतम् । गुणपक्षे तु

१. नामपरत्वेन A

दाक्षेपोऽयं पूर्वानन्तरम् । पूर्वपक्षस्तु तन्त्रेण यजिः फलगुणौ प्रति स्वार्थं-मर्पयतु । आख्यातात् साध्यावस्थे धीः [1]एकफलावच्छेदादेवेति साध्यसाध-नावस्थोऽर्पितः । साधनतया फलान्वयी साध्यतया गुणान्वयीति व्यधि-करणतयाऽन्वयात् न मत्वर्थापेक्षा । न च विरुद्धत्रिकद्वयं ज्ञाताज्ञात-गुणागुणोपादेयानुपादेयरूपम् । न च पदावृत्तिविध्यावृत्ती । तन्त्रत्वेन नापि मानान्तरादाश्रयापेक्षा । अर्थप्रदर्शन एव वाक्यभेदभ्रम इति प्रवृत्तिपरे वाक्ये पदमप्रवृत्त्यर्थं नामतया न युक्तमिति यथार्हं सर्वत्र गुणविधिः । वाजपेये च पेयान्नविधौ विशेषार्थः सुराग्रहविधिरस्तु । अग्निहोत्रे च

---

दर्शपूर्णमासविकृतित्वापत्तेः दीक्षोपसद्दर्शकासम्भवादित्यर्थः । कथं पुनरवान्तर-सङ्गतिरित्यत्राह—विधान्तरेणेति ।

ननु कथमत्र पूर्वः पक्षः, सामानाधिकरण्येन वैयधिकरण्येन वा गुणविधि-र्वाच्यः । स चोभयथाप्यनुपपन्नः सामानाधिकरण्ये मत्वर्थलक्षणापत्तेः । वैयधि-करण्ये च ज्ञाताज्ञात-प्रधानगुण-उपादेयानुपादेयरूपविरुद्धत्रिकद्वयापत्तेरित्यत्राह—पूर्वपक्षस्त्विति । स्यादेवं यदि तन्त्रोच्चारणं न स्यात् इह तु यजेतेति यजिः फलगुणौ प्रति स्वार्थं तन्त्रेण समर्पयति साधनत्वेन साध्यत्वेन च । ननु आख्यातात् साध्या-वस्थार्पणमेवेत्यत्राह—आख्यातादिति । सत्यं साध्यावस्थे धीः सा तु एकफलसाधन-त्वावच्छेदादेव । अन्यथा भिन्नानां क्रियाक्षणानामेकशब्दवाच्यत्वायोगात् । अतः साध्यसाधनोभयावस्थार्पितोऽर्थः अत्र साधनावस्थः फलान्वयी साध्यावस्थो गुणान्वयी । अतो व्यधिकरण[2]तयान्वयान्न मत्वर्थलक्षणा । तन्त्रार्पितत्वेन विरम्य व्यापाराभावान्न विरुद्धत्रिकता । तथा न विशिष्टविधेर्विध्यावृत्तिः । तन्त्रत्वान्न पदावृत्तिः । तथा तन्त्रेणैव स्ववाक्य एवाश्रयलाभान्नोद्भिदधिकरणपूर्वपक्षवदा-श्रयार्थं मानान्तरापेक्षा तदाह—न च पदावृत्तीति । नन्वेवं वाजपेयेन यजेत यजेत स्वाराज्यकाम इति वाक्यभेद एवेत्यत्राह—अर्थेति । ननु तन्त्रकल्पनातो वर नाम-तयान्वय इत्यत्राह—इति प्रवृत्तीति । प्रवृत्तिकरत्वरूपवाक्यतात्पर्यबलात उद्भिदाज्य-चित्राश्येनादिशब्दानां नामताऽसम्भवे यथार्हं गुणविधितैवेत्यर्थः । ननु वाजपेयाग्नि-होत्रयोः न गुणविधिता । विधेयस्य गुणस्य तत्प्रख्यविध्यन्तरात् प्राप्तेरित्या-शङ्क्य सामान्यविशेषभेदापेक्षया सहत्वकैवल्यभेदापेक्षया च उभयत्र विधिद्वयं निर्वहतीत्यत्राह—वाजपेये चेति । ननु सुराविशेषविधेरेव पेयरूपान्नस्य प्राप्तेः तद्वि-

---

१. A फलसाधनता  २. B व्यधिकरणगुण

निरपेक्षाग्निविधिरस्तु ।

अथ वा प्राप्तानुवादेऽपि गुणविधौ न दोषान्तरमितीह निरस्यते ।

राद्धान्तस्तु-नोभयावस्थेन गुणः फलं च संबन्धुं क्षमम् । एकैकान्वयार्थमेकैकावस्थकर्मपरत्वे तु ज्ञेये आवृत्त्या वाक्यभेदो दुर्वारः । एकवाक्यतानुगुण्यात् पूर्वाधिकरणचतुष्कोक्तयुक्तिभिः नामता साक्षादप्रवृत्त्यर्थत्वेऽपि इति न वाक्यकार्यताहानिः। वैरूप्ये च न तन्त्रम् । लोके त्वभिप्रायादित्युक्तम् ।

॥ ६ ॥ तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ९ ॥

भावार्थसामानाधिकरण्यान्नामतोक्ता । न तु भवत्यर्थसामानाधि-

---

धिवैयर्थ्यं दुर्वारमिति मत्वा[1]निर्वाहान्तरमाह—अथवेति । अनुवादकत्वेऽपि गुणविधौ यत् दोषान्तरं तत्तावन्नास्तीत्येवंपरत्वात्पूर्वपक्षस्य तन्निरासपरत्वादस्याधिकरणस्येत्यर्थः ।

राद्धान्तस्त्विति । सत्यं यजिः साध्यसाधनोभयावस्थं स्वार्थमर्पयति तथापि न तादृशेन गुणफलयोरन्वयार्हता । गुणस्य साध्यमात्रेण फलस्य साधनमात्रेणान्वयित्वात् । ननु तर्हि एकैकान्वयार्थमेकैकावस्थकर्मार्पणमस्त्वित्यत्राह—एकैकेति । यद्यपि पदनिमित्तकोऽन्वयो विरुद्धत्रिकद्वयापत्त्या वाक्यभेदे हेतुः फलकरणत्वं चौपादानिकत्वान्न पदनिमित्तकं तथापि फलकरणत्वेनाभिसंहितस्यैव विषयत्वेनाभिधानादभिधानदशायामेवायोग्यतास्फुरणाद्वाक्यभेदो युक्तः । यद्वा पदनिमित्तकविषयापेक्षयैव विरुद्धत्रिकद्वयम् । यद्यप्यवच्छेदकत्वमेव विषयत्वं तथापि तद्घटकत्वपर्यन्तमिति कृतितत्साध्यमध्यस्थस्यापूर्वं प्रति साधनतया धीस्थत्वात् तस्य साधनान्वय इति वाक्यभेदः । फलं च ग्रन्थे अपूर्वंपरम् । यद्वा कामाधिकार एवापूर्वव्युत्पत्तेः फलं प्रति साधनत्वोक्तिः । यद्वा अपूर्वं प्रत्यवच्छेदकतया गुणं प्रत्यवच्छेद्यतया अन्वयवैरूप्याद्वाक्यभेदः । साध्यसाधनत्वोक्तिः ग्रन्थे अवच्छेद्यावच्छेदकपरा अरुणावाक्यवैषम्यमरुणाधिकरण एव प्रपञ्चितम् । अतो वाक्यभेदापत्तेर्न गुणविधिरित्यर्थः । कुतस्तर्हि नामतेत्यत्राह—एकेति । यद्यपि नाम्नः साक्षात्प्रवृत्तिविशेषकरत्वं नास्ति तथापि प्रवृत्तिविषयकार्यधीविशेषकरत्वेपि नैकवाक्यताहानिरित्यर्थः । ननु तन्त्रकल्पनायां न वाक्यभेद इत्युक्तमित्यत्राह—वैरूप्ये चेति । ननु लोके श्वेतो धावतीत्यादौ विरूपेऽपि तन्त्रत्वं दृश्यते इत्यत्राह—लोके त्विति ।

---

१. परिहारान्तर B

करण्यात् । भावार्थाश्रितो गुणविधिः न तु भवत्यर्थाश्रित इति विधान्तराभावात् प्रसक्तमप्रामाण्यमिति पूर्वःपक्षः सङ्गतिद्वयं च । पुंवाक्यं हीदृशं दृष्टमिति पौरुषेयत्वापातात् कृत्स्नवेदाप्रामाण्यम् । न चाग्नेय इति द्रव्यदेवतासम्बन्धश्रुत्याऽऽक्षिप्तो यज्यर्थो भावः तत्र नाम वा गुणविधिर्वाऽस्त्विति वाच्यम् । यत आग्नेयाष्टाकपालयोः श्रुतिः । तदुभयविध्यशक्तेरेकस्योद्देश्यत्वे नाग्नेयः उद्देश्यः अप्राप्तेः । न चाष्टाकपालः कपालेषु श्रपयतीति प्राप्तेरुद्देश्यः, अष्टत्वाप्राप्तेः । न च लोकतः प्राप्तोऽस्ति अष्टसु संस्कृतो दृष्टार्थ इत्यवबोधकं वाक्यम् । भाष्ये तु नामतया पूर्वपक्ष-

---

## ॥ ६ ॥ तद्गुणास्तु विधीयेरन् अविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ९ ॥

यदाग्नेयोऽष्टाकपाल इत्यादि श्रुतम् । तत्र चिन्ता-किमियं चोदना न प्रमाणमुत प्रमाणमिति । तदर्थमियं चिन्ता—किं नामतया गुणविधितया वाऽत्रान्वयो न सम्भवति उत गुणविधितयाऽन्वयः सम्भवतीति । नन्वत्र भाष्ये किमाग्नेयशब्दो नाम गुणविधिर्वेति विचारः कृतः । सोऽयुक्तः भावार्थान्वयाभावात् । असङ्गतं च प्रामाण्यव्युत्पत्तिपरत्वाभावात् इत्याशङ्क्य सङ्गतिद्वयं पूर्वपक्षबीजं चाह—भावार्थेति । नामत्वं हि आख्यातार्थरूपभावार्थस्य विधेयत्वे सम्भवति अन्यस्य विधेयत्वायोगात् पदान्तरं भावार्थविधिपरमेवेति भावार्थसामानाधिकरण्यात् भवति । इह तु अच्युतो भवतीति भवत्यर्थस्याभावार्थत्वान्न भावार्थसामानाधिकरण्यमिति न नामता । नापि गुणविधिः अभावार्थाश्रितत्वात् । न च मन्त्रः अभियुक्तोपदेशाभावात् । न च प्रवृत्तिकरमन्वये प्रकारान्तरमित्यप्रामाण्यमेव प्रसक्तमिति प्रामाण्याप्रामाण्यरूपविचार एव भाष्यस्यापि तात्पर्यमित्यर्थः । नन्वेवमपि कथं कृत्स्नवेदस्याप्रामाण्यं अन्यथा प्रतिज्ञाक्षेपपर्यन्तत्वाभावादित्यत्राह—पुंवाक्यं हीति । ननु आग्नेय इति द्रव्यदेवतासम्बन्धाक्षिप्तो यागो यदा भात्रार्थस्तदा तत्र गुणविधिरस्त्वित्यत्राह—न चेति । नामवेत्यनास्थावादः । यत इति । आग्नेयोऽष्टाकपाल इत्युभयश्रुतेर्न गुणविधिसम्भवः । कथमसम्भव इत्यत्राह—तदुभयेति । एकस्मिन वाक्ये द्वयोरपि विधेयत्वासम्भवादेकस्योद्देश्यत्वं वाच्यम् तत्र च नाग्नेयमुद्दिश्य अष्टापालो विधेयः आग्नेयस्याप्राप्तेः । ननु कपालेषु श्रपयतीति कपालप्राप्तेरष्टाकपाल द्देश्योऽस्तु उतत्राह—न चेति । तत्र हेतुः अष्टेति । ननु माभूद्विधितः प्राप्तिः लोकतः प्राप्तस्य उद्देश्यताऽस्तु तत्राह—न च लोक इति ।

नन्वयं पूर्वपक्षो भाष्यविरुद्धः नामतया तत्र पूर्वपक्षोक्तेरित्यत्राह—भाष्ये

वचनव्यक्तिः प्रसिद्धार्थपरा गौणी प्रसिध्यपेक्षया सापेक्षतामेव वक्तुम् । अष्टाकपालद्रव्यस्य सन्निहितमन्त्रान्वयादग्न्यन्वये कर्मविधेः प्राप्तार्थमाग्नेयपदं नामेति तु परमतं हेयम् । वाचनिके हि मन्त्रान्वये बलात् कर्मपरता; आघारादिनयात् । न तु सन्निधिमात्रात् ।

राद्धान्तस्तु पदद्वयार्थो द्रव्यदेवतासम्बन्धोऽभिधानतः प्रसिद्धो यज्यर्थवत्कार्यत्वेनाप्रसिद्धः । एवं विशिष्टो [1]विधेयः । प्राप्ते ह्यन्यतरसम्बन्धिन्युद्दिश्य विधिः । इह तु न तथेति विधेयार्थः आग्नेयादिरिति न नामता ।

विवरणे तु यदि नामतः प्रामाण्यं इह तर्हि न तत् । [2]प्राप्तार्थं हि

त्विति । अत्र आचार्यपादैः यथाभाष्यमष्टाकपालद्रव्यस्य सन्निहितमन्त्रान्वयादग्निदेवतान्वये द्रव्यदेवतासम्बन्धाक्षिप्तकर्मविधेः प्राप्तार्थमाग्नेयपदं तत्प्रख्यनयान्नामेति पूर्वपक्षितं तन्न युक्तमित्याह—अष्टाकपालेति । तत्र हेतुः वाचनिके हीति । यतो वाचनिके मन्त्रान्वये सति बलात् कर्मपरता इन्द्र ऊर्ध्वो अध्वर इत्याधारमाधारयतीतिवत् । न चेह वाचनिको मन्त्रान्वयः । किन्तु क्रमाख्यसन्निधानमात्रात् । न च सन्निधानमात्रात्कर्मपरता, कर्मविध्युत्तरकालीनत्वात् क्रमान्वयस्य । किन्तु वचनमेव तच्छक्तमित्यर्थः । राद्धान्तस्त्विति । सत्यमाग्नेयाष्टाकपालयोः द्वयोरप्यप्राप्तत्वात् उद्देश्यविधेयता न सम्भवति तथापि पदद्वयसमभिव्याहारमात्रात् अग्निदेवताकोऽष्टाकपाल इत्येवंरूपा द्रव्यदेवतान्वयधीरस्त्येवेति पदद्वयार्थो द्रव्यदेवतासम्बन्धो विधेयः । यद्यपि सम्बन्धः कार्यतया न प्रसिद्धः तथापि अभिधानतः शब्दतः प्रसिद्धः प्रतीतो विधेयः । कार्यतयाऽप्रसिद्धः तद्विध्यनुगुण एव । यथाहि उद्भिदा यजेतेति निर्वाहकद्रव्यदेवतासम्बन्धानवगमेपि यज्यर्थस्यैवाभिधानतः प्रसिद्धस्यैव विधिः तथेहापि । न च द्रव्यदेवताकालाद्यनेकविधेः वाक्यभेदः शब्दबलमते द्रव्यदेवताविशिष्टसम्बन्धस्यैव विधेयत्वादित्यर्थः । नन्वेकस्य वाक्यस्य एकविधिपरतानियमात् विशिष्टविधिगौरवात् अन्यतरोद्देशेनान्यतरपदार्थविधिरेव युक्त इत्यत्राह—प्राप्ते हीति । अप्राप्तत्वात् तयोरुद्दिश्यविधानायोगात् पदद्वयार्थस्यापि देवतासम्बन्धस्य विशिष्टस्य विधिर्युक्त एवेति विधेयार्थमाग्नेयादिपदं न नामेति गुणविधित् या बोधकत्वात् स्थितं प्रामाण्यमित्यर्थः ।

विवरणे त्विति । तत्र हि निबन्धनवद्भवतीति श्रुतस्याख्यातार्थस्याप्रामाण्यनिर्वाहकत्वमुखः पूर्वपक्षो न भवति किन्तु विचारविषयस्याग्नेयादेः विधेयत्वनामत्वयोग्यताक्षेपमुख एवेति विशेष इत्यर्थः । तत्र सङ्गतिद्वयं सूचयन् पूर्व-

१. अभिधेयः B  २. अप्राप्तार्थं B

नाम। आश्रयाप्राप्तेः अनेकगुणश्रुतेश्च[1] न गुणविधिः। अत एव भाष्यकारेण न गुणविधिरित्युपसंहृतम्। ननु नामतेति सङ्गतिद्वयम् पूर्वपक्षश्च।

राद्धान्तस्तु—यत्र पृथक् गुणश्रुतिः [2]तत्राश्रयापेक्षा रक्तपटवत्। इह तु [3]गुणानुरूपकर्मविधिना आक्षेपतो गुणकार्यता। कृत्तद्धितसमासेषूपसर्जनानां पाचकौपगवराजपुरुषादावन्यनिष्ठमेवाभिधानमित्यन्यविधावुपादानशेषा गुणाः पश्वेकत्ववत्। अन्यशिष्टे हि गुणे अग्निहोत्र-

---

पक्षमाह—यदीति। यदि वाजपेये नामतया प्रामाण्यं तत्र भवतु इह तु तन्न संभवति अप्राप्तार्थस्याग्नेयादेः विधेययोग्यस्य नामत्वायोगात्। ननु तर्हि गुणविधितयैव प्रामाण्यमस्त्वित्यत्राह—आश्रयेति। गुणविध्याश्रयस्य भावार्थस्य विधितोऽप्राप्तेस्तत्र प्रमाणान्तरं मृग्यम्। ततश्च सापेक्षत्वादप्रामाण्यापत्तेः न गुणविधिः। अनेकगुणश्रवणाच्च न गुणविधिरित्याह—अनेकेति। यदिदमप्रामाण्येन पूर्वपक्षितं युक्तं चैतदित्याह—अत एवेति। राद्धान्तस्त्विति। न तावदाश्रयाप्राप्तेः गुणविधितानिरासः आश्रयापेक्षाया अभावात्। यत्र हि आश्रयात् पृथग्भूतो गुणविधिः यथा रक्तः पटो दध्ना जुहोतीति तत्राश्रयापेक्षा। इह तु विशिष्टकर्मैव विधेयम् गुणनिरूपिततया तस्यैव श्रुतेः। यद्यपि द्रव्यदेवतासम्बन्ध एव शब्दनिर्दिष्टः तथाप्यस्मिन् मते वस्तुबलादाक्षिप्तं कर्मैव विधेयम्। कृतिव्याप्यस्य [4]कर्मणो विधिविषयतार्हत्वात। ननु यदि कर्मण एव विधिः तर्हि गुणकार्यता कथमित्यत्राह—आक्षेपत इति। विशेषणविधिव्यतिरेकेण विशिष्टविध्ययोगात् विध्याक्षेपरूपोपादानादेव गुणकार्यतेत्यर्थः। ननु यथाभिधानं विधिरिति शब्दाभिधेयदेवतया एव विधिरिति कथमुपादानतो गुणकार्यतेत्यत्राह—कृत्तद्धितेति। पाचकोपगवराजपुरुषादिकृत्तद्धितसमासविषये उपसर्जनानां कृत्तद्धितयोः प्रकृत्यर्थस्य समासे च पूर्वपदार्थस्य तेषामभिधानमन्यनिष्ठमेव। कृत्तद्धितयोः प्रत्ययार्थनिष्ठत्वं राजपुरुष इति समासे उत्तरपदार्थनिष्ठत्वं अतोऽन्यनिष्ठत्वादभिधानस्य, यथाभिधानमाग्नेय इत्यत्रापि अन्यविधावुपादानशेषभूता देवता। यद्यप्याग्नेय इत्यत्र प्रत्ययार्थद्रव्यनिष्ठमेवाभिधानमिति द्रव्यस्यैव विधेयत्वं भाति न कर्मणः तथापि तस्य साक्षाद्विधातुमयोग्यत्वात् योग्यकर्माक्षेपसमये तस्यैव कर्मणो विधौ द्रव्यमपि देवतावदुपादानशेषभूतमेवेत्यर्थः।

नन्वेवमुपादाने तर्हि मानान्तरापेक्षा स्यादित्यत्राह—पश्वेकत्ववदिति। न ह्युपादाने मानान्तरापेक्षाऽस्तीति पश्वेकत्वनये व्यक्तमित्यर्थः। नन्वेवमग्निहोत्रमिति

---

१. V A विधेश्च [illegible] २. स्तोत्राश्रयापेक्षा R A ३. R गुणरूप ४. प्यस्यैव B

पदवन्नामत्वमाश्रितम्। अशिष्टे तु पृथक् श्रुतेऽपि पौर्णमास्यादिगुणे विशिष्टविधिविधा।

## ॥७॥ बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥१०॥

विध्यधीनोऽपि पदाभिधेयोऽष्टाकपालः तद्वत् बर्हिरादिरप्यस्तु लवनेन बर्हिः कुर्यात् यथा छेदनेन यूपम्। न च बर्हिरर्थोद्देशेन संस्कारविधिः, संस्कारादेव बर्हिरर्थ इत्यन्योन्याश्रयः। यतो दर्भान् लुनाति बर्हिः कर्तुं

---

समासत्वादन्यनिष्ठमेवाभिधानमिति अग्निहोत्रपदमेव गुणविशिष्टकर्मविधायकमस्तु। विधिप्रत्ययोच्चारणाय जुहोतिरस्तु। अतोऽग्निहोत्रशब्दो विधेयार्थ एव युक्तः। तथापि तत्र यदि नामता तर्हि अत्रापि तथास्तु तत्राह—अन्येति। अग्निहोत्रविधेयत्वेन शङ्कितो योऽर्थः स तत्प्रख्यशास्त्रान्तराच्छिष्ट इति यत्रान्यतः प्राप्तिः तत्र नामत्वम्। इहान्यशिष्टत्वाभावे कर्मणः पृथक् श्रुतेऽपि पौर्णमास्यादिकाले विशिष्टविध्यङ्गीकारे किमु वक्तव्यं अपृथक्श्रुताग्नेयादौ। यद्यपि प्रयोगाङ्गतया तदन्वयिता कालस्य तथापि तद्द्वारा प्रयोज्यकर्मविशेषणतया विशिष्टविधिविधा। अतो गुणविधितयैव प्रामाण्यस्थितिरित्यर्थः।

## ॥ ७ ॥ बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

'बर्हिषि हवींष्यासादयति' 'आज्यं विलापयति' 'पुरोडाशं संयौति पर्यग्निकरोति' इत्यादिबर्हिराज्यपुरोडाशादिपदवतीचोदना न प्रमाणं उत प्रमाणमिति चिन्ता। तदर्थमियं चिन्ता-किं बर्हिराज्यादिशब्दानां संस्कृतार्थत्वजात्यर्थत्वानध्यवसायः उत जात्यर्थत्वाध्यवसाय इति। नन्वत्र भाष्ये किमेते संस्कारनिमित्ता उत जातिनिमित्ता इत्येवंपर एव विचार उक्तः। तस्य कथं प्रमाणलक्षणे सङ्गतिः कथं वा गुणविधिनामधेयचिन्तया अवान्तरसङ्गतिः। कथं च पूर्वपक्षः। न हि विध्यधीनं शब्दाभिधेयं अभिधानपूर्वकत्वाद्विधेरित्याशङ्क्य सङ्गतिद्वयं पूर्वपक्षं चाह—विध्यधीनोऽपीति। अष्टाकपालपदं हि अष्टसु कपालेषु संस्कृतं पुरोडाशमाह। स च कपालेषु श्रपयतीति संस्कारविध्यधीनः। अतो यथा पूर्वत्राष्टाकपालार्थो विध्यधीनोऽष्टाकपालपदाभिधेयमाश्रितः तद्वत् बर्हिराज्यादिरप्यस्त्वित्यर्थः। नन्वेवं बर्हिर्लुनातीत्यादिशास्त्रस्य कोऽर्थ इत्यत्राह--बर्हिरिति। दृष्टान्तमाह—छेदनेनेति। ननु बर्हिर्लुनातीति बर्हिरर्थोद्देशेन संस्कारविधिः संस्कारविध्यधीन एव बर्हिरर्थ इत्यन्योन्याश्रयापत्तिः। अतो न संस्कारार्थत्वमित्याशङ्क्य परिहरति—न चेति। यत इति। स्यादेवं यदि बर्हिष उद्देश्यत्वं लवने। इह तु दर्भस्यैवोद्देश्यत्वं न बर्हिषः, बर्हिषस्तु कृतिकर्मतयोत्पाद्यत्वमेव। ननु स्ववाक्यानुपात्तस्य दर्भस्य

इत्यन्वयः। यथा खादिरादि च्छिनत्ति[1] यूपीकर्तुमित्यन्वयः। एतच्च संस्कृते [2]सार्वभौमप्रयोगादित्युक्तम्। एकदेशे जातौ संस्कारार्हतया गौणः प्रयोगः सर्वसिद्धस्तु न गौणः। न हि जातौ प्रयोगादर्शी गौणं प्रयोगमर्हति। राजशब्दे तु शाब्दस्मृतिबलात् दृष्टमुख्यप्रयोग एव मुख्याभिमानात् गौणे व्युत्पन्न इति कल्प्यते। नेह तथा शाब्दस्मृतिः। अतः संस्कृते मुख्या बर्हिरादयो भान्ति। तथाऽन्योन्याश्रयदोषात् संस्कृतार्थत्वे जात्यर्था एकदेशप्रयोगात् भान्ति। यूपे तु नैकदेशेपि वृक्षजातौ प्रयोग इत्यगत्या खादिरादि च्छिनत्ति यूपीकर्तुमित्यन्वयः। इत्येवं मुख्यगौणानध्यवसायात्

---

कथमुद्देश्यतेत्याशङ्क्य यूपसाम्येन परिहरति—यथेति। यथा तत्र प्रकृतत्वात् खदिरादेरुद्देश्यत्वं यूयस्य तु कृतिकर्मतया उत्पाद्यता तथाऽत्रापीत्यर्थः। ननु दृष्टप्रयोगस्य बर्हिरादेर्लौकिकस्याद्दृष्टप्रयोगवैदिक यूपादिवत् कष्टक्लृप्तिर्न युक्तेत्यत्राह—एतच्चेति। बर्हिरादेः संस्कृते प्रयोगः सार्वभौमः तस्यैव शब्दार्थोपायत्वम्। तच्च यूपादिगत्यङ्गीकारे सति युक्तमिति तथा कष्टक्लृप्तिराश्रितेत्यर्थः।

कथं तर्हि जातौ प्रयोग इत्यत्राह—एकदेश इति। जातौ प्रयोगस्य एकदेशप्रयोगत्वात् दुर्बलतया संस्कारार्हत्वेन गौणत्वमुपेयमित्यर्थः। विपरीतं न कुत इत्यत्राह—सर्वेति। एकदेशप्रयोग एव गौणः मुख्यपूर्वकत्वसम्भवात्। सर्वसिद्धस्तु न गौणः। तत्र हेतुः न हीति। जात्यर्थत्वे तत्प्रयोगादर्शिनां संस्कृतमात्रे प्रयुञ्जानानां मुख्यपूर्वकत्वासम्भवेन गौणप्रयोगानर्हत्वादित्यर्थः। ननु राजशब्दस्य कथमेकदेशप्रयोगादेव मुख्यार्थताध्यवसाय इत्यत्राह—राजशब्द इति। राजाहस्सखिभ्य इति राजशब्दात् तद्धितोत्पत्तिस्मृतेः राजशब्दः शाब्दस्मृतिसङ्गृहीत इति तद्बलादज्ञातमुख्यप्रयोग एव व्युत्पित्सुः कथञ्चिन्मुख्याभिमानात् गौणेऽर्थे व्युत्पन्न इति कल्प्यते नेह तथा शाब्दस्मृतिः कारणमस्ति। सार्वभौमत्वं च सर्वत्र भाष्यकृद्वाक्यसाक्षिकमेवेत्यर्थः। एवमनध्यवसायरूपपूर्वपक्षार्थं संस्कृतकोटिमुपपाद्य निगमयति—अत इति। जात्यर्थत्वकोटयन्तरमाह—तथेति। संस्कृतार्थत्वे अन्योन्याश्रयापत्तेः जात्यर्थत्वे च एकदेशप्रयोगानुसारेण व्युत्पत्तिसौकर्यमिति जात्यर्थता विभातीत्यर्थः। ननु यूपसाम्येनान्योन्याश्रयदोषपरिहार उक्त इत्याशङ्क्य वैषम्यमाह—यूपे त्विति। वृक्षजातावेकदेशेपि यूपपदस्याप्रयोगात् अगत्या तत्र तथाश्रयणम्। इह तु न तद्वदगतिः अतो जातौ प्रयोगो मुख्यः संस्कृते तु प्रयोगो गौण इत्यर्थः। उपसंहरति इत्येवमिति।

---

१. तक्षति A २. सर्वहोमप्रसंगा A

बर्हिराज्यपुरोडाशादिपदवान् वेदो न प्रमाणमिति सङ्गतिद्वयं पूर्वपक्षश्च ।

न च परोक्तान्योन्याश्रयसमाधिः । दर्भैस्तृणीतेति मन्त्रात् दर्भेषु स्तरणप्राप्तेः न बर्हिः पदवाच्ये स्तरणविधिरिति । यतो वचनविनियोज्यमन्त्रात् मन्त्रार्थप्राप्तिः लिङ्गविनियोज्ये त्वस्मिन् अन्यतोऽप्राप्तेः लिङ्गविनियोगासिद्धेः बर्हिःपदवाच्ये स्तरणादन्योन्याश्रयः ।

राद्धान्तस्तु—जात्यर्थताध्यवसायात् यूपे ह्यगत्या कथञ्चिदन्योन्याश्रयं निरस्य संस्कृतार्थतोक्ता । इह तु एकदेशभवात् जातौ प्रयोगादस्ति गतिः । अप्रतीतमुख्यस्य गौण एवादौ व्युत्पत्तेः । मुख्याभिमानात्तु गौणवृत्तौ मुख्यभ्रमः गाव्यादिरिव अशक्तिजत्वाज्ञानादनादिः । अथ विपरीतं न कुतः जातावेव गौणत्वाज्ञानादस्तु । मैवम् । अगत्या संस्कृतार्थतेत्युक्तम् ।

---

आचार्यपादैस्तु संस्कृतार्थताध्यवसायेन भाष्यापातप्रतीत्या पूर्वपक्षः कृतः । अन्योन्याश्रयश्च परिहृतः । यदि बर्हिः पदवाच्ये स्तरणविधिः स्यात् 'बर्हिषा यूपावटमवस्तृणाति' इति स्यादेवमन्योन्याश्रयदोषः । इह तु "दर्भैः स्तृणीत हरितैः" इति मन्त्रबलात् दर्भेषु स्तरणप्राप्तेः न बर्हिः पदवाच्ये स्तरणविधिरिति । तन्न युक्तमित्यत्राह—न चेति । यत इति । यदि वचनविनियोज्योऽयं मन्त्रः स्यात् स्यान्मन्त्रार्थप्राप्तिः । अयं तु लिंगविनियोज्यः । स च लिङ्गविनियोगोऽन्यतः प्राप्ते प्रकाश्ये भवति । न चात्र स्तरणविधिं विना अन्यतः स्तरणस्य प्राप्तिः । अन्यथा लिङ्गविनियोगासिद्ध्यापत्तेः । बर्हिः पदवाच्ये स्तरणविधिमुपेत्यैव लिङ्गविनियोगो वाच्यः । तथाचान्योन्याश्रयो दुष्परिहर इत्यर्थः ।

राद्धान्तस्त्विति । जात्यर्थाध्यवसायात् बोधकत्वे सति प्रामाण्यसिद्धिरित्यर्थः । ननु संस्कृतार्थत्वे तदन्योन्याश्रयस्य यूपादिसाम्यात् कथञ्चित् परिहृतत्वात् कथं जात्यर्थत्वाध्यवसाय इत्याशङ्क्य अनन्यगतिकतया यूपादौ तथाऽऽश्रयणम् । इह तु एकदेशप्रभवाज्जातौ प्रयोगात् तदर्थतया गतिरस्तीत्याह—यूपे हीति । कथं तर्हि संस्कृते प्रयोग इत्यत्राह—अप्रतीतेति । सार्वभौमात्प्रयोगादज्ञातमुख्यस्य गौण एवादौ व्युत्पत्तेः तन्मूलमुख्याभिमानादेव, यथा गाव्यादौ अशक्तिजत्वाज्ञानादनादिता तथेत्यर्थः । ननु संस्कृतार्थस्यापि बर्हिरादेरज्ञातमुख्यस्यादौ जातिमात्रविषयप्रयोगव्युत्पत्त्या तत्र मुख्याभिमानात् प्रयोगसम्भवे केन विशेषेण जातौ मुख्यतोपपत्तिरिति शङ्कते—अथेति ।

मैवमिति । संस्कृतार्थत्वस्यागतिकगतित्वादित्येवं गतिसम्भवे तन्न युक्तमि-

ननु अज्ञातमुख्यार्थस्य गौण एवादौ व्युत्पत्तिरित्यगत्या, राजशब्दे तु शाब्दस्मृतेस्तथा । तर्हि वाक्यशेषादज्ञातमुख्यस्य गौण एव व्युत्पत्तिरिह साध्यते । आज्यादि यवादि चोदाहरणमुभयत्रापि । अयं भावः—यववराहाधिकरणे वाक्यशेषस्थो मुख्य इत्युक्तेपि अज्ञातमुख्यस्य म्लेच्छादेः न गौणेन व्यवहारसिद्धिरिति शङ्केह वार्यते[1] । तेनापुनरुक्तिः । अस्ति चात्र आज्यादि विधाय घृतादिशब्दैः स्तुतिः । तद्बलादेव शङ्का इहापि निवर्त्या । अर्थभेदाच्चानुष्ठानभेदकथनं भाष्ये अनध्यवसायशङ्कैव चिन्ताप्रयोजिकेति वक्तुम् ।

विवरणे तु बर्हिरादिपदैः न सार्वभौमो लोकव्यवहार इति न

---

त्ययुक्तमित्यर्थः । ननु अज्ञातमुख्यस्य गौण एवादौ व्युत्पत्तिरपि अगतिका गतिः राजशब्दे तु शाब्दस्मृतिबलात् सा उपेता नेह तथा कारणमिति चोदयति—नन्विति । अत्र ग्रन्थोक्तं परिहारमाह—तर्हीति । नन्वेतत् यववराहाधिकरणेऽप्युक्तमित्यत्राह आज्यादीति । इहोच्यमानन्यायस्य यवादावनुवृत्तेः तत्रोच्यमानस्य बर्हिराज्यादावप्यनुवृत्तेः यववराहाधिकरणेऽत्र च उभयत्रापि बर्हिरादिर्यवादिश्चोदाहरणमित्यर्थः । ननु तत्र वाक्यशेषानुगृहीतो मुख्य इति यववराहनय एव साधितत्वात् तदधिकसाध्याभावादेतदधिकरणं पुनरुक्तमित्याशङ्क्याह—अयं भाव इति । तत्र वाक्यशेषानुगृहीतो मुख्य इत्येतद्व्युत्पाद्यम् । अत्र तु अज्ञातमुख्यस्य गौणेन न व्यवहारसिद्धिरिति शङ्कानिरास इत्यपुनरुक्तिरित्यर्थः । कथं तर्हि तच्छङ्कानिरास इत्यत्राह—अस्तिचेति । न चात्र दण्डापूपनयः वाक्यशेषस्य गौणतयाप्युपपत्तेः न शक्तिकल्पनेति शङ्कानिरासार्थमेव तत् । आज्यं विधाय घृतशब्देन बर्हिर्विधाय कुशशब्देन स्तुतिर्वाक्यशेषे दृश्यते । अतो वाक्यबलादेव शङ्कानिवृत्तिरित्यर्थः । ननु यद्यत्रानध्यवसायात् पूर्वपक्षः कथं तर्हि भाष्येऽर्थभेदादनुष्ठानभेदकथनमित्यत्राह—अर्थेति । यद्यर्थभेदेऽनुष्ठानभेदो न स्यात् तदाऽनध्यवसाय एव न स्यादिति चिन्ताप्रयोजकानध्यवसायोपपादनार्थं तत्कथनमित्यर्थः ।

विवरणेत्विति । तन्मते हि व्युत्पत्त्यसम्भवादेव पूर्वपक्ष इति विशेष इत्यर्थः । कथं तदसम्भव इत्यत्राह—बर्हिरादीति । सार्वभौमो हि लौकिको व्यवहारः शब्दार्थव्युत्पत्तावुपायः । न च बर्हिरादौ तत्सम्भव इति न लौकिकव्यवहारात् प्रसिद्धार्थता बर्हिरादेरित्यर्थः । ननु माभूल्लौकिकव्यवहारात् बर्हिर्लुनातीत्यादौ संस्कारे विधिवाक्ये वैदिक इव व्यवहारात् प्रसिद्धार्थताऽस्त्वित्यत्राह—न चेति । किमुद्भिदादि-

---

१. A बाध्यते

व्यवहारप्रसिद्धार्थता। न च संस्कारविधिवाक्ये व्यवहाराद्वेदत एव प्रसिद्धार्थता। उद्भिदादेरिव सामानाधिकरण्याभावात्। न च यूपादेरिवाश्रयान्तरपूर्वकता वेदे खदिरादिवदिहाश्रयाश्रुतेः। लोके च एकदेशे जातौ व्यवहारो लवनार्हतया गौणोऽपि संभवीति अन्यत्र तदर्हत्वेपि न प्रयुज्यतां नाम न तदर्हताऽपैति। संस्कारार्थत्वे च अन्योन्याश्रयतेति बर्हिरादिपदवतो वेदस्याप्रामाण्यम्। भाष्ये तु संस्कारार्थता[1] अनध्यवसायपर्यवसितैव।

राद्धान्तस्तु संस्कारार्थत्वमनिश्चितं नैकदेशव्यवहारं गौणं कर्तुमर्हतीति जात्यर्थताध्यवसाय एव। भाष्ये तु संस्कृतैः स्तरितव्यं, न तु तदनध्यवसायाद्युक्तमिति शेषः। एवमस्मन्मते न वाक्यशेषान्निर्णयः।

---

वत्प्रसिद्धार्थत्वं उत यूपादिवदिति विकल्प्य नाद्य इत्यत्राह—न चेति। तत्र हेतुः—वेद इति। ननु एकदेशवर्तिलौकिकव्यवहारादेव पिकादाविव व्युत्पत्तिरस्त्वित्यत्राह लोके चेति। अनन्यथासिद्धो व्यवहारो व्युत्पत्त्युपायः। असौ तु लोके जातिमात्रे एकदेशप्रभवः प्रयोगो लवनार्हत्वमात्रेण गौणतयाऽप्युपपद्यत इति न शब्दार्थनिश्चयोपायः। पिकादौ वृद्धव्यवहारान्तराभावात् एकदेशप्रयोगस्याप्युपायतेति भावः। ननु लवनार्हत्वगुणयोगात् प्रयोगे जात्यन्तरे किमिति न प्रयोगः तत्रापि तद्गुणयोगस्य सत्त्वादित्यत्राह—अन्यत्रेति। जात्यन्तरे प्रयोगाभावेपि न तदर्हत्वापायः। न चान्यत्रापि गुणभावात् प्रयोगापत्तिः लौकिके गौणप्रयोगे गुणव्याप्त्यदर्शनादित्यर्थः। किञ्च अन्योन्याश्रयोपपत्त्यापि संस्कारार्थत्वानिश्चय इति संस्कारार्थत्वजात्यर्थत्वानध्यवसायात बर्हिरादिपदवतो चोदना न प्रमाणमित्याह—संस्कारेति। नन्वेवं सति कथं भाष्ये संस्कारार्थत्वेन पूर्वपक्षितमित्यत्राह—भाष्ये त्विति।

राद्धान्तस्त्विति। संस्कारार्थत्वस्यानिश्चितत्वात्। नहि सन्दिग्धं संस्कारार्थत्वं निश्चितस्य जातौ लौकिकप्रयोगस्य गौणतामूलतां यातीति घृतादिजात्यर्थताध्यवसायः। संस्कृते प्रयोगो जातेरध्यवसायात्। संस्कृतार्थत्वानिश्चयश्चान्योन्याश्रयादिनेति भावः। ननु यद्यत्रानध्यवसायात्पूर्वः पक्षः कथं तर्हि भाष्ये संस्कृतैः स्तरितव्यं यदा पूर्वपक्ष इत्यनुष्ठाने विशेषः प्रयोजनत्वेनोक्तः अननुष्ठानस्यैव वक्तुं युक्तत्वादित्याशङ्क्य भाष्यं व्याचष्टे—भाष्ये त्विति। एवं सिद्धान्तेपि विवरणमतस्य निबन्धनमताद्विशेष इत्यत्राह—एवमिति।

---

१. A भाष्योक्ता।

## ॥ ९ ॥ प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

संस्कृते प्रोक्षणीशब्दः सार्वभौमः, जातावैकदेशिकः । स च मुख्य[1] इत्युक्तम् । इह शाब्दस्मृतिरपि सेककरणयोगात् मुख्यतामाह । सा चाद्दतेत्यपवादिका प्रयोगमूलेति चापवाद्येत्यनध्यवसायात् सङ्गतिद्वयम् । पूर्वपक्षश्च ।

राद्धान्तस्तु,—संस्कृतजातिप्रयोगद्वयविषयेपि योगाहानाद्यथास्मृति मुख्यार्थता । अन्यथा शक्त्यन्तरकल्पनापत्तेः । यथा एकस्मिन्ननेकशब्द-

---

## ॥ ९ ॥ प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

प्रोक्षणीरासादयतीत्यादौ प्रोक्षणीशब्दविषयाचिन्ता–किमयं संस्कार-निमित्तो जातिनिमित्तको यौगिको वेत्यनध्यवसायः उत यौगिक एवेति । अनध्यव-साय इति पूर्वः पक्षः । यौगिक एवेति सिद्धान्तः । नन्वत्र ग्रन्थे पूर्वाधिकरणप्रस्तुत-संस्कारजातिनिमित्तप्रयोगस्य स्मृतितोऽपवादः प्रोक्षणीषूच्यत इत्यधिकरणारम्भ-प्रयोजनमुक्तं कथं युक्तम् । पूर्वसिद्धान्तस्थापितजातिनिमित्तप्रयोगस्यैवापवाद्यत्वं वक्तुं युक्तं न तु तन्निरस्तसंस्कारनिमित्तप्रयोगस्येत्याशङ्क्य उपपत्तिमाह—संस्कृत इति । यद्यपि प्रयोगद्वयमध्ये जातिनिमित्तप्रयोगो बलवानित्युक्तं तथापि इह उक्ष सेचन इत्यस्मात् प्रपूर्वात् करणे ल्युटि ङीपि च कृते प्रोक्षणीशब्द इत्येवं यौगिकत्वो-पस्थापकशाब्दस्मृतिबाधकत्वं द्वयोस्तुल्यम् । तथा तया बाध्यमित्यनध्यवसायात् सङ्गतिद्वयपूर्वपक्षावित्यर्थः ।

राद्धान्तस्त्विति । सत्यं प्रयोगमूला शाब्दस्मृतिः तथापि तदापादितयोगस्य प्रयोगद्वयविषयेऽप्यहानात् स्मृतेरेवेह प्रयोगद्वयनिर्वाहकत्वमिति स्मृत्युक्तप्रकारेण यौगिकतयैव मुख्यार्थत्वम् । अन्यथा यथाप्रयोगद्वयं मुख्यत्वे शक्तिकल्पनापत्तेः । अन्यत्र क्लृप्तावयवयोगबलादेव तदुपपत्तौ तदयोगादित्यर्थः । ननु साधुत्वमात्रविषया शाब्दस्मृतिः न शक्तिविषया । अतः कथं स्वाविषयशक्तिविरोधित्वं शाब्दस्मृते-रित्याशङ्क्य दृष्टान्तमुखेनोपपादयति—यथेति । यथा एकस्मिन्नर्थे सास्नादिमति गोगाव्याद्यनेकशब्दप्रयोगेप्येकशब्दो गोशब्द एव शाब्दस्मृतिबलान्मुख्यः । एवं प्रयोगद्वयानुगतयोगार्थस्मृतिबलात् अनेकस्मिन् संस्कारजातिरूपार्थे एकः प्रोक्षणी-

---

१. A मुख्यार्थः

प्रयोगेपि एकःशब्दोऽनादिः स्मृतेः साधुः; एवमनेकस्मिन् एकशब्दः तथा अनुगतार्थस्मृतेः ।

विवरणे तु प्रसङ्गादिदमित्यवान्तरसंगतिरुक्ता । यद्येकदेशप्रयोगात् संस्कारविधिसिद्धिः योगेऽपि तर्हि तथैवास्तु । रूढेर्योगापहृतिस्तक्षादौ दृष्टा वर्धकिजातौ । अवयवार्थापेक्षो हि योगो न रूढिः । अक्लृप्ता च रूढिः क्लृप्तो योग इत्यनध्यवसायोऽत्रापि मते ।

राद्धान्तस्तु—क्लृप्तत्वादिह योग एवादेयः क्लृप्ता हि रुढिरनपेक्षा योगहारिणी तक्षादेरन्यत्र योगेपि अप्रयोगाद्रूढिता। योगाद्धि जात्यन्तरेपि

---

शब्दो यौगिकतया मुख्य. । यद्यपि साधुत्वमात्रविषया स्मृतिः तथापि अर्थात् गोगाव्यादाविव प्रयोगद्वयेपि प्राप्ते शक्तिकल्पनां वारयतीति तत्कल्पनागौरवपरिहारकतया शाब्दस्मृतिः बलीयसीत्यर्थः ।

नन्वत्र विवरणटीकायां प्रासङ्गिकमिदमुदाहरणमित्युक्तम् । तदयुक्तम् । निबन्धनवत् साक्षात्सङ्गतेरध्याये सम्भवादित्याशङ्क्य यथादीपशिखाटीकार्थमवान्तरसङ्गत्यभिप्रायमाह—विवरणे त्विति । कथं प्रसङ्गसङ्गतिरित्याशङ्क्य अवान्तरसङ्गतिं सूचयन अध्यवसायात्मकं पूर्वपक्षमाह—यदीति । यद्येकदेशप्रभवजातिप्रयोगात् संस्कारविधिसिद्धेर्न संस्कारविधिबलात् संस्कृतार्थता तर्हि योगेपि तथास्तु योगस्य जातावप्यनपायात् । जात्यर्थतयैव योगप्रतीत्त्युपपत्तेः प्रोक्षणीशब्देपि जात्यर्थतैवास्त्वित्यर्थः । ननु योगे सम्भवत्यपि तदुपेक्ष्य कथं जात्यर्थतेत्यत्राह—रूढेरिति । कथं रूढेर्योगापहारित्वमित्यत्राह—अवयवार्थेति । सापेक्षनिरपेक्षन्यायादित्यर्थः । नन्वेवं तक्षादिशब्दवत् रूढिताध्यवसायात् कथमनध्यवसाय इत्यत्राह—अक्लृप्तेति । क्लृप्ताक्लृप्तयोः क्लृप्तं बलीय इति न्यायात् यौगिकत्वकोट्युद्गम इति निबन्धनवदत्रापि मतेऽनध्यवसाय एवेत्यर्थः । राद्धान्तस्त्विति । सत्यं सापेक्षो योगः निरपेक्षो रूढिः तथापि योग एवादेयः क्लृप्तत्वात् । प्रयोगो हि अनन्यथासिद्धावमर्शापेक्षः शक्तिकल्पकः । इह तु क्लृप्तशक्तिकावयवयोगादेव प्रयोगसिद्धेर्नशक्तिकल्पनावकाश इत्यर्थः । ननु हतस्तर्हि रूढिर्योगमपहरतीति नयः इत्यत्राह—क्लृप्ता हीति । यत्र तक्षादाववयवशक्तेरतिव्यापित्वान्न समुदायप्रयोगोपपादकत्वमिति समुदायशक्तेरवश्यकल्प्यतया रूढितैव । तत्र क्लृप्ता रूढिः अनपेक्षा योगापहारिणीति न सर्वथा रूढिर्योगमपहरतीति नयबाधइत्यर्थः । प्रोक्षणीशब्दे तु नैवमित्याह–

प्रयोगो दुर्वारः । प्रोक्षणीशब्दस्त्वन्यत्रापि प्रयोगाद्यातीति यौगिक एव ।

## ॥ १० ॥ तथा निर्मन्थ्ये ॥ १२ ॥

निर्मन्थ्यशब्दे अधिकाशङ्का । योगतन्त्रत्वे चिरनिर्मथितेपि प्रयोगः स्यादिति अवयवार्थस्मृतितोऽपि न निर्णयः स्यादिति सङ्गतिद्वयं पूर्वपक्षश्च ।

राद्धान्तस्तु—शाब्दस्मृतिसिद्धे प्रयोगे तत्साधुता नियन्त्री । संक्षेपार्थं सामान्यतः स्मृतिरपि सिद्धप्रयोगविषयतयैव विशेषार्थे उपसंहारार्हा । न तु स्मृतितोऽप्यधिकप्रयोगापत्तिरिति अत्रापि तथेत्युक्तम् ।

---

प्रोक्षणीशब्दस्त्विति । आज्यं प्रोक्षणमित्याज्येपि जात्यन्तरे प्रोक्षणीशब्दस्य प्रयोगदर्शनाद्योगादन्यत्रापि प्रयुज्यत इति योगस्यैव समुदायप्रयोगोपपादकत्वसम्भवान्निश्चितयोगार्थ एव प्रोक्षणीशब्द इत्यर्थः ।

## ॥ १० ॥ तथा निर्मन्थ्ये ॥ १२ ॥

निर्मन्थ्येनेष्टकाः पचन्तीत्यत्र निर्मन्थ्यशब्दे चिन्ता-किं संस्कारवाची जातिवाची वा यौगिको वेत्यनध्यवसायः उत यौगिक एवेति । ननु पूर्वनयेनैव शाब्दस्मृतिबलात् यौगिकत्वे सिद्धे केन विशेषेणेदमारभ्यत इत्यत्राह-निर्मन्थ्येति । कथमधिकाशङ्केत्यत्राह—योगेति । न ह्यत्र निर्मन्थ्यशब्दे प्रोक्षणीशब्दवदवयवार्थस्मृतेः शक्तिकल्पनालाघवात् यौगिकत्वनिर्णयः, तथात्वे चिरनिर्मथिते प्रयोगापत्तेः । अतः शिष्टपरिगृहीतत्वात् स्मृतिः प्रयोगद्वयस्य बाधिका, प्रयोगो वा स्मृतेर्बाधक इत्यनध्यवसायात् सङ्गतिद्वयं पूर्वपक्षश्चेत्यर्थः ।

राद्धान्तस्त्विति । कल्पनालाघवात् स्मृतिबलान्निर्मन्थ्यशब्दस्य यौगिकत्वम् । न चैवं स्मृतितो योगतन्त्रत्वेऽधिके चिरनिर्मथितेपि प्रयोगापत्तिः, शाब्दस्मृतेः प्रयोगमूलतया सिद्धप्रयोगे तत्साधुत्वनियामकत्वात् । प्रयोगश्चाचिरनिर्मथितविशेषविषय एवेति तन्मूलकस्मृतिरपि तत्रैवोपसंहृतेति नाधिकप्रयोगापत्तिः । न चैवं सामान्येन स्मृतिरयुक्तेति वाच्यम् । स्वमूलभूतप्रयोगानुसारेण विशेषोपसंहारोभविष्यतीति लाघविकतया सामान्येन स्मृतिप्रणयनं युक्तमेव यथा सान्नाय्यशब्दस्य हविर्विशेषवाचिनोऽपि हविर्मात्रे स्मृतिः । अतोऽत्रापि स्मृतिबलात् यौगिकत्वनिर्णयेन प्रयोगद्वयेन शक्तिकल्पनेति तथेत्युक्तमित्यर्थः ।

विवरणे तु राद्धान्ते मथनयोगागतैव अचिरता प्रयोगेऽपीति न योगहानात् समुदायशक्तिकल्पना अन्यत्राप्रयोगेऽपीति हि तत्र न रूढिः। यत्र योगानपेक्षयापि जात्यपेक्षः संप्रयोगः संभवी तत्र योगतन्त्रत्वानुपपत्तेः[1] रूढिकल्पना पङ्कजादावस्मिन्मते। निबन्धने तु [2]योगजात्योर्भावेऽपि क्लृप्ताद्योगादेव [3]शक्तौ न शक्तिकल्पना जातितः, स्मृतेः सिद्धसर्वप्रयोगविषयायाः विशेषोपसंहृतेः नान्यत्र प्रयोगापत्तिः[4]। एवं चावयवयोः प्रत्येकमविशेषतः शक्तिः। सह प्रयोगे क्वचित् कयोश्चित्

विवरणे त्विति। ननु तर्हि प्रोक्षणीशब्दान्निर्मन्थ्यशब्दस्य को विशेषः येन पृथगुपन्यास इत्याशङ्क्य यथानिबन्धनं सर्वाग्नौ चिरनिर्मथिते मथनयोगिनि च द्रव्यान्तरे च प्रयोगाभावादचिरनिर्मथित एवाग्नौ प्रयोगनियमान्नियतप्रयोगो यौगिकं उपहन्ति। तक्षादिवदिति पूर्वपक्षमुक्त्वा राद्धान्तेऽधिकमुक्तम्—यद्यपि न सर्वोऽग्निर्निर्मन्थ्यः। मथनयोगिनि च द्रव्यान्तरे यद्यप्यप्रयोगः तथापि प्रोक्षणीशब्दवन्निर्मन्थ्यशब्दस्य यौगिकत्वमेव। यापि प्रयोगे अचिरता सा मथनयोगगतैव मथनयोगापेक्षैव। अतोऽनुगतत्वाद्योगस्य न तमनादृत्य समुदायशक्तिः कल्पनीयेत्यर्थः। नन्वस्मिन् मते योगस्य प्रयोगानुगतावपि यावद्योगं प्रयोगाभावेन समुदायशक्तिकल्पनया रूढितैव न्याय्येत्यत्राह—अन्यत्रेति। सत्यं यावद्योगमप्रयोगः तथापि निर्मन्थ्यस्य न रूढिता, प्रयोगनियतरूपान्तराभावेन योगापेक्षाया दुस्त्यजत्वात्। यत्र पुनः पङ्कजादौ योगे सत्यपि तदनादरेण जातिमात्रापेक्षया प्रयोगस्तत्रैव परं रूढ्याश्रयणमस्मिन् मते इत्यर्थः।

नन्वेवं निबन्धनमतेपि प्रयोगानुसारात् प्रतीतिसौकर्यानुरोधाच्च वरं पङ्कजादौ रूढितैव युक्तेत्यत्राह—निबन्धने त्विति। यद्यपि सर्वत्र पङ्कजादिशब्दप्रयोगे योगजात्योरुभयोरपि भावः तथापि निबन्धनमते क्लृप्तशक्तिकावयवयोगादेव पङ्कजादिशब्दः अन्यथा शक्तिकल्पनागौरवापत्तेरित्यर्थः। नन्वेवं योगतन्त्रत्वे कुमुदादावपि निरुपपदप्रयोगापत्तिरित्यत आह—स्मृतेरिति। समासादियोगस्मृतेः सिद्धप्रयोगविषयत्वात् तस्याश्च मूलभूतप्रयोगविशेषोपसंहृतेः नातिप्रसङ्गदोष इति क्लृप्तशक्तिकावयवयोगो बलवानिति न रूढितेत्यर्थः। नन्वेवं अवयवशक्तिरविशेषतः प्रवृत्तेति कथं तन्निमित्ता प्रतीतिः विशेषविषयतया सङ्कुचितेत्यत्राह—एवं चेति। सत्यमवयवयोरेकैकस्य प्रातिस्विकी शक्तिरविशेषतः तथाप्यवयवान्तरसहत्वप्रयुक्तं शक्तेः सङ्कुचितकार्यकरत्वं, तच्च क्वचिदेव प्रयोगे कयोश्चिदेवा-

१. योगातन्त्रत्वे A २. A प्रयोग ३. शब्दो ४. प्रयोगोत्पत्तिः

कुत्रचिद्विशेषविषये प्रतिबद्धा यद्यादिभिरिव विध्यभिधानशक्तिः। प्रतिबन्धस्तु संक्षेपस्मृत्या न शाब्दः [1]स्मृतः। सिद्धप्रयोगविषयतया तु अर्थी कृतः। शक्तिकल्पनातो हि प्रतिबन्धकल्पना लघ्वीति रहस्यम्। अहीनशब्दे तु क्लृप्तायामप्यहः शब्दशक्तौ यागसङ्घातयोः प्रकृतिप्रत्यययोरिहैव शक्तिः कल्प्या तद्वरं समुदायशक्तिरेकैव कल्प्यताम्। न च [2]सर्वत्रोपसंहृत एवावयवशक्तिः सत्रेष्वदर्शनात् प्रयोगस्येत्युक्तम्।

---

वयवयोः कुत्रचिदेवार्थविशेषे। अतोऽन्यत्राप्रयोगस्य प्रतिबन्धकल्पनयैवोपपत्तेः न शक्त्यन्तरकल्पनेत्यर्थः। अत्र दृष्टान्तः—यद्यादिभिरिवेति ननु शाब्दैरस्मृतस्य प्रतिबन्धस्य कथमवगतिरित्यत्राह—प्रतिबन्धस्त्विति। ननु क्लृप्तशक्तिकावयवयोगाङ्गीकारः कल्पनालाघवार्थः। सोपि प्रतिबन्धकल्पनापेक्षश्चेत्तर्हि प्रतीतिलाघवात् रूढ्यङ्गीकार एव युक्त इत्यत्राह—शक्तिकल्पनात इति। कल्पनाया हि धर्मिणः शक्त्यन्तरस्य कल्पनं प्रतिबन्धकल्पना तु धर्मभूताभिभवकल्पना धर्मिकल्पनातः धर्मकल्पना लघीयसीति रहस्यम्।

एतेन रूढिपक्षोऽपि निरस्तः। योगरूढिवादे हि अवयवशक्तिः समुदायशक्तिश्च द्वे अपि आश्रयणीये। तत्रावयवशक्त्याऽवयवप्रतीतिः समुदायशक्त्या च जातिप्रतीतिः इति पङ्कजादिशब्दैरुभयाकारार्थप्रतीतेः। अत एव न कुमुदे प्रयोगः समुदायशक्तेरभावादिति। समुदायशक्तिकल्पनायां प्रमाणाभावात् इति यौगिकत्वेपि प्रयोगव्यवस्थाया उक्तत्वात्। तत्कल्पनायामपि कथं प्रयोगव्यवस्था अवयवशक्तेरविशेषेण अन्यत्रापि प्रयोगस्य दुर्वारत्वात्। न चावयवशक्तेः समुदायशक्त्या नियमितत्वं तथात्वे अवयवशक्तिः समुदायशक्तिश्च तस्याश्च नियमनशक्तिश्चेत्यनेकशक्तिकल्पनापत्तेः। तथा एकस्य शब्दस्य युगपच्छक्तिद्वयेन प्रवृत्तिः न क्वापि दृष्टचरी। किञ्च समुदायशक्तिः तत्र पङ्कजे प्रवृत्त्यर्थं कल्प्यते, कुमुदे निवृत्त्यर्थं वा? नाद्यः अवयवशक्तेः क्लृप्ताया विद्यमानत्वात्। न द्वितीयः समुदायशक्तिनिवृत्तौ हेतुत्वेनान्यत्राक्लृप्तत्वात्। प्रतिबन्धकल्पना त्वन्यात्र दृष्टचरीति सैव युक्तेति। नन्वेवमहीनशब्देपि समुदायशक्तिहानार्थं यौगिकत्वं स्यादित्यत्राह—अहीनेति। यद्यपि अहरवयवस्य कालविशेषे शक्तिः क्लृप्ता, तथापि ऊनावयवस्य न क्वापि शक्तिः क्लृप्ता अहश्शब्दस्य च न यागे। ततश्चाहोरूपप्रकृतेः यागे शक्तिः प्रत्ययस्य च सङ्घाते इहैव कल्प्या। तद्वरं कार्यानुसारात् समुदायशक्तिरेकैव कल्प्येत्यर्थः। अहीनशब्देनाहस्सङ्घातकृतसत्रोपसंहारार्थमपि नावयव-

---

१. कृतः २. सत्रोपसंहृतये

अतः पङ्कजादौ संबन्धग्रहो जात्युपाधेरिति तु अशक्तिवचोऽव्यक्तिः अप्रयोगादेवाप्रयोग इति ।

विवरणे तु वरं रूढिः नतु परोक्ता योगरूढिरित्यर्थः । परोक्तो भङ्गः—युक्तं हि नावनीतश्रुतावचिरनिर्दग्धत्वं, एवं हि घृतविशेषकता । निर्मन्थ्यश्रुतिस्तु वैद्युताग्निनिवृत्त्यैवार्थवत्तया नाचिरार्था । तदुक्तं—

वैद्युताश्माभिघातोत्थसूर्यकान्तादिजन्मनाम् ।
निवृत्त्या चरितार्थत्वात् निर्मन्थ्योऽभिनवः कथम् ॥ इति ।

स्वराद्धान्तस्तु पाकार्थप्राप्तेऽग्नौ मथनविध्यर्था निर्मन्थ्यश्रुतिरिति

---

शक्तिः कल्प्या । तस्य सत्रे प्रयोगाभावादित्यत्राह—न चेति । एतच्च तृतीये अहीनाधिकरणे निपुणतरमुपपादितम् ।

अत्र श्रीकरस्य पङ्कजादौ रूढित्व एव निर्बन्धः । अन्यथा यौगिकत्वे वाच्यार्थस्य कुमुदेपि सत्त्वात् कुमुदेपि प्रयोगः स्यात् । तथा शब्दार्थसम्बन्धग्रहणमव्यभिचारिहेतुकम् । तत्र पंकजादौ जातिरेवाव्यभिचारिणी हेतुः न योगः । व्यभिचारित्वात । अतो न योगनिबन्धनः प्रयोग इति तन्मतमुपसंहारव्याजेन निराकरोति अत इति । यत उक्तेन प्रकारेण योगतन्त्रत्वेपि योगस्मृतेः प्रयोगमूलत्वेन विशेषप्रयोगोपसंहृतत्वेन योगोपाधिकेपि सम्बन्धग्रहे नान्यत्र प्रयोगापत्तिः कुमुदादावनादिप्रयोगस्य निरुपपदपङ्कजादेरभावात् । अतः पङ्कजादौ सम्बन्धग्रहो जात्युपाधेरिति अशक्तिवाचोयुक्तिः उपपादनासमर्थभाषणम् । अन्यत्राप्रयोगस्य पूर्वपूर्वप्रयोगाभावादेव सिद्धेरित्यर्थः । नन्वेवं निबन्धनवद्विवरणमतेपि पङ्कजादौ शक्तिकल्पनालाघवार्थं यौगिकत्वस्यैव युक्तत्वात् किमित्यपरिमिताधिकरणे षष्ठे रूढत्वोक्तिरित्यत्राह—विवरणे त्विति । तदुक्तेः परोक्तयोगरूढिनिरासमात्रे तात्पर्यम् । न च समुदायशक्तावपीत्यर्थः ।

केचित्तु एतं ग्रन्थं निर्मन्थ्यशब्दपरं व्याचक्षते तन्निरूपणीयम् । अत्राचार्यपादैः यथाभाष्यं राद्धान्तो भग्नः तदनुभाषते—परोक्त इति । न हि निर्मन्थ्यशब्दात् योगतोऽचिरत्वलाभः । न च यथा लोके नावनीतेन घृतेन भुङ्क्त इत्यत्र नावनीतश्रुतेरचिरनिर्दग्धत्वधीः तथाऽत्रापीति वाच्यम्, यतस्तत्र विशेषणमहिम्ना तथा धीः अन्यथा व्यावर्त्याभावेन विशेषणानर्थक्यापत्तेः । निर्मन्थ्यश्रुतिस्तु वैद्युताग्निनिवृत्त्या कृतार्थेति न ततोऽचिरत्वलाभ इत्यर्थः । संवादमाह—तदुक्तमिति । अग्नीनामिति शेषः । तत्समर्थितं राद्धान्तप्रकारमाह—राद्धान्तस्त्विति । पाकादेवाग्नेरर्थप्राप्तत्वात् निर्मन्थ्येनेष्टकाः पचन्तीति निर्मन्थ्यश्रुतिर्मथनविध्यर्था । यद्यप्यत्रोपसर्जनभूतं मथनं तथापि लोहितोष्णीषवत् तद्विधिर्युक्तः । नन्वेवमपि कथमचिरत्वप्राप्तिरित्यत्राह–

प्रयोगे मथनादचिरार्थता न शब्दार्थतयेति । तन्न । यदि चैवं याज्ञिकानामचिरार्थतास्मृतिर्नेया तदा हि यस्य यावत्प्रयोगान्तरुत्पत्तिः तच्छब्दानामचिरार्थतास्मृतिरिति स्यात् । अतः स्मृतिद्रढिम्नैवाचिरार्थता स्थापिता । प्राप्तेऽप्यग्नौ निर्मन्थ्यरूपविशेषविधिरयं न तु मथनविधिः खलेवालीवत् ।

## ॥ १० ॥ वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

यदि शाब्दस्मृतित एव वाक्यार्थनिर्णयः तर्हि ततोऽर्थनिश्चयेऽपि गुणविधिनामत्वानिश्चयः वैश्वदेवेन यजेतेत्यत्रेति नामपञ्चकाद्विच्छेदः सङ्गतिद्वयं पूर्वपक्षश्च । साऽस्य देवतेति पाणिनिस्मृतेः वैश्वदेवशब्दो देवता-

---

इति प्रयोग इति । विहितस्य मन्थनस्याधिकृतकर्तृतया क्रतुमध्य एवानुष्ठानमित्यर्थादेवाचिरतालाभो न शब्दार्थतया । तदुक्तं तैरेव—

पाकेनाग्नेरुपात्तत्वात् विशेषणपरा श्रुतिः ।
तच्च पाकाङ्गभूतत्वात् तद्देशादौ करिष्यते ॥ इति ॥

तन्नेति । या पुनरत्र याज्ञिकानां अचिरार्थत्वस्मृतिः तस्याः द्रढिम्नैव निर्मन्थ्यशब्दस्याचिरनिर्मथिताग्निरर्थः । न पुनरार्थमचिरत्वम् । स्मृतेरानर्थक्यापत्तेः । अन्यथा भवदुक्तरीत्या याज्ञिकस्मृतिनयने यस्य पुरोडाशादेरन्तः प्रयोगमुत्पत्तिः तद्वाचकशब्देपि याज्ञिकानां अचिरार्थतास्मृतिः स्यात् । न च तथा स्मृतिः । एतच्चाभ्युच्चयमात्रम् । मूलयुक्तिमाह—प्राप्तेऽपीति । यद्यप्यग्नेः पाकादर्थप्राप्तिः तथापि निर्मन्थ्यश्रुतिः निर्मन्थ्यरूपाग्निविशेषविधिपरा न तु मथनविधिपरा । तथा सति लक्षणापत्तेः । खलेवालीवत् । न च श्रुत्यर्थविधौ सम्भवति लाक्षणिकविधिर्युक्त इत्यर्थः ।

## ॥ १० ॥ वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

चातुर्मास्येषु वैश्वदेवेन यजेतेति श्रूयते । तत्र चिन्ता–किं वैश्वदेवशब्दो गुणविधिर्वा नामधेयं वेत्यर्थानिश्चयः उत नामधेयमेवेति । ननु गुणविधिनामधेयचिन्तायाः कथं नामपञ्चकाद्विच्छेदेनात्र प्रसङ्गः । कथं वा अध्याये सङ्गतिः कथं वा अर्थानिश्चयात्मकः पूर्वपक्षः । शाब्दस्मृतित एव वेदार्थनिर्णयस्योक्तेरित्याशङ्क्य सङ्गतिद्वयं पूर्वपक्षं चाह—यदीति । ननु मत्वर्थलक्षणादोषापत्तेः कथं गुणविधिपक्षोद्भूतिरित्यत्राह—सास्येति । सास्य देवतेति पाणिनिस्मृतिमात्रपर्या-

युक्तयागसमानाधिकरण एव। सूक्तहविषोरिति स्मृतेः हविरर्थत्वं असद्वादित्वाद्धेयम्। एवं [ हेया ] मत्वर्थलक्षणेति प्रवृत्तिविशेषकरतया प्रकृतेषु गुणविधिभानम्। तेषामुत्पत्तौ अग्न्याद्यवरुद्धत्वात् गुणान्तरसंबन्धानुपपत्तेः तेषु वैश्वदेव्यामिक्षाऽस्तीति दण्डिवल्लक्षणया प्रवृत्तेर्नामताभानम्। इयं गतिरस्तीति नाप्रकृतविशिष्टविधिना कर्मभेदः।

तत्किमभिधानमुखेन गुणोपरोधं पिधाय प्रवृत्तिविशेषकरो गुणविधिरस्तु, किं वा व्यर्थां जघन्यलक्षणामाश्रित्य विषमशिष्टविकल्पहानाय नामताऽस्तु—इत्यनध्यवसायः।

राद्धान्तैकदेशी गुणविधेरध्यवसायमाह वैश्वदेवाभिधेयतां यागस्य न गुणावरोधो हन्तीति तदभिधेयमुखं[1] गुणविधिमपि न विहन्ति फलचमसवत्। तत्र तु व्यवस्था। इह विकल्पो नयायातः।

परमराद्धान्ती त्वाह—अभिधानं नामतयापि शक्यत इति न विकल्पः

---

लोचनया वैश्वदेवशब्दो देवतायुक्तयागसमानाधिकरण एव मत्वर्थलक्षणां विनैवेति गुणविधिभानमित्यर्थः। ननु वैश्वदेवशब्दस्य यागवाचित्वे स्यादेवं, किन्तु हविर्वाची वा सूक्तवाची वा सूक्तहविषोरित्यादिकात्यायनस्मृतेः। तथा च मत्वर्थलक्षणा दुर्वारेत्यत्राह—सूक्तेति। ननु माभून्मत्वर्थलक्षणा तथापि गुणविधौ को हेतुः कश्चाश्रय इत्यत्राह—इति प्रवृत्तीति। नन्वेवं तर्हि कथं नामत्वपक्षोद्भूतिरित्यत्राह—तेषामिति। ननु विशिष्टकर्मान्तरविधिरस्त्वित्यत्राह—इयमिति। नन्वेवमुत्पत्तिशिष्टगुणावरोधदोषात् गुणविधिपक्षस्यानुदय एवेत्याशङ्क्य पक्षद्वयेपि गुणदोषौ तुल्यावित्यनध्यवसायमुपपादयति—तत्किमिति। अत्र सूत्रभाष्ययोर्विकल्पपूर्वपक्षोऽनध्यवसायविरुद्ध इत्याशङ्क्य (गुणविधिमात्रपक्षोपन्यासो) विकल्पपक्षोपन्यासो राद्धान्तैकदेश्यभिप्रायेणेत्याह—राद्धान्तैकदेशीति। वैश्वदेवशब्दाभिधेयत्वरूपमुखान्तरात् गुणविधिः नोत्पत्तिशिष्टगुणावरोधबाध्यः फलचमसवत्। इयांश्च विशेषः फलचमस इत्याह—तत्र त्विति।

राद्धान्तमाह—परमेति। स्यादेवमभिधानमुखान्तरात् गुणाभिधानं यद्यभिधानमनन्यथासिद्धं स्यात्। इह तु नामतयाप्यभिधानं शक्यत इति न विषम-

---

१. B तदुपायभूतं

श्रुत्योत्पत्तिशिष्टानां अन्यथासिद्धं एकवाक्यशिष्टं कृत्वा युक्तः। फलचमसे तु नान्यथासिद्धिः। तुल्ये च प्रकृतत्वे आमिक्षायागं हित्वा विधिरयुक्तः। तत्र प्राप्तेरशक्यः। विधेयाविधेयता च सकृन्न युक्ता। वरमनभिधेयाभिधानं प्राप्तत्वात् दण्डिवल्लक्षणयेति यावत्प्रकृतानां नामताध्यवसायः।

ननु वैश्वदेवनाम्नो मुख्यार्थतानुरोधात् यजिरामिक्षायागमात्रे वर्तताम्। तन्न। वैश्वदेवनाम यागमात्रे प्रवर्त्यं यजिपरतन्त्रसामानाधिकरण्यात्। सूक्तहविषोरिति स्मृतेर्हविर्वाचि। न च पाणिन्यविरोधेऽपि असद्वादिता। हविः परत्वे च व्यधिकरणता, आमिक्षालिङ्गापत्तिश्चेति

---

शिष्टविकल्पो युक्त इत्यर्थः। फलचमसे तु नैवमित्याह—फलेति। किञ्चात्र गुणविधिपक्षे अयमपरो दोषः सकृदुच्चरितस्य शब्दस्य विधेयाविधेयतयाऽभिधानवैरूप्यम्। न हि आमिक्षायागं विहायान्यत्र यागान्तरे विधिः प्रकृतत्वाविशेषात्। न च तत्रापि विधिः शक्यः प्राप्तत्वात् तदाह–तुल्ये चेति। ननु नामत्वेऽप्यनभिधेयाभिधानदोषापत्तिरित्यत्राह—वरमिति। उपसंहरति—इति यावदिति। ननु दण्डिवल्लक्षणया किमिति प्रकृतसर्वयागेषु वैश्वदेवनामवृत्तिः यावता यजिसमभिव्याहृतवैश्वदेवनाम्नो मुख्यतानुरोधात् यजिरेवामिक्षायागमात्रे वर्ततामिति चोदयति—नन्विति। तन्नेति। स्यादेवं यदि वैश्वदेवनाम्नः स्वतो यागार्थत्वं स्यात्। इदं तु सूक्तहविषोरिति स्मृतेः हविर्वाच्येव न यागवाची यागे तत्सामानाधिकरण्यात् प्रवर्त्यम्। ननु असद्वादित्वात् कात्यायनस्य सूक्तहविषोरिति स्मृतेरनादेयत्वात् तद्धितान्तनाम्नो यागवाचित्वैवेत्यत्राह––न चेति। ननु तर्हि वैश्वदेवपदं हविःपरमेवास्तु यजिश्च प्रकृतानुवादकतया आमिक्षामात्रे वर्ततामित्यत्राह—हविः परत्वे चेति। इतोऽपि न हविः परतेत्याह—आमिक्षेति। न च हविर्योगाद्यागे प्रवर्त्यत्वेपि लक्षणया तत्र प्रवृत्तिर्वाच्या। तदा चामिक्षालिङ्गापत्तिः तदवस्थैवेति वाच्यम्। यतो बलवता सामानाधिकरण्येनान्वयस्य सिद्ध्यर्थं देवतातद्धितान्ताद्धविर्वाचिनो वैश्वदेवशब्दात् पुनश्च वैश्वदेव्यस्यास्तीति अर्शआदिकादजरूपमत्वर्थतद्धितप्रत्ययोत्पत्तेः वैश्वदेवशब्दनिष्पत्तिः। ततश्च वैश्वदेवशब्दो मुख्यवृत्त्यैव हविस्सम्बन्धिनि यागे सामानाधिकरण्यबलात्प्रवर्त्यः तत्परतन्त्रः। न च वृद्धाच्छ इति छप्रत्ययेन विशेषविहितेन सामान्यविहिताणबाध इति वाच्यम्। यतो विशेषविषयेपि सामान्यविहितप्रत्यया बहवो दृश्यन्ते। अत एव परीष्टिसूत्रे परीष्टिरिति रूपसिद्धिः। अन्यथा परीक्षेति रूपं स्यात्। न च स्वरूपत्वान्निषेधः अप्रत्ययस्य वैशेषिकत्वात अत एवोक्तं—

हविर्योगात् यागे प्रवर्त्यं यजिपरतन्त्रम् । यजिश्च स्वतः सर्वप्रकृतवृत्तिः अतो दण्डिवद्वैश्वदेवपदम् । पौर्णमासीं यजत इति तु कालपदानुरोधात् प्रकृतपरो यजिः कालयुक्तपर एवेति न दण्डिवत् कालपदम् । वैश्वदेव-यजिस्तु देवतापदानुरोधात् अतद्दैवत्यप्रकृतपरो गुणविध्यर्थः । गुणविधि-स्त्वभिधानोपपत्तये बहुदोषोऽपि शङ्कितः । सोऽन्यथोपपत्त्या तद्दैवत्य-प्रकृतप्रवेशाद्वारितः[१], न तद्दैवत्यमात्रपरत्वादिति न पूर्वप्रतीतातद्दैवत्य-हानिरिति भेदः ।

---

तद्धितान्तपदाच्चापि तद्धितः सुखमिष्यते ।
वैश्वदेवपदं तेन हविर्युक्तयजेर्वचः ॥ इति ।

अतो यजिपरतन्त्रत्वान्नाम्नो यजेश्च स्वतः सर्वप्रकृतवर्तित्वात् दण्डिवल्ल-क्षणया वैश्वदेवपदमपि सर्वयागनामेत्यर्थः । नन्वेवं पौर्णमासीं यजत इत्यत्रापि यजिपदं सर्वयागानुवादकं स्यात् । अन्यथा वैश्वदेवेनेत्यत्रापि यजिपदं यागविशेषा-नुवादकमस्तु विशेषो वा वक्तव्य इत्याशङ्क्य वैषम्यमाह—पौर्णमासीमिति । पौर्णमासीं यजत इत्यत्र न प्रथममुपपदाकृष्टतात्पर्यकताप्रतीतिः, कालवाच्युपपदस्य द्वितीयान्त-तया स्वतो विधियोग्यार्थत्वाभावात् । किन्तु विधिस्वरसाद्यागस्यैव विधेयता भाति । तद्विधौ चाप्रकृतपरता । तथासत्युपपदस्यानन्वयप्रसङ्गः । अतस्तदन्वयसिद्ध्यर्थं यजेः प्रकृतपरता वाच्या[२] तच्चेत् प्रकृतपरत्वनिमित्तं तदा निमित्तभूतकालपदानु-रोधात् प्रकृतपरो यजिः कालयुक्तप्रकृतपर इति निश्चीयत इति न दण्डिवत्कालपदं यजिपरतन्त्रत्वाभावादित्यर्थः । नन्वेवं तर्हि वैश्वदेवयजिरपि देवतापदानुरोधात् तद्दैवत्यामिक्षायागपरोऽस्त्वित्यत्राह—वैश्वदेवेति । वैश्वदेवेन यजेतेत्यत्र यजिस्तृ-तीयान्ततया देवतागुणविधियोग्य इति यजिः देवतापदानुरोधात् तद्विधावाश्रयत्व-योग्यातद्दैवत्याग्नेयादियागपरः स्वरसतो भाति गुणविध्यर्थत्वात्। ननु उत्पत्तिशिष्ट-गुणावरोधविषमशिष्टविकल्पादिदोषान्न गुणविधिशङ्का युक्तेत्यत्राह—गुणविधिस्त्विति वैश्वदेवपदवृत्त्युपपत्तये गुणविधेर्बहुदोषस्यापि शङ्कार्हत्वात् । कथं तर्हि तन्निरास इत्यत्राह—सोऽन्यथेति । स बहुदोषो गुणविधिरन्यथोपपत्त्या तद्दैवत्यप्रकृतप्रवेशात् तद्दैवत्यस्य वैश्वदेव्यामिक्षायागस्य प्रकृतेषु प्रवेशमाश्रित्य, दण्डिवल्लक्षणया कथञ्चित् वैश्वदेवाभिधानस्य नामतयाप्युपपत्त्यानिरस्तः । न पुनस्तद्दैवत्यमात्र-परत्वादिति यजिपदस्वरसात्पूर्वप्रतीतातद्दैवत्यपरत्वस्य नोपपदानुरोधाद्धानिरिति पौर्णमासीयजिता वैश्वदेवयजेः वैषम्यमित्यर्थः ।

---

१. B बाधितः २. B. अतश्च प्रकृतपरत्वनिमित्तकाल ।

किञ्च [1]कालानुवादप्रयोजनं समुदायद्वयसिद्धया दर्शपूर्णमासाभ्यामित्यत्रोपयोगः तत्र नेह तथेति भेदः। त्रिंशदाहुतिदर्शनं च नित्यवत् गुणविधिपक्षेऽपि न स्यात् संप्रतिपन्नविश्वेदेवदेवताकतया प्रधानाहुतितन्त्रत्वात्। तथाहि—अष्टौ प्रधानाहुतयः, नवप्रयाजाः नवानूयाजाः आघारावाज्यभागौ इति त्रिंशत्ता।

॥ ११ ॥ पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥

अत्रापि द्वादशसङ्ख्यावरोधादष्टत्वादिगुणविध्यसंभवः। न च गत्यन्तरमत्रेत्यन्वयप्रतिभामात्रमिति सङ्गतिद्वयम्। पूर्वपक्षस्तु न नामतयाऽस्ति गतिः, अभावार्थसामानाधिकरण्यात्। न च मन्त्रविधा विहिता-

---

तथा च पूर्वाचार्यश्लोकौ—

विध्यनर्हे द्वितीयान्ते कालयुक्ते परे पदे। विधिः स्वरसमाख्यातनामत्वं तत्समन्विते॥

वैश्वदेवे तु विध्यर्हे तृतीयान्ते यजिः स्वतः। सर्वप्रकृतवर्तीति नामाप्यखिलगोचरः॥ इति।

तथापि पौर्णमासीयजौ कालयुक्तकर्मानुवादप्रयोजनं समुदायसिद्धिः दर्शपूर्णमासाभ्यामित्यत्रोपयोगो विद्यते। वैश्वदेवयजौ तु नैवंविधं प्रयोजनमित्यतोऽपि भेद इत्याह—किञ्चेति। तथा त्रिंशदाहुतयो हूयन्त इत्यतोऽपि त्रिंशदाहुतिलिङ्गदर्शनाच्च वैश्वदेवशब्दस्य नामतैवेत्याह—त्रिंशदिति। यदा वैश्वदेवशब्देन विश्वदेवदेवताख्यगुणविधिरष्टसु प्रकृतासु प्रधानाहुतिषु तदा देवताविकल्पः। तदा च पक्षे सम्प्रतिपन्नदेवतात्वात प्रधानाहुतितन्त्रत्वे त्रयोविंशतिः स्यादित्याहुतीनां नित्यत्रिंशत्ता न स्यादित्यर्थः। आहुतित्रिंशत्तामेवाह—तथाहीति।

॥११॥ पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥१७॥

वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इत्युपक्रम्य यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालो यद्दशकपालो यदेकादशकपाल इति श्रुतम्। तत्र चिन्ता-किमष्टाकपालादीनां गुणविधिनाममन्त्रार्थवादत्वेनानन्वयात् अन्वयप्रतिभामात्रत्वात् तद्युक्तचोदना न प्रमाणं, उतार्थवादत्वसम्भवात् प्रमाणमिति। अत्र भाष्यकारः। किमष्टकपालादयो गुणा विधेया उतार्थवादा इति विचारयति। तदयुक्तम्। प्रामाण्यव्युत्पत्त्यभावेनाध्यायसङ्गत्यभावादित्याशङ्क्यावान्तरसङ्गतिपूर्वकमध्यायसङ्गतिमाह—अत्रापीति। ननु नामत्वादिगतिसम्भवे कथं न गत्यन्तरमित्यत्राह—पूर्वपक्षस्त्विवति। न तावन्नामतया गतिः भावार्थसामानाधि-

---

१. यथाकालमनुवादे B

स्मारकत्वात् । न चार्थवादता, द्वादशसंख्यावच्छेदे ह्यष्टाद्यवच्छेदनिवृत्तिः, न तत्स्तुतिरिति न काचिद्गतिः ।

राद्धान्तैकदेशी गुणविधेरन्वयमाह । एकेनैव वाक्येन सर्वसंख्यायुक्तकर्मविधेर्नावरोधदोषः । वैश्वानरं द्वादशकपालमित्युपक्रमो देवतान्वयार्थः, न संख्यान्तरहानार्थः इति संख्याविकल्पो वा कर्मावृत्तिर्वा । नानासंख्यकपालसिद्धपुरोडाशसंघो हविरिति तु नोक्तम्, अनास्थया प्रत्येकं देवतान्वयान्न संघो हविरित्येवं वा ।

विवरणे तु प्रत्यष्टाकपालादिद्रव्यं तन्त्रेण देवतान्वयात् कर्मोत्पत्तिभेद

---

करण्याभावात् । ननु भवत्यर्थो न भावार्थः । नापि मन्त्रतया, विहितस्मारकत्वाभावात् । भवतु तर्हि अर्थवादतेत्यत्राह--न चेति । तत्र हेतुः द्वादशेति । युक्ता आपो वै शान्ता इत्यत्र व्यधिकरणत्वेऽप्यपां स्तुतिः विधेयवेतसरसम्बन्धित्वात् । इह तु सङ्ख्यान्तरं न द्वादशसङ्ख्यासम्बन्धी प्रत्युत विरुद्धत्वान्निवर्तितम् सङ्ख्यायाः सङ्ख्यान्तरनिवर्तकत्वात् । अतो द्वादशसङ्ख्यावच्छेदे अष्टत्वादिसङ्ख्यानिवृत्तेः नाष्टत्वादिसङ्ख्या तस्याः स्तुतिरिति न गत्यन्तरसम्भव इत्यर्थः ।

नन्वत्रैवं पूर्वपक्षे कथं भाष्ये गुणविधिरिति ब्रूम इति गुणविधितया पूर्वपक्षितमित्याशङ्क्य राद्धान्तैकदेशिमतं न पूर्वपक्ष इत्याह—राद्धान्तैकदेशीति । ननु सङ्ख्यान्तरावरुद्धे कथं सङ्ख्यान्तररूपगुणविधिरित्यत्राह--एकेनैवेति । एकेनैव वाक्येन युगपन्निरपेक्षानेकसङ्ख्यकपालयुक्तकर्मविधेर्नावरोधदोषः । भिन्नवाक्ये हि स्ववाक्यस्थगुणेनावरोधो नैकस्मिन् वाक्य इत्यर्थः । ननु वैश्वानरं द्वादशकपालमित्युपक्रमात् वैश्वानरयागस्य शीघ्रं द्वादशकपालान्वयात् सङ्ख्यान्तररूपगुणनिवृत्तिः स्यादित्यत्राह--वैश्वानरमिति । उपक्रमस्थवैश्वानरपदं समभिव्याहृतसर्वद्रव्याणां देवतान्वयार्थम् । न पुनः द्वादशकपालद्रव्यमात्रान्वयार्थतया सङ्ख्यान्तरहानार्थम् । अन्यथा अष्टाकपालाद्यनन्वयप्रसङ्गात् समभिव्याहृतान्वयस्य चावश्यकत्वात् । अतोऽष्टाकपालादिद्वादशकपालान्तानां एकवाक्यनिर्दिष्टानां युगपद्वैश्वानरपदेन देवतासम्बन्धात् सर्वसङ्ख्यकपालयुक्तकर्मविधिरित्यर्थः ।

ननु कथं विरुद्धसङ्ख्यानामेकस्मिन् कर्मणि समन्वय इत्यत्राह--सङ्ख्येति । वक्ष्यमाणपक्षापेक्षया वाशब्दः सङ्ख्याविकल्पः कर्मावृत्तिर्वेत्यर्थः । ननु चित्रायागवत सङ्घस्यैव हविष्ट्वं ग्रन्थे किमिति नोक्तमित्यत्राह--नानेति । युक्तं संसृष्टपदाच्चित्रायागे सङ्घस्य हविष्ट्वं, इह तु तदश्रुतेः प्रत्येकं देवतान्वयान्न सङ्घस्य हविष्ट्वमित्येवं वा ग्रन्थे तदनुक्तिरित्यत्राह--प्रत्येकमिति । विवरणे त्विति । तत्राष्टा-

एवोक्तः । न गुणविधिः गुणान्तरावरोधादेव ।

राद्धान्तस्तु एकस्मिन्नपि वाक्ये वैश्वानरं द्वादशकपालं निर्वपेदिति शीघ्रं द्वादशसंख्यान्वितकर्मोत्पत्तिधीः[1] । अष्टाकपालादेस्तु प्रथमान्तस्य पुनाति इति स्तुत्या वैश्वानरान्वयः कल्प्य इत्युपरोधात्[2] स्तुत्यैवान्वयः । द्वादशावच्छिन्नादौ अवयुत्याष्टाद्यवच्छेदोऽपि द्वादशावच्छेद्यवर्गे[3] बहुस्तुतिः । कथञ्चित् संबन्धिद्वारापि स्तुतिः आपश्शान्ता इतिवत्[4] । गुणफलविध्यर्थमष्टत्वादीत्येकवाक्यत्वादेव निरस्तम् । एकवाक्यत्वं चोपक्रमोपसंहारयोरैक्यादुक्तम् ।

---

कपालादि द्रव्यभेदात् कर्मभेद एव पूर्वपक्ष उक्तः न गुणविधिः गुणान्तरावरोधात् । न चैकवाक्यताविरोधः प्रतीयमानस्याप्येकवाक्यत्वस्यार्थवादत्वासम्भवेन हेयत्वात् । न च वाक्यभेदे सति अष्टाकपालादिविधायकशब्दान्तरकल्पनापत्तिः । वैश्वानरमिति तन्त्रोच्चारितेन प्रत्यष्टाकपालादिद्रव्यं तन्त्रेण देवतान्वयान्निर्वपेदित्यनेनैव तन्त्रेण नानाकर्मविधानोपपत्तेः सप्तदश प्राजापत्यानितिवदित्यर्थः ।

राद्धान्तस्त्विति । सत्यमष्टाकपालादीनामप्येकस्मिन् वाक्ये निर्देशः तथापि वैश्वानरं द्वादशकपालमिति श्रौतं सामानाधिकरण्यमिति तदन्वय एवावगम्यत इति द्वादशसङ्ख्यकपालान्वितकर्मोत्पत्तिरेव शीघ्रम् । अष्टाकपालादेस्तु पुनातिस्तुत्यन्वयानुपपत्त्या वैश्वानरसम्बन्धः कल्प्यः । अतः प्रथमान्वितद्वादशकपालावरोधान्नाष्टाकपालादिगुणविधिरिति स्तुत्यैवान्वय इत्यर्थः । ननु सङ्ख्यायाः सङ्ख्यान्तरनिवर्तकत्वात् द्वादशसङ्ख्यावच्छेदेनाष्टादिसङ्ख्यावच्छेदनिवृत्तेः सम्बन्धाभावात् कथं स्तुतिरित्यत्राह—द्वादशेति । सत्यमवच्छेदकतया अष्टादिसङ्ख्यानभिहिता । तथापि वस्तुतो द्वादशसङ्ख्यायामष्टादिसङ्ख्याया अवयवतया स्थितेः द्वादशावच्छिन्नात् समुदायात् अष्टाद्यवच्छिन्नानि द्रव्याणि पृथक्कृत्य अवयवभूततत्स्तुत्या समुदाये द्वादशावच्छेदो बह्वी स्तुतिः बहुतरत्वेन स्तुतिरित्यर्थः। नन्वेवं कथञ्चित् सम्बन्धात् स्तुतिर्न युक्तेत्याशङ्क्य दृष्टान्तेनोपपादयति—कथञ्चिदिति । ननु अष्टाकपालादेः फलार्थत्वेन श्रुतेः गुणफलसम्बन्धपरतास्त्वित्यत्राह—गुणफलेति । कथं तदित्यत्राह—एकवाक्यत्वमिति ।

---

१. M त्पत्तिविधिः　　२. M व्यवरोधान्वयः

३. A द्येपि　　४. B इति वेतसस्तुतिवत्

## ॥ १२ ॥ तत्सिद्धिः ॥ २३ ॥

अवयुत्यापि संबन्धिस्तुतिः संबन्धित्वानवयोजनात् । इह तु संबन्धितापि न भाति । अशक्यश्च गुणविधिरित्यन्वयप्रतिभैवेति सङ्गतिद्वयं पूर्वपक्षश्च । गौणमुख्याधिकरणोक्तगौण्यन्वयाक्षेपेण चेयं चिन्ता । यदि हि मुख्यगुणात् परत्र प्रवृत्तिः अग्निशब्दात् पिङ्गलताधीरेव न स्यात् गुणान्तरधीरपि भवेत् । विवक्षया नियतधीरिति चेत् । विवक्षानुवर्ती तर्हि शब्दः न स्वार्थसंबन्धानुसारी इत्यसमर्थेऽपि विवक्षावशात् अध्यारोपिततद्भावो गौणः स्यात् । एवं चाग्निं समारोप्य माणवकेऽग्निशब्दो न माणवकार्थः ।

---

## ॥ १३ ॥ तत्सिद्धिः ॥ २३ ॥

यजमानः प्रस्तरः यजमान एककपाल इति श्रुतिम् । तत्र चिन्ता—किं गुणविध्यर्थवादत्वासम्भवेनान्वयप्रतिभामात्रतया तदेकवाक्यतापन्ना चोदना न प्रमाणं उतार्थवादत्वसम्भवात् प्रमाणमिति । ननु कथमस्यावान्तरसङ्गतिः । तथा पूर्वनयादेव एकवाक्यताबलात् स्तुत्यर्थत्वे सिद्धे कथं पूर्वपक्ष इत्याशङ्क्य सङ्गतिद्वयं पूर्वपक्षं चाह—अवयुत्यापीति । युक्ता पूर्वत्रावयुत्यापि सम्बन्धिस्तुतिः वस्तुतः सम्बन्धित्वस्यानवयोजनात्, इह तु प्रस्तरयजमानयोः सम्बन्धाप्रतीतेः न स्तुतितया निर्वाहः । नापि गुणतया, अन्योन्यकार्यकरत्वानुपपत्तेः गुणविधेरशक्यत्वात् । अतोऽन्वयप्रतिभैवेत्यर्थः । ननु कथमिह सम्बन्धाप्रतीतिः प्रस्तरयजमानयोः गौणमुख्यनयसिद्धगौणवृत्त्या सामानाधिकरण्येन सम्बन्धोपपत्तेरित्यत्राह - गौणेति । कथमाक्षेप इत्यत्राह—यदीति । अग्निगुणत्वाविशेषादग्निशब्दात् गुणान्तरधीरपि दुर्वारेत्यर्थः । ननु विवक्षाविशेषात् गुणविशेषधीः स्यादिति शङ्कते—विवक्षयेति । दूषयति—विवक्षानुवर्तीति । यदि विवक्षया नियतगुणधीस्तदा शब्दो विवक्षानुवर्ती स्यात् । न स्वार्थसम्बन्धानुसारी[1] । अतोऽसत्यप्यर्थे विवक्षावशादध्यारोपिततद्भावो गौणः स्यात् । विवक्षानुवर्तित्वस्य स्वत एकार्थतयैवाप्राप्तेः । अतोऽसत्यत्वमेवापद्यत इत्यर्थः । ननु अग्निर्माणवक इति सामानाधिकरण्येनाग्न्यन्वयप्रतीतेः तन्निर्वाहायानयोः अन्योन्याननुगतत्वात् अनुगतगुणाधीनान्वयधीरुपेया । तद्विवक्षया प्रयोगात् । अतो न तद्भावारोपो विषये इत्यत्राह—एवं चेति । यद्वा ननु यद्यग्निगुणो न विवक्षितः कथं तर्हि माणवकादौ अग्निशब्दः प्रयुक्तः तत्राह—एवं चेति । अग्निर्माणवक इत्यत्राग्निशब्दो माणवके अग्निं समारोप्यैव, न माणवकार्थतया ।

---

१. वर्ती B ।

अधिगतमेवारोप्यते नानधिगतं वस्तु गृह्यते। सोऽयमित्यारोपः, न तु तत्सदृश इति। आरोपविषय एव च गौणशब्दविषयः [1]आरोपरूपकल्पनानिर्मितमेवैवंविधशब्दो वक्तीति खपुष्पादिप्रयोगसिद्धिः। तुल्यनयात् लक्षणायामप्यारोपादेव नियतसंबन्धधीः। अतः शाब्दान्वयाभावात् न यजमानशब्दः प्रस्तरैककपालयोः स्तुत्याऽन्वितार्थः। गुणविधिरपि कार्यलक्षणया नान्यथेति[2] न मानार्हः, अशाब्दान्वयादेव। न च शक्यं यजमानकार्यं ताभ्यां तयोर्वा यजमानेनेत्युक्तं भाष्ये। न चाग्रहसमाधेः सोऽयमारोपो भवेत्, भेदग्रहण एव शब्दप्रयोगात् गौणानाम्। अर्थप्रकरणाद्यभावेपि विवक्षया नियतगुणधीरारोपादेव।

---

अतः सहप्रयोगोऽयमारोपनिमित्तक एवेत्यर्थः।

ननु आरोप्यगुणाधीनसादृश्यविशिष्टमाणवकविषयतयैव किमिति शाब्दधीर्न भवतीत्यत्राह—अधिगतमेवेति। शाब्दे ह्यारोपे शब्दवाच्यत्वेनाधिगतमेवारोप्यते तथाधिगतिश्चाग्नेरेवेति माणवकेऽग्नेरेवारोपविवक्षा। न पुनः शब्दवाच्यत्वेनानधिगतं वस्तुगुणरूपं गृह्यते। अतो न सादृश्यविशिष्टमाणवकविवक्षया माणवकविषया शाब्दधीरित्यर्थः। कथमेतदित्यत्राह—सोऽयमिति। यस्मादारोपः सोऽयमित्येव भवति शुक्तौ रजतवत् न तु तत्सदृश इति। ननु भवत्वेवंरूप आरोपः किमायातमेवंरूपशब्दानामित्यत्राह—आरोपविषय इति। गौणप्रयोगे गुणविशेषधियो विवक्षानुवर्तित्वात् गौणशब्दानामपि विवक्षानुवर्तित्वम्। विवक्षा चैक्यारोपादिति आरोपविषय एव गौणशब्दविषयः। ततश्च काल्पनिकी प्रतिभामात्रं शाब्दधीः स्यादित्यर्थः। खपुष्पादिव्यवहारान्तरप्रसिद्धिश्चोक्तप्रकारानुगुणैवेत्याह—आरोपेति। ननु यथा लक्षणायां लक्ष्यसम्बन्धिविशेषधीः तथा गौणेपि गुणविशेषधीरस्त्वित्यत्राह तुल्यनयादिति। गौणाक्षेपवल्लक्षणाक्षेपोऽप्यत्र पूर्वपक्षिणो मत इति भावः। प्रस्तुते विषये गौणाक्षेपफलं स्तुत्यर्थत्वासम्भवं दर्शयति—अत इति। तथा लक्षणाक्षेपफलं गुणविध्यसम्भवमाह—गुणविधिरपीति। अशक्यत्वादपि न गुणविधिरित्यत्र भाष्योक्तमाह—न च शक्यमिति। नन्वारोपमूलोऽयं गौणलक्षणाक्षेपः। स च प्रथमपादोक्तभेदाग्रहादेव शुक्तिरजतादाविव समाहित इति न पूर्वपक्षः शक्य इति तत्राह—न चेति। तत्र हेतुः—भेदग्रह इति। तथा अर्थप्रकरणाद्यभावेपि क्वचिद्विवक्षया नियतगुणधीरारोपनिमित्तैवेति सर्वत्रैकरूपाध्यारोपनिमित्तवशाच्छाब्दधीरित्याह—अर्थेति।

---

१. आरोपकल्पना २. M नान्यथेत्यशाब्दा

राद्धान्तस्तु अग्निपदप्रयोगनियमो हि आरोपे व्यर्थः[1]। अथाग्न्यर्थारोपं वक्तुमग्निपदं तर्हि अग्न्यर्थारोप एव व्यर्थः। अग्निगुणबोधनार्थमिति चेत्। सिद्धं तर्हि शाब्दमेव गौणत्वम्। नियतगुणधीस्तु अर्थप्रकरणाद्यनुगृहीताच्छब्दादेव। अर्थप्रकरणाद्यभावेऽपि नियतगुणधीरित्यपि[2] न, लोके विवक्षितार्थपरतैवार्थादिगम्या। वेदे विवक्षाशून्ये अर्थादिगम्यं तात्पर्यं शब्दस्यैवेति शाब्दता गौणस्य। मुख्येऽपि पाचकादौ देवदत्तादिनियतधीः इत्थमेव।

खपुष्पादिप्रयोगेऽपीयं विधा—ख-पुष्पशब्दयोरनन्वितार्थयोः सहोच्चा-

राद्धान्तस्त्विति। भवत्वेवं शब्दप्रयोगस्यारोपनिमित्तत्वसम्भावना, तथाप्यारोपेऽप्यग्न्यादिशब्दविशेषप्रयोगस्य निर्निमित्तत्वापत्तेर्नारोपनिमित्तता। न च शब्दसाधनकारोपे निमित्तवशाच्छब्दप्रयोगः अवश्यं प्रयोगश्च विशेषविषय इति कस्मिंश्चिच्छब्दविशेषे प्रयोक्तव्येऽग्निशब्दप्रयोगो जात इति शिंशपाचोद्यवदचोद्यतापातः स्वार्थसादृश्यादिनिमित्तान्तरस्य वक्तुं शक्यत्वादिति भावः। नन्वारोपनिमित्तत्वेपि अग्निशब्दार्थारोपं वक्तुमग्निपदप्रयोगनियमोपपत्तिः इति शङ्कते—अथेति। तर्हीति। अग्न्यर्थारोप एव हेत्वभावाद्व्यर्थ इत्यर्थः। अग्निगुणबोधनार्थत्वं हेतुरिति शङ्कते—अग्नीति। दूषयति—सिद्धमिति। तथासति गौणशब्दानां स्वार्थगुणवत्त्वज्ञापनपरत्वमपरिहार्यमित्यर्थः। ननु अग्निगुणेष्वन्येषु बहुषु सत्स्वपि कथमग्निशब्दात गुणविशेषधीरित्यत्राह—नियतेति। गुणविशेषधीस्त्वर्थप्रकरणादिना। न चैतावता शाब्दत्वहानिः। न हि शब्दमात्रमर्थप्रत्यायकं किन्तु अर्थप्रकरणाद्यनुगृहीतम्। अतस्तदनुगृहीतशब्दादेव गुणविशेषधीरिति न शाब्दत्वहानिरित्यर्थः। ननु अर्थाद्यभावेपि विवक्षया लोके नियतगुणधीः सा चारोपादेवेत्यपि न वक्तव्यमित्याह—अर्थेति। तत्र हेतुः—लोक इति। लोके विवक्षितार्थपरत्वस्यैवार्थादिगम्यत्वात् किमु वक्तव्यं विवक्षाशून्ये वेदे अर्थादिगम्यं तात्पर्यं शब्दस्यैवेत्याह—वेद इति।

निगमयति—इति शाब्दतेति। मुख्येऽपि विषये नानार्थशब्दानां नियतार्थवृत्तावर्थादिसहायापेक्षा प्रसिद्धेत्याह—मुख्येपीति। ननु यद्यर्थसम्बन्धेनैव सर्वत्र गौणादौ शब्दवृत्तिः नारोपनिमित्तः कथं तर्हि खपुष्पमित्यादौ अर्थाभावेपि शब्दप्रयोग इत्यत्राह—खपुष्पादीति। इयमिति वक्ष्यमाणाभिप्रायम्। तमेव प्रकारमाह—खपुष्पशब्दयोरिति। क्वचित् खशब्दं पुष्पशब्दं च निरन्तरं सहोच्चरितं शृण्वतः कस्य-

१. M राद्धान्ते व्यर्थः २. नियतधी A

रणसामान्यादन्वयस्मृत्याऽनन्वयाग्रहात् अन्वयाभिमानमपनेतुं दृढमेव केनचिदभिप्रायेण प्रयोगः। यथा खपुष्पव्यवहारः मानान्तरादसंबन्धाग्रहादवगम्यते गुरुनये एवं शाब्दतास्थितिरिह नयान्तरात्[1]। गौणमुख्याधिकरणेपि नयान्तरात् विवेकः शाब्दत्वेऽपीति चिन्त्यम्।

विवरणे तु सङ्ख्यान्तरान्वयविरोधनिरासि यदधिकरणषट्कमन्वयविरोधनिरासार्थम्। अतः अधिकरणषट्कस्य सङ्गतिद्वयम्। सिद्धोऽपि गौणोऽन्वयः इह गुणादर्शनादयुक्तः। न च कार्यतो गौणता ये यजमाना इतिवद्वाच्या। विधितो हि[2]तत्र तथा। इह कार्ये विधिरशक्य इति हृदि स्थितमेव[3]। एवं साक्षात्सङ्गतिः। अथ कथञ्चित् कार्ये विधेर्गौणोऽन्वयः तर्हि प्रसङ्गात् संगतिः। कृतश्च[4] पूर्वः पक्षः।

---

चित्प्रपत्तु: वस्तुतोऽनन्वितार्थयोरपि तयोः सहोच्चारणसामान्याच्छुक्तिरजतस्मृतिवत् अन्वयस्मृत्या अनन्वयाग्रहादन्वयाभिमानो भवति तमभिमानमपनेतुं खमात्रं पुष्पमात्रं वाऽत्रार्थः न तु स्थलकमलवदन्वितोऽर्थोऽस्तीत्येवमन्वितार्थाभावप्रदर्शनाभिप्रायेण केनचित्प्रयोक्त्रा खपुष्पप्रयोगः कृतः। अतोऽयमपि नासत्यर्थे प्रयोगः यथा खपुष्पाद्यशेषमिथ्याव्यवहारः मानान्तरादसम्बन्धाग्रहाद्गुरुनये वर्ण्यते तथा परप्रतिपत्त्यर्थशब्दप्रयोगोऽपीत्यर्थः। नन्वेवमत्र गौणवृत्तिसमर्थने गौणमुख्यनयात् किमधिकं चिन्त्यमित्याशङ्क्यात्र शब्दान्वये गौणस्य शाब्दत्वं चिन्त्यम्। तत्र तु शाब्दत्वे सिद्धे गौणमुख्ययोर्विवेक इति व्युत्पाद्यभेदमाह—एवमिति।

विवरण इति। तत्र हीदमपि विरोधाशङ्कानिराकरणायैवाधिकरणजातमित्यनेन तत्सिद्ध्याद्यधिकरणषट्कस्य सहैव सङ्गतिद्वयमुक्तमिति शेष इत्यर्थः। ननु गौणमुख्यनये गौणवृत्त्याप्यन्वयोपपत्तौ स्थितायां कथमन्वयविरोधशङ्केत्यत्राह -सिद्धोऽपीति। सत्यं सिद्धो गौणोऽन्वयः तथापीह यजमानः प्रस्तर इत्यादौ स न युक्तः प्रसिद्धगुणादर्शनादित्यर्थः। ननु ये यजमानास्त ऋत्विज इतिवत् कार्यनिबन्धना गौणतास्त्विति न च वाच्यमित्याह—न चेति। तत्र हेतुः विधितो हीति। नन्विहापि तर्हि तद्वदेव कार्यमाश्रित्य विधेर्गौणताऽस्त्विति तत्राह -इहेति। एवं चान्वयप्रतिभामात्रतया साक्षादेवाध्यायसङ्गतिरित्याह—एवमिति। कार्ये विधिसम्भवमुपेत्यापि पूर्वपक्षे प्रसङ्गसङ्गतिरित्यधिकरणावतारो घटत इत्याह—अथेति। एवं सङ्गतिकथनमुखेन पूर्वपक्ष उक्त एवेत्याह—कृत इति।

---

१. A नयात् २. A तत् ३ स्थितम् A B ४. स्मृतेश्च A B

राद्धान्तस्तु—नोपरिसादने सर्वहुते वा यजमानविधिश्शक्यः । न चाचेतनाभ्यां याजमानं शक्यम् । अतो न कार्ये विधिः । विध्यन्तरशेषत्वाच्च न विधिः, स्तुत्या यज्ञसाधनत्वसामान्यादन्वयः विधौ न तथेति अशक्यता भाष्ये । गौणवृत्त्याक्षेपात् पूर्वपक्षभ्रमो गुरुणा निरस्तः । इह तु गौणताक्षेपः गौरश्व इतिवत् न तु गौर्वाहीक इत्यत्रापि, यदि हि गुणसमुदायवाचितयाऽध्यारोपाद्वा गौणतानुज्ञानं तदैव परं सर्वगौणताक्षेपः स्यात् । न चानुज्ञानम् ।

## ॥ १३ ॥ जातिसारूप्यप्रशंसाभूमलिङ्गसमवायात् ॥ २३ ॥

---

राद्धान्तस्त्विति । कार्ये विधिस्तावदत्र न सम्भवत्येव द्विधाहि कार्ये विधिर्भवति प्रस्तरैककपालकार्ये यजमानस्य विधिः यजमानकार्ये वा तयोः । नाद्यः, उपरिसादने सर्वहुते वा यजमानविधेरशक्यत्वात् । नापि द्वितीयः, अचेतनाभ्यां याजमानस्य कर्तुमशक्यत्वात् । अतो न कार्ये विधिः । प्रस्तरे जुहूमासादयति सर्वा वा स्रुचः तथा सर्वहुतं जुहोति इति विध्यन्तरशेषत्वाच्च स न विधिरित्याह—विध्यन्तरेति ।

कथं पुनरन्वयावगतिरित्याशङ्क्य यज्ञसाधनत्वसादृश्यात् स्तुत्यान्वय इत्याह—स्तुत्येति । स्तुतिपरत्वेऽवधृते कथञ्चिदालम्बनानुसारेण यज्ञसाधनतासादृश्याश्रयणं, विधौ तु नैवमिति कार्यविधेरशक्यता भाष्योक्तेत्यर्थः । ननु भाष्यपौर्वापर्यालोचनया सामान्येन गौणवृत्त्यसम्भव एव पूर्वपक्षे उक्त इव भाति । तत्कथं विवरणे तस्यान्यथोक्तिरित्याशङ्क्य तथा पूर्वपक्षावभासो भ्रम एव । स च भाष्यं व्याचक्षाणेन गुरुणैव निरस्त इत्याह—गौणेति । गौणताक्षेपप्रकारमाह–इहेति । यदि सिंहादिशब्दानां गुणसमुदायवाचितया अध्यारोपाद्वा गौणतानुज्ञानं तदैव परं सर्वगौणताक्षेपः स्यात् । न चैतदनुज्ञातं तदाह–यदि हीति । अननुज्ञा च गुणसमुदायवचनत्वे हीत्यारभ्य किञ्चाग्निसदृशो माणवक इत्यन्तेन दीपशिखाग्रन्थेन ज्ञाता ।

## ॥ १३ ॥ जातिसारूप्यप्रशंसाभूमलिङ्गसमवायात् ॥ २३ ॥

आग्नेयो वै ब्राह्मणः ऐन्द्रो राजन्यः इत्यादि श्रुतम् तथा यजमानो यूपः आदित्यो यूप इति श्रुतम् । तथा अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वाः तथा सृष्टीरुपदधाति इति । तथा प्राणभृत उपदधातीति । तत्र चिन्ता–किमेतेषु विध्यर्थवादत्वासम्भवादनन्वितत्वेनान्वयप्रतिभामात्रतया तदन्वितचोदनानाम-

अधिकरणपञ्चकं अल्पभेदमेकदैव निबद्धम्। त्रयं गुणाप्रतीतेर्नान्वयधीरित्येतन्निरसनार्थं, विधाभेदात् भिन्नम्। द्वयं लक्षणया नान्वय इत्येतन्निरसनं विधाभेदात् कर्तुम्। नाग्नेये इयताविधेरन्वयः विध्यन्तरशेषत्वात्, गुणाप्रतीतेश्च न गौण इति शङ्का। अग्निब्राह्मणयोरेकस्थानप्रभवतया श्रुतेः संबन्धप्रतीतिः। ततश्च आग्नेयो ब्राह्मण इति संबन्धार्थतद्धितान्तसमानाधिकरणतया अत्र स्तुत्याऽन्वयः। अत्र प्रतिपदोक्ताद्देवतातद्धितात् जघन्येयं विधा गौणीवेति गौणोक्तिः।

अथ वा आग्नेयोऽग्निसम्बन्धः अयमप्येकस्थानप्रभवतया अग्निसंबन्ध इति गौणान्वयः।

सारूप्यात्। यूपे यजमानादित्ययोः गुणबोधात् विध्यन्तरशेषतया

---

प्रामाण्यमुतार्थवादतयाऽन्वयसम्भवात् प्रामाण्यमिति। नन्वत्राधिकरणपञ्चकसूचकार्थसूचकानि सूत्राण्येकीकृत्य पठतो निबन्धनकारस्य कोऽभिप्राय इत्यत्राह—अधिकरणेति। अस्फुटभेदत्वादित्यर्थः। कथं तर्हि पृथगधिकरणत्वमित्यत्राह—त्रयमिति। अन्यमन्यं परिहारमुपदर्शयितुं पृथगधिकरणं भाष्ये निरसनं कर्तुं विधाभेदाद्भिन्नमित्यर्थः। लब्ध्वां तु वस्तुबलादधिकरणं भेदेन। अतो भवनाथस्तदेव मतमनुसरति। तत्र कथमनन्वयाशङ्केत्याशङ्क्य आग्नेयोदाहरणे तावदाह—नाग्नेयेति।

राद्धान्तमाह—अग्नीति। प्रजापतिरकामयत प्रजाः सृजेयेति समुखतस्त्रिवृतं निरमिमीत इत्याद्यर्थवादे अग्निब्राह्मणयोः मुखाख्यैकस्थानप्रभवतया श्रुतेः सम्बन्धप्रतीतिः। ततश्चाग्नेयो ब्राह्मण इति सम्बन्धार्थतद्धितान्तसमानाधिकरणतया स्तुत्याऽन्वय इति सर्वत्राग्निकलिभ्यामिति ढगन्तस्य स्तुत्यान्वय इत्यर्थवादतैवास्य न्याय्येत्यर्थः।

नन्वाग्नेय इति सम्बन्धमात्रार्थतया स्तुत्याऽन्वये कथं गौणोक्तिरित्यत्राह—अत्रेति। औपचारिकी गौणोक्तिररिति यावत्। ननु प्रतिपदोक्तदेवतातद्धितस्य बलवत्त्वान्नाग्निमत्वनिर्वाह इत्यत्राह—अथवेति। अग्निसम्बन्धित्वगुणयोगान्मुख्यैव गौणोक्तिरित्यर्थः। आदित्यो यूप इत्यत्रापि प्रसिद्धगुणाबोधान्न स्तुतिः। विध्यन्तरशेषत्वादशक्तेश्च न कार्यविधिरित्यनन्वय एवेत्यन्वयविरोधमाशङ्क्य प्रसिद्धगुणाभावेऽपि यूपस्याञ्जने कृते तेजस्वितया मन्दगुणेन आदित्येन सादृश्यं सारूप्यम्। यजमानेनाप्यूर्ध्वतया गौणतया स्तुत्याऽन्वय इत्यत्राह—यूप इति। तथा अपशवोऽन्ये अश्वा इति पशुष्वेव यदपश्वभिधानं तत् पश्वन्तरकार्ये तेषां विधानादेवार्थवत् नान्यथा। विध्यन्तरशेषत्वाच्च न विधिरित्यनन्वय एवेत्यन्वयविरोधमाशङ्क्य

कार्याशक्तेश्च न विधिरित्यनन्वयः। मन्दगुणात् ऊर्ध्वतातेजस्विताभ्यां अन्वयः।

प्रशंसा। पशुष्वेव या अपशूक्तिः सा विहितस्यापि पश्वन्तरकार्ये विध्यर्था। विध्यन्तरशेषभावाच्च न विधिरित्यनन्वयः। स्तुत्याऽन्वयः। उपकाराधिक्यात् प्रशंसा।

भूमा। सृष्टिमन्त्रा बहव आम्नाताः। अल्पशोऽन्ये। लिङ्गादिष्टकोपधाने विनियोगेऽपि सृष्टीरुपदधातीति श्रुतेः सृष्टिपदवन्मन्त्रोपधेयेष्टका सृष्टिरिति साधुत्वे चिन्ता—अर्थवत्त्वाय विधिः सृष्टिलिङ्गमन्त्रोपधेयेष्टकानां तासां प्राप्तेर्वा अन्यलिङ्गमन्त्रकाः सृष्टिलिङ्गमन्त्रकाः कृत्वोपधेयाः। वचोभङ्ग्या सृष्टिलिङ्गकं कार्यमिति विधिः। तदा चान्यलिङ्गक 'एकयाऽस्तुवत' इत्यादि मन्त्राम्नानं व्यर्थम्। अतो दुर्घटो विधितयाऽन्वयः।

राद्धान्तस्तु वरं सृष्टिबाहुल्यादुपधेयतामात्रेण लक्षणया सृष्ट्य-सृष्ट्यनुवादः सृष्टिरिति हि सृष्टिमन्त्रवत्य इष्टकाः उक्ताः। तद्वानासामुप-

---

प्रशंसयापि प्रयोगोपपत्तेः स्तुत्याऽन्वयः। प्रशंसा च गवाश्वानां पश्वन्तरेभ्य उपकाराधिक्यादिति राद्धान्त इत्याह—पशुष्वेवेति। सृष्ट्युदाहरणेपि पूर्वोत्तरपक्षसौकर्यार्थं विषयशुद्धिमाह—सृष्टिमन्त्रा इति।

ननु तेषां मन्त्राणामिष्टकोपधाने लिङ्गादेव विनियोगे सिद्धे सृष्टीरुपदधातीति वाक्यं, किमर्थमित्यत्राह—लिङ्गादिति। सत्यमेवं तथापि सृष्टीरुपदधातीति श्रुतेः सृष्टिमन्त्रोपधेयेष्टकाः उपदधाति इष्टकास्वेव सृष्टिशब्दसाधुत्वम्। यथा चैतत् तथा राद्धान्ते स्फोरयिष्यते। एवं स्थिते किमनुवादत्वासंभवात् विधित्वानन्वयात् अन्वयप्रतिभामात्रं उतानुवादः स्तुत्यर्थ इति चिन्तेत्यर्थः। तत्र पूर्वपक्षमाह—अर्थवत्त्वायेति। ननु तासां प्राप्तत्वान्न विधेयतेत्याशङ्क्याऽरुच्या विधेयत्वे प्रकारान्तरमाह—तासामिति। मन्त्रान्तरस्य वा सृष्टिलिङ्गत्वेन हिरण्यमालिन इतिवद्विधिरित्याह—वचोभङ्ग्येति। एवं विधित्वे प्राप्तेऽनन्वयमुपपादयितुं तद्दूषयति—तदा चेति। राद्धान्त इति। यद्यप्यनुवादे लक्षणा तथापि वरं सृष्टिबाहुल्यादुपधेयत्वमात्रेण लक्षणया सृष्ट्यसृष्ट्यनुवादः। कथं तर्हि लक्षणात्वे अनुवादपक्षस्वीकार इत्यत्राह—सृष्टिरिति। सृष्टिमन्त्रोपधेयेष्टकाभिधाना इत्यर्थः। कथं पुनस्तदभिधानमित्यत्राह—तद्वानिति। तद्वानासामुपधानो मन्त्र इत्यस्मिन्नर्थे

धानो मन्त्र इति इष्टकासु लुक् च मतोः इति मतुब्लुक्। लुकि च वयस्या इतिवत् न यक् च्छान्दसत्वात्। न च प्राग्विधेः सृष्टिमन्त्रका इष्टका ज्ञाताः। मन्त्रलिङ्गात् ज्ञानेपि न विधिरिति न तत्सिद्धिः। न च मन्त्रविधिः मन्त्रान्तरानर्थक्यादित्युक्तम्। अतोऽनुवादः सृष्टीरिति सर्जनरूपेण स्तुत्यर्थः।

लिङ्गसमवायात्

प्राणभृन्मन्त्रवतीनां उपधानविधिरर्थवत्त्वाय पूर्ववद्दुर्घट इत्यनुवादोऽत्रापि। योगान्तरं त्वनुवादोऽपि दुर्घट इति शङ्कापनोदाय, सकृदुच्चरितसृष्टिप्राणभृत्पदयोः लक्ष्यलक्षकपरत्वं वृत्तिद्वयाधीनमयुक्तमिति शङ्का। प्राणभृल्लिङ्गका चैका तत्पदनिर्देश्यता बाह्ये न युक्ता इत्यभ्युच्चयः। तन्न। उपधानयोगितया लक्ष्यत्वे स्वार्थोऽप्यन्तर्भूत इति न वृत्तिद्वयं उपधान-

---

मतुब्विधानादित्यर्थः। नन्वेवं सति लुकि सति वयस्या इतिवत् यत्प्रत्ययेनापि भवितव्यम् सन्नियोगशिष्टत्वादित्याशङ्क्य छान्दसत्वान्न भवतीत्याह—लुकीति।

ननु भवत्वेवमिष्टकाभिधानं तर्हि ता एव विधीयन्तामित्यत्राह—न चेति। ज्ञातरूपस्य हि पदार्थस्य विधानमवकल्पते। न च सृष्टिमन्त्रवत्यः इष्टकाविधानादृते स्वरूपेण ज्ञाताः। विधितश्चेदन्योन्याश्रयापत्तिरिति भावः। ननु मन्त्रलिङ्गात् ज्ञायत इत्यत्राह—मन्त्रेति। तथा प्राप्तत्वान्न विधिरिति यावत। नन्वेवं तर्हि हिरण्यमालिन इतिवत् उपसर्जनविधिरस्तु तत्राह—न चेति। तत्र हेतुः—मन्त्रेति। नन्वेवमनुवादे वैयर्थ्यापत्तिरित्यत्राह—अत इति। प्राणभृत उपदधातीत्यत्रापि पूर्ववदेव पूर्वोत्तरपक्षावित्याह—प्राणभृदिति। नन्वेवं सति किमर्थमिदमुच्यत इत्यत्राह—योगान्तरं त्विति। कथमनुवादस्य दुर्घटत्वमित्याशङ्क्याह—सकृदिति। अत्र हि सृष्टिरित्याद्यनुवादाक्षेपः सकृदुच्चरितयोः सृष्टिप्राणभृत्पदयोः लक्ष्यलक्षणकपरत्वायोगात्। न हि गङ्गायां घोष इत्यत्र गङ्गापदं लक्षणपरं, न च वृत्त्यन्तराल्लक्ष्यपरता, सकृदुच्चरितस्य वृत्तिद्वयायोगादित्यर्थः। प्राणभृदित्ययमपरो विशेष इत्याह—प्राणभृदिति। शङ्कामनुवदति—तन्नेति। स्यादेवं यदि सकृदुच्चरितस्य वृत्तिद्वयापत्तिः इह तु उपधानयोगितया गौणस्य लक्ष्यत्वे [1]स्वार्थोऽपि लक्षणार्थ इति न सकृदुच्चरितस्य वृत्तिद्वयापत्तिरित्यर्थः। ननु बह्वीनामेकप्राणभृत्पद-

---

१, स्वार्थेऽपि लक्षणेति A

योगिता सर्वव्यापिनीति बहुष्वप्येकपदलक्ष्यतेति। दण्डिनो गच्छन्तीति लोकेऽपि सिद्धम्।

॥ १४ ॥ सन्दिग्धेषु वाक्यशेषात् ॥ २९ ॥

अञ्जनद्रव्यसंयुक्तमक्तमित्येवं पदार्थे निश्चितेपि वाक्ये अक्ता इति प्रयोगः कतमाञ्जनद्रव्यसंयुक्तपरः इत्युपादानाय विशेषापेक्षायां विशेषप्रतीतौ तद्विषयत्वं, अप्रतीतौ सामान्यस्थ एवान्तर्भूतानियतविशेषोपादानपर्यन्तम्। तत्र विध्युद्देशोपक्रमानुरोधात् सामान्यस्थः। घृतमिति च पदं स्नेहद्रव्यलक्षणया घृताघृतपरं प्राणभृन्नयात्। अथवा अर्थवादोपसंहारयोः

---

लक्ष्यत्वमयुक्तमित्यत्राह--उपधानेति। अत एव दण्डिनो गच्छन्तीति गन्तृतया दण्डचदण्डिलक्षणा लोकेऽपीत्याह--दण्डिन इति।

॥ १४ ॥ सन्दिग्धे तु वाक्यशेषात् ॥ २९ ॥

अक्ताः शर्करा उपदधाति तेजो वै घृतमिति श्रूयते। तत्र चिन्ता—किं तैलेन घृतेन पयसा वेति उपक्रमविध्युद्देशगतसामान्यश्रुतेःअनिर्धारितविशेषसामान्यतात्पर्यमाह उताकांक्षितविशेषमेव वाक्यशेषानुरोधेन घृतेनैवाञ्जनमिति विशेष इति अनध्यवसायात्सन्देहादप्रामाण्यमुत घृतेनैवेति निश्चयात् प्रामाण्यमिति। अत्र भाष्यकारः-तैलघृतपयआदीनामन्यतमेनाञ्जनं कर्तव्यमुत घृतेनैवेति अनुष्ठानगतमेव विचारयति। तदयुक्तं असङ्गतेः। कथं च पूर्वपक्षः तेजो वै घृतमित्यर्थवादे घृतश्रुतेः घृतेनाञ्जनमिति निश्चयात्। कथं च यववराहनयात् न पुनरुक्तिरित्याशङ्क्य सङ्गतिद्वयं पूर्वपक्षबीजं चाह-अञ्जनेति। यद्यप्यञ्जनद्रव्यसंयुक्तमक्तमित्यक्तपदार्थस्य निश्चितत्वेनानध्यवसायो वक्तुं न शक्यते तथापि अक्ता इति प्रयोगः घृततैलवसादिषु कतमाञ्जनद्रव्ययुक्तपर इत्युपादानायात्र विशेषाकाङ्क्षायां यत्र विशेषप्रतीतिः तत्र तत्परत्वम्। यत्र तु नैतत् तत्र च प्रयोगः सामान्यस्थ एवान्तर्भूतानियतविशेषोपादानपर्यन्त इत्यर्थः। नन्वेवमपि कथमनध्यवसाय इत्यत्राह—तत्रेति। अक्ताः शर्करा उपदधाति तेजोवै घृतं इति अक्ता इति प्रयोगः विध्युद्देशोपक्रमयोरनुरोधात् सामान्यस्थ एवान्तर्भूतानियतविशेषोपादानपर्यन्त इति भातीत्यर्थः। नन्वेवं सति कथं घृतशब्द इत्यत्राह-घृतमिति चेति। अनेनावान्तरसङ्गतिः सूचिता।

अनध्यवसायमुपपादयितुं कोट्यन्तरमाह--अथवेति। यद्यप्यर्थवादोपसंहारयोरन्यपरतया उपसञ्जातविरोधितया चाननुरोध्यतैव तथाप्यपेक्षितविशेषोपनायकघृतपदमख्यार्थत्वानुग्रहायाक्तपदं घृतपरमित्यपि भातीत्यनध्यवसाय एव।

अनन्नुरोध्यत्वेपि अपेक्षितविशेषपरः घृतश्रुत्यनुग्रहश्चेत्यनध्यवसाय इति यववराहनयापुनरुक्तिः। सङ्गतिद्वयम् पूर्वपक्षश्च! पुनरुक्तिप्रत्युक्ति-विभवोऽयं, तत्र विपर्ययनिराक्रियोक्ता निबन्धने। विवरणे तु वाक्यान्तर-स्थार्थवादात् निराक्रियोक्ता। यतः वेदो वेति नयादपि नोपक्रमश्रुत्यनु-रोधादध्यवसायः। तत्र हि उपक्रम एव विशेषधीः। न चोपसंहारे तद्विशेष-लाभः। न चोपक्रमश्रुत्यहानमिति न तत्तुल्यता। राद्धान्तस्तु विध्युद्दे-शोपक्रमयोरनुरोध एवायं यद्विशेषनिराकाङ्क्षीकरणम्। एकवाक्ये विशेषश्रुतौ तद्विशेषनिष्ठ एव सामान्यशब्दो व्युत्पन्नः सार्थवादवदेव धीश्शाब्दीत्युक्तम्। घृतपदञ्च नातिपरोक्षार्थं युक्तम्। अतो घृतेनाक्ता इत्यध्यवसायः।

---

अनेनाध्यायसङ्गतिः पूर्वपक्षश्च सूचितः। अनेन यववराहाधिकरणपौनरुक्त्यं च नास्तीत्याह—यवेति। तत्र हि पदार्थैदम्पर्यावधारणं, अत्र तु प्रयोगैदम्पर्यावधारण-मित्यपुनरुक्तिरित्यर्थः। नन्वेतत् पूर्वापरविरुद्धमुच्यत इत्यत्राह—पुनरुक्तिरिति। ननु वेदो वेति नयात् उपक्रमानुरोधेनोपसंहारवर्णनं युक्तमित्यनध्यवसायः कथ-मित्यत्राह—वेदो वेतीति। तत्र हेतुः—तत्रेति। तत्र हि उपक्रम एव वेदशब्दात् ब्राह्मण-वाक्यविशेषधीः निरपेक्षवित्तिकरणार्थत्वाद्वेदशब्दस्य। न चोपसंहारे तादृश-विशेषलाभः। नात्रोपसंहारानुरोधेनोपक्रमश्रुत्यर्थहानं अक्तशब्दस्याञ्जनसाधन-द्रव्ययुक्तमात्रार्थत्वात्। तत्र तु उपक्रमस्थवेदशब्दस्य उपसंहारानुरोधे मुख्यार्थत्वं नास्तीत्यतुल्यविषयतया नात्र वेदोपक्रमनयप्रसर इत्यर्थः।

राद्धान्तस्त्विति। स्यादेतदेवं यद्यर्थवादोपसंहारानुरोधे विध्युद्देशोपक्रमयो-र्विरोधः स्यात्। इह तु अर्थवादोपसंहाराभ्यां विध्युद्देशोपक्रमयोरपेक्षितविशेषो-पस्थापनेन निराकाङ्क्षीकरणात् तयोरनुरोध एव न बाध इत्यर्थः। ननु अन्तर्भूता-नियतविशेषेण सामान्यश्रुतेर्निराकांक्षीकरणान्न तदर्थमर्थवादापेक्षेत्यत्राह—एक वाक्य इति। सत्यं विशेषाश्रुतौ तथा, यत्र तु श्रुतवाक्य एव विशेषश्रुतिः तत्र सामान्यशब्दस्तद्विशेषनिष्ठ एव लोके व्युत्पन्नः। अतः सम्भूयकारितान्वयव्युत्पत्तेः सार्थवादकादेव विध्युद्देशात् शाब्दधीरित्युक्तमर्थवादनये। नन्वर्थवादस्थघृतपदस्य घृताघृतपरतोक्तेत्यत्राह—घृतपदं चेति। ननु स्तुतिपरत्वादर्थवादस्य कथं विशेष-परतेत्यत्राह—अत इति। यतः सामान्यश्रुतिः विशेषश्रुतौ तत्पर्यवसितैव अतो वाक्य-शेषबलात् घृतेनाक्ता इत्यध्यवसायः। ततश्च स्थितं प्रामाण्यमित्यर्थः।

## ॥ १५ ॥ अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

यदि वाक्यशेषाद्विशेषपरता तदभावात् सर्वस्य सर्वावदानं शास्त्रात् । न च तथानुष्ठानशक्तिरिति किं यथाशक्त्यनुष्ठानं, उत यथाशास्त्रमिति अनध्यवसायात् अनुष्ठानसन्देहात् अनुष्ठानाक्षेपपर्यन्ते शास्त्रार्थे सन्देहः, नतु यथाशक्त्यनुष्ठानं विपर्यस्तं ततश्चेत्थमेव सन्दिग्धं अस्ति नास्तीति ।

---

## ॥ १५ ॥ अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

हस्तेनावद्यति स्रुवेणावद्यति स्वधितिनाऽवद्यतीति श्रुतम् । तत्र सन्देहः किं पुरोडाशस्याज्यस्य मांसस्यावदाने सर्वस्य हस्तादेः सर्वत्र सम्बन्धः, अथवा सामर्थ्यात् कस्यचित् क्वचिदिति । नन्वयं भाष्यकारीयो विचारः प्रमाणलक्षणे न युक्तः विनियोगानुष्ठानयोरन्यतरपरत्वात् । नाप्यवान्तरसङ्गतिः । प्रसङ्गाभावात् । कथं च पूर्वपक्षः अश्रुताया अपि शक्तेरनुष्ठानार्थमधिकारिविशेषणतया स्वीकारात् यथाशक्ति व्यवस्थयैवानुष्ठानस्य युक्तत्वादित्याशङ्क्य अवान्तरसङ्गतिपूर्वकमध्यायसङ्गत्यनुगुणसंशयोपन्यासमुखेन पूर्वपक्षमाह—यदीति । यदि सन्दिग्धे वाक्यशेषान्निर्णयः इह तर्हि वाक्यशेषाभावात् सर्वस्य पुरोडाशादेः सर्वैः हस्तादिभिरवदानं कर्तव्यमिति शास्त्राद्भाति अवदानमात्रश्रुतेः, सर्वत्रावदेयविशेषाश्रुतेश्च । न च तथाऽनुष्ठानशक्तिः, हस्तेन स्वधितिना च द्रवद्रव्यस्यावदानमशक्यम् । स्रुवेण संहतकठिनयोः । अतः किं यथाशक्त्यनुष्ठानं किं वा यथाशास्त्रमिति अनुष्ठानसन्देहात् शास्त्रार्थसन्देह इत्यर्थः ।

ननु शास्त्रमनुष्ठानफलम् अतः फलसन्देहेऽपि न पूर्वभाविशास्त्रे प्रामाण्यसन्देहः अनुमानादाविवेत्यत्राह–अनुष्ठानाक्षेपेति । सत्यं सिद्धानुशासने अनुमानादौ फलसन्देहेपि न प्रामाण्यसन्देहः अत्र त्वनुष्ठानशासने शासनीयानुष्ठानसन्देहे शास्त्रमेव सन्दिग्धम् अनुष्ठानाक्षेपपर्यन्तत्वाच्छास्त्रार्थस्य । नन्वयं सन्देहो न युक्तः अनुष्ठानस्य शक्त्यनुरोधेन व्यवस्थितत्वेनाध्यवसितत्वादित्यत्राह–न त्विति । अत्र सन्देहस्य प्रकृतत्वात् विपर्यासोऽध्यवसायः । तेनायमर्थः न त्वनुष्ठानं यथाशक्ति शक्यम् । तद्विपर्ययस्तद्रूपशक्तेः सामर्थ्यरूपायाः अनियामकत्वात् । शब्द एव हि शाब्दमनुष्ठानं नियन्तुं क्षमः सम्भूयकारितयाऽन्वयव्युत्पत्तेः । सामर्थ्यस्य च लौकिकत्वेनालौकिकनियोगसम्बन्धिन्यनुष्ठानेऽप्रभुत्वाच्च । यत एव शक्तिरनियामिका शास्त्रं च न शक्यार्थबोधकं ततश्चानुष्ठानमित्थमेव सन्दिग्धमस्तिनास्तीत्येतत्फलम् यदा किं यथाशक्त्यनुष्ठानं किं वा यथाशास्त्रमित्यनुष्ठानानध्यवसायस्तदाऽनुष्ठानं नास्ति । यदा तु शक्तितो व्यवस्थयाऽध्यवसायस्तदाऽनुष्ठानमस्ति । अतो-

अथवा सर्वं सर्वेणावदेयं अनुग्राहकद्रव्यान्तर्भावात् शक्तितो वा केनचित् किञ्चिदिति सन्देह इति सङ्गतिद्वयम् । पूर्वपक्षश्च ।

राद्धान्तस्तु स्वरूपमात्रश्रुतेर्नानुग्राहककल्पना योग्यान्वयव्युत्पत्तेः शक्तितो व्यवस्थितोऽन्वयः शास्त्रार्थः । अतो विधिचिन्तया प्रथमपादे, अर्थवादमन्त्रस्मृतिनामधेयानामनुष्ठानतः पादत्रयेपि स्थापितं प्रामाण्यं तस्य निमित्तपरीष्टिरिति यत्प्रतिज्ञातम् ।

इति श्री महामहोपाध्यायभवनाथमिश्रविरचिते नयविवेके
प्रथमाध्यायस्य चतुर्थः पादः ।

इति प्रथमोध्यायः समाप्तः ।

---

ऽनुष्ठानानध्यवसायात् शास्त्रानध्यवसाय इत्यर्थः । ननु अशक्यानुष्ठानबोधकत्वं शास्त्रस्य न युक्तमिति कोटयन्तरमनुन्मिषितमेवेत्यरुच्या पक्षान्तरमाह-अथवेति । अनुष्ठानस्यानुग्राहकान्तर्भावान्न शक्तेस्सर्वथा तिरस्कार इत्यर्थः ।

राद्धान्तस्त्विति । स्रुवेणावद्यतीत्यादौ स्रुवादिस्वरूपमात्रश्रुतेर्नानुग्राहककल्पना। अतः शास्त्रस्य शक्याशक्यसकलानुष्ठानबोधकत्वायोगात् यथाशक्त्यनुष्ठानमध्यवसितमेव । ननु शक्तेरशाब्दस्वरूपतया न शाब्दानुष्ठाननियामकत्वमित्यत्राह— योग्येति । अशाब्दस्वरूपत्वेपि शक्तेरन्वयहेतुत्वं लोकसिद्धयोग्यान्वयव्युत्पत्तेः । अतः शक्तिसाहचर्यात् शास्त्राध्यवसितोऽन्वयः । अतः संहतस्यावदाने हस्तः द्रवद्रव्यस्य स्रुवः कठिनस्य स्वधितिः । अतः शक्तितोऽध्यवसितार्थं शास्त्रमिति स्थितं प्रामाण्यमित्यर्थः । अध्यायार्थमुपसंहरति—अत इति ।

इत्थं त्रिपाद्यां भवनाथभावनिरन्तराभ्यासनिरस्तमोहः ।
प्रकाशयन् दीपिकयानवद्यमभीष्टदाय्यत्रिकुलोत्थवर्यः ।

इत्यात्रेयसुदर्शनाचार्यशिष्यस्य श्रीरङ्गराजाध्वरिसूनोः
श्रीवरदराजस्य कृतौ नयविवेकदीपिकायां
प्रथमाध्यायस्य चतुर्थः पादः समाप्तः

इति प्रथमोऽध्यायः समाप्तः ।



# श्री नयविवेके द्वितीयाध्यायस्य

## प्रथमः पादः

।१। भावार्थाः कर्मशब्दास्तेभ्यः क्रियाप्रतीयेतैष ह्यर्थो विधीयते ।१।

द्वितीयेन द्वितीयेन निबन्धेन निबध्यते ।
यत्तदेव भवेनाद्य निरवद्यं निगद्यते ॥

---

## प्रथमः पादः

वागीशो यस्य वदने यस्य लक्ष्मीश्च वक्षसि ।
यस्यास्ते हृदये संवित् तं नृसिंहमजं भजे ॥ १ ॥

प्रणमदमरमौलिश्रेणिरत्नप्रभाभिः विकसितपदपद्मं पद्मयाऽनन्तयापि ।
सह समुपनिविष्टं पद्मपीठे हयास्यं निखिलविषयबोधोत्पादहेतुं नमामः ॥ २ ॥

विद्वदग्रिममुदग्रवैभवं तं सुदर्शनगुरुं वयं नुमः ।
यत्प्रसादलवतो गुरोर्मते शिष्यवर्ग इह सर्वतोऽधिकः ॥ ३ ॥

रचयति वरदार्यो दीपिकां शास्त्रभेदे महितनयविवेकद्योतिनीं तीक्ष्णमेधाः ।
गुरुणि गुरुमतेऽपि ज्यौतिषे शासनेपि प्रथितविमलकीर्तिर्वैद्यके शब्दशास्त्रे ॥ ४ ॥

टीकाकृतैव शास्त्रभेदलक्षणं सम्यगभिहितमिति स्वकृतिवैयर्थ्यमाशङ्क्याह–द्वितीयेनेति । द्वितीयेनाध्यायेन द्वितीयेन निबन्धेन यन्निबध्यते तदेव भवेन निरवद्यं परापादितदोषवर्जितं निगद्यत इत्यक्षरयोजना । द्वितीयेननिबन्धेनेत्येकं पदम् द्वितीयश्चासौ इनश्च द्वियेनः द्वितीयप्रभाकर इति यावत् । यथाऽसौ दिवि द्योतमानः प्रभाकरः स्वकिरणैः बाह्यमन्धतमसं निरस्यति तथा अयमपि कर्ममीमांसामार्गे द्योतमानः स्वोक्तिभिरान्तरं तमोऽपनुदतीति प्रभाकरसाम्यम् । निबध्नातीति निबन्धः पचाद्यच् निबन्धनकार इति यावत् । द्वितीयेनश्चासौ निबन्धश्चेति विशेषणसमासः तेन । यद्वा द्वितीयेन निबन्धेनेति पदद्वयम् । निबन्धो निबन्धनटीका तस्याः विवरणटीकापेक्षया द्वितीयत्वम् । टीकाकारो हि प्रथमं विवरणटीकां कृत्वा पश्चन्निबन्धनटीकां कृतवानिति किंवदन्ती । द्वितीयेनाध्यायेन द्वितीयेन निबन्धेन निबन्धनटीकया यन्निबध्यते तदेव भवेन निरवद्यं निगद्यत इति श्लोकार्थः इति ।

प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमिति भाष्यम्। तदेव निबन्धने व्याख्यातं "यथा प्रमाणं शब्दस्तथोक्तमित्यर्थः" इति। तद्विवृतं ऋजुविमलायां "येन प्रकारेणानपेक्षत्वाख्येन शब्दः प्रमाणमिति[1] लक्ष्यते तदनपेक्षत्वं प्रमाणलक्षणं वृत्तं" इति। तदयुक्तम्—अनपेक्षत्वमेव तर्हि कीर्तितं नाध्यायार्थभूतं प्रामाण्यम्। अथानपेक्षत्वमेव शास्त्रभेदं प्रति हेतुः तदाह—अतोऽनपेक्षत्वसव्यपेक्षं भेदाभेदकथनमिति; एवं तर्हि समानहेतुकत्वमध्यायार्थयोः न हेतुहेतुमद्भावः। मैवम्। अनपेक्षत्वप्रकारकमेव

---

यद्यपि विवरणोक्तमप्यत्र वक्ष्यते तथापि निबन्धनप्राधान्यार्थेयमुक्तिः। निबन्धनस्यापि शिष्यप्रशिष्यपरम्परया वर्तमानत्वान्निबध्यते इति वर्तमाननिर्देशः। यद्वा द्वितीयेनाध्यायेनाद्वितीयेन प्रथमेन सख्येनेति यावत्। नञः सुबन्तान्वये नित्यं समास इति कात्यायनोक्तेरसद्वादित्वेन हेयत्वात्। अनेकमित्यर्थे नैकमितिवत् अद्वितीयेनेत्यर्थे न द्वितीयेनेत्यपि साधुः। तेनायमर्थः द्वितीयेऽध्याये अद्वितीयेन निबन्धेन यन्निबध्यते तदेव निरवद्यं भवेन निगद्यत इति परापादितावद्यनिराकरणमपि ग्रन्थकरणे प्रयोजनमिति भावः।

## भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते।१०।

अत्र वृत्तवर्तिष्यमाणयोरध्याययोः सम्बन्धकथनार्थं वृत्ताध्यायार्थकीर्तनपरभाष्यानुवादपूर्वकं तद्व्याख्यापरां टीकामनुभाष्य तद्विवरणपरां पञ्चिकामनुभाषते—प्रथम इति। लक्ष्यते येन तल्लक्षणं प्रमाणस्य लक्षणं प्रमाणलक्षणम्। अयमर्थः। येनानपेक्षत्वाख्येन प्रकारेण शब्दः वेदः प्रमाणमिति लक्ष्यते तदनपेक्षत्वं वृत्तमिति। अत्र हि अध्याय इत्युपात्तत्वात नान्यत्रेव लक्षणशब्दोऽध्यायपरम्। आक्षिपति—तदयुक्तमिति। एवं वेदे[2]ऽनपेक्षत्वमेव तर्हि कीर्तितं नाध्यायार्थः प्रामाण्यमेवाध्यायार्थो नानपेक्षत्वमित्यर्थः। ननु वर्तिष्यमाणाध्यायार्थं शास्त्रभेदं प्रति अनपेक्षत्वस्यैव हेतुत्वात् तत्कीर्तनमुचितम्। तदुक्तं ग्रन्थे अनपेक्षत्वसव्यपेक्षं भेदाभेदकथनमिति शङ्कते—अथेति। एवं तर्हीति। एवं तर्हि अनपेक्षत्वं प्रामाण्ये शास्त्रभेदे च हेतुरिति समानहेतुकत्वमध्यायार्थयोः नान्योन्यहेतुहेतुमत्तेत्यर्थः। समाधत्ते—मैवमिति। प्रमाणलक्षणं वृत्तमिति यद्वृत्तकीर्तनं तन्नायुक्तमिति सप्रकारस्यैव प्रामाण्यस्य शास्त्रभेदहेतुत्वात्। न हि व्यवहाराविसंवादित्वेन अनुभूतित्वेन वा यत्प्रामाण्यं तत् शास्त्रभेदहेतुः किन्त्वनपेक्षत्वप्रकारमेव। यद्यप्यविसंवादित्वेन प्रामाण्यमनभ्युपगतं तथापि तन्न शास्त्रभेदहेतुरिति तथोक्तिः। अनुभूतित्वं तु स्वानुमतमपि न

---

१. R शाब्दं प्रमाणं    २. A चेद

प्रामाण्यं शास्त्रभेदे हेतुः नाविसंवादादिप्रकारकं प्रामाण्यमिति। यस्माच्छब्दैकसमधिगम्यसाध्यानुबन्धभेदनिबन्धनोऽत्र शास्त्रभेदः। तच्च शब्दैकसमधिगम्यत्वमनपेक्षत्वप्रकारकप्रामाण्य[1]निबन्धनम्। अतः प्रकारापन्नप्रामाण्यस्य हेतुत्वात् प्रकारभूतानपेक्षत्वकीर्तनमुखेन सप्रकारोऽध्यायार्थ एव हेतुत्वेन कीर्तितः। तदागमन्यायेनानपेक्षत्वसव्यपेक्षं भेदाभेदकथनमित्याह[2]। अतोऽध्यायार्थस्यैव कीर्तनं हेतुत्वञ्च युक्तम्। दार्ढ्यार्थं वा वाक्यार्थभूतं प्रामाण्यम्। सहेतुकोऽध्यायार्थः स्मारितः।

नन्वनुबन्धभेदद्वारेण शास्त्रार्थीभूतनियोगभेदप्रतिपादनक्षमत्वलक्षणः

---

तन्मात्रस्य हेतुत्वमिति वक्तुमुक्तम्। अतः सप्रकारप्रामाण्यसिद्ध्यर्थं प्रकारभूतानपेक्षत्वमपि पूर्वत्र वृत्तम्। प्रकारसिद्ध्यर्थं विध्यर्थवादादितरत्वनिर्णयः। अतः सप्रकारस्य प्रामाण्यस्य हेतुत्वकथनार्थं तथाकीर्तनमित्यर्थः।

ननु शास्त्रभेदे किमिति सप्रकारस्यैव प्रामाण्यस्य हेतुत्वमित्यत्राह-यस्मादिति शब्दैकसमधिगम्यसाध्यानुबन्धभेदाद्धि शास्त्रभेदः। तत्र न सापेक्षशब्देन; (शब्दादेव) परं साध्यानुबन्धभेदप्रमितिः किन्तु मानान्तरादपि। तत्र यदि न मानान्तरमस्ति तदा न साध्यानुबन्धभेदज्ञानम्। अथास्ति तथाप्यनुवादत्वात् न शास्त्रात्तज्ज्ञानम्। अतः साध्यानुबन्धभेदस्य शब्दैकसमधिगम्यत्वाय सप्रकारप्रामाण्यस्यैव हेतुत्वमित्यर्थः। नन्वेवमपि प्रकारि प्रामाण्यमेव कीर्त्यम्। किं प्रकारमुखकीर्तनेनेत्याशङ्क्योपसंहरति—अत इति। यत एवमनपेक्षत्वप्रकारकमेव प्रामाण्यं शास्त्रभेदहेतुः अतः प्रकारमुखेनाध्यायार्थस्यैव कीर्तनं हेतुत्वेन न प्रकारिमात्रस्य। यद्यपि प्रकारमात्रस्यैव प्रमाणलक्षणपदेन विशेष्यतया कीर्तनं तथापि प्रधानत्वात् प्रकारिणः तस्यैवाध्यायार्थतया वृत्तत्वं हेतुत्वम्। अप्रधानप्रकारभूतानपेक्षत्वस्य तु तद्द्वारेणैव शास्त्रभेदहेतुता। अतः प्रकारमुखेन कीर्तनमित्यर्थः। ननु तर्हि कथं ग्रन्थेऽनपेक्षत्वसव्यपेक्षं भेदाभेदकथनमित्युक्तमित्यत्राह—तदागमेति। साधितमर्थमुपसंहरति—अत इति। अनुद्भूतसंस्कारशिष्यस्मृतिदार्ढ्यार्थं हेतुकीर्तनमिति प्रकारान्तरमाह-दार्ढ्येति। प्रकारायत्तसिद्धित्वात् प्रकारिणः प्रकारस्य हेतुत्वं वेद्यम्। अत्र ग्रन्थे साध्यानुबन्धभेदाभ्यां शास्त्रभेद इत्युक्तम्। तदाक्षिपति—नन्विति। शास्त्रभेदो हि भिन्नासन्निकृष्टार्थप्रतिपादनक्षमत्वम्। स च शास्त्रार्थीभूतानुबध्यमाननियोगभेदकानुबन्धभेदात् शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयात्मकप्रमाणषट्कापादिताद्युक्तः। न

---

1. A प्रमात्व    2. B मित्युक्तम्

शास्त्रार्थभेदो युक्त एव। साध्यभेदात्तु न शास्त्रार्थीभूतनियोगभेदप्रतिपादनक्षमतेति न तन्निमित्तकः शास्त्रभेदो युक्तः ।मैवम्। अधिकारनियोग एव हि परमशास्त्रार्थीभूतः तथापि यथोत्पत्तिनियोगशास्त्रमवान्तरशास्त्रतया भिद्यते तथा साध्यशास्त्रमपीति तदप्यध्याये व्युत्पाद्यम्। व्युत्पादितं चोत्पत्त्यादिसाध्यभेदेन शास्त्रस्य भिन्नत्वमाघाराग्निहोत्रा-

---

साध्यभेदात्। साध्यं हि उत्पत्त्याप्तिविकृतिसंस्कृतिकरणोपकारकरणावान्तरव्यापाराधिकाररूपेण सप्तविधम्। न च सप्तविधसाध्यभेदादपि शास्त्रार्थीभूतनियोगभेदप्रतिपादनक्षमतेति न साध्यभेदाच्छास्त्रभेदो युक्त इति भावः।

मैवमिति। यथाऽधिकारनियोगस्यैव परमशास्त्रार्थत्वेऽपि आग्नेयप्रयाजादिकरणाङ्गोत्पत्तिनियोगशास्त्रं अवान्तरशास्त्रतयाऽन्योन्यं भिद्यते। परमशास्त्रापेक्षया तु एकशास्त्रत्वमेव। तथाऽवहन्तीत्यादिसाध्यशास्त्रमपि। स्वतन्त्रकार्याप्रतिपादकत्वं तु द्वयोः समानमेव। अतः साध्यभेदादपि शास्त्रभेदोऽध्यायप्रतिपाद्यो युक्त इत्यर्थः।

कुत्र किं व्युत्पादितमिति भेदेन दर्शयति—व्युत्पादितं चेति। यद्यप्याघाराग्निहोत्राधिकरणे द्रव्यादिविधिव्युत्पत्तिः नतु उत्पत्त्यादिसाध्यभेदात् शास्त्रभेदव्युत्पत्तिः। अत एव तत्रापवादकतयाऽध्यायसङ्गतिरुक्ता। तथापि तत्र पूर्वपक्षे द्रव्यविध्यभावेद्र व्यार्थत्वेन संस्कारविध्ययोगात् उत्पत्त्यादेः न साध्यत्वम्। राद्धान्ते तु द्रव्यविधौ सति साध्यत्वमित्यर्थात् द्रव्यविधिव्युत्पत्तिमुखेन साध्यत्वव्युत्पत्त्या तत्तद्भेदाधीनशास्त्रभेदोऽपि व्युत्पादित एव। न च द्रव्यविध्यभावेऽपि तण्डुले पेषणविधिवत् क्रियाविधिर्वाच्यः। यतोऽन्यत्र सिद्धायां विधिसामग्र्यां विधिस्पर्शमात्रेणागत्या तण्डुले पेषणविधिः। आघाराग्निहोत्राधिकरणपूर्वपक्षे तु न द्रव्यविधिरिति[1] तण्डुलवत् विधिस्पर्शमात्रं न संस्कारविधिसिद्धिः साध्यभेदाधीनशास्त्रभेदस्य साक्षाद[2]व्युत्पत्तेरपवादकतया सङ्गत्युक्तिः।

यद्वा ददाति जुहोतीत्यादौ तावत् नियमादृष्टमाघाराग्निहोत्राधिकरणव्युत्पाद्यं द्रव्यविध्यभावे तदयोगात्। ततश्च तदनुविद्धसाध्यभेदस्य शास्त्रभेदकत्वमपि तत्रैव व्युत्पाद्यम्। अस्यार्थस्य क्वचित्तन्न्यायमूलत्वात् तत्समानन्यायतयोत्पत्त्यादिभेदस्यापि शास्त्रभेदकत्वमर्थात् तत्रैव व्युत्पादितं भवति। सामान्यन्यायश्च यथा नियमादृष्टस्यानियोगात्मकस्यापि नियोगीयतया शास्त्रार्थत्वात् तद्भेदस्यावान्तरशास्त्रभेदकत्वं तथा उत्पत्त्यादिसाध्यभेदेपीति। एतच्चानन्तरं

---

१. A न संस्कारविधिरिति २. A दप्युत्पत्ते

धिकरणे । करणेतिकर्तव्यतासाध्यशास्त्रभिन्नत्वं तु पौर्णमास्यधिकरणे । अधिकारशास्त्रसाध्यशास्त्रभिन्नत्वं तु यावज्जीवमित्यत्र । यथाहि उत्पत्त्यपूर्वमपूर्वत्वेऽपि अधिकारापूर्वानुगुणतया भिद्यमानं स्वशास्त्रं भिनत्ति न स्वातन्त्र्येण, एवं साध्यमपि परमापूर्वानुगुणतया भिद्यमानं सर्वं शास्त्रं भिनत्तीति युक्तम् ।

नन्ववहन्त्यादिषु शास्त्रार्थीभूतावघातादिभेदादेव तच्छास्त्रभेदो युक्तः । मैवम् । स्वतः कार्यपरत्वं हि शब्दानां स्वार्थप्रतिपादनं व्युत्पन्नं; न चावघातादि स्वतः कार्यम् । अतोऽवहन्तीत्यादि[1] स्वतः कार्यानुगुण-

स्फोरधिष्यते । उत्पत्त्यादि तु तत्र उद्देश्यगततयैवाभिप्रेतम् । अत एव करणेतिकर्तव्यताशास्त्रयोरुत्पत्त्यादावनन्तर्भावः । एतच्चान्यत्र सिद्धमिह सुखग्रहणार्थमिति वेदितव्यम् ।

ननु युक्तमुत्पत्तिनियोगशास्त्रस्य शास्त्रत्वम् अपूर्वरूपकार्यप्रतिपादकत्वात् अपूर्वभेदाच्च शास्त्रभेदोऽपि युक्तः उत्पत्त्यादेस्तथात्वाभावात् कथं तत्प्रतिपादकतया शास्त्रत्वं ? कथं वा तद्भेदाच्छास्त्रभेद इत्यत्राह—यथाहीति । न हि उत्पत्त्यपूर्वमपूर्वत्वेपि स्वतः शास्त्रार्थः अनधिकारविधित्वेन स्वतोऽननुष्ठेयत्वात् किन्तु परमापूर्वानुगुणतयैव । अतो यथोत्पत्त्याद्यपूर्वं परमापूर्वानुगुणतया भिद्यमानं शास्त्रं भिनत्ति न स्वातन्त्र्येण तथा उत्पत्त्यादि साध्यमपीति युक्तस्तद्भेदादपि शास्त्रभेदः । एतेन यदुक्तं श्रीकरेण यागादिकर्मभेदवत् पदार्थसाध्यकिञ्चित्कारभेदोऽपि लोकसिद्ध एवेति तन्निबन्धनशास्त्रभेदोऽप्यविचारितसिद्ध एवेति नाध्यायव्युत्पाद्यः किन्तु अनुबन्धभेदाधीननियोगभेदफलकशास्त्रभेदोऽध्यायार्थ इति तत्प्रत्युक्तं नियोगानुगुणत्वेन लोकसिद्धत्वाभावात् । नियमादृष्टभेदे च मानान्तराभावात् । ननु शास्त्रार्थभूतावघातादिभेदादेव हन्त्यादिशास्त्रभेदो युक्तः शासनीयभेदपूर्वकत्वाच्छास्त्रभेदस्येति चोदयति—नन्विति ।

मैवमिति । स्यादेतदेवं यदि अवघातादेः शास्त्रार्थता स्यात् । किन्तु यदेव स्वतः कार्यं तत्प्रतिपादनपरत्वं हि सर्वशब्दानां व्युत्पन्नम् । न चावहन्त्यादेः स्वतः कार्यता इति न तस्य शास्त्रार्थतेत्यर्थः । नन्वेवं स्वतः कार्यत्वमधिकारापूर्वस्येति तत्प्रतिपादकमेव वाक्यं स्वतः कार्यपरं स्यात् नान्यत् । अतो हन्त्यादिवाक्यस्य कथं कार्यपरतेत्यत्राह—अत इति । हन्त्यादेः स्वतः कार्यपरत्वाभावेपि स्वतः कार्यरूपपरमापूर्वानुगुणं यत्तस्य कार्यं तदादायावहन्त्यादेः, कार्यपरता । नन्वेवमवान्तरकार्यद्वारा

1. हन्त्यादि

द्वारकार्यमादाय कार्यपरम्। अतो द्वाररूपावान्तरकार्यं शास्त्रार्थमव-हन्तीत्यादि अवान्तरशास्त्रं युक्तम्। यच्च शास्त्रं यच्छास्त्रानपेक्षं स्वसाध्यप्रतिपादकं तत्ततो भिन्नं अनपेक्षत्वेन शास्त्रत्वनियमात् नियमा-दृष्टांशभेदाच्च दधिपयसोस्साध्यभेदो दध्ना जुहोतीत्यादौ करणेति-कर्तव्यतासाध्यभेदविषयेऽप्यनपेक्षता दर्शिता पौर्णमास्यधिकरणे। अधिकाररूपसाध्यस्य च स्वतो यत्कार्यं तदनुगुणैव साध्यता अधिकार-पर्यवसायित्वात् सर्वविधीनामित्येषा दिक्।

एवंविधशङ्कापनयापेक्षं साध्यशास्त्रभिन्नत्वमिति परोक्तमचिन्तित-

---

परमापूर्वानुगुण्यं हन्त्यादेरपि इति साक्षाच्छब्दोपस्थापितस्यैव शास्त्रार्थता युक्ता तत्राह—अतो द्वारेति। यतो नियोगानुकूलकिञ्चित्कारजनकतया हन्त्यादि[1] अपूर्व-सन्निकृष्टं न स्वतः। अतः प्रथमभावित्वात् स्वतः शास्त्रार्थपरमापूर्वप्रत्यासत्तेश्च साक्षादशब्दोपात्तस्यापि द्वाररूपावान्तरकार्यस्यैव शास्त्रार्थत्वं युक्तमिति तद्भेदादेव शास्त्रभेदो न हन्त्यादिभेदमात्रादित्यर्थः।

नन्वेवं व्रीहिशास्त्रहन्तिशास्त्रयोरपि साध्यभेदाद्भेदः स्यात् हन्तेर्नियमा-दृष्टानुविद्धतुषविमुक्तिः साध्या व्रीहेर्यागनिष्पत्तिरित्यत्राह—यच्चेति। तत्र हेतुः अनपेक्षेति। ननु अनपेक्षत्वेपि न दधिपयश्शास्त्रयोर्भेदः साध्यभेदाभावादुभ-यत्रापि होमनिर्वृत्तेरेव साध्यत्वात् इत्यत्राह—नियमेति। ननु करणेतिकर्तव्यता-साध्यभेदाच्छास्त्रभेदेपि कथमनपेक्षता करणापेक्षत्वादितिकर्तव्यताया इत्यत्राह—करणेति। अधिकाररूपसाध्यभेदाच्छास्त्रभेदेपि परमापूर्वानुगुणतयैव साध्यत्वं न स्वतः अधिकारपर्यवसायित्वात्सर्वविधीनामित्याह—अधिकारेति। अधिकाररूप-साध्याभावेऽधिकृतपुरुषाभावेनानुष्ठानाभावात् अपूर्वस्यैवासिद्धिरिति तदानुगुण्येना-धिकारस्यापि साध्यता न विरुद्धेति भावः। नन्वेवं ग्रन्थोक्तसाध्यसप्तविधत्वं न स्यात् नियमादृष्टांशभेदादपि दधिपयश्शास्त्रभेदोक्तेरिति शङ्कामात्रं दिक्पद-निवर्त्यम्। निवृत्तिस्तु स्वतन्त्रावान्तरसाध्याभिप्राया तदुक्तिः। नियमादृष्टं तु उत्पत्त्याद्यवान्तरसाध्यान्तरपरतन्त्रमिति। एवं च यत्परैः यागादिकर्मभेदवत् हन्त्यादिपदार्थजन्यकिञ्चित्काररूपसाध्यभेदो लोकसिद्ध एवेति तन्निबन्धन-शास्त्रभेदोऽप्यचिन्तितसिद्ध इत्यापादितं तन्न युक्तमित्याह—एवंविधेति। ननु शास्त्रभेद एव किमित्यध्यायार्थतया स्वीकृतः? नानाकर्मलक्षणमध्यायमाचक्षत इत्यादिभाष्याद्यागादिकर्मभेदो वा प्रयत्नरूपभावनाभेदो वाऽध्यायार्थोऽस्त्वित्याक्षि-

---

[1] B हन्त्यादेः सन्निकृष्टार्थत्वं।

सिद्धत्वं हेयम्। किमिति पुनश्शास्त्रभेदोऽध्यायार्थोऽभिमतः। यद्यपि यागादिकर्मभेदस्य प्रसिद्धत्वात्प्रसाध्यत्वमयुक्तमित्युक्तम्। यद्यपि धात्वर्थसम्बन्धप्रयत्नरूपभावनाभेदोऽपि यागादिभेदवत् सुप्रसिद्धत्वान्न प्रसाधनमर्हति। तथापि शास्त्रभेदहेतुभूतसाध्यानुबन्धभेदो वा शास्त्रार्थभेदो वा किमित्यध्यायार्थो नानुज्ञातः। उच्यते। साध्यानुबन्धभेदौ तावत् भेदादेव नैकाध्यायार्थतया संभाव्येते। शास्त्रार्थभेदस्त्वेकत्वेपि फलभूत एव युक्तो नाध्यायार्थः शास्त्रभेद एव त्वध्यायार्थो युक्तः। तथाहि—भिन्नशास्त्रार्थ-

---

पति—किमिति। ननु यागादिभेदस्य लोकप्रसिद्धत्वेन प्रसाध्यतानर्हतया नाध्यायव्युत्पाद्यतेति शङ्कते—यद्यपीति। दूषयति—तथापीति। एवमपि शास्त्रभेदस्यैव नाध्यायार्थतया नियमः। साध्यनुबन्धभेदो वा शास्त्रार्थभेदो वा किमित्यध्यायार्थतया नानुज्ञायते। प्रत्युत तयोरध्यायार्थता युक्ता। चोदनालक्षणत्वात्। न चेह साध्यानुबन्धभेदयोरनेकत्वात् नैकाध्यायव्युत्पाद्यता युक्ता शास्त्रभेदहतुतोपाधिना एकप्रकारादित्यर्थः।

उच्यत इति। साध्यभेदानुबन्धभेदयोस्तावत् नैकाध्यायार्थता, भिन्नत्वात्तयोरध्यायभेदापत्तेः। न चौपादानिकचतुष्टयवत् औपाधिकैक्यादेकाध्यायार्थता। स्वत एकरूपशास्त्रभेदे सति तदङ्गीकारायोगात्। ननु तर्हि एकरूपः शास्त्रार्थभेद एवाध्यायार्थोऽस्त्वित्यत्राह—शास्त्रार्थेति। ननु शास्त्रार्थभेदस्य साध्यानुबन्धभेदयोश्च चोदनालक्षणत्वात् औपाधिकीमप्येकतामङ्गीकृत्याध्यायार्थो युक्त इत्युक्तमित्यत्राह—शास्त्रभेद एवेति। सत्यं तयोश्चोदनालक्षणत्वं तथाप्यजिज्ञासितत्वादेव नाध्यायार्थता। अचोदनालक्षणोऽपि शास्त्रभेद एवाध्यायार्थो युक्तः, प्रमाणलक्षणानन्तरं प्रमाणभूतशास्त्रभेदस्यैव जिज्ञासितत्वात् जिज्ञासाप्रसूतं च व्युत्पाद्यमिति षष्ठाध्याये वक्ष्यते। अत एव चोदनार्थविचारात्मकेऽपि शास्त्रे प्रमाणतद्भेदलक्षणयोरुपोद्घातसङ्गतिरित्यनुज्ञा। अतः शास्त्रभेद एवाध्यायार्थो युक्त इत्यर्थः। ननु शास्त्रं नाम तिङ्सुबन्तचयात्मकं वाक्यम्। तस्य च भेदो यागादिभेदवल्लोकसिद्ध एवेति न तस्याध्यायव्युत्पादनार्हतेति शङ्कामात्रमपनुदन् उपपादयति—तथाहीति। न वाक्यमात्रं शास्त्रम्। किन्तु साक्षात् परम्परया वा मानान्तरागोचरकार्यप्रतिपादकः शब्दराशिः। तद्भेदश्च भिन्नशास्त्रार्थसमर्पकः, तासां च न लोकप्रसिद्धता लोके शास्त्रस्य शास्त्रत्वानवगतेः तद्भेदानवभासनात् भेदस्य धर्मतोक्तिरनास्थया, गुरुमते तस्यैव वस्तुरूपत्वात्। यागादिकर्मस्वरूपं तु लौकिकमेवेति तद्भेदोऽपि लोकसिद्ध एव। तस्य यदपूर्वानुबन्धत्वं तस्य लोकाप्रसिद्धत्वेपि न

---

१. B साधुत्वम २. B र्थतया

समर्पकता हि शास्त्रस्य भिन्नता सा च न लोकतोऽवगता। तत्र शब्दस्य शास्त्रभावानध्यवसाने कथं तद्धर्मो भेदोऽध्यवसीयतां, अतः स व्युत्पादनमर्हतीत्यध्यायार्थः शास्त्रभेदो युक्तः। व्युत्पन्नशास्त्रशक्तेस्तु शास्त्रार्थावगतिः प्रसाधननिरपेक्षेति फलभूतैव युक्ता। यद्येवं मतान्तरेऽपि फलापूर्वभावनाभेदप्रतिपादकता शब्दस्य न लोकतो व्युत्पन्नेत्यध्यायेऽस्मिन् व्युत्पाद्यतां, फलभूता तु फलापूर्वभावनाभेदप्रतिपत्तिरास्तामिति चेत्। आस्तां मतान्तरे तथापि न दोषः। अत एव यागरूप[१]कर्मभेदो नाध्यायप्रसाध्य इत्युक्तम्। अस्मन्मते तु यद्युक्तं तदेवोक्तम्—शास्त्रभेदोऽध्यायार्थ इति।

अत्र चाद्याधिकरणमुपोद्घातेनेत्युक्तम्। तदयुक्तम्। सर्वेषां विषयत्वरूपे पूर्वपक्षे अनुबन्धभेदात् प्रतिपदं शास्त्रभेदः। राद्धान्ते तु एकोऽनुबन्धः इत्येकशास्त्रता। अतस्साक्षादेवास्य सङ्गतिरवभाति। उच्यते।

---

तद्भेदोऽध्यायार्थ इत्युक्तमेव। अतो लोकाप्रसिद्धत्वेन व्युत्पादनार्हः शास्त्रभेद एवाध्यायार्थो युक्त इत्यर्थः। ननु शास्त्रार्थभेदस्य फलत्वेनेप्सितत्वात् सुतरां व्युत्पादः स्यात् इत्यत्राह—व्युत्पन्नेति। स्यादेतदेवं यदि फलत्वं प्रयोजनतयेप्सितत्वमिति तदभिप्रेतं स्यात् तत्तु प्रसाधननिरपेक्षसिद्धत्वमेव शास्त्रार्थभेदस्य तत्त्वान्नाध्यायार्थतेत्यर्थः।

ननु त्वदुक्तसंवि[२]धानादाचार्यपादीयमतेऽपि भिन्नफलापूर्वभावनाप्रतिपादकता शब्दस्य न लोकप्रसिद्धेति सैवास्मिन्नध्याये व्युत्पाद्यताम् फलापूर्वभावनाभेदप्रतीतिस्तु फलभूतैवास्तु। मास्तु वा यागादिकर्मभेदोऽध्यायार्थ इति शङ्कते यद्येवमिति। दूषयति—आस्तामिति। एवं नामान्तरेण शास्त्रभेदस्यैवाध्यायार्थत्वाङ्गीकारेपि मतान्तरेपि न किञ्चिद्दूषणमित्यर्थः। युक्तं चैतदित्यत्राह—अत एवेति। स्वमते तु यद्युक्तं सर्वमुक्तमित्याह–अस्मन्मते त्विति। अत्र ग्रन्थोक्तमाक्षेप्तुमनुभाषते अत्र चेति। आक्षिपति–तदयुक्तमिति। पूर्वपक्षे हि सर्वेषां विधिविषयत्वेऽनुबन्धभेदान्नियोगभेदे शास्त्रभेदःसिद्धान्ते नेति शास्त्रभेदचिन्तायाः साक्षादेव अस्य संगतिर्युक्तेति नोपोद्घातत्वं युक्तमित्यर्थः।

उच्यत इति। सत्यं सर्वविधिविषयत्वपूर्वपक्षे हि अनुबन्धभेदाच्छास्त्रभेदः स तु नैतदधिकरणाधीनः एतस्य [३]साक्षादन्वयित्वमात्रोपक्षीत्वात्। ननु किमधी-

---

१. काल २. संविधानक्रमेण। ३. B विषयत्वयोग्यता

सत्यमनुबन्धभेदात् शास्त्रभेदः, स तु नैतदधिकरणाधीनः। किन्तु एवंजातीयकैरधिकरणैः [1]विषयत्वायाधिष्ठानविशेषे निरूपिते [2]शब्दान्तराधिकरणादिभिः विषयभावभेदनिरूपणात् शास्त्रभेदसिद्धिः। एवं च शब्दान्तराधिकरणादय एव साक्षात् सङ्गच्छन्ते। आद्यप्रभृतीनि तु शास्त्रभेदचिन्तौपयिकतया उपोद्घातेनेति।

केचित्पुनरेवमुन्नयन्ति। गुणप्रधानभूतपदार्थप्रतिपादकपदकदम्बात्मकस्य शास्त्रस्य भेदोऽध्यायार्थः। आद्ये तु तुल्यरूपपदार्थजातप्रतिपादकशास्त्रभेदः प्रतीयत इति (न) साक्षात्सङ्गतिरिति। तन्न। अनुबन्धभेदा-

नता तर्हि तस्येत्यत्राह—किन्त्विति। एवंजातीयकैः प्रतिपदादिविधिमन्त्रान्तैरधिकरणैः इदं विषयत्वयोग्यं इदं नेत्येवंविधविषयाधिष्ठानविशेषे निरूपिते तदनन्तरं शब्दान्तरादिभिरधिकरणैः विषयभावभेदनिरूपणेन शास्त्रभेदः साध्यते। ततः किमित्यत्राह—एवमिति। यत एवं शब्दान्तराधिकरणान्येव शास्त्रभेदपराणि अतस्तेषामेव साक्षात्सङ्गतिः। न च शब्दान्तरनयस्यैव शास्त्रभेदेव्युत्पत्तिपरता। अभ्यासादेस्तु कर्मभेदमात्रनिष्ठतेति वाच्यम्। शब्दान्तरे शास्त्रभेदे व्युत्पादिते उत्तरत्राभ्यासादौ तस्यैव जिज्ञासितत्वात्। नन्वेवं प्रतिपदाद्यधिकरणानां सङ्गतिः कथमित्यत्राह—आद्येति। यद्यपि पूर्वोत्तरपक्षयोरुभयोरपि शब्दान्तराद्यधिकरणारम्भसिद्धेर्न प्रसिद्धोपोद्घातता तथापि शास्त्रभेदस्यानुबन्धभेदाधीनत्वात् तस्यैव च विषयाधिष्ठानविशेषनिरूपणाधीनतया शास्त्रभेदचिन्तोपायत्वेनोपोद्घातता अतो लक्षणारम्भानारम्भफलत्वाभावेपि न कश्चिद्दोष इत्यर्थः।

अत्र प्रकाशेन पूर्वपक्षे यदीप्सितशास्त्रभेदाभावात् सिद्धान्ते च तद्भावात् प्रसिद्धप्रकारेणैवोपोद्घाततोक्ता तदाह—केचिदिति। तन्नेति। अनुबन्धभेदनिबन्धनशास्त्रभेदस्य गुणप्रधानभूतपदार्थप्रतिपादकत्वाभावेपि अविशेषतोऽनुज्ञानान्न तदंशे उपोद्घातता। न च साध्यभेदनिबन्धनशास्त्रभेदस्य सर्वत्र तथाविधत्वात् तदनारम्भेपि यदारिप्सिताध्यायार्थानारम्भादेकदेशद्वारा युक्तैव प्रसिद्धोपोद्घाततेति वाच्यम्। विकल्पासहत्वात्। तथाहि—गुणप्रधानभावो हि किं क्रियाकारकभावोऽभिमतः किं वा शेषशेषित्वम्? नाद्यः पूर्वपक्षेपि तस्यानपायात्। न द्वितीयः अन्यतरस्य विषयतया विषयतयान्यसमये तदप्रतीतेः। अतः पूर्वोक्तप्रकार एव युक्त इति भावः। अपरे तु शस्त्रभेदापवादोऽत्र व्युत्पाद्यः न शास्त्रभेद इति न

१. B विप्रयत्वाधि २. न्तरादिभिः

र्धानस्याऽविशेषतोऽनुज्ञानात्[1] । न च भेदापवादोऽत्रेति वाच्यम् । अपवादस्याप्यन्यत्र भेदव्यवस्थापनार्थत्वात् ।

लघ्व्यामेवमुपोद्घातताप्रतिपादनम्—प्रतिपदं विषयभावे हि शास्त्रभेद एवैको नाभेदकोटिरिति न भेदाभेदचिन्तावकाशः ।

इहाधिकरणशरीरमृजुविमलायां नियोगार्थत्वात् सर्वपदार्थानां साक्षात्सम्बन्धसम्भवे च परम्पराश्रयणानुपपत्तेः सर्वेषां नियोगविषयत्वमिति पूर्वः पक्षः ।

राद्धान्तस्तु—सर्वेषां नियोगविषयत्वे परस्परसंबन्धधीविरोधात् प्रतिपदं विषयत्वे भिन्ननियोगानुप्रवेशिनां सम्बन्धानुपपत्तेः यथा[2] विनियोगं विषयभावो न्याय्य इत्यन्यतरानुगृहीतस्यान्यतरस्य विधिविषयत्वमिति ।

अत्र पूर्वपक्षनिर्वाहार्थमरुणैकहायनीन्यायोपन्यासेन द्रव्यगुणयोरिव क्रियाकारकयोरपि सम्बन्धो दर्शितः । तदयुक्तम् । तत्र हि एक[3]क्रियान्वयात् द्रव्यगुणयोः परस्परान्वयो युक्त इति । इह तु क्रियाकारकयोर्नानानियोगान्वयान्न परस्परान्वयो युक्तः ।

---

साक्षात्सङ्गतिरित्यूचुः । तदसदित्याह—न चेति । तत्र हेतुः—अपवादस्येति । लघ्व्यामिति। वस्तुबलमते हि भिन्नान्यभिन्नानि चेति भाष्यार्जवाद्भेदाभेदचिन्ताऽस्मिन्नध्याये। न चाध्यायभेदः, अभेदप्रतियोगिकभेदस्यैवाध्यायार्थत्वात् । अत एवोक्तं भाष्ये—नानाकर्मलक्षणमध्यायमाचक्षत इति । अतोऽस्मिन् पूर्वपक्षे प्रतियोगिभूताभेदकोटचभावान्न यथारिप्सितलक्षणारम्भसिद्धिरित्युपोद्घातता अस्याधिकरणस्येत्यर्थः । अत्रोद्भिदा यजेत पशुकाम इत्यादिसाधिकारचोदनासु चिन्ता । किं क्रियापदं कारकपदं चोभयमपि साक्षान्नियोगान्वितस्वार्थैकपरं उतैकमिति। अत्र पञ्चिकोक्तौ पूर्वपक्षोत्तरपक्षावनुभाष्य तथा पूर्वपक्षे प्रतीयमानक्रियाकारकभावभङ्गमाशङ्क्य तत्परिहारत्वेनोपात्तं दृष्टान्तमपि पञ्चिकोक्तमनुभाषते आक्षेप्तुमिहाधिकरणेति ।

आक्षिपति—तदयुक्तमिति । न ह्यत्रारुणैकहायनीन्यायस्य सम्भवः, अतुल्यत्वात् । तत्र हि एकस्मिन् क्रयरूपकार्ये द्रव्यगुणयोरुभयोरप्यन्वयात् अर्थात् परस्परान्वयो युक्तः । इह तु भिन्ननियोगानुप्रविष्टयोः क्रियाकारकयोर्नार्थात् परस्परान्वयो युक्त इति नारुणान्यायः पूर्वपक्षोपपादक इत्यर्थः ।

---

१. B भेदस्याविशेषतो　　२. A यथास्वनियोगं　　३. A एकक्रिया

अत्रोच्यते । अन्यान्वयपरयोरपि तदन्वयानुगुणोऽन्योन्यान्वयो दृष्ट इत्येतावता दृष्टान्तः । न तर्हि परस्परान्वयावगमविरोधो राद्धान्तयुक्तिः । उच्यते । नानाकार्यान्वितयोर्हि क्रियाकारकयोः नानाकार्यानुमत्यनुगुणमेव परस्परान्वयित्वं वाच्यं तच्च कार्ययोर्मिलितयोः स्वपदार्थवृत्तिपरस्परान्वयपर्यन्तगमनानुमतौ सिद्ध्यति मिलितयोः स्वपदार्थयोगक्षेमकारित्वात् ।

किञ्च एकावरोधकयोर्द्रव्यगुणयोरर्थान्मिथोऽन्वयः । इहातथात्वान्नान्वय इति । अतः क्रियाकारकयोरन्वयानुपपत्ते राद्धान्तितं यथाविनियोगं विषयभावो न्याय्य इति ।

विवरणे तु गोदोहनं निदर्शितम् यद्यपि गोदोहनं केवलमेव नियोगविषयः तथापि यथा नियोगान्तरीयप्रणयनान्वयोऽपि तस्य भवति, एवमत्रापि भिन्ननियोगान्वयिनोरपि क्रियाकारकयोरन्वयो न विरुध्यत

---

अत्रोच्यत इति । न सर्वथा साम्यादरुणादिदृष्टान्तः किन्तु अन्यान्वयपरयोरपि करणविभक्त्यन्ततया क्रियान्वयपरयोरपि द्रव्यगुणयोर्यथाऽवगतक्रियान्वयानुगुणोऽन्योन्यान्वयो दृष्टः तथाऽत्रापीत्येतावता दृष्टान्त इत्यर्थः । नन्वेवं प्रतीयमानक्रियाकारकान्वयबाधो राद्धान्तयुक्तिर्न स्यादिति चोदयति—न तर्हीति । उच्यत इति । कार्यं हि स्वपदार्थयोगक्षेमकरम् । तत्र नानाकार्यानुप्रवेशिनोः नानाकार्यानुमत्यनुगुणमेव परस्परान्वयित्वम् । तच्च कार्यद्वयमेलने सति । न च कार्यद्वयं मिलित्वाऽन्योन्ययोगक्षेमकरम् । निरपेक्षकार्यद्वयस्यान्योन्यमेलने प्रमाणाभावात् । न चैकमेव कार्यं स्वपदार्थनिर्वाहाय सन्निहितसम्बन्धाक्षेपकं, तत्सन्निधेरन्यार्थत्वात् । न च प्रणयनवदन्यार्थस्याप्यन्यार्थसम्बन्धित्वं तत्परशब्दश्रवणाभावादिति विवरणराद्धान्ते निराकरिष्यमाणत्वादिति भावः । एकद्वारत्वाभावादपि नारुणादिसाम्यमित्याह—किञ्चेति । अधिकरणार्थमुपसंहरति—अतः क्रियेति । विवरणे त्विति । तस्मिन्मते गोदोहनप्रणयनदृष्टान्तेन पूर्वपक्षे विनियोगभङ्गपरिहार उक्त इति विशेष इत्यर्थः ।

ननु अन्योन्यान्वयरहितानां केवलानामेव द्रव्यगुणभावार्थानां नियोगविषयत्वेपि कथं प्रतीयमानान्वयभङ्गपरिहार इत्यत्राह—यद्यपीति । यथा गोदोहनेन पशुकामस्य प्रणयेदित्यत्र प्रणयनानन्वितकेवलगोदोहनस्य नियोगविषयत्वेपि तस्य नियोगान्तरीयप्रणयनान्वयोऽपि भवति । तथाऽत्रापि नानानियोगान्वयिनोरपि क्रियाकारकयोरन्योन्यान्वयो न विरुद्ध इत्यर्थः । अत्र गोदोहनादौ नियो-

इति पूर्वः पक्षः। अवगतनियोगान्वयस्य हि प्रणयनस्य पुनर्गोदोहनाश्रयत्वेनोपादानात् [1]अन्योन्यान्वयित्वमुक्तम्। इह तु नियोगान्वयार्थं समसमयोपात्तयोः न परस्परान्वयित्वं[2] संभवतीति राद्धान्तः। स च क्रियाविषयत्वनिर्धारणान्तः[3] वस्तुसामर्थ्यतः क्रियाश्रयत्वात् कृतेः। कृतिद्वारकं हि नियोगविषयत्वं क्रियाया एव युक्तमिति प्रपञ्चितं दीपशिखायाम्। मतद्वयेऽपि पूर्वपक्षे नानानियोगपरत्वेऽपि न वाक्यभेदः लिङादेस्तन्त्राभिधानात्। वैरूप्याभावाच्च प्राजापत्यानित्यत्र विवरणपूर्वपक्षवदित्यनुसन्धेयम्। शेषं पञ्चिकयोः सुगमम्।

---

गान्तरोक्तिः निबन्धनमताभिप्रायात्। अस्मिन् मते तु वस्तुबलात् गुणान्वितप्रकृतक्रतोरेव प्रकृतनियोगविषयत्वेन नियोगान्तराभावात्।

राद्धान्तमाह-अवगतेति। युक्तं गोदोहनप्रणयनयोः नानानियोगान्वयिनोरपि अन्योन्यान्वयित्वं नियोगान्तरीयप्रणयनस्यैव पुनर्गोदोहनाश्रयत्वेन पदेनोपादानात्। इह तु क्रियाकारकयोः स्वस्वविषयनियोगान्वयपरत्वश्रवणान्नान्योन्यान्वय[4]परत्वमिति भेद इत्यर्थः। अयमपरो निबन्धनाद्भेद इत्याह—स चेति। कथं क्रियाविषयत्वनिश्चयः तत्राह-वस्त्विति। कार्यात्मा हि विध्यर्थः कार्यं च कृतिसाध्यम्। कृतिश्च पुरुषप्रयत्नरूपा क्रियाश्रितैव सर्वप्रयत्नानामनुष्ठेयविषयत्वात्। ततः किमित्यत्राह—कृतिद्वारकमिति। नियोगविषयत्वं हि कृत्यवच्छेदद्वारा नियोगावच्छेदकत्वं, तच्च क्रियाया एव युक्तमिति क्रियाविषयत्वनिर्धारणमित्यर्थः। यथाभूतस्य कारकस्य भव्यक्रियार्थत्वं दृष्टार्थत्वं, तथा प्रतीयमानक्रियाकारकान्वयापरित्यागश्चेत्यादिना क्रियाविषयत्वनिर्धारणं दीपशिखायामेव प्रपञ्चितमित्याह—प्रपञ्चितमिति। ननु मतद्वयेपि पूर्वपक्षे सर्वेषां नियोगविषयत्वे प्रतिविषयं नियोगरूपप्रतिपाद्यभेदाद्वाक्यभेदः स्यादित्यत्राह—मतेति। तत्र हेतुः लिङादेरिति। एक एव लिङादिशब्दः सकृदुच्चारितोऽपि नानानियोगानेवाभिधत्ते तन्त्रकल्पनयेति न वाक्यभेद इत्यर्थः। वैरूप्यं हि तन्त्रकल्पनायां विरोधि। तदभावाच्च तन्त्राभिधानान्न वाक्यभेद इत्याह—वैरूप्येति। ननु युक्तं प्राजापत्येषु वैरूप्याभावात् तन्त्रकल्पना, समानद्रव्यदेवनाकयागसारूप्येण नियोगसारूप्यात्। इह तु द्रव्यगुणयोः सारूप्याभावेन तद्विषयनियोगसारूप्याभावात् विरूपतया तन्त्रता न युक्तेत्यत्राह—इत्यनुसन्धेयमिति।

अयं भावः—क्रियाकारकयोरन्योन्यान्वयाकाङ्क्षित्वेनावगतपरस्परान्वयानुरोधेनासरूपत्वेपि लिङः तन्त्राभिधानं कल्प्यते। अन्यथा वाक्यभेदे तदयोगादिति।

---

१. नात्रह्युक्तः २. न्वयपरत्वं ३. निराकरणाभिहितम् ४. B न्वयपरमिति

भावार्थाः कर्मशब्दास्तेभ्यः क्रियाप्रतीयेतैष ह्यर्थो विधीयते ॥

अत्र नैमित्तिकावस्थायां द्रव्यगुणभावार्थानां सर्वेषामेव साध्यत्वात् साध्यार्थविषयत्वाच्च नियोगस्य अविशेषेण विधिविषयसमर्पकत्वमिति पूर्वः पक्षः ।

राद्धान्तस्तु द्रव्यगुणयोर्विधिविषयत्वपक्षे क्रियायाश्च तादर्थ्ये यथा-प्रतीयमानक्रियाकारकभावावगमविरोध इति भावार्थविषयो नियोगो न द्रव्यगुणविषयः इति ऋजुविमलायामधिकरणार्थसंक्षेपः । अयं भावः—अस्तु नानाकर्मत्वेपि क्रियाकारकावस्थानुवृत्तिः । अन्वयस्तु तदवस्थया न स्यात् स्वतः साध्यलाभे च क्रियायोगात् साध्यविषयता तु युक्ता । अत्र च द्रव्यगुणशब्दयोः नामधेयावस्थायामपि भावार्थत्वेनानभिधाय-

---

## ॥ भावार्थाः कर्मशब्दाः ॥

अत्रापि ता एव उद्भिदा यजेत पशुकाम इत्याद्याः साधिकारचोदना उदाहरणम् । तत्रैतत्समधिगतं अन्यतरानुगृहीतोऽन्यतरो विषय इति । इयमिदानीं चिन्ता-किं भावार्थो विषयो द्रव्यगुणौ वेत्यनियमः उत भावार्थ एवेति । अत्र पञ्चिकोक्तं पूर्वोत्तरपक्षसंक्षेपमुपपादयितुमनुभाषते—अत्र नैमित्तिकेति । नन्वत्र पूर्वपक्षे द्रव्यगुणयोर्विधिविषयत्वे क्रियायास्तादर्थ्ये तयोस्साध्यत्वात् कर्मकारकत्वं, ततश्च कारकत्वस्यापि विद्यमानतया प्रतीयमानक्रियाकारकान्वयो घटत एवेति कथं राद्धान्त इत्यत्राह—अयं भाव इति । द्रव्यगुणयोः कर्मत्वेपि कारकावस्थानुवृत्तिरस्तु नाम तथापि न तदवस्थयान्वयः स्यात् । तस्या अनपेक्षितत्वात् अनपेक्षितत्वात्तु कर्मावस्थयैवान्वय इति क्रियाकारकावगमविरोधः स्यादित्यर्थः ।

किञ्च स्वतः साध्यरूपभावार्थस्य विषयत्वे सम्भवति न क्रियायोगात् साध्यस्य विषयता युक्ता । न चैवं यदाग्नेयोऽष्टाकपाल इत्यादौ सम्बन्धस्यापि न विधिविषयता । यतस्तत्र स्वतः साध्यभावार्थाश्रुतेः कथञ्चित् परतः क्रियानुप्रवेशात् साध्यसम्बन्धस्यापि विषयता शब्दबलमतेऽङ्गीकृता । वस्तुबलमते तु तदाक्षिप्तयागस्यैव विषयता भवत्यर्थो न भावार्थ इति प्रपञ्चितं ग्रन्थे । न चैवं गोदोहनादेरविधिविषयता स्वतः साध्यभावार्थरूपप्रणयनश्रुते (ति) रिति वाच्यम् । प्रणयनस्य गुणकर्मतया विध्यन्तरप्राप्ततया च विधिविषयत्वानर्हत्वात् तदाह—स्वतः साध्येति ।

नन्वत्र राद्धान्ते भावार्थस्यैव विधिविषयत्वे तत्समानाधिकृतानामुद्भिदादिपदानां नामत्वे भावार्थपरतया पुनर्विषयताऽऽपद्येतेत्यत्राह—अत्र चेति । स्यादेतदेवं

कत्वात् भावार्थविषयो नियोग इत्यत एव तन्निराकरणान्तमभिहितम् । तन्निराकरणपर्यन्तञ्च द्रव्यगुणविषयत्वनिराकरणसिद्धान्तावस्थापनमिति एकाधिकरणत्वम् । प्रपञ्चितं चैतद्ग्रन्थकारेण । यदा चाविशेषेण विषयसमर्पकत्वं तदाऽनध्यवसायेन नाप्रामाण्यमनुष्ठानस्याध्यवसितरूपत्वादित्युक्तम् । तत्र च प्रतिनिधानाप्रतिनिधानाभ्यां विशेषं चोदयन्ति द्रव्यगुणापचारे । तत्र केचित् समादधति । अधिकारचोदना इहोदाहरणं, नित्याधिकारचोदनासु हि प्रतिनिधिः । तत्र कालदेवताग्निमन्त्रक्रियाणामप्रतिनिधाने तदतिरिक्तस्य नित्याधिकारचोदनासु प्रतिनिधेयस्याभावात् । राद्धान्तेऽपि प्रतिनिधेरभावः पूर्वपक्षेऽपीति नानुष्ठाने विशेष इति । तत्रेदं चिन्तनीयम् ।

---

यदि नामत्वेऽपि उद्भिदादिपदैः भावार्थत्वेन क्रियाभिधानं स्यात् । न चैवं नामपदानि भावार्थतया क्रियामभिदधति । भावार्थत्वं हि पूर्वापरीभूतान्योत्पादनक्षमत्वं नामानि तु विधेयं सिद्धावस्थतया वदन्ति नान्यथा । अतो भावार्थविषयो नियोग इति साधयता द्रव्यगुणशब्दयोर्नामावस्थायामपि न विषयानु[1]वादकतेति साधितं भवतीत्यर्थः । नन्वेवमधिकरणभेदस्स्यादित्यत्राह—तन्निराकरणेति । कथं नामविषयत्वनिराकरणान्तं द्रव्यविषयत्वनिराकरणमित्यत्राह—प्रपञ्चितं चेति । नन्वविशेषेण विषयसमर्पकत्वेन पूर्वपक्षेऽनध्यवसायादप्रामाण्यं स्यादित्याशङ्क्य ग्रन्थोक्तं परिहारमाह—यदा चेति । नन्वनुष्ठानस्याध्यवसितरूपता न युक्ता यदि पक्षद्वयेऽप्येकरूपमनुष्ठानं स्यात् तदा स्यादध्यवसिता । न चात्र तथा । प्रतिनिधानाप्रतिनिधानाभ्यामनुष्ठाने विशेषात् । भावार्थस्य विषयत्वे द्रव्यगुणयोः प्रतिनिधिः तयोर्विषयत्वे तु न प्रतिनिधिरिति कथमनुष्ठानस्याध्यवसाय इति कैश्चिच्चोदितमित्याह—तत्रेति ।

अस्य चोद्यस्य प्रकाशेन समाधिरुक्तः । तमनुभाषते—तत्रेति । अत्राधिकरणे अधिकारचोदना उदाहरणम् । तत्र कामाधिकारे प्रतिनिधिर्नास्त्येव । नित्याधिकारे च प्रतिनिधौ तत्राप्यप्रतिनिधेयकालदेवतामन्त्राग्निक्रियातिरिक्तमुपपदं नास्तीति पूर्वपक्षराद्धान्तयोः प्रतिनिध्यभावान्नानुष्ठाने विशेष इत्यनुष्ठानमध्यवसितमेवेत्यर्थः । दूषयति—तत्रेति । एवं सत्यधिकरणस्यैव निष्प्रयोजनत्वापातात् । तथा सिद्धान्ते प्रतिनिधिः पूर्वपक्षे चाप्रतिनिधिरिति अपूर्वाधिकरणभाष्यविरोधाच्च

---

१. न विषयवाचकतेति

भाष्ये तावत् प्रयोजनमुक्तमपूर्वाधिकरणे यदि द्रव्यगुणशब्दा अपूर्वमुपदिशन्ति तदा द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यः यदा पूर्वः पक्षः, यदा तर्हि राद्धान्तः द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोनुष्ठातव्य इति । अतश्च प्रतिनिध्यनुष्ठाने विशेषोऽभ्युपगत आचार्येणेति वृथाऽयमुद्ग्रन्थः श्रमः । किञ्च नित्येऽपि वसन्ते वसन्ते ज्योतिषेत्यादौ ज्योतिरादिद्रव्यादेः न प्रतिनिध्यापत्तिः । किं बहुना । अतोऽन्यथा

---

कथं नानुष्ठाने विशेष इत्यर्थः । दोषान्तरमप्याह—किञ्चेति । वसन्ते वसन्ते ज्योतिषा यजेतेति नित्याधिकारचोदनायामपि ज्योतिषेति तेजोद्रव्यस्य प्रतिनिधेयस्य श्रुतेः प्रतिनिध्यप्रतिनिधिभ्यां विशेषो दुर्वारः । न च ज्योतिश्शब्दः सन्निहितं ज्योतीरूपस्तोत्रं वक्ति तच्च क्रियात्मकमिति न प्रतिनिधिरिति वाच्यम् । ज्योतिश्शब्दस्य तेजोद्रव्य एव मुख्यत्वात् । न च मुख्ये सम्भवति विधौ जघन्यवृत्तिर्युक्ता । न च तेजोद्रव्यस्य स्वर्णादेर[1]पचनीयतया यागार्थतया न विधेयार्थता । कृष्णलादिवद्विधानोपपत्तेः । न च तेजोद्रव्यवाचित्वेपि सन्निधेः गार्हपत्याद्यग्निवाचिता । तस्य प्राप्तत्वात् करणतया विध्ययोगाच्च न तत्परतेति प्रतिनिध्यर्हस्वर्णादिपरता । न चैवमुद्भिदधिकरणोक्तविरोधः । तत्र ज्योतीरूपस्तोत्रविध्युक्तेरिति वाच्यम् : यतः तत्र गुणविधिमात्रे तात्पर्यम् अतो द्रव्यगुणविधिर्वा स्तोत्ररूपगुणविधिर्वेति अनास्थया तत्र तथोक्तिः । न च ज्योतिश्शब्दस्य नामतया न द्रव्यपरतेति वाच्यम् । नामत्वस्यैतदधिकरणोत्तरभावित्वात् । अतः प्रकाशाद्युक्तरीत्या प्रतिनिधानाप्रतिनिधानविशेषचोद्यमसमाहितमित्यर्थः ।

किञ्च प्रतिनिधानार्हद्रव्याभावेपि तत्त्यागेनानुष्ठानं तथा उपकारस्यातिदेशात् विकृतावनुष्ठानम् । एकस्मिन् पक्षे नामत्वं पक्षान्तरे नेत्यादिविशेषात् । तथा काम्येपि वीतेच्छप्रयोगे प्रतिनिधिसम्भवादित्यादिदोषान्तरमपि वक्तुं शक्यम् । ग्रन्थविस्तरभयादनुक्त्वा अन्यथा समाधिरुच्यत इत्याह—किं बहुनेति । कथमित्यत्राह—अविशेषेति । अनियमपक्षे कदाचित् कस्यचित् द्रव्यगुणविषयत्वधीः तस्यैव कदाचिदनन्तरक्षणे भावार्थविषयविध्यवगम इत्येकमेव प्रमातारं प्रत्युभयविषयकविधिधीसम्भवान्न प्रतिनिधानमप्रतिनिधानं वा व्यवस्थापयितुं शक्यमित्यप्रतिनिधानमेव । न हि सकृज्जातकार्यावगममात्रेण कार्यानुष्ठानम् । किन्त्वनुवृत्तेन नचेहैकविधकार्यावगमानुवृत्तिः येन प्रतिनिधाननियमः । न चैवं 'अक्ताः शर्करा' इत्यादौ सर्वत्रानध्यवसानेऽनुष्ठानमध्यवसितं स्यादिति वाच्यम् । यतो युक्तं

---

१. नपनीयतया

समाधीयते । अविशेषपक्षे हि कदाचित् द्रव्यगुणविध्यवगमः, कदाचित् भावार्थविषयविध्यवगम इत्युभयोः विषयत्वसंभवान्न प्रतिनिधानमप्रतिनिधानं वा व्यवस्थापयितुं शक्यमित्यप्रतिनिधानमेवेति न प्रतिनिध्यनुष्ठाने विशेषः। भाष्ये तु अवधारितैकपक्षत्वमादाय अप्रतिनिधौ विशेषो दर्शितः इत्यविरोधः।

राद्धान्ते भावार्थत्वं हेतुरुक्तः। द्रव्यादेर्हि क्रियाविशिष्टदशायां साध्यतामादाय विधिविषयता वाच्येत्यसाध्या क्रिया न भावार्थः स्यात्। द्रव्यादेश्च जन्यतया कर्मावस्थयाऽन्वयः स्यात्। जनकरूपकारकावस्थायां सत्यामपि। न त्वतीतैव तदा कारकतेति परमतं युक्तम्। कारकं हि

---

अक्ताः शर्करा इत्यादौ अनुष्ठानानध्यवसायादप्रामाण्यं पूर्वपक्षे साधनद्रव्यसन्देहेन द्रव्योपादाननिवृत्तावञ्जनानुष्ठानासम्भवात्। इह तु प्रतिनिधानाप्रतिनिधानसन्देहेपि प्रतिनिधाननिवृत्तावपि मुख्यानुष्ठानसम्भवात् अनुष्ठानमध्यवसितमेवेति प्रामाण्यं युक्तमेव। अतः प्रतिनिधानाभावान्न प्रतिनिध्यनुष्ठाननिमित्तको विशेष इत्यर्थः। नन्वस्मिन् प्रकारेपि कथं भाष्याविरोध इत्यत्राह—भाष्ये त्विति। एतेन प्रतिनिधिन्यायेनैवास्मिन् प्रकारेप्यतिदेशानतिदेशाभ्यामनुष्ठानविशेषचोद्यमपि परिहृतम्। विषयत्वानिर्धारणेऽतिदेशस्यैवाभावात्। नन्वेवं नैमित्तिकदशायां द्रव्यगुणभावार्थानां सर्वेषां साध्यत्वेन विषयतायोग्यत्वेऽविशिष्टे साक्षान्नियोगाकाङ्क्षायाः सन्निधेश्चाप्यविशिष्टत्वे प्रकृत्यर्थस्य च विशेषसन्निधेः प्रकृतिप्रत्यययोः सहोच्चारणनियमेनान्यथासिद्धत्वादनियमेनैव विषयत्वे युक्ते कथं राद्धान्त इत्याशङ्क्य ग्रन्थोक्तं भावार्थत्वरूपं राद्धान्तहेतुमाह—राद्धान्त इति। विधिविषयत्व एव हि भावार्थस्य भावार्थत्वं साध्यत्वं युक्तं नान्यथेत्यर्थः।

ननु कथं द्रव्यगुणयोर्विधिविषयत्वे भावार्थत्वाभाव इत्यत्राह—द्रव्यादेर्हीति। द्रव्यादेर्विषयत्वे यदैकस्मादपूर्वं तदेतरत्तदर्थमिति न्यायेन क्रियायाः द्रव्यार्थत्वं स्यात् नाश्रयमात्रत्वं अनन्यप्रयुक्तत्वात् ततश्च द्रव्यादि प्रति क्रियायाः साधनतया साध्यता न स्यादित्यसाध्यायाः क्रियाया भावार्थत्वं न स्यात्। तथा द्रव्यादेः क्रियाजनकत्वरूपकारकावस्थायां सत्यामपि क्रियाजन्यतया कर्मावस्थयैवान्वयः स्यात्। तत्र तदा प्रतीयमानक्रियाकारकान्वयभङ्गः स्यात्। अतो भावार्थत्वे बलात् क्रियाया एव विषयत्वमुक्तं न द्रव्यादेरित्यर्थः। अत्र परैः क्रियाहेतुत्वं कारकत्वं तन्निष्पन्नया तु क्रियया यदा फलं जन्यते तदा तदतीतमेवेत्युक्तं, तन्न युक्तमित्याह—न त्विति। तत्र हेतुः—कारकमिति। यतः क्रियाहेतुः कारकं हेतुत्वं च क्रियोत्पत्तिनियमेन पूर्व-

क्रियाहेतुः । तद्धेतुता च तत उत्पत्तौ नियमतः पूर्वक्षणस्थितिमात्रात् न तु व्यापारवत्तया । व्यापारोत्पत्तौ व्यापारान्तरानभ्युपगमादनवस्थापातात् । स चायं हेतुहेतुमत्त्वसंबन्धः संबन्धिद्वयस्थित्यवधिकः अतः क्रियया स्थितिकाले फलं जनयन्त्या कारकावस्थास्थितमेव कर्मनिर्मितं ग्रामादि । यत्तून्नीतं ग्रामगतप्रयोजनं क्रियोत्पत्तिहेतुः, अतो ग्रामस्य कारकतेति; तन्न, अनीप्सितस्याकर्मकारकत्वापत्तेः । परोपाधेरेव कारकव्यापारव्यतिरेकिणां द्रव्यगुणानामपि भविष्यदादिकालयोग इत्युक्तम् ।

---

क्षणस्थितिमात्रात् न तु क्रियोत्पत्तौ व्यापारयोगितया, व्यापारोत्पत्तौ व्यापारान्तरस्यानवस्थापत्त्याऽनुपगमात् । अन्यथा व्याप्रियमाणस्यापादानादेः कारकत्वं न स्यात् । भवत्वेवं तथापि किमित्यत आह—स चायमिति । क्रियाकारभावो हि हेतुहेतुमत्सम्बन्धः । स चायं सम्बन्धिद्वयस्थित्यवधिः । अतो यावत्क्रियास्थितिः तावत् कारकत्वमपि दत्तम् ।

नन्वेवमपि कथं फलोत्पत्तिक्षणे कारकत्वानुवृत्तिरित्यत्राह—अत इति । कारकत्वस्यान्तिमक्षणः क्रियास्थितिक्षणः फलोत्पत्तिक्षणश्चैक एव । ततश्च यतः सम्बन्धिद्वयस्थित्यवधित्वं सम्बन्धस्य अतः स्थितिकाले फलं जनयन्त्या क्रियया कारकावस्थमेव कर्मफलं ग्रामादि निर्मितं उत्पादितं ग्रामादेः प्राप्यतया फलत्वम् । एतदुक्तं भवति—क्रियात्वे हेतुः कारकं, फलोत्पत्त्यवस्थायां च क्रियात्वमिति भवति ग्रामादेः गमिहेतुत्वम् । एतच्च बादरिनये निपुणतरं वक्ष्यते । अतः फलोत्पत्त्यवस्थायामपि कारकावस्थास्थितिः । प्रकाशमतमाह—यत्विति । निष्प्रयोजनायाः क्रियाया अनुत्पादनात् ग्रामगतप्रयोजनं क्रियोत्पत्तौ हेतुः । अतः प्रयोजनवत्तया उद्देश्यतया ग्रामादेर्गतौ कारकतेत्यर्थः । तन्नेति । अनीप्सितन्यायकर्मकारकत्वापत्ते रित्यर्थः । अत्र ग्रन्थे प्रसक्तानुप्रसक्त्या नियोगस्य भविष्यत्त्वं लिङादिना नोच्यते । भविष्यद्विषयावच्छेदोपाधिनैव भविष्यत्त्वावगमसिद्धेः अनन्यलभ्यस्य शब्दार्थत्वादित्युक्तौ वस्तुतः कालयोगित्वाभावे खपुष्पवदसम्भवित्वमेवेत्याशङ्क्य न केवलं कार्यस्यैव कालयोग औपाधिकः । किन्तु कारकव्यापारव्यतिरेकिणां द्रव्यगुणानामपि कालयोग औपाधिक एवेत्युक्तम् तदनुभाषते—परोपाधिरेवेति । ननु नियोगस्येव कारकव्यापाररूपविषयस्यापि भविष्यत्त्वं न लिङादिवाच्यं लिङादीनां काले स्मरणाभावात कालाद्युपाधिरेव नार्थ इति पातञ्जल एवोक्तेः । अथ कृतियोगात्कालयोगः तर्ह्यसौ नियोगस्यैव प्रथममिति कथमयं ग्रन्थ इत्याशङ्क्य प्रकाशोक्तमभिप्रायमाह— अत्राभिप्रायमति । घटाद्युत्पत्तिर्हि देवदत्तादिप्रयत्नात् । प्रयत्नश्च

अत्राभिप्रायं केचिद्वर्णयति—घटादिभवनं देवदत्तादिप्रयत्नात्, प्रयत्नश्च कारकव्यापारविषय इति कारकव्यापारद्वारेणैव घटादेः कालयोग इति। तदयुक्तम्। एतस्मात्तावद्ग्रन्थात् कारकव्यापारादुत्पत्तिः द्रव्यगुणादेः प्रतीयते। उत्पन्नस्य तु साक्षात्कालयोगे को विरोध इति न विद्मः। अतोऽन्यथा समाधीयते।

तथाहि—रक्तः पटो भूत इति विद्यमानस्यैव रक्तत्वस्य गुणस्य पटद्रव्यस्य चातीतार्थक्तप्रत्ययप्रयोगः। तत्रातीतयोरुत्पत्तौ कारकव्यापाररूपायामेव तात्विकं तदुपधानादेव द्रव्यादेरतीतता। एवमनागतता वर्तमानता च तत एवेत्यनुसन्धेयम्। तथाभूतिक्रियान्तर्भावादेवानागतादिव्यवहारो लोके द्रव्यादीनाम् घटो भविष्यति भवत्यभूदितीयं दिक्।

---

कृतिरूपः कारकव्यापाररूपक्रियाविषय एव, क्रियाया एवाहत्य कृतिसाध्यत्वात्। अतः कृत्या क्रिया निष्पाद्यते तया च घटादीति कारकव्यापारद्वारेण घटादेः कालयोग इत्यर्थः।

तदयुक्तमिति। अनेन प्रकाशग्रन्थेनोत्पत्तिक्रमोऽभिहितः। उत्पन्नस्य हि वस्तुतः साक्षात्कालयोगे को विरोधः। अथ कृतिविषयस्यैव कालयोगनियमात् क्रियाया एव साक्षात्तद्विषयता न द्रव्यादेरिति न तस्य स्वतः कालयोग इति चेत्, तर्हि तदेव वक्तव्यं न तु तद्वचक्तमित्यस्पष्टसमाधानार्थः प्रकाशग्रन्थ इति भावः।

ननु कथं तर्हि समाधानमित्यत्राह—अतोऽन्यथेति। रक्तः पटो भूत इति रक्तत्वगुणस्य पटद्रव्यस्य विद्यमानस्यैव भूते इत्यतीतार्थक्तान्तेन व्यवहारादन्वयव्यतिरेकाभ्यां तदतीतत्वं कारकव्यापाररूपक्रियोत्पत्तावेव तात्विकं बोध्यते तदुपधानादेवान्यस्य द्रव्यादेरतीतता। एवमनागतत्वं वर्तमानत्वं चौपाधिकमेव। त्रैकाल्यव्यवहारोचितो हि कालसम्बन्धः कारकव्यापाररूपोत्पत्तिक्रियालक्षणधात्वर्थरूपक्रियान्तर्भावादेव। यद्यप्यव्यापाररूपस्यापि वस्तुनः कालयोगोऽप्यस्ति तथापि शब्दाद्व्यापारोपाधित एव कालयोगः प्रतीयते, कारकव्यापाररूपस्यैव सर्वत्र प्रत्ययोच्चारणे कालसम्बन्धितया प्रतीतेः। अतः कारकव्यापाररूपोत्पत्तिक्रियोपाधिक एव द्रव्यादेः कालयोग इत्यनुसन्धेयमित्यर्थः। ननु घटोवर्तत इत्यादौ कारकव्यापारव्यतिरेकेणापि वर्तमानता दृष्टेति कथं तत एव त्रैकाल्यानुसन्धानं घटादेरित्यत्राह—तथेति। वर्तत इति। वर्तमानत्वं घटस्यास्तित्वमेव तच्च भवत्यर्थाव्यतिरिक्तमिति क्रियान्तर्भावादेवानागतादिव्यवहारो लोके द्रव्यादीनां घटोभविष्यति च भवत्यभूदिति। ननु कथं परोपाधेरेव कारकव्यापारव्यतिरे-

यदि कर्मशब्दा इत्येवोच्येत तदा इदमेवाधिकरणं स्थितिं न लभते चक्रकदोषप्रसङ्गादित्युक्तम् ।

अत्र चोदयन्ति प्रथमं कर्मशब्दतया यजेतेत्यनेन विधिविषये समर्पिते ततः उद्भिदादिपदानां नामत्वेऽपि न विधिविषयसमर्पकता सम्भवति । अर्थस्य हि विषयता । स चार्थो विषयतयाऽऽख्यातादेवावगत इति न पुनर्नाम्नापि बोधनीयः ।

यदप्युच्यते नामार्पिते विषये यागे तृतीयार्थाभावान्न नामतेति; तदयुक्तम् । उद्भिदोऽपि यागनामत्वे तदवस्थे च यागे तृतीयार्थसंभावनेति; तत्रैके समादधति, आख्यातार्पितमपि विषयं नाम सिद्धावस्थयाऽर्प-

---

किणामपि कालयोग इति कारकव्यापारोपाधिकभविष्यदादिकालयोगाभिधायको ग्रन्थ इति शङ्का दिक्पदनिवर्त्या । निवृत्तिस्तु ग्रन्थे कारकव्यापार एव नोपाधिर्विवक्षितः । किन्तु धात्वर्थ एव व्यापारः । अत एव आकाशं वर्तत इति वृतिधात्वर्थोपाधिक एव कालसम्बन्ध इति । अत्र च द्रव्यादिव्यावृत्त्यर्थः कर्मशब्दः सूत्रितः । अभावार्थस्याविधिविषयत्वात् नामव्यावृत्त्यर्थं च सूत्रे भावार्थग्रहणम् ।

नन्वेवं किमर्थमुभयं सूत्रितमित्याशङ्क्य ग्रन्थोक्तं परिहारमाह—यदीति । द्रव्यगुणविषयतया निरस्तेऽप्युद्भिदादेर्विषयत्वे यजेतेत्यस्य साध्यतया प्रधानतयाऽवगते विषयत्वे तत्सामानाधिकरण्यादुद्भिदादेर्नामत्वे पुनः कर्मशब्दतया तस्यापि विषयत्वम् । तथा च तस्यापि विषयत्वदशायां नामार्थस्य कृतिं प्रति प्राधान्यं, तथा न करणत्वधीरिति न तदा तृतीयार्थं इति भावार्थसामानाधिकरण्याभावान्न नामतेति द्रव्यगुणवचनतेति चक्रकमिति भावः । तदनुपपन्नमिति कैश्चिच्चोदितं तदनुभाषते—अत्रेति । स्यादेतदेवं यदि नामत्वे सत्युद्भिदादिपदानां विषयसमर्पकता स्यात् । सा तु नास्तीत्यर्थः । कुत इत्यत्राह—अर्थस्य हीति । अपरमपि ग्रन्थोक्तं न युक्तमित्याह—यदपीति । यद्यपि नाम विषयार्थकं तथापि न तृतीयार्थसम्भवः उद्भिदोऽपि नामतया यागत्वे तदवस्थे च यागे तृतीयार्थस्य विद्यमानत्वादि[1]त्यर्थः । अस्य चोद्यस्य प्रकाशोक्तं समाधानमाह—तत्रैक इति । सत्यं आख्यातान्तेन यागः प्रथमं विषयतयाऽर्पितः न तु साध्यावस्थतया । नाम तु सिद्धावस्थयागस्य विषयतामप्राप्तामर्पयिष्यति साक्षादन्वयार्थमिति नार्पितार्पणदोष इत्यर्थः ।

यदप्याक्षेपान्तरं उद्भिदोऽपि करणत्वसम्भव इति तत्रापि प्रकाशोक्तं समा-

---

१. A संभावितत्वा ।

यिष्यति साक्षात्कार्यान्वयलोभेन। तथा नामतोऽपि विषयभावानुसन्धानान्न कारणताधिगतिः इति न यागे तृतीयार्थतेति; तन्न, यत्र ह्यवस्थाभेदतो विषयत्वे गुणविधिफलमनुष्ठानं दध्यादौ तत्र तथा। इह तु अर्पितार्पणमात्रं नाम्नोऽनर्थकमेव। अतोऽन्यथा समाधीयते। नात्र न्यायतश्चक्रकापत्तिरुद्भाव्यते किन्तु कर्मशब्दमात्रसूत्रणनिबन्धना चक्रकापत्तिरापद्यते। सूत्रकारोपालम्भोऽयं अत्यर्थं स माभूदिति भावार्थपदं प्रक्षिप्तम्।

विवरणे तु पूर्वाधिकरणराद्धान्ते कर्मवि[१]षयत्वे सिद्धे किं नामधेयेन विषयतया कर्मार्प्यते उताख्यातपदेनेति संशयात्मक एव पूर्वपक्ष इत्युक्तम्।

नन्वप्रामाण्येन पूर्वः पक्षः प्रमाणलक्षणे युक्तः। न युक्तः। शास्त्रभेदोपोद्घातेनेयं चिन्ता। सा च साक्षात् सङ्गतेर्बलीयसीति बादरिसप्तमाद्यादावुक्तम्।

---

धानमाह—तथेति तन्नेति। यत्रावस्थाभेदतोऽपि विधिविषयत्वे गुणविधिफलमनुष्ठानं दध्यादिगुणविधौ तत्र तथात्वम्। इह तथाविधानुष्ठानभेदाभावेऽपितार्पणमात्रमनर्थकमेव। किञ्च पूर्वत्रैकस्य विधिविषयत्वे उक्ते अत्र यजेतेत्यस्य विषयार्पकत्वे ज्ञाते न पुनर्विषयाकाङ्क्षापीति न नाम विषयार्पकम्। न च विपरीतशङ्का कार्या; भावार्थविषयत्वस्योपजीव्यतया प्रथमभावित्वादित्यर्थः। कथं तर्हि चोद्यसमाधिरित्यत्राह—अतोऽन्यथेति। न ह्यत्र न्यायतश्चक्रकापत्तिः किन्तु कर्मशब्दमात्रसूत्रकरणनिबन्धना चक्रकापत्तिरापाद्यते। अन्यथा भावार्थपदप्रक्षेपेपि कथमिव सा निराक्रियेत। अतः आभासप्रतीतचक्रकेण सूत्रकारोपालम्भोऽयं अकुशलोऽयं सूत्रकृत् सूत्रकरणे इति स माभूदिति भावार्थपदपि सूत्रितमित्यर्थः।

विवरणे त्विति। तत्र हि मते पूर्वनय एव वस्तुबलात् कर्मण एव विषयत्वे निर्धारिते इयमिह चिन्ता—किं नामपदेन कर्म विषयतयाऽर्प्यते आख्यातेन पदेन वेत्यनध्यवसायः, उताख्यातपदेनैवेति निश्चयः तत्रानध्यवसायात्मक एव पूर्वपक्ष इत्युक्तं विवरणपञ्चिकायामित्यर्थः। नन्वेवमप्रामाण्येन पूर्वपक्षे प्रमाणलक्षण एवेयं चिन्ता संगता स्यात् नात्रेति चोदयति—नन्विति। न युक्त इति। सत्यमप्रामाण्येनायं पूर्वपक्षः तथापि न प्रमाणलक्षणे युक्तः। किन्तूपोद्घाततया अत्रैव युक्तः साक्षात्सङ्गतेरुपोद्घातसङ्गतिर्बलीयसीति बादरिसप्तमाध्यायादौ उक्तेरित्यर्थः।

---

१. B सिद्धे कर्मविषयत्वे

ननु प्रथममाख्याताद्विषयभूते कर्मण्यधिगते कस्यापरस्य विषयतां नामाधिगमयिष्यति । उच्यते । प्रथममाख्यातादधिगतिमेव न मन्यते, किन्तूपपदस्य कर्मार्थताव्युत्पत्तिप्रकारोऽयम् । एवं व्युत्पन्नस्तु किन्नामतः किमाख्याताद्विषयं प्रत्येमीति सन्दिग्धे । सन्देहादननुष्ठानं निर्णये त्वनुष्ठानमिति विचारप्रयोजनम् । अत एव व्युत्पत्तिदशायां क्रियाकारकान्वयाभिधानाभ्युच्चयेन पूर्वाधिकरणे राद्धान्तितम् । अत्र चाख्यातात् साध्यावस्थाधिगतेः तदवस्थस्य कृत्यन्वयमुखेन विषयभावयोग्यत्वादाख्यातमेव विषयमर्पयतीति राद्धान्तः । व्युत्पत्त्युपाधितया चेदमधिगतं यदाख्यातमिष्टफलसाधनकर्मक्षणनिचये प्रयुज्यत इति । इष्टफलसाधना-

---

नन्वेवमनध्यवसायो न युक्तः प्रागेवाख्यातात् कर्मणो विषयस्य समर्पितत्वात् कस्यापरस्य विषयतां नामाधिगमयिष्यति आकाङ्क्षाभावादिति चोदयति—नन्विति। तन्नेति। स्यादेतदेवं यद्याख्यातात् प्रथमं विषयावगमः स्यात् तमेव तु पूर्वपक्षी न सहत इत्यर्थः। कथं तर्ह्युपपदस्य नामतया कर्मार्थिता। विधेयभावार्थसामानाधिकरण्याद्धि नामता। न चाख्यातात् प्रथममेवासमर्पिते विषये तत्सम्भव इत्यत्राह—किन्त्विति। उपपदस्य नामत्वव्युत्पत्तिसमय एवाख्यातस्य प्रथमं विषयसमर्पकत्वधीः न सर्वदेत्यर्थः। ननु यदा व्युत्पत्त्यवगमेन भाव्यं तदा च कथं संशयात्मकः पूर्वपक्ष इत्यत्राह—एवमिति। व्युत्पत्त्यनन्तरं शास्त्रार्थावगतिसमये व्युत्पन्नः प्रथममाख्यातोपपदयोरुभयोरपि भावार्थवाचकत्वाविशेषात् कस्य विषयसमर्पकत्वमिति न निश्चिनोतीत्यर्थः। ननु अनुष्ठानभेदे सति विचारस्य प्रयोजनम्। इह तु तद्भेद एव कथं इत्यत्राह—सन्देहादिति। यदिदं व्युत्पत्तिदशायां प्रथमावगताख्यातार्थविषयत्वाधीननामत्वबलात् सन्देहात्मकपूर्वपक्षकरणं युक्तं चैतदित्याह—अत एवेति। विवरणमत इति शेषः। कथं तर्हि राद्धान्त इत्यत्राह—अत्र चेति। कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं विषयत्वं कृत्यवच्छेदयोग्यता च साध्यावस्थस्य भावार्थस्यैव। तदवस्थावगतिस्त्वाख्यातादेवेति तदेव विषयसमर्पकमित्यर्थः। ननु आख्यातोपपदयोर्द्वयोरपि कर्मवाचकत्वाविशेषे आख्यातादेव साध्यावस्थकर्मप्रतीतिर्नोपपदादिति विनिगमनायां को हेतुः तत्राह—व्युत्पत्त्युपाधितयेति। यद्यपि विधेयकर्मस्वरूपाभेदः, यद्यपि च क्षणिकत्वात्कर्मणः इयमवस्था इदमवस्थावत् इति विवेचयितुमशक्यं तथाप्यौपाधिकी साध्यावस्था कर्मणः आख्यातात्तावत् प्रतीयते। अनेकक्रियाक्षणनिचये एकाख्यातशब्दस्य एकोपाधिं विना व्युत्पत्त्ययोगात्। व्युत्पत्त्युपाधितयेदमवगतमित्यर्थः। किं तद्व्युत्पत्त्युपाधिरित्यत्राह—यदाख्यातमिति समीहितफलसिद्धिश्चात्रोपाधिः। आख्यातान्तो धातुः आख्यातोपसर्जनत्वादिष्ट-

वच्छेदश्च सजातीयक्षणनिचयस्य विजातीयक्षणनिचयस्य च। तत्र सजातीये तन्त्रेण धातुर्वर्तते। विजातीये तु स्वार्थातिरिक्ते आक्षेपात्। इष्टसाधनतया च साध्यत्वमाक्षेपादेव, तेनोच्यते साध्यतया प्रतीयत इति। अदृष्टफले त्वियतः फलसाधनत्वमिति न्यायतोऽवधारणसम्भवादनुष्ठानमिति प्रपञ्चितं दीपशिखायाम्। शेषं प्रस्तुतं भाष्यव्याख्यानोपक्षीणञ्च।

## ॥ २ ॥ चोदना पुनरारम्भः ॥ ६ ॥

अपूर्वाक्षेपसमाधानरूपमिदमधिकरणम्। तेनापूर्वं ( सिद्धं कृत्वा इत्थं

---

फलसाधनकर्मक्षणनिचयमाह न कृदन्तः तथैव प्रयोगनियमात्। एतच्च लिङादियुक्तधातुविषयमित्यर्थः।

ननु यदि इष्टफलसाधनतावच्छेदनाद्धातुः स्वार्थं क्रियाक्षणनिचयमाह तर्हि ओदनं पचनीत्यत्र चुल्लीसम्मार्जनकाष्ठहरणादेरन्तर्भावो न स्यात् तस्येष्टफलसाधनतावच्छेदाभावात् इत्यत आह—इष्टफलसाधनेति। विजातीयक्षणनिचयं विनापि इष्टफलासिद्धिः तस्यापि धात्वर्थानुकूलत्वात्। अतः सजातीयक्षणनिचयस्येव विजातीयक्षणनिचयस्यापीष्टफलसाधनावच्छेस्तुल्य इति तस्यापि धात्वर्थान्तर्भाव इत्यर्थः। ननु सजातीयक्षणानामनेकत्वात् कथं सकृदुच्चरिताख्याताान्तधातोः तत्र वृत्तिरित्यत्राह—तत्रेति। विरूपत्वाभावात् तन्त्रकल्पनया धातोर्वृत्तिरित्यर्थः। कथं तर्हि विजातीयक्षणनिचयप्रतीतिरित्यत्राह—विजातीये त्विति। यद्यपि साधनत्वात् सजातीयक्षणनिचय एव यज्यादिधातुवाच्यः। अतएव तावन्मात्रस्यैव विषयत्वं तथापि तदनुकूलविजातीयव्यापारनिचयं विनापि तत्साधनत्वायोगादभिधेयापर्यवसानात् स्वार्थातिरिक्तस्यापि तस्य धातुनाऽऽक्षेपात् प्रतीतिरित्यर्थः।

नन्वेवमपि साधनत्वावगतिरेव न साध्यावस्थावगतिः इत्यत्राह—इष्टेति। अभाव्यमानस्य कर्मणः इष्टफलसाधनत्वायोगात् इष्टसाधनत्वप्रतीतिबलादाक्षेपादेव साध्यता न तु साध्यतयैवाख्यातादभिधानमित्यर्थः। कथं तर्हि साध्यतया प्रतीयत इति ग्रन्थ इत्यत्राह—तेनेति। आक्षेपात् साध्यतैव ग्रन्थेऽभिप्रेतेत्यर्थः। नन्वदृष्टफले यागादावपि इयतः फलसाधनत्वमित्यज्ञानान्न विषयेयत्तावधृतिरिति न तत्र पुरुषप्रवृत्तिः। प्रवृत्तो वा नतत्र विरमेतेत्यत्राह—अदृष्टेति। अदृष्टफलेपि न्यायबलादियत्तावधृतिसम्भवादनुष्ठानसिद्धिः तदुपाधिसिद्धिश्चेत्यर्थः। सर्वमिदं अत्र कश्चिदाहेत्यारभ्य दीपशिखायां प्रपञ्चितमित्याह—इति प्रपञ्चितमिति। अन्यत्सर्वं भाष्याक्षरयोजनापरं, प्रमेयानुपयुक्तमिति ग्रन्थविस्तरभयान्नोक्तमित्याह—शेषमिति।

प्रतिपादितस्य क्रियार्थशब्दनियोगबोधकत्वं ) कृत्वेत्यस्य समाधानार्थं सत् पूर्वाधिकरणशेषभूतमिति न पृथगारब्धव्यमिति न पृथक् सङ्गतिमपेक्षते। अतः पूर्वमधिकरणं सशेषमुपोद्घातेन। अत्र पूर्वोत्तरपक्षसंक्षेपः— लोकव्युत्पत्त्यनुसारेण क्रियैव कार्यतया लिङादिभ्योऽवगम्यते, कामिनो नियोज्यस्य काम्यसिद्धये क्रियाया एव स्थायिता कल्प्यताम्। न च तत्र प्रमाणान्तरविरोधः। फलविनाश्यत्वात् क्रियाणाम्। लोके तु

## ॥ चोदना पुनरारम्भः ॥

अत्रापि साधिकारचोदना उदाहरणम्। तत्रैतत्समधिगतं भावार्थ एवापूर्वस्य विषयो नान्य इति। इयमिदानीं चिन्ता-किमपूर्वं नास्ति उतास्तीति। ननु कथमपूर्वाक्षेपसमाधानार्थाधिकरणस्य अध्यायसङ्गतिरवान्तरसङ्गतिश्च। तत्राह—अपूर्वेति। ननु पूर्वशेषत्वेऽपि कीदृशी सङ्गतिरित्यत्राह—अत इति। अत्र स्थायिरूपापूर्वकार्यस्य लिङ्गाद्यर्थत्वं परापादितदोषानपाकृत्य उपपादयितुं पञ्चिकोक्तपूर्वोत्तरपक्षसंक्षेपमाह—अत्रेति। अपूर्वं नास्त्येव तत्सद्भावे प्रमाणाभावात्। न तावत् प्रत्यक्षादि प्रमाणं, मानान्तरामेयापूर्वे तस्य प्रमाणत्वायोगात्। नापि शब्दः, वैदिकलिङादेर्लोकव्युत्पत्त्यनुसारेण क्रियाकार्यवाचकत्वात्। तदाह—लोकेति। ननु स्वर्गकामो यजेतेत्यत्र काम्यस्वर्गविशिष्टस्य कामिनो नियोज्यत्वेनान्वयः श्रूयते। न च तस्य नियोज्यत्वेनान्वयं परित्यज्य कर्तृतयाऽन्वयोऽस्त्विति वाच्यम्। षष्ठाद्यविरोधात्। कामी च स्वकाम्यस्वर्गसाधनमेव कार्यतयावैऽति। काम्यं च स्वर्गादि देशान्तरकालान्तरभावि। न च क्षणिकायाः क्रियायाः तादृशफलसाधनत्वयोग्यता। अतः कामिनियोज्यान्वयोपपत्त्यर्थं क्रियातिरिक्तं स्थायिकार्यमेव लिङ्गाद्यर्थ इत्यत्राह—कामीति। स्वर्गकामो यजेतेति यागस्वर्गयोः साध्यसाधनत्वश्रुतेः श्रुतसिद्ध्यर्थमश्रुतकल्पनस्य न्याय्यत्वात् कामिनियोज्यस्य काम्यसिद्ध्यर्थं क्रियाया एव स्थायिता कल्प्यतां, नापूर्वं, धर्मिकल्पनातो वरं धर्मकल्पनमित्यर्थः। ननु क्रियाया एव स्थायित्वकल्पना मानान्तरविरुद्धेत्यत्राह—न चेति। तत्र हेतुः फलेति। फलविनाश्यत्वं हि क्रियाणां मानान्तरसिद्धमेवेति न तद्विरोधोऽत्रापीत्यर्थः। ननु लोकेऽनन्तरफलविनाश्यत्वमेव कर्मणां क्लृप्तं न कालान्तरभाविफलविनाश्यत्वमिति कथं [1]स्थायित्वसिद्धिरित्यत्राह—लोके त्विति। न हि लोके फलस्यानन्तरत्वं कर्मनाशकत्वे तन्त्रं, किन्तु यत्कर्म यादृशफलसाधनतयाऽवगतं तत्कर्म तत्फलविनाश्यम्। लोके तु क्रियानन्तरं फलोत्पत्त्यवगमात्

१. B तत्सिद्धिः।

क्रियानन्तरं फलोत्पत्त्यवगमात् उत्तरकालविनाशित्वं युक्तम्। वेदे तु कालान्तरभाविनि फले साधनत्वावगमात् तत्फलविनाश्यत्वात् स्थायित्वसिद्धिः। न चाश्रयास्थिरत्वादस्थायित्वम्। यागादेः स्थिररूपात्माश्रयत्वात्। परिस्पन्दस्यापि शब्दावगतकालान्तरभाविफलस्य परमाण्वाश्रयत्वकल्पनादित्यनुसन्धेयमिति पूर्वः पक्षः।

यद्यपि फलविनाश्यं कर्म कारकावस्थाश्रितफलविनाश्यन्तु तदवगतं लोके ; अतस्तद्विपरीतफलकालावस्थायिता प्रमाणान्तरविरुद्धैव।

---

अनन्तरफलविनाश्यत्वं क्रियाणामङ्गीकृतं; वेदे तु कालान्तरभाविनि फले साधनत्वावगमात् तत्फलविनाश्यत्वमेवावश्योपेयमिति न तद्बलात् क्रियायाः स्थायित्वसिद्धिः। न च योग्यानुपलम्भादसिद्धिः शब्दमानबलादुपलब्धेरित्यर्थः। यदपरं आश्रयस्यास्थिरत्वात् स्थायित्वबाधः तदप्यत्र नास्तीत्याह—न चेति। यागदानहोमानामिच्छारूपसङ्कल्पात्मकतया स्थिरात्माश्रयत्वादित्यर्थः।

ननु अनेकपरिस्पन्दात्मको यागादिः शास्त्रार्थः तदाश्रयश्च द्रव्यवत्तादिकार्यद्रव्यम्। ततश्च तन्नाशे कथं स्थायित्वमित्यत्राह—परिस्पन्दः स्यादिति। सत्यमनेकपरिस्पन्दात्मा यागादिः शास्त्रार्थः सत्यं च तदाश्रयः कार्यद्रव्यं तथापि तस्य शब्दप्रमाणबलात् कालान्तरभाविफलसाधनत्वावगतेः तद्बलादाश्रयभूतकार्यद्रव्यनाशे परमाण्वाश्रयत्वं हन्यते यथाऽवयविनो वृद्धाववयवान्तरसमवायः यथा वा प्रोक्षणादिजन्यस्यादृष्टस्य करणावस्थयागाश्रिततैवेत्यर्थः। ननु एवंविधानेककल्पनमयुक्तमित्यत्राह—इत्यनुसन्धेयमिति। लोकव्युत्पत्त्यवगतक्रियाकार्यत्वविरोधान्मानान्तरापरिदृश्ये अपूर्वरूपस्थायिकार्ये सम्बन्धग्रहणाशक्तेः व्युत्पत्त्ययोग्यत्वाच्च नापूर्वं कार्यं लिङर्थ इति क्रियायाः कालान्तरभाविफलसाधनत्वस्य श्रुतस्योपपत्त्यर्थं अश्रुतबहुकल्पनमपि न्याय्यमित्यर्थः।

राद्धान्तमाह—यद्यपीति। समभिव्याहृतकामिनियोज्यान्वयोपपत्त्यर्थं क्रियातिरिक्तमपूर्वं स्थायिकार्यं लिङाद्यर्थो युक्तः। तस्यैव कालान्तरभाविफलसाधनतार्हत्वात्। न च क्रियायाः स्थायित्वकल्पनं युक्तम्। प्रमाणान्तरविरोधात्। क्रिया हि क्षणिकैव मानान्तरावगता। यद्यपि फलविनाश्यतया क्रियाऽवगता लोके, तथापि न स्थायितासिद्धिः कारकावस्थोत्पन्नफलविनाश्यत्वेन क्रियाणामवगतत्वात्। स्वर्गश्च न कारकावस्थायामुत्पद्यते। यथाचैतत् तथा वादरिनये निपुणतरमुपपादितम्। अतो लोकावगतक्रियानाशकफलविपरीतस्वर्गाख्यफलं यावत्कालं तावत् क्रियायाः स्थायित्वकल्पनं मानान्तरविरुद्धमित्यर्थः। किञ्चाश्रयनाशादपि

तथा आश्रयविनाशाच्च अस्थायित्वं कर्मणः शास्त्रार्थीभूतस्यानेकपरिस्पन्दावच्छिन्नस्य यागादेरप्यस्थिराश्रयत्वात्। कार्यद्रव्यञ्च देशान्तरं प्रापयतः स्पन्दस्य तदाश्रयत्वमेव स्थितम्। अतस्तद्विपरीतपरमाण्वाश्रयत्वकल्पनमप्ययुक्तम्। तथा कर्मशक्तेरन्याश्रयत्वकल्पनेन तत्स्थायित्वकल्पनापि प्रमाणान्तरविरुद्धैव। सापि तुल्यन्यायतयाऽत्राधिकरणे निवारिता। अनवगतस्वरूपे त्वपूर्वे न प्रमाणान्तरविरोध इति स्थायिकार्यं

---

क्रियायाः स्थायित्वं योग्यमित्याह—तथेति। ननु यागादेरात्माश्रितत्वात् नाश्रयनाशादस्थायित्वमित्यत्राह—शास्त्रार्थीभूतस्येति। स्यादेतदेवं यदि त्यागमात्रं शास्त्रार्थः स्यात्। इह तु अनेकपरम्परावच्छिन्नो यागादिः शास्त्रार्थः तस्य च द्व्यवत्तादिद्रव्याश्रितत्वमेव न स्थिरात्माश्रयत्वं, तच्च द्रव्यं नष्टमेवेति आश्रयनाशादपि न स्थायित्वमित्यर्थः। ननु आश्रयानित्यद्रव्यनाशेपि नित्यपरमाण्वाश्रयत्वं कल्प्यते शब्दमानबलादित्युक्तमित्यत्राह—कार्यद्रव्यं चेति। परिस्पन्दस्य द्व्यवत्तादिकार्यद्रव्यदेशान्तरसंयोगावधित्वेनैव मानान्तरात् सिद्धिरिति तदाश्रयत्वमेव तस्य धर्मिग्राहकमानान्तरात्प्रमितमिति तद्विरोधात् परमाण्वाश्रयत्वकल्पनमप्ययुक्तम्। अवयववृद्धचदौ तु नैवं प्रमाणान्तरविरोध इत्यर्थः।

एवं कर्मशक्तेः स्थायित्वकल्पनमपि धर्मिग्राहकप्रमाणविरुद्धत्वान्न युक्तमित्याह—तथेति। नन्वियं ग्रन्थे क्विमिति नोक्तेत्यत्राह—सापीति। अपूर्वे तु लिङर्थे नैवंविधो विरोध इत्याह—अनवगतेति। मागान्तरानवगतस्वरूपेऽत्र कार्ये न मानान्तरविरोधः शक्यशङ्कः। अतो मानान्तराविरुद्धं यावत्फलकालस्थाय्यपूर्वरूपं कार्यं लिङाद्यर्थतया कामिनियोज्यान्वयसमभिव्याहाराद्वेदेऽवधार्यते। न च मानान्तराप्रमिते तत्र न व्युत्पत्तिसम्भव इति वाच्यम्। सम्बन्धग्रहे हि अर्थावगतिरुपयुक्ता न प्रमितिः। इह तु कामिनियोज्यान्वयानुपपत्तिरूपतर्कोपस्थापितत्वादपूर्वस्य नानवगतिरिति तर्कोपस्थापितेऽपूर्वे व्युत्पत्तिसम्भवः। तर्कस्य च स्मृतावन्तर्भावः। स्मृतिश्च सापेक्षज्ञानं अतो न कश्चिद्दोष इत्यर्थः। न चैवं कामिनियोज्यान्वयबलादपूर्वे लिङर्थे फलसाधनतयैवापूर्वस्य लिङर्थता न कार्यतयेति प्राधान्यभङ्ग इति वाच्यम्। वाच्यस्वरूपोपस्थितौ फलसाधनत्वस्य व्यापारो न लिङादिवाच्यत्वे। लिङ्वाच्यं कार्यत्वमेव न साधनत्वमिति न लिङर्थस्य प्राधान्यहानिः। अतः क्रियातिरिक्तमपूर्वरूपं स्थायिकार्यं लिङाद्यर्थोऽवधार्यते। ततश्च तत्रैव लिङादेः शक्तिः, अनन्यलभ्ये शक्तिनियमात्। क्रियाकार्यतायां तु लोके लक्षणासम्बन्धानुपपत्तिभ्यामिति भावः।

लिङाद्यर्थोऽवधार्यते। तदङ्गीकारमात्रेण सुकरे विरोधप्रतीकारे लोकाव-गतप्रीतिस्वभावविपरीतस्वर्गाख्ये प्रीतिपरिग्रहवच्छब्दबलेनात्रापि स्थायि-त्वादि न युक्तं वक्तुमिति राद्धान्तः। यदा च स्थायिकार्यं लिङाद्यर्थः तदा कार्यसामान्यमात्रवचनतया क्रियाकार्ये लिङादिप्रयोगो मुख्य इति नाशङ्कनीयम्। सामान्यवचनत्वे हि स्थायिरूपकार्यविशेषोऽनन्यप्रमाणको न प्रतीयेत। अतस्सविशेषस्थायीत्येवंरूपतयाऽभिधेयः। अतोऽस्थायिरूपे

---

ननु यथा शब्दमानबलात् स्वर्गशब्दस्य लोकावगतप्रीतिस्वभावविपरीत-प्रीतिवचनत्वग्रहः तथाऽत्रापि अनेकस्पन्दात्मकस्य कर्मणः स्थायित्वादिकल्पन-मस्त्वित्यत्राह—तदङ्गीकारेति। यदि शब्दादवगतार्थः सर्वथा नोपपद्यते तदा मानान्तर-विरुद्धमपि कल्प्येत न तु स्थायिकार्यस्य लिङाद्यर्थत्वाङ्गीकारमात्रेण विरोधपरिहारे सुलभे प्रमाणान्तरविरुद्धकल्पनं युक्तमित्यर्थः। ननु प्राचां मतवत् क्रियापूर्वयोरनुगत-कार्यत्वसामान्य एव लिङादेः शक्तिरस्तु। तथा च निर्विशेषसामान्यायोगाद-पर्यवसानात् क्रियारूपविशेषकार्यधीः अपूर्वरूपविशेषकार्यधीश्च। तत्र लोके प्रकृत्युपात्तक्रियाविशेषधीः वेदे तु काम्यान्वयबलादपूर्वरूपकार्यविशेषधीः उभयत्रापि लिङादिप्रयोगो मुख्य एवेति नाशङ्कनीयम्। उक्तप्रकारेण स्थायिरूपकार्यविशेषे शक्त्यवगतेरित्याह—यदा चेति। ननु धर्मिणि स्थायिनि कार्यविशेषे शक्तितो धर्म-मात्रे कार्यत्वसामान्ये शक्तिर्युक्तेत्यत्राह—सामान्येति। स्यादेतदेवं यदि स्थायि-त्वादिधर्मककार्यविशेषप्रतीतिरन्यथासिद्धा स्यात्। न चेतदस्ति। न चापर्यव-सानात्तत्प्रतीतिः। स्थायिरूपकार्यविशेषस्य कार्यत्वसामान्येन सह सम्बन्धस्य प्रत्यक्षाद्यन्यतमप्रमाणानवगतेः गोत्वतद्वचस्योरिव। प्रत्युत कार्यत्वसामान्यस्य क्रियारूपकार्यविशेषसम्बन्धित्वेनैव लोकप्रसिद्धत्वात् तस्यैवापर्यवसानात् तत्प्रतीतिः स्यात्। यत एव स्थायिकार्यविशेषप्रतीतिरनन्यथासिद्धा अतोऽनन्यलभ्यत्वात् स्थायिरूपकार्यविशेषः स्थायित्वरूपेणैव लिङाद्यभिधेय इति तत्रैव शक्तिः। न चैवं स्थायित्वादावपि शक्तिर्वाच्या कार्यविशेषोपाधित्वात्स्थायित्वादेरित्यर्थः।

ननु कथमस्थायिनि क्रियाकार्यविशेषे लोके प्रयोग इत्यत्राह—अतोऽस्थायि-रूप इति। यत एव स्थायिकार्य एव लिङादेः शक्तिः अतः अस्थायिरूपे क्रिया-कार्यविशेषे शक्त्यन्तरापेक्षमेवाभिधानं स्यात्। तच्चायुक्तं, अनेकशक्तिकल्पनापत्तेः क्लृप्तशक्तितयैव लक्षणाप्रयोगोपपत्तौ तत्कल्पनायोगाच्च। अतोऽस्थायिनि क्रियाकार्ये प्रयोगो लाक्षणिक एव युक्तः। न च प्राथम्यात् भ्रमादिकल्पनाया अन्याय्यत्वात् ( अपूर्व ) क्रियाकार्य एव मुख्यत्वम्। अतस्तदनुरोधात् स्थायि-

कार्ये शक्त्यन्तरापेक्षमभिधानं स्यात्। अतस्तल्लाक्षणिकं क्रियाकार्यं युक्तम्। न युक्ता च सामान्यमात्राभिधायकता व्यक्तिवाचिनो लिङादेः।

यत्तु केचित् समादधति क्रियाकार्ये कार्यतारूपधर्ममात्रे लिङादिः। अपूर्वे तु धर्मिभूतापूर्ववचनता। अतो धर्ममात्रे लक्षणा युक्तेति। तदयुक्तम्।

---

कार्य एव लक्षणास्त्विति वाच्यम्। लक्षणा हि मुख्यार्थोपस्थिते ह्यर्थे शब्दतात्पर्याद्भवति। न च शब्दात्पूर्वमपूर्वसम्बन्धित्वेन क्रिया प्रमाणान्तरोपलब्धेति सम्बन्धाभावान्नापूर्वकार्ये लक्षणा। क्रियाकार्ये तु लक्षणा युक्ता अपूर्वकार्यसम्बन्धित्वेन क्रियाकार्यस्य शब्दादवगतेः। न च यागादिक्रियाकार्यस्यैव स्थायिकार्यसम्बन्धित्वेन शब्दादवगतिः न भोजनादिरूपक्रियाकार्यस्य। अतः तदपूर्वासम्बद्धं कथं लक्ष्यत इति वाच्यम्। यतः क्रियाकार्यतामात्रं तु स्वार्थसंबन्धि लिङादिना लक्ष्यते यागादेरन्योन्यव्यभिचारात् अतस्तल्लक्षणया भुज्यादिपदसमभिव्याहारात् भोजनादिकार्यविशेषधीः। यद्वा अपूर्वे यागादिना संबन्धः यागादिक्रियात्वेन। तच्च भोजनादिक्रियाविशेषेणेति परस्परासम्बन्धात् भोजनादिक्रियाकार्यविशेषे लक्षणा। लाक्षणिकत्वाननुसन्धिस्तु लौकिकानामेवंविधानन्यथासिद्धवैदिकप्रयोगमूलशक्त्यवधारणाननुसन्धाननिमित्तमुख्यताभिमानात्। एवं ग्रन्थस्थलक्षणाशब्दस्य यथाकथञ्चित् मुख्यवृत्त्युपपत्तौ गौणवृत्तावेव लक्षणाशब्दो गौणः धर्मलक्षणाशब्दवदिति वर्णनं न युक्तम्। अतोऽस्थायिरूपे क्रियाकार्यविशेषे लिङादिप्रयोगो लाक्षणिक एव युक्त इत्यर्थः। किञ्च व्यक्तिवाचिनो लिङादेः सामान्यमात्रवाचित्वं चायुक्तमित्याह—न युक्ता चेति।

ननु क्रियाकार्ये मुख्यता लिङादेः अपूर्वे तु लक्षणेति कुतो न विपरीतमिति चोद्यं प्रकाशादयोऽन्यथा समाहितवन्तः। तदनुभाषते दूषयितुं —यत्तु केचिदिति। लोके तु क्रियाकार्ये धातुनैव कार्यताधिष्ठानस्योक्तेः कार्यतारूपधर्ममात्रे लिङादिः। अपूर्वस्य तु अधिष्ठानस्यानन्यलभ्यत्वात् तद्धर्मिभूतापूर्ववचनता लिङादेः। तत्रापूर्वलक्षणायां धर्मिणि लक्षणा स्यात्। क्रियाकार्ये लक्षणायां तु धर्ममात्रे। लाघवात्त्वेष युक्त इत्यर्थः। तदयुक्तमिति। लिङादेर्धर्मिणि कार्ये शक्तिकल्पनाबलात् धात्वभिहितापि क्रिया पुनर्लिङादिनोच्यताम्। तथा सति लिङादेरनुवादकत्वमेव न लक्षकत्वम्। अतः सम्बन्धाप्रतीतिनिबन्धना पूर्वोक्तैव रीतिः।

इदं त्विह वक्तव्यम्—कथं कामिनो नियोज्यान्वयाभावेपि नित्यनिषेधादौ स्थायिकार्यार्थता लिङादेः। कथं च नित्यादिनियोगानां कार्यत्वं इष्टसाधनत्वाभावात्। किमवधिकं च तत्कार्यस्य स्थायित्वमिति। उच्यते। एकत्र कामिपद-

प्रकृत्यभिहितापि क्रिया प्रत्ययेन कार्ये धर्मिणि क्लृप्तसामर्थ्ये न कुर्यादितिवत् पुनरभिधीयताम्। तथा सत्यनुवादता न लक्षणासिद्धिः। अत्र वृत्तिग्रन्थेऽभिहितम्—ननु क्रियैव कार्यतयोच्यताम्। फलसाधनता च तस्या एव श्राव्यताम्। तदुपपत्त्यर्थञ्चापूर्वं परिकल्प्यतां माभूदपूर्वस्य लिङादिवाच्यतेति। उच्यते। तद्धि तदुपपत्त्यर्थं कल्प्यते यद्यस्योपपादकम्। न चापूर्वेण फलजनकेन कल्पितेन क्रियायाः फलसाधनतोपपादिता भवति। न हि साधनसाधनं तस्य साधनं भवति।

अत्र चोदितम्—तत्किमाग्नेयादयष्षडपि न साधनमधिकारापूर्वस्येति—

---

समभिव्याहाराल्लिङादेः स्थायिकार्ये शक्तिनिश्चये अन्यत्रापि तस्य लिङादेरेकत्वात् स एवार्थो निश्चीयते, यववराहादिशब्देषु वाक्यशेषाभावेपि यथा निर्णयः। यथा वा स्वर्गशब्दस्य तथा नित्यादिनियोगानां इष्टसाधनत्वाभावेपि स्वतः प्रमाणशब्दबलात् कार्यत्वम्। न हि इष्टत्वं तत्साधनत्वं वा अनिष्टपरिहारस्तत्साधनत्वं वा स्वरूपतः कार्यं अन्योन्यव्यभिचारात्। किन्तु पुरुषार्थत्वेन। तच्च तेष्वन्वयव्यतिरेकमूलप्रत्यक्षादिगम्यम्। तदिह नित्यादिनियोगेपि शब्दमानबलादिति प्रपञ्चितं कलञ्जनये।

अथेष्टसाधनत्वात्कार्यत्वमिति वदता नित्याद्यपूर्वे व्यापकनिवृत्त्या व्याप्यनिवृत्त्यनुमानमुपन्यस्तं भवति। कार्यत्वं हि इष्टसाधनत्वादिव्याप्तम्। तच्चेष्टसाधनत्वादि निवर्त्यमानं कार्यत्वमेव निवर्तयतीति। तच्च सिद्धे नित्यापूर्वे धर्मिग्राहकप्रमाणविरोधादसिद्धे चाश्रयासिद्धेरयुक्तम्। तथा काम्यापूर्वस्य फलावधिकं स्थायित्वम। ततः परं सत्त्वे प्रमाणाभावात्। तत्र फलोत्पत्तिरेव विनाशिका नित्यादिनियोगस्य तु अधिकारसिद्धेः परतः सत्त्वे प्रमाणाभावादभावसिद्धिः। यदवधिकोऽसावभावः स एवात्मगुणो नाशकः। आत्मगुणनाश्यत्वस्य काम्यापूर्वे क्लृप्तत्वात्। यद्वा नित्यापूर्वं सम्यग्दर्शनेनैव नश्यति क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति श्रुतेः। ग्रन्थे तु नित्यापूर्वस्य सदातनत्वेपि नातीव क्षतिरित्युपेक्षितम्। अलमतिबहुना। सर्वथा क्रियातिरिक्ते स्थायिकार्येऽपूर्व एव लिङादेः शक्तिरन्यत्र लक्षणेति सिद्धम्। अत्रापूर्ववाक्यार्थविषये चोद्यं तत्समाधानं च वाक्यार्थमातृकायां शालिकनाथेनोक्तं तदनुभाषते—अत्रेति। लोकव्युत्पत्तिवशात् क्रियाकार्यमेव लिङादिनोच्यते नत्वपूर्वकार्यम्। तद्व्युत्पत्तौ प्रमाणाभावादित्यर्थः। ननु कामिपदसमभिव्याहारात् काम्यसाधनमेव कार्यतया लिङादिवाच्यम्। कालान्तरभाविफलसाधनत्वं च न क्षणिकायाः क्रियाया इति कथं

इदमत्राभिसंहितम्—अधिकारापूर्वस्य अवान्तरापूर्वव्यवहितत्वात् साधनसाधनतापत्तेः आग्नेयादीनामधिकारापूर्वं प्रति न साधनतेति प्रतिबन्दी दूषणम्। अत्रेदमेतावद्वक्तव्यम्। उक्तं हि क्रिया क्षणिकतया कालान्तरभाविनि फले साक्षात्साधनभावायोग्या न कार्यतया शब्देनावबोधयितुं शक्या। अथापूर्वव्यवहितसाधनभावेन योग्या। नैवम्। अपूर्वकल्पनातः

---

क्रियाकार्यतयोच्यते इत्यत्राह—फलसाधनता चेति। कालान्तरभाविन्यपि फले शब्दबलात् क्रियासाधनत्वक्लृप्तेः कार्यतया तदभिधानं युक्तमित्यर्थः। ननु क्षणिकस्य कथं कालान्तरभाविफलसाधनत्वमुपपद्यते ? कथं चानुपपन्नं शब्दो वक्तीत्यत्राह—तदुपपत्त्यर्थं चेति। क्रियाया अपूर्वजननद्वारेण स्वर्गादिजनकत्वसम्भवात् शब्दावगतसाधनत्वोपपत्त्यर्थं श्रुतार्थापत्त्या अपूर्वं कल्प्यताम् माभूदपूर्वस्य लिङादिवाच्यतेत्यर्थः इतिकरणं चोद्यसमाप्तौ।

उच्यत इति। तन्नाम तस्य कल्प्यते यदन्यस्य साधनत्वमुपपादयति अनुपपादकत्वे कल्पनायोगादित्यर्थः। ततः किमित्यत्राह—न चेति। अपूर्वं हि फलजनकत्वेनैव कल्प्यम् तदभावे कल्पनावैयर्थ्यात्। न चापूर्वेण फलजनकेन कल्पितेन क्रियायाः साधनत्वमुपपादितं भवति। साधनसाधनस्य साधनत्वायोगादित्यर्थः। एवं पञ्चिकोक्तमनुभाष्य परापादितदूषणमाह—अत्रेति। यदि साधनसाधनं न साधनं तर्हि किमाग्नेयादयो यागाः अधिकारापूर्वस्य न साधनं अन्याव्यवहितत्वात्। तथा षण्णां यागानां युगपदुत्पत्त्यभावादन्योन्याव्यवधानादपि किं न साधनत्वमित्यर्थः। नन्वधिकारापूर्वस्य स्वर्गवत् कालान्तरभावित्वाभावात् कथमाग्नेयादीनामधिकारापूर्वं प्रति व्यवहितत्वाभावान्न साधनत्वं ? किंवाऽनेन प्रश्नेन परापादितं दूषणमित्यत्राह—इदमिति। अधिकारापूर्वस्य स्वर्गवत् कालान्तरभावित्वाभावेपि अवान्तरापूर्वैः सम्भूयोपकारार्थं कल्प्यैरवश्यं व्यवहितत्वादाग्नेयादीनामधिकारापूर्वंप्रति साधनसाधनतापत्तेर्नसाधनत्वमिति प्रतिबन्दिदूषणमापादितमित्यर्थः। दूषयति—अत्रेदमेवेति। आस्तां तावत् प्रतिबन्दिदूषणं इदानीं कथं साधनत्वयोग्यात्वमित्यत्र इदमेव वक्तव्यमित्यर्थः। कथमयोग्यत्वमित्यत्राह—उक्तं हीति। क्षणिका क्रिया कालान्तरभाविनि फले साक्षात्साधनत्वायोग्या न चायोग्यामर्थं शब्दोऽभिधातुमीष्ट इति न सा कार्यतया शब्देनावबोधयितुं शक्येत्यर्थः।

ननु यथा आरोग्यकामो भेषजं पिबेदिति भेषजपानस्य कालान्तरभाविन्यारोग्यफले धातुसाम्याव्यवहितसाधनतया साधनत्वं तथाऽत्रापि यागस्य क्षणिकस्यापूर्वव्यवहितसाधनभावेन स्वर्गसाधनतायोग्यतेति चोदयति—अथेति।

पूर्वमपूर्वव्यवहितसाधनभावेनापि न योग्यतां यातीति नान्विताभिधायितेति किमुपपादनायापूर्वं कल्प्यताम्। आग्नेयादयस्तु परमापूर्वसाधनत्वयोग्याः अपूर्वस्य कर्मानन्तरभावसम्भवात्। अतोऽपूर्वसाधनतया शक्यते शब्देन बोधयितुम्। उदीच्याङ्गजन्योपकारोपयोगसिद्ध्यर्थन्त्ववान्तरापूर्वपरिग्रहेऽन्यतो जाते तदनुरोधादन्यव्यवधानावगतेः व्यवहितं साधनत्वमास्थीयते। अतः पूर्वं योग्यतावगमादन्वयः कारणान्तरतो व्यवहितसाधनत्वमिति सिद्धं वैषम्यं आग्नेयादिभिरिति न प्रतिबन्दिदूषणम्।

---

मैवमिति। युक्ता भेषजपानादौ व्यवहितसाधनभावेनापि कार्यता। अन्वयव्यतिरेकतस्तथैवावगतेः। इह त्वपूर्वकल्पनातः पूर्वं अपूर्वव्यवहितसाधनभावस्य मानान्तरतोऽनवगतेः साक्षाच्च क्षणिकस्य यागस्य कालान्तरभाविनि फले साधनत्वाभावादयोग्यता नान्विताभिधायितेति न तदुपपादनायापूर्वकल्पना, अन्विताभिधानपर्यवसानोत्तरकालभावित्वाच्छ्रुतार्थापत्तेः। उपादानमपि अपूर्वस्य वाक्यार्थत्वे सति नान्यथेति न ततोऽपि फलसाधनत्वकल्पना युक्तेति भावः।

एवं साधनत्वायोग्यत्वमुपपाद्यावसरप्राप्तां प्रतिबन्दीं दूषयति—आग्नेयेति। युक्तमाग्नेयादेः परमापूर्वं प्रति साधनत्वयोग्यत्वं परमापूर्वस्य अपूर्वतया, अवान्तरापूर्ववत् क्रियानन्तरभावित्वसम्भवात्, अतो योग्यत्वात् परमापूर्वसाधनता शक्यते शब्देन बोधयितुमिति न तत्रान्विताभिधानानुपपत्तिरित्यर्थः। ननु तर्हि किमिति व्यवधिरास्थीयत इत्यत्राह—उदीच्येति। नहि तत्र साक्षात्साधनभावायोग्यतयाऽवान्तरापूर्वकल्पनाद्व्यवधिः। किन्तु प्राच्योदीच्याङ्गसाहित्यजन्योपकारान्वयसिद्ध्यर्थमङ्गप्रधानापूर्वस्वीकारे जाते तदनुरोधादवान्तरापूर्वव्यवधानावगतेः व्यवहितसाधनत्वमास्थितम्। अतस्तत्र योग्यत्वात् परमापूर्वसाधनतया पूर्वमन्वये पश्चात् कारणान्तरत एव व्यवधिरित्यर्थः। नन्वेवं स्वर्गस्यापि फलत्वेन सामान्यतो योग्यतयाऽन्विताभिधाने को विरोधः येन प्रतिबन्दिवैषम्यमित्यत्राह—इति सिद्धमिति। स्वर्गस्य हि कालान्तरभावित्वमेव स्वभावः इति क्षणिकेन यागेन साध्यसाधनतयान्वयायोग्यता, परमापूर्वस्य तु न कालान्तरभावित्वमेव स्वभावः निषेधविषये उपकारावच्छेदेचानन्तरं भावात्। अतस्तत्रापूर्वतया सामान्येन योग्यत्वादन्विताभिधानसम्भवः। स्वर्गे तु नैवमिति सिद्धं वैषम्यमाग्नेयादिभिरिति न प्रतिबन्दिदूषणमित्यर्थः।

नन्वेवं यागस्य स्वर्गसाधनत्वायोग्यत्वे स्वर्गं प्रति कारणत्वमपि न स्यादिति

यदा चापूर्वं लिङाद्यर्थः तदा चापूर्वव्यवधाना[1]वगमपूर्वकमेव यागादेरपि फलसाधनत्वयोग्यतया फलं प्रति करणीभूतस्यैव विषयतान्वयः। अपूर्वं च प्रत्यपि विषयत्वपूर्वकमेवापूर्वं प्रति करणत्वं युक्तम्। अतो व्यवधायकापूर्वाधीनत्वात् फलकारणतायाः उपादानतस्तदवगतिरुक्ता। फलकारणताया एवापूर्वकारणत्वपर्यन्तत्वादपूर्वं प्रति कारणताप्युपादानत एव। शंय्यौ त्विह व्युत्पन्नेऽपूर्वव्यवहितसाधनताप्रकारे क्षणिकस्या-

कथं फलं प्रति करणीभूतस्यापूर्वं प्रति विषयता। तदभावे वा कथं तत्पूर्वकमपूर्वं प्रत्यपि करणत्वमित्यत्राह—यदा चेति। स्यादेतत्सर्वमनुपपन्नं यद्यपूर्वं कल्प्यं स्यात् यदा त्वपूर्वं लिङाद्यर्थतयाऽङ्गीक्रियते तदा नानुपपन्नं लिङर्थापूर्वव्यवधानावगमपूर्वकमेव यागादेः क्षणिकस्यापि व्यवधानविधया फलसाधनत्वयोग्यत्वात् फलं प्रति करणत्वमप्यस्तीति युक्तं फलकरणीभूतस्यापूर्वविषयत्वं तत्पूर्वकं चापूर्वं प्रत्यपि करणत्वं युक्तमित्यर्थः। नन्वत्र वाक्यार्थमातृकायां शालिकानाथेन फलकरणत्वावगतिरुपादानत इत्युक्तं तत्कथमुपादानस्यापूर्वप्रतीत्युत्तरकालभावित्वेन फलकरणत्वस्य तदगम्यत्वायोगात् तस्यापूर्वप्रतीतेः पूर्वभावित्वादित्यत्राह—अतो व्यवधायकेति। यतोऽपूर्वव्यवधानपूर्वकमेव यागादेः फलसाधनत्वयोग्यतया फलकरणता अतो व्यवधायकापूर्वाधीनमेव यागस्य फलनिर्वर्तकत्वमिति उपादानतस्तदवगतिरुक्ता।

एतदुक्तं भवति। [2]प्रतिसंहितफलकरणत्वस्यैव यागादेरपूर्वविषयत्वं विषयान्वितत्वेव लिङादेरपूर्वाभिधानं, अतः फलकरणत्वेन विना विषयान्वितापूर्वाभिधानापर्यवसानात् अभिधानाभिधेयापर्यवसानाधीनकल्पनारूपोपादानतः फलकरणत्वावगतिरित्युक्तेति। नन्वेवमपूर्वं प्रति करणतयाः कथमुपादानाधीनता अपूर्वं प्रति विषयत्वपूर्वकत्वादपूर्वं प्रतिकरणतायाः। अतो विषयान्वितकार्याभिधानदशायां तस्याननुसंहितत्वेन व्यवधायकापूर्वाधीनत्वाभावादित्यत्राह—फलकरणताया इति। फलापूर्वयोरेकतोऽविभागेन साध्यत्वात् फलकरणताया एवापूर्वकरणतापर्यन्तत्वात् अतः विषयान्वितकार्याभिधानदशायां तस्याननुसंहितत्वेन व्यवधायकापूर्वाधीनत्वाभावात् अपूर्वं प्रत्यपि करणत्वमौपादानिकमित्यर्थः। ननु "योऽपगुरातै तं शतेन यातयात्" इत्यत्र क्षणिकस्यापगोरणस्य कालान्तरभाविस्वभावशतयातनायां साधनत्वायोग्यतया नान्विताभिधायितेति युष्मन्मते कथं दुरितापूर्वकल्पनमित्यत्राह शंयाविति। शंयौ तु इह स्वर्गकामो यजेतेत्यादौ अपूर्वव्यवहितसाधनताप्रकारस्य

१. वगमेऽपूर्वमेव B
२. B अतिसन्निहित

प्यपगोरणस्य कालान्तरभाविशतयातनासाधनत्वयोग्यतासम्भवे साधनत्वेनान्वये सति तदुपपत्तये अपूर्वकल्पना युक्ता ।

ननु लोके सस्यादौ कृष्यादेः साधनसाधनस्यापि साधनत्वव्यवहाराल्लौकिकत्वाच्च साधनभावस्य फले व्यवहितापि क्रिया साधनभावयोग्येत्यन्विताभिधायिता। तदुपपत्तये चापूर्वं परिकल्प्यताम् इत्याग्नेयादिसाम्यमेवेति नापूर्वं लिङाद्यर्थः । नैवम् । स्वर्गकामितारूपेणाव्यवहितमेवापूर्वं स्वर्गोपायं नियोज्यः कार्यतयाऽवैति । यो हि यदिच्छतीति न्यायात्, अन्येनाप्युक्तम् "पुरुषार्थो यदा येन" इत्यादिना ( वि. विवेक २५ ) अतो न स्वर्गकामो व्यवहितसाधनं यागादि कार्यतयाऽवबोद्धुमलम् ।

---

व्युत्पन्नत्वात् क्षणिकस्याप्यवगोरणस्य कालान्तरभाविशतयातनायां साधनत्वयोग्यत्वमिति योग्यताबलादन्वये निश्चिते श्रुतान्वयोपपत्त्यर्थं मध्ये दुरितापूर्वकल्पनं युक्तमेव । स्वर्गयागयोस्त्वपूर्वकल्पनातः पूर्वं नान्विताभिधानयोग्यतावधृतिरिति न तत्र तत्कल्पनावकाश इति शंयुप्रतिबन्दिदूषणमपि परापादितं न युक्तमित्यर्थः ।

अत एव कृषिप्रतिबन्दिदूषणं न युक्तमिति वक्तुं चोद्यं प्रकटयति—ननु लोक इति । लौकिकं हि साधनत्वं, लोके च कृष्यादेः सस्यादौ साधनसाधनस्यापि साधनत्वव्यवहार इति यागादिक्रियायाः स्वर्गादिफले व्यवहिताया अपि साधनत्वयोग्यत्वादन्विताभिधाने जाते तदुपपत्तये अपूर्वं कल्पयितुं युक्तमिति आग्नेयादितौल्यान्नापूर्वस्य लिङाद्यर्थतेत्यर्थः । नैवमिति । सत्यं कृष्यादेरिव यागादेः व्यवहितसाधनत्वं न साक्षात् । अत एव न तस्य कामिनियोज्यकार्यतया शब्देनाभिधानं कामी हि नियोज्यः स्वर्गकामित्वरूपेणाव्यवहितमेव साधनं कार्यतयाऽवैति इति तदेव लिङाद्यर्थं इत्यर्थः । उपसंहरति—अतः स्वर्गेति ।

नन्वेवं फलं परमापूर्वं च प्रत्याग्नेयादीनां व्यवहितसाधनतया साधनत्ववत् करणत्वमपि न स्यादित्यत्राह—अतो यद्यपीति । सत्यमाग्नेयादेः फले परमापूर्वे च व्यवहितमेव साधनत्वं तथापि आग्नेयादीनामेव फले परमापूर्वे च करणत्वं तेषामेव कर्तृव्यापारगोचरत्वात् । यद्यपि फले परमापूर्वमव्यवहितसाधनं तथापि न तत् कर्तृव्यापारगोचर इति न फले करणम् अपूर्वं तु नियोज्यकृतिव्याप्यं न कर्तृकृतिव्याप्यमिति कर्तृव्यापारगोचरः । यद्यप्येकैवकृतिः प्रवाहनुवृत्ता नियोज्यसम्बन्धिनि कर्तसम्बन्धिनि च व्यापाररूपा तथापि कर्तृनिरूपितत्वेन रूपेण कृतिगोचरत्वा-

अतो यद्यपि स्वर्गकामः परमापूर्वं कार्यतयाऽवैति न त्ववान्तरापूर्वं परमापूर्वकामस्तु अव्यवहितोपायमाग्नेयाद्यपूर्वमेव कार्यतयाऽवैति । आग्नेयाद्यवान्तरापूर्वकामस्तु आग्नेयादिकं कार्यतयाऽवैति इति क्रमायातं फलं प्रत्याग्नेयादीनां परमापूर्वं च प्रति व्यवहितमेव साधनत्वम् । अतो यद्यपि फलं परमापूर्वं च प्रति व्यवहितमेव साधनत्वं तथाप्याग्नेयादीनामेव फलशिरस्के परमापूर्वे करणत्वं तेषामेव कर्तृव्यापारगोचरत्वात् । कर्तृव्यापारगोचरस्य साध्यव्यवहितस्यापि करणत्वात् । अतः स्वर्गे व्यवहितत्वात् न यागं नियोज्यः कार्यतयाऽवैति । करणता तु व्यवहितस्यापि यागादेः युक्तेति दूरत एव प्रतिबन्दिसंभावना ।

ननु साधकतमं करणम् अव्यवधानञ्च तमबर्थः, तत्कथं व्यवहितस्यापि यागादेः करणत्वम् । मैवम् । ततोऽपि व्यवहितापेक्षया विवक्षातो यागस्य

---

भावात् परमापूर्वस्य लोके च कर्तृनिरूपितकृतिरूपव्यापारगोचरस्यैव करणत्वदर्शनान्न तस्य करणतायोग्यता कर्तृव्यापारगोचरत्वं चोपादेयस्यैव नान्यस्येति व्यवहितसाधनस्याप्याग्नेयादेरेव करणत्वं अपूर्वस्य तु फले साधनत्वमेवेति भावः ।

ननु कर्तृव्यापारगोचरत्वेपि आग्नेयादेर्व्यवहितसाधनत्वान्न करणता युक्तेत्यत्राह—कर्तृव्यापारेति । लोके कर्तृव्यापारगोचरस्य काष्ठादेः ज्वालाद्यवान्तरव्यापाररूपसाध्यव्यवहितस्यापि पाकादौ करणत्वदर्शनात् यथालोकं वेदेऽप्याग्नेयादेः व्यवहितसाधनस्यापि कर्तृव्यापारगोचरतया करणत्वं युक्तमेवेत्यर्थः । अत इति निगमनम् ।

ननु व्यवहितस्य करणत्वं शाब्दस्मृतिविरुद्धमिति चोदयति—नन्विति । मैवमिति । आपेक्षिकत्वाद्व्यवधेः अव्यवधेश्चाग्नेयादियागतोऽपि व्यवहितं समिदादि तदपेक्षयाऽऽग्नेयादेरव्यवहितत्वात् करणत्वसिद्धिः। लोके विवक्षाधीनत्वात् करणानाम् वेदे तु विवक्षास्थानीयात् तात्पर्यावधारणात् । ततोऽपि व्यवहितापेक्षया यागस्य करणत्वसिद्धिरित्यर्थः । ननु लोके साधनत्वस्यानन्तर्य एव दृष्टेः साधनत्वविशेषः करणत्वमानन्तर्य एव भवतीति कथं व्यवहितस्याग्नेयादेः करणत्वमिति चोदयति—

---

१. B यत्स्वर्गसाधनस्य साधनं तदेव कार्यतयाऽवैति ।

करणत्वसिद्धेः। ननु आनन्तर्ये साध्यसाधनभावो दृष्टः। यच्च कृषेः सस्यसाधनत्वं तत्रापि कृषिशब्देन फलपर्यन्त एव व्यापारनिचयो विवक्षितः। तस्य चानन्तर्यात् साधनता युक्तैव। मैवम्। इहाप्याग्नेयादीनां सावान्तरापूर्वाणामेव करणत्वं विवक्षितं यत एव सावान्तरापूर्वस्य करणत्वम्। अत एव यागांशे विनष्टेऽप्यवान्तरापूर्वांशे उपकारः कृतः-करणोपकार इष्यते। यथा च यागस्य सावान्तरापूर्वस्य परमापूर्वानन्तर्यं तथाऽवान्तरापूर्वपरमापूर्वद्वययुक्तस्य फलानन्तर्यमपि युक्तमिति फलशिरस्कापूर्वे करणत्वमपि युक्तमिति। केवलस्य त्वाग्नेयादेः साधनसाधनत्वम्। अतोऽपूर्वद्वयावगतेः प्राक् स्वर्गं प्रति साधनसाधनमाग्नेयादिक्रिया न तस्य साधनमित्युक्तम्। अतो न तां कार्यतया स्वर्गकामोऽवबुध्यत इति सिद्धम्।

केचित् प्रतिबन्दिसमाधानमेवमाहुः—यथा शंयाववगतसाधनभावोपपत्तयेऽपूर्वकल्पना युज्यते। विद्यमानापगोरणजन्यतदपूर्वमवान्तरव्यापारः सम्भवति, तथा आग्नेयादिक्रियाभिरपि विद्यमानैरेव स्वावान्तरापूर्वाणि जनितानि अवान्तरव्यापारभूतानीति युक्तं तद्द्वारेण परमापूर्वसाधनत्वं

---

नन्विति। ननु कृष्यादेः सावान्तरव्यापारस्यैव करणत्वदर्शनात् कथमव्यवहितस्यैव करणत्वमित्यत्राह - यच्चेति। समीहितफलपर्यन्तव्यापारनिचयस्यैव कृषिशब्दवाच्यतया विवक्षितत्वात् तस्य चानन्तरितत्वा[1]त् साधनता युक्तेत्यर्थः। मैवमिति। तुल्यमत्राप्याग्नेयादीनां सावान्तरापूर्वाणामेव परमापूर्वं प्रति करणत्वस्य विवक्षितत्वादव्यवहितमेव करणत्वमित्यर्थः। युक्तं चैतदित्याह—अत एवेति। एवं फलं प्रति करणत्वमाग्नेयादीनामव्यवहितमित्याह—यथेति। नन्वेवमाग्नेयादीनां साधनसाधनत्वमेव न साधनत्वमिति पूर्वोक्तं विरुद्धमित्यत्राह—केवलस्येति। केवलाग्नेयाद्यभिप्रायात्तदुक्तमित्यर्थः। अत इति निगमनम् सर्वमेतत्करणत्वं साधनत्वं चाविविच्य यथाग्रन्थमुक्तम्। उत्तरत्र विविच्य स्वयमेवोक्तः।

प्रकाशेन तु प्रतिबन्दिसमाधानमन्यथा—यद्विद्यमानेनावान्तरव्यापारिणा जन्यते तस्यावान्तरव्यापारता यथा काष्ठे ज्वालायाः आग्नेयादौ चोत्पत्त्यपूर्वस्य अवगोरणे च दुरितापूर्वस्य, अतः काष्ठस्याग्नेयादेरवगोरणस्य च पाके परमापूर्वे शतयातनायां चाव्यवहितमेव साधनत्वं अवान्तरव्यापारस्य साधनत्वव्यवधाय-

---

१. B नन्तरत्वात्।

नतु परमापूर्वमवान्तरव्यापारः विनष्टेष्वाग्नेयादिषु तदुत्पत्तेरिति प्रतिबन्दिवैषम्यम्। तदयुक्तम्। विद्यमानेन जनितेऽप्यवान्तरव्यापारे यदवान्तरव्यापारजनितं परमापूर्वं न तदवान्तरव्यापार इति कथं तद्द्वारेणाग्नेयादीनां फलं प्रतिकरणतेति मतम्।

अथ विद्यमानजनितजन्यमप्यवान्तरव्यापारभूतमपि साधनभावं निर्वाहयतीत्युच्यते तर्ह्यवान्तरापूर्वाणामङ्गप्रधानसाहित्यार्थं स्वीकृतानामप्यवान्तरतामङ्गीकृत्य तज्जनितपरमापूर्वस्य किमिति कर्मणः साधनतानिर्वाहाय तत्कल्पना नेष्यते। अथनेदं परमतमिति चेत् न, पार्श्वस्थशङ्कापि निराकरणीयेत्ययुक्तमुक्तम्। न चैवं प्रतिबन्दीसमाधानं युक्तं—अर्थापत्त्या हि तत्कल्प्यते। यदुपपादकत्वेनावगतम्। न चापूर्वव्यवधानतः साधनत्वमवगतम्। शब्देन त्वसन्निकृष्टार्थेन व्यवधानेनाप्याग्नेयादीनां करणत्वं

---

कत्वाभावात्। परमापूर्वं तु नावान्तरव्यापारः विनष्ट एवाग्नेयादौ तु तदुत्पत्तेः विद्यमानजनितत्वात्। अतो न यागस्य स्वर्गं प्रति साधनत्वमवान्तरव्यापाररूपपरमापूर्वव्यवहितत्वादिति प्रतिबन्दिवैषम्यमिति। तदाह—केचिदिति। तदयुक्तमिति। विद्यमानजनितत्वस्यावान्तरव्यापारलक्षणत्वं यदवान्तरव्यापारापूर्वजन्यं परमापूर्वं न तस्यावान्तरव्यापारतेति कथं तद्द्वारा आग्नेयादेः फलं प्रति करणत्वमित्यव्याप्तेर्नैवं लक्षणमित्यर्थः।

नन्ववान्तरव्यापारभूतमपि साधनत्वनिर्वाहकमेवेति शङ्कते—अथेति। दूषयति—तर्हीति। तादृशस्य परमापूर्वस्य फलं प्रति करणत्वनिर्वाहकत्ववत् कर्मणः साधनत्वनिर्वाहकत्वसम्भवात् तत्कल्पनापि युक्तैवेति न प्रतिबन्दिसमाधिः स्यादित्यर्थः। ननु कल्प्यापूर्ववादिनां परेषां नेदं मतम्। ते हि परमापूर्वस्यापि कर्मशक्तितां अवान्तरव्यापारतां चेच्छन्ति नत्ववान्तरव्यापारभूतस्य साधनत्वनिर्वाहकताम् एतावदेवावान्तरव्यापारस्यावान्तरव्यापारत्वं यत् समीहितफलोद्देशप्रवृत्तेन साधनेन तत्सिद्ध्यर्थमन्तरा अन्यस्य साध्यत्वम् यथाऽकाष्ठैः ज्वालाया इति वदन्तः अतो नेदं परमतमिति शङ्कते—अथेति। नेति। पार्श्वस्थशङ्काया अपि निराकार्यत्वात् भवदुक्तप्रकारेण च तस्या दुर्निवारत्वादयुक्तमित्यर्थः। अपरैस्तु अन्यथैव प्रतिबन्दिसमाधानमुक्तम् कल्प्यापूर्ववादिनोहि श्रुतार्थापत्त्याऽपूर्वं कल्पयन्ति। न च ततः तत्कल्पना युक्ता। तदेव हि नामार्थापत्त्या कल्प्यते यदुपपादकत्वेनान्यतोऽवगतम्, न चापूर्वव्यवधानेन साधनत्वमन्यतोऽवगतं, आग्नेयादौ तु व्यवधानेपि करणत्वं शब्दबलेन बोध्यम्। शब्द-

बोध्यते व्रीहिभिर्यजेतेतिवत् इति । यतो व्यवहितं साधनमेव न भवतीति लोकतोऽवधारिते कथं शब्दोऽप्ययोग्यस्य करणत्वं वदेत् । न च व्यवधानादेव समाधानं, श्रुतेर्हि षट्कविषये नियोगे नियोज्यान्वये च श्रुतषट्कस्यापादितकरणत्वस्य संभूयसाधनतानिर्वाहायार्थापत्तिराग्नेयाद्यपूर्वाण्यभिधेयानि कल्पयतु क्रियाकार्ये त्वयोग्ये न नियोज्यान्वयः । अतोऽन्वयाश्रुतेः न श्रुतार्थापत्त्या अपूर्वकल्पनं युक्तमिति भेदः । तन्न । यदि [1]व्यवहितमपि साधनमनुज्ञातं तर्हि क्रिया नायोग्या व्यवधानविधया । अत एवायोग्यतार्थं विधान्तरमाह न साधनसाधनं साधनतामर्हतीति । इहाग्नेयादिष्वपि नार्थापत्त्याशङ्का । न चैवं प्रतिबन्दीसमाधानं—आग्ने-

---

स्याऽसन्निकृष्टार्थत्वेन अन्यतोऽनवगतमपि शब्दबलेन बोधयितुं शक्यं व्रीहिभिर्यजेतेतिवदिति तन्नोपेयमित्याह—न चेति । तत्र हेतुः—यतो व्यवहितमिति । व्यवहितस्य साधनत्वमेव नास्तीति लोकतोऽवधारितत्वात् साधनस्यैव लोके करणत्वदर्शनात् तद्विरोधेन शब्दस्याप्ययोग्यकरणत्वाभिधानसामर्थ्याभावादित्यर्थः । व्यवहितस्यापि साधनत्वमङ्गीकृत्यैव प्रतिबन्दिसमाधानमूचुः । युक्तमाग्नेयादावर्थापत्त्याऽवान्तरापूर्वकल्पनमाग्नेयादीनां षण्णामपि यागानां विषयत्वात् तदन्विते नियोगे नियोज्या[1]न्वयश्रुतेः तस्य श्रुजयागषट्कस्य विषयभूतस्योपादानापादित करणत्वस्य सम्भूय साधनतानिर्वाहायाऽर्थापत्त्यावान्तरापूर्वाणामभिधेयतया कल्पयितुं युक्तत्वात् । क्रियाकार्ये तु न योग्ये नियोज्यान्वयः । अतोऽन्वयाश्रुतेर्न श्रुतार्थापत्त्याऽपूर्वकल्पननिति । तन्नोपेयमित्याह—न चेति । व्यवधानादिति । ल्यब्लोपे पञ्चमी । व्यवधानमङ्गीकृत्येत्यर्थः । तन्नेति । व्यवहितस्यापि साधनत्वाभ्युपगमे क्रियाया अप्यपूर्वव्यवहितसाधनभावेन फलसाधनत्वयोग्यतयाऽन्विताभिधाने तदुपपत्त्यर्थमपूर्वकल्पनमप्युचितमेवेति कल्प्यापूर्वपक्षोऽप्रतिद्वन्द्वः स्यादित्यर्थः । अस्य पक्षस्यात्यन्तायोग्यत्वसूचनाय पुनर्निषेधोक्तिः । अत्यन्तायोग्यत्वं चाग्नेयावान्तरापूर्वस्य न श्रुतार्थापत्तिकल्प्यत्वं किन्तूपादानकल्प्यत्वमेवेति यतएव व्यवहितस्य साधनत्वाङ्गीकारे क्रियाया नायोग्यता अतएवायोग्यतार्थं शालिकानाथेन प्रकारान्तरमुक्तमित्याह—अत एवेति । यदा तु व्यवहितस्य साधनत्वमेव नास्ति तदाऽऽग्नेयादिष्वपि नार्थापत्तिशङ्का अन्विताभिधानपर्यवसानाभावादित्यर्थः ।

अपरे त्वाग्नेयादिप्रतिबन्दिसमाधानमन्यथोचुः—युक्तमाग्नेयाद्यवान्तरापूर्व-

---

१. व्यवहितसाधनत्वमप्यनुज्ञातं ।

१. A नियोज्यान्विते च श्रुते ।

याद्यवान्तरापूर्वं युक्तं अवान्तरव्यापारः अनपेक्षार्थान्तरव्यापारजनितत्वात्। परमापूर्वं तु इतिकर्तव्यतापेक्षया जनितत्वात् नावान्तरव्यापारतामर्हति। तथा करणान्तरापेक्षत्वात् परमापूर्वोत्पत्तेः नावान्तरव्यापारता युक्तेति। यतः प्रसिद्धकरणस्यापि परश्वादेरितिकर्तव्यतापेक्षा ऽवान्तरव्यापारजनकता दृष्टा अनेककारणजन्यता चावान्तरव्यापारस्य दृष्टा खड्गपाणिभिः सञ्चरते राजेति। रक्षणं हि तत्र बहूनामवान्तरव्यापार इति नाग्नेयादि वैषम्यम्।

ननु स्वाभिमते समाधानेऽपि साधनसाधनं न साधनं भवतीति न समर्थितम्। यदि नावान्तरापूर्वस्याग्नेयादेरनन्तरिततया साधनत्वमिति न तर्हि साधनसाधनं किमपि स्यात् चिरातीतस्याप्युक्तरीत्या साधनत्वा-

---

स्यावान्तरव्यापारत्वं अनपेक्षावान्तरव्यापारजनितत्वात्। परमापूर्वन्तु इति-कर्तव्यतापेक्षयागजनितं नावान्तरव्यापारतार्हं अतस्तद्व्यवधायकमेव दर्शपूर्णमास-परमनियोगेत्वयमपरो विशेषः[1] करणान्तरापेक्षत्वात्तदुत्पत्तेः। अवान्तरापूर्वं न व्यवधायकम् परमापूर्वं तु व्यवधायकमेवेति। तन्नोपेयमित्याह—न चैवमिति। यत इति। लोके छेदनं प्रति करणत्वेन प्रसिद्धस्य परश्वादेः मुष्टिनिपीडनादीति-कर्तव्यतामपेक्ष्यैव उद्यमननिपतनरूपान्तरव्यापारजनकतादर्शनादित्यर्थः। तथाऽ-वान्तरव्यापारस्यापि अनेककरणजन्यत्वं लोके दृष्टमित्याह—अनेकेति। ननु खड्ग-पाणिभिः सञ्चरति राजेत्यत्र कोऽवान्तरव्यापारः? कथं चैकस्यानेककरणजन्यत्व-मित्यत्राह—रक्षणं हीति। सञ्चरणं नाम विस्रम्भगमनं राज्ञो बहुभिः खड्गपाणि-भिर्भटैः करणभूतैः साध्यते। तच्च रक्षणाभावे न स्यात्। तच्च नैकभटकार्यं राजरक्षणस्य बहुभिरेव कर्तुं शक्यत्वात्। अतो राजरक्षणमेव करणभूतभटाना-मवान्तरव्यापारः अनुधावनादि तु तदर्थमेव क्रियते नावान्तरव्यापारतया विवक्षितम्। अतोऽवान्तरव्यापारभूतरक्षणस्यानेकरणभटजन्यत्वदर्शनात् करणा-न्तरानपेक्षा नावान्तरव्यापारत्वे तन्त्रमिति नेत्थमाग्नेयादिवैषम्यमित्यर्थः।

अत्र कश्चित कृषिप्रतिबन्दिकथनवेलायां यद्ग्रन्थानुसारेण ग्रन्थार्थापात-प्रतीतेरनास्थयोक्तं तदेव सम्यगिति मत्वा चोदयति—नन्विति। कथमित्यत्राह—यदीति। यद्युक्तप्रकारेणावान्तरापूर्वस्याग्नेयादेरपि परमापूर्वं प्रत्यव्यवहितसाधनत्वं तर्हि लोके किमपि किञ्चिदपि साधनसाधनं न स्यात् चिरातीतस्यापि साधना-

---

1. B भेदः।

पत्तेः । नैवम् । अत्रेदं दर्शनरहस्यम् । साधनं हि कारणं हेतुरिति यावत् । तच्चानन्तरमव्यवहितमेव । यदनन्तरमेव यन्निष्पद्यते तत्तस्य साधनमिति लोकप्रसिद्धम् । अतो न परमापूर्वे कल्पिते क्रियाया अन्तरितायाः साधनतानिर्वाहः । साधनं च कार्यतया स्वर्गकामः कामित्वरूपेण बोद्धुमलम् अतो यदेवानन्तरिततया सम्भावितमपूर्वं तदेव कार्यं लिङादिभिर्वचनीयम् । अन्यार्थप्रवृत्तकृतिव्याप्यतया करणत्वमेवाग्नेयादीनां युक्तम् । तच्च साध्यभूतफलापूर्वभावनायामेव यदेतत्फलापूर्वयोः करणत्वमिति व्यपदि-

---

न्तरव्यापारस्याग्नेयादावुक्तरीत्या साधनत्वापत्तेः । ततश्च कालान्तरभाविनि स्वर्गादौ चिरातीताया अपि यागक्रियायाः साधनत्वयोग्यत्वात् साधनत्वेनान्वये श्रुते तदुपपत्त्यर्थमपूर्वकल्पनापत्तिरित्यर्थः । परिहरति—अत्रेदमिति । व्यवहितं साधनमेव न भवति, यतः साधनं कारकोहेतुरिति समानार्थः । ननु साधनमेव कारणं भवतु तथापि कथं व्यवहितस्यासाधनत्वमित्यत्राह तच्चेति । यदनन्तरं यन्निष्पद्यते तत्तस्य साधनं कारणमित्यव्यवहितस्यैव लोके साधनत्वप्रतीतेरित्यर्थः । एवं सामान्यतः सिद्धं प्रकृते निगमयति—अत इति । यतो व्यवहितं साधनमेव न भवति अतः परमापूर्वे कल्पिते क्रियायाः साधनता न निर्वाहिता । कल्पितेन तेन व्यवहितत्वादित्यर्थः । नन्वसाधनत्वेपि क्रियाकार्यतया शब्देनोच्यतामित्यत्राह–साधनं चेति । कामी हि नियोज्यः कामित्वरूपेण स्वकाम्यमानफलसाधनमेव कार्यतयाऽवैति नान्यदिति नासाधनभूतायाः क्रियायाः कार्यतया शब्देनाभिधानम् । लोकेपि तैलपानादौ पुष्टिकामो धातुसाम्यं कार्यतयाऽवैति । तत्कामस्तु तैलपानं ननु पुष्टिकाम एव तैलपानं अव्यवहितस्यैव साधनत्वनियमात् । व्यवहिते तु साधनत्वव्यवहार औपचारिक एवेति भावः ।

ननु यद्यसाधनतया क्रिया न कार्या तर्हि कामी नियोज्यः किं कार्यतयाऽवैतीत्यत्राह–अतो यदेवेति । नन्वाग्नेयादियागक्रियाया अवान्तरापूर्वव्यवहिताया अपि यथा परमापूर्वं प्रति साधनता तथा परमापूर्वान्तरिताया अपि फलं प्रत्यस्तु तत्राह–अन्यार्थेति । आग्नेयादिक्रियायाः फलं परमापूर्वं च प्रति कर्तृव्यापारगोचरतया करणत्वमेव युक्तं न साधनत्वमित्यर्थः । ननु करणत्वमप्याग्नेयादिक्रियायाः फलापूर्वे प्रति न युक्तं तयोः साध्यत्वेप्यक्रियारूपत्वेन तत्र करणान्वयायोगादित्यत्राह—तच्चेति । तच्चाग्नेयादीनां करणत्वं साध्यभूतयोः फलापूर्वयोर्या भावनाभाव्योद्देशप्रवृत्ता कृतिस्तस्यामेव, तस्याः क्रियारूपत्वात् यदेव फलापूर्वभावनायां करणत्वं तदेव फलापूर्वे प्रति करणत्वमिति व्यापदिश्यते परम् । ननु किमित्येवमङ्गीक्रियते

श्यते। वस्तुतस्तु भावनारूपक्रियायामेव करणकारकान्वयो युक्तः न व्यापारभूतापूर्वफले प्रति। भावनानन्तरतया च यागस्य तस्यां करणत्वं युक्तम्।

नन्वनन्तरत्वेपि विपरीतमिदम् प्रयत्नरूपभावनात एव यागनिष्पत्तेः न यागस्य तत्र करणता युक्ता; मैवम्, यद्यपि प्रयत्नस्वरूपनिष्पत्तौ न यागस्य करणता तथापि फलापूर्वभावनारूपता यागाधीनेति यागस्य भावनायां करणतेति यथा प्रसिद्धकरणस्य परशोरुद्यमननिपातनस्वरूप-

---

यावता फलापूर्वोत्पत्तावेव क्रियारूपायामन्तरङ्गायां करणत्वमस्त्वित्यत्राह—वस्तुत इति। करणत्वं हि कारकविशेषः। तच्च तावत् क्रियायामेव स्वतो युक्तम् न फलापूर्वस्वरूपे तस्या व्यापाररूपत्वात्। तत्रापि नोत्पत्तिक्रियायामशब्दोपात्तत्वात्। किन्तु भावनारूपक्रियायामेव धात्वनुपात्ताया अपि तस्याः समभिव्याहृतलिङा शब्दोपात्तत्वात्। किञ्च उत्पत्तेरुत्पद्यमानाव्यतिरिक्तार्थत्वेन तस्या अक्रियात्वे उत्पत्तेरपि तथात्वात्। अतो भावनायामेव कारणकारकान्वयो युक्त इति नाव्यापारभूतफलापूर्वं प्रति साक्षादित्यर्थः। इतोऽपि भावनाया एव करणत्वमित्याह—भावनेति। भावनां प्रत्यनन्तरतयाऽव्यवहिततया च यागस्य तस्यां भावनायामेव करणत्वं युक्तम्। यद्यपि लोके सिद्धस्यैव परश्वादेः क्रियायां करणत्वं दृष्टं तथाप्योदनं पचतीत्यस्य पाकेनौदनं करोतीत्यर्थ इति विवरणात् साध्यरूपाया अपि क्रियाया लोके एव करणत्वदर्शनात् फलशिरस्कापूर्वभावनायां अन्यस्य सिद्धस्याव्यवहितस्य करणस्य योग्यस्याभावात् यागस्यैव फलापूर्वभावनायां करणत्वमित्यर्थः।

ननु भवत्वेवं भावनानन्तरत्वं तथापि निष्पाद्यनिष्पादकत्वं विपरीतं, प्रयत्नरूपयागभावनयैव यागनिष्पत्तेः। अतो निष्पाद्यस्य यागस्य निष्पादिकायां करणत्वं कथमिति चोदयति—नन्विति। मैवमिति। सत्यं प्रयत्नस्वरूपं यागनिष्पादकमिति न तत्र यागस्य करणता किन्तु प्रयत्नस्य फलशिरस्कापूर्वभावनात्वं यद्रूपान्तरं फलशिरस्कापूर्वे साधनतया योगित्वमिति यावत् तद्यागाधीनमेव साक्षात् स्वजन्ययागनिर्वाह्यत्वात्तस्य। अतो यागस्य भावनारूपे करणत्वमेवेत्यर्थः। एकस्यैव रूपान्तरे कर्मणोऽपि रूपान्तरे करणत्वमित्यत्र दृष्टान्तमाह—यथेति। उद्यमननिपतनजन्यसंयोगफलभागितया परशोस्तद्रूपव्याप्यतया तत्स्वरूपसाध्यतया अनीप्सितकर्मणोऽपि परशुना छिनत्तीति छिदिरूपे यथा लोके करणत्वं प्रसिद्धं तथेत्यर्थः। ननु परशोरुद्यमननिपतनरूपक्रियान्तरे साध्यत्वं छेदनरूपक्रियान्तरे करणत्वमिति नैकस्यां क्रियायां रूपान्तरेण साध्यत्वं करणत्वं चेति विषमो दृष्टान्त

व्याप्यतयाऽनीप्सितकर्मता। द्विधाभवनफलोद्देशप्रवृत्तयोस्तूद्यमननिपातनयोः फलावच्छेदलब्धद्वैधीकरणव्यपदेशयोः छिदिधातुवाच्ययोः परशुः करणं द्वैधीकरणरूपतायाः परश्वधीनत्वात्। एवं चाग्नेयादीनां फलशिरस्कापूर्वभावनायां करणत्वं उदीच्याङ्गजन्योपकारसहकारिणः कारणत्वावगतेः तदुपकारसमये च यागस्यानवस्थाने सहत्वासम्भवात्। तदधीनभावनात्वासम्भवेऽपि यागजन्यावान्तरापूर्वस्वीकारे साधनसाधनतानुप्रवेशेऽपि न भावनातो व्यवहितमाग्नेयादीनां करणत्वम्।

---

इत्याशङ्क्य दृष्टान्तमुपपादयति—द्विधाभवनेति। सर्वत्रानेकेषु क्रियाकरणेषु एकफलावच्छेदेनैव धातोः वृत्तेः छिदिधातुरपि तथैव वर्तते। द्वैधीकरणार्थत्वेन छिदिधातोः स्मृतेः। द्विधाभवनफलोद्देशेन प्रवृत्तयोः उद्यमननिपतनयोः तत्फलावच्छेदलब्धद्वैधीकरणव्यपदेशयोः छिदिधातुवाच्यता। अत उद्यमननिपतनयोरेव छिदिधातुवाच्यता। अतस्तयोर्द्वैधीकरणरूपता परश्वधीनेति उद्यमननिपतनरूपकरणत्वमेवेत्यर्थः। दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—एवमिति। यद्यप्यन्यकरणस्य अन्यकरणत्वविरोधात् फलभावनाकरणस्याग्नेयादेः अपूर्वभावनाकरणत्वमयोग्यम् तथापि फलस्य साध्यविवृद्धिरूपतया फलशिरस्कमपूर्वमेकमेव साध्यमित्यत्यन्तानन्यत्वाद्युक्तमुभयत्राग्नेयादीनां करणत्वमित्यर्थः।

नन्वेवं आग्नेयादेरपूर्वभावनाकरणत्वे तदनन्तरमेव तन्निष्पत्तिर्वाच्या। तन्निष्पत्तिश्चापूर्वनिष्पत्त्यधीनेति अनन्तरमेव परमापूर्वष्पित्तेर्नावान्तरापूर्वकल्पकावकाशः तत्कल्पने वा कथमव्यवहितं करणत्वमित्यत्राह—उदीच्येति। अपूर्वभावनायामवगतकरणत्वस्यैवावान्तरापूर्वाकल्पनेऽनुपपत्तेः अवान्तरापूर्वमवश्यं कल्प्यम्। तदनुपपत्तिश्चैवम्—उपकारसहकारिण एवाग्नेयादेः करणत्वम्। उपकारश्च प्राच्योदीच्यैः सर्वैरङ्गैरेक एव साध्यः। अतः क्षणिकस्याग्नेयादेः यावदुदीच्याङ्गजन्योपकारसाहित्यमनवस्थितेः तत्साहित्याभावात् तद्भावनाकरणत्वमनुपपन्नमेव। ततश्च तदधीनापूर्वभावनात्वमपि न सम्भवतीति तत्सर्वोपपत्तयेऽवान्तरापूर्वं कल्प्यम्। न चैवं तत्स्वीकारे करणत्वव्यवधानं साधनत्वकरणत्वयोर्भेदात्। ततश्च साधनसाधनत्वानुप्रवेशेपि न भावनापेक्षया करणत्वं व्यवहितमित्यर्थः। नन्वेवं यागस्य फलभावनायामप्यव्यवहितमेव करणत्वमिति कामिनियोज्यान्वयोऽपि करणत्वेन कार्यतयाऽपूर्वकल्पनातः पूर्वमपि योग्य एवेति क्रियैव कार्यतया लिङादिनोच्यताम् ततश्च तदुपपत्त्यर्थं मध्येऽपूर्वप्रवेशेन साधनत्वानुप्रवेशेपि फलभावनायां करणत्वं साक्षादिति न यागान्वयो विरुद्ध इति

नन्वेवं स्वर्गकामान्वयोऽपि करणीभूतस्य यागस्यैव कार्यतया भवतु । तथा चापूर्वप्रवेशेऽपि साक्षात्फलभावनाकरणत्वात् यागस्यान्वयो न विरुद्धः; मैवम् । न हि कार्यं कृतिसाध्यं कृतिप्रधानभूतभावनाकरणतया काम्यन्वययोग्यं फलभावनाकरणत्वे तस्य गुणत्वापत्तेः कार्यत्वव्याघातात् । एवं तर्हि फलसाधनताऽपि कथं कार्यस्य; ? मैवम्, न हि साधनतया गुणभावः, प्रधानस्यापि स्वामिनः संविधानद्वारेण गर्भदासोपकारे साधनभावसंभवात् । अवगते तु काम्यन्विते कार्ये करणापेक्षायां यागस्य करणतयाऽन्वयो युक्तः ।

कथं तर्हि व्रीहीणां यागक्रियायां करणता, व्रीह्यनन्तरं यागानिष्पत्तेः; मैवम्, यागार्थप्रवृत्तकृतिव्याप्यतया व्रीहिव्यक्तेः यागभावनात्वस्य

---

चोदयति नन्विति । मैवमिति । कार्यं हि कृतिसाध्यं कृतिप्रधानम् । न हि प्रधानं भावनाकरणतया काम्यन्वययोग्यं फलभावनाकरणत्वे तस्य गुणत्वापत्तेः प्राधान्यव्याघातादित्यर्थः । नन्वेवं सति कार्यरूपस्यापूर्वस्य फलसाधनत्वमपि कथं साधनत्वे तस्य गुणत्वापत्तेः कार्यत्वव्याघातादिति चोदयति—एवं तर्हीति । मैवमिति । स्यादेतदेवं यदि साधनत्वं गुणत्वं स्यात् । न चैतत् । प्रधानभूतस्यापि स्वामिनः संविधानद्वारेण गर्भदासोपकारे साधनत्वात् । अतः साधनत्वस्य प्राधान्याविरोधित्वादपूर्वस्य कार्यस्यापि फलसाधनत्वं युक्तमेवेत्यर्थः ।

नन्वेवं तर्हि कथं यागस्य फलकरणतयाऽन्वय इत्यत्राह—अवगते त्विति । क्रियातिरिक्ते कार्ये काम्यन्वितेऽवगते सति पश्चात् कार्यस्य करणापेक्षायां उपादानेन यागस्य करणतयाऽन्वयो युक्तः । एतच्च परमतेनोक्तम् । वस्तुतस्तु विषयत्वसिद्ध्यर्थमेव यागस्य करणत्वमुपादानेनाक्षिप्यत इति सर्वशक्तौ वक्ष्यते । नन्वेवं यद्यव्यवहितमेव सर्वत्र करणत्वं कथं तर्हि व्रीहिभिर्यजेतेति यागक्रियायां व्रीहीणां करणत्वं व्रीह्यनन्तरं यागानिष्पत्तेरिति चोदयति—कथमिति । मैवमिति । तत्रापि यागस्य फलापूर्वरीत्या व्रीहीणां यागभावनायामेव करणत्वं । न च यागस्यैव क्रियात्वात् तं विहाय तद्भावनायां किमिति करणत्वमुच्यत इति वाच्यम् । यतो यागार्थप्रवृत्तकृतिव्याप्यतया व्रीहिव्यक्तेस्तदधीनयागभावनायामेवाव्यवहितायां तस्याः करणत्वं युक्तम् न यागे । अतो यागभावनायामेव व्रीहिव्यक्तेः करणत्वात् न पूर्वोक्तचोद्यावकाश इत्यर्थः । कथं तर्हि व्रीहिव्यक्तेः यागकरणत्वप्रसिद्धिरित्यत्राह—यागेति । फलापूर्वकरणत्ववत् यागकरणत्वमपि व्यपदेशमात्रमित्यर्थः । ननु यागभावनैव नास्ति यागस्य फलापूर्वभावनात्वे करणस्य

च तत्कृतेर्व्रीह्यधीनत्वाच्च यागभावनाकरणत्वमेव यागं प्रति व्यपदिश्यते। यागस्य हि फलापूर्वभावनाकरणस्य प्रयत्नस्वरूपनिर्वर्त्यतया यागकारकव्रीहिनिर्वृत्तिद्वारेण यागनिर्वृत्तेः यागभावनायां यागनिर्वृत्त्यर्थं प्रवृत्तायां युक्तं व्रीहिव्यापित्वम्। व्रीहिव्यापित्वाच्च यागभावनात्वमिति यागभावनायां व्रीहीणां करणतासिद्धौ व्रीहिपर्यन्तता च यागप्रयत्नस्य पुरोडाशपिष्टचूर्णतण्डुलान्तर्भावादिति यागसाधनसाधनता व्रीहीणाम्। यागभावनाकरणता तु साक्षादेव। एवं च जातिवचनत्वाच्च व्रीहिजात्यवच्छिन्नव्यक्तेः यागकृतिव्याप्यत्वात् व्रीहिजातेरपि कथंचित् कृतिव्याप्यता, यागभावनाकरणत्वञ्च। जातिवाचित्वात् व्रीहिशब्दस्य व्रीहिभिर्यजेतेतिवत् जातेरेव करणत्वं शब्दार्थः। जातिवच्च गुणस्यापि गुणयवच्छेदेन कथंचित् कृतिव्याप्यतया करणत्वम्। तच्च गुणवचने-

---

कृतिसाध्यतया शब्देनानवगतत्वात्, तदनवगमेवा च कथं तत्कृतिव्याप्यत्वं व्रीहिव्यक्तेरित्यत्राह—यागस्य हीति। सत्यं यागस्य शब्दतः कृतिसाध्यतया न प्रतीतिः तथापि प्रयत्नस्वभावपर्यालोचनया फलापूर्वभावनाकरणस्यापि प्रयत्नस्वरूपनिर्वर्त्यताऽस्त्येव। तन्निर्वृत्तिश्च यागकरणव्रीह्यादिद्रव्यनिर्वृत्तिद्वारैवेति यागनिर्वृत्त्यर्थं प्रवृत्ताया यागभावनायाः व्रीहिव्यापित्वं युक्तमेव। तद्व्यापित्वे च तस्यां यद्यागभावनात्वं तस्य व्रीह्यधीनत्वात् यागभावनायां व्रीहीणां करणता सिद्धैवेत्यर्थः। नन्वेवं व्रीहिणां यागभावनायां साक्षात्करणत्वे तदनन्तरमेव तन्निवृत्तिः सा च यागनिष्पत्तिपर्यन्तेति व्रीह्यनन्तरमेव यागनिष्पत्तौ पुरोडाशादिबाधः स्यात् तद्बाधे च तदन्तर्भावेण साधनसाधनतानुप्रवेशात करणत्वमव्यवहितं न स्यादित्यत्राह—व्रीहिपर्यन्तेति। यागप्रयत्नस्य व्रीहिपर्यन्तता पुरोडाशपिष्टचूर्णतण्डुलान्तर्भावादेव नान्यथा पुरोडाशादिविनियोगश्रुतेः। एवं च सति व्रीहिव्यक्तेर्यागं प्रति साधनत्वमेव व्यवहितं न तद्भावनां प्रति करणत्वमित्यर्थः। तथा व्यक्तिवज्जातेरपि तदवच्छिन्नव्यक्तेः कृतिव्याप्यतया कथञ्चित यागकृतिव्याप्यतामादाय यागभावनायां करणत्वमित्याह—एवं चेति। ननु व्यक्तिरेव साक्षाद्यागे कारकमिति तस्या एव यागकृतिव्याप्यतया यागभावनायां करणत्वमस्तु। जातेस्तु साक्षात्क्रियानिर्वर्तकत्वाभावादकारकभूतायाः किमिति कथञ्चित् कृतिव्याप्यतामादाय यत्नेन करणत्वं साध्यत इत्यत्राह-जातीति। एवमरुणया क्रीणातीत्यादावारुण्यादिगुणस्यापि कथञ्चित् कृतिव्याप्यतया भावनायां करणत्वं वेद्यमित्याह—जातिवच्चेति। एवं सङ्ख्यापरिमाणादेरपीत्याह—यथासम्भवमिति। तथा लोके कृषेरपि

नारुणयेत्युपदिष्टमिति यथासम्भवं सर्वत्रोहनीयं मुख्यमेव करणत्वमिति। अत एव सस्यार्थप्रवृत्तकृषिव्याप्यत्वात् कृषेः सस्यभावनायां करणत्वं युक्तम्।

यद्यपि सस्यनिष्पत्तिसाधनता तत्साधनान्तर्भावात् कृषेर्व्यवहिता तथापि कृषिरेव कृतिव्याप्यतया साक्षादेव मुख्यं करणमिति। शंय्वौ तु शतयातनानिमित्तत्वश्रुतेरेवापगोरणस्य कृतिव्याप्यतया शतयातनाफलभावनायां करणत्वम्। एवं दुरितापूर्वानुप्रवेशान्तरितत्वेऽपि साक्षादेवापगोरणस्य करणत्वमिति दुरितापूर्वकल्पना न विरुद्धा। तदनुगुणस्तु

---

सस्यं प्रति साधनत्वमेवाङ्कुरादिसाधनान्तर्भावाद्व्यवहितं, करणता तु साक्षात्कृतिव्याप्यतया कृषेरेवाव्यवहितेत्याह—अत एवेति। नन्वेवमवगोरणस्य कथं शतयातनाकरणत्वं अक्रियात्वेन करणान्वयानर्हत्वात्। न च यातनाभावनायां करणत्वं अवगोरणविध्यभावेन शतयातनायाः साध्यतया अप्रतीतेः भावनाविषयत्वानर्हत्वादित्यत्राह—शयौ त्विति। सत्यं नावगोरणविधिः तथापि शंयुवाक्ये योपगुरातै शतेन यातयात्" इति यच्छब्दबलादवगोरणस्य शतयातनानिमित्तत्वश्रुतेः तद्बलाद्यातयादिति पञ्चमलकारश्रुतेश्चावगोरणसाध्यत्वं यातनायां अवगम्यते। ततश्चावगोरणस्य कृतिव्याप्यतया शतयातनाभावनाविषयत्वसम्भवात् तस्यां करणत्वं युक्तमित्यर्थः।

ननु क्षणिकस्यावगोरणस्य कालान्तरभाविशतयातनासाधनत्वोपपत्तये दुरितापूर्वमवश्यं कल्प्यम्। तच्चावगोरणस्य शतयातनाकरणत्वे विरोधि व्यवधानापत्तेरित्यत्राह—एवं दुरितेति। तत्कल्पनायां मध्ये तदनुप्रवेशेपि पूर्वोक्तरीत्या साधनत्वमेव व्यवहितम्। भावनाकरणत्वं तु साक्षादेवेति न दुरितापूर्वकल्पनं करणत्वविरोधीत्यर्थः। ननु योऽपगुरातै इत्युपक्रम्य तस्माद्ब्राह्मणाय नापगुरेतेत्येवमन्तं पदजातमेकवाक्यम्। न चैकस्मिन् वाक्ये दुरितापूर्वनिषेधनियोगसाध्यद्वयं सम्भवति वाक्यभेदापत्तेरित्यत्राह—तदनुगुणस्त्विति। सत्यमेवं यद्यन्योन्याननुगुणं साध्यद्वयं स्यात्। इह तु दुरितापूर्वं निषेधापूर्वानुगुणमेव निषेधे शीघ्रप्रवृत्त्यापादनात्। तत् अनुगुणं यस्यासौ तदनुगुण इति बहुव्रीहिः। अतोऽनुगुणदुरितापूर्वकोनिषेधनियोगो वाक्यार्थः स्वीक्रियते। यद्वा तस्य दुरितापूर्वस्यानुगुणो निषेधनियोगः तदधीनत्वात् कल्पनायाः। तदनुगुण इति षष्ठीसमासः। अतो दुरितापूर्वानुगुणोनिषेधनियोग एव लिङर्थतार्हो वाक्यार्थः। दुरितापूर्वं तु न लिङर्थतार्हमिति शंयुनय एव प्रपञ्चितम्।

नन्वेवं निषेधनियोगस्य वाक्यार्थत्वे अपगोरणे कदाचिदपि कस्यचिन्न

निषेधनियोगो वाक्यार्थः स्वीक्रियते। यस्तु निषेधातिक्रमेणापगोरणे प्रवर्तते तस्य यातनासिद्धेरुपपन्नं यातनाभावनायामप्यपगोरणस्य करणत्वमित्येषा दिक्। अतः सूक्तं न साधनसाधनं तस्य न साधनमिति। आग्नेयादिवैषम्यञ्च करणत्वेनोक्तरीत्या सिद्धम्। एवञ्च क्रियाया भावनाया वा वाक्यार्थत्वपक्षे स्वर्गादिसाधनतारूपेण लोकानवगतेन तत्प्रतिपादकतया यच्छब्दस्य प्रामाण्यमभिहितं, तदपहस्तितम्। तयोर्वाक्यार्थत्वे स्वर्गादिसाधनत्वं प्रति प्रमाणान्तरविरोधस्य दुष्परिहरत्वात्। अपूर्ववाक्यार्थत्वपक्षे तु यथा तदधीनं तयोः फलानुकूलत्वं तथोक्तमेव।

विवरणे तु अधिकरणमित्थम्—अपूर्वं न निष्पद्यते। यतः फलं प्रति

---

प्रवृत्तिरिति न तेन यातनासिद्धिः सम्भवति। तदसम्भवे वा कथमपगोरणस्य यातनाभावनायां करणत्वमित्यत्राह—यस्त्विति। ननु भावना नाम भाव्योद्देशप्रवृत्ता कृतिः। न च शतयातनोद्देशेन कस्यचिदपि यत्न इति कथमपगोरणस्य यातनाभावनायां करणत्वं इति शङ्कादिक्पदनिवर्त्या। निवृत्तिस्तु तदुद्देशाभावेपि तद्विषया कृतिः अर्थादतिक्रान्तनिषेधस्य जातेति तत्कृतिव्याप्यतया तद्भावनायां करणत्वमिति युक्तम्। साधितमर्थमुपसंहरति—अत इति। एवं चापूर्ववाक्यार्थत्वपक्ष एव वेदस्य प्रामाण्यं सिद्ध्यति न पुनर्भावनावाक्यार्थत्वपक्षे वा, क्रियाभावनयोर्लोकावगतस्वरूपयोः शब्दप्रमाणमेयत्वायोगात्। ननु तयोः स्वरूपतो मानान्तरमेयत्वेपि स्वर्गादिसाधनतारूपेण मानान्तरावेद्यत्वात तत्प्रतिपादकतया शब्दस्य प्रामाण्यं युक्तमेवेति यत्परैरुक्तं तन्निरस्तमित्याह—एवं चेति। तत्र हेतुः—तयोरिति। क्षणिकयोः तयोः कालान्तरभाविस्वर्गादिसाधनत्वेनाभिधानं मानान्तरविरुद्धमेवेति मानान्तरविरोधान्न प्रामाण्यं स्यादित्यर्थः। ननु अपूर्ववाक्यार्थत्वपक्षेपि क्रियावाक्यार्थपक्षे वा क्रियाभावनयोः स्वर्गादिसाधनता शब्देनैव वाच्येति मानान्तरविरोधः सम एवेत्यत्राह—अपूर्वेत्विति। सत्यमस्मिन् मतेपि क्रियाभावनयोः स्वर्गादिसाधनत्वं, तत्तु न शब्दाभिधेयम किन्त्वपूर्वाधीनमेव औपादानिकत्वात्तस्येति पूर्वमेवोक्तमित्यर्थः।

विवरणे त्विति। तत्र हि मते वस्तुबलात् अन्यथा अपूर्वनिष्पत्त्यनुपपत्तिभ्यां पूर्वोत्तरपक्षावित्यर्थः। ननु प्रथमपादे चित्रापरिहार एव लिङादीनां मानान्तरानवगतापूर्वार्थता साधितेति कथमत्र पूर्वपक्ष इत्यत्राह—अपूर्वमिति। न हि अपूर्वोत्पत्तिर्युक्ता यागेन हि करणेन तदुत्पत्तिर्वाच्या। यागस्य चापूर्वकरणत्वं तस्य फलकरणत्वपूर्वकापूर्वविषयत्वपूर्वकं, न च क्षणिकस्य तस्य कालान्तरभाविनि फले

करणीभूतस्य यागस्यापूर्वविषयत्वपूर्वकमपूर्वं प्रत्यपि करणत्वं, तेन चेत्कारणेनापूर्वं निष्पादनीयं तस्यैव क्षणिकस्य कारणत्वानुपपत्तेः, करणं च विना तदनिष्पत्तेः नापूर्वसिद्धिरिति पूर्वः पक्षः। अपूर्वेणैव लिङर्थेन स्वद्वारकं करणत्वं क्षणिकस्यापादयता स्वसिद्धिरापादितेति राद्धान्तः।

## ॥ ३ ॥ तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

एतदप्यधिकरणं भावार्थस्य विषयताधिष्ठानत्वे निरूपिते तद्विशेषविवेकार्थं न तु गोदोहनादेराप्त्यादिसाध्यकर्मत्वनिर्णयार्थं तस्या-

---

करणत्वोपपत्तिः। अतः फलकरणत्वाभावेन तत्पूर्वकविषयत्वाभावात् तत्पूर्वकमपूर्वं प्रत्यपि करणत्वं नास्ति इति। न च करणेन च विना कार्यनिष्पत्तिर्युक्तेति नापूर्वसिद्धिः। भाष्ये चास्तिशब्दो निष्पत्त्यभिप्रायः। अतो निष्पत्त्यभावमुखेनात्रापूर्वाक्षेप इत्यर्थः।

राद्धान्तमाह—अपूर्वेणैवेति। लिङादिवाच्यापूर्वेणैव क्षणिकस्यापि यागस्य कालान्तरभाविन्यपि फले स्वद्वारकं करणत्वमापादयता तन्मूलिका स्वसिद्धिरापादितेत्यपूर्वसिद्धिरप्युपपन्नेति नापूर्वानिष्पत्तिमुखेनात्रापूर्वाक्षेप इत्यर्थः।

इत्यपूर्वाधिकरणम्।

## ॥ ४ ॥ तानिद्वैधं गुणप्रधानभूतानि ॥ ६ ॥

दोग्धि पिनष्टि विलापयति इति दृष्टार्थेषु गोदोहनादिषु चिन्ता। किं तानि प्रधानकर्माणि उत गुणकर्माणीति। ननु गोदोहनादीनां गुणकर्मत्वव्युत्पत्तिपरमिदमधिकरणं कथं शास्त्रभेदलक्षणे सङ्गतं कथं चावान्तरसंगतं तेषामर्थाधिकरणादनधिकार्थं चेत्यत्राह—एतदपीति। एतदप्यधिकरणं भावार्थाधिकरणवत् अध्याये उपोद्घातसङ्गतमेव। विषयत्वाधिष्ठाननिरूपणपरत्वात्। यद्यपि भावार्थाधिकरण एव तन्निरूपणं तथापि तस्य भावार्थस्यैव विधिविषयत्वं न द्रव्यगुणादेरिति सामान्येन भावार्थमात्रस्यैव विधिविषयताधिष्ठानत्वं निरूपितम्। अत्र तु भावार्थानां मध्ये अयं विषयो नायमितिविवेकः क्रियते। अतः सामान्यपूर्वकत्वाद्विशेषस्य भावार्थनये अविशेष उक्ते विषयविशेषविवेकार्थमिदमधिकरणमध्याये अवान्तरे च सङ्गतमित्यर्थः। नन्वत्र यैस्तु द्रव्यं चिकीर्ष्यते इति सूत्रे दोहनादेराप्त्यादिचतुष्टयसाध्यत्वकर्मत्वनिर्णयार्थमेवैतदधिकरणं भाति। ततश्च तेषामर्थनयात्

प्रक्रान्तत्वात् । आनुषङ्गिकं तदित्युपोद्घातसङ्गतमेव। अत एवावगतमेतत् भावशब्दाः प्रधानकर्मणो वाचकाः इत्यत्र भाष्ये प्रधानशब्दो विषयताभिप्रायेण व्याख्यातः । तस्यैव भावार्थाधिकरणेऽधिगततत्वात्[१] । तदभिप्रायेण च व्यवस्थोपपत्तेर्द्रव्याद्यपेक्षया प्रधानताव्याख्याने दृषदुपलापेक्षया पेषणादेरपि प्रधानतापातादव्यवस्था । अधिकरणशरीरन्तु सर्वेषामेव भावार्थानामपूर्वविषयता युक्ता, साक्षात्सम्बन्धलाभात् । न च शब्दावगतक्रियाकारकान्वयविरोधः द्वितीयामतन्त्रीकृत्य विचारात्, न तु द्वितीयान्त-

---

अनधिकार्थतैवेत्युक्तमित्यत्राह—न त्विति । दृष्टार्थस्य दोहनादेरपूर्वविषयत्वनिराकरणपरमेवेदमधिकरणं न त्वाप्त्यादिसाध्यकर्मत्वनिर्णयार्थम तस्येहाप्रस्तुतत्वात् । आनुषङ्गिकमेव तत्तेषामर्थनयसिद्धये वात्र सूत्रे व्यवह्रियते । अतो नानधिकार्थतापीहेति भावः । नन्वत्र 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र" "तानि द्वैधं गुणप्रधानभूतानि" तथा "अवगतमेतत् भावशब्दाः प्रधानकर्मणो वाचकाः" इत्यादिसूत्रभाष्यस्थगुणप्रधानशब्दयोः का गतिरित्यत्राह—अत एवेति । निबन्धने प्रधानशब्दस्य विषयपरत्वव्याख्यया गुणशब्दोऽप्यविषयपर इत्यर्थादुक्तं भवति । तत्र हेतुस्तस्यैवेति ।

किञ्च प्रधानगुणव्यवस्था च विषयत्वाविषयत्वपरत्वे उपपद्यते न द्रव्यापेक्षया गुणप्रधानपरत्वे तथात्वे तण्डुलापेक्षया पेषणस्य गुणत्वेपि दृषदुपलापेक्षया प्राधान्यमपि स्यादिति गुणकर्मत्वप्रधानकर्मत्वव्यवस्था न स्यादित्याह—तदभिप्रायेण चेति । तदयमत्र चिन्तानिष्कर्षः किं दृष्टार्थगोदोहनाद्यपि नियोगविषयः उत नेति । एवं सङ्गतिसंशयपौनरुक्त्यपरिहारानुपपाद्य अधिकरणमुपक्रमते—अधिकरणेति । ननु पेषणादीनां सामर्थ्यादेव द्रव्यगतातिशयजनकत्वप्रतीतेर्नियोगीयद्रव्यद्वारा नियोगान्वयोपपत्तौ अपूर्वविषयत्वकल्पनानुपपत्तेः कथं पूर्वपक्ष इत्यत आह—सर्वेषामेवेति । स्यादेतदेवं यदि लिङ्गं स्वत एव प्रमाणं तत्वशब्दरूपं कल्पनात्मकं प्रमाणं विषयत्वं तु सर्वेषां भावार्थानां साक्षात्सम्बन्धलोभाच्छ्रुतमेवेति न लिङ्गं तद्बाधनक्षमम् । न च विषयत्वे अदृष्टकल्पना दोषः । सिद्धान्तेऽपि नियमादृष्टकल्पनायाः साम्यात् । अतः साक्षात्सम्बन्धस्याभ्यर्हितत्वात् पेषणादेरपूर्वविषयतैव युक्तेत्यर्थः । ननु तण्डुलान् पिनष्टि व्रीहीनवहन्तीत्यादौ द्वितीयाश्रुत्या तण्डुलादेश्चिकीर्षितत्वावगतेः शब्दावगतक्रियाकारकान्वयविरोधोऽपूर्वविषयत्वे स्यात् । किञ्च द्वितीयाबलादेवोत्तरनये अदृष्टार्थेष्वपि गुणकर्मत्वसिद्धेः किमनेन दण्डापूपनयहतेनेति न च वाच्यमित्याह—न चेति । तत्र हेतुः—द्वितीयामिति ।

---

१. A अधिकृतत्वात्

मतन्त्रीकृत्य, तस्य पूर्वपक्षाविरोधात्। प्रयोजनानुगुण्याच्च। पूर्वपक्षे प्रैय्यङ्गवे चरौ व्रीह्युपादनस्य द्वितीयान्तान्वयाधीनत्वात्।

न च वाच्यं द्वितीयातन्त्रत्वेप्यनीप्सितार्थतया पूर्वपक्षोऽस्त्विति। क्रियाजन्यफलभाग्यर्थत्वे द्रा·ीप्सिते धीः असम्भवे त्वनीप्सिते, व्यक्तिवाचीव सन्निहितालाभात् असन्निहितवर्तीत्यनीप्सितेपि इह श्रुतिहा[1]नमेव। अत एवोत्तराधिकरणेऽपि नानीप्सितार्थतया पूर्वपक्षः, किन्तु करणेऽपि

---

तथा च मानान्तरप्राप्तसम्बन्धानुवादित्वं अर्थाविबोधकत्वे स्वातन्त्र्याभाव इति यावत्। मुख्यक्रियाफलभागित्वशून्यत्वं वा वाचकशब्दस्य साधुत्वार्थं वा न पुनरभाव एव द्वितीयायाः तच्छून्यस्य नाम्नोऽर्थाविबोधकत्वाभावात् तद्युक्ततयैव प्रयोगनियमात्। अतस्तथाविधातन्त्रत्वं कृत्वाचिन्तायां न शङ्कितदोषावकाश इत्यर्थः। अत्र केचित् भाष्ये दोग्धिपिनष्टि विलापयतीति भावमात्रोदाहृतेः द्वितीयान्तमतन्त्रीकृत्यैवायं विचारः इत्यूचुः। तन्न युक्तमित्याह—नत्विति। व्रीह्यादिपदसत्तायामपि साक्षात्कार्यान्वयवलेन पूर्वपक्षसम्भवात् द्वितीयान्तस्य पूर्वपक्षाविरोधात्। द्वितीयातन्त्रत्वे हि द्रागीप्सितावबोधात् पूर्वपक्षासम्भव इति तस्या एव तद्विरोधित्वमिति द्वितीयाया एवातन्त्रत्वं न तु तदन्तस्येत्यर्थः।

किञ्चात्र भाष्ये पूर्वस्मिन् पक्षे प्रैयसङ्गवेचरौव्रीहय उपादातव्याः अवघातार्थत्वात् सिद्धान्ते नेति प्रयोजनं कथितम्। तच्च द्वितीयान्तान्वयाधीनं नान्यथेति प्रयोजनानुगुण्याच्च न द्वितीयान्तस्यातन्त्रत्वमित्याशयेनाह—प्रयोजनेति। भाष्ये तु यावदंशस्य विषयत्वं तावन्मात्रमेव वाच्यमित्यनास्थया द्वितीयान्तशून्योदाहृतिरिति भावः।

ननु द्वितीयामतन्त्रीकृत्य विचारोऽयं न युक्तः। तत्तन्त्रत्वेपि अनीप्सितद्रव्ये द्वितीयाश्रयणेन पूर्वपक्षसम्भवादिति न च वाच्यमित्याह—न चेति। तत्र हेतुः [2]क्रियेति। द्वितीयायास्तन्त्रत्वं हि क्रियाजन्यफलभागित्वम्। तच्च द्विधा ईप्सितमनीप्सितं च। तत्र न्यायबलाद्द्वितीयायाःद्रागीप्सित एव श्रुतित्वं नानीप्सिते, अतोऽनीप्सितार्थत्वेपि यथाश्रुति द्वितीयाकारकान्वयविरोधो दुष्परिहर एवेत्यर्थः। नन्वेवं मैत्रावरुणाय दण्डमित्यत्रेप्सितार्थता द्वितीयायाः स्यादित्यत्राह—असम्भव इति। तत्रेप्सितत्वासम्भवाद्दण्डे अनीप्सियत्वाश्रयणम्। इह तु सम्भवतीति न श्रुतिहानं युक्तन् वक्तुमित्यर्थः। उभयार्थत्वेऽप्यन्यतरत्रैव श्रुतित्वं न्याय्यम् तद्धानेः श्रुतिहानिश्चेत्यत्र दृष्टान्तमाह—व्यक्तिवाचीवेति। युक्तं चैतदित्याह—अत एवेति।

---

१. A कृतिहान। २. B उपनयेति।

दर्शनादिति लोकावगतचिकीर्षितार्थलोभेन परम्पराश्रयणमन्याय्यं शाब्द-व्यवहारे प्रमाणान्तरानवतारादिति पूर्वः पक्षः ।

लोके तावदुत्पत्त्यादिसमर्थस्वभावता पेषणादीनामवगता । तथा च सति दृष्टस्वभावालोचनेन नियोगान्वये सति नादृष्टाश्रयणं साक्षात्सम्बन्ध-लोभेन युक्तम् । भावार्थोऽपि स्वभावानुसारि दृष्टं स्वकार्यमाकाङ्क्षति । नियोगोऽपि पदार्थजन्यं दृष्टमुपकारमाकाङ्क्षतीति राद्धान्तः ।

विवरणे त्ववगतमेतत् भावार्थाः शब्दाः प्रधानकर्मणो वाचका इति

---

क्त्वाचिन्ताप्रयोजनं च द्वितीयाशून्ये दृष्टार्थोदाहरणान्तरे । ननु पेषणादीनां लोकावगतचिकीर्षितार्थताबलात् परम्परया नियोगान्वय आश्रीयतामित्याशङ्क्य शब्दैकगम्ये वैदिके व्यवहारे मानान्तरानवतारान्न तथाऽऽश्रयणमित्याह—लोकाव-गतेति ।

राद्धान्तमाह—लोके तावदिति । पेषणादीनामुत्पत्त्यादिसमर्थस्वभावता तावल्लोकावगता । शब्दोऽपि लोकावगतस्वरूपस्वभावमेव पदार्थं नियोगान्वयि-तयाऽर्पयति । न चास्मिन् वाक्ये प्रधानकर्मपक्षेऽपि प्रथमं नियोगावगमः निरधि-कारतया सन्निहिताधिकारापूर्वानुवादशङ्काग्रस्तत्वात् । अतः सन्निहितप्रधान-नियोगेनैवान्वयः । सम्भवति च द्रव्यगतातिशयजननद्वारा नियोगान्वयः । न च साक्षादन्वये सति परम्पराश्रयणमन्याय्यमिति वाच्यम् । मानान्तरावगतदृष्टस्व-भावालोचनेनैव नियोगान्वये सति अदृष्टाश्रयणस्यायोग्यत्वात् । अन्यथा सर्वेषां साक्षात्सम्बन्धे इदं करणं इदमितिकर्तव्यतेति विभागाभावेन सर्वं परिप्लुतं स्यादिति भावः । ग्राहकपदार्थयोराकाङ्क्षास्वभावपर्यालोचनयापि परम्परान्वय एव विध्यपेक्षितो न साक्षात्सम्बन्ध इत्याह—भावार्थोऽपीति । लोकावगतपदार्थ-स्वभावविरुद्धविषयत्वकल्पनातः तदनुकूलनियमादृष्टकल्पनमेवोचितमिति राद्धा-न्तिनो भावः ।

विवरणे त्विति । तत्र हि भाष्यस्य प्रधानशब्दव्याख्याप्रकारभेदमात्रमधिक-मित्यर्थः । कथमित्यत्राह—अधिकारेति । न खल्वत्र द्रव्याद्यपेक्षया प्रधानता गुणता वा, अपि त्वधिकारापेक्षयैव । योहि भावार्थोऽधिकारविषयतार्हः तत्प्रधानकर्म । इतरत्तु गुणकर्म । अधिकारविषयतार्हत्वं चापूर्वविषयस्यैव भवति नान्यस्येति मुखान्तरेण निबन्धनोक्तवत् तत्राप्यपूर्वविषयतैव प्रधानताऽभिप्रेतेत्यर्थः ।

नन्वेवं तर्हि अश्रूयमाणाधिकारतयाऽनधिकारविषयाणां समिदादीनां कथं प्रधानकर्मतेत्यत्राह—अनधिकारेति । सत्यमधिकारो न श्रुतः । तथापि तद्विषयत्व-

प्रकारान्तरेण व्याख्यातम्। अधिकारविषययोग्यता प्रधानता। सा च नियोगविषयतयैवेति वचनभङ्गीविशेषेणापूर्वविषयतयैव प्रधानताऽभिमता अनधिकारविषयाणामपि समिदादीनां तद्योग्यतास्तीति प्रधानतासिद्धिः। नीचैस्सदोमानादीनान्त्वधिकारश्रवणेऽपि नाधिकारविषयत्वयोग्यता प्रकृताधिकारविषयस्य यागादेरेव नीचैस्त्वादियुक्तस्यैवाधिकारविषयताभ्युपगमात् तदुक्तम्—"एक एव नियोगः फलभूयस्त्वं तु विशेष" इति॥

नन्वेकस्यापि यागादेः अधिकाररूपसाध्यभेदोन्नेयानुबन्धभेदो[1] युक्तः। दर्शपूर्णमासयोरिव काम्यनित्याधिकारभेदादनुबन्धभेदः। अतः कथमेको नियोगः। उच्यते। प्रकृताधिकारविषयस्य नीचैस्त्वादियुक्तस्य विषयत्वात्तदनुबन्धताप्रत्यभिज्ञानान्ननियोगभेदः। दर्शपूर्णमासयोस्तु परस्परनिरपेक्षाधिकारविषयत्वात् न प्रत्यभिज्ञेति विशेषः। एतच्च वस्तु–

योग्यता समिदादियजेरप्यस्त्येवेति युक्ता प्रधानकर्मतेत्यर्थः। ननु वृष्टिकामस्य नीचैः सदो मिनुयात् यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीतेत्यादि सदोमानादीनां वृष्टिकामाद्यधिकारश्रवणात् तद्योग्यतया प्रधानकर्मतैवेति कथमस्मिन्मते तेषां गुणकर्मतावगम इत्यत्राह—नीचैरिति। सत्यमधिकारः श्रूयते तथापि न तेषामधिकारविषयत्वयोग्यता प्रकृताधिकारविषयत्वस्यैव सोमयागादेः नीचैस्त्वादियुक्तस्यास्मिन्मतेऽधिकारविषयत्वाभ्युपगमात्। अत्र साक्षित्वेन "तस्मात् स एवात्र नियोगः फलभूयस्त्वं तु विशेष" इति विवरणटीकाग्रन्थमाह–तदुक्तमिति।

नन्वत्रैकनियोगत्वमनुपपन्नं यथा दर्शपूर्णमासयोः काम्यनित्ययोः विषयीभूतयागैक्येपि अधिकारभेदात्साध्यभेदेनोन्नीयमानानुबन्धभेदेन नियोगभेदः, तथाऽत्रापि प्रकृतयागविषयैक्येपि अधिकारसाध्यभेदोन्नेयानुबन्धभेदान्नियोगभेदस्य युक्तत्वादिति चोदयति—नन्विति। उच्यत इति। युक्तं दर्शपूर्णमासयोः काम्यनित्याधिकारभेदान्नियोगभेदः इति परस्परनिरपेक्षाधिकारविषयत्वेन प्रत्येकज्ञानाभावात्। इह तु गुणफलाधिकारे प्रकृताधिकारप्रयुक्त्युपजीविनि प्रकृताधिकारविषयस्यैव नीचैस्त्वादियुक्तस्य विषयत्वात्तदनुबन्धविषयप्रत्यभिज्ञानान्न नियोगभेद इत्यर्थः। ननु यस्यैव नीचैस्त्वादेः अधिकारसम्बन्धित्वेन श्रुतिः तस्यैव निबन्धनमतवत् विवरणमतेपि विषयत्वमस्तु किमश्रुतयागविषयत्वाङ्गीकारेणेत्या-

1. क्रियानुबन्धभावी

सामर्थ्यवादितया 'क्रिया विषयो हि स' इत्यनुसारेणो'क्तम् शब्दबलवादे[१] तु नीचैस्त्वादेरेव विषयत्वमित्यनुसन्धेयम् ।

॥ ४ ॥ धर्ममात्रे तु कर्मस्याद्निर्वृत्तेः प्रयाजवत् ॥ ९ ॥

सङ्गतिरस्य पूर्ववत्, पूर्ववद्दृष्टरूपचिकीर्षि[३]तार्थाभावात्, द्वितीया-श्रुतेश्च चिकीर्षितार्थत्वव्यभिचारित्वात् । करणेपि दर्शनाल्लोके "बल्वजान्

---

शङ्क्य वैषम्यमाह—एतच्चेति । ननु शब्दबलादेव नीचैस्त्वादेः श्रुतत्वेप्यभावार्थ-त्वेनाकृतिसाध्यतया नियोगविषयत्वं न युक्तमित्यत्राह—इत्यनुसन्धेयमिति । स्वतः कृतिसाध्यत्वाभावेपि क्रियासम्बन्धोपाधेः कथञ्चित्साध्यत्वमादाय विधिविषय-त्वमगत्योपेयमिति भावः ।

॥ ४ ॥ धर्ममात्रे तु कर्मस्याद्निर्वृत्तेः प्रयाजवत् ॥ ९ ॥

यत्र पुनः विध्यपेक्षितं दृष्टं नावगम्यते द्वितीयासंयोगश्चास्ति यथा स्रुचः सम्मार्ष्टि व्रीहीन् प्रोक्षतीत्यादौ तत्र चिन्ता । किं प्रधानकर्मत्वमुत गुणकर्मत्व-मिति । तदर्थमियं चिन्ता किं सम्मार्गादेरपूर्वविषयत्वमुत नेति । तत्र पूर्वाधिकरण-वदेवास्य सङ्गतिरित्याह—सङ्गतिरिति । ननु पेषणादिवत् सम्मार्गादेरपि गुणकर्म-त्वमेव युक्तमिति कथं पूर्वपक्ष इत्याशङ्क्य पूर्वनयवैषम्येण पूर्वपक्षमाह—पूर्ववदिति । युक्तं पेषणादेर्लोकावगतचिकीर्षितार्थत्वानुसारात् परम्परयापि नियोगसम्बन्धो-पपत्तेरपूर्वाविषयत्वम् । इहतु तद्वत् दृष्टरूपचिकीर्षितार्थत्वानवगतेः स्वतोऽभ्यर्हित-साक्षादपूर्वान्वयस्य बाधकाभावादपूर्वविषयत्वमेव युक्तमित्यर्थः । ननु स्रुच इत्यादि-द्वितीयाश्रुतिबलात् चिकीर्षितार्थत्वावगतेः द्रव्यं साध्यतयाऽवगतमिति न नियोगोऽपि साध्यः साध्यद्वयपरत्वे वाक्यभेदापत्तेः । अतो न सम्मार्गादेर्नियोग-विषयता युक्तेत्यत्राह—द्वितीयेति । स्यादेतदेवं यदि द्वितीयाश्रुतेः चिकीर्षितार्थत्वाव-गमनिश्चयः स्यात् । न चासावस्ति द्वितीयायास्तद्व्यभिचारात् । कथं व्यभिचार इत्यत्राह—करण इति । द्वितीयाहि लोकवेदयोः करणत्वेनापि यस्य कार्यार्थे[२]ऽन्वयः तत्रापि प्रयुज्यत इति व्यभिचारान्न निश्चिता चिकीर्षितार्थता । अतः सन्दिग्धार्थ-द्वितीयाश्रुतेः यावद्द्रव्यस्य साध्यताप्रतीतिः । अतः पूर्वोक्तमेवौत्सर्गिकमभ्यर्हितं साक्षादन्वयवशायातं, नियोगविषयत्वमेव संमार्गादेराख्याताात् प्रतीयते । निश्चतोहि विनियोगस्तं बाधते । तस्मादौत्सर्गिकविषयत्वमेवादृष्टकल्पनां वारयतीति प्रयाजा-

---

१. इत्यनुसन्धायोक्तम् ।　　२. B कार्यार्थे ।　　३. B र्थत्वाभा ।

शिखण्डकान् कुर्वि"ति, वेदेऽपि 'सक्तून् जुहोती'ति न श्रुतेः चिकीर्षितार्थत्वनिश्चयः। अतः प्रयाजादिवत् नियोगविषयतैव पर्यग्निकरणादेरिति पूर्वः पक्षः।

कर्मणि द्वितीयेति तावत् स्मरणं। न च लोके व्यभिचारः बल्बजा एव तदाकारवन्तो विवक्षिताः विवक्षावगमे च स्मरणमेव शरणम्। सक्तून् जुहोतीति सक्तूनां पूर्वमपूर्वार्थत्वानवगमात् न चिकीर्षितार्थत्वम्।

---

द्विवदपूर्वविषयतैव पर्यग्निकरणादेः। द्रव्यान्वयस्तु विषयीभूतक्रियासाधनतयापीति भावः।

राद्धान्तमाह—कर्मणीति। कर्मणि द्वितीयेति शाब्दस्मृतिस्तावत् द्वितीयायाः कर्मार्थतामाह। कर्म च चिकीर्षितमिति स्रुवादेः सम्मार्गादिचिकीर्षिततया साध्यत्वावगतेर्ननियोगविषयत्वयोग्यतेति भावः। ननु द्वितीयाया लोकवेदयोः कर्मत्वव्यभिचारदर्शनान्न द्वितीयाश्रुतेः चिकीर्षितार्थत्वनिश्चय इत्यत्राह—न चेति। कथमित्यत्राह—बल्बजा एवेति। बल्बजान् शिखण्डकान् कुर्वित्यत्र बल्बजानिति द्वितीया तेषां न स्वरूपेण करोतिः कर्मतामाह। किन्तु शिखण्डकाकारभागितयैव। यद्यपि बल्बजपदवाच्यं स्वरूपमेवेति तत्परा द्वितीया तेनैव रूपेण कर्मतामाह, तथापि विवक्षापरतन्त्रत्वाल्लौकिकवाक्यानां तद्वशाच्छिखण्डकपदसन्निधेश्च बल्बजपदं शिखण्डकाकारभागित्वरूपमेवोपस्थापयति, न स्वरूपमिति तत्रापि कर्मार्थतैव द्वितीयाया न करणार्थतेत्यर्थः। लोके तथा विवक्षेति कुतोऽवगतमित्यत्राह- विवक्षेति। अबाधिता स्मृतिरेव लोके तथाविवक्षेत्यवगमे मूलम्। स्मृतेस्तु मूलं कर्मत्वे करणत्वे चैकस्या द्वितीयाया अनेकशक्तिकल्पनानुपपत्तिः। अतो न लोके व्यभिचार इत्यर्थः। कथं तर्हि वेदे सक्तून् जुहोतीति कर्मणि द्वितीयेत्यत्राह—सक्तून् जुहोतीति। सक्तूनां होमान्वयात्पूर्वं वाक्यान्तरेणापूर्वान्वयानवगतेः कार्यान्तरानुपयोगित्वान्न चिकीर्षितार्थतेत्यगत्या तत्र करणे द्वितीयाऽङ्गीकृता व्यत्ययात्। न चास्मादेव प्रयोगात् करणत्वमपि द्वितीयार्थ इति वाच्यम्। कर्मणि द्वितीयेति स्मृतेः प्रयोगाद्बलवत्तया द्वितीयायाः कर्मार्थत्वनिश्चयात्। न्यायानपेक्षप्रयोगमूलत्वं च स्मृतेर्बलवत्त्वं तस्यैव शक्तिकल्पकत्वात्। सक्तून् जुहोतीति प्रयोगस्सक्तूनां कार्यान्तरोपयोगाभावरूपन्यायापेक्षया द्वितीयाया अर्थान्तरपरत्वे कारणमिति न ततः करणार्थत्वं द्वितीयाया इति निरपेक्षप्रयोगमूलस्मृतिबलात् कर्मार्थतैव द्वितीयायाः। अगत्यैव करणार्थतेत्यर्थः।

न चास्मिन्नेव वाक्ये नियोगैक्येन नियोगान्वयः अभावार्थत्वान्नियोगैक्यानवगमात्। अतः प्रयाजादिवद्धोम एवेतिकर्तव्यता तद्द्वारेणैव सक्तूनां नियोगार्थतेति न होमेन तच्चिकीर्षा शक्यावगमा। अत एव तृतीया च होश्छन्दसीति करणे द्वितीयार्थं सूत्रान्तरम्। तच्च यावद्दर्शनमेव द्वितीयामाह। अतो नान्यत्र द्वितीयाश्रवणे द्वितीयार्थत्वानिश्चयः।

अतः श्रुतद्वारकार्यापरित्यागेनैव सम्मार्गादेर्नियोगार्थत्वश्रुतिबलेनैव

ननु वाक्यान्तरादपूर्वार्थत्वानवगमेपि अस्मिन्नेव वाक्ये नियोगैक्येन नियोगान्वयावगतिरस्तु। यथा सोमेन यजेतेत्यत्र सोमान्वितयागस्य विधेः यागार्थता सोमस्य। तथा होमान्वितसक्तूनां विधेः होमस्य सक्त्वर्थतास्त्वित्यत्राह—न चास्मिन्निति। तत्र हेतुः अभावार्थत्वादिति। युक्ता सोमेन यजेतेति सोमान्वितयागविधेर्नियोगैक्यावगतिः यागस्य भावार्थत्वेन विधेयतार्हत्वात्, सक्तूनां त्वभावार्थत्वान्न विधियोग्यतेति न होमान्विततद्विधेः नियोगैक्यावगतिरित्यर्थः। यत एवं भावार्थस्यैव स्वतोविधेयत्वं न द्रव्यस्य स्वतः, किन्तु भावार्थानुप्रवेशात् अतः सक्तून् जुहोतीति सक्त्वन्वितहोमस्यैव विधेयत्वात् ग्राहकग्रहणात् प्रयाजादिवद्धोम एवेतिकर्तव्यता तद्द्वारेण सक्तूनां नियोगार्थता न पुनर्होमात् सक्तूनां विकीर्षितेत्यत आह—अत इति। यदिदं कर्मैव द्वितीयार्थः न्यायबलादगत्या क्वचित्करणेपि व्यत्ययादिति। युक्तं चैतदित्याह—अत इति। तच्च न्यायमूलप्रत्ययानुशासनं तृतीयाच होश्छन्दसीति सूत्रं करणे द्वितीयाविधानार्थम्। अकर्मके जुहोतौ द्रव्यस्य कर्मत्वाभावात्। सूत्रे चकारानुकृष्टद्वितीयाग्रहणं कर्मवद्भावोपलक्षणम्। करणस्य कर्मवद्भाववचनसूत्रस्य तात्पर्यम्। अत एव सक्तवो हूयन्त इति कर्मणि लकारप्रयोगः चकारात् करणे द्वितीया। तृतीयाग्रहणात् तृतीयापि करणे तृतीया अत्यन्तं माभूदिति तृतीयाग्रहणम्। अत एव सक्तुभिर्जुहोतीति प्रयोगः व्यत्ययानुशासनं च दृष्टानुविधायित्वाच्छन्दस्येवेति छन्दसीत्युक्तम्। लोके दधिजुहोतीत्यादिप्रयोगस्तु जुहोतेः प्रक्षेपमात्रविवक्षया। अतो व्यत्ययार्थंसूत्रान्तरकरणादपि सक्तूनित्यगत्या करणे द्वितीयेत्यर्थः। एतच्च सूत्रं न सर्वत्र करणे द्वितीयामाह। किन्तु यावद्दर्शनमेवेत्याह—तच्चेति। द्वितीयाया ईप्सितार्थत्वात्[1] पूर्वपक्षिणोक्तमयुक्तमित्युपसंहरन्नाह—अतो नान्यत्रेति। ननु साक्षादन्वयलोभान्नियोगविषयत्वमेव सम्मार्गादेरित्यत्राह—अतः श्रुतेति। यथाविनियोगं नियोग इति नयाच्छ्रुतद्वारकार्यापरित्यागेनैव सम्मार्गादेर्नियोगार्थत्वमिति नियोगोऽप्यत्र परम्परयैवान्वयं पूर्ववदनुमन्यते न

१. निश्चितार्थत्वात्।

अदृष्टद्वारकार्यं सिध्यतीति सिद्धान्तः ।

ननु गां ददातीतिवत् किमित्यनीप्सितकर्मता सक्तूनां नेष्यते; उच्यते। जुहोतिजन्यफलभागित्वाभावात् । भस्मता तावत् प्रक्षेपमात्रात् प्रहीणत्वञ्च त्यागमात्रात् । द्रव्यदेवतासम्बन्धोऽपि देवतोद्देशेन द्रव्यत्यागमात्रादिति न जुहोतिफलं सक्तुषु जुहोत्यर्थावयवरूपकर्मक्षणजन्यफलैरेव[1] क्रियाक्षणानां विनाशादवयविरूपहोमविनाशसिद्धिः । ददातिस्तु परस्वत्वापादनात्मकत्यागमात्रवचनः तस्य च परस्वत्वोत्पत्तिरेव फलम् । अतो देयस्य तत्फलभागितयाऽनीप्सितकर्मता सम्भवति । प्रयोजनं स्रुगुदाहरणे अनुपपन्नमिति भग्नं वार्तिककृता । यतः पक्षद्वयेपि शमीमय्यएव सम्मार्ज-

---

साक्षादित्यर्थः । ननु दृष्टेनैव संयोगादिफलेनावच्छिन्ने स्वार्थे धातोर्व्युत्पत्तेः कथं सम्मार्गादेरदृष्टद्वारकार्यत्वमित्यत्राह—श्रुतीति । दृष्टसंयोगादेर्विध्यनपेक्षितत्वाद्विध्यपेक्षितं सम्मार्गादिजन्यमदृष्टद्वारकार्यं श्रुतिबलेनैवोपादानात्सिद्धमित्यर्थः ।

ननु द्वितीयायाः कर्मत्वमात्रार्थायाः अनीप्सितेपि मुख्यत्वात् गां ददातीतिवत् सक्तून् जुहोतीति सक्तूनामनीप्सितकर्मतास्तु न पुनः व्यत्ययानुशासनात् करणार्थे द्वितीया युक्तेनि चोदयति—नन्विति । उच्यत इति । नानीप्सितकर्मत्वं सक्तूनां समभिव्याहृतजुहोतिजन्यफलभागित्वाभावात् । यदवस्थो हि व्यापारो धातुवाच्यः तदवस्थव्यापारजन्यफलभागि कर्म । न च जुहोतिजन्यं फलं सक्तुषु दृश्यते । किन्त्ववयवफलमेव । न च तदा द्वितीयेत्यर्थः । एतदेव दर्शयति—भस्मतेति । ननु जुहोतिफलाभावे कथं होमनाश इत्यत्राह—जुहोत्यर्थेति । अत्र अथ यदिशब्दः समुदायपरः उद्देशत्यागप्रक्षेपाणां समुदायो जुहोत्यर्थः । अत्र जुहोत्यर्थावयवरूपोद्देशादिकर्मक्षणजन्यफलैरेव प्रातिस्विकैः उद्देशादि क्रियाक्षणानां विनाशात् समुदायरूपहेतुविनाशसिद्धिः । तदतिरिक्तस्य होमपदार्थस्याभावादित्यर्थः । गां ददातीत्यत्र गोः ददातिक्रियाजन्यफलभागित्वं युक्तमित्याह—ददातिरिति । ददातिक्रियायाः परस्वत्वापादनात्मकत्यागवचनत्वात् । तस्य च परस्वत्वोत्पत्तिफलकत्वात् । देयभूतस्य गोः तत्फलभागितयाऽनीप्सितकर्मता सम्भवतीत्यर्थः ।

अत्र भाष्ये स्रुगुदाहरणे प्रयोजनमुक्तं विकृतौ वरुणप्रघासेषु श्रूयते—शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वेति । तत्र प्रकृतौ नानावृक्षीयस्रुक्साधनसम्मार्गविषयकमपूर्वमिति विकृतावपि नानावृक्षीयाः स्रुचः उपादातव्याः सम्मार्गार्थत्वेनेति यदा पूर्वः पक्षः । यदा तर्हि राद्धान्तः शमीमय्य एव हिरण्मय्यो वा सम्मार्जयि-

---

१. B फलैनेव

नीयाः। तथाहि—वरुणप्रघासेषु शमीविधानं न प्रधानार्थमेव युक्तं, स्रुङ्मात्रानुवादेन वाक्येन शमीविधेरङ्गप्रधानस्रुग्गोचरतैव युक्ता। न च प्रकरणात् प्रधानमात्रार्थता; यथा बर्हिर्हविरासादनमात्रानुवादेन वाक्येन विहितमङ्गप्रधानार्थम्। न तु प्रकरणात् प्रधानमात्रार्थम्। अतो नानावृक्षीयस्रुगुपादानं न पूर्वपक्षेऽपीति न प्रयोजनसिद्धिः। तदाहुः—

> स्रुङ्मात्रानुवादेन शमीमय्यादिचोदितम्।
> ज्ञायतेऽङ्गप्रधानार्थं पूर्वसिद्धान्तपक्षयोः॥ इति।

मैवम्। प्रकृतौ यो विधिः स पदार्थे, नतु कार्ये हविरासादनञ्च पदार्थः, स चोद्देशेन सन्निहितरूपोऽवगम्यते अङ्गगतः प्रधानगतश्च

---

तव्या इति। तदिदं प्रयोजनमाचार्यपादैः भग्नमित्याह—प्रयोजनमिति। पूर्वपक्षे राद्धान्ते च पक्षद्वयेपि सम्मार्गीयस्रुचां शमीमयत्वस्यासिद्धत्वादित्यर्थः। कथं पुनः पक्षद्वयेपि शमीमयत्वप्राप्तिरित्यत्राह—तथाहीति। ननु प्रकरणात् प्रधानस्येति नयात् प्रधानप्रत्यासत्तेः प्रधानमात्रार्थत्वं युक्तं नोभयार्थत्वमित्यत्राह—स्रुङ्मात्रेति। शमीमय्यः स्रुच इति वाक्येन स्रुङ्मात्रमनूद्य शमीविधानात् वाक्यस्य च प्रकरणादबलवत्त्वात् अङ्गप्रधानोभयार्थस्रुग्गोचरतयैव शमीविधेर्युक्ततेत्यर्थः। ननु बाधलाघवार्थं प्रकरणाद्वाक्यस्य सङ्कोच एव युक्त इत्याशङ्क्य दृष्टान्तेनोपपादयति—तथेति। अन्यथा तत्रापि सङ्कोचः स्यात्। न च स्रुचस्सम्मार्ष्टीत्येकं जुह्वा जुहोतीत्यपरं अतः प्रापकभेदान्न सकृत स्रुक्शब्देनानुवाद इति वाच्यम्। प्रापकभेदेपि हविरुपस्तृणातीत्यादौ सकृदनुवाददर्शनादिति भावः। अतो नानेति निगमनम्। अत्र साक्षित्वेन आचार्योक्तं श्लोकमाह—तदाहुरिति। भङ्गं परिहरति—मैवमिति। तत्र भङ्गं परिहर्तुं प्राकृतवैकृतविधिस्वरूपमाह—प्रकृताविति। प्रकृतौ हि विधिः पदार्थोद्देशेन कार्यो न कार्यमुद्दिश्येत्यर्थः। ननु बर्हिषि हवींष्यासादयतीति हविरासादनोद्देशेन बर्हिर्विधेः हविरासादनं च क्रियात्वेन कृतिव्याप्यतया कार्यमिति प्रकृतावपि कार्ये विधिरेवेति यदि कश्चिदभ्राम्येत तं प्रत्याह—हविरासादनं चेति। अत्र हि कार्यमिति न कृतिव्याप्यमभिप्रेतं किन्तु पदार्थजन्यं करणोपकाराद्यवान्तरकार्यमेवेत्युत्तरत्र स्फोरयिष्यते। अतो हविरासादनं पदार्थ एवेति तदुद्देशेन विधिः पदार्थविधिरेवेत्यर्थः। ततः किमित्यत्राह—स चेति। स हविरासादनपदार्थः उद्दिश्यमानत्वात् सन्निहितपदार्थरूपः सन्निविश्चाङ्गापूर्वीयहविरासादनस्य प्रधानापूर्वीयहविरासादनस्य चाविशिष्ट इत्यविशेषात् उभयार्थस्याप्युद्देश इत्यर्थः।

तदुभयावगमानुरोधात् विनियोगसन्निधिबलादुभयनियोगान्वयात् उभयसाधनीभूतहविरासादनपदार्थ एव बर्हिर्विधिर्युक्तः। एवं जुह्वा जुहोतीति सन्निहिताङ्गप्रधानहोमानां जुहोतिपदार्थत्वात् तदनुरोधेनोभयनियोगसाधनीभूते जुहोतौ जुहूविधिर्युक्तः। इत्थमेव चानारभ्याधीतपर्णताविधिरपि प्रकृतौ भवन् तद्गताङ्गप्रधाननियोगसाधनजुह्वादिपदार्थगोचरः।

अथवा अधिकारनियोगगृहीतं बर्हिः अङ्गप्रधानार्थपदार्थे श्रुतमपि अधिकारनियोगोपकारकाङ्गप्रधानगतपदार्थेन संबद्धमपि अधिकारनियोगार्थमेव, नाङ्गार्थं प्रधानोपकारकत्वरूपेणाङ्गप्रधानपदार्थार्थित्वात् इत्युभ-

---

ननु अधिकारापूर्वमेव ग्राहकं सर्वेषां ततश्च तद्गृहीतं बर्हिः तदीयप्रधानहविरासादन एव विधातुं युक्तं प्रत्यासत्त्यतिशयात्, न पुनस्सन्निधानमात्रात् तदङ्गहविरासादनेपि अङ्गापूर्वेणागृहीतत्वादित्यत्राह—तदुभयेति। साङ्गप्रधानहविरासदनान्वयस्यैवोद्देशकशब्देनावगतेरवगत्यनुरोधात् ग्राहकसन्निधितो विनियोगसन्निधेः प्रबलत्वात् हविरासादनमुखेन सन्निहितमङ्गावान्तरापूर्वं प्रधानापूर्वं च द्वयमपि बर्हिर्गृह्णाति। ततश्च तद्बलादुभयनियोगान्वयावगमादन्तरङ्गलक्षणया तदुभयसाधनीभूतहविरासादनपदार्थ एव बर्हिर्विधिर्युक्त इत्यर्थः। एवं जुह्वा जुहोतीति जुहूविधिरपि प्राकृत इत्याह—एवमिति। अनारभ्य पर्णताविधिरपि प्रकृतौ भवन् प्राकृतविधितया पदार्थीभवन्नेवमेवेत्याह—इत्थमिति।

नन्वेतदर्बर्हिषोऽङ्गावान्तरापूर्वगृहीतत्वं प्रधानावान्तरापूर्वगृहीतत्वं च न युक्तम्। हन्तिपिषिद्रव्यसङ्ख्यानययोः सर्वस्यापि संस्कारद्रव्यात्मकस्य सन्निपातिवर्गस्य सन्निधिमात्रादधिकारापूर्वगृहीतत्वस्य वक्ष्यमाणत्वात्। तथा तृतीये सन्निधानमात्रात् ग्राहकप्रमाणं न पदार्थमुखसन्निधितः इति साप्तदश्यनये वक्ष्यते। तथा तेषामर्थनये स्वयमेव वक्ष्यति। वस्तुतो न कोपि धर्मः आग्नेयाद्यवान्तरापूर्वस्येति। अतः पूर्वापरविरुद्धत्वादयुक्तोऽयं पक्ष इत्यरुच्या पक्षान्तरम् अधिकारापूर्वगृहीतत्वेन बर्हिषस्तदर्थत्वमेव नाङ्गप्रधानापूर्वार्थत्वमित्याह—अथवेति। हविरासादनादेः बर्हिरादिसन्निपातिपदार्थसाध्यस्य हन्तिपिष्यादिनयात् सन्निधिमात्रेणाधिकारापूर्वगृहीतत्वेनाधिकारापूर्वार्थत्वमेव नाङ्गप्रधानापूर्वार्थत्वम्। ननु अङ्गप्रधानार्थहविरासादनादौ श्रुतं बर्हिरादि। अतः उभयार्थत्वावगतिबलादुभयगृहीतमेव युक्तं नाधिकारापूर्वगृहीतं विनियोगसन्निधेर्ग्राहकसन्निधितो बलवत्त्वादित्यत्राह—अङ्गप्रधानेति। सत्यमेवं श्रुतं तथापि द्वारभूतहविरासादनादेरपि ग्राहकार्थत्वात् ग्राहकार्थत्वस्य च तदीयार्थत्वनिर्वाह्यत्वात् सम्बन्धित्वेन श्रुतेः ग्राहकार्थत्वा-

यथापि पदार्थविधेरङ्गप्रधानार्थत्वात् बर्हिर्विधिरङ्गप्रधानार्थो युक्तः। विकृतौ तु कार्ये क्लृप्ते करणोपकारे तदनुगुणे च क्लृप्ते पदार्थावान्तरकार्ये पदार्थविधिः, कार्यार्थत्वात् पदार्थविधेः। क्लृप्तकार्यसंभवे कल्पनानुप-

विरोधात् प्रोक्षिताभ्यामेव हन्तीति हन्त्यादिसम्बन्धित्वेन श्रुतप्रोक्षणादिवत् बर्हिरादिग्राहकापूर्वार्थमेव प्रकरणपाठबलादित्यर्थः।

नन्वङ्गप्रधानगतपदार्थसम्बन्धित्वात् बर्हिषः दीक्षणीयावाङ्नियमवत् अङ्गापूर्वप्रतिष्ठितत्वं भवतु अधिकारनियोगसन्निधिपाठस्तु अधिकारनियोगं प्रति परस्परोपकारकतया तत्प्रयोजनतयाऽस्त्वित्यत्राह—अधिकारनियोगोपकारकेति। सत्यमधिकारनियोगोपकारकाङ्गप्रधानगतपदार्थसंबद्धं बर्हिरादि तथापि न वाङ्नियमवदङ्गापूर्वप्रतिष्ठितत्वं तद्द्वारादुपकारकाङ्गसङ्गित्वाभावादित्यर्थः।

नन्वेवमनङ्गापूर्वार्थत्वे कथं तदीयहविरासादने विनियोगः? अङ्गप्रधानहविरासादनान्वयस्यैकोपाध्यसम्भवादावृत्तिं विना एकदोद्देश्यत्वायोगादित्यत्राह—प्रधानोपकारकत्वेति। अधिकारनियोगोपकारकत्वरूपैकोपाधिबलादङ्गप्रधानार्थहविरासादनैकीकारात्[1] एकदैव[2] तदुद्देशेन बर्हिर्विधेः उभयत्र विनियोग इत्यर्थः। उक्तदार्ढ्यमुपसंहरति—इत्युभयथापीति। उभयथा अङ्गप्रधानापूर्वप्रतिष्ठितत्वेन केवलाधिकारापूर्वप्रतिष्ठितत्वेन वा पदार्थविधेरङ्गप्रधानार्थत्वात् बर्हिरादिविधिरङ्गप्रधानार्थो युक्त इत्यर्थः। नन्वेवं विकृतावपि शरमयं बर्हिर्भवतीत्यादौ बर्हिरादिपदार्थसम्बन्धित्वेनैव श्रुतेः पदार्थ एव विधिर्युक्त इत्यत्राह—विकृतौ त्विति। सत्यं पदार्थस्यैवोद्देश्यत्वेन श्रुतिः तथापि तद्बोधकेनापि शब्देन कार्यमेवोपस्थाप्य तत्रैव विकृतौ पदार्थविधिः। कार्यस्वरूपमाह क्लृप्ते करणोपकार इति। वैकृतो विधिः प्रकृतिक्लृप्तमेव करणोपकारं गृह्णाति। तथा प्रकृतिक्लृप्तमेव करणोपकारानुगुणं पदार्थजन्यमवान्तरकार्यं किञ्चित्कारादि गृह्णाति। अतस्तत्र क्लृप्ते प्राकृतपदार्थावान्तरकार्ये वैकृतपदार्थविधिरित्यर्थः। ननु श्रुतपदार्थे विधिमनादृत्य कुतः कार्ये विधिराश्रित इत्यत्राह—कार्यार्थत्वादिति। न चैतावता कार्यस्यापि शेषित्वापातः किञ्चित्कारभागिन एव शेषित्वात्। अतः प्राकृतपदार्थस्य यच्छेषि तदेव वैकृतपदार्थस्यापीति भावः।

ननु प्राकृतकार्यार्थे प्राकृतपदार्थानामवगतत्वात् वैकृतानामन्यदेव कार्यं विधानोत्तरकालं कल्प्यतामित्यत्राह—क्लृप्तेति। नन्वेवं प्रकृतावपि कार्यार्थत्वात्पदार्थविधेः न पदार्थविधिर्युक्त इत्यत्राह—प्रकृतौ त्विति। स्यादेतदेवं यद्यन्यत्र

१. सादनाधिकारात् R २. B एकयैव।

पत्तेः। प्रकृतौ तु पदार्थविध्युत्तरकालं कार्यकल्पनेति पदार्थे विधिर्युक्तः। प्रतिपदार्थविधानं च कार्यकल्पना कार्यपर्यन्तत्वात् पदार्थविधेरिति दर्शनरहस्यम्।

एवं स्थिते विकृतौ शमीविधिः स्रुक्शब्दोपस्थापिते कार्ये भवन् जुह्वा जुहोतीति उपदेशकल्पिताङ्गप्रधानहोमनिर्वृत्तिरूपे कार्ये भवति, न तु स्रुचस्सम्मार्ष्टीत्युपदेशान्तरकल्पिते कार्यान्तरेऽपि। शमीविधिर्हि प्राकृतपर्णतादि बाधमानो निविशते, उपदेशार्थसम्पत्तये च बाधोऽभ्युपगम्यते। उपदेशश्चायं कार्यविषयः। स [1]चैकस्मिन्नेव कार्ये भवितुमर्हति। न च

क्लृप्तकार्यसम्भवः प्रकृतौ तु पदार्थविध्युत्तरकालमेव कार्यकल्पनेत्यन्यत्र क्लृप्तकार्याभावात् श्रुतपदार्थ एव विधिर्युक्तः। तच्च प्रकृतौ कार्यं कल्प्यमानं प्रतिपदार्थोपदेशं भेदेनैव कल्प्यते, कार्यपर्यन्तत्वात्पदार्थोपदेशस्य। तत्र पदार्थस्वरूपाभेदेपि उपदेशभेदात कार्यत्वं भिन्नम्। तथा पदार्थस्वरूपभेदेपि उपदेशैक्ये कार्यत्वमप्येकमेवेति दर्शनरहस्यमित्याह—प्रतिपदार्थेति। ननु भवत्वेवं विकृतौ प्रकृतिक्लृप्तकार्ये विधिः। भवतु वा प्रकृतौ प्रत्युपदेशं भेदेन कार्यक्लप्तिः तथापि कथं प्रयोजनसिद्धिरित्यत्राह—एवं स्थित इति। एवं कार्ये विधौ प्रत्युपदेशं कार्यभेदे च स्थिते शमीमय्यः स्रुच इति विकृतौ शमीविधिः स्रुक्छब्दोपस्थापिते प्रकृतिक्लृप्तकार्ये भवन् जुह्वा जुहोतीत्युपदेशकल्पिते अङ्गप्रधानहोमनिर्वृत्तिरूपकार्ये भवति। यद्यपि जुह्वा अङ्गहोमनिर्वृत्तिःप्रधानहोमनिर्वृत्तिश्च स्वरूपतो भिन्ने तथापि जुह्वा जुहोतीत्युपदेशस्यैक्यात तत्कल्प्यस्य च कार्यस्याधिक्यात् अङ्गप्रधानहोमनिर्वृत्तिरूपमेकमेव कार्यमिति तत्रैव शमीविधिरित्यर्थः।

नन्वेवं सम्मार्गस्यापि प्रधानाङ्गत्वात् तन्निर्वृत्तेरपि प्रधाननिर्वृत्यनुप्रविष्टतया एककार्यत्वमेवेति सम्मार्गस्रुचामपि शमीविधिः स्यादित्यत्राह -- न तु स्रुच इति। अङ्गत्वेपि सम्मार्गस्य उपदेशभेदात् कार्यान्तरत्वमेवेति न तत्र शमीविधिरित्यर्थः। ननु स्रुक्छब्दादविशेषेण सुक्कार्यद्वयस्याप्युपस्थापितत्वात् कार्यद्वयेपि शमीविधानं युक्तम्। यथा अङ्गप्रधानहविरासादनद्वये बर्हिर्विधिरित्यत्राह—शमीविधिरिति। युक्तं बर्हिर्विधौ तथा बाधाभावात्। अयं तु शमीविधिः प्राकृतपर्णतादि बाधमान एव निविशते नान्यथा। तत्र बहुबाधभयात् स्रुक्शब्दोपस्थापितेपि कार्यद्वये एकं कार्यं परित्यज्यत इति भावः। ननु बाधस्यैवायुक्तत्वात् कथं तदङ्गीकार इत्यत्राह--उपदेशेति। सत्यमयुक्तो बाधः तथापि इहोपदेशार्थसम्पत्तये अभ्युपगम्यते। ननु बाधं विना कथमुपदेशार्थसम्पत्तिरित्यत्राह—उपदेशश्चेति। यस्मादयं वैकृत

१. B न चै।

स्रुक्छब्दस्यैककार्योपस्थापने स्रुगर्थताहानं, । स्रुगुपस्थापितकार्यपरिग्रहणात् । न चोपदेशार्थसङ्कोचपरिहारार्थं बाधो न्याय्यः, षड्भिर्दीक्षयतीति प्राकृतवैकृतमन्त्राणां समुच्चयाभावप्रसङ्गात् ।

नन्वेवं यदि विकृतावपि पदार्थे विधिर्भवेत्, तथाप्यङ्गप्रधानान्यतरसाधनीभूते पदार्थे विधानात् उपदेशार्थसिद्धेरन्यतरत्र विधिर्युक्त एव । किमर्थं विकृतौ 'कार्ये विधिरिति कीर्तितम् ? मैवम्, नान्यतरत्र विधानसंभवार्थमुक्तम् विकृतौ कार्ये विधिरिति, किन्तु परमार्थतस्तावत् कार्ये विधिः, स च यथैकोपदेशोपकल्पिते कार्येऽङ्गप्रधानहविरासादननिर्वृत्तिरूपे वैकृतशरविधिः, तथाऽत्रापि भवत्विति शङ्कानिराकरणार्थमित्युक्तम् । युक्तम् शरविधौ एकत्वात् तत्र कार्यस्य कार्यावयवे च विकृतौ विधाना-

उपदेशः प्राकृत् क्लृप्तकार्यविषयः तस्मात् प्राकृतपदार्थबाधेनैव वैकृतोपदेशसम्पत्तिरित्यर्थः । नन्वेवमपि कथमेकस्मिन्नेव कार्ये निवेश इत्यत्राह—न चेति । बाधलाघवादिति शेषः । ननु शमीमय्यः स्रुच इति स्रुक्शब्दादविशेषेण स्रुक्कार्यमेवोपस्थाप्यं अन्यथा स्रुगर्थहानिः स्यादित्यत्राह–न चेति । तत्र हेतुः स्रुगुपस्थापितेति । एकस्यापि कार्यस्य स्रुक्शब्दोपस्थापितस्य परिग्रहान्न स्रुगर्थहानिः किन्तु सङ्कोचमात्रमित्यर्थः । ननु वैकृतोपदेशपदार्थसङ्कोचपरिहाराय बाधोऽभ्युपेय इत्यत्राह–न चेति । बाधात् सङ्कोचस्यैव युक्तत्वादित्यर्थः । यत एव बाधो न न्याय्यः अत एव षड्भिर्दीक्षयतीत्यत्र प्राकृतानां वैकृतानां च मन्त्राणां आकूत्यै प्रयुजेऽग्नये स्वाहा आकूतिमग्निं प्रयुजं स्वाहा इत्यादीनां विकृतौ समुच्चयः अन्यथा तत्रापि बाधात् समुच्चयानुपपत्तेः । द्वादशभिर्जुहोतीत्युपदिष्टं द्वादशत्वं मन्त्राभ्यासेनापि शक्यम् । तदाह–षड्भिरिति ।

नन्वत्र पञ्चिकायां प्रकृतौ पदार्थे विधिः विकृतौ तु कार्ये विधिरित्युक्तं तत् प्रकरणादन्यतरत्र विधानसम्भवार्थमुक्तमिव भाति । तच्चायुक्तम् । विकृतावपि पदार्थे विधावप्यङ्गप्रधानान्यतरसाधनीभूते पदार्थविधेरेवोपदेशार्थसिद्धेः अन्यतरत्र विधेर्युक्तत्वात् प्रयोजनाभावादिति चोदयति—नन्विति । मैवमिति । स्यादेतदेवं यद्यन्यतरत्र विधिसम्भवार्थं तदुक्तिः स्यात् सा तु विकृतौ परमार्थतः कार्ये विधिरिति प्रदर्शयितुमित्यर्थः । ननु अप्रस्तुतपरमार्थकथनमेव व्यर्थमित्यत्राह—स चेति । यथा शरमयं बर्हिर्भवतीति वैकृतशरविधिः बर्हिषीत्युपदेशकल्पिते अङ्गप्रधानहविरासादननिर्वृत्तिरूपे बर्हिः कार्ये भवति । तथाऽत्रापि अङ्गप्रधानार्थस्रुग्गोचरतया विधेः सम्मार्गार्थस्रुक्ष्वपि शमीविधिर्भवत्विति शङ्का-

२. B विकृताकारे ।

संभवात् । इह तु प्रकृतावुपदेशभेदात् कार्यभेदेऽन्यतरकार्ये विधिर्भवितुमर्हति इति । न चायमन्यतरकार्येविधिः प्रधानसम्बन्धिनि कार्ये युक्तः, प्रधानस्य प्रकरणात् ।

ननु च बाधभयेन चेदेककार्ये विधिस्तद्वरमङ्गकार्ये भवतु । प्रधानधर्मबाधादङ्गधर्मबाधो न्याय्यो यतः । मैवम् । बाध एव कुतः ? उपदेशबलादिति चेत्तर्हि प्रधान एव प्रकरणवशात् । तत्र ह्युपदेशो मुख्यः । तत्रासम्भवादङ्गमात्रे जघन्योऽन्याय्यो यतः । तदेवं प्रकृतौ प्रधाने य उपदेशः तस्याङ्गप्रधानार्थहोमाभिनिर्वृत्तिरेव कार्यम्, तत्र चेच्छमीविधिः

---

निरासार्था तदुक्तिरित्यर्थः । कथं शङ्कानिरास इत्यत्राह—युक्तमिति । ननु कार्यैक्येपि बाधलाघवाय तदवयवे विधिरस्तु इत्यत्राह—कार्येति । तदवयवस्य प्रकृतावशास्त्रार्थत्वात् तदुद्देशेन वैकृतोपदेशार्थसम्प्रत्ययभावात् बाधलाघवमपि नापेक्षितमित्यर्थः । अत्र तु नैवमित्याह—इह त्विति ।

ननु बाधलाघवायान्यतरत्रापि विधौ किमिति प्रधानकार्य एव विधिरित्यत्राह—नचायमिति । ननु प्रधानकार्येपि यदि बाधित्वैव निवेशः तर्हि अङ्गकार्य एव विधिर्युक्तः प्रधानधर्मबाधादङ्गधर्मबाधस्य न्याय्यत्वादिति चोदयति—नन्विति । मैवमिति । बाधोऽपि वा स्वतो न युक्तः तथापि तस्योपदेशजलात्स्वीकारः । तत एवोपदेशबलात् शमीविधेरपि प्रधान एव प्रकरणवशान्निवेश आपततीत्यर्थः । ननु सन्निधानलक्षणं प्रकरणं तच्चाङ्गप्रधानयोरुभयोरविशिष्टमिति कथं प्रधान एव निवेश इत्यत्राह—तत्र हीति । सत्यमङ्गसन्निधिरविशिष्टः तथापि सर्वस्योपदेशस्य स्वतः प्रधानसम्बन्ध एवापेक्षित इति भावः । कुत इत्यत्राह—तत्र हीति । प्रधान इति । प्रधाने उपदेशो मुख्यः प्रथमप्रवृत्तः तत्रासम्भवादङ्गमात्रे जघन्यः पश्चाद्भावी यत इत्यर्थः । नन्वेवं यदि प्रधानकार्यमात्रे शमीविधिः तर्हि प्रयाजादिस्रुचां शमीमयत्वं न स्यात इत्यत्राह—तदेवमिति । स्यादेवं यदि प्रयाजादिहोमनिर्वृत्तेः पृथक्कार्यता स्यात् । तत्र हि प्रकृतौ जुह्वा जुहोतीति प्रधाने य उपदेशः तस्यैवैकत्वादङ्गप्रधानहोमनिर्वृत्तिरेकं कार्यं क्लृप्तमिति तत्र शमी विधीयमाना प्रयाजादिहोमेऽपि दुर्वारा । कार्यावयवे विधानायोगात् । आग्नेया ग्रहा भवन्तीति तु अग्निविधिरैन्द्रवायवादिसर्वग्रहेषु ऐन्द्रवायवं गृह्णातीत्युपदेशभेदेपि व्रीहियवयोरिव इन्द्रवाय्वादिदेवतानां प्रधानयागनिर्वृत्तिरूपैककार्यत्वात तत्र सर्वत्राविशेषात् अग्निविधिः। दृतिनवनीतविधिस्तु प्रधाने श्येने आज्याभावात् अङ्गमात्रे सम्बन्धिनः प्रकरणात् प्रधानसम्बन्धीति भावः । अत एव परोक्तं निरस्तमित्याह—एतेनेदमिति प्रयाजादेरित्यादिशब्दात् जुह्वाऽवद्यतीत्याद्यवदानादिसम्बन्धिन्यो गृहीताः ।

प्रयाजादिजुहोतावपि न वारयितुं शक्यः । एतेनैतन्निरस्तम् ।

यदि प्रधानमात्रेण शमीमय्यादिसङ्गतिः ।
प्राकृत्यस्ते प्रसज्यन्ते प्रयाजादेः स्रुचस्ततः ॥ इति ।

पूर्वपक्षे तु सम्मार्गार्थेन प्रकृतानुपदेशान्तरेण कार्यान्यत्वात् न तत्र शमीविधिरिति सूक्तं पूर्वपक्षे नानावृक्षीयाः स्रुचः उत्पाद्यास्सम्मार्गार्थत्वेन इति ।

नन्वेवमपि पर्णताकार्ये स्रुक्छब्दोपस्थापिते शमीविधिः एकेन चाङ्गप्रधानार्थेन पर्णतोपदेशेनाङ्गप्रधानस्रुङ्निर्वृत्तिरूपमेकमेव कार्यं क्लृप्तम् । तत्र शमीविधौ सम्मार्गेऽपि शम्येवेति न प्रयोजनसिद्धिः । मैवम् । यत एव सम्मार्गेऽपि नानावृक्षीयबाधः पर्णतादिकार्ये लक्ष्यमाणे अत एव

ननु सम्मार्गस्रुक्ष्वपि कार्यान्यत्वं कथं सम्मार्गं प्रति स्रुवामविधानादित्यत्राह–पूर्वपक्षे त्विति । उपसंहरति–इति सूक्तमिति । ननु कार्ये विधावपि शम्यायाः किमिति स्रुक्कार्ये विधिः यावता पर्णताकार्य एव विधिर्युक्तः शमीहि स्रुक्प्रकृतिद्रव्यं पर्णतापि तथेति प्रकृतिद्रव्ये शमीविधिः प्रकृतिद्रव्यपर्णताकार्य एवान्तरङ्गत्वाद्युक्तः । ततश्च पर्णमयी जुहूरित्येकेन प्राकृतेन पर्णतोपदेशेन अङ्गप्रधानार्थस्रुङ्निर्वृत्तिरूपमेकं कार्यं क्लृप्तमिति तत्र विधीयमाना शमी सम्मार्गस्रुक्ष्वपि भवतीति न प्रयोजनसिद्धिरिति चोदयति—नन्विति । मैवमिति । बहुविधबाधपरिहाराय बहिरङ्गमपि स्रुक्कार्यमेव लक्षणीयमित्यर्थः । तथा स्रुक्छब्देन व्यवहितलक्षणापत्ते[1]रपि न पर्णताकार्यलक्षणा । तदाह—किञ्चेति । तथा कार्याव्यवधानात् वाक्योपात्तस्रुक्छब्दार्था[2]व्यवधानाच्च स्रुगर्थसम्बन्धिकार्यलक्षणैव युक्तेत्युपसंहरन्नाह—अत इति । नन्वेवं यदि स्रुक्कार्ये शमीविधिः तर्हि शम्या स्रुगर्थबाधः स्यात् । यथा शरमयं बर्हिर्भवतीति बर्हिः कार्ये शरविधौ शरैरेव बर्हिषो बाध इति चोदयति—नन्विति । तन्नेति । शमीमय्यः स्रुचो भवन्तीति विकारार्थमयट्श्रुतेः स्रुक्शब्दोपस्थापितं स्रुक्कार्यं शमीविकारं कुर्यादिति वाक्यार्थः । नन्वयमर्थोऽनुपपन्नः शम्याहि अपात्रभूतया आज्यधारणादेरशक्यतया होमनिर्वृत्तिरूपस्रुक्कार्यस्य शमीकार्यत्वायोरादित्यत्राह—पर्णतादीति । सत्यं न साक्षाच्छमीविकारता स्रुक्कार्यस्य स्रुग्द्वारा तु परम्परया युक्तैव । शमीहि वृक्षजातीयतया पर्णतादितुल्या । दृष्टं क्लृप्तं च स्रुग्रूपं विकारं द्वारीकृत्य स्रुक्कार्यं विकरोतीति न द्वारभूतस्रुग्बाधः । न चैवं पर्णतादि-

१. रिति B । २. र्थव्य ।

बहुविषयबाधपरिहाराय स्रुक्कार्ये लक्षणा युक्ता। किञ्च स्रुक्छब्देन हि पर्णतां स्रुगर्थसम्बन्धिनीमुपस्थाप्य पर्णतासंबन्धिकार्यं लक्षणीयम्। तथासति सम्बन्धसम्बन्धिनोर्व्यवहितस्य लक्षणा स्यात्। अतोऽव्यवहितस्रुगर्थसम्बन्धिनि कार्ये लक्षणैव युक्ता।

ननु स्रुक्कार्ये विधेः स्रुगर्थबाधः स्यात्। तन्न। शमीमय्य इति मयटः श्रुतेः शमीविकारं स्रुक्कार्यं कुर्यादित्यर्थः। पर्णतादितुल्या शमी साक्षाद्विकारं श्रुतं दृष्टं कार्यं क्लृप्तञ्च स्रुग्रूपं द्वारीकृत्य विकरोतीति न स्रुग्बाधः। शरविकारता तु न बर्हिर्द्वारिकेति न तद्बाधः तत्वार्थः।

केचित्तु स्रुक्कार्यस्य भावार्थत्वात्तद्विषयत्वाच्च विधेः तल्लक्षणैव युक्तेति वदन्ति। तन्न। पर्णताकार्यपरे हि स्रुक्शब्दे परम्पराश्रितभावार्थेऽपि गुणे विधिरदोषः। यत्तु पर्णतादिकार्ये विधिमुपेत्यैव समाधानं-उपदे-

कार्यविधानाभावात् पर्णतादिबाधो न स्यादिति वाच्यम्। शब्दात् पर्णतादिकार्ये विध्यभावेपि गोदोहनवत् चमसकार्ये शम्यादेः पर्णताबाधः। स्रुक्कार्यनिर्वर्तकशम्यादिनैव पर्णतादिकार्यस्य कृतत्वात्। पर्णताकार्ये तु साक्षाच्छाब्दो विधिः बहुबाधभयान्नेष्ट इत्युक्तमेवेति भावः। शरमयं बर्हिर्भवतीत्यत्र नैवमित्याह—शरेति। बर्हिषामिव शराणामपि हविरासादनरूपकार्यकरत्वं साक्षाद्युक्तमिति न तेषां द्वारापेक्षेति न बर्हिषां द्वारतेति तद्बाधो युक्त एवेत्यर्थः।

केचित्तु पर्णताकार्यं विहाय स्रुक्कार्ये विधिमेवमाहुः—स्रुक्कार्यं हि होमनिर्वृत्तिरूपं भावार्थरूपं पर्णताकार्यं तु स्रुङ्निवृत्तिरूपं न तदा भावार्थः। भावार्थविषयश्च विधिः। अतः स्रुक्कार्यमेव लक्षयित्वा तत्र शमीविधिर्युक्त इति तदाह—केचित्त्विति। तन्नेति। परम्परया भावार्थाश्रितेपि गुणे विधिर्बहुशो दृष्टः कृष्णानां व्रीहीणामित्यादौ। अतः स्रुक्शब्देन पर्णताकार्ये लक्ष्यमाणेपि न विधेः भावार्थविषयत्वहानिरिति नैषा रीतिरित्यर्थः। अपरे शम्याः पर्णताकार्ये शाब्दं विधिमुपेत्यैव प्रयोजनं समादधिरे तदनुभाषते—यत्त्विति। ननु एकोपदेशकल्प्यमेकमेव कार्यमित्युक्तेः कथमुपदेशैक्येपि कार्यभेदः। यदि स्यात् जुह्वा जुहोतीत्यत्रापि कार्यभेदो दुर्वार इत्यत्राह—अनारभ्याधीता हीति। यदीयं पर्णता प्रकरणिना ग्राहकेण गृहीता स्यात् तदा [२]प्रकरणबलादेव स्वभावतः प्राप्तस्यापि नानाकार्यस्यैकीकारः स्वप्रकरणवर्तिपदार्थयोगक्षेमकारित्वाद्विधेः। अन्यथा विधेरावृत्त्योपदेशाद्भेदापत्तेः।

१, B यन्नियोगार्था २. R प्रकरणित्वादेव।

शैक्येऽपि पर्णताकार्यमनेकम् । अनारभ्याधीता हि पर्णता, केनापि प्रकरणिना न गृहीता । जुहूद्वारा तु जुहूमदपूर्वार्था । जुहूस्तु प्रकरणाधीता प्रकरण्युपकारकाङ्गप्रधानहोमद्वारा प्रकरण्यर्था । संमार्गस्रुचां तु स्रुग्वाक्यबलात् संमार्गापूर्वार्थता । एवं जुहूकार्यं द्विधा सिद्धम् । तत्प्रकरणे [1]च शमीविधिः । प्रकरणिनः कार्ये होमद्वयकारकजुहूरूपे, न तु सम्मार्ग-

---

इयं तु न प्रकरणिना गृहीता । अनारभ्याधीतत्वेन नियोगान्विताभिधानकालाननुप्रवेशात् । किन्तूत्तरकालं जुहूमुखेन जुहूमदपूर्वार्था जुह्वा जुहोतीति होमोद्देशेन विधीयमाना । जुहूस्तु नैवमित्याह—जुहूस्त्विति । जुहूस्तु प्रकरणाधीतत्वात् प्रकरणिना गृहीता प्रकरण्यर्थैव । ततश्च तद्बलादेवाङ्गहोमनिर्वृत्तिः प्रधानहोमनिर्वृत्तिश्च । स्वतो नानारूपं कार्यं प्रकरण्युपकारकत्वेन रूपेणैकीकृतम् । अतो जुहूः प्रकरणात् प्रकरण्युपकारकाङ्गप्रधानहोमद्वारा प्रकरणिरूपप्रधाननियोगार्था ।

नन्वेवं प्रकरण्यर्थजुहूरेव तदुद्देशेन विहितपर्णतायाः कार्यमिति कथं पर्णतोपदेशस्य कार्यभेद इत्याह—सम्मार्गेति । स्यादेतदेवं कार्यभेदः यदि जहूः प्रकरण्यर्था, एकैव पर्णतादिविधावुद्देश्या स्यात् । इह तु स्रुचः सम्मार्ष्टीति सम्मार्गान्वितनियोगगृहीतानां जुहूपभृद्ध्रुवारूपाणामारादुपकारकाङ्गसङ्गिनीनां वाक्यबलात् दीक्षणीयावाङ्नियमवत् सम्मार्गापूर्वार्थता । ततः सम्मार्गापूर्वार्थापि जुहूः प्रकृतावस्तीति सापि प्रकृत्यर्थानारभ्याधीतपर्णताविधेरुद्देश्या जहूत्वाविशेषात् । न च स्रुग्विशिष्टसम्मार्गविधेर्विशेषणभूतस्रुचां अपूर्वीयसम्मार्गसम्बन्ध उपादानादेव न तु लक्षणया पदेनोपस्थाप्य इति लक्षणाभावान्नान्तरङ्गलक्षणया अङ्गापूर्वार्थता युक्तेति वाङ्नियमवैषम्यं वाच्यं, अन्तरङ्गबहिरङ्गन्यायस्योपादानेपि वक्तुं शक्यत्वात् । अतएव दीक्षणीयायागोत्पत्तिशिष्टएकादशकपालादेरवान्तरापूर्वार्थतेति भावः । ततः किमित्यत्राह—एवमिति । एवमुक्तेन प्रकारेण अङ्गप्रधानहोमनिर्वृत्त्यर्थतया सम्मार्गापूर्वार्थतया च द्विधाभूता जुहूः पर्णतायाः कार्यमित्यनेककार्यता पर्णताया इत्यर्थः । नन्वेवं शमीमय्यः स्रुचो भवन्तीति स्रुक्शब्देन पर्णताकार्ये लक्ष्यमाणे सम्मार्गस्रुचामपि पर्णताकार्यत्वाविशेषात् तत्रापि शमीविधिः स्यात् । नचाङ्गसम्बन्धितया तत्त्यागः प्रयाजादिस्रुचामपि तत्त्यागापत्तेरित्यत्राह—प्रकरणे चेति । शमीविधिर्हि प्रकरणिनः सन्निधौ पतितः तत्सम्बन्धिकार्य एव भवितुमर्हति । तत्सम्बन्धिता च जुह्वा जुहोतीत्येकोपदेशकल्पितस्य अङ्गप्रधानात्मकहोमद्वयकारकजुहूरूपकार्यस्यैव अतो न प्रयाजादिस्रुक्त्यागः । सम्मार्ग-[2]साधनरूप स्रुक्कार्यस्य तु अङ्गापूर्वग्राह्यत्वेन न प्रकरणिसम्बन्धितेति शमीविधौ

---

१. B प्रकरणे च । २. साधन स्रुग्रूपकार्य ।

साधनरूपे । बर्हिः कार्यं तु न द्विधा, प्रकरणमात्रगृहीतत्वाद्बर्हिषः ।

तन्न । पञ्चिकोक्तियुक्तिविरोधात् । 'एकविधिकल्प्यमेकं कार्यमिति यदुक्तं तदनारभ्यविधावपि इति । युक्तिश्च कार्यनानात्वपुरस्कारेण विधेरावृत्तिः स्यादिति । नानारूपतिरोधानादेकीकृतं विधेः कार्यं[2], अन्यथा शरविधिकल्पबाधनार्थं अङ्गप्रधानसाधनभेदमाश्रित्य प्रधानासादन एव स्यात् ।

किञ्च प्रधानमात्रार्थं बर्हिः, उपकारकासादनद्वयद्वारकमित्यस्मिन् प्रकारे च

---

तत्याग एवेति पर्णताकार्ये शमीविधावपि सम्मार्गस्त्रुक्षु न तन्निवेश इत्यर्थः । शरमयं बर्हिरित्यत्र बर्हिः कार्यस्य नेत्थं भेद इत्याह—बर्हिरिति । बर्हिषो नियोगद्वय-[3]गृहीतित्वाभावादित्यर्थः । तन्नेति । पञ्चिकोक्तिविरोधात् युक्तिविरोधाच्च-अनेनोद्ग्रन्थत्वं न्यायविरोधश्चोक्तः । तत्र ग्रन्थविरोधं तावदाह—एकेति । एकोपदेशेन कल्पितमेकं कार्यमित्यस्य ग्रन्थोक्तस्य आरभ्याधीतानारभ्याधीतोपदेशयोरुभयोरप्यविशेषात् पर्णतोपदेशेऽपि एकमेव कार्यं कल्प्यम् । तथा सति कार्यभेदाङ्गीकारेण प्रकरणिसंबन्धि शमीविधिः प्रकरणिसम्बन्धिनि कार्य एवेत्युच्यमाने ग्रन्थोक्तं बहुबाधभयं न हेतुत्वेनोक्तं स्यादित्यतोऽपि विरोध इति भावः ।

ननु ग्रन्थस्य यथाकथञ्चित् तात्पर्यवर्णनं शक्यमित्याशङ्क्य युक्तिविरोधमप्याह—युक्तिरिति । शेषिरूपकार्यभेदपुरस्कारेण पर्णताविधावाश्रीयमाणे विध्यावृत्तिलक्षणो वाक्यभेदः स्यात् । अतस्तत्परिहाराय पर्णताविधेरेकमेव कार्यमित्यर्थः । ननु सम्मार्गपूर्वार्था जुहूः एकं कार्यं अङ्गप्रधानहोमनिर्वृत्त्यर्था जुहूरेकं कार्यमिति कार्यभेदस्य स्फुटत्वात् कथमेककार्यत्वमित्यत्राह—नानेति । यद्यप्येवं नानारूपा जुहूः तथापि प्रतीयमानैकवाक्यताभङ्गपरिहाराय तन्नानारूपतिरोधानेन परमापूर्वोपकारकत्वरूपेणैकीकृतं पर्णताविधेः शेषिरूपं कार्यं परम्परोपकारकस्याप्युपकारकतयैवैकीकरणं शक्यम् । अतः पर्णताकार्ये सम्मार्गस्त्रुवामप्यन्तर्भावान्न तद्वर्णनं शक्यमित्यर्थः । प्रातिस्विकरूपेण भेदाङ्गीकारे दोषमाह—अन्यथेति । शरमयं बर्हिरिति शरविधेरपि बर्हिषो यत्कार्यं हविरासादनं तस्य प्रधानसम्बन्धितयाऽङ्गसम्बन्धितया च प्रातिस्विकरूपेण भेदमाश्रित्य प्रधानासादन एव निवेशः स्यात् । नाङ्गासादनेपि बहुबाधपरिहारार्थमित्यर्थः । बर्हिषः परमापूर्वार्थत्वमेव नावान्तरापूर्वार्थत्वमित्यस्मिन् पक्षे दोषमाह—किञ्चेति । प्रधानमात्रार्थमधिकारापूर्वार्थमेव बर्हिः तन्निर्वाहाय परमापूर्वोपकारकाङ्गप्रधानासादनद्वारकमित्यस्मिन् पक्षे प्रधानार्थसादने शरविधिर्न स्यात् । कुत्र तर्हि तद्विधिरित्यत्राह—प्रधानेति ।

---

१. A एकविधेयं २. परिगृहीत । ३. B साधनस्त्रुग्रूपकार्यं ।

प्रधानासादने शरविधिर्न स्यात् प्रधानार्थताद्वारभूताङ्गासादन एव स्यात्। एवं हि प्रधानमात्रार्थोऽपि विधिः। न च तत्रातीव बाध इति लाभः[1]। ननु स्रुक्कार्ये प्रधानसंबन्धिनि शमीविधिरित्यपि स्थापिते[2] प्रधान एव जुह्वा जुहोति स्रुवेणावद्यति इति उपदेशभेदे कार्यभेदात् [3]कस्मिन् कार्ये शमीविधिरिति वाच्यम्। उच्यते। यदि [4]विधिशेषो न गृह्यते तदा प्रधानवर्तिनि[5] सर्वस्मिन्नेव[6] कार्ये। अथ विनिगमनायां हेतुरस्ति तदैकस्मिन्नेव प्रधानकार्ये न त्वङ्गकार्ये इति तावन्निर्विवादम्।

ननु यथा सौमिकी महावेदिरुपात्ता उपादानप्रसङ्गादैष्टिकवेदिकार्यकरी तथा प्रधानार्थोपात्तशम्यादिस्रुग्भिरेव उपादानप्रसङ्गात् सम्मार्गः करिष्यते इति न सम्मार्गं प्रति प्रकृतिवृक्षादरः इति न प्रयोजनसिद्धिः। मैवम्।

---

प्रधानार्थताया द्वारभूतं यदङ्गासादनं तत्रैव स्यादित्यर्थः। नन्वेवं सति को लाभ इत्यत्राह--एवं हीति। एतावन्मात्रेण परमापूर्वार्थतोपपत्तिः बहुबाधपरिहारश्चेत्यर्थः।

ननु प्रकरणादल्पबाधाय च प्रधानसम्बन्धिकार्ये शमीविधावपि तत्रैव प्रधाने जुह्वाजुहोति स्रुवेणावद्यतीत्युपदेशभेदेन कार्यभेदे कुत्र कार्ये विधिरिति चोदयति--नन्विति। उच्यते इति। स्रुचः सम्मार्ष्टि स्रुवमग्रे इत्यादौ स्रुवेपि स्रुवच्छब्दस्य दर्शनात् शमीमय्यः स्रुच इत्यत्र स्रुक्छब्देन प्रधानवर्तिस्रुक्कार्योपस्थापने यदि विशेषो न गृह्यते तदा सर्वस्मिन् कार्ये शमीविधिः। अथ स्रुवं च स्रुचश्च सम्मृड्ढि इत्याद्युक्त्या कार्योपस्थापने विशेषपरिग्रहः तदा एकस्मिन्नेव। नन्वेवमनिर्धारणे सति किमत्र निरूपितमित्यत्राह--इति प्रधानेति। प्रधानगतकार्यविशेषानिर्धारणेपि प्रधान एव प्रकरणान्नाङ्गकार्य इत्येतावन्मत्रनत्र निरूपितमित्यर्थः। ननु प्रकरणात् प्रधानसम्बन्धिनि स्रुक्कार्ये शमीविधानेपि न प्रयोजनसिद्धिः। प्रधानार्थोपात्तशमीमय्यादिस्रुग्भिरेवोपादानप्रसङ्गेन सम्मार्गः करिष्यत इति तदर्थं न पृथक् स्रुगुपादानमिति न तदर्थं प्रकृतिवृक्षादर इति न सम्मार्गार्थं नानावृक्षीयाः स्रुव उत्पाद्याः पूर्वपक्षे। यथा सोमाङ्गेषु दर्शपूर्णमासविकारेष्टिपशषु सोमार्थोपात्तया महावेद्या दार्शपूर्णमासिकाल्पपरिमाणवेदिकार्यकरणात् न पश्वाद्यर्थं वेदेः पृथगुपादानमिति चोदयति--नन्विति। मैवमिति। नेत्थमुपादानप्रसङ्गविष-

---

१. A तिलाभ इति बाधः २. स्थिते A ३. तस्मिन् ४. A विशेषः
५. A प्रधानवर्तीति ६. A अस्मिन्नेव।

प्रयोगवचनाक्षिप्ते प्रयोगे यदन्तः पतितं तत् तत्प्रयुक्तिमुपजीवतीति प्रसङ्ग-सिद्धिः। उपादानमपि यद्विधिप्रयोगविधिकारितं तदुपजीवितया उपादानप्रसंगो वेद्यादौ। इह तु स्रुचां प्रयोगात् बहिरुपादानं पुरुषेण क्रतुसिद्धये क्रियत इति न प्रयोगवचनाधीनमुपादानम् यथा द्रव्यार्जनं क्रतवे क्रियमाणमपि पुरुषेण न क्रतुप्रयुक्तम्। अतो नायं प्रसङ्गस्य विषयः।

केचित्तु वेदिप्रसङ्गवैषम्यमेवमाहुः हविरासादनं हि वेदिकार्यं, आसादनं च संस्कारकर्म। न च तत्प्रयुक्तस्तद्धर्मः। किन्त्वपूर्वप्रयुक्तः। तेन तद्धर्मा-

---

योऽयम्। ननु कथमुपादानप्रसंगविषयोऽयमित्याशङ्क्य तदर्थं प्रसङ्गविषयं विविनक्ति—प्रयोगेति। एवं प्रसङ्गस्वरूपं विविच्य उपादानप्रसङ्गोऽप्येवमेवेत्याह—उपादानमपीति। प्रयोगविध्याक्षिप्तं यदुपादानं तदुपजीवितया उपादानप्रसङ्गोवेद्यादौ युक्तः वेद्युपादानस्य प्रयोगविधिनैवाक्षिप्तत्वादित्यर्थः। नन्वेवं स्रुचामपि प्रयोग-वचनाक्षिप्तोपादानतया इहाप्युपादानप्रसङ्गोऽस्त्वित्यत्राह—इहत्विति। स्यादेवं यदि प्रयोगमध्ये प्रयोगविधिनैव स्रुचामुपादानमाक्षिप्येत स्रुचां तु लोहसुवर्णादिवत् प्रयोगाद्वहिरेव पुरुषेण क्रतुसिद्धयर्थमुपादानं क्रियत इति न प्रयोगवचनाधीन-मुपादानं तासामित्यर्थः। ननु स्रुचामङ्गत्वात् तदुपादानं प्रयोगविधिकारितमेव युक्तमित्याशङ्क्य दृष्टान्तेन द्रढयति—यथेति। अङ्गत्वेपि व्रीह्यादिवत् स्रुचां क्रतु-प्रयोगमध्ये उपादानाभावान्न क्रतुविधिप्रयोज्यं तदुपादानं किन्तु पुरुषाधीनो-पादानमेव यथा द्रव्यार्जनं पुरुषेण क्रतुसिद्धयर्थं क्रियमाणमपि न क्रतुविधिप्रयुक्तम्। आधानं तु अलौकिकाहवनीयद्वारकं न पुरुषाधीनोपादानं प्रयोगानन्तःपाति चेति भावः। निगमयति अत इति। निगमनम्। यतो न प्रयोगविधिकारितोपादानता स्रुचां अतो नायं प्रसङ्गविषयः।

प्रकाशादयस्त्वन्यथा वेदिप्रसङ्गवैषम्यमूचुः तदाह—केचित्त्विति। कथमित्यत्राह—हविरिति। वेद्यां हवींष्यासादयतीति हविरासादनं वेदिकार्यम्। ततः किमित्यत्राह—आसादनं चेति। हवींष्यासादयेदिति द्वितीयाश्रुत्या हविस्संस्कारार्थत्वेनासादनविधेः संस्कारकर्मत्वमेवेत्यर्थः। ननु भवत्वेवं वेदिकार्यमासादनं संस्कारकर्म तथापि वेदि-धर्माणां कार्यप्रयुक्तत्वात् वेद्युपादानाभावे तद्धर्माभावात् वेदिकार्यमासादनं नोपपद्यत इति कथं वेदिप्रसङ्ग इत्यत्राह—न चेति। अत्र प्रयुक्तिशब्दो ग्राहकैदमर्थ्य-परः। स्यादेवं यदि वेदिधर्मः संस्कारकर्मरूपवेदिकार्यहविरासादनगृहीतः स्यात् न त्वेतदस्ति हन्तिपिषिनये संस्कारगृहीतत्वस्य निराकरणात्। अतो न वेदिधर्मः संस्कारासादनगृहीतः। किन्तु परमापूर्वगृहीत इत्यर्थः। ननु परमापूर्वगृहीतत्वेपि वेदिधर्माणां कथं तदभावे प्रकृतिक्लृप्तक्रमपरिमाणान्यत्वे च ऐष्टिकवेदिकार्या-

भावेपि वेदिसाध्यमासादनं परिमाणान्यत्वेपि महावेद्यामुपपद्यत इति वेदिप्रसङ्गो युक्त इति । इह तु सम्मार्गोऽपूर्वविषयः तदपूर्वप्रयुक्तः तद्धर्म इति स्रुक्प्रकृतिभूतपर्णतादिनानावृक्षाभावे तदपूर्वसाधनीभूतसम्मार्गाभावेन नापूर्वसिद्धिरिति न शमीस्रुचां सम्मार्गप्रसङ्ग इति । तच्चिन्त्यम् । परिहारान्तरं वर्णयन्ति—सत्यपि प्रसङ्गे सायंप्रातरग्निहोत्रार्थं नैमित्तिकनानाकर्मार्थं च नानावृक्षीया अपि स्रुच उपात्ता एवेति न सम्मार्गार्थेन अपरमुपादानं तत्प्रसङ्गादेव सम्मार्गस्य स्रुग्लाभादिति । अस्मिंश्च परिहारे भाष्यमसमञ्जसम् । नानावृक्षीया एवोत्पाद्या इति । नानावृक्षीया एवोपादेया इति हि तदा वक्तुमुचितम् तथा अग्निहोत्राद्यर्थं स्रुगपचारेपि शमीमय्य एव प्राप्नुवन्ति न नानावृक्षीया इति ।

---

सादनसिद्धिरित्यत्राह—तेनेति । तेन परमापूर्वगृहीतत्वेन धर्माणां प्रयुक्तिभीरुः प्रयोगविधिः धर्माभावेपि परिमाणान्यत्वेपि विगुणेनापि कार्यसिद्धिं ज्ञापयतीति ऐष्टिकवेदिकार्यमासादनं सौमिकमहावेद्यामुपपद्यत इति युक्तो वेदिप्रसङ्ग इत्यर्थः ।

नन्वेवं सम्मार्गस्रुक्ष्वप्येवमेव स्यादित्यत्राह—इह त्विति । अस्मिन् पूर्वपक्षे सम्मार्गोऽपूर्वविषयः ततश्च सम्मार्गविषयकावान्तरापूर्वगृहीताः स्रुवः तद्धर्माश्चेति स्रुक्प्रकृतिभूतपर्णतादिनानावृक्षाभावे स्रुगभावात् तदवान्तरापूर्वसाधनीभूतविषयीभूतसम्मार्गाभावात् नापूर्वसिद्धिरिति न शमीमयस्रुचांसम्मार्गे प्रसङ्ग इत्यर्थः । तद्दूषयति—चिन्त्यमिति । यद्यपि सम्मार्गापूर्वगृहीतता स्रुग्धर्माणां तथापि तेषामुपादानं परमापूर्वाक्षिप्तमेव साधिकारविधेरेव तदाक्षेपकत्वात् । ततश्च प्रयुक्तिभीरुणाऽधिकारविधिना विकलेनापि कार्यसिद्धिर्ज्ञापितेति वेदिवदत्रापि प्रसङ्ग एवेति पूर्वोक्तमेव वैषम्यमिति भावः ।

प्रसङ्गविषयत्वमङ्गीकृत्यैव परिहारान्तरं प्रकाशादिभिरेवोक्तम् तदप्युपन्यस्यति निराकर्तुम्—परिहारेति । कथमित्यत्राह—सत्यपीति । भवत्वत्र प्रसङ्गः तथापि प्रकृतौ दर्शपूर्णमासक्रत्वर्थमुपात्तनानावृक्षीयाः स्रुचः सम्मार्गे प्रसक्ताः विकृतौ वरुणप्रघासेपि सायंप्रातरग्निहोत्रार्थं नैमित्तिकनानाकर्मार्थं च नानावृक्षीयाः स्रुच उपात्तास्सन्तीति तत्प्रसङ्गादेव सम्मार्गे स्रुग्लाभान्न सम्मार्गार्थिताऽपरेमुपादानं सम्भवति नाप्रकृतिक्लृप्तशमीमयस्रुक्प्रसङ्गान्तरकल्पना युक्ता । न च तासां यज्ञदेशं अनानीतत्वान्न प्रसक्तिः प्रातरग्निहोत्रार्थमेव यज्ञदेशनीतत्वात् । न च हस्तसंयोगादेः प्रयोज्यतादोषः आवश्यकत्वादित्यर्थः । निराकरोति—अस्मिंश्चेति । अत्रोत्पाद्या इति भाष्योक्तिरसमञ्जसा उपादेया इत्येतावदेव वक्तुमुचितमिति, एवं भाष्यविरोधमुक्त्वा युक्तिविरोधमप्याह—तथेति । प्रातरग्नि-

तथा प्रसङ्गमङ्गीकृत्यैव केनचित् प्रकल्पितम्—प्रधानोत्तरकालं हि सम्मार्गानुष्ठानं तत्र कृते प्रधाने दैवात् स्रुगपचारे सम्मार्गार्थं स्रुगुपादाने नानावृक्षीयोपादानात् प्रयोजनसिद्धिरिति । तदयुक्तम्—भाष्ये अपचारे सतीत्यध्याहारापत्तेः । सम्मार्गानुष्ठानञ्च प्रधानोत्तरकालमित्यत्रापि न मानम् ।

ननु प्रकरणात् प्रधानस्य शमीविधिरित्यत्र निदर्शनं कृतं, यथा सहस्रदक्षिणादयः प्रधानदक्षिणाया इति । तदयुक्तम् । सहस्रदक्षिणा अहीनानामिति वाक्येनैव प्रधानभूताहीनान्वयात् । उच्यते । दक्षिणायाः प्रयोगाङ्गत्वादहीनसंयोगेन श्रवणेऽपि सामर्थ्यात् साङ्गप्रधानाहीनाङ्गं प्राप्नोति न प्रधानमात्राङ्गम् ।

---

होत्रहोमे कृते वरुणप्रघासार्थसम्मार्गानुष्ठानात् प्रागग्निहोत्राद्यर्थस्रुगपचारेपि वरुणप्रघासे च शमीमयस्रुग्भिरेव प्रसङ्गात् सम्मार्गसिद्धिः । न तु नित्याग्निहोत्राधिकारापूर्वप्रयुक्तिं प्रतीक्ष्य तत्प्रसङ्गः प्रयोगविलम्बेन प्रयोगविधिविरोधापत्तेः न सम्मार्गार्थे नानावृक्षीयस्रुग्लाभ इत्यर्थः । अत्र केनचित् प्रसङ्गविषयत्वमङ्गीकृत्यैव अन्यथा कल्पनं कृतम तदाह – तथेति । कथमित्यत्राह—प्रधानेति । स्रुग्लेपनिर्हरणदृष्टप्रयोजनाय प्रधानानन्तरं सम्मार्गानुष्ठानं सम्मार्गस्याश्रयित्वात्, आश्रयत्वं नाम दृष्टादृष्टार्थत्वम । ततः किमित्यत्राह—तत्रेति । तत्र प्रधानेऽनुष्ठिते तदनन्तरं सम्मार्गात् प्राग्दैवात् स्रुगपचारे सम्मार्गार्था अपराः स्रुच उपादेया इति नानावृक्षीयोपादानात् प्रयोजनसिद्धिरित्यर्थः । तदयुक्तमिति भाष्ये अपचारे सतीत्यनुवितस्तदनार्जवमस्मिन् कल्पने दुर्वारम् । अध्याहारे च स एव दोष इत्यर्थः । दोषान्तरमप्याह—सम्मार्गेति । सम्मार्गानुष्ठानस्य प्रधानानुष्ठानोत्तरकालत्वे प्रमाणाभावात् प्रत्युत पाठक्रमात् पूर्वकालतैव । प्रधानोत्तरकालत्वे च राद्धान्ते कथं सम्मार्गस्य संस्कारकर्मता उपयोगाभावात् । न च प्रधानार्थेष्टशिष्टस्रुग्लीनद्रव्यप्रतिपत्तितया संस्कारता । तथा सति सम्मार्गस्य दृष्टार्थत्वापत्तेः । अदृष्टार्थविषयं चैतदधिकरणम् एतेनाश्रयित्वमपि निरस्तम् । अतो नेदं कल्पनं युक्तमिति भावः ।

अत्र प्रकरणात् प्रधानस्येत्यत्र दृष्टान्त उक्तो ग्रन्थे तदनुभाषते—ननु प्रकरणादिति । आक्षिपति – तदयुक्तमिति । कथमित्यत्राह—सहस्रमिति । सहस्रं दक्षिणाऽहीनानामिति पदद्वयश्रुतिरूपवाक्येनैव प्रधानभूताहीनान्वयो न प्रकरणादिति नायं दृष्टान्त इत्यर्थः । उच्यत इति । सत्यं वाक्यात् सहस्रमहीनसंयुक्तमवगतम् । तथापि तस्यदक्षिणात्वात् दक्षिणायाश्च स्वभावात् कर्त्रानतिद्वारा प्रयोगाङ्गत्वात् प्रयोगस्य चाङ्गप्रधानोभयकर्मनिष्ठत्वात् साङ्गप्रधानाहीनान्वयेपि वाक्यस्याविरोधात् तदङ्ग-

कथं तर्हि प्रकरणादपि प्रयोगाङ्गस्य प्रधानमात्राङ्गता, उच्यते। कार्ये विधिर्हि प्रधानकार्ये क्लृप्तेऽङ्गकार्ये वाऽन्यतरत्र भवत्[1] प्रकरणात् प्रधानकार्य एव भवतीति अस्मादेव न्यायानुसन्धानात् सहस्रं प्रधानस्य।

तथाहि प्रकृतौ सोमे दीक्षणीयाद्यङ्गे एवैष्टिकी दक्षिणाप्राप्ता। दक्षिणा च भिन्ना कर्तृभेदद्वारेणाङ्गप्रयोगं प्रधानप्रयोगात् भिनत्ति। सोमस्य दक्षिणेति तु वाक्यात् सोमान्वयावगतेः प्रधानमात्रप्रयोग एव भवतीति न

मेव सहस्रं प्राप्नोति न प्रधानमात्राङ्गमहीनवाक्यादित्यर्थः। नन्वेवं लिङ्गात् प्रकरणस्य सुतरां दुर्बलत्वात् लिङ्गतः प्रयोगाङ्गस्य सहस्रस्य कथं प्रकरणादपि प्रधानाङ्गतेति चोदयति—कथं तर्हीति। उच्यत इति। सहस्रं दक्षिणाऽहीनानामिति विधिर्वैकृततया प्रकृतिक्लृप्तकार्ये भवति। तत्र क्लृप्तिः प्राकृते प्रधानदक्षिणाकार्ये अङ्गदक्षिणाकार्ये वा बहुबाधपरिहारार्थं अन्यतरत्र भवत् प्रकरणात् प्रधानदक्षिणाकार्य एव भवतीत्येवं न्यायालोचनयैव सहस्रं प्रधानमात्राङ्गमित्यर्थः। ननु सोमेऽङ्गप्रधानदक्षिणाद्वयस्याश्रवणात् कथमस्य न्यायस्य तत्रावकाशः? तत्राह—तथाहीति। सत्यं प्रकृतौ दक्षिणाद्वयस्य न साक्षादुपदेशः। किन्तु प्रकृतौ सोमे दीक्षणीयाद्यङ्गेषु दार्शपौर्णमासिकी दक्षिणा चोदकप्राप्ता। अतः उपदेशातिदेशाभ्यां दक्षिणाद्वये कार्यद्वयं क्लृप्तमित्यर्थः। ननु कथं दक्षिणाद्वये कार्यद्वयं प्रयोगनिर्वृत्तिर्हि दक्षिणाकार्यं स च प्रयोगोऽङ्गप्रधानयोरेकप्रयोगवचनपरिगृहीतयोः एक एवेत्यत्राह—दक्षिणा चेति। ऐष्टिकी दक्षिणा तावत् अखण्डोपकारप्रापणादपि चोदकेनाङ्गसम्बन्धिन्येव प्राप्ता। सा च भिन्ना प्रधानप्रयोगाङ्गप्रयोगं भिनत्ति। ननु दक्षिणा कर्त्रानतिकरत्वात् कर्तृसम्बन्धिनी न प्रयोगसम्बन्धिनीति कथं प्रयोगभेदिकेत्यत्राह—कर्तृभेदेति। सत्यं कर्त्रन्वयिनी तथापि कर्तृभेदद्वारेण तदन्वयिनं प्रयोगमपि भेत्तुं क्षमा। ततश्च अङ्गावान्तरप्रयोगनिर्वृत्तिरङ्गदक्षिणाकार्यं प्रधानावान्तरप्रयोगनिर्वृत्तिः प्रधानदक्षिणाकार्यं इति प्रकृतौ कार्यद्वयं क्लृप्तमित्यर्थः। ननु सोमस्य दक्षिणेति द्वादशशतं दक्षिणा स्वलिङ्गादङ्गप्रधानोभयाश्रितसोमप्रयोगान्वयिनी। ततश्च तया प्राकृताङ्गदक्षिणाबाधात् कथं तद्दक्षिणाद्वयात् कार्यकल्पनमित्यत्राह—सोमस्येति। सोमस्य दक्षिणेतिलिङ्गादपि प्रबलात् पदद्वयश्रुतिरूपवाक्यात् सोमान्वयावगतेः प्रधानावान्तरप्रयोग एव भवति न सोममहाप्रयोगे।

ननु प्रकरणाविरोधिलिङ्गात् महाप्रयोगसम्बन्धेऽवगम्यमानेपि कथं प्रधानावान्तरप्रयोगमात्रान्वयः वाक्यावगतसोमान्वयस्य साङ्गसोमान्वयेऽप्यविरोधात्

१. क्लृप्तेरङ्गकार्येप्रधानकार्ये वा।

सोममहाप्रयोगे पतति । प्रकरणाविरोधेऽपि सोमशब्दानुरोधात् । तेन सोमेऽप्यवान्तरप्रयोगभेदात् दक्षिणाकार्यद्वयं क्लृप्तम् तद्विकृतावप्यहीने क्लृप्तबहुबाधभयात् महाप्रयोगकार्यहानात् अवान्तरे सहस्रमेकस्मिन् कार्येऽवतरत् प्रकरणात् प्रधानकार्ये सहस्रे प्रकृत्यधीतेऽनारभ्याधीते वा अहीनमात्रेऽन्वयार्था अहीनानामिति श्रुतिः न प्रधानान्वयार्थापीत्यनुसन्धेयम् ।

---

इति शङ्कामात्रमपनुदति–प्रकरणेति । सत्यं प्रकरणाविरोधि लिङ्गंतथापि सोमशब्दानुरोधात प्रधानावान्तरप्रयोगमात्रान्वय एव । सोमशब्दो हि न यागवचनः किन्तु लक्षणया तद्युक्तयागपरः । सोमान्वयश्च प्रधानमात्रस्यैव नाङ्गस्येति प्रधानमात्रपरसोमशब्दानुरोधात् प्रधानमात्रान्वय एवेत्यर्थः । एवं प्रयोगद्वयसम्बन्धिनि दक्षिणा द्वये तत्कार्यद्वयमपि क्लृप्तमेवेत्याह—तेनेति । ननु ज्योतिष्टोमस्य विकृतावहीने विधीयमानं सहस्रं अविशेषात् दक्षिणाद्वयनिर्वाह्यमहाप्रयोगकार्य एव भवितुमर्हतीति कथमेतन्न्यायविषयतेत्यत्राह—तद्विकृताविति । तस्य ज्योतिष्टोमस्य विकृतावहीने विधीयमानं सहस्रं बहुबाधभयात् महाप्रयोगकार्यं हित्वा अवान्तरे कस्मिंश्चित्कार्ये प्रकरणात् प्रधानकार्ये एव भवितुमर्हतीति भवत्येवैतन्न्यायस्य विषय इत्यर्थः । ननु सहस्रं दक्षिणा अहीनानामिति सहस्रं किमारभ्याधीतं उतानारभ्याधीतं वा ? आद्ये सोमस्य दक्षिणेत्यत्र यथा सोमशब्दानुरोधात् वाक्यादेव प्रधानमात्रान्वयः तथा अत्राप्यविवक्षितबहुत्वोद्देश्यसमर्पकाहीनश्रुतिवैयर्थ्यपरिहाराय प्राधानमात्रान्वय एव युक्तः । महाप्रयोगान्वयस्य प्रकरणपाठादेव लब्धेः । द्वितीये तु सुतरां वाक्यादेव प्रधानमात्रान्वयात् प्रकरणाभावात् प्रकरणात प्रधानस्येति न्यायस्य नाय विषय इत्यत्राह—सहस्र इति । सहस्रमारभ्याधीतं वाऽस्तु अनारभ्याधीतं वा उभयथाप्यहीनानामिति श्रुतिरहीनमात्रान्वयार्था न पुनः प्रधानमात्रान्वयार्थापि । साङ्गप्रधानान्वयेपि तच्छ्रुतेरविरोधात् । अतो बाधलाघवसङ्गतात् प्रधानस्य प्रकरणादिति नयादेव प्रधानमात्रान्वयः सोमश्रुतेस्तु यथा विरोधस्तथोक्तमेव ।

अयं भावः–द्वादशाहो द्विविधः सत्रात्मकोऽहीनात्मकश्च । किं सहस्रं सत्रात्मकं प्रकृत्याम्नातं उत द्वादशाहमात्रं, अहोस्वित् अहीनात्मकं ? आद्ये द्वितीये च पक्षे अहीनशब्दस्याहीनमात्रसम्बन्धापादनेन चरितार्थत्वात् न प्रधानान्वयार्थतापि वैकृतत्वात्सहस्रविधेः न्यायत एव प्रधानमात्रान्वयलाभे उभयपरत्वेन गौरवायोगात् । तृतीये न्यायत एव प्राप्तत्वादहीनश्रुतिरनुवादमात्रम् । सोमश्रुतौ तु प्राकृतविधितया नैतन्न्यायप्राप्तिरिति वाक्यादेव प्रधानान्वयः । एवमनारभ्याधीतपक्षेपि अहीनश्रुतेरहीनमात्रान्वयपरतया न्यायादेव प्रधानान्वयलाभः । यदातु

ननु यदि प्रकरणादेव प्रधानान्वयः कथं तर्हि यज्ञाथर्वणकाम्येष्टावुपांशुत्वं वाक्यबलेन प्रधानार्थमुक्तम् । उच्यते । उपांशु प्रचरन् कर्ता सुखमनुतिष्ठतीति कर्तृद्वारकमुपांशुत्वं प्रयोगाङ्गं सत् अङ्गप्रधानार्थं प्राप्नोति । न ह्यत्र प्रधानप्रयोगाद्भिन्नोऽङ्गप्रयोगः दक्षिणादिभेदाभावात् । अतः काम्येष्टिसंयोगेनोपांशुत्वोपदेशात् उपदिष्टप्रधानमात्रार्थ एवोपांशुत्वमिष्यते । आतिदेशिकस्याङ्गजातस्य विलम्बेन प्रतीतेः प्रधानप्रयोगावच्छेदेनोपांशुत्वमन्वेति ।

---

सहस्रं दक्षिणाऽहीनानामित्यारभ्यानारभ्याधीतवाक्यद्वयमस्ति तदा साप्तदश्यवाक्यरीत्या एकम् उत्पत्त्यर्थमपरमन्वयार्थमिति । ननु यदि सहस्रस्य न वाक्यात् प्रधानान्वयः किन्तु प्रकरणात् प्रधानस्येति नयादेव, कथं तर्हि यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु चरितव्या इति यज्ञाथर्वणकाम्येष्टावुपांशुत्वं वाक्य[1]बलात् प्रधानार्थमुक्तं तृतीय इति चोदयति—कथं तर्हीति । उच्यत इति । नात्र दक्षिणामुद्रामुद्रितत्वं सम्भवति, कथमित्यत्राह—उपांशुत्विति । उपांशुत्वस्योच्चारणधर्मस्य प्रयोगाङ्गत्वात् साङ्गप्रधानार्थत्वमेव युक्तम् । कथं पुनः प्रयोगाङ्गत्वमित्यत्राह—कर्तृद्वारकमिति । प्रयोगाङ्गभूतकर्तृद्वारकत्वात् तस्य प्रयोगाङ्गत्वम् । कर्तृद्वारकतैव कथमित्यत्राह—उपांशुप्रचरन्निति । उपांशुप्रचरन् कर्ता शरीरायासाभावेन अखिन्नः सुखमनुष्ठेयकर्मजातमनुतिष्ठति इति कर्तृधर्मता उपांशुत्वस्येत्यर्थः ।

नन्वेवमपि साक्षात्प्रधानान्वयलाभेन प्रधानप्रयोगमात्र एव निवेशोऽस्त्वित्यत्राह—न ह्यत्रेति । स्यादेवं यद्यङ्गप्रयोगात् प्रधानप्रयोगस्य भेदः स्यात् । स एव नास्ति तत्र हेतुः दक्षिणेति । प्रयोगानुबद्धकर्त्रानतिहेतुदक्षिणाभेदाद्धि अङ्गप्रधानयोरवान्तरप्रयोगभेदः । दक्षिणाभेदश्चात्र नास्तीति प्रयोगभेदाभावान्न प्रधानमात्रार्थतेत्यर्थः । नन्वेवं सति वाक्यादपि कथमुपांशुत्वस्य प्रधानमात्रान्वय इत्यत्राह—अत इति । यत एवं प्रकरणात् प्रधानान्वयोऽनुपपन्नः अतः ता उपांशु चरितव्या इति काम्येष्टिसंयोगेन वाक्यादुपदिष्टमुपांशुत्वं उपदेशश्चोपदेशमुपोद्बलयतीति उपदिष्टे करणीभूते शीघ्रभाविनि प्रधानमात्र एव निवेष्टुमर्हति अङ्गानामातिदेशिकतया विलम्बेन प्रतीतेः । नन्वेवमपि प्रधानप्रयोगस्याङ्गप्रयोगाद् भेदाभावात् कथं तन्मात्रे निवेश इत्यत्राह—प्रधानेति । यद्यपि स्वतो भेदो नास्ति तथापि सापेक्षनिरपेक्षन्यायोपबृंहितवाक्यावगतप्रधानमात्रान्वयवशात् प्रधानमात्रसम्बन्धित्वेन प्रयोगमवच्छिद्य प्रयोगाङ्गभूतोपांशुत्वान्वय इत्यर्थः । नन्वेवमपि सापेक्षनिर-

---

१. B वाक्यात्

तेनोच्यते वाक्यात् प्रधानमात्रान्वितमुपांशुत्वमिति। एतच्च यज्ञाथर्वणाधिकरणे निरूपितम्। ऋत्विक्कार्ये यजमानविधौ यत् सत्रप्रयोगात् ऋत्विङ्निवृत्तिः तत्रापि सर्वप्रयोगाङ्गतैवर्त्विजां हेतुः। किञ्च ऋत्विक्कर्तृतया स्वामिकर्तृतानिर्वृत्तिः सामान्यतः कार्यम्। आध्वर्यवाद्युपदेशकार्यं अङ्गप्रधाना-

---

पेक्षन्यायेन प्रधानान्वयित्वं न वाक्यादित्यत्राह—तेनेति। येन कारणेन न्यायानुगृहीतवाक्यबलादवगतप्रधानान्वयादेव प्रयोगावच्छेदपूर्वकं प्रधानप्रयोगमात्रसम्बन्धित्वं तेनोच्यते उपांशुत्वं वाक्यात् प्रधानमात्रान्वितमिति। ननु कर्त्रन्वितमुपांशुत्वं कर्तृद्वारा प्रयोगाङ्गं साङ्गप्रधानमात्रार्थमेव युक्तम्। तथा वाक्ये 'चरितव्या' इति साङ्गप्रधानरूपानुष्ठानावस्थकर्मान्वयादपि साङ्गार्थं एवेत्यादिशङ्कानिराकरणं यज्ञाथर्वणाधिकरणे निरूपितमित्याह—एतच्चेति। स्यादेवम् उपांशुत्वस्य यदि कर्त्रन्वयोऽत्र श्रुतः स्यात्। किन्तु प्रधानकर्मसम्बन्धित्वेन श्रुतस्य लिङ्गात् कर्तृद्वारत्वमात्रम्। तच्च यत्र प्रधाने श्रुतं तत्कर्तृद्वारमेव न कर्तुः प्रयोगाङ्गत्वमप्यपेक्षते। चरितव्या इत्यनुष्ठानावस्थान्वयोऽपि सापेक्षनिरपेक्षन्यायोपबृंहितोपदेशबलात् प्रधानमात्रस्यानुष्ठानावस्थयेत्यादि तत्रैव निरूपितमित्यर्थः।

नन्वेवं सत्रे ये यजमानाः ते ऋत्विज इति ऋत्विक्कार्ये यजमानविधिरपि शमीविधिवत् बाधलाघवाय प्रधानसम्बन्धिनि कार्ये स्यात्। ततश्च तत्र प्रधान[१]-प्रयोगादेव ऋत्विङ्निवृत्तिः न सत्रमहाप्रयोगात् इत्यत्राह—ऋत्विक्कार्यं इति। ऋत्विजां प्रयोगाङ्गत्वात् प्रयोगस्य च साङ्गप्रधाननिष्ठतया ऋत्विक्कार्ये यजमानविधौ सत्रमहाप्रयोगात् सर्वथा ऋत्विङ्निवृत्तिरित्यर्थः। ननु यथा प्रयोगाङ्गमप्युपांशुत्वम् अवान्तरप्रयोगावच्छेदेन प्रधानप्रयोगमात्रनिविष्टं तथा यजमानविधिरपि ऋत्विजां प्रयोगाङ्गत्वेऽप्यवान्तरप्रयोगभेदाश्रयणेन प्रधानप्रयोग एव स्यादित्यत्राह—किञ्चेति। स्यादेतदेवं यदि ऋत्विजां साक्षात् प्रयोगनिर्वृत्तिः कार्यं स्यात्। किन्तु ऋत्विक्कर्तृतायाः स्वामिकर्तृतानिर्वृत्तिरेव सामान्यतः कार्यम्। स्वामिकर्तृतायाश्चास्तु साङ्गप्रधानप्रयोगनिर्वृत्तिः, साङ्गप्रधानप्रयोगे स्वामिन एव विधिना कर्तृत्वाक्षेपात्। अतः तद्द्वारा ऋत्विजामपि महाप्रयोगनिर्वृत्तिः प्रकृतौ कार्यमिति तत्र यजमानविधेः सर्वथा ऋत्विङ्निवृत्तिः उपांशुत्वस्य प्रधानसम्बन्धितया श्रुतेरवान्तरप्रयोगावच्छेदेन प्रधानसम्बन्धिनि निवेशः। इह तु यजमानविधौ न तथा श्रुतिरिति भेदः।

ननु आध्वर्यवाद्युपदेशभेदात् तत्तदवान्तरदक्षिणाभेदेन वा कर्तृभेदेनावान्तरप्रयोगभेदो दुर्वारः तत्तदवान्तरप्रयोगनिर्वृत्तिर्भेदेनर्त्विजां कार्यमिति बाधलाघवात् यत्र प्रधानप्रयोगनिर्वृत्तौ यजमानविधिः स्यादित्यत्राह—आध्वर्यवेति। आध्वर्य-

---

१. सत्र २. प्रधानयागादेव

श्रयस्वामिकर्तृतानिवृत्तिः। अतः ऋत्विक्कार्ये यजमानविधेः [1]सर्वथा ऋत्विङ्निवृत्तिः। अतः स्रुगाद्युदाहरणे प्रयोजनं सिद्धम्। अग्न्युदाहरणे त्वपूर्वत्वादवभृथस्याग्निप्राप्तिरेव नास्तीति नाग्न्युपादानं सम्मार्गार्थम्। परिध्युदाहरणेऽपि बाणवद्विधानेऽप्यस्य अपरिधित्वात् पलाशगुणलोपेन वा बाणवत्

---

वाद्युपदेशस्य अङ्गप्रधानाश्रयस्वामिकर्तृतानिर्वृत्तिरेव कार्यं न साक्षादवान्तरप्रयोगनिर्वृत्तिः। अतः स्वामिकर्तृतानिर्वृत्तिरूपेण एकस्मिन् ऋत्विजां कार्ये यजमानविधानात् नैतन्न्यायविषयतेत्यर्थः। ननु स्वामिकर्तृतानिर्वृत्तेरेकत्वेपि विकृतविधेर्बहुबाधपरिहारार्थमाध्वर्यवाद्युपदेशबलायातावान्तरप्रयोगो भेदेनैव स्यादिति एतन्न्यायविषयता स्यात् तत्राह—अत इति। ये यजमानास्त ऋत्विज इति ऋत्विक्कार्यमात्रोद्देशः श्रुतो नाध्वर्यवाद्यवान्तरकार्योद्देशः। अत ऋत्विक्कार्यमात्रे यजमानविधेः सर्वथा ऋत्विङ्निवृत्तिः इत्यर्थः। अत इति निगमनम्। अतः स्रुचस्सम्मार्ष्टीति सम्मार्गोऽयमदृष्टार्थः प्रोक्षणपर्यग्निकरणसमभिव्याहारात् स्रुग्लेपनिर्हरणार्थतया दृष्टार्थोऽपरः। यद्वा दृष्टार्थ एक एव सम्मार्गः स एवादृष्टार्थ इति कृत्वाचिन्तयोदाहरणता। यद्यपि सम्मार्गस्य प्रधानकर्मत्वे कपिञ्जलनयात् तिसृणामेव सम्मार्गः गुणकर्मत्वे तु सर्वासां, तथा पूर्वपक्षे सम्भूय सकलसम्मार्गः, सिद्धान्ते तु भेदेन प्रतिप्रधानावृत्तिनयादिति प्रकृतावेव प्रयोजनलाभे भाष्यकृतापि विकृतौ प्रयोजनोक्तिरयुक्ता तथापि प्रधानप्रत्यासत्तिबाधलाघवादिन्यायान्तरप्रदर्शनार्थं विकृतौ प्रयोजनोक्तिः। यद्वा नोपात्तविषये कपिञ्जलन्यायः। न चादृष्टार्थे प्रतिप्रधाननयः। तथा पूर्वपक्षे सम्मार्गस्य प्रधानकर्मत्वेनारादुपकारकतया गृहमेधीये आज्यभागौ यजतीत्युपकारावच्छेदे तस्यापि प्रयाजादिवन्निवृत्तिः। सिद्धान्ते संस्कारकर्मत्वान्नेति तु प्रयोजनं स्फुटत्वान्नोक्तमिति भावः। अग्न्युदाहरणे अवभृथस्य विकृतित्वाभावादारादुपकारकसम्मार्गस्यैष्टिकस्य तत्राभावात् तद्द्वारा अग्निप्राप्तिरपि नास्तीति नाग्न्युपादानं सम्मार्गायेत्याह अग्न्युदाहरण इति। अपूर्वत्वात् अविकृतित्वादित्यर्थः। परिध्युदाहरणेपि बाणवन्तः इति बाणवद्विधेः यौगिकत्वात् परिधिशब्दस्य य एव परितोऽग्निं धीयते तस्यैव सम्मार्गे विनियोगः अन्यस्य परिधित्वाभावात् गुणलोपन्यायेन पलाशगुणलोपेन विगुणबाणवत् सम्मार्ग एव तत्रापि पूर्वपक्षेपि न सम्मार्गार्थं पलाशोपादानमित्याह—परिधीति। किमर्थं तर्हि तद्द्वयमुदाहृत्य प्रयोजनमुक्तं भाष्यकारेणेत्यत्राह—इत्युदाहरणेति। न्यायनिष्ठत्वान्मीमांसाशास्त्रस्य उदाहरणद्वयेऽप्यग्नेः पालाशपरिधेश्च प्राप्तिरस्तीति कृत्वाचिन्तोपपत्तेः नोदाहरणमादरणीयमित्येव समाधानं, मध्व-

---

१. B सर्वत्व।

सम्मार्जनमेवेति न प्रयोजनसिद्धिरुदाहरणद्वयेपि नोदाहरणमादरणीयमेवेति समाधानम् । पुरोडाशोदाहरणेत्वौषधप्रकृतिकपिष्टव्यक्त्यभिव्यङ्ग्यत्वात् पुरोडाशाकृतेः पर्यग्निकरणार्थं तद्व्यक्त्युपादानमिति प्रयोजनमुपपन्नमेव ।

## ।५। स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ।१३।

एतदप्यधिकरणं विषयत्वाधिष्ठाननिरूपणादुपोद्घातेन सङ्गतं वदन्नेवञ्जातीयकं सर्वमेवोपोद्घातेन सङ्गतं न त्वाद्यमात्रमिति पञ्चिकाकारो

---

शनादिषु कृत्वाचिन्ताया अपि भाष्योक्तत्वादित्यर्थः । अत्र भाष्ये पुरोडाशं पर्यग्निकरोतीत्यत्र पूर्वपक्षे पर्यग्निकरणस्यारादुपकारकत्वे विकृतौ षट्त्रिंशत्संवत्सरे सत्रे तरसाः सवनीयाः पुरोडाशा भवन्ति इत्यत्र पर्यग्निकरणार्थं पिष्टमयः पुरोडाश उत्पादयितव्य इति प्रयोजनमुक्तम् । तच्चायुक्तम् । प्रकृतौ व्रीहिभिर्यजेतेति यागे पुरोडाशप्रकृतित्वेन व्रीहयो विहिताः न पर्यग्निकरणाङ्गभूतपुरोडाशार्थमिति तदर्थं विकृतौ व्रीहीणामुपादानाभावात इत्याशङ्क्योपपादयति--पुरोडाशोदाहरणेति । सत्यमेवं, तथापि औषधप्रकृतिकपिष्टसाध्यव्यक्त्यभिव्यङ्ग्यत्वात् पुरोडाशाकृतेः पर्यग्निकरणार्थंप्रकृतावेव पिष्टमयव्यक्त्युपादानमिति तद्विकृतावपि पर्यग्निकरणार्थं तद्व्यक्त्युपादानमिति प्रयोजनमुपपन्नमित्यर्थः । व्रीहीन् प्रोक्षतीत्यत्र तु तु नैवारे चरौ प्रयोजनमिति तानि द्वैधाधिकरणे प्रयोजनोक्त्यैव व्यक्तमिति नेह तदुक्तिः ।

## ।५। स्तुतशस्त्रयोस्तु संस्कारो याज्यावत् देवताभिधानत्वात् ।१३।

प्रशगं शंसति निष्केवल्यं शंसति आज्यैः स्तुवते पृष्ठैः स्तुवते इति सौमिकेषु ग्रहयज्ञेषु स्तोत्रंशस्त्रं चाम्नातम् । तत्र चिन्ता-किं तयोर्गुणकर्मत्वमुत नियोगकर्मत्वमिति । तत्र भाष्यकारेण यदेद्गुणवचनं स्तवनशंसनरूपं तत् किं गुणिनीं देवतां प्रति गुणभूतमुतप्रधानभूतमिति शेषशेषित्वमेव विचारितम् । तदनुपपन्नम्, [ अ ] प्रक्रान्तत्वात् इत्याक्षिप्य पञ्चिकाकारो विषयाविषयपरतया तद्भाष्यं व्याख्याय विषयत्वाधिष्ठाननिरूपणपरत्वात् तस्य च शास्त्रभेदोपोद्घातत्वं प्रकृतसिध्यर्थं दर्शयतीत्याह—एतदपीति । विषयत्वे सति शब्दान्तरादिभिः अनुबन्धभेदाच्छास्त्रभेदः अन्यथा नेत्येवं प्रकृतसिध्यर्थतेत्यर्थः । ननु स्तौतिशंसत्योः चिकीर्षितपदार्थसंबन्धिता न प्रतीयते द्वितीयान्ते पदे तस्यानुपस्थापनात् प्रउगादिपदानां च नामतैव । अतश्च वाक्ये साध्यान्तराप्रतीतेः साक्षात्संबन्धलोभेन स्वतः साध्यभावार्थतया तयोर्नियोगविषयतैव युक्तेति कथं गुणकर्मतया पूर्वपक्षः ? तत्राह

दर्शयति—अत्र पूर्वपक्षः स्तौतिशंसती प्रगीताप्रगीतमन्त्रसाध्यगुणव्यवच्छिन्नगुणाभिधाने। अतो गुण एवाभिधेयतात्पर्यं गुणिगतं तु गुणाभिधानमिति गुणिनोऽपि प्रतीतिः। गुणिनस्तु कार्यान्तरसाधनत्वात् तत्प्रकाशनं प्रयोजनम्। अतः चिकीर्षितार्थत्वं स्तौतिशंसत्योः।

ननु हविर्भागितारूपेण स्मृते प्रयोजनम्[1]। इह तु गुणभागित्वेन गुणिप्रतीतिरिति कथं तत्प्रत्यभिज्ञानम्। मैवम्। गुणिस्वरूपेणावगते तदवस्था हविर्भागितापि प्रतीयत एवेति—

---

अत्र पूर्वपक्ष इति। सत्यं द्वितीयान्तपदेन साध्यान्तरानुपस्थापनं तथापि पेषणादिवत् पदार्थस्वभावादेव चिकीर्षितार्थत्वं स्तौतिशंसत्योः। तेन स्तुतप्रशस्यनिष्ठे स्वभावतः हन्तेरिव हन्यमाननिष्ठत्वं लोकसिद्धम्। अतो लोकावगतस्वभावसिद्ध-चिकीर्षितार्थत्वबलात् साक्षादन्वयं विहाय परम्परयैव कार्यान्वय इति गुणकर्मतैवेति भावः। नन्वेवमपि प्रकृतनियोगीयदेवतास्मारकत्वाभावात् कथं तदर्थतया गुणकर्मता, तयोः स्तौतिशंसत्योः गुणाभिधानरूपतया गुण एवाभिधानतात्पर्यात्। न चाभिधेयगुणप्रकाशकतया प्रकृतनियोगे किञ्चित्करता येन तावन्मात्रतयापि गुणकर्मता स्यात्। गुणस्य प्रकृतनियोगसाधनतया विनियोगाभावात्। यस्याश्च देवतायाः साधनत्वं तत्र न तात्पर्यं तयोः। कथं वा स्तौतिशंसत्योः अत्र भेदेनाभिधानं ष्टुञ् स्तुतौ शंसु स्तुतौ इत्येकार्थतयैव स्मृतेः। कथं च स्तुतेरङ्गता गुणकर्मार्थतया आर्थवादिकस्तुतिवत् अस्याप्यननुष्ठेयत्वादिति। तत्र प्रथमाशङ्कामनुवदन् द्वितीयतृतीये निराकरोति—स्तौतिशंसती इति। अत्रायं विशेषः मन्त्रसाध्येत्यनेनार्थवादिक्याः स्तुतेः वैषम्यमुक्तम् उपादेयभूतमन्त्रसाध्यगुण्यवच्छिन्नगुणाभिधानरूपतया स्तोत्रशस्त्रयोरुपादेयतयैव विनियोगात्। आर्थवादिकी स्तुतिस्तु नेत्थं, तथा प्रगीताप्रगीतपदेन तयोर्भेदेनोपादानम्। यद्यप्येकार्यतयैव स्तुतिप्रशंसयोर्लोके व्यवहारः तथापि वैदिकव्यवहारबलात् प्रगीतमन्त्रसाध्या गुण्यवच्छिन्नगुणाभिधाना स्तुतिः, अप्रगीतमन्त्रसाध्यगुण्यवच्छिन्नगुणाभिधानं शस्त्रं इति भिन्नार्थे एव स्तोत्रशस्त्रे, लोके अनुपयोगादेव न विवेचितम्। वेदे तु विनियोगवशेनैव विवेकोपयोगःस्तुतिस्तु लाघविकतया गुणाभिधानमात्रपरा गौणी।

एवं चायमर्थः—सत्यं स्तौतिशंसत्योः प्रगीताप्रगीतमन्त्रसाध्यगुण्यवच्छिन्नगुणाभिधानरूपत्वात् गुण एवाभिधेये तात्पर्यम् न देवतायामिति। एवं शङ्कामनुभाष्योत्तरमाह—गुणिगतं त्विति। तथापीत्यर्थः। गणाभिधानं तु गुणिगतमेव निरा-

---

१. B रूपस्मृतिप्रयोजनम्

राद्धान्तस्तु गुणभागित्वं हविर्भाक्त्वविपरीतं मन्त्रादवसीयत इति न स्वभावतो वा श्रुतितो वा चिकीर्षितार्थता ।

---

श्रयतया गुणाभिधानायोगात् । अतो गुणिनी देवतापि प्रतीतेति तत्स्मारकतया संस्कारकर्मतैव स्तौतिशंसत्योरित्यर्थः । यदि परं तस्या एव देवतायाः प्रकृतनियोग-साधनता न स्यात् तदैव सक्तुवत संस्कारानर्हतया तत्प्रकाशनमप्रयोजनं स्यात् साप्यस्तीत्याह—गुणिनस्त्विति । अत इति निगमनम् । नन्वत्र प्रकृतहविर्भागित्वेनैव इन्द्रादेर्देवतात्वात् तद्रूपस्मृता देवता प्रयोजनम् । इह तु गुणाश्रयतया गुणित्वेनैवे-न्द्रादिदेवताप्रतीतिरिति कथं प्रकृतप्रकाशनमिति चोदयति-नन्विति । मैवमिति । सत्यं तथापि गुणाभिधाने तदाश्रयतया गुणिस्वरूपमपि स्मृत्यारूढं; तस्मिंश्च स्मृत्यारूढे तस्य यदवस्यान्तरं हविर्भागित्वं नाम तदपि स्मृतं भवति । तत्र च तद्रूपा-वभावित्वेन स्तौतिशंसती कारणम् । न चैतावता तन्मन्त्रस्य याज्यावदभिधान-मन्त्रतापातः, गुण एवाभिधेये तात्पर्यात् । ततश्च हविर्भागित्वेन रूपेण इन्द्रादिः शेषी स्तौतिशंसती शेषः । स्वसाधनीभूतमन्त्रद्वारा तद्रूपेण ज्ञानं किञ्चित्कारः । न चेन्द्रादिस्वरूपस्यैव भेदः । अभिधानाभेदेन तदभेदस्य स्फुटत्वात् । न चाने-कार्थता, इन्द्रादिशब्दानां अनेकशक्तिकल्पनागौरवापत्तेः । न चाङ्गभूतमन्त्रान्वये सति स्तुतौ इन्द्रादेः देवतात्वं हविर्भागित्वरूपेण शेषित्वमिति यावत् । तदन्वयश्च स्तुतेर्निरूढत्वे सति । तन्निरूढिश्च देवतान्वयपूर्वकृततत्संस्कारतयेति चक्रकापत्तेः अत एव द्वारिभूतस्तुतेरपूर्वद्वारा निरूढिराश्रयवदिति वाच्यम् । यतः आश्रयिषु यजेरन्यनिष्ठत्वाज्ञानात् नियोगविषयतयैव निरूढिः । इह स्तुतेः स्तुत्यनिष्ठत्वस्य लोकसिद्धत्वात् तद्बलेन सामान्येन कार्यसम्बन्धिप्रतिसन्धिपूर्वकनिरूढि प्रतिसन्धाने मन्त्रस्य स्वसम्बन्धे विशेषान्वयमात्रं पश्चात्प्रतीयत इति भावः ।

राद्धान्तस्त्विति । स्तौतिशंसती नियोगविषयौ साक्षात्सम्बन्धलोभात् । न च विनियोगविरोधः शेषिसम्बन्धस्याश्रुतेः । न च स्तुतेः स्तुत्यनिष्ठस्वभावतया लोक-सिद्धत्वात् लिङ्गादेव स्तुत्यरूपशेषिसम्बन्धः, स्तुत्यरूपदेवतायाः प्रकृतनियोग-साधनतया विनियोगाभावेन शेषित्वानर्हत्वात् । न च स्तौतिशंसत्योः गुण्यवच्छिन्न-गुणाभिधानतया गुणाश्रयत्वेन गुणिस्वरूपप्रतीतेः तदवस्थान्तरं हविर्भागित्वमपि प्रतीयत एवेति तद्रूपेण शेषित्वार्हता, यतो गुणभागित्वरूपं हविर्भागित्वरूप-विपरीतमेव स्तोत्रशस्त्रमन्त्रात्प्रतीयते । अतः शब्दभेदेपि रूपभेदात् भिन्न एवेन्द्रादि देवता । रूपभेदाभेदाभ्यां घटपटादिषु पदार्थभेदाभेदस्य दर्शनात् । अतो गुणाश्रय-प्रतीतावपि न हविर्भागित्वाश्रयप्रतीतिः शाब्दीति न पेषणादिवत् स्वभावतो नापि सम्मार्गादिवत् द्वितीयाश्रुतितः चिकीर्षितार्थत्वं स्तौतिशंसत्योरित्यर्थः । नन्वेवं पशुपुरोडाशमन्त्रोऽपि न पशुदेवतास्मारकः स्यात् । तन्मन्त्रस्य पशुपुरोडाशहविर्भा-गितया अग्नीषोमगमकस्य पशुहविर्भागितया गमकत्वाभावात् पशुदेवताप्रत्यभिज्ञा-

ननु पशुपुरोडाशमन्त्रोऽपि पुरोडाशहविर्भागितयाऽग्नीषोमौ अवगमयतीति न पशुहविर्भागितावगतिरिति कथं प्रत्यभिज्ञा। मैवम्। उद्देश्यतया स्मृता देवतोद्देश्यतयाऽनुष्ठेयेति देवतांशे प्रत्यभिज्ञा। हविर्विशेषस्मरणन्तु हविरनुष्ठानोपयोगीति यावदर्थो मन्त्रस्तावतस्तत्र प्रत्यभिज्ञा। इह तूद्देश्यतयैव[1] मन्त्रान्नप्रत्यभिज्ञायत इति राद्धान्तः।

केचित्तु राजामात्यादिस्तुतेः स्तुत्यार्थत्वदर्शनात् पूर्वपक्षयन्ति।

---

पकत्वाभावादिति चोदयति—नन्विति। मैवमिति। पशौ पुरोडाशे च हविः प्रत्युद्देश्यतयैवाग्नीषोमयोर्देवतात्वात् उद्देश्यतयैव मन्त्रेण स्मृता देवता उद्देश्यतयाऽनुष्ठेयेति हविरुद्देश्यत्वरूपदेवतांशप्रत्यभिज्ञा तत्र युक्तेत्यर्थः। पशुपुरोडाशमन्त्रात् न पशुप्रतीतिरिति कथं पशुदेवताप्रत्यभिज्ञानमित्यत्राह—हविर्विशेषेति। यद्यपि न मन्त्रात् पशुहविर्धीः तथाप्युद्देश्यतामात्रस्यैव देवतानुष्ठानोपयोगित्वं, हविर्विशेषस्मरणं तु हविरनुष्ठानोपयोगि न देवतानुष्ठाने। अतो देवताप्रकाशकतया विनियुक्तस्य मन्त्रस्य यावदर्थत्वमुद्देश्यतया देवताप्रका[2]शनार्हं तावत् प्रत्यभिज्ञानादुद्देश्यतया देवताप्रत्यभिज्ञा तत्र युक्तेत्यर्थः। इह तु स्तुतौ न हविरुद्देश्यतया देवताप्रत्यभिज्ञेत्याह—इह त्विति।

ननु गुणिस्वरूपसम्बन्धिनी गुणभागित्वहविर्भागित्वरूपे तत्र सम्बध्यन्तरप्रतीतेः सम्बध्यन्तरधीरप्यवन्ध्येति[3] युक्ता अत्रापि प्रत्यभिज्ञा। अन्यथा स्वाहाकारप्रयाजयागेपि सापेक्षाणामग्न्यादीनां देवतात्वात् प्रधानेषु निरपेक्षाणां देवतात्वात् अन्यत्वे कथं प्रधानदेवताप्रत्यभिज्ञेति तत्राह—इति राद्धान्त इति। अयं भावः—स्यादेतदेवं यद्यनयोः नियतसम्बन्धिता स्यात्। न चासावस्ति किन्त्वानुषङ्गिक्येव प्रतीतिः प्रधानवत्त्वनियतेति न नित्यच्छ्रुतमन्त्रप्रयोजनता ह्री। न च तत्परत्वमपि मन्त्रस्य योग्यं स्तुतिपरत्वेनैव विनियोगात्। स्वाहाकारयागेतु सापेक्षनिरपेक्षभेदादौदासीन्येन नियोगाकाङ्क्षाबलात् स्वरूपपरो मन्त्रः स्वरूपे च प्रकाशिते उभयदेवतास्मृतिः प्रयोजनमिति प्रधादेवताप्रत्यभिज्ञा। अतः साक्षात्कार्यान्वयलाभेन विधिवाक्यस्वरसावगतिविषयत्वलोभेन शास्त्रपृथक्त्वादिभिर्भाष्योक्ताभ्युच्चययुक्तिभिश्च नियोगविषयतैव स्तौतिशंसत्योरिति।

केचित्तु लोके राजा त्य दिपुरुषविषयस्तुतिषु स्तुत्यार्थत्वदर्शनात् तद्बलेनैव पूर्वपक्षं कुर्वन्ति तदयु तमित्याह—केचित्त्विति। कुत इत्यत आह—राजादीति।

---

१. B इयतैव २. B प्रकाशताहं ३. B वध्येति।

तदयुक्तम्। राजादिप्रीत्यर्थत्वात्तत्र स्तुत्यार्थत्वं भवेत्। इह तु देवताप्रीत्यर्थत्वासम्भवात् न स्तुत्यार्थतेति। अत्र चिकीर्षितार्थत्वेन ऐन्द्रीस्तुतिः माहेन्द्रग्रहयजेः क्रमे महेन्द्रप्रकाशनासमर्थेत्यर्धवैशसहानाय स्तुत्यार्थत्वेन स्तुतेरेकरूपत्वोपगमे स्थिते उत्कृष्येतेति प्रधानतैव स्तुतेर्युक्तेति राद्धान्तैकदेशी। पूर्वपक्षैकदेशी तु इन्द्रमहेन्द्रयोरेकत्वादनुत्कर्षमाह। समानाधिकरणसमासबलाद्धि महत्पद[1]मपीन्द्रार्थमात्रे प्रयुक्तं न महत्त्वयुक्तपरमिति

---

राजादिस्तुत्यपुरुषप्रीत्यर्थत्वात् लौकिकस्तुतेर्युक्तं स्तुत्यार्थत्वं इह तु पृष्ठादिस्तुतौ न देवताप्रीत्यर्थत्वं सम्भवति देवताधिकरणे तदसम्भवस्यैव वक्ष्यमाणत्वात्। न च यथासम्भवं किञ्चित्कारः। सव गुणिस्मृतिरेव परमिति वाच्यम्। अन्वयव्यतिरेकाभ्यां लोके प्रीत्यर्थत्वस्यैव क्लृप्तत्वात्। लोकदर्शनमात्रमूलत्वाद्युष्मत्पूर्वपक्षस्य प्रीत्यर्थतैव स्तुतेरवश्यं वाच्यम्। सा च न सम्भवतीत्युक्तमिति भावः।

अत्र राद्धान्तैकदेशिमतनिराकरणे तदेव सम्यगिति कश्चिन्मन्दधीः प्रत्यवतिष्ठतेति पूर्वपक्षिणा तन्निराकारयितुं तदुपन्यस्यति—अत्रेति। सोमे माहेन्द्रस्य ग्रहयजेः क्रमे अभित्वा शूर नोनुम इत्येतन्मात्रसाध्यैन्द्रीस्तुतिराम्नाता। सा च महेन्द्रस्य प्रकाशनासमर्था। एवं च गति पूर्वपक्षे ऐन्द्रीस्तुतिश्चिकीर्षितार्थत्वेन महेन्द्रप्रकाशनासमर्था माहेन्द्रस्य ग्रहयजेः क्रमे नान्वेतीति तदन्वयार्थं प्रधानकर्मता वाच्या। तदा कस्याश्चित्स्तुतेः प्रधानकर्मता कस्याश्चित् गुणकर्मतेति अर्धवैशसदोषापत्तिः। अतः तद्धानायास्या अपि स्तुतेः स्तुत्यार्थत्वे गुणकर्मत्वेन सर्वासां स्तुतीनामेकरूपत्वोपगमे स्थिते ऐन्द्री स्तुतिः यत्रेन्द्रः तत्रोत्कृष्येतेति उत्कर्षो नापरो दोषः स्यात्। अतोऽर्धवैशसोत्कर्षदोषपरिहारार्थं सर्वस्याः स्तुतेः प्रधानकर्मतैवाभ्युपगन्तुं युक्तेत्यर्थः। ननु गुणकर्मत्वेपि स्तुतीनां नैन्द्र्याः स्तुतेः माहेन्द्रग्रहयज्ञे स्थानादुत्कर्षः इन्द्रमहेन्द्रयोरेकत्वेन महेन्द्रप्रकाशनसमर्थत्वात् ऐन्द्र्यास्तुतेरिति पूर्वपक्षैकदेशी चोदयति इत्याह—पूर्वपक्षेति। कथमेकत्वमित्यत्राह—समानेति। महांश्चासौ इन्द्रश्चेति महेन्द्रशब्दः समानाधिकरणतत्पुरुषसमासः सामानाधिकरण्यं च शब्दानामेकार्थत्वमेव। अधिकरणशब्दस्यार्थवचनत्वात् समानशब्दस्य चैकार्थत्वात्। हि यस्मात् कारणात् समानाधिकरणसमासबलात् महत्पदमपीन्द्रार्थमात्रे प्रयुक्तं न महत्वयुक्तेन्द्रपरम्। तस्मान्माहेन्द्रग्रहयजावपि माहेन्द्रशब्दादिन्द्रमात्रं देवतात्वेनार्पितमिति इन्द्रमहेन्द्रयोरेकत्वमित्यर्थः।

---

१. A पदमिन्द्र।

इन्द्रमात्रं देवता। एवमुत्तरपदार्थप्रधानतासिद्धिः इन्द्रप्रधानार्थमात्रान्वयात्। राद्धान्तैकदेशी तु न सर्वथा एकार्थतां समानाधिकरणतामाह। किन्त्वेकार्थगतार्थताम्। प्रधानतापि न तन्मात्रान्वयिता। किन्त्वन्य[1]स्य तद्द्वाराऽन्वयिता। सा च यथासंभवं समानाधिकरणविषये कार्यान्वयिता। अन्यत्र राज[2]पुरुषादौ प्रतीत्यन्वयितेति विशिष्टैव देवता नेन्द्रमात्रम्। एतच्च परिहारविभ्रमादुक्तम्। इन्द्रमात्रपक्षेऽपीन्द्रमहेन्द्रपदार्थतयैव देवतात्वमित्य-

नन्वेवं समानाधिकरणत्वस्यैकार्थत्वेपि कथमिन्द्रार्थपर्यवसायित्वं महेन्द्रशब्दस्य? न महेन्द्रार्थपर्यवसायित्वमित्यत्राह—एवमिति। तत्पुरुषसमासो ह्युत्तरपदार्थप्रधानकः। प्राधान्यं चोत्तरपदार्थस्य तन्मात्रस्य कार्यान्वयित्वम्। एवमिन्द्रमात्रस्य देवतात्वे तत्पुरुषसमासस्य महेन्द्रपदस्य उत्तरपदार्थप्रधानतासिद्धिः। इन्द्रमात्रस्यैव यागे देवतात्वेनान्वयात्। ततश्चेन्द्रार्थपर्यवसायित्वसिद्धिरित्यर्थः। परिहरति—राद्धान्तैकदेशेति। न तावन्महच्छब्दस्येन्द्रशब्दस्य च एकार्थता शक्यते वक्तुं लोके वृद्धव्यवहारे भिन्नार्थतयैव व्युत्पत्तेः। महत्पदेन महत्त्वमभिधीयते इन्द्रपदेन चेन्द्रः। न चैवं समानाधिकरणता दुश्शकेति वाच्यम्। यतो न सर्वथैकार्थता सामानाधिकरण्यं किन्त्वेकार्थगतार्थता, भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तेः सामानाधिकरण्यत्वात्। नीलोत्पलादिषु सामानाधिकरण्यव्यवहारेषु गुण्येकार्थतादर्शनात्। अन्यथा हस्तः कर इत्यादावपि सामानाधिकरण्यं स्यात्। अतो महत्वान्वय्येवेन्द्रो नेन्द्रमात्रमित्यर्थः। नन्वेवमप्युत्तरपदार्थप्रधानतया महेन्द्रशब्दस्य प्राधान्यस्य च तन्मात्रकार्यान्वयित्वरूपत्वात् इन्द्रमात्रस्यैव देवतात्वेन कार्यान्वय इत्यत्राह—प्रधानतापीति। न हि तन्मात्रस्य कार्यान्वयित्वं प्राधान्यं, किन्तु तस्य साक्षादन्वयित्वं, अन्यस्य तु तद्द्वारान्वयित्वं अन्यथा अनन्वितत्वेनानभिधेयत्वापत्तेरित्यर्थः। नन्वेवं पदद्वयार्थस्याप्यन्वये राजपुरुषमानयेत्यादौ राज्ञोऽप्यानयनान्वयोपपत्तिरित्यत्राह—सा चेति। अन्वयो हि द्विधा कार्ये प्रतीतौ च। स च यथासम्भवं नीलोत्पलादौ समानाधिकरणविषये कार्ये। राजपुरुषादौ व्यधिकरणविषये प्रतीतौ सर्वथानन्वितस्याभिधानं नास्तीति तद्भूताधिकरण एवोक्तम्। इह तु महेन्द्रइति समानाधिकरणसमासतयान्वयेऽपि कार्यान्वयित्वमेवेति महत्त्वविशिष्ट एवेन्द्रो देवता नेन्द्रमात्रमित्यर्थः। ननु इन्द्रमहेन्द्रशब्दयोरर्थैक्येपि येनैव शब्देनेन्द्रस्य देवतात्वेन चोदना तेनैव शब्देन तदुपस्थापनं नान्येन, अर्थोपहितशब्दस्य देवतात्वादित्युक्तं दशमे। अतो निष्फलमिदं देवताभेदप्रतिपादनमित्य-

१. A किन्त्वन्वयस्य २. B कामिपुरुषादौ

शक्यमेव देवतैक्यम् ।

किञ्च सावयवत्वे मानाभावादखण्ड एव महेन्द्र इति दूरतो देवतैक्यं; नीलोत्प[1]लादिसमनोक्तिस्तु सखण्डतामुपेत्य गुरोः । तत्र यद्यपि सावयवत्वान्महत्त्वगुणयुक्त इन्द्रो महेन्द्रः तथापि देवतात्वं[2] येनैव निर्देशेन तच्छब्दपर्यवसितं तदिति नेन्द्रस्तुतिर्महेन्द्रस्य ।

वस्तुतस्तु निरवयव एव महेन्द्रो देवता साव[3]यवत्वे प्रमाणाभावात् सुतरां स्तुत्यार्थस्य[4] यजिदेवतायाश्च भेदः ।

परमपूर्वपक्षी तु लिङ्गा[5]दुत्कर्षे संस्कारार्थत्वेऽप्यविरोध इत्याह । अत्र तन्त्रवार्तिके—

अथ [6]वाऽर्थैकदेशोऽयं समासार्थप्रकाशनम् ।
करिष्यत्यविरोधाय मनोतास्थाग्निशब्दवत् ॥

इत्येकदेशेनेन्द्रशब्देन महेन्द्रप्रकाशनात् नोत्कर्षः स्तुतेरित्युक्तम् ।

---

त्राह—एतच्चेति । वस्तुवृत्तमाह—इन्द्रेति । इन्द्रमात्रस्यैवोभयत्र देवतात्वेपि ग्रहयजौ महेन्द्रपदोपस्थाप्यतया देवतात्वं स्तुतौ तु इन्द्रपदोपस्थाप्यतयेति स्तुतिग्रहयज्योर्देवतैक्यमशक्यमित्यर्थः । एवं तावत् सावयवत्वमङ्गीकृत्य देवताभेद उक्तः । परमार्थतस्तु सावयवत्वे मानाभावात् अश्वकर्णादिवदखण्डं महेन्द्रपदमिति दूरत एव देवतैक्यं स्तुतियागयोरित्याह—किञ्चेति ।

नन्वेवं अखण्डत्वे कथं नीलोत्पलादिसमतोक्तिग्रन्थ इत्यत्राह—नीलेति । ननु सखण्डत्वाभ्युपगमे कथं देवताभेदः महत्त्वगुणयुक्तस्येन्द्रस्यैव देवतात्वादिति शङ्कामनुभाष्योत्तरमाह—तत्रेति । सत्यमेवं तथापि येनैव शब्देन देवतात्वं तत्तच्छब्दपर्यवसितं देवतात्वमिति देवताभेदान्नेन्द्रस्तुतिर्महेन्द्रे भवति । किमिति तर्हि भवता ग्रन्थानुक्तमखण्डत्वमुक्तमित्यत्राह—वस्तुतस्त्विति । एकदेवतात्वस्य दूरापास्ततां वक्तुं वस्तुतः स्थितिरुक्ता । अर्थवादादेरन्यपरतया नावयवार्थसद्भावे मानतेत्यर्थः ।

राद्धान्तैकदेशिमतं पूर्वपक्षी निराकरोति—परमेति । न्यायबलाच्चिकीर्षितार्थत्वे अवश्योपेये लिङ्गादुत्कर्षेऽपि न विरोधावहः । उत्कर्षे मण्डूकसूक्तादीनां तत्तद्विषयेऽर्थवत्ता भाष्ये प्रपञ्चिता । अत्राचार्यपादैः पूर्वपक्षे प्रथममुत्कर्षपक्ष-

---

१. A; B त्पलनयोक्ति २. A देवतान्वयेनैव ३. A अवयवार्थे ४. B स्तुत्यस्य
५. B दुत्कर्षात् ६. B अथवाप्येक–समानार्थ ।

तदयुक्तम्। गुणयभिधानपरो हि मनोतामन्त्रः। अतस्तात्पर्यबलादेकदे-शद्वारेणाग्नीषोमाभि[1]धानपरः। इह तु गुणाभिधानपरस्य सतो गुणि-प्रत्यभिज्ञया संस्कारकता। नान्यथा।

किञ्च तत्राग्निसहचरितः सोमोऽग्निप्रतीत्या प्रतीयत इति युक्तम्। इह तु नेन्द्रस्य निरवयवमहेन्द्रसहचरिततेति न तदुपस्थाप[2]नम्।

विवरणे तु स्तुतेः प्रधानत्वेपि आश्रयिनयात् देवतासंस्का[3]रार्थतेति विफला चिन्तेत्याशङ्क्य स्तुतावभिधा गुणपरा। गुणिपरत्वे स्तुतित्य-

मेवोक्त्वा पक्षान्तरमुक्तम तत्प्रतिपादकं तदीयं श्लोकमाह—अत्र तन्त्रेति। त्वं ह्यग्ने प्रथमो मनोतेति मनोतामन्त्रे अग्निशब्देनाग्नीषोमसमासार्थैकदेशाग्निप्रकाशन-द्वारा समुदायाग्नीषोमप्रकाशनं यथाक्रियते विनियोगबलात् तथाऽत्रापि कमविनि-युक्तेन्द्रमन्त्रेण एकदेशेन्द्रप्रकाशनद्वारा समुदायमहेन्द्रप्रकाशनमविरोधाय क्रियताम् ततश्च नैन्द्र्याः स्तुतेरुत्कर्ष इत्यर्थः। तदाह—तदेकेति। तदयुक्तमिति। विषमोऽयं दृष्टान्तः यतो गुणिस्वरूपाभिधानपरो मनोतामन्त्रः तत्रैव विनियोगात्। अतः तात्पर्यबलात् एकदेशद्वाराऽग्नीषोमोपस्थापनपरो युक्तः। अन्यथोत्कर्षे 'यद्यप्यन्य-देवत्यः पशुराग्नेय्येव मनोता कार्या इत्यादिवचनविरोधादित्यर्थः। स्तुतिमन्त्रे तु नैवमित्याह—इह त्विति। गुण्यवच्छिन्नगुणाभिधायकत्वात् स्तोत्रमन्त्रस्य अभिधेये गुण एव तात्पर्यम्। तत्र विनियोगात् न गुणिस्वरूपेपि अविनियोगात्। गुणिधीस्तु गुणाश्रयतया नान्तरीयकी। अतो गुणाभिधानपरस्यैव सतो मन्त्रस्य नान्तरीयक गुणिप्रत्यभिज्ञामात्रेण एकदेशेन्द्रप्रकाशनसंस्कारता पूर्वपक्षे वर्णिता, न पुनः गुणिस्वरूपेपि तात्पर्यादिति किंबलादवयवद्वारा समुदायोपस्थिति-रित्यर्थः। तथा प्रायेणाग्निसहचरित्वात् सोमस्य तत्राग्निप्रतीत्या तत्सहचरित-सोमप्रतीतिर्युक्तेत्याह—किञ्चेति। नन्वेवमिहापीन्द्रसहचरितं महत्वमितीन्द्रप्रतीत्या महेन्द्रप्रतीतिरस्त्वित्यत्राह—इह तु नेन्द्रस्येति। युक्तमग्नीषोमयोः सहचरितत्वं सावयवाग्नीषोमपदेन देवताधिष्ठानतया पृथगभिधेयत्वात्। इह तु निरवयवमहेन्द्र-पदेन एक एवार्थः तच्छब्दावच्छिन्नतया देवताधिष्ठानत्वेनार्पित इति न महत्त्वेन्द्रयोः सहचरितता। न चात्रापि महत्त्वस्य देवताधिष्ठानत्वं शक्यशङ्कम् अजाद्यदन्तमिति पूर्वनिपातवैपरीत्यापत्तेः। अतो निरवयवमहेन्द्रपदवाच्यमहेन्द्रेणै-वेन्द्रस्य सहचरितता वाच्या। सा चेहनास्तीति नेन्द्रेण महेन्द्रोपस्थापनमित्यर्थः।

विवरणे त्विति। तन्मते शङ्कानिरासोऽधिक इत्यर्थः। कापुनरियं शङ्केत्यत्राह—

१. मावमर्श　　२. A स्थानं　　३. A स्तुत्यर्थतेति

हानिः । आश्रयिषु तु गुणिपरो मन्त्र इति निरस्तम् । गुणकर्मत्वे अभिधा गुणपरा । गुणिधीः प्रयोजनमिति न स्तुतित्वहानिः । यदि प्रत्ययार्थान्वितो महत्वान्वयीन्द्रः तदा महेन्द्र इति स्यात् । न च गुणकर्मपक्षे भेदनिर्देशो युक्तः; न हि तत्र कार्यैक्ये शास्त्रभेदो वाक्यभेदमात्रान्न शास्त्रभेद इति न सम्यक् भेदः । इतरत् टीकयोः सुगमम् ।

---

स्तुतेरिति । यथा आश्रयिषु स्विष्टकृदादिषु पुरोडाशादिद्रव्यसंस्कारार्थत्वमपूर्व विषयत्वं चोक्तमाश्रयिनये तथाऽत्रापि स्तुतेर्नियोगविषयत्वेपि स्वाहाकारयागवत् देवतासंस्कारार्थता राद्धान्तेऽपीति निष्प्रयोजनचिन्ता स्यादित्यर्थः । शङ्कां निरस्यति इत्याशङ्क्येति । युक्तमाश्रयिषु तन्मन्त्राणां गुणिपरत्वात् तन्मन्त्रद्वारोद्देश्यत्वाविशेषात् प्रधानदेवतास्मारकत्वं यागस्यानन्यनिष्ठतया विषयत्वं च इह तु तथा मन्त्रा-अभिधानगुणपराः गुणिपरत्वे तु स्तुतिपरत्वहानापत्तेः । एतच्च पूर्वमुपपादितम् । अतः स्तुतेर्नियोगविषयत्वे देवतासंस्कारार्थता न युक्तेत्यर्थः । ननु यदि संस्कारकत्वपक्षे स्तुतित्वहानिः कथं तर्हि पूर्वपक्ष इत्यत्राह—गुणकर्मेति । गुणकर्मत्वपक्षे अभिधागुणपरैव । गुणाश्रयतया नान्तरीकत्वेन जातगुणिधीः विधेयपदार्थस्य द्वारतया प्रयोजनाकाङ्क्षिणा विधिना प्रयोजनतया स्वीकृतेति गुणिपरत्वाभावेन न स्तुतित्वहानिरिति युक्ता पूर्वपक्षाशङ्का । अत्र भाष्ये 'न च तद्धितार्थे प्रवृत्तस्य महत्त्वसम्बन्ध' इत्युक्तम् । तत्रोपपत्तिमाह—यदिति । प्रथमं तद्धितसंयुक्तस्येन्द्रपदस्य पश्चान्महत्पदेन समासो यद्यङ्गीक्रियते तदा महैन्द्र इत्यनिष्टरूपं स्यात् । अतो न तथाङ्गीकारः । अत्र राद्धान्ते शब्दपृथक्त्वाख्योऽभ्युच्चयः सूत्रितः । तत्र शब्दपृथक्त्वं नाम शास्त्रभेदः । स चायुक्तः । गुणकर्मपक्षेपि शब्दे स्तोत्रशस्त्रप्रतिपादकवाक्यभेदेन भेदनिर्देशोपपत्तेरित्यत्राह—न चेति । तत्र हेतुः—नहीति । सत्यं वाक्यभेदः नतु तावन्मात्रेण शास्त्रभेदो भवति गुणकर्मणां कार्यभेदादेव स्वतः शास्त्रभेदो भवति । कर्मकारकनिष्ठसाध्यरूपस्यैकत्वान्न कार्यभेद इति सोमक्रये दर्शितत्वादित्यर्थः । ननु वाक्यभेदमात्रापेक्षयापि भेदनिर्देशः किमिति न वर्ण्यत इत्यत्राह—न सम्यगिति । सूत्रस्थशब्दस्य स्वतः शास्त्रवचनत्वादित्यर्थः । श्रुतिसंयोगादिभाष्यान्तरतः तद्भेदनिबन्धन एव सम्यग्भेदः न वाक्यभेदमात्रनिबन्धनः । न च नानारूपतत्तद्गुणाभिधानापेक्षयापि भेदनिर्देशघटना । तथा सति द्वादशस्तोत्रशस्त्रभेद इति द्वादशत्वमात्रावस्थानायोगात् गुणानामनन्तत्वादित्यर्थः । श्रुतिसंयोगादिभाष्यान्तरव्याख्यानं टीकायामेव व्यक्तमित्याह—इतरदिति ।

## ॥ ६ ॥ विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥

विनियुक्ते मन्त्रे अप्रतिबद्धविधेयार्थो भावशब्दो लिङादियुक्तः किं विधायको नेति चिन्ता। तत्र ब्राह्मणविधेयाभिधायकत्वेन विनियोगात् मन्त्रस्य; विधायकत्वे[1]न च तदर्थातावगतेर्विधायकता। न च विधाने विधेयार्थत्वात् ब्राह्मणार्थस्मारकत्वाभावेन विनियोगविरोधः। तत्समानार्थतानिमित्तत्वाद्विधेर्न स्वनिमित्तभूततदर्थत्वबाधकता युक्ता।

---

## ॥ ६ ॥ विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥

ये तावदविनियुक्ता मन्त्राः "वसन्ताय कपिञ्जलानालभत" इत्येवमादयः ते विधायका एव। ये वर्तमानापदेशोत्तमपुरुषयद्याद्यनुबन्धादिभिः प्रतिबद्धविधेयार्था मन्त्राः बर्हिर्देवसदनं दामीत्याद्याः ते अविधायका एव। ये पुनः श्रुतलिङादिशब्दकाः अप्रतिबद्धविधेयार्थभावशब्दविनियुक्ताश्च मन्त्राः यथा न ता नशन्ति न दभाति तस्करः नैना अमित्रो व्यधिरादधर्षति देवांश्चयाभिर्यजते ददाति च ज्योगित्ताभिस्सच ते गोपतिः सह इत्येवमादयः त इहोदाहरणम्। तत्र चिन्ता—किं मन्त्रवाक्यस्थो भावशब्दो विधायक उत नेति। तत्र ब्राह्मणवाक्यस्थभावशब्दानां विधिविषयसमर्पकत्वासमर्पकत्वे निरूपिते। तदपेक्षविनियोगापेक्षया विलम्बितमन्त्रवाक्यगतभावशब्दस्याविषयसमर्पकत्वनिरूपणमत्रेत्यवान्तरसङ्गतिं सूचयन् विषयं शोधयन् संशयमाह—विनियुक्त इति। विनियुक्ते मन्त्रे इत्यनेनावान्तरसङ्गतिः सूचिता। अध्यायसङ्गतिस्तूपोद्घाततया व्यक्तेति भावः। ननु ब्राह्मणैकार्थतया मन्त्राणां विनियोगात् विनियुक्तानां चाङ्गतया विधेयकोटित्वान्न विधायकता युक्ता इति कथं पूर्वपक्ष इत्यत्राह—तत्र ब्राह्मणेति। सत्यं विनियुक्तत्वमङ्गत्वं च मन्त्राणां तथापि शब्दरूपत्वान्मन्त्राणां ब्राह्मणार्थाभिधायकतयैव विनियोगः ब्राह्मणार्थश्च विधेयरूप इति विधायकतयैव ब्राह्मणार्थाभिधायकत्वं मन्त्राणां, अन्यथा ब्राह्मणार्थत्वावगतिविरोधात्। विधेयतयाभिधानं च विधायकत्वे सत्येवेति विनियुक्तत्वे अङ्गत्वे च सत्यपि विधायकतापि मन्त्राणां युक्तेत्यर्थः। ननु मन्त्राणां विधायकत्वे विधिभेदः। विधिश्च स्वभावतो विधेयं भिनत्तीति प्रतिविधि विधेयभेदे मन्त्रस्य विधेयान्यत्वात् ब्राह्मणार्थस्मारकत्वाभावात तदर्थतया विनियोगस्य विरोधः स्यादित्यत्राह—न चेति। तत्र हेतुः—तत्समानेति। सत्यं विधिभेदे विधेयभेदः स्वतः। स त्विह कारणान्तरान्न संभवति मन्त्रे यो विधिस्तस्य ब्राह्मणसमानार्थ-

---

१. त्वे च।

ननु तदर्थत्वं विधानञ्चेति कथम् ? मैवम् । अप्राप्ते स्वरसाद्विधानं युक्तम् । तदभिधायकत्वेन विनियोगबलात्प्राप्तेऽपि युक्तम्[1] । यथा धारावाहिकं प्रमाणज्ञानम् । न च प्राप्तेऽनर्थको विधिः प्राप्तस्यैव प्रयोगे प्रकाशनार्थत्वादिति पूर्वः पक्षः ।

प्राप्तेविधिरशक्य इति विधिसा[2]मर्थ्यादप्राप्तगोचरता । तदा च

---

त्वनिमित्तत्वात् । यन्मूलो हि विधिरनिमित्तं तद्विघातस्येति नयान्न मन्त्रवाक्यस्थविधेः स्वहेतुभूतब्राह्मणैकार्थ्यबाधकता युक्ता । विधेयभेदे हि ब्राह्मणविधेयार्थाद्भेदो दुर्वारः । तथा च मूलभूतविनियोगविरोधः प्रत्यर्थीति नाभ्यासनयाद्भेद एव विधेयस्य । एवं च नाभ्यासनये भेदापत्तिरिति भावः । ननु विधानं नाम अप्राप्तप्रापकत्वं, ब्राह्मणैकार्थत्वं च ब्राह्मणप्राप्तार्थाभिधायकत्वं तच्च द्वयमप्यन्योन्यविरुद्धं अतः कथं विधानाङ्गीकार इति चोदयति—नन्विति ।

मैवमिति । सत्यमप्राप्तप्रापकत्वं विधानं स्वरसात् तदेव त्विह ब्राह्मणार्थाभिधायकतया विनियोगबलात् अप्राप्तत्वांशं विहाय प्राप्तेपि युक्तम् । अत्र दृष्टान्तः यथेति । अनुभूतविषयज्ञानस्य स्मृतित्वेपि यथा प्राप्तार्थविषयस्य धारावाहिकज्ञानस्येन्द्रियसन्निकर्षजत्वादिकारणान्तरवशात् प्रमाणज्ञानत्वमङ्गीकृतमित्यर्थः । ननु प्राप्तार्थे विधिः निष्प्रयोजनः स्यात् इत्यत्राह—न चेति । तत्र हेतुः—प्राप्तस्येति । ब्राह्मणप्राप्तस्याप्यर्थस्यानुष्ठानकाले पुनर्ज्ञानापेक्षणात् तज्ज्ञानार्थत्वान्नानर्थता विधेः सप्रयोजनत्वात् । न च प्रतिबद्धशक्तिर्मन्त्रवाक्यस्याविधायकत्वेपि यथा ब्राह्मणैकार्थत्वं, प्रयोगकाले स्मारकत्वं च तथाऽन्यस्याप्यस्तु किं विधायकत्वेनेति वाच्यम् । स्वतः प्राप्तस्यापि भावार्थनयसिद्धस्य विधायकत्वस्य ब्राह्मणैकार्थतया विनियोगोपोद्बलितस्य यद्यादिसनवधानं तिरोधायकम् । इह तु तदभावे तिरोधानाभावादप्रतिहतं प्रयोजनं विधायकत्व मवश्योपेयमित्यर्थः । नन्वेवं पूर्वपक्षकरणे विचारस्य निष्प्रयोजनत्वं स्यात् तत्राह—इति पूर्वः पक्ष इति । विचारः सप्रयोजनो निष्प्रयोजनो वाऽस्तु । सर्वथा पूर्वपक्षशङ्कायाः प्रकारान्तरेणासम्भवादयमेव पूर्वपक्षशङ्काप्रकार इति शङ्कामात्रत्वात् पूर्वपक्षस्य नातीव प्रयोजनोक्तेरावश्यकता । अथापि यदि प्रयोजनं वक्तव्यं तर्हि पूर्वपक्षे ब्राह्मणोक्तार्थस्य प्रयोगकाले मन्त्रेण विधेयतया स्मरणं कर्तव्यम् । सिद्धान्ते तु विहिततया तादृशेनैव स्मरणेन नियोगसिद्धिर्नान्यथेति ।

यद्वा पूर्वपक्षे मन्त्रस्य विधायकत्वे यजुः प्रायशाखाधीतब्राह्मणवाक्यविहितस्य कर्मणः ऋक्प्रायशाखासमधिगतमन्त्रवाक्येनापि विधौ तद्विषयनियोगस्य

---

१. B प्राप्तिविनियुक्तम् २. B साम्यात् ।

तदर्थतया विनियोगनिरोधः[1] स्यात्। विनियोगतश्चेत्तदर्थता विहिताभिधायकतयैव सा। धारावाहिकं तु सिद्धविषयं प्राप्तेऽपि युक्तम्। न चानधिगतार्थगन्तृ प्रमाणम्। इह तु विनियोगबलात् विधिप्रतिबन्धो यद्वादिभिरिवेति सिद्धान्तः।

---

वेदद्वयप्रतिपाद्यया वेदद्वयविरुद्धधर्मयोरुच्चैस्त्वोपांशुत्वयोः स्वरयोः तदङ्गमन्त्रे विकल्पः स्यात्। सिद्धान्ते नेति बहुसम्मतं प्रयोजनम्। अथ वेदोपक्रमाधिकरणे निरपेक्षावेदकब्राह्मणवाक्यधर्मत्वमेवोच्चैस्त्वादेरुक्तं इह तु मन्त्रवाक्यस्य ब्राह्मणैकार्थतया विनियोगापेक्षविधितया सापेक्षावेदकतैवेति न तद्धर्मत्वं स्वरस्येति न तन्निबन्धनप्रयोजनसिद्धिरिति चेत् तर्हि प्रयोजने विध.न्तरमुच्यते मन्त्रस्य विधायकत्वे मनोतामन्त्रस्यापि गुणविधिविधया अग्न्यनुरक्तप्रकृतयागविधिपरतया देवताविकल्पः स्यात्। ततश्चाग्नीषोमप्रयोगे न मनोतामन्त्रः स्यात्। किञ्च मन्त्रस्य विधायकत्वे उपांशुयाजे मन्त्रवर्णावगतविष्ण्वनुरक्तप्रकृतोपांशुयाजयागविधौ विहितदेवतालाभान्न यजिश्रुतेः दधिन्यायादर्थवादावगताग्नीषोमादिदेवतासु पर्यवसानं स्यात् विनियोगपूर्वकत्वेपि मन्त्रवाक्यस्य विधिपरस्य एकवाक्यभूतादपि स्तुतिपरादर्थवादादभ्यर्हितत्वात्। अतः पूर्वपक्षे विष्णोरेव देवतात्वमुपांशुयाजे। राद्धान्ते त्वग्नीषोमादेर्देवतात्वमित्यलं बहुना।

राद्धान्तमाह—प्राप्तिविधिरिति। न हि मन्त्रवाक्यस्य भावशब्दानां विधेयसमर्पकता ब्राह्मणवाक्येनैव तस्य प्राप्तत्वात्। न च प्राप्ते विधिः शक्यः। अज्ञातज्ञापनाप्रवृत्तप्रवर्तनात्मकत्वाद्विधेः। अतः स्वभावाद्विधेः अप्राप्तार्थगोचरत्वात विधेयभेदो दुर्वार इत्यर्थः। भवतु विधेयभेदः काहानिस्तत्राह—तथा चेति। ब्राह्मणार्थतया प्रतीत विनियोगहानिः स्यादित्यर्थः। ननु अविधित्वपक्षेपि ब्राह्मणार्थतया विनियोगहानिस्तदवस्थैव, विधेयतया यागादेर्ब्राह्मणेनाभिधानं विहिततया मन्त्रेणेति विधेयविहितार्थतया भेदादित्यत्राह—विनियोगतश्चेदिति। यदि विनियोगबलादब्राह्मणेन सहैकार्थता मन्त्रस्य तर्हि साविहिताभिधायकतयैव भवति नान्यथा विनियोगो हि मन्त्रस्य ब्राह्मणार्थं शेषिणं प्रतिशेषतया। शेषित्वं च कार्यान्तरोपयोगितया विहितावस्थस्यैवेति विहितविधेयत्वयोरवस्थाभेदमात्रत्वात् वस्तुस्वरूपास्याभेदात विहिताभिधानेपि ब्राह्मणैकार्थतया न विनियोगहानिरित्यर्थः। कथं तर्हि धारावाहिकोत्तरज्ञानानां प्रमितप्रमापकत्वमित्यत्राह—धारावाहिकं त्विति। स्तम्भोऽयं स्तम्भोऽयमिति धारावाहिकज्ञानं उत्तरोत्तरंतत्सिद्धविषयमिति प्रमितेऽपि युक्तं आश्रयितुं ज्ञातस्यापि ज्ञापनसम्भवात् विधायकत्वं च साध्यैकविषयं, साध्यत्वं

---

१. B बाधः स्यात्।

केचित्तु पूर्वपक्षयन्ति — विधानबलादन्यार्थत्वेऽपि व्यक्त्यन्यत्वं ब्राह्मणविहितेन सजातीयतया च तत्स्मारकत्वमिति । तच्चिन्तनीयम् । कथं [1]विहितेन सजातीये विहितविपरीते विहितार्थता मन्त्रस्य सेत्स्यतीति । शेषं सुगमम् ।

---

च न सिद्धस्य सम्भवतीत्यप्राप्त एव विधिरित्यर्थः । ननु ज्ञातज्ञापनस्य कथं प्रमाणता, अनधिगतार्थगन्तृत्वात्प्रमाणस्येत्यत्राह—न चेति । किन्त्वनपेक्षत्वमिति शेषः । धारावाहिके तु यथानपेक्षिता तथा पञ्चिकायां प्रपञ्चितं तर्कपादे ।

ननु विनियोगात् क्रत्वर्थता मन्त्राणामर्थबोधनद्वारा । अर्थबोधनं च तच्छक्तमन्त्रस्थशब्दबलात् । शब्दश्च मन्त्रब्राह्मणयोरेक एवेति स्मारकत्वं विधेयतया कर्मान्तरबोधकत्वमपि प्रतीयत इति मन्त्रोच्चारितं भावपदं कर्मान्तरं विदधाति । स्वनिमित्तविनियोगबलात् स्मारयति चेति विवरणपूर्वपक्षरीत्या विधायकत्वमाशङ्क्याह—इहत्विति । सत्यं विधिस्वारस्यात्सर्वस्य मन्त्रस्थभावपदस्य विधायकता भाति तथापि विनियोगबलात् स्मारकतैव प्रथममवगम्यते । सा चाविवादसिद्धा तत्पूर्वकं च शब्दैक्याद्विधायकत्वं शङ्क्यते । तच्चायुक्तम् । सकृदुच्चरितस्य पदस्य विधायकत्वस्मारकत्वायोगात् । अतो यद्यादिभिरिव विनियोगेनापि विधिप्रतिबन्ध इति न कर्मान्तरविधिरित्यर्थः । नन्वेवं विनियोगस्य विधिप्रतिबन्धकत्वे कथं विनियुक्तमन्त्रेषु विधायकतया पूर्वः पक्षः ? कथं वा विषयशुद्धिकथनसमये अप्रतिबद्धविधेयार्थभावशब्द उक्त इत्यत्राह—इति सिद्धान्त इति । विनियोगस्य प्रतिबन्धकत्वमेवैतदधिकरणसिद्धान्तव्युत्पाद्यमिति न सङ्कटं किञ्चिदिति भावः ।

अत्र प्रकाशेनान्यथा पूर्वपक्षितं मन्त्रस्य ब्राह्मणैकार्थतया विनियोगबलाद्विधायकत्वे स्थिते विधिस्वभावबलाद्विधेयान्यत्वं तत्र ब्राह्मणविहितव्यक्तिसजातीयव्यक्त्यन्तरविधितया व्यक्त्यन्यत्वमात्रं न पुनः शास्त्रार्थान्यत्वम् । ततश्च विषयत्वेन साक्षात् कार्यार्थिता ब्राह्मणविहितव्यक्तिसजातीयतया च तद्व्यक्तिस्मारकता व्यक्त्यन्तरानुष्ठानं च प्रयोजनं पूर्वपक्षोक्तमिति तदनुभाषते-केचित्त्विति । दूषयति—तच्चिन्तनीयमिति । यत्रैव विनियोगस्तत्परत्वं मन्त्राणां वाच्यम् । अतो ब्राह्मणविहितव्यक्तिपरत्वं मन्त्राणां न तु तत्सजातीयव्यक्त्यन्तरपरत्वं तत्र विनियोगाभावात् । अन्यथा ब्राह्मणविहितव्यक्तिसजातीये विहितविपरीते अविहिते व्यक्त्यन्तरे तात्पर्ये अङ्गीक्रियमाणे कथं ब्राह्मणविहितव्यक्त्यर्थता मन्त्रस्येति चिन्त्यम् । एवं पूर्वपक्षकरणे प्रतीतविनियोगभङ्गो दुर्वार इति पूर्वोक्तैव रीतिरित्यर्थः । अत्र वायुर्वै क्षेपिष्ठेत्येवमादीनामिव मन्त्राणामपि स्तुत्यर्थतया विहिताभिधानमिति राद्धान्तैकदेशिमतं तन्निरसनं च ग्रन्थे व्यक्तमित्याह—शेषमिति ।

---

१. अविहितेन ।

## ॥ ७ ॥ तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

मन्त्रलक्षणमयुक्तमनुपयुक्तं च । अनुपयुक्तं तावत् अनुष्ठेयार्थस्मारकेषु वाक्येषु भावशब्दोऽभिधायक इति निरूपिते मन्त्रलक्षणापरिज्ञानेऽपि न क्षतिः । अयुक्तता चास्याव्यापितया तच्चोदकतायाः । अतः स्मारकवाक्ये वाच्ये मन्त्रशब्दः सूत्रे कथं प्रयुक्त इत्याशङ्कायां तच्चोदकेषु मन्त्रशब्दप्रयोगदर्शनात् अभियुक्तानां प्रयुक्त इत्युक्तम् । यद्यप्यतच्चोदकेष्वपि वसन्ताय कपिञ्जलानालभेतेत्यादिषु मन्त्रशब्दोऽस्ति तथापि

---

## ॥ ७ ॥ तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

विधिमन्त्रयोरिति पूर्वसूत्रे मन्त्रशब्दः स्मारकवाक्ये प्रयुक्तः । तत्किमयुक्तः किं वा युक्त इति चिन्ता । पूर्वसूत्रोक्तमन्त्रशब्दार्थनिर्णयार्थत्वादस्य तच्छेषतया न पृथक् सङ्गतिः । अत्र वृत्तिकारो मन्त्रलक्षणपरमिदं सूत्रमाह विहितचोदकत्वं मन्त्रलक्षणमिति । तद्दूषयति – मन्त्रलक्षणमिति । तत्रानुपयुक्तत्वं प्रथममाह— अनुपयुक्तमिति । कथमित्यत्राह -- अनुष्ठेयेति । मन्त्रलक्षणाज्ञानेपि अनुष्ठेयस्मारकवाक्यनिष्ठभावशब्दोऽभिधायको न विधायक इति पूर्वसूत्रे निरूपयितुं शक्यत्वात् स्मारकत्वस्यैव तत्र तन्त्रत्वात न मन्त्रत्वस्येत्यनुपयुक्तमेव मन्त्रलक्षणमित्यर्थः । अयुक्तत्वं चाह – अयुक्तता चेति । अतच्चोदकेष्वपि वसन्ताय कपिञ्जलानालभत इत्यादिषु मन्त्रत्वदर्शनादव्यापित्वात न तच्चोदकत्वं मन्त्रलक्षणं युक्तमित्यर्थः । यत एव मन्त्रत्वे तच्चोदकत्वमव्यापि न चान्यल्लक्षणं व्याप्यस्ति । अतः पूर्वसूत्रे स्मारकवाक्ये मन्त्रशब्दप्रयोगो निर्निबन्धन इत्याह—अत इति । अयमाक्षेप एवात्र पूर्वपक्ष इत्यर्थः । राद्धान्तमाह – इत्याशङ्कायामिति । अभियुक्तैः विहितार्थस्मारकेषु वाक्येषु मन्त्रशब्दः[1] प्रयुक्तः । तत्र तत्कर्तृकं प्रयोगं दृष्ट्वा सूत्रकारेणापि तत्र मन्त्रशब्दः प्रयुक्त इति पूर्वसूत्रप्रयुक्तमन्त्रशब्दार्थकथनपरमेतत्सूत्रं न लक्षणपरमित्युक्त ग्रन्थ इत्यर्थः ।

नन्वेवमपि तच्चोदकत्वमव्यापि इति कथं तदर्थतया प्रयोगकथनमित्याशङ्कामनूद्य परिहरति -- यद्यपीति । सत्यमेवं तथापि तच्चोदकेषु तावन्मन्त्रशब्दो व्यापी विद्यते इति तत्स्मारके मन्त्रशब्दप्रयोगस्य न विरोध इत्यर्थः । नन्वेवं

---

१. B शब्दप्रयोगः ।

तच्चोदकेषु तावन्मन्त्रशब्दोऽव्यापीत्यविरोधः। संप्रति सुहृद्भावेन प्रश्नः यद्येतन्न मन्त्रलक्षणं कथं तर्हि मन्त्रशब्दार्थव्युत्पत्तिः। उच्यते। संहितादिग्रन्थान्तर्भावाद्युपाधित इत्यनुसन्धेयम्।

॥ ८ ॥ शेषे ब्राह्मणशब्दः ॥ ३३ ॥

अत्राप्यनुपयुक्तं अयुक्तञ्च लक्षणकरणं पूर्ववदिति। सूत्रे तु विधिशब्दो ब्राह्मणपर्यायः प्रयुक्तः, अ[1]तच्चोदकेषु कथमिति जिज्ञासायां अभियुक्तप्रयोगादित्युक्तम्। सम्बन्धग्रहस्तु ग्रन्थविशेषान्तर्भावात् पूर्ववदित्यनुसन्धेयम्।

॥ ९ ॥ अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥

ऊहपदं यजमाननामपदं, प्रवरपदञ्च यत् प्रक्षिप्यते तत् पदं किं मन्त्रात्मकं

---

अयुक्तत्वानुपयुक्तत्वाभ्यां सूत्रस्य लक्षणपरत्वाभावे कथं मन्त्रशब्दव्युत्पत्तिः। एकोपाधिवशीकाराभावादिति सुहृद्भूत्वा पृच्छति—सम्प्रतीति। उच्यत इति। संहिताग्रन्थपरिपठितत्वाद्येकोपाधिना व्युत्पत्तिः सुकरेत्यर्थः। ननु संहिताग्रन्थापठितेषु वसन्ताय कपिञ्जलानित्यादिषु मन्त्रशब्दप्रयोगात् कथं तथा व्युत्पत्तिरित्यत्राह—इत्यनुसन्धेयमिति। यदि सर्वव्याप्येकोपाधिर्न सम्भवति तर्हि पृथगेव व्युत्पत्तिरस्त्विवति भावः।

॥ ८ ॥ शेषे ब्राह्मणशब्दः ॥ ३३ ॥

पूर्वतरसूत्रे स्मारकेतरवाक्येषु ब्राह्मणशब्दः प्रयुक्तः। स किं न सम्भवति उत सम्भवतीति चिन्ता। सङ्गतिरस्य पूर्ववत्। मन्त्रशब्दार्थेतरतया ब्राह्मणशब्दार्थस्येह निरूपणात्तदानन्तर्यम्। इदमपि सूत्रं लक्षणपरमिति वृत्तिकारेणोक्तं, तदयुक्तं पूर्ववदित्याह—अत्रापीति। ननु पूर्वतरसूत्रे ब्राह्मणशब्दो न प्रयुक्तः किन्तु विधिशब्द एवेत्यत्राह—सूत्रेति। उभयोः पर्यायत्वान्न दोष इत्यर्थः। अत्र स्मारकेतरवाक्येषु ब्राह्मणशब्दः कथं प्रयुक्त इति पूर्वपक्षयित्वा अभियुक्तप्रयोगपूर्वक एव तत्प्रयोग इत्युक्तमिति राद्धान्त इत्याह—अतच्चोदकेष्विति। ब्राह्मणशब्दव्युत्पत्तिरपि संहितेतरग्रन्थविशेषान्तर्भावात् पूर्ववदनुसन्धेयेत्याह—सम्बन्धेति।

॥ ९ ॥ अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥

ऊहप्रवरनामधेयेषु चिन्ता—किमेतेषां मन्त्रत्वमुतामन्त्रत्वमिति। उक्तमन्त्रत्वापवादात्सङ्गतिः। ननु ऊहो नाम प्रयोगविकारः प्रवरो नाम आर्षेयवरणं

---

1. B तच्चोद

नेति चिन्ता । मन्त्रेण यत् कार्यं कर्तव्यं तत्कर्तुं ते प्रक्षिप्यन्ते अभियुक्तैः । अतो मन्त्रत्वमभिमतमभियुक्तानां, ननु मन्त्र एव स्वकार्यं कुर्वन्नूहादिभिरनुगृह्यते । न चानुग्राहकत्वेनाङ्गीकारे[1] मन्त्रता अङ्गीकृता भवति । अमन्त्रस्यापि वायुताल्वादेस्तदनुग्राहकत्वात् । नैवम् । विपरीतमत्र । ऊहादिर्हि साक्षान्मन्त्रकार्यपरः, अवशिष्टपदजातमनुग्राहकमुपलभ्यत इत्यूहादेर्मन्त्रतैवेति पूर्वः पक्षः ।

---

तयोः क्रियात्मकयोः अशब्दत्वात् कथं मन्त्रत्वामन्त्रत्वविचारः । तथा नामधेयं उद्भिदादिवाक्यान्तर्गतत्वात् ब्राह्मणमेव । अतः कथं तस्यापि मन्त्रत्वामन्त्रत्वचिन्तेत्याशङ्क्य ऊहादिस्वरूपकथनपूर्वकं चिन्तास्वरूपमाह—ऊहपदमिति । विकृतौ समवेताभिधानाय आर्षपदबाधेन यत् सूर्यायेति पदं प्रक्षिप्यते तदूहपदम् । तथा आर्षेयवरणे अत्रिवदार्चनानशवत् श्यावाश्ववदित्यादि यत्प्रक्षिप्यते तत् प्रवरपदम् । तथा यज्ञशर्मा मानुष इत्यादौ यत् यजमानवाचिपदं प्रक्षिप्यते तन्नामधेयपदम् । तत्किं मन्त्रात्मकमुत नेति चिन्तेत्यर्थः । ननु अभियुक्तोपदेशान्मन्त्रत्वमित्युक्तं, न चोहादिषु मन्त्रशब्दमभियुक्ता उपदिशन्ति अतस्तेषां मन्त्रत्व[2]मिति कथं पूर्वपक्ष इत्यत्राह—मन्त्रेणेति । सत्यमूहादिषु न साक्षान्मन्त्रतयाऽभियुक्तोपदेशः तथापि मन्त्रेण यत्कर्तव्यं तत्कर्तुमूहादि प्रक्षिप्यतेऽभियुक्तैः । न चामन्त्रो मन्त्रकार्यकारीति मन्त्रकार्यकारितयाऽभियुक्तप्रक्षेपणादूहादीनामपि मन्त्रत्वमभियुक्तानामिष्टमित्युन्नीयते । उपदेशादपि तेषामभिमतिरेवेति साक्षादुपदेशाभावेपि न विरोध इत्यर्थः । ननु मन्त्र एव स्वकार्यकरः ऊहादि तु तदनुग्राहकमात्रं वायुताल्वादिवत् न चानुग्राहकस्य मन्त्रत्वं ताल्वादेरिवेति चोदयति—नन्विति । नैवमिति । स्यादेतदेवं यद्यनुग्राहकमूहादि स्यात् तत्त्वत्र विपरीतम् । यस्मादूहादिरेव साक्षान्मन्त्रकार्यमनुष्ठेयप्रकाशनं करोति । अवशिष्टं मन्त्रवाक्यस्थं पदजातं तद्विशेषणसमर्पकतया तदनुग्राहकमुपलभ्यते । तस्मादूहादेर्मन्त्रतैव । ताल्वादि तु अशब्दात्मकतयाऽनुग्राहकमेवेति भावः । नन्वमन्त्रस्यापि मन्त्रकार्यकरत्वं युक्तं अव्रीहेरिव नीवारादेर्व्रीहिकार्यकरत्वं न हि तत्कार्यकारिणः सर्वथा सादृश्यं तत्त्वापत्तेः । किन्तु किञ्चित्साम्यमेव । तच्चात्रैकप्रकाशकत्वरूपमस्तीति कथं मन्त्रत्वमित्यत्राह—इति पूर्वः पक्ष इति । अयं भावः—नियमादृष्टानुविद्धमनुष्ठेयस्य प्रकाशनं मन्त्रकार्यं न प्रकाशनमात्रम् । विकृतावपि तदेव सूर्यपदस्य वाच्यम् । तच्च सूर्यपदस्य विनियोगाभावे न सिद्ध्यति । अतो यदपूर्वग्रहीतो मन्त्रः तदपूर्वीयदेवताप्रकाशनं नियमादृष्टानुविद्धं कार्यमिति प्राकृतपरिणामात्मकोहस्य बलाद्विनियोग एवमुपपद्यते यदि सूर्यपदं मन्त्रावयव एव स्यादिति तस्यापि मन्त्रत्वं कल्प्यते । अन्यथा नियमादृष्टानुविद्धप्रकाशनाख्यकार्याभावप्रसङ्गात् ।

---

१. B क्रियमाणे　　२. B अमन्त्रत्व ।

अभियुक्तास्तावन्न साक्षादूहादौ मन्त्रशब्दं प्रयुञ्जते । किन्तु मन्त्रकार्यकरत्वादनुमतिरुन्नीयते । कार्यन्तु मन्त्रेणैव कर्तव्यमिति शास्त्रादवगतं तत्सिध्यर्थं प्रक्षिप्यमाणस्य साक्षात्कार्ये व्याप्रियमाणस्याप्यनुग्राहकत्वमेव स्वामिसंस्काराणामिवेत्यमन्त्रत्वमेवेति राद्धान्तः । शेषं सुगमम् ।

---

प्रकृतौ विनियुक्तमन्त्रावयवेन मन्त्ररूपेण प्रकाशनं कृतमिति विकृतावप्यूहादिपदानामपि मन्त्रत्वमेव । न चैवं मन्त्रत्वेऽध्ययनप्रसङ्गः, सूर्यपदस्यावयवत्वेपि न तदवयवशालितया मन्त्रस्य अध्ययनविध्युपयोगिता । किन्त्वग्निपदावयवशालितया । दृश्यते च मन्त्रेषु शाखाभेदभिन्नावयवेषु तत्तदवयवयोगितया तत्तच्छाखिनामध्ययनविध्युपयोगिता । इह तु सर्वासामेव शाखानामूहादिपदावयवशालितया नाध्ययनमिति विशेषः । यद्वा अस्मिन् पूर्वपक्षे अध्ययनमपि भवतु । अध्येतॄणामनध्ययनं न्यायापरिज्ञाननिबन्धनमिति ।

राद्धान्तमाह—अभियुक्ता इति । न हि ऊहादिपदानां मन्त्रत्वं अभियुक्तैस्तत्र साक्षान्मन्त्रशब्दाप्रयोगात् अभियुक्तोपदेशमूलकं हि मन्त्रत्वं नान्यथेत्यर्थः । नन्वमन्त्रेण मन्त्रकार्याकरणात् तत्कार्यकरत्वेनाभियुक्तैरूहादिपदप्रक्षेपान्मन्त्रत्वे तदनुमतिरुन्नेयेति साक्षादुपदेशाभावेपि तदनुमत्या मन्त्रत्वं युक्तमेवेत्यत्राह—किन्त्विति । यदि परं तत्कार्यकारितया तदनुमतिरुन्नेया सापि न सम्भवतीति भावः । कथमसम्भव इत्यत्राह—कार्यं त्विति । स्यादेवं यदि मन्त्रकार्यमूहादिना क्रियते तत्तु मन्त्रेणैव कर्तव्यमिति शास्त्रावगतमिति मन्त्र एव स्वकार्यकर इत्यर्थः । नन्वग्निपदयुक्तो मन्त्रः सूर्यप्रकाशनरूपं वैकृतकार्यं न शक्नोति कर्तुमित्यत्राह—तत्सिद्धयर्थमिति । मन्त्रेण कार्यसिद्धयर्थमूहादिपदं प्रक्षिप्यत इति तत्पदयुक्तो मन्त्रः कार्यकरणक्षम इति मन्त्रस्य कार्यं कुर्वत ऊहादिपदमनुग्राहकमेवेत्यर्थः । नन्वेतदत्र विपरीतं ऊहादिपदमेव साक्षात्कार्ये व्याप्रियते मन्त्रस्थं त्वितरपदजातमनुग्राहकमेवोपलभ्यत इत्यत्राह-साक्षादिति । शास्त्रतो मन्त्रस्य स्वकार्यकरत्वावगतिबलात् साक्षात्कार्ये व्याप्रियमाणस्यापि प्रधानभूतस्वाम्यवस्थायां व्याप्रियमाणानां स्वामिसंस्काराणामिवानुग्राहकत्वमेवेत्यर्थः । ननु अनधीतस्यापि स्मृत्यनुमितस्य यथा वेदत्वं तथोहादेरपि मन्त्रत्वमस्त्वित्यत्राह—इत्यमन्त्रत्वमिति । यद्यपि तस्याप्यभियुक्तोपदेशाभावादमन्त्रत्वं किं पुनःप्रकरणेऽनधीतस्य, स्मृत्यनुमितस्य त्वपौरुषेयग्रन्थतया वेदत्वं युक्तमेवेत्यर्थः । ननूहादौ मन्त्रत्वाभावे तत्पदविकृते मन्त्रे कथं प्रत्यभिज्ञानमित्यत्राह –इति राद्धान्त इति । अत्रामन्त्रत्वमात्रं राद्धान्तिनोक्तं मन्त्रप्रत्यभिज्ञा तु कल्पसूत्रनय एवोक्ता । ऊहादिपदानां वेदत्वमस्ति वा नवेति न चिन्त्यम् अनुपयोगात् । वस्तुतस्तु न वेदतैवेति भावः । प्रयोजनं तु मन्त्रत्वे तदपचारे मन्त्रत्वापचारप्रायश्चित्तं अन्यथा नेति भाष्य एव व्यक्तमित्याह—शेषमिति ।

## ॥ १० ॥ तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

मन्त्रो ब्राह्मणश्च वेदशब्दस्यार्थ इत्युक्ते तत्प्रसङ्गाच्छङ्का निराक्रियते। वेदशब्देन ऋगादयो व्यपदिश्यन्ते मन्त्रशब्देन च अहे बुध्निय मन्त्रं मे गोपायेति। तत्र वेदप्रभेदो मन्त्रपर्याय एव ऋगादिः न तु तद्विशेषः। व्यवस्थानिमित्तानुपलब्धेरिति शङ्कायामुच्यते—मन्त्रविशेष एव ऋगादिः। तत्र ऋक्तावद्यत्र पादव्यवस्था सा मन्त्रविशेष एव। एतच्चाभियुक्तप्रयोगकथनमेव न लक्षणकरणम्। अत एव सूत्रेऽर्थग्रहणं प्रदर्शनार्थम्[1]। वृत्तवशेनापि पादव्यवस्थोपपत्तेः।

---

## ॥ १० ॥ तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

अभियुक्तोपदेशान्मन्त्रत्वे सापवादे कथिते तद्विशेषकथनमिदानीं क्रियते। "अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः ऋचस्सामानि यजूंषि सा हि श्रीरमृता सतां" इति वेदे त्रिधा व्यपदेशः श्रूयते। स किं न सम्भवति उत सम्भवतीति चिन्ता। तदर्थमियं चिन्ता-किमृगादीनां वेदप्रभेवमात्रतैव उत मन्त्रविशेषतेति। प्रयोजनं तन्निबन्धनप्रायश्चित्तविशेषव्यवस्था। ननु पदार्थचिन्तायाः कथमध्याये सङ्गतिरित्यत्राह—मन्त्र इति। प्रसक्तानुप्रसक्त्या सङ्गतिरित्यर्थः। अत्र ऋग्यजुस्सामसु सर्वत्र एकरूपं पूर्वपक्षमाह—वेदेति। ऋग्यजुःसाम्नां वेदशब्देनैवाभियुक्तैः व्यपदिश्यमानत्वादहे बुध्निय मन्त्रमिति वेदे च मन्त्रशब्देन व्यपदेशात् वेदप्रभेदो मन्त्रपर्याय एवर्गादिः न मन्त्रविशेषः ऋग्यजुस्साम्नामन्योन्यवैलक्षण्यव्यवस्थाकारणानुपलब्धेरित्यर्थः।

सर्वसाधारणं राद्धान्तमाह—इति शङ्कायामिति। मन्त्रविशेष एवर्गादिः न मन्त्रमात्रम् मन्त्रमात्रपर्यायतया प्रयोगाभावात्। विशेष एव प्रयोगादित्यर्थः। किं पुनः इयं ऋक् इदं यजुः इदं सामेति विशेषव्यवस्थाकारणमित्याशङ्क्य ऋग्विषये तावदाह—तत्रेति। यत्र हि अलौकिकपदसमूहे पादकृता व्यवस्था स मन्त्रविशेष एव ऋक्पादश्च गायत्र्यादीनां भागसम्मितोऽक्षरविशेषः अत ऋगिति विशेषहेतूपलब्धिरित्यर्थः। इदमपि सूत्रं ऋग्लक्षणपरमिति वृत्तिकार आह तन्नोपेयमित्याह—एतच्चेति। युक्तं चैतदित्याह—अत एवेति। लक्षणपरत्वे तद्गतार्थपदस्य न प्रदर्शनमात्रार्थतेत्यर्थः। कथं प्रदर्शनमात्रमित्यत्राह—वृत्तेति। 'अग्निः पूर्वेभिः' इत्यादौ वृत्तवशेनापि पादव्यवस्थया ऋक्त्वोपपादनादित्यर्थः।

---

१. B प्रदर्शनमात्रम्

## ॥ ११ ॥ गीतिषु समाख्या ॥ ३६ ॥

प्रगीते मन्त्रे सामशब्दोऽभियुक्तानाम् । अन्वयव्यतिरेकाभ्याञ्च गीतिमात्रवचनता । न च गीतिक्रिया मन्त्रः । अतः कथं मन्त्रप्रभेदः साम गीतिश्चेति शङ्का निराक्रियते । सत्यं गीतिमात्रवचनः सामशब्दो, गीतियुक्ते मन्त्रे लक्षणया प्रयुज्यते अभियुक्तैश्चन्दनादिष्विव स्वर्गशब्दः । अतः शब्दप्रयोगविषयत्रैविध्यात् त्रिविधो मन्त्रः । अन्वयव्यतिरेकाभ्यां च गीतिरेव सामेति । शेषं सुगमम् ।

## ॥ १२ ॥ शेषे यजुश्शब्दः ॥ ३७ ॥

यजुश्शब्दः कुत्राभियुक्तैः प्रयुज्यत इत्याकाङ्क्षायां अभिधीयते—

---

## ॥ ११ ॥ गीतिषु सामाख्या ॥ ३६ ॥

अत्र पूर्वोक्तैव रीतिः सङ्गतिः संशयश्च । अत्र सामशब्दे अधिकाशङ्कामाह—अत्रेति । युक्ता छन्दोवशेन ऋग्व्यवस्था । सामनि तु न किञ्चिद्व्यवस्थाकारणं यतोऽभियुक्तानां प्रगीते मन्त्रे सामशब्दप्रयोगः । नन्वनेनैव प्रयोगेण सामव्यवस्थास्त्वित्यत आह—अन्वयेति । गाने सति सामशब्दप्रयोगो नासतीत्यन्वयव्यतिरेकाभ्यां गीतिमात्रवचनता सामशब्दस्य न मन्त्रवाचितेत्यर्थः । ततः किमित्यत्राह—न चेति । अत इति निगमनम् । यत एव गीतिक्रियावचनः सामशब्दो न मन्त्रवचनः अतो मन्त्रविशेषत्वाभावात् साम्नः पुनरपि मन्त्रत्रैविध्यानुपपत्तिरित्यर्थः । राद्धान्तमाह—इति शङ्केति । गीतिक्रियामात्रवाचित्वेपि सति सामशब्दस्य गीतियुक्तमन्त्रेपि चन्दनादिष्विव स्वर्गशब्दस्य लक्षणया प्रयोगोऽस्तीति ततो व्यवस्थासिद्धिरित्यर्थः । ननु वाच्येनैव व्यवस्थेत्युक्तमित्यत्राह—अतः शब्देति । व्यपदेशो हि प्रयोगव्यवस्थाप्यः । प्रयोगश्च मुख्यो वा लाक्षणिको वाऽस्तु । अस्ति चात्र मन्त्रे लाक्षणिकः सामशब्दप्रयोग इति मन्त्रशब्दप्रयोगविषयत्रैविध्यात् त्रिधा व्यपदेशो युक्त इत्यर्थः । आकृतिनयसिद्धं गीतिवचनत्वं चाविरुद्धमित्याह—अन्वयेति । गीतिमात्रवचनत्वे ऋङ्नियमोपादानादिकं तु भाष्ये ग्रन्थे च व्यक्तमित्याह—शेषमिति ।

## ॥ १२ ॥ शेषे यजुश्शब्दः ॥ ३७ ॥

अत्रापि तत्रोक्तैव सङ्गतिश्चिन्ता च । पूर्वपक्षमाह—यजुरिति । छन्दश्छान्दसापदेशाभ्यां ऋक्साम्नोर्व्यवस्था युक्ता । यजुश्शब्दस्तु कुत्राभियुक्तैः प्रयुक्त इति

अपादवन्धे [1]अप्रगीते च मन्त्रे यजुश्शब्दोऽभियुक्तानाम् । अतः सिद्धं मन्त्र-त्रैविध्यम् अभियुक्तप्रयोगप्रतिपत्तिभ्यामिति ।

॥ १३ ॥ निगदो वा चतुर्थः स्याद्धर्मविशेषात् ॥ ३७ ॥

अपादग्रन्धत्वाप्रगीतत्वेऽपि यजुर्भ्योऽन्ये निगदा अध्येतॄणां निगदा वर्तन्ते न यजूंषीत्यन्यत्वव्यपदेशात् । ननु वेदे त्रैविध्यव्यपदेशान्निगदानां न

---

दुर्ज्ञानम् । नियमकारणानुपलब्धेरित्यर्थः । राद्धान्तमाह—इत्यस्यामपि । ऋक्साम-शब्दप्रयोगविषयेतरत्वेन यजुश्शब्दप्रयोगविषयोऽपि सुज्ञान इत्यर्थः । सूत्रत्रयसिद्धा-र्थोपसंहारः अत इति ।

॥ १३ ॥ निगदो वा चतुर्थः स्याद्धर्मविशेषात् ॥ ३७ ॥

"उच्चैरृचा क्रियते उच्चैः साम्ना उपांशु यजुषा उच्चैर्निगदेन इति श्रुतम् । तत्र चिन्ता—किं यजुर्भ्योऽन्ये निगदाः उत यजूंष्येवेति । उक्तमन्त्रत्रैविध्याक्षेप-समा[2]धानात् सङ्गतिः । प्रयोजनं च पूर्वपक्षे निगदापचारे यजुर्निमित्तप्रायश्चित्ता-भावः । राद्धान्ते तु तद्भावः । ननु अपादबद्धत्वात् अप्रगीतमन्त्रत्वाच्च निगदानां यजुष्ट्वमेव युक्तमिति कथं पूर्वपक्ष इत्यत्राह—अपादेति ।

सत्यमेवं तथापि अध्येतॄणां निगदा वर्तन्ते न यजूंषि इत्यन्यत्वव्यपदेशादन्य-त्वमेव निगदानां यजुर्भ्यो युक्तमित्यर्थः। ननु वैदिकत्रयीव्यपदेशबलात् अनन्यत्वसिद्धौ लौकिकाध्येतृव्यपदेशमात्रान्न भेदो युक्त इति चोदयति—नन्विति । मैवमिति । स्यादेवं यद्यनन्यथासिद्धो वैदिकव्यवहारः । यस्तु यजूंषीति व्यवहारः सः प्रश्लिष्ट-पठितपरत्वेन लक्षणया प्रश्लिष्टपठितनिगदविषयोऽपि युक्तः छत्रिवत् । अतो न सकृदुच्चरितस्य वृत्तिद्वयदोषः स्वात्मन्यपि लक्षणात्वात्। गौणशब्दस्तु ग्रन्थे जघन्य-वृत्तिपर इत्यर्थः । ननु किमित्येवं वेदव्यपदेशस्य वर्णनमित्यत्राह—यजुष इति । उच्चैर्निगदेनेति वैदिकव्यपदेशोपोद्बलितादनन्यथासिद्धात् हेतुव्यपदेशबलादित्यर्थः। अध्येतृव्यपदेशस्याप्यन्यथासिद्धिं चोदयति—नन्विति । निगदशब्दः प्रकर्षेण गदनी-यतया निगदपदव्युत्पत्तेर्यजुष्यपि निगदानां प्रकर्षनिमित्तोऽध्येतॄणां भेदव्यपदेश इत्यन्यथासिद्धया न ततोऽन्यत्वसिद्धिरित्यर्थः। केन तेषां प्रकर्षइत्यत्राह—उच्चैस्त्विति । कथं तेषामुच्चैस्त्वधर्म इत्यतआह—परेति । लोडन्तपदयुक्तनिगदमन्त्रलिङ्गस्वर-सात् परसम्बोधनं कार्यं प्रतीयते । तच्च उच्चैरुच्चारण एवेति सामर्थ्यादुच्चैस्त्व-प्राप्तिरित्यर्थः । मैत्रमिति । निगदानां यजुष्ट्वे उपांशुयजुषेति बलीयसा पदद्वय-

---

१. बद्धे  २. समर्थनात् ।

व्यपदेशभेदोऽस्ति । मैवम् । प्रश्लिष्टपठितपरो गौणो यजूंषीति व्यपदेशः निगदविषयोऽपि युक्तः यजुरन्यत्वेनाध्येतृणां व्यपदेशात् । ननु परसंप्रबोधनसामर्थ्यनिबन्धनोच्चैष्ट्वधर्मविशेषाधीनप्रकर्षनिमित्तको भेदव्यपदेशः[1]; मैवम्, उपांशु यजुषेत्युपांशुत्वधर्मं विनियोगानुसारेण केवलनिगदमन्त्रसामर्थ्याधीनपरसंबोधनकार्यहानान्न प्रकर्षात् भेदव्यपदेशसिद्धिः । ननु चोच्चैर्निगदेनेति विशेषवचनात्, सामान्यविहितोपांशुत्वबाधात् उच्चैष्ट्वं युक्तम् । मैवम्—

श्रुतिरूपेण वाक्येन तेषामुपांशुत्वविधौ तद्विनियोगानुसारेण निगदलिङ्गगम्यपरसम्बोधनकार्यं हेयं पदद्वयश्रुतिरूपवाक्याल्लिङ्गस्य दुर्बलत्वात् । अतो न प्रकर्षाद्व्यपदेशसिद्धिः । ततश्चाभेदे निगदस्य लिङ्गप्राप्तपरसम्बोधनकार्यस्य वचनेन बाधो दोषः स्यात् । स चायुक्तः अबाधेनाप्युपपत्तौ बाधस्यान्याय्यत्वादित्यर्थः ।

नन्विति । उच्चैर्निगदेनेति विशेषविहितेन उच्चैस्त्वेनैव सामान्यविहितोपांशुत्वस्याहवनीयस्येव पदेन बाधादुच्चैष्ट्वसिद्धिः । तन्निबन्धनप्रकर्षाद्व्यपदेशोऽन्यथासिद्ध इत्यर्थः । मैवमिति । स्यादेवं यदि सामान्यविधिनिरपेक्षो विशेषविधिः स्यात् इह तु परसम्बोधनसामर्थ्यत उच्चैष्ट्वे प्राप्ते ततोऽपि बलवता उपांशु यजुषेति वाक्येन उपांशुत्वप्रसक्तौ त्रिकालाप्राप्तिनयेन स्वप्रतिबन्धभूतोच्चैष्ट्वे तिरोहिते तिरोधायकोपांशुत्वविधिसापेक्षत्वादुच्चैष्ट्वविधेर्न स्वनिमित्तविधेर्बाध इति नयादुच्चैष्ट्वविधेरुपांशुत्वविधिबाधकत्वाभावात् तयोर्वाक्यविशिष्टयोः विकल्पः स्यात् । न च सापेक्षविधेर्विकल्पो न युक्तः पक्षेपि बाधापत्तेरिति वाच्यम् । यतोऽत्यन्तबाधकत्वं सापेक्षविधेर्नेष्टम् पक्षे बाधकत्वं युगपदुपसंहाराशक्तेरिष्टमेव । गत्यन्तराभावाद्विवनशिष्टयोरपि विकल्पोऽङ्गीकार्यः । ततश्च विकल्पदोषो यजुष्ट्वपक्षे दुर्वार इत्यर्थः । अन्यत्वपक्षे तु व्यपदेशासिद्धिकार्यविरोधविकल्पदोषा न सम्भवन्तीत्याह—यदा त्विति । निगदानामन्यत्वे परसम्बोधनकार्यविरोधो नास्ति । उपांशुत्वस्याप्राप्तिः सामर्थ्यप्राप्तोच्चैष्ट्वस्याविघातात् । तथा च प्राप्तत्वादुच्चैष्ट्वस्य उच्चैर्निगदेनेत्यनुवादः । अतः उच्चैष्ट्वप्रकर्षात् भेदव्यपदेशः । अनुवादत्वेन विधानाभावात् विकल्पविरहश्चेत्यर्थः । ननु निगदानां यजुष्ट्वेपि उपांशुत्वविधेर्विधिवैषम्यपरिहाराय निगदेतरयजुर्विषयत्वमेवेति उच्चैष्ट्वोपांशुत्वयोर्न विकल्प इति चोदयति—नन्विति । कथं विधिवैषम्यमित्यत्राह—निगदेषु हीति । निगदयजुषः परसम्बोधनसामर्थ्यप्राप्तोच्चैष्ट्वबाधापेक्षः उपांशुत्वविधिः यजुरन्तरे तु तन्निरपेक्ष इति वैषम्यमित्यर्थः ।

मैवमिति । निगदयजुष्ट्वसामर्थ्यप्राप्तोच्चैष्ट्वबाधसापेक्षत्वं यजुरन्तरे तन्नि-

---

1. B प्रकर्षनिबन्धन

सामर्थ्यत उच्चैस्त्वे प्रसक्ते "उपांशु यजुषे"त्युपांशुत्वप्रसक्तौ तदपेक्षत्वादुच्चैस्त्वविधेः उपांशुत्वोच्चैष्ट्वयोः विकल्पः स्यात्। यदा त्वन्ये निगदास्तदा नोपांशुत्वं परसंबोधनकार्यविरोधि, तदो"च्चैर्निगदेने"त्यनुवादादुच्चैष्ट्वप्रकर्षात् भेदव्यपदेशसिद्धिः विकल्पविरहश्च।

ननु यजुष्ट्वेऽपि निगदस्योपांशुत्वं विधिवैषम्यभयान्निगदेतरयजुर्विषयं युक्तम्। निगदेषु हि परसम्बोधनकार्यप्राप्तोच्चैस्त्वबाधसापेक्षत्वात् यजुरन्तरे निरपेक्षत्वादिति न विकल्पः; मैवम्, उपांशुत्वविनियोगात्पूर्वमप्राप्तेश्चोच्चैस्त्वस्य न बाधसापेक्षतेति युक्तो विकल्पः। न च विकल्पेऽपि पक्षप्राप्तमुच्चैस्त्वं प्रकर्ष इति भेदव्यपदेशसिद्धिः, पाक्षिकप्रकर्षात् नित्यभेदव्यपदेशासमर्थनात्। अतो भेदव्यपदेशात्परसम्बोधनकार्यविरोधित्वात्, विकल्पप्रसङ्गाच्च, यजुर्भ्योऽन्ये निगदा इति पूर्वः पक्षः। यजूंष्येव निगदाः। वेदे तावत् त्रिधा

---

रपेक्षत्वं इत्येवं वैषम्यं मा वादीः यजुरन्तरेऽप्युच्चारणक्रियाया अर्थप्राप्तस्वरान्तरबाधापेक्षितत्वस्य तुल्यत्वात्। वचनाल्लिङ्गोपमर्द उभयत्र सम इत्यर्थः। ननु तर्हि उच्चैर्निगदेनेति वचनविहितोच्चैष्ट्वबाधापेक्षत्वानपेक्षत्वाभ्यां उपांशुत्वविधेर्वैषम्यमित्यत्राह—उपांशुत्वेति। उपांशु यजुषेत्युपांशुत्वविनियोगात्पूर्वमुच्चैष्ट्वादिविधेः विधिवैषम्याभावात् विकल्पप्रसङ्गो युक्त एव। अतएव विकल्पापेक्षत्वानपेक्षत्वाभ्यामपि न वैषम्यम् उपांशुत्वविधिसमये कोटयन्तरानुन्मेषात् पश्चादुच्चैष्ट्वविधेरगत्यानुष्ठानसमये विकल्पाङ्गीकार इति युक्तमेवेति भावः। ननु वैकल्पिकोच्चैष्ट्वप्रकर्षादेव व्यपदेशसिद्धिरस्तु इत्यत्राह—न चेति। तत्र हेतुः पाक्षिकेति। न नित्यस्य व्यपदेशस्य पाक्षिकप्रकर्षात् समर्थनं तस्यापि पाक्षिकत्वापत्तेरित्यर्थः। अत इति पूर्वपक्षनिगमनम्। ननु पूर्वपक्षिणा यजुष्ट्वपक्षे उपांशुत्वसापेक्षतया उच्चैष्ट्वविधेः नात्यन्तबाधकत्वं युक्तमिति यो विकल्प आपादितः सोऽयुक्तः वैकृतनीवारविधेः कार्येविधानार्थं व्रीह्याद्यपेक्षस्याप्यत्यन्तं व्रीहिबाधकत्वदर्शनात्। कथं वा उच्चैष्ट्वविधेः उपांशुत्वविध्यपेक्षा, परसम्बोधनकार्यार्थी प्रयोगवचनाक्षेपादेवोच्चैष्ट्वप्राप्तेस्तद्विधानायोगादिति चेन्न, विध्याक्षेपतो विधेः शीघ्रभावित्वात् अन्यथा हन्त्यादेरपि विधिर्न स्यात्। तत्रापि कार्यार्थी प्रयोगवचनाक्षेपत एव प्राप्तेः। उच्चैष्ट्वविधिप्रयोजनं च तदविधौ कार्यार्थमर्थप्राप्तोच्चैष्ट्वबाधेन वैनियोगिकोपांशुत्वं स्यात्। तद्विधौ तु यजुरन्तर एवोपांशुत्वनिवेश इति। अतः कथं निगदानां यजुष्ट्वे उच्चैष्ट्वविधेः सापेक्षता कथं वा तदधीनो विकल्प आपादितः इत्यत्राह—इति पूर्वः पक्ष इति।

व्यपदेशासामञ्जस्यात् अध्येतॄणामन्यत्वव्यपदेशश्च सामर्थ्यत उच्चैष्ट्वप्रकर्षात् "उपांशु यजुषे"ति हि यजुश्शब्दः सामान्यशब्दः स चो"च्चैर्निगदेने"ति विशेषपदसन्निधानात् तदितरविशेषान्तरपर इति लोकव्युत्पत्ते-

---

अयं भावः न तावन्निरपेक्षत्वं उपांशुत्वविधेः पूर्वं उच्चैष्ट्वविध्ययोगात् परसम्बोधनसामर्थ्यादेव प्रयोगवचनानुमतस्य नियतस्योच्चैष्ट्वस्य प्राप्तेः त्रिकालाप्राप्तविषयता विधेरित्युक्तमेव। हन्त्यादौ कार्यार्थिना प्रयोगवचनेन नियताक्षेपाभावाद्युक्तो नियमार्थो विधिः। अन्यस्य नखविदलनादेरपि कार्यसाधनस्य सम्भवात्। न च सामान्यविशेषनयादुपांशुत्वस्य यजुरन्तरे निवेशादुच्चैष्ट्वविधेः न सप्रयोजनता यतः सामान्यविशेषनयो हि तत्र भवति यत्र विशेषविधेरग्रेसरता न च साऽत्र सम्भवति। उपांशुत्वविधिसापेक्षत्वादुच्चैष्ट्वविधेरित्युक्तमेव। न च सापेक्षत्वे व्रीहिनीवारादिनयादत्यन्तबाधः। न हि तत्र विधित्वार्थमपेक्षा किन्तु कल्पनालाघवादुद्देश्यतायाः कार्यार्थत्वम्। इह तु विधित्वार्थमपेक्षेति बहुश उक्तमिति।

राद्धान्तमाह—वेदे तावदिति। यजूंष्येव निगदा नान्ये ऋचो यजूंषि सामानीति वैदिकादनन्यथासिद्धाद्व्यपदेशात्। तत्र यजुश्शब्दः ऋक्सामव्यतिरिक्ते प्रश्लिष्टपठिते मन्त्रे प्रयुक्त इति निगदा अपि तथेति यजुष्ट्वमेव तेषाम्। पूर्वपक्षोक्तदोषाणां मान्द्यं सूचयितुं तावच्छब्दः। न च गौणतया वैदिकशब्दनिर्वाहः। नापि छत्रिवल्लक्षणया तथा सति व्यपदेशासामञ्जस्यापत्तेः। न हि मुख्ये सम्भवति जघन्यवृत्तिर्युक्तेत्यर्थः। ननु अध्येतृव्यपदेशादन्यत्वमित्युक्तं तत्राह—अध्येतॄणामिति। काठकादिवदन्यत्वव्यपदेशः प्रकर्षादप्युपपद्यत इति न भेदापादक इत्यर्थः।

ननु युक्तं तत्र कठादिप्रवचननिबन्धनतया काठकादौ भेदव्यपदेशः। इह तु कः प्रकर्षः यतस्तन्निबन्धनोऽयं भेदव्यपदेशः स्यादित्यत्राह—उच्चैष्ट्वेति। ननु यजुष्ट्वे निगदानां परसम्बोधनकार्यबाधो वा स्यात् विकल्पो वा। उच्चैष्ट्वविधेरुपांशुत्वविधिसापेक्षतया विलम्बिततया सामान्यविशेपन्यायागोचरत्वादित्यत्राह—उपांशुत्विति। यत एवात्र सामान्यविशेषन्यायो न सम्भवति अत एव न्यायान्तरमेवात्रोच्यते। तथाहि—'उपांशु यजुषा' इत्यत्र यजुश्शब्दः सामान्यवचनः निर्विशेषं न सामान्यमिति नयात् अन्तर्भावितानियतविशेषपरः न त्वाकाङ्क्षाद्यविशेषात् तद्विशेषपरः। स एव उच्चैर्निगदेनेति विशेषवचनेन निगदपदसन्निधानात् तदितरविशेषान्तर्भावपरः। ननु आकाङ्क्षाद्यविशेषे विरोधाभावे च कथं तदितरविशेषपरत्वमित्यत्राह—इति लोक इति। आकाङ्क्षाद्यविशेषेपि विशेषपदसन्निधौ सामान्यपदं तदितरविशेषपरं विनापि विरोधेन वृद्धव्यवहारदृष्टमिति

र्युक्तम् । यथा गामानय बलीवर्दञ्चेति गोशब्दो बलीवर्देतरविशेषपरः । अतो निगदेतरयजुष्वेवोपांशुत्वं सामर्थ्यप्राप्तश्चोच्चैस्त्वं निगदानां उच्चैर्निगदेनेत्यनूद्यते । अतो न परसंबोधनकार्यबाधः, नापि विकल्पः । व्यपदेशान्यत्वसिद्धिश्च । अतो यजूंष्येव निगदा इति राद्धान्तः ।

ननु गोबलीवर्दन्यायोऽत्र न सम्भवति । यत्र हि सामान्येन विशेषेण

---

तथैव लोके अनादिव्युत्पत्तिः उपात्तद्रव्यकवाक्ये यथा गुणशब्दोगुणमात्रपरः। न च सामान्यशब्दस्य प्रकृतविशेष एवोपसंहारः सामान्यविधेरानर्थक्यादनन्वयापत्तेश्चेत्यर्थः।

नन्वेवंविधा व्युत्पत्तिर्लोकेऽस्तीत्यत्र किं मानमित्याशङ्क्य दृष्टान्तमाह— यथेति । यद्येवं व्युत्पत्तिर्न मता स्यात् गामानय बलवर्दं चेति प्रयोजकवृद्धेनोक्ते प्रयोज्यवृद्धः कदाचित् द्वौ वृषावप्यनयेत् । नतु नित्यं स्त्रीपुंसौ गावौ इति लोकदृष्टविपरीततापत्तिरित्यर्थः । यत एव सामान्यविशेषनयाद्भिन्नो गोबलीवर्दनयः ततस्तेन यजुश्शब्दस्य निगदेतरपरत्वात् तत्रैवोपांशुत्वं तदाह—अत इति । एवं च सति परसंम्बोधनकार्यबाधो विकल्पापत्तिर्वा । अध्येतॄणामन्यत्वव्यतदेशानुपपत्तिरित्येवमादयः पूर्वोक्तदोषा न प्रसज्यन्त इत्याह—सामर्थ्येति । अत इति राद्धान्तनिगमनम् । ननु वैदिकव्यपदेशसामञ्जस्यमूलं निगदानां यजुष्ट्वं अन्यत्वमपि तन्मूलमेवावगम्यते । उच्चैर्निगदेनेति ऋगादिशब्दसमभिव्याहारात् तद्वदेव पृथङ्निष्ठतावगतिः । अतो व्यपदेशद्वये किं समञ्जसं किमसमञ्जसमिति अज्ञानात् कथं यजुष्ट्वेन राद्धान्त इत्यत्राह—इति राद्धान्त इति । अयं भावः त्रित्वव्यपदेशः सङ्ख्याव्यपदेशतया सङ्ख्यान्तरासहिष्णुस्तावत् पृथक्त्वमेवेह मन्त्रस्याह न सङ्ख्यान्तरनिवेशाननुगुणं पृथक्त्वमिति न मन्त्रान्तरधीः निगदव्यपदेशस्तु नितरां इति यौगिकव्युत्पत्त्या निगदशब्दस्य तदुचितपरसम्बोधनकार्यप्राप्तोच्चैष्ट्वप्रकर्षादपि सिद्ध्यतीति त्रयीव्यपदेशाद्दुर्बलः न च तस्य निगदस्य यजुष्ट्वे निगदयजुश्शब्दयोः पर्यायतापत्तिः । सामान्यविशेषयोः गोबलीवर्दयोः पर्यायता[1]प्रत्यदर्शनादिति ।

नन्विह यजुर्निगदविषये न गोबलीवर्दनयस्य सम्भवः । तत्र सम्भवति यत्र सामान्येन विशेषेण च सम्बद्धमेकमेव विधेयं यथा गोर्बलीवर्दस्य चानयनं इह तु सामान्येन यजुषा सम्बद्धमुपांशुत्वं विशेषेण च निगदेनोच्चैष्ट्वमिति चोदयति— नन्विति । मैवमिति । न हि विधेयस्यैकत्वमन्यत्वं वा गोबलीवर्दनयभावे प्रयोजकं गामानय बलीवर्दं बधानेत्यादौ विधेयभेदेपि दर्शनात् । किं तर्हि प्रयोजकमतआह—

---

१. B त्वादर्शनात् ।

च सबद्धः एकपदार्थो विधेयः तत्र स न्यायः । इह तु सामान्येनान्यद्विधेयं अन्यच्च विशेषेण; मैवम्, तद्वा विधेयं अन्यद्वा, नेदं तन्त्रं, किन्तु सामान्यविषयवाक्यसन्निधौ विशेषविषयवाक्यान्तरे सति तदितरविशेषविषयं सामान्यपदमिति व्युत्पत्तिः । तथाहि शब्दद्वयोच्चारणादर्थभेदावगतिः[1], अन्यायश्चानेकशब्दत्वमिति न्यायात् । अतः सामान्यशब्दोऽन्यविशेषपरः विशेषशब्दस्य चैवमन्यार्थतेत्यनुसन्धेयम् ।

---

किन्त्विति । सामान्यविषयवाक्यसन्निधौ विशेषविषयवाक्यान्तरे सति तदितरविशेषविषयं सामान्यपदमिति सन्निधानमेवैकं व्युत्पत्तौ प्रयोजकं नान्यदित्यर्थः । नन्वेवं व्युत्पत्तौ का युक्तिरित्याशङ्क्य व्युत्पत्तौयुक्तिमाह—तथाहीति । स्वतस्तावत् शब्दद्वयोच्चारणे अर्थभेदावगतिः अन्यायश्चानेकशब्दत्वमिति न्यायात् । नन्वेवमर्थभेदे यजुर्निगदयोः गोबलीवर्दयोश्च सर्वथैवान्यता स्यादित्यत्राह—अत इति । सामान्यविशेषवाक्ययोः सन्निधाने सति सामान्यशब्दोऽन्तर्भावितविशेषपरत्वनियमात् सन्निहितविशेषेतरपरः विशेषशब्दश्च एवमन्यार्थ इति व्यक्त्यन्यतैव न सर्वथाऽन्यार्थतेत्यर्थः । ननु सन्निधिमात्रस्य प्रयोजकत्वाङ्गीकारे राजसूययजेरपि सामान्यस्य अवेष्टयाद्युत्पत्तियागविशेषेतरयागविशेषपरता स्यात्, पदाहवनीययोरपि गोबलीवर्दनयः स्यात् प्रतिसन्धाननिबन्धनसन्निधिसम्भवात् । उच्चारणसन्निधितन्त्रत्वे गामानय सन्ध्यामुपास्स्व बलीवर्दं चेति तृतीयो न्यायः स्यात् । पदार्थसन्निधितन्त्रत्वे च अटवीस्थां गामानय गृहस्थं वृषभमपीति गोबलीवर्दनयो न स्यात् पदार्थसन्निधानाभावात् । किञ्च व्युत्पत्तौ सन्निधानं विशेषावहं किं न्यायकथनेन । अथ तु न्यायकथनं तदा न्यायबलादसन्निधावपि अनेकशब्दस्यैकार्थता न न्याय्येति गोबलीवर्दन्यायः स्यात् । न चानुषङ्गहेतुः सन्निधानं गामानय सन्ध्यामुपास्स्व बलीवर्दं चेत्यत्र व्यभिचारात् । तथा महिष आनेतव्यो गावौ उक्षा चेत्यत्र न स्यात् सजातीयव्यवधानात् अतः सन्निधानमात्रं प्रयोजकमिति भ्रान्तजल्पितमेवेत्यत्राह—इत्यनुसन्धेयमिति ।

अयं भावः—सन्निधानं नाम सामान्यविशेषवाक्ययोरुच्चार्यमाणयोर्बुद्धौ विपरिवर्तमानतया प्रत्यभिज्ञायमानत्वं तच्च लोके विवक्षावशादेकप्रयोजनवशीकारात् । वेदे तु एकप्रकरणाम्नानात् । ततश्च राजसूययजेः प्रकृतोत्पत्तिवाक्यस्थविशेषयागेषूपसंहार एव न गोबलीवर्दनयाद्विशेषान्तरपरता । सन्निधानेऽपि द्रव्य-

---

१. B तेः

केचित्तु गोबलीवर्दन्यायमेवं वदन्ति। विशेषसम्बन्धिविधेयान्तराभावे तत्सन्निधौ सामान्यशब्दः तदितरविशेषे वर्तत इति। इह चोच्चैर्निगदेनेत्यविधिः सामर्थ्यतस्तत्प्राप्तेरित्यतस्साम्यं; तच्चिन्तनीयम्, कथं विधे-

---

देवताख्ययागरूपाभावेन विशेषान्तराभावात्। उत्पत्त्यधिकारवाक्ययोः सन्निहितयोरपि अन्योन्यापेक्षत्वेन विशेष उपसंहार एव। अतः सन्निधानस्य प्रयोजकत्वेपि विशेषान्तरानिर्वाहोऽपवादः। यथा गुणशब्दस्य गुणमात्रपरत्वे उपात्तद्रव्यकवाक्यत्वस्य प्रयोजकत्वेपि सामानाधिकरण्यमपवादः पदाहवनीयादौ सामान्यविशेषवाक्ययोरेकप्रकरणाभावान्न सन्निधिः। किन्तु पदे जुहोतीत्यश्वमेधप्रकरणाधीतं सन्निहितजुहोतिना प्रथमं सम्बध्यते। आहवनीयवाक्यं तु अनारभ्याधीतं सामान्यं शङ्कात्रयनिराकरणापेक्षितया विलम्बितम्। पद वरुद्धजुहोतिव्यतिरिक्तजुहोत्यन्वये विलम्बश्च पदाहवनीयनयोपपादितः। एवं च लोके विवक्षयैकप्रयोजनवशीकारेण बुद्धौ विपरिवर्तमानतया सन्निधानात् गामानय सन्ध्यामुपास्स्व बलीवर्दं च इत्यादौ वाक्यव्यवधानेऽपि पूर्वोक्तापवादाभावे गोबलीवर्दनय एव।

वेदे तु[1] एकप्रकरणस्थतया सन्निधानात् अनुषङ्गे तु पदानामेवान्वयात् तत्र च निरन्तरसन्निधेरेव लोके कारणतया व्युत्पत्तेरनन्वये सजातीयव्यवहितसन्निधिरेव तन्त्रम्। इह तु नान्यत्र स्थितस्यान्यत्रान्वयः। किन्तु यथास्थितस्यैव तात्पर्यविशेष इति भेदः। न चैवं ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय इत्यस्य लोकप्रसिद्ध्या सामान्यविशेषन्यायविषयस्यापि गोबलीवर्दनयविषयतापात इति वाच्यम्। यतस्तस्यापि सन्निधानात् गोबलीवर्दनयविषयतैव। प्रसिद्धिस्तु व्युत्पत्तिप्रयोजकाननुसन्धानात्। एवमपवादरहितसन्निधानात् असन्निधानाच्च लोके वेदे च भेद ऊहनीयो न्यायद्वयस्य शब्दार्थसम्बन्धग्रहरूपाया व्युत्पत्तेः तर्करूपन्यायस्याप्युपयोगात् न्यायोक्तिरप्युपपन्नैव। अत एवारुणाधिकरणे गुणपरत्वव्युत्पत्त्युपयोगितया न्यायकथनं टीकापञ्चिकयोः सन्निधानैकहेतुनैव। व्युत्पत्तौ च न्यायोऽनुग्राहकमात्रमिति न तद्बलात् सर्वत्रातिप्रसङ्गः इत्यलमतिविस्तरेण।

प्रकाशस्त्विह गोबलीवर्दन्यायविषयमेवाह। सन्निधाने सति विशेषसम्बन्धिविधेयान्तरादर्शनं गोबलीवर्दनये प्रयोजकं आनयनस्यैवोभयत्र विधानात् विधेयान्तरदर्शने तु सामान्यविशेषनय एवेति। तदाह—केचित्त्विति। कथं पुनरिह यजुर्निगदविषये विधेयान्तरादर्शनमित्यत्राह—इह चेति। उच्चैर्निगदेनेत्यत्रापि न निगदसम्बन्धितया उच्चैस्त्वविधिः। तत्र हेतुः सामर्थ्यत इति। निगदानां परसम्बोधनलक्षणकार्यतः प्राप्ततया उच्चैस्त्वस्य तद्विधानायोगात्। अतो गोबलीवर्दन-

---

१. पदत्वेन B

यान्तरादर्शनं प्रयोजकरूपमिति। अथ यत्र विधेयान्तरमस्ति तत्र सामान्यविशेषन्याय एव स्यादिति । नैतत् । असन्निहितवाक्यद्वये पदाहवनीयादौ स न्यायः; सन्निहिते तु गोर्वलीवर्दन्यायः इति भेदः सुगमः। उच्चैर्निगदेनेत्येतत् सन्निहितम्। वेदोपक्रमवाक्याद्वाक्यान्तर-मेतदिति वेदोवेत्यधिकरणाविरोधः। सुगममन्यत्।

---

यसाम्यमित्यर्थः। दूषयति—तच्चिन्तनीयमिति। अयं भावः—उच्चैर्निगदेनेत्यत्र विधेयान्तराभावस्याद्याप्यसिद्धिः गोबलीवर्दनयविषयत्वे विधेयान्तराभाव-सिद्धिः। अन्यथाविकल्पफलविध्यापत्तेः तत्सिद्धौ च तद्विषयत्वमितीतरेतरा-श्रयापत्तेः तदयुक्तमिति चिन्त्यम्। विपक्षे बाधकन्यायानभिधानाच्च कथं सन्निधौ सति विधेयान्तरादर्शनमिति गुरुतरप्रयोजकाङ्गीकार इत्याह—कथमिति। विपक्षे बाधकन्यायं शङ्कते—अथेति। यत्र हीति विधेयान्तरं दृश्यते ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्यस्तक्रभोजीत्यादौ तत्र सामान्यविशेषन्यायो लोकसिद्ध इति तददर्शनं गोबलीवर्दन्यायस्य प्रयोजकत्वेनाङ्गीकृतम्। अन्यथा न्यायद्वयस्य भेदायोगादित्यर्थः। नैतदिति। अभिधानविषयोऽयं नयः तत्राभिधानोपयोग्येव प्रयोजकं वाच्यम्। तच्च सन्निधानमेव। न विधेयान्तरादर्शनम् अभिधानोत्तर-कालत्वाद्विधानस्येति भावः, विधेयान्तरादर्शनस्य प्रयोजकत्वेपि न्यायद्वयभेदस्या-न्यथाप्युपपत्तिरित्याह—असन्निहित इति। सामान्यविशेषवाक्यद्वयस्य सन्निधाना-सन्निधानाभ्यामेव न्यायद्वयभेदसिद्धिः। तत्रासन्निहिते वाक्यद्वये पदाहवनीयादेः सामान्यविशेषनयः सन्निहिते तु गोबलीवर्दनयः। सन्निधानस्य प्रयोजकत्वे च ये दोषास्ते प्रत्युक्ता इति भावः। ननु पदादावपि जुहोतिशब्दकृतसन्निधिरस्तीति शङ्कामात्रमनुदति—इति भेद इति। वाक्यद्वयोच्चारणसन्निधेरेव प्रयोजकत्वेनोक्तेः शब्दकृतसन्निधौ सत्यपि अस्यातन्त्रत्वात् भेदसिद्धिरित्यर्थः। प्रकृते सन्निहितत्वात् गोबलीवर्दनय एवेत्याह—उच्चैरिति। उच्चैर्निगदेनेत्येतद्विशेषवाक्यं उपांशु यजुषेति सामान्यवाक्यस्य सन्निहितमित्यर्थः। ननु वेदोपक्रमाधिकरणे वेदो वा प्रायदर्शना-दिति निरपेक्षावेदकब्राह्मणवाक्यप्रतिपाद्यापूर्वधर्मत्वमुच्चैष्ट्वादेरुक्तम्। अत्र तु मन्त्रधर्मत्वमुच्यत इति तेन सह विरोधः स्यादित्याह—वेदोपक्रमेति। एतदधिकरणो-पन्यस्तं उच्चैर्ऋचा क्रियत इत्यादिवाक्यं वेदोपक्रमवाक्याद्वाक्यान्तरमिति मन्त्र-धर्मत्वप्रतिपादकस्यास्य नापूर्वधर्मत्वप्रतिपादकेन सह विरोधः। तद्वदृगादिशब्दानां लक्षणाहेतोरभावादित्यर्थः।

केचित्तु उच्चैरित्यारभ्य एकग्रन्थतया व्याचक्षते। तत्र उच्चैर्निगदेनेत्येतत् सन्निहितमित्येकं पदम् उच्चैर्निगदेनेत्येतेन सह सन्निहितमुपांशु यजुषेति वाक्यं वेदोपक्रमवाक्यात् उपांशु यजुषेत्येतस्मात् वाक्यान्तरमित्यर्थः।

।१४। अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ।४६।

छान्दोवशेन ऋक्परिमाणं छान्दसोपदेशेन च सामपरिमाणं सुज्ञानम् । एवं तदुपायद्वयाभावात् यजुःपरिमाणं दुर्ज्ञानम् । ननु ब्राह्मणवदेकप्रयोजनानि पदानि, अन्विताभिधायीनीत्येकं यजुरिति सुगमम्; मैवम्, विनियोगतः प्रयोजनं यजुषो न स्वातन्त्र्येण, विनियोगतश्च यदेवानुष्ठेयप्रकाशकं पदं तस्यैव[1] प्रयोजनं ज्ञातं तदतिरिक्तपदानां तु कियतां

।१४। अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ।४६।

देवस्य त्वा सवितुः प्रसव इत्यादीनि प्रश्लिष्टपठितानि यजुः पदान्युदाहरणम् । तत्र चिन्ता-इदमेकं यजुरिति यजुः परिमाणं किं दुर्ज्ञानमुत सुज्ञानमिति । अत्रेदं यजुरिति यजुर्विषया कथा वृत्ता । तत्प्रसङ्गादिदादीं कियदेकं यजुरिति तद्विषयं कथान्तरमुच्यत इत्यध्याये अनन्तरं च सङ्गतिः । प्रयोजनं तु अनियतपरिमाणे यजुः प्रयुक्तिः पूर्वपक्षे, सिद्धान्ते तु नियतपरिमाणस्येति । ननु ऋक्सामयोरिव यजुषां पाठबलात् परिमाणं ज्ञायत एवेति कथं पूर्वपक्ष इत्यत्राह छन्दोवशेनेति । गायत्र्यादिछन्दोवशेन ऋक्परिमाणं सुज्ञानम् । तथा छान्दसानां छन्दोगानामुपदेशेन सामपरिमाणमपि सुज्ञानं, यजुः परिमाणं तु एतदुपायद्वयासम्भवात् इयदेकं यजुरिति यजुष उपदेशाभावात् दुर्ज्ञानमित्यर्थः । ननु यथा ब्राह्मणवाक्येषु यावतः पदजातस्यैकप्रयोजनत्वमाकाङ्क्षादिकारणत्रयेण अन्योन्यान्विताभिधायित्वं तावदेकं वाक्यमिति ज्ञायते तथा यजुर्मन्त्रेष्वपि भवत्विति चोदयति नन्विति । मैवमिति । युक्तं ब्राह्मणे स्वतन्त्रार्थप्रतिपादकत्वात् यजुर्मन्त्रेषु नियोगपरतंत्रान्वितार्थाभिधायिषु तत एव प्रयोजनैक्यज्ञानं स्वातन्त्र्येण अन्यथा साकाङ्क्षत्वमात्रेणैकवाक्यत्वे स्योनं त इत्यादिमंत्रद्वयस्याप्येकवाक्यत्वापत्तेरित्यर्थः । ननु भवतु वितियोगतःप्रयोजनज्ञानं तत एव किमिति नेयत्तेत्यत्राह— विनियोगतश्चेति । न हि विनियोगादपि इयत्ताज्ञानं, अनुष्ठेयप्रकाशनसामर्थ्याद्धि विनियोगः । अतो विनियोगवत् यदेवानुष्ठेयप्रकाशकं पदं तस्यैव तत्प्रयोजनज्ञानं न पदान्तरस्यापि तस्य तत्प्रकाशकत्वाभावादित्यर्थः । ननु पदान्तरस्य साक्षात्प्रकाशकत्वाभावेपि प्रकाशानुग्राहकतया तत्प्रयोजनतया ज्ञानमस्त्वित्यत्राह— तदतिरिक्तेति । प्रकाशकेतरपदानां कियतां तदनुग्राहकतया तत्प्रयोजनमिति ज्ञातुं न

1. पदार्थस्यैव ।

तत्प्रयोजनमिति दुरवगमम्। यत्रापि वचनादिषे त्वेति विनियोगात् प्रयोजनज्ञानं तत्रापि न, वाक्यस्य पदस्य वा विनियोगात् प्राक् अर्थानवगमात्। अर्थविच्छेदाधीना हि पदवाक्य[1]त्वावगतिः। इतिशब्दाच्च सन्निहितवर्णमात्रस्यैव विनियोगः, वर्णस्य च कियदनुगृहीतस्य प्रकाशकत्वमिति अज्ञानात्। अतो न यजुः परिमाणनिश्चय इति पूर्वः पक्षः। यत्र विनियो-

शक्यते प्रश्लिष्टपाठादित्यर्थः। ननु भवतु लिङ्गविनियोज्येषु वाक्येष्वियत्तादुर्ज्ञानत्वावगतिः, इषेत्वेति शाखामच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टि इत्यादिवचनविनियोज्येषु इतिशब्देन यस्य करणताऽवगता तावन्मात्रस्यैव विनियोगात् परिमाणधीरस्त्येवेत्यत्राह—यत्रापीति। सत्यमेवं तथापि न वाक्यस्य पदस्य वा प्रयोजनज्ञानं कुत इत्यत्राह—विनियोगादिति। ननु माभूत विनियोगात्पूर्वमर्थावगतिः ततः किं तत्राह—अर्थेति। वर्णानां चार्थविच्छेदाधीनत्वात् पदवाक्यत्वावगतेः विनियोगात् प्राक् अर्थविच्छेदाभावेन पदवाक्यत्वाज्ञाने तयोर्न प्रयोजनावगतिरित्यर्थः। ननु इतिशब्दात् पूर्वस्य करणत्वसिद्धिरिति यत्पदसमूहात्पर इतिशब्दः श्रुतः तस्य करणतया विनियोगात् तावत एकप्रयोजनवत्तयैकवाक्यतेत्यत्राह—इतिशब्दादिति। यद्यपीतिशब्दात् करणतया विनियोगः तथापि सन्निहितवर्णमात्रस्यैव स्यात् न तु ततः पूर्वेषां वर्णानामपीति। न हि गांदण्डेनेति विभक्तिः गोः करणतामाह। ननु वर्णमात्रमनुष्ठेयप्रकाशनलक्षणदृष्टकार्यासमर्थमिति न तन्मात्रस्येतिशब्दाद्विनियोगः। किन्तु वर्णान्तरानुगृहीतस्यैव। अन्यथा विनियोगस्यादृष्टार्थतापत्तेः इत्यत्राह—वर्णस्येति। सत्यं वर्णान्तरानुगृहीतस्य वर्णस्य प्रकाशकत्वं तथापि कियदनुगृहीतस्येति अज्ञानान्न विनियोगाद्यजुःपरिमाणनिश्चय इत्यर्थः। ननु निर्वपामीति तावत्पदमनुष्ठेये निर्वापेऽभिधायकतया लिङ्गाद्विनियुक्तं न चैकं पदमन्वितमभिधत्ते इति पदान्तरापेक्षा अतो यावत्पदानन्तरमिति शब्दः तावतोपि विनियोगात् तावदेकं यजुरिति सुज्ञानमेवेत्यत्राह—इतिपूर्वपक्ष इति।

सत्यमेवं तथापि पदद्वयस्यैव विनियोगः स्यात् न पदसमूहस्येति न स्वाभिमतं यजुरित्यर्थः राद्धान्तमाह—यत्रेति। मन्त्रपदानि तावत् समाम्नानोपस्थितानि ग्राहकेण स्वैदमर्थ्येन गृहीतानि। तेषां च किंद्वारा ग्राहकार्थता इत्यपेक्षायां लिङ्गाद्यत्रानुष्ठेयप्रकाशकतया विनियोगः तत्प्रकाशनं तत्र निर्वपामीति प्रयोजनपरपदस्य नियोगीयनिर्वापप्रकाशकत्वेन विनियोगेन सवितुः प्रसव इत्यादिपदानां किं प्रयोजनान्तरं तद्द्वारकं पदान्तरं च कल्प्यतां किं वा विशेषणोपनयनद्वारा निर्वापप्रकाशकतयैव विनियोग आश्रीयतामिति चिन्तायां क्लृप्तस्यैव विनियोगे

१, B त्वानवगतेः।

गस्तत्प्रकाशने यावतामन्वयसामर्थ्यं, विभज्यमानत्वे चानुष्ठेयान्तराप्रकाशनादवगतनियोगार्थत्वनिर्वाहाय साकाङ्क्षत्वं तावदेकप्रयोजनमेकं वाक्यं एकं यजुरिति सिद्धान्तः । विभज्यमानसाकाङ्क्षाणाञ्च गुणपदानां परस्परानन्वितार्थत्वेऽपि प्रयोजनपदार्थान्वितार्थतया वाक्यैक्यम् । तस्य सकलगुणपदार्थैस्तन्त्रेणान्वयान्न पदावृत्तिदोषः । शेषं सुगमम् ।

॥ १५ ॥ समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

यत्र यजुष्षु अनुष्ठेयप्रकाशकपदं न श्रूयते न तत्र विनियोगतः

---

सम्भवति कल्पनाया अन्याय्यत्वात् यावतां पदानां विशेषणोपनायकतया निर्वपामीत्यादिप्रयोजनवाचिपदान्वयसामर्थ्यं ततो विभज्यमानत्वे च अनुष्ठेयान्तराप्रकाशनात् अवगतनियोगार्थत्वनिर्वाहाय साकाङ्क्षता तावदेकप्रयोजनं एकं वाक्यमित्यर्थः । ननु यजुः परिमाणचिन्तायां यजुरेकत्वे वक्तव्ये सूत्रे एकवाक्यत्वमात्रं किमित्युक्तमित्यत्राह—एकं यजुरिति । यजुरेकत्वपरैव सूत्रे एकवाक्यत्वोक्तिः ननु मन्त्रपदानामेकप्रयोजनतया एकवाक्यत्वे ज्ञाते तावतां लिङ्गवाक्याभ्यां विनियोगः । विनियोगाच्चैकवाक्यत्वमिति अन्योन्याश्रयान्न सिद्धान्तसिद्धिरित्यत्राह—इति राद्धान्त इति ।

अयं भावः—यद्यप्यध्ययनसमये नार्थप्रतिपादनयोग्यता मन्त्रपदानां तथापि तद्योग्यतया विमर्शादेकवाक्यत्वयोग्यताविमर्शः । तावन्मात्रेण तत्र विनियोगादेकवाक्यतानिश्चय इति न सङ्कटं किञ्चिदिति । ननु प्रयोजनपदव्यतिरिक्तपदानां कारकतया नान्योन्यान्वययोग्यता । किन्तु प्रयोजनरूपक्रियान्वयितैव । अतो यद्यपि नान्योन्यान्वयबहुत्वाधीनवाक्यभेददोषोऽस्ति तथापि प्रयोजनपदस्य सकलगुणपदैः भेदेनान्वये पदावृत्तिलक्षणो वाक्यभेदः स्यादित्यत्राह—विभज्यमानेति । सत्यमेवं प्रयोजनपदस्य तु तन्त्रेण सकलगुणपदैः सहान्वयान्न पदावृत्तिः । एवं च सूत्रस्थमर्थपदं प्रयोजनपरमेव नाभिधेयपरमित्यर्थः । ननु अर्थैकत्वात्, विभागे साकाङ्क्षं इति च पदद्वयं किमर्थं सूत्रितमित्यत्राह—शेषमिति । उभयसूत्रणप्रयोजनं भाष्य एव सुगमम् । भगो वां विभजतु पूषा वां विभजतु अर्यमा वां विभजतु इत्यादिषु विभागरूपार्थैक्येपि विभज्यमाने साकाङ्क्षत्वाभावान्नैकवाक्यता । स्योनं त इत्यस्मिन् मन्त्रे तु तस्मिन्नित्यादिना पूर्वपरामर्शनात् साकाङ्क्षत्वेपि अर्थैक्याभावात् नैकवाक्यतेत्येवं उभयं सूत्रितमित्यर्थः ।

॥ १५ ॥ समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

इषे त्वोर्जेत्वेति किमेकं यजुरुत भिन्नमिति, तथा आयुर्यज्ञेन कल्पतां प्राणो

परिमाणज्ञानं, किन्तु यजुष्षु प्रश्लिष्टपाठात् समभिव्याहारादेकवाक्यत्वप्रतीतिरनुग्राह्येतापेत्वेत्यस्य ऊर्जेत्वेत्येतत्सहितस्य छेदने विनियोगो युक्तः । छेदनप्रकाशकञ्च पदं मिलितयोः कल्प्यम् । तथाऽनुमार्जनप्रकाशकं च मिलितयोः । अतो मिलितं यजुः । यदा च च्छेदने प्रयुज्यते, तदा कल्पितमनुमार्जनपदं छेदनप्रयोगे छेदनगुणपरम् । तथाऽनुमार्जनप्रयोगे छेदनपदमनुमार्जनगुणपरम् । एतच्च यजुरेकत्वानुसारेण विनियोगबलेन

---

यज्ञेन कल्पतां इति च किमेकं यजुः उत भिन्नमिति चिन्ता । प्रयोजनं उभयत्र ऐक्ये कृत्स्नं प्रयोज्यं भेदे तु भेदेनैवेति । तत्रावान्तरसङ्गतिं वदन् पूर्वपक्षमाह—यत्र यजुष्ष्विति । युक्तं पूर्वत्र प्रयोजनवाचिपदभेदे पृथक् विनियोगाद्वाक्यभेदः इति । यत्र यजुषि प्रयोजनवाचिपदं न श्रूयते तत्र लिङ्गात् पृथक् विनियोगाभावात न वाक्यभेद इति न विनियोगतः परिमाणज्ञानम् । कुतस्तर्हि तज्ज्ञानमित्यत्राह—किन्त्विति । यजुषः प्रश्लिष्टपाठावगतैकवाक्यताबलात् इषेत्वेत्येतस्य ऊर्जेत्वेत्येतत्सहितस्यैव छेदने विनियोगः । तथा ऊर्जेत्वेत्येतस्य इषेत्वे.येतत्सहितस्यैवानुमार्जने । अतो न वाचनिकविनियोगविरोध इत्यर्थः । ननु मन्त्रे छेदनानुमार्जनरूपप्रयोजनाकाङ्क्षितपदाश्रवणात् कथं तत्प्रकाशकतया विनियोगः इत्यत्राह छेदनेति । कारकपदमात्रश्रवणे क्रियापदशून्यस्य मन्त्रस्याप्रतिपादकत्वात् विनियोजकवाक्यपर्यालोचनया छिनद्मीति छेदनप्रकाशकपदं मिलितयोरुभयोः प्रयोजनतया कल्प्यम् । तथा अनुमार्ज्मीत्यनुमार्जनप्रकाशकपदम् । न च इषेत्वोर्जेत्वेति मिलितस्य प्रयोजनाकाङ्क्षितयाएकमेव पदमध्याहार्यम् छिनद्मि इति वा, अनुमार्ज्मि इति वा । प्रथमावगतैकवाक्यत्वानुरोधात् ततः किमित्युभयपदाध्याहार इति नियोगगृहीते इषेत्वोर्जेत्वेति मन्त्रकारकभूतभिन्नत्वेतिपदयु।ते भेदेनैव क्रियान्वयो युक्तः । अतथात्वे सति आहेति नियोगानन्वयी स्यात् । अतो विनियोगवाक्यबलात् छिनद्मि अनुमार्ज्मि इति पदमध्याहार्यम् । न पुनरेकं नापि क्रियान्तरपदम् । तच्च पदं ऊहितपदवत् अमन्त्रभूतमेव मन्त्रानुग्राहकमित्यर्थः । अत इति निगमनम् ।

ननु पदद्वयाध्याहारे यदा छेदने मन्त्रस्य प्रयोगः तदा अनुमार्जनपदं कथमन्वीयते अनुमार्जने वा छेदनपदमित्यत्राह यदा चेति । अन्यतरप्रयोगे अन्यतरपदं प्रशंसाप्रयोजकं तद्गुणकथनपरमित्यर्थः । ननु कथं गुणप्रधानभावकल्पनास्वीकार इत्यत्राह—एतच्चेति । मन्त्रस्य निरूढव्यपेक्षस्य तादर्थ्यमत्रपर्यवसायिनः पश्चाद्भाविविनियोगस्य प्रथमभाविप्रश्लिष्टपाठावगतयजुरेकत्वानुसारेण वर्णना न्याय्येति गुणप्रधानभावकल्पनास्वीकार इत्यर्थः । ननु विनियोजकवाक्ये इषेत्वेत्येतावन्मात्रस्य छेदने विनियोगावगतेः तावन्मात्रमेकं यजुरित्यत्राह—तथेति । इषेत्वेति छिन्न·

स्वीकृतम्। तथा इषेत्वेति प्रतीकेन मिलितलक्षणापि स्वीकृता ऋचामिव नानार्थत्वम्।

ननु 'त्वे'ति शाखावचनं शाखाच्छेदनानुमार्जनयोः प्रधानं; प्रधानपदाभ्यासे च मन्त्रभेदः, विभागमन्त्रवत्[1]; मैवम्, न मन्त्राभिधेया शाखा, तत्र मन्त्राविनियोगात्। अतः छेदनविशेषणं शाखेति कथं मन्त्रभेदः। तथा क्लृप्त्युदाहरणे प्रश्लिष्टपठितैकयजुष्ट्वानुरोधात् क्लृप्तिषु मिलिता-

---

त्वेत्यादिभूतेन प्रतीकेनावयवेन समुदायलक्षणा। ऊर्जेत्वेत्यन्तभूतेन प्रतीकेन समुदायलक्षणा। अतो न तद्विनियोगविरोध इत्यर्थः। ननु एकस्यैव मन्त्रपदस्य कदाचित् प्रधानभूतार्थपरत्वं कदाचित् गुणभूतार्थपरत्वमिति वैरूप्यं स्यादित्याशङ्क्य दृष्टान्तेनोपपादयति - ऋचामिवेति। विनियोगाधीनत्वान्मन्त्राभिधानस्य यथा नानाकार्येषु विनियोज्यमानानामृचां कदाचिद्यथाश्रुतार्थपरत्वं विनियोगबलादङ्गीक्रियते तथा अत्रापि नानार्थत्वेन विनियोगबलाद्गुणप्रधानभावाङ्गीकार इत्यर्थः।

ननु इषेत्वेत्यादौ त्वेतिशब्दः शाखावाची शाखा छेदनानुमार्जनयोः प्रधानभूतेति प्रधानभूताभ्यासात् "पूषा वां विभजतु" इत्यादिविभागमन्त्रवत् भेद एव युक्त इति चोदयति—नन्विति। मैवमिति। स्यादेतदेवं यदि मन्त्रप्रकाश्यतया शाखा अभिधेयाः न त्वेवं मन्त्रस्य तत्र विनियोगाभावात्। मन्त्रो हि छेदने विनियुक्तः। अतः छेदनविशेषणं त्वेतिशब्दाभिधेया शाखा। न च छेद्यतया प्रधानभूता शाखा कथं छेदनविशेषणमिति वाच्यम्। राजपुरुषवत् प्राधान्याहानादेव विशेष्यधीरञ्जनादित्यर्थः। नन्वेवमपि शाखायाः प्रधानभूतत्वात् प्रधानस्य प्रयोजनत्वात् तद्भेदे मन्त्रभेद एव युक्तः इत्यत्राह—कथमिति। शाखा हि छेद्यतया प्रधानं न प्रकाश्यतया प्रकाश्येन प्रयोजनेन प्रयोजनवतो मन्त्रस्य भेदो न प्रधानमात्रेणेति कथं मन्त्रभेद इत्यर्थः। आयुर्यज्ञेन कल्पतामिति क्लृप्त्युदाहरणे पूर्वपक्षमाह—अथेति। प्रथमं प्रश्लिष्टपाठावगतैकवाक्यतानुरोधात् तत्रापि एकयजुष्ट्वमेव युक्तमित्यर्थः। ननु कल्पतामित्यस्य विभागमन्त्रवद्भेद एव युक्त इत्यत्राह—क्लृप्तिष्विति। युक्तं विभागे तस्य नियोगसम्बन्धितया प्रयोजनत्वेन प्रकाश्यत्वात्। क्लृप्तीनां पुनः प्रयोजनत्वेनानाम्नानात् तास्वदृष्टं प्रयोजनं प्रकाशनेन कल्प्यम्। ननु क्लृप्त्यर्थप्रकाशनेनादृष्टं कल्प्यम्। तच्च प्रतिकल्पतां पदं भेदेनेत्यदृष्टकल्पनमपि

---

1. B वाक्यवत्

स्वैकमदृष्टं कल्प्यम्। ननु क्लृप्तीर्वाचयतीति बहुत्वविनियोगो न स्यात्; मैवं, एकवाक्यत्वेऽपि कल्पतामित्यभ्यासापेक्षं बहुत्वं अविवक्षितं वा। अतः प्रश्लिष्टपाठवशेन यजुः परिमाणमिति पूर्वः पक्षः।

इषेत्वेत्येतावन्मात्रस्य श्रुत्या विनियोगावगमादेकप्रयोजनम्। अन्यथा प्रतीके लक्षणा स्यात्। न गुणप्रधानकल्पनया च विनियोगः छेदनानुमार्जनयोः स्यात्। [1]प्रश्लिष्टपाठमात्रन्तु विनियोगात् स्वीकृतं न

भेदेनैव युक्तमित्यत्राह—मिलितास्विति। सत्यमेवं तथापि कल्पनागौरवपरिहारायानेकक्लृप्त्यर्थतावशात् मिलितस्यैकमदृष्टं कल्प्यम्। न च वचन एव शब्दस्योपयोगात् किमर्थप्रकाशनेनेति वाच्यम्। यतोऽवच्छेदकतयाऽर्थो ऽप्ययमङ्गीकार्यः। अन्यथा आयुर्यज्ञेन कल्पतामिति क्लृप्तीर्यजमानं वाचयतीत्यव्यवहितान्त्यवर्णमात्रविनियोगापत्तेः। तस्मादविवक्षितपदार्थावच्छिन्नक्लृप्तोच्चारणाभ्यासादेवादृष्टं कल्प्यमित्यर्थः। ननु क्लृप्तीर्वाचयतीति मन्त्रबहुत्वविनियोगबलात् मन्त्रभेद एव युक्त इति चोदयति—नन्विति। मैवमिति। प्रथमावगतैकवाक्यत्वबलात् बहुत्वविनियोगोऽभ्यासापेक्ष एव प्रयाजैकादशत्ववत्। पृष्ठशमनीयेन यजेरन्नितिवदविवक्षितं वा बहुत्वम्। अयं च प्रौढवादः। नन्वेवमुदाहरणद्वयेपि पूर्वपक्षप्रकारभेदादधिकरणभेदः स्यादित्यत्राह—अत इति। प्रथमावगतप्रश्लिष्टपाठावगतैकवाक्यत्वबलादेव यजुः परिमाणं ज्ञातमिति पूर्वपक्ष उभयत्रापि क्रम इत्यैकाधिकरण्यमित्यर्थः।

राद्धान्तमाह—इषेत्वेत्येतावन्मात्रस्येति। विनियोगववाक्येन इषेत्वेत्येतावन्मात्रस्यैव श्रुत्या मुख्यवृत्त्या करणतया विनियोगावगमात् तावन्मात्रस्यैकप्रयोजनत्वावगतिरिति तावन्मात्रमेवैकं यजुः न तूर्जेत्वेत्येतत्सहितं तस्य विनियोगतः तदन्यप्रयोजनकत्वात्। न च यथा विभक्तिः सन्निहितप्रातिपदिकार्थगतकरणत्वमाह तद्वदितिशब्दोऽपि सन्निहितपदस्यैवेति वाच्यम्। यतः इतिशब्दो वाक्यार्थस्यापि करणतामाह। विभक्तिस्तु प्रातिपदिकार्थस्यैव। तस्याः प्रतिपदिकार्थगतस्वार्थाभिधाननियमादेवमेव वृद्धव्यवहारे व्युत्पत्तेरित्यर्थः। विपक्षे दोषमाह—प्रतीक इति। प्रतीकत्वाङ्गीकारे हि अवयवेन समुदायेपि लक्षणा स्यात्। तथा छेदनानुमार्जनपदयोः मन्त्रस्थयोरध्याहृतयोः गुणप्रधानार्थपरत्वकल्पनया विनियोगः स्यात्। तच्चैतदुभयं न युक्तमित्यर्थः। ननु प्रश्लिष्टपाठात्प्रथमावगतैकवाक्यत्व-

१. A प्रश्लेषपाठ

प्रयोजनाय प्रभवतीति । यथाविनियोगं भेदेनैवेषेत्वेत्येतद्युक्तम् । तथा क्लृप्तिबहुत्वविनियोगात् पृथक्त्वं नाभ्यासतः । अतोऽत्रापि प्रतिक्लृप्ति यजुर्भेदो विनियोगत इति राद्धान्तः ।

## ॥१६॥ अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥४८॥

विनियोगावगतप्रयोजनान्वयसामर्थ्यतः पूर्वतरत्र यजुः परिमाणं

---

धोबाधः स्यादित्यत्राह—प्रश्लिष्टेति । विनियोगाधीनत्वान्मन्त्रार्थावगतेः प्रथमतरमपि विनियोगात्स्वीकृतं प्रश्लिष्टपाठमात्रं न प्रयोजनज्ञानाय समर्थमित्यध्ययनमात्रोपयोग्येव न यजुः परिमाणज्ञानोपयोगीत्यर्थः । कुतः पुनरियत्ताज्ञानमित्यत्राह—यथाविनियोगमिति । विनियोगानुसारिण्येव यजुरियत्ताज्ञानमिति इषेत्वेत्येतदभेदेनैकं यजुर्युक्तं न पुनरूर्जेत्वेत्येतत्सहितमित्यर्थः । तथा क्लृप्त्युदाहरणेपि राद्धान्तमाह—तथेति । स्वरूपपृथक्त्वादेव बहुत्वान्वयः स्वरसतो नाभ्यासापेक्षयेति क्लृप्तीर्वाचयतीतिवत् बहुत्वविनियोगबलात् मन्त्रपृथक्त्वमेवयुक्तम् । प्रयाजैकादशत्वादौ तु अगत्या अभ्यासापेक्षा । इह त्वस्तिगतिः मन्त्रभेद इत्यर्थः । तदेवं विनियोगत एवात्रापि भिन्नमन्त्रत्वात् राद्धान्तइत्यतोऽप्येकाधिकरणमिति सूचयन्नुपसंहरति—अत इति ।

विवरणे तु वस्तुबलात् पूर्वपक्षः अन्यथा मिलितयोः छेदने विनियोगः छिनद्मीत्येतत्पदमध्याहार्यम् । तत्र इषेत्वोर्जेत्वेत्युभयोरपि कारकपदत्वात् क्रियापेक्षायामगृह्यमाणविशेषतया उभयान्वयः । तथाऽनुमार्जने अनुमार्ज्मीति । अतोऽत्र मते पूर्वपक्षे छिनद्मीत्येतत्पदमध्याहार्यम् अनुमार्ज्मीत्येकत्र न प्रयोज्यम् । राद्धान्ते तु यद्यपि क्रियाकाङ्क्षायां विशेषानवगमः विनियोगे तु विशेषोऽवगम्यत एव । इषेत्वेति छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीति भेदेन विनियोगे यथाविनियोगं भेदेन क्रियान्वय इति भेदेनैव क्रियाध्याहार इति । एतच्चानास्थया भवनाथेनोक्तम् ।

## ॥ १६ ॥ अनुषङ्गो वाक्यसमाप्तिः ॥ ४७ ॥

या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचोअपावधीं स्वाहा । याते अग्ने रजाशया इत्युपसत्सु श्रुतम् । तत्र बहूनि वाक्यानि शेषीणि साकाङ्क्षाणि । एकश्च वाक्यशेषः तनूर्वर्षिष्ठेति । तत्र चिन्ता—किं यस्यानन्तरं वाक्यशेषः श्रुतः तेनैव सम्बध्यते उत यावद्भिराकाङ्क्ष्यते तैस्सर्वैरिति । तत्रावान्तरसङ्गतिं वदन् कार्यसन्देहमाह—विनियोगेति । पूर्वस्मिन्नधिकरणे केवल-

निरूपितम्। पूर्वत्र तु केवलं विनियोगत, संप्रति विनियुक्तस्यैव यजुषः साकाङ्क्षस्य किमध्याहारतः पूरणमनुषङ्गतो वेति चिन्ता पूर्ववत् सङ्गता। आकाङ्क्षासन्निधियोग्यतानां लोके अन्वयकारणत्वं दृष्टम्। इह तु वाक्यशेषं प्रति सर्वेषामाकाङ्क्षा योग्यता चास्ति। सन्निधिस्तु अनन्तरस्यैव शेषिण इति न तन्त्रता तनूर्वर्षिष्ठेति वाक्यशेषस्येति लोकावगताध्याहारेण पूरणं युक्तम्।

ननु लोके अनुषङ्गोऽपि दृश्यते—यथा नरमानय खरं तुरङ्गमं इति। वेदेऽपि वसन्ताय कपिञ्जलानालभेतेत्यादौ। मैवम्। अध्याहारोऽसौ। आकाङ्क्षापूरणायाध्याहारे कर्तव्ये अवगतपदस्वरूपमेव लाघवात् कल्प्यत

---

विनियोगाद्यजुरियत्ता। पूर्वतरे तु विनियोगावगतप्रयोजनान्वयसामर्थ्यात्। इह तु ज्ञातपरिमाणस्यैव यजुषः साकाङ्क्षस्य किमध्याहारतः पूरणं उतानुषङ्गत इति चिन्तिते पूर्वाधिकरणवदेव इदमपि प्रसक्तानुप्रसक्त्या सङ्गतमित्यर्थः।

पूर्वपक्षमाह—आकाङ्क्षेति। आकाङ्क्षासन्निधियोग्यतानां हि अन्वयकारणत्वं लोके व्युत्पन्नम्। ततः किमित्यत्राह—इह त्विति। इह त्वाकाङ्क्षायोग्यते सर्वेषां वाक्यानामविशिष्टे तथापि सन्निधेरनन्तरस्याव्यवहितस्यैव शेषिण इत्यनन्तरेणैव शेषेणास्य सम्बन्धो न व्यवहितेन अन्वयसामग्रीपौष्कल्याभावादिति न तत्तन्त्रता। अनुषङ्गो न वाक्यशेषस्येत्यर्थः। नन्वेवं सति इतरस्याकाङ्क्षापरिपूरकत्वाभावानभिधायकत्वमेव स्यादित्यनेकप्रतीत्यनुकूलानेकार्थान्वयतात्पर्यायत्तः एकरूपानुषङ्गोऽङ्गीक्रियतामित्यत्राह—लोकेति। द्वारं द्वारमित्यादौ लोकव्युत्पन्नतया क्लृप्तशक्तेरध्याहारादेवेतराकाङ्क्षापरिपूरणं युक्तं न पुनरनुषङ्गे विधान्तरमव्युत्पन्नं कल्प्यम्। अन्यथा सकृदुच्चरितस्यैकस्यानेकान्वये तात्पर्यं अनेकधा च ग्राहकग्रहणं अनेकधा च साधनत्वं च स्यादित्यर्थः। नन्वनुषङ्गो बहुशो लोकवेदयोर्दृश्यत इति चोदयति—नन्विति मैवमिति। नरमानयेत्यादौ लोके वसन्ताय कपिञ्जलानालभत इत्यादौ वेदे चाकाङ्क्षापरिपूरणाय अध्याहारे कार्ये अप्रतीतपदान्तराध्याहारात् योग्यप्रतीताध्याहारो लघुरिति लाघवादवगतस्वरूपे कल्प्यमानेऽनषङ्गभ्रमो नानुषङ्ग इत्यर्थः।

नन्वेवमत्राप्यव्यवहितस्वरूपतनूर्वर्षिष्ठेत्येवमादेरेवाध्याहारे न कोऽपि

इत्यनुषङ्गभ्रमः। इह तु तनूर्वर्षिष्ठेत्यादि गुरुतरं कल्प्यम्।

केचित्तु समादधति—तत्र क्रियाकारकयोः परस्पराकाङ्क्षत्वादेकस्य सन्निधिरवैशेषिको हेतुरित्यनुषङ्गो युक्तः। तच्चिन्त्यम्। साकाङ्क्षाच्चेत् सन्निधेरविशिष्टता इहापि स्यात्। उभयाकाङ्क्षा च वैधर्म्यमात्रम्। अतो यथोक्त एवानुषङ्गभ्रम इति पूर्वः पक्षः।

सत्यं सन्निधौ सत्यन्वयः बुद्धिसन्निधिस्तु सन्निधिः। स च सजातीयव्यवधाने न स्यात्। न च शेषिणः शेषपदं सजातीयम्। एतच्च लोकेऽव-

---

विशेषोऽनुषङ्गाध्याहारयोः स्यादित्यत्राह—इह त्विति। गुरुतरावगतकल्पनातो लघुतरमेकमेव योग्यं पदमनवगतमपि कल्प्यमित्यर्थः।

अत्र प्रकाशे—न युक्तो नरमानय वसन्ताय कपिञ्जलानालभत इत्यादावनुषङ्गः। क्रियाकारकयोरन्योन्याकाङ्क्षित्वादेकस्य सन्निधेरवैशेषिको हेतुरित्युक्तत्वात्। इह तु तनूर्वर्षिष्ठेति नावश्यं विशेषणापेक्षेति नैकस्य सन्निधिरवशेषिक इति शक्यते वक्तुमित्युक्तम्। तदाह—केचित्त्विति। तच्चिन्त्यमिति। आकाङ्क्षामात्रादेवैकस्य सन्निधिरवैशेषिकः आनन्तर्यमचोदनेत्यत्र तथैवोक्तेः नोभयाकाङ्क्षा अतस्तस्या वैधर्म्यमात्रत्वात् अप्रयोजकत्वादिति यावत्। कथं तर्हि लोकवेदयोरनुषङ्गधीनिर्वाह इत्यत्राह—अत इति। ननु त्वदुक्तरीत्यापि अनुषङ्गभ्रमोऽनुपपन्नः सत्यधीपूर्वकत्वाद्भ्रमस्य। अस्मिन् पूर्वपक्षे न क्वाप्यनुषङ्गस्य सत्यता सर्वत्र नुषङ्गमात्राक्षेपादित्यत्राह—इति पूर्वपक्ष इति। सर्वथा तावदनुषङ्गो न युक्तः किन्तु अध्याहार एवेत्यत्र पूर्वपक्षिणस्तात्पर्यं न पुनरनुषङ्गस्य भ्रमत्वनिर्वाहेपि। अद्वैतवादिनः प्रपञ्चभ्रमवत् कथञ्चिदुपपन्नोऽस्तु भावा, न तत्रास्था। अस्तु वा लोके नरमानयेति पुमभिप्रायवशादनुषङ्गः। वेदे तु नासौ युक्तः अपौरुषेयत्वात्। अध्याहारस्तु वेदे दृष्टः औपादानिकस्य सर्वस्य तथात्वात्। अतो लोकसिद्धानुषङ्गपूर्वको वसन्ताय कपिञ्जलानित्यादौ अनुषङ्गभ्रम इति भावः।

राद्धान्तमाह-सत्यमिति। नरमानय वसन्ताय कपिञ्जलानित्यादौ लोकवेदयोरपि परमार्थतोऽनुषङ्ग एव नानुषङ्गभ्रमः। तत्रानुषङ्गरूपेऽन्वये यद्यपि सन्निधेरपि हेतुत्वं तथापि बुद्धिसन्निधिरेवान्वयहेतुः नोच्चारणसन्निधिः। ततः किमित्यत्राह—न चेति। बुद्धेस्सन्निधिः सजातीयव्यवधान एव न भवति न पुनर्विजातीयव्यवधानेऽपीत्यर्थः। भवत्वेवं तथापि कथमत्र सजातीयव्यवधानमित्यत्राह—न चेति न हि शेषिपदं शेषपदस्य सजातीयं भवति तत्सम्बन्धित्वात्। तेन यद्यपि शेषिणोऽन्योन्यं सजातीयाः तथापि सर्वेषां शेषसम्बन्धित्वाविशेषात् तत्सम्बन्धिपदव्यव-

गतम् । एकस्य क्रियापदस्यानेककारकव्यवहितस्य सर्वकारकपदार्थान्वय-दर्शनादित्यनुषङ्ग एव नानुषङ्गभ्रमः एवमिहापीति राद्धान्तः ।

पुनरनुषङ्गचिन्ता—निराकाङ्क्षेषु शेषिष्वेकस्य शेषस्य साकाङ्क्षस्य

---

धानेपि तस्य तस्य बुद्धिसन्निधिरस्त्येव । अतो द्वयोः सजातीयव्यवधाने सन्निधिर्न भवति । येनैकस्याकाङ्क्षोदेरविशेषात् सर्वान्वय एवेत्यर्थः । ननु बुद्धिसन्निधिरे-वान्विताभिधाने प्रयोजकः नोच्चारणसन्निधिरिति कुतोऽवगतमित्यत्राह-एतच्चेति । लोके वृद्धव्यवहारे बुद्धिसन्निधिरेवान्वयोपाधितयाऽवगतः न पदसन्निधिः । अव्यु-त्पत्तेरित्यर्थः । तत्र हेतुः एकस्येति । देवदत्त आनय गां शुक्लां दण्डेन वनात् इति लोके एकस्य क्रियापदस्यानेकपदव्यवहितस्यापि सर्वकारकपदार्थान्वयदर्शनात् कारकपदस्य सजातीयत्वविरहात् वेदेपि अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यत्र क्रयस्य सर्वसम्बन्धः क्रियापदान्तरस्य मध्ये सजातीयस्याभावात । अतो लोकवेदयोरनुषङ्ग एव, नानुषङ्गभ्रम इत्यर्थः । एवमन्यत्र साधितमनुषङ्ग-मुदाहृते विनियुक्तमन्त्रेऽतिदिशति—एवमिति । ननु अनुषङ्गरूपविधान्तरकल्पनातः क्लृप्तशक्तेरध्याहार एव युक्त इत्युक्तम् । तथा अनुषङ्गेऽङ्गीकृते एकस्य पदस्याने-कान्वयतात्पर्यं अनेकधा च ग्राहकसम्बन्धः नानासाधनत्वं च स्यादित्यत्राह—इति राद्धान्त इति । अयं भावः-अश्रुताध्याहारे हि धर्मिभूतपदान्तरकल्पना । अनुषङ्गे तु श्रुतस्यैव पदस्यान्यत्रान्वयतात्पर्यकल्पना धर्मिकल्पनातश्च वरं धर्मकल्पना । तथा पदान्तराध्याहारे अवगतबाधः । अनुषङ्गे तु तदनुरोधः अध्याहारे अमन्त्रेणै-वानुग्राहकेण मन्त्रकार्यरक्षणं, अनुषङ्गे तु मन्त्रेणैव । नहि मन्त्रेणैव मन्त्र-कार्यकरणे सम्भवति अमन्त्रेण तद्युक्तम् । एवं न्यायबलादनुषङ्गे स्थिते नाने-कान्वयतात्पर्यादिदोषाः । विचारप्रयोजनं च पूर्वपक्षे अध्याहृतपदस्यामन्त्रत्वात् तन्नाशे श्रौतमन्त्रनाशप्रायश्चित्तं न भवति । सिद्धान्ते तु अनुषंगपदस्य मन्त्रत्वात् तन्नाशे श्रौतं प्रायश्चित्तं भवति ।

## ॥ अनुषङ्गो वाक्यसमाप्तिः ॥

चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः इति ज्योतिष्टोमे श्रुतम् । तत्र शेषीणि पुनात्व-न्तानि निराकाङ्क्षाणि । शेषः पुनः अच्छिद्रेणेत्यादिः साकाङ्क्षः । तत्र चिन्ता स वाक्यशेषः किं अव्यवहितेनैव सम्बध्यते, उत सर्वैरिति । सङ्गतिः अस्य पूर्ववत् । प्रयोजनं च पूर्वपक्षे शेषस्यैकेन शेषिणा सहोच्चारणं सिद्धान्ते तु सर्वैरिति । ननु पूर्वाधिकरणन्यायादविशेषादाकाङ्क्षादेः अत्रापि सर्वान्वय एव युक्त इति केन विशेषेणेयं चिन्तेत्यत्राह—पुनरिति । विशेषमाह—निरिति । युक्तं पूर्वत्र सर्वान्वयित्वं

एकेनैव शेषिणान्वयो युक्तः, विशेषग्रहश्चानन्तर्यात् ।

ननु पुनात्वर्थान्वयो वाच्यः अच्छिद्रेण पवित्रेणेत्येवमादेः । एकश्चासौ पुनात्विति पदाभ्यासेऽपि । तदन्वये च सर्वान्वयः स्यात् । मैवम् । चित्पत्यादिपदार्थान्वयोऽपि तर्हि सर्वस्य स्यात् । अभ्यासविशेषोपहितेन पुनात्वित्यनेन चित्पत्यादेरन्वयात् न सर्वान्वय इति चेत्, वाक्यशेषेऽपि तुल्यमिति पूर्वः पक्षः ।

विनियोगतो हि नियोगीयपदार्थान्विताभिधानाद्यजुषः पुनात्वर्थस्य नियोगीयस्यैक्यात् तदन्वये सर्वान्वयो युक्तः ।

---

शेषिणां बहूनां साकाङ्क्षत्वात् । इह शेषिष्वनाकाङ्क्षेषु एकस्य शेषस्य साकाङ्क्षत्वात् शेष्याकाङ्क्षामुत्थाप्यैवान्वयो वाच्यः रक्तपटवत् । तत्र लाघवादेकस्य शेषिणः आकाङ्क्षामुत्थाप्य तेनैवान्वयो युक्तः तावता शेषाकाङ्क्षापरिपूर्तेर्न सर्वान्वये प्रमाणमस्तीति पूर्वपक्षे अधिकाशङ्केत्यर्थः । नन्वेवमपि आकाङ्क्षाकल्पनायां अगृह्यमाणविशेषत्वादेकस्यापि सा न स्यात् सर्वस्य वा स्यादित्यत्राह—विशेषेति । आनन्तर्यात् अव्यवहितसन्निधेः । ननु अच्छिद्रेणेत्यादौ वाक्यशेषस्य विनियोगगृहीतस्य नियोगसाधनसम्बन्धोऽपेक्षितः पवनं चात्र नियोगसाधनम् । तदन्वयश्च साक्षादत्र नास्ति तत्प्रकाशकत्वाभावात् । किन्तु तत्प्रकाशकपुनात्वित्येतद्विशेषणतया । अतः पुनात्वर्थान्वयोऽवश्यं वाच्यः । न च पुनात्वर्थ-पुनात्विति पदाभ्यासोऽपि एक एव तदन्वये च सर्वाभ्यासान्वयः स्यादिति चोदयति नन्विति । मैवमिति । तर्हि चित्पत्यादिपदार्थान्वयोऽपि सर्वाभ्यासेपि स्यादिति भावः । प्रतिबन्दिवैषम्यं शङ्कते —अभ्यासेति । यो यत्राभ्यासविशेषे चित्पत्यादिः श्रुतः प्रथमे द्वितीये तृतीये वा, स तदभ्यासविशेषोपहितेन पुनात्वित्यर्थेनान्वयो न सर्वेण । अन्यथा तत्तत्सम्बन्धिसमाम्नानवैयर्थ्यापत्तेरित्यर्थः । दूषयति —वाक्येति । वाक्यशेषस्यापि यदभ्याससन्निधावाम्नानं तद्वैयर्थ्यपरिहाराय तेनैवान्वयः स्यादिति सर्वं समानं स्यादित्यर्थः । अथ चित्पतिस्त्वेत्यादेः कर्तृकर्मकारकरूपस्य सन्निहितसकर्मकक्रियावाचिकर्तृसंख्यावाच्याख्यातान्तपुनात्वित्यभ्यासान्वयेन आकाङ्क्षापूर्तेः न सर्वान्वयाकाङ्क्षेति न सर्वान्वयो युक्त इत्यत्राह—इति पूर्वपच इति । वाक्यशेषस्यापि करणैकार्थस्य सन्निहितक्रियान्वयाभ्यासान्वयेनैवाकाङ्क्षापरिपूर्तेः न सर्वान्वयाकाङ्क्षेति न सर्वान्वयो युक्त इति सर्वं समानं अन्यत्राभिनिवेशादित्यर्थः ।

राद्धान्तमाह—विनियोगत इति । ज्योतिष्टोमप्रकरणाम्नातस्य अच्छिद्रेणे-

यत्तु चित्पत्यादेरपि तथा प्रसङ्ग इत्युक्तम्। तत्र ब्रूमः, पुनात्विति विभज्यमाननिराकाङ्क्षतया प्रत्यभ्यासं भिन्नानि वाक्यानि भेदेनैव प्रयोज्यानि। क्रियापदतया च प्रत्येकं कारकमाकाङ्क्षन्ति। तत्र पुनात्वित्यतः पूर्वं प्रत्येकं कर्तृकर्मरूपकारकपदद्वयं श्रुतं तत्तदन्वयेन[1] निराकाङ्क्षं वृत्तम्—यत्तु चरमं श्रुतं अच्छिद्रेण पवित्रेणेति करणकारकपदं

---

त्यादिवाक्यशेषरूपस्य तन्नियोगगृहीतस्य तदीयसाधनविशेषद्वारापेक्षायां त्रिभिः पवयतीत्यादिविनियोगतः नियोगीयपवयतीत्यादिपदार्थान्विताभिधानात् नियोगसाधनतारूपेण पवनार्थस्य सर्वाभ्यासेष्वेकत्वात तदन्वये सर्वान्वयो युक्त एव बुद्धिविच्छेदाभावात् न त्वभ्यासभेदेन भिन्नत्वमपि विवक्षणीयम्। ग्रहैकत्ववदित्यर्थः।

नन्वेवं चित्पत्यादेरपि तथा सर्वान्वयप्रसङ्गः इत्युक्तं प्रतिबन्दिदूषणमनुभाषते—यत्त्विति। तत्र ब्रूम इति। पुनात्वित्येतानि तावत् नियोगीयपवनप्रकाशनसमर्थानि विभज्यमाननिराकाङ्क्षतया प्रत्यभ्यासं भिन्नानि वाक्यानि त्रिभिः पवयतीति विनियोगबलात् भेदेनैव प्रयोक्तव्यानि। ततः किमित्यत्राह—क्रियेति। तेषां च क्रियापदत्वात् एकैकमन्विताभिधानाय कारकमाकाङ्क्षते। ततश्च किं तत्राह—तत्रेति। तत्र पुनात्विति सकर्मकक्रियावाचि कर्तृसङ्ख्यावाच्याख्यातान्तं पदं कर्तृकर्मकारकविशेषापेक्षम् स्वस्मात् पूर्वश्रुतेन निराकाङ्क्षं न तत्परमपेक्षते। एवं तृतीयाभ्यासपुनात्विति पदमपि। अतोऽन्विताभिधानसिद्ध्यर्थमपेक्षया कर्तृकर्मपदान्वयात् सन्निहितेनान्वयः। तत्क्रियाविशेषेष्वेव कर्तृकर्मणोरन्वयः न ग्राहकीयत्वेन सामान्यरूपेण। अन्यथा ग्राहकाकारेणान्वयाव्यवस्थाम्नानमभ्याससार्थकत्वं च न स्यात्। त्वेत्यावृत्तकर्मपदानन्वयश्च। कर्तृकर्मपदयोस्तु ग्राहकीयान्वयाकाङ्क्षा च विशेषान्वयेनापि शान्तैवेत्यर्थः। नन्वेवं वाक्यशेषवदस्यापि कारकार्थस्य सन्निहिताभ्यासविशेषोपहितक्रियान्वय एव स्यादित्यत्राह—यत्तु चरमेति। सत्यं वाक्यशेषः कारकपदं, किन्तु अच्छिद्रेण पवित्रेणेति करणकारकपदं चरमे श्रुतं च। तत्र प्रथमश्रुतेन कर्तृकर्मपदेनान्विताभिधाने निवृत्ते चरमश्रुतं करणपदं नान्विताभिधानार्थं पुनात्वित्यर्थमाकाङ्क्षते। किन्तु स्वनियोगार्थत्वनिर्वाहाय अनुष्ठेयरूपं ग्राहकीयमाकाङ्क्षते नाभ्यासविशेषभिन्नं रूपं कर्तृकर्मभ्यां नियोगसाधनरूपस्याविशेषितत्वात्। अतस्तद्रूपाविशेषात् सर्वान्वयः। अभ्याससार्थक-

---

१. B यैकनिराकाङ्क्षं तस्यानेककारकस्यानन्तर्यात् न तु तद्वाक्यशेषस्य विभज्यमानानि

तत्पुनात्वित्यर्थमेकमनुष्ठेयभेदरूपमाकाङ्क्षति। नाभ्यासभेदभिन्नरूपं अतः पुनात्वर्थमात्रान्वयिकरणसमर्पकं वाक्यशेषरूपं सर्वत्रेत्यनुसन्धेयम्। शेषं सुगमम्।

## ॥ १७ ॥ व्यवायान्नानुषज्येत ॥ ४९ ॥

केन तर्हि व्यवधाने नानुषङ्गः इति जिज्ञासिते प्रत्युदाहरणमात्रम्। यत्रासंबन्धिव्यवधानं तत्र शेषशेषिणोः बुद्धि[2]विच्छेदेन व्यवधानं तत्र

---

त्वादेः प्रथमप्रतीतकर्तृकर्मपदान्विताभिधानादेव सिद्धत्वादित्यर्थः। ननु प्रयुक्ताद्धि प्रतिपत्तिरिति नयात् चरमाभ्यस्तपुनातुपदं स्वसन्निहितकर्तृकर्मकरणान्वितमेव स्वार्थमभिधत्ते रक्तपटन्यायेन च आकाङ्क्षामुत्थाप्यैवान्वयः। तत्र लाघवादेकस्यैव तदुत्थापनं युक्तम्। अतः करणपदयुक्तमेव चरमं पुनातुपदमन्विताभिधायकं, अन्यथा अरुणया सोमं क्रीणातीति कर्मकरणान्वितक्रयाभिधानं न स्यादित्यत्राह– इत्यनुसन्धेयमिति। सत्यमेवं ब्राह्मणवाक्ये लोके च। मन्त्रपदानां तु नियोगगृहीतानां विनियोगपूर्वकमेवान्विताभिधानमिति ग्राहकीयरूपेणैव स्वतोऽन्विताभिधानम्। यत्र तु चित्पत्यादौ व्यवस्थाभ्याससमाम्नानानुपपत्त्यादिप्रबलविरोधः तत्रैव तदपोद्यते नान्यत्रापि। स्वतः प्राप्तपरित्यागायोगात्। न चैवमन्वये नानारूपतादोषः। सर्वत्रान्वयानां प्रतियोगिभेदेन नानारूपत्वादिति भावः। अत्र ग्रन्थे अधिकरणाक्षेप-समाधानसमये राद्धान्तैकदेशिनतोपन्यासः तन्निरसनं च तत्रैव व्यक्तम् तदाह– शेषमिति। ग्रन्थे प्रधानपदं विशेष्याभिप्रायम्। तदिहाख्यातं पूर्वत्र च तनूरिति।

॥ १७ ॥ व्यवायान्नानुषज्येत ॥ ४९ ॥

'सं ते वायुर्वातेन गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषा इति श्रुतम्। किमत्रानुषङ्गः संयज्ञपतिराशिषेति गच्छतामिति पदस्य उताध्याहार इति चिन्ता। तच्च पूर्वनयद्वयप्रत्युदाहरणमात्रकथनपरम् पूर्वसूत्रशेषभूतमिति। सूत्रव्यावर्त्यशङ्का-माह—केनेति। व्यावर्तयति—यत्रेति। यत्र सम्बन्धानर्हपदव्यवधानं यथा सं ते वायुर्वातेन गच्छताम् इति पदं संयजत्रैरङ्गानीत्यध्याहृतेन बहुवचनान्तेन गच्छन्ता-मिति पदेन सजातीयेन व्यवहितं तत्र शेषशेषिणोः बुद्धिविच्छेदरूपव्यवधान-मस्तीति संयज्ञपतिराशिषेत्यनेन न सम्बध्यते। कथं तर्हि क्रियापदाभावे अन्विता-भिधानशक्तिरित्यत्राह—तत्र चेति। सजातीयस्य गच्छतामिपदस्याध्याहार एव

---

१. V त्रान्वयि　　२. R विच्छेदो व्यवधानम्　　३. B नियोगकर्मणा।

चाध्याहार एव सजातीयस्य पदस्य, कल्पनालाघवात् ।

अत्र च पादे उपोद्घातचिन्ताप्रसङ्गात् मन्त्रभेदे निरूपिते साक्षात्सङ्गतः शास्त्रभेदोऽनन्तरं निरूप्यत इति सर्वं सुस्थम् ।

इति श्रीभवनाथमिश्रविरचिते नयविवेके
द्वितीयाध्यायस्य प्रथमः पादः ।

---

नानुषङ्गात् पूर्वपदं सम्बध्यते बुद्धिविच्छेदादित्यर्थः । अध्याहारेपि गच्छतां पदस्य अध्याहारो न पदान्तरस्येति कुतः तत्राह—कल्पनेति । प्रतीतसजातीयकल्पने कल्पनालाघवं हेतुरित्यर्थः । अत्र बुद्धिसमाधानार्थं वृत्तवर्तिष्यमाणपादार्थं भेदेन दर्शयति—अत्र पाद इति ।

इत्यात्रेय सुदर्शनाचार्यशिष्यस्य श्रीरङ्गनाथसूनोः वरदराजस्य कृतौ
मीमांसानयविवेकदीपिकायां द्वितीयाध्यायस्य
प्रथमः पादः ।

# नयविवेके द्वितीयाध्यायस्य

## द्वितीयः पादः

### शब्दान्तराधिकरणम्

॥ १ ॥ शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

---

द्वितीयः पादः ।

॥ १ ॥ शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

ज्योतिष्टोमे श्रुतम्—सोमेन यजेत दाक्षिणानि जुहोति आत्रेयाय हिरण्यं ददाति इति । तत्र चिन्ता किमेतेषामेकशास्त्रत्वं उतानेकशास्त्रत्वमिति । तदर्थमियं चिन्ता—किमनुबन्धभेदात् शास्त्रभेदो न सम्भवति उत सम्भवति इति । तदर्थमिदं चिन्ता किं—करणत्वातिरेकि विषयत्वं न संभवति उत भवतीति । अत्र भाष्ये नियोगभेदाभेदनिरूपणं तत्फलतया द्रष्टव्यम् । अत्र च पादे अनुबन्धभेदनिबन्धनशास्त्रभेदो व्युत्पाद्यः । साध्यभेदनिबन्धनशास्त्रभेदस्तु क्वचित् प्रासङ्गिकोऽवान्तरसङ्गतिबलात् क्वचित्तु आर्थश्च । आघाराग्निहोत्राधिकरणे पौर्णमास्यधिकरणे च । रथन्तरपादे च शास्त्रभेदापवादः प्रतिपाद्यः । शास्त्रभेदसाधनं तु क्वचित् प्रासङ्गिकं यथा प्रकरणान्तराधिकरणे । यावज्जीवपादे साध्यभेदनिबन्धनशास्त्रभेदः । भावार्थपादे तु तत्सर्वोपोद्घाततया विषयाधिष्ठाननिरूपणम् । अत एव पादानां प्रथमचरमभावश्च सिद्धः । एतच्च भवनायेन पूर्वपादान्ते सूचितम् । तत्र प्रथममभिधानान्तरप्रमाणकानुबन्धभेदात् शास्त्रभेदोऽत्राधिकरणे प्रतिपाद्यते । तस्य स्फुटत्वात् । नतु प्रमाणक्रमविवक्षया तस्यासम्भवादित्युक्तमाद्ये । अत्र ग्रन्थे शब्दान्तरे कर्मभेदः कृतानुबन्धत्वादिति सूत्रं व्याख्यातं—शब्दान्तरे शास्त्रान्तरे कर्मभेदः शास्त्रार्थीभूतनियोगभेद इति यावत् । तच्च शास्त्रान्तरत्वं अनुबन्धभेदात् । अयमर्थः—अनुबन्धभेदाच्छास्त्रभेदः शास्त्रभेदाच्छास्त्रार्थीभूतनियोगभेद इति ।

तदनुपपन्नम् । न हि अनुबन्धभेदात् किन्त्वपूर्वभेदात् शास्त्रत्वं शब्दस्यालौकिककार्यार्थत्वोपाधिकम् । अतस्तद्भेदादेव शास्त्रभेदः नान्यतः । अपूर्वं हि शास्त्रैकसमधिगतं तस्य च भेदः शास्त्रभेदादेव नान्यतः । तथा च शास्त्रभेदात् शास्त्रार्थभेद शास्त्रार्थभेदाच्छात्रभेद इति इतरेतराश्रयो दुर्वारः । न चानुबन्धभेदो नियोग-

अत्रेयं दर्शनस्थितिः—लिङादिस्तावत् कृतिसाध्यत्वरूपेणापूर्वे[1] प्रयुक्तो नापूर्वभेदप्रतिपत्तौ शक्तः। कृतिस्तु भव्यार्थं यागादिकं साक्षात्साधयति

भेदधीद्वारा शास्त्रभेदधीहेतुरिति वाच्यम्। नियोगभेदस्य स्वप्रतिपादकलिङादिभेदहेतुकतया अनुबन्धभूतयागादिभेदहेतुकत्वाभावात्।

किञ्च नियोगविषयत्वमनुबन्धत्वं, तद्भेदश्च प्रतियोगिभूतानुबध्यमाननियोगभेदादेव नान्यत इति अनुबन्धभेदानुबध्यमानभेदयोरपि इतरेतराश्रयता। तथा अपूर्वानुबन्धत्वं च शब्दैकसमधिगम्यं तद्भेदश्च शास्त्रभेदादवगम्यत इति शास्त्रभेदादनुबन्धभेदः ततश्च शास्त्रभेद इति इदमप्यन्योन्याश्रयत्वम्। अतोऽनेकदोषदुष्टत्वान्न गुरु दर्शनरीत्या सूत्रार्थो युक्तः। किन्तु यजति ददाति जुहोतीत्यादिवाचकशब्दभेदे यागादिकर्मभेदः कृतानुबन्धत्वात् वाच्यवाचकलक्षणसम्बन्धयोगित्वात् इत्येव सूत्रार्थोयुक्त इत्यत्राह—अत्रेति। यागादिकर्मस्वरूपस्य लोकसिद्धतया नाध्यायव्युत्पाद्यतेति लोकाप्रसिद्धस्यैव व्युत्पाद्यत्वात् तत्परतयैव गुरुणा यथोपवर्णितसूत्रार्थो युक्तः नान्यथा, तत्र यद्दूषणमुक्तं तत् गुरुदर्शनस्थित्यपरिज्ञाननिबन्धनम्। तद्दर्शनस्थितिश्च वक्ष्यमाणप्रकारेण। अनुबन्धभेदो नियोगभेदधीद्वारा शास्त्रभेदहेतुः शास्त्रभेदाच्च शास्त्रार्थभेद इति। तत्र वाचकलिङादिभेदादेवापूर्वभेदो नानुबन्धभेदादिति यदुक्तं तत्तावदयुक्तमित्याह—लिङादिस्तावदिति। आदिशब्दात् लोट् तव्यादि पञ्चमलकारग्रहणम्। लिङादिस्तावत् नापूर्वभेदप्रतिपत्तौ शक्तः गवाश्वादिशब्दवत्। स्वरूपभेदेपि स्वार्थे विलक्षणाकारेणाप्रवृत्तेः। किन्तु कृतिसाध्यताकारेणैकाकारेणापूर्वे प्रवृत्तिः। अतः लिङ्लोडादेः प्रवृत्तिनिमित्ताकारभेदाभावात् हस्तकरादिवत् पर्यायतैवेति न तद्भेदेनापूर्वभेदः। अत्र लिङादिरिति वदता लिङादेरेव निमित्ताकारभेद्यकार्याकारार्थता नियोगादिशब्दस्य तदधिष्ठानमात्रार्थता, तथैव व्युत्पत्तेः एकार्थत्वेपि प्रवृत्तिनिमित्तवैचित्र्यं आख्यातनामधेयशब्दयोरिवेति सूचितम्। कृतिसाध्यतारूपेणापूर्व इति वदता न कार्यताधर्ममात्रे लिङ्गादिः किं तु कार्ये धर्मिण्येवेति सूचितम्। एतच्च वक्ष्यमाणान्वयोपयोगितया सूचितम्।

ननु अनुबन्धभेदादपि कथं अपूर्वभेदः अनुबन्धस्य यागादेः पदार्थस्य लिङादिवदपूर्वबोधकत्वाभावात् पदार्थान्तरस्य यागादेः समभिव्याहृतस्वकार्यरूपापूर्वसाधनतयैवान्वयेन बोधकतया। न च साधनभेदादपूर्वभेदः, करणेतिकर्तव्यतारूपसाधनभेदेपि एकस्य दर्शपूर्णमासाधिकारापूर्वस्य दर्शनादित्यत्राह—कृतिश्चेति। स्यादेवं प्रथमं यदि साधनतयैवान्वयः स्यात्। न चैवम्, किन्तु विषयतयैव विषयत्वस्यैव तदपेक्षितत्वात्। तथाहि—प्रवृत्तिहेतुभेदकार्या-

१. B अपूर्वप्रयुक्तो

भिधानं लिङादीनां व्युत्पन्नम्। प्रवृत्तिहेतुत्वं च विलक्षणकार्यस्यैव, कार्यमात्रे प्रवृत्त्यसम्भवात्। अतो विलक्षणापूर्वरूपकार्यप्रतिपत्त्यर्थं प्रथमं विषयत्वेनान्वयापेक्षा तत्रावच्छेदकत्वमेव परमार्थतो विषयत्वं, शालिकनाथेन सर्वत्र तथैवोक्तेः। भवनाथेनापि तत्र तत्र तथैवोच्यते। तच्च विषयत्वं साधनत्वादन्यत् असाधनस्यापि भविष्यद्वृष्ट्यादेः ज्ञानविषयत्वदर्शनात् ज्ञानवत् कृतीच्छाद्वेषाणामपि सविषत्वात्। अतः कृतिविषयत्वद्वारा यागादेरपूर्वविषयत्वं कृत्यवच्छेदद्वारा कार्यावच्छेदात्। कृतिसाध्यमपूर्वमित्युक्ते किं कृतिसाध्यमपूर्वमिति कृतिस्वरूपनिरूपणापेक्षा प्रथमं, नतु कथमिति प्रकारापेक्षा ज्ञाते स्वरूपे प्रकारापेक्षा यतः। अतोऽवच्छेदकतयैव प्रथमं शब्देनान्वये पश्चाद्घटकापेक्षायां यदेवावच्छेदकतया यागादिकृतिसाध्यमपूर्वमिति यागादिकमन्वितं तदेव तद्घटकमिति पर्यवस्यति इत्यार्थं घटकत्वम्। एतच्च लिप्सासूत्रे व्यक्तं वक्ष्यामः। यद्यप्येवं वस्तुतः तथापि अत्र करणत्वाव्यतिरेकिविषयत्वं नास्तीत्येवंरूपपूर्वपक्षोक्तिसौकर्यार्थं भवनाथेन शाब्दमेव घटकत्वेनान्वयं प्रथमभाविनमङ्गीकृत्याधिकरणं क्रियते।

यद्यपि घटकत्वमेव विषयत्वं तथापि करणत्वातिरेकि विषयत्वं वक्तुं न पार्यत इति प्रौढवादेन तदङ्गीकारः। तत् यद्यपि कृतिसाध्यत्वरूपेण अपूर्वं लिङादिवाच्यं तथापि सा कृतिः पुरुषप्रयत्नरूपा व्यापारैकगोचरतया भव्यार्थं पूर्वापरीभूतार्थं यागादिकमेव साक्षात्साधयति नान्यत् अव्यापारात्मकमपूर्वमिति कृतिसाध्यतया लिङादिवाच्यमपूर्वं कथं कृतिसाध्यमिति कृत्यपूर्वसंसर्गघटकापेक्षायां सन्निहितप्रकृत्यर्थयागादिभव्यव्यवहितमेवापूर्वं कृतिसाध्यतया बोधार्हं नान्यथा साक्षादिति प्रथमं घटकत्वेन यागादेरन्वयः। तच्च करणत्वातिरेकीति राद्धान्ते स्पष्टयिष्यते। भव्यशब्दग्रहणात् घटकत्वपक्षेपि द्रव्यदेवतासम्बन्धस्याव्यापारात्मनोऽपि व्यापाराधीनपूर्वापरीभूततया भव्यार्थरूपस्य शब्दोपस्थितस्य घटकतयाऽन्वयो न विरुद्धः शब्दबलमत इत्युक्तम्। अपूर्वमिति वदता सानान्तरावगतकृतिसम्बन्धस्य स्वर्गादिफलस्य न शब्दोपस्थापितस्य घटकव्यवधानापेक्षेत्युक्तम्। एतच्च राद्धान्ते स्पष्टयिष्यते। न च भव्यमेव कृतिः साक्षात् साधयति नापूर्वमित्यसिद्धं वधप्रयत्नमात्रावगोरणस्य दुरितापूर्वजनकताङ्गीकारादिति वाच्यम्। यतो वधानुकूलस्पन्दान्तररूपत्वात् अवगोरणस्य न प्रयत्नमात्रत्वम्। अवश्यं च तस्य स्पन्दान्तरमुपेयं निर्विषयप्रयत्नानुपपत्तेः। निषेधानुपपत्तेश्च। एतच्च शंय्वधिकरणे वक्ष्यामः। एवं चास्मिन् पक्षे अवच्छेदकतया पञ्चिकाग्रन्थः सर्वत्र फलाभिप्रायो वेद्यः। तदेवं घटकतयाऽपूर्वस्य कृतिसाध्यत्वं भव्यान्तर्भावावगमाधीनमिति हेतोः भव्यान्तर्भावावगमाधीनकृतिसाध्यत्वाकारेणैवापूर्वस्य लिङादिवाच्यत्वात्। लिङादिः कृत्यपूर्वयोर्मध्ये भव्यविशेषप्रतीत्यन्तर्भावादेव स्वार्थमपूर्वमुपस्थापयितुं समर्थः नान्यथा। एवं च यागादेः साक्षाद्वाचकतया बोधकत्वाभावेपि बोधककोटिता तदवगमं विना

नान्यदित्यभव्यमपूर्वं भव्यव्यवहितं कृतिसाध्यतया बोधार्हं नान्यथा। तदेवं 'भव्यार्थान्तर्भावावगमाधीनं कृतिसाध्यत्वमिति लिङादिः कृति-तत्साध्ययोर्मध्ये भव्यविशेषप्रतीत्यन्तर्भावात् स्वार्थमुपनेतुं समर्थ इति अन्तर्भूतो यागादिविशेषः कार्यतारूपं [2]भिन्दन् कार्यत्वरूपोपस्थाप्यम-पूर्वमपि भेत्तुं योग्यमिति ज्ञान[3]पूर्वानुबन्धभेदज्ञानं तत्प्रतिपत्त्यनन्तरं शब्दस्य तत्समर्पणक्षमत्वज्ञानं यत् तदेव शास्त्रभेदज्ञानमिति गीयते। एवं गृहीतसङ्गतेर्भिन्नाच्छास्त्रात् तदर्थभूतापूर्वभेदज्ञानं फलम्। एवं च अनुबन्ध-भेदशास्त्रभेदयोः नेतरेतराश्रयता। न चानुबध्यमानभेदानुबन्धभेदयोः नापि शास्त्रभेदशास्त्रार्थभेदयोरिति सिद्धम्।

---

लिङादेः वाचकत्वाभावेन लिङ्वत् लिङर्थधीहेतुत्वात्। यत एव कृतिसाध्यतया ऽपूर्वस्य लिङादिनाऽवगतिरेव भव्यान्तर्भावावगमादिना अत एव घटकत्वपक्षे यागादेरुत्पत्तिमात्रान्वयितैव न प्रतीत्यन्वयितेति निरस्तम्।

अत एव विरुद्धत्रिकद्वयमपि वाजपेयवन्नास्ति। युक्तं वाजपेये विरुद्धत्रिक-द्वयं भिन्नपदार्थत्वात् गुणफलयोः। पदार्थस्य हि पदार्थेनान्वयो न पदार्थावयवेन अव्युत्पत्तेः इह तु कृत्यपूर्वयोरेकपदार्थत्वात् साध्यसाधनोभयावस्थे यागेऽपि कृत्यंशेन साध्यावस्थान्वयः अपूर्वांशेन साधनावस्थान्वय इति सम्भवात् पदनिमित्त-कान्वयभेदस्य वाक्यभेदहेतुत्वं न त्वन्वयवैरूप्यमात्रस्य। अन्यथा अनेकान्वितैकनि-योगाभिधानानुपपत्तेः। यत एव बोधककोटिनिवेशो यागादेर्विषयस्य, अत एवोक्तं ग्रन्थे "नहि निर्विषयान्नियोगशब्दान्नियोगज्ञानमुपपद्यत" इति। ननु भवत्वेवं अनुबन्धत्वमन्वयान्तरं तथापि कथं तद्भेदादपूर्वभेदः अनुबध्यमानापूर्वभेदनिबन्ध-नत्वादनुबन्धभेदस्येत्यत्राह—इत्यन्तर्भूत इति। एवं घटकत्वेन मध्येऽन्तर्भूतो यागादि-भेदः अभिधानान्तरादेः प्रमाणपञ्चकावसितः स्वपरतन्त्रं कार्यरूपं भिन्दन् अनेन रूपेणोपस्थाप्यमपूर्वमिति भेत्तुं योग्य इति ज्ञानमग्रे भवति। सोऽयं यागादेरर्थस्य भिन्नापूर्वयोगिताधीनो धर्मोऽनुबन्धभेदः। तज्ज्ञानं च शास्त्रप्रमाणोपयोगि विमर्श-रूपमेव न प्रमितिरूपं प्रमितेः सर्वोत्तरकालभावित्वात् तदाह—इति ज्ञानमिति। अपूर्वानुबन्धभेदज्ञानं अपूर्वानुबन्धयोर्भेदज्ञानं अभिधानान्तरादिभिः अनुबन्धभेद-ज्ञानं अतोऽपूर्वज्ञानमिति यावत्।

नन्वेवमप्रमितानुबन्धभेदः कथं शास्त्रभेदगमकः। अनिश्चितस्य धूमादेः

---

१. A मभाव्यार्था २. अभिन्दन् ३. A ज्ञानमपूर्वानु

पूर्वपक्षस्तु पृथक्त्वेनापूर्वान्वयेऽपि यागादेर्नानुबन्धत्वे भेदोऽत्रभाति। एकार्थत्वं ह्येकस्य लिङः स्वरसतो युक्तम्। अपूर्वेपि व्युत्पत्तावेकार्थता

अग्न्याद्यगमकत्वादित्यत्राह—तत्प्रतीति। भिन्नापूर्वानुबन्धभेदस्य प्रतिपत्त्यनन्तरं शब्दस्य तत्समर्पणक्षमत्वज्ञानं भिन्नापूर्वानुबन्धप्रतिपादनयोग्यताज्ञानं यत्तदेव शास्त्रभेदज्ञानमित्युच्यते अनिश्चितादपि साधनाद्योग्यताज्ञानं भवत्येवेति भावः। एवमेव शास्त्रभेदाच्छास्त्रार्थभेदज्ञानमप्युपपन्नमेवेत्याह—एवं गृहीतेति। इत्थं ज्ञात-शब्दार्थसम्बन्धस्य पुरुषस्य योग्यात् भिन्नाच्छास्त्रात् तदर्थीभूतापूर्वभेदज्ञानं फल-भूतं जायते शब्दाद्यथायोग्यमन्विताभिधानात्। एवं चायमर्थः अभिधानान्तरादिभिः प्रथमं कर्मभेदधीः। तदनन्तरं शब्दान्तराधिकरणन्यायात् अनुबन्धत्वे व्युत्पादिते अनुबन्धभेदधीः। तदनन्तरं भिन्नापूर्वप्रतिपादनक्षमत्वलक्षणशास्त्रभेदधीः तदनन्तरं शास्त्रार्थापूर्वभेदधीरिति। एवमधिकरणारम्भे शङ्कितं इतरेतराश्रयत्रयमपि नास्तीत्युपसंहरति—एवं चेति। नन्वेवं अनुबन्धभेदाच्छास्त्रभेद इति ग्रन्थोक्तं न समर्थितम्। अनुबन्धभेदान्नियोगभेदः तद्भेदाच्छास्त्रभेद इत्युक्तेः इत्याशङ्क्याह—इति सिद्धमिति। अनुबन्धभेदमूलकत्वाच्छास्त्रभेदस्य प्राथम्यात् अनुबन्धभेदाच्छास्त्र-भेद इत्युक्तं ग्रन्थ इत्यर्थः।

नन्वेवमनुबन्धभेदाच्छास्त्रभेदस्यैव न्याय्यत्वात् कथमेकशास्त्रतया पूर्वपक्ष इत्यत्राह—पूर्वपक्षस्त्विति। उक्तो भेदो न युक्त इति पूर्वपक्षिणोऽभिमानः।

ननु यागदानहोमानां भेदश्चतुर्थसिद्धः भिन्नानां तेषां यजति ददाति जुहोति इति लिङ्सहितैः यज्यादिशब्दैः भेदेनापूर्वान्वयः प्रतीयते। अतो यागाद्यनुबन्ध-भेदात् अपूर्वभेदो युक्त इति कथं शास्त्रभेदस्यायुक्ततेत्याशंक्याह—पृथक्त्वेनेति। सत्यं यागादिभेदादपूर्वान्वयः तथापि तेषां यजति ददाति जुहोतिलिङादिसहितैः यज्यादिशब्देनाभिन्नापूर्वान्वयः प्रतीयते तत्र हेतुः—एकार्थत्वं हीति। यस्मादेकलिङ्-प्रत्ययस्यैकार्थः स्वरसतो युक्तः अन्यायश्चानेकार्थत्वमिति न्यायात्। अक्षादौ तु अन्यतयैव लोके व्युत्पत्तेः तथा। लिङादेस्तु न तथा व्युत्पत्तिरित्येकार्थतेत्यर्थः। ननु लिङोऽपूर्वे व्युत्पत्तिः स च तत्र व्युत्पाद्यमानः कृतिसाध्यत्वविशिष्ट एव व्युत्पद्यते नैकत्वादिधर्मविशिष्टे। नापि मानान्तरतस्तदेकत्वावगतिः मानान्तरागोचरत्वाद-पूर्वस्य। ततः कथं लिङर्थस्यैकत्वाध्यवसाय इत्यत्राह—अपूर्वेऽपीति। सत्यं कृतिसाध्य-त्वविशिष्ट एव धीः नैकत्वादिविशिष्टे। तत्र यथा नैकत्वं मानान्तरात्प्रतीयते तथा बहुत्वमपि। तत्र लाघवादेकापूर्वपरतैव लिङः उच्चारणभेदेपि प्रत्यभिज्ञया युक्ता। अत एव यजेत होतव्यमिति लिङ्लोट्तव्यादिभेदेपि नापूर्वभेदः। एके-नैव कृतिसाध्यत्वाकारेणापूर्वे प्रवृत्तेः। न चैकाकारा धीरेकजातीयतया व्युत्पन्नेति

युक्ता। तदनुसारेण यागादेरपि एकान्वयितैव युक्ता।

यद्यपि यागकृतेरन्या दानकृतिः तथाप्यनेककृतिसाध्यमेकं दृष्टमित्येकस्मिन्नेवापूर्वे नानाकृतिद्वारेणानेकयागाद्यन्वयो न विरुद्धः।

ननु यागादेर्विषयतयाऽन्वयः। विषयश्चापूर्वं लिङादिसहितो बोधयतीति बोधकावयवस्य लिङादेरेकत्वेपि बोधककोटिनिविष्टयागाद्यवयवभेदात् बोधकभेदे बोध्यभूतापूर्वभेदो युक्तः। मैवम्। कृतितत्साध्यमध्यस्थो यागादिः कृतिसाध्यं प्रति साधनतां गच्छन् स्वद्वारेण कृतेः स्वसाध्यं संसर्गं घटयतीति अपूर्वसाधनतयैव यागादेरन्वय इति न करणत्वातिरेकिविषयत्वम्। अनेककरणान्वयिता चैकस्य युक्तेति एकमपूर्वमनेकयागाद्यन्वितं

---

न व्यक्त्यैक्यमिति वाच्यम्। यत एकाकारभाने व्यक्त्यैक्यमेव स्वतः। यत्र पाचकादौ प्रत्यक्षादिना भेदोऽवधृतः तत्रैकाकारभानेपि अगत्या व्यक्तिभेद इति भावः।

ननु भवतु लिङैक्यात् तद्वाच्यैक्यं ततः किमित्याह— तदनुसारेणेति। अपूर्वैक्यानुसारेण तदन्वयिनां यगादीनामेकान्वयितैव एकानुबन्धतैव नानुबन्धभेद इत्यर्थः। ननु कृतिसाध्यत्वरूपेणापूर्वे प्रवृत्तिः सा च कृतिः यागादिभेदाद्भिन्नैव तद्व्याप्यत्वात् कृतेः। अतः साधनभूतकृतिभेदात साध्यभेद इत्यत्राह—यद्यपीति। न तावत् कृतिभेदात् कार्यापूर्वभेदः एकस्यापि दर्शपूर्णमासाधिकारापूर्वस्यानेककृतिसाध्यत्वदर्शनात् न कृतिभेदः साध्यभेदहेतुः। नापि करणभेदाद्भेदः। तत्रैव एकस्याप्यपूर्वस्याग्नेयाद्यनेककरणान्वयदर्शनादित्यर्थः। ननु यागादेः प्रथमं विषयतयाऽन्वयः, न करणतया। स चापूर्वं लिङादिसहितो बोधयति विषयं विना लिङादेरपूर्वप्रत्यययायोगात्। कृतिसाध्यतया अपूर्वप्रतीतिघटकत्वाद्विषयस्य। ततश्च बोधकावयवस्य लिङादेरेकत्वेपि बोधककोटिनिविष्टयागाद्यवयवभेदात् यजतीत्यादिबोधकभेदे बोध्यभूतापूर्वभेदो युक्तः विषयभेदस्यापि भेदकत्वादिति चोदयति—नन्विति।

मैवमिति। सत्यं यागादेः घटकतयाऽन्वयः। तच्च घटकत्वमपूर्वं प्रति साधनतया करणत्वमेवावशिष्यते न तदतिरिक्तम्। तथाहि-कृतितत्साध्यमध्यस्थो यागादिः कृतिसाध्यं प्रति स्वयं करणतां गच्छन् स्वद्वारेण कृतेः स्वसाध्येन सह संसर्गं घटयति। नान्यथा, स्वयं असाधनस्यसाधनसंसर्गघटनायोगात्। एतदर्थमेव घटकत्वपक्षाङ्गीकार इत्यर्थः। करणत्वे तद्भेदे च नापूर्वभेद इत्युक्तमेवेत्याह—अनेकेति।

तदाह गुरुः—दृष्टं ह्यनेकानुबन्धमेकं शास्त्रं, यथा दर्शपूर्णमासाद्यधिकारशास्त्रम्। एतच्चानुबन्धत्वं अविविच्यैव प्रतिबन्दीबलेनोक्तम्[1]। न च तत्र एकवाक्यार्पितत्वं विशेषः। नानावाक्यार्पितानेककरणकोऽपि एक एव क्रयो दृष्टः। अनुबन्धत्वविवेकेनापि युक्त्यन्तरमाह—यद्वा प्रत्ययावगम्यत्वादित्यादिना। विविच्यमानं ह्यनुबन्धत्वमुक्तरीत्या करणत्वमेव स्यादिति भावः। अत एव व्यवधानेन कृतिसाध्येऽपि स्वर्गादिफले यागादेः करण-

---

एकस्यापूर्वस्याग्नेयाद्यनेककरणान्वयदर्शनादित्यर्थः। निगमयति—एकमिति। एतद् ग्रन्थेऽप्युक्तमित्याह—तदाहेति। करणत्वातिरेक्यनुबन्धत्वं नास्तीति त्वयोच्यते शास्त्रैक्यम्। ग्रन्थे तु तदङ्गीकारेणेति विरोध इत्यत्राह– एतच्चेति। अनुबन्धत्वं करणत्वाद्भिन्नं अभिन्नं वेति अविविच्यैव दर्शपूर्णमासप्रतिबन्दिबलेन एकशास्त्रत्वमुक्तमित्यर्थः। ननु युक्तं दर्शपूर्णमासादावेकशास्त्रत्वं अधिकारवाक्यस्थयजतिशब्देनानेकयागानामेकापूर्वसम्बन्धितया श्रुतेः इहतु न तथेत्यत्राह—न चेति। तत्र हेतुः नानेति। एकवाक्यार्पितत्वं शास्त्रैक्ये न तन्त्रं नानावाक्यार्पितानामेकहायनीवासः प्रभृतीनामनेकेषां करणानामेकस्मिन्नेव क्रयेऽन्वयदर्शनात्। यथा चैतत् तथा द्वादशे वक्ष्याम इति भावः। अनुबन्धत्वविवेकेनापि युक्त्यन्तरं ग्रन्थोक्तमित्याह—अनुबन्धत्वेति।

यद्वेत्यादिग्रन्थस्य तात्पर्यमाह—विविच्येति। विविच्यमानं हि तदनुबन्धत्वं न करणत्वादतिरिच्यते कार्येऽपूर्वे करणाकाङ्क्षिणि प्रकारान्तरेणान्वयायोगात्। व्युत्पत्त्यभावादित्यर्थः। युक्तं चैतदित्याह—अत एवेति। अव्यापाररूपतया व्यवहितसाध्यस्वर्गादिफले यागादेः न करणतयैवान्वयः किन्तु विषयतयापि स्यात्। स च सिद्धान्तिनो नेष्ट इति भावः। ननु माभूदनुबन्धभेदान्नियोगभेदद्वारा शास्त्रभेदः। अधिकारलक्षणसाध्यभेदात्तु शास्त्रभेदः किमिति न भवति। ततः सर्वफलानुबन्धमेकमपूर्वमिति ग्रन्थोक्तमयुक्तमित्याह— यथा चेति। यथा चोक्तप्रकारेण विषयत्वाभावात् न विषयद्वाराऽपूर्वभेदः तथाऽधिकारलक्षणसाध्यभेदादपि नापूर्वभेदः सिद्ध्यति तस्यापि उन्नीयमानानुबन्धभेदाधीनत्वात्। यथा चैतत् तथा यावज्जीवाधिकरणे वक्ष्यामः। ततश्चैकस्मिन्नपूर्वे नानानियोज्याः। न चभ्यासादपूर्वभेदः यागादिभेदमात्रेणापि तत्र विधित्वोपपत्तेः। अतः एव न गुणतोऽपि न नामतोऽप्यपूर्वभेदः। यागमात्रभेदादप्युपपत्तेः। एतत्सिद्धान्तन्यायाधीनत्वात् तत्र तत्रा-

---

१. B नैवोक्तम्

तयाऽन्वयो न विषयतया। यथा च विषयद्वारेण नापूर्वभेदः, तथाऽधिकारलक्षणसाध्यभेदाद्योऽपूर्वभेदः सोऽप्युन्नीयमानानुबन्धभेदाधीनतया न सिध्यतीति सर्वफलानुबन्धमेकमपूर्वं, तच्च योगसिद्धिन्यायेन क्रमेण फलोत्पादकम्।

ये तु जातेष्टिन्यायेन मिलितं स्वर्गादि काम्यमिति मन्यन्ते, तन्मते भेदेन कामनाश्रुतिरालोचनीया। एवञ्च समुच्चयेन सकलकरणेति कर्तव्यतोपसंहारासामर्थ्याद्यथासामर्थ्यं विकल्पो युक्तः षोडशिग्रहणाग्रहणवत्।

---

पूर्वभेदस्य। न चैकापूर्वत्वे यागावरुद्धे तस्मिन्न दानाद्यन्वयः अन्यावरोधदोषादिति वाच्यम्। युगपदन्वये तद्दोषाभावात्।

किञ्च लिङ्वाच्यं हि परमापूर्वमेकं कल्प्यानां तु अवान्तरव्यापारभूतापूर्वाणां भेदान्नावरोधदोषः। नापि आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इतिवत् प्रकरणान्तरादप्यपूर्वभेदः शब्दैकगम्यस्यापूर्वस्य शब्दाभेदे भेदाभावात् प्रकरणान्तरात्तु कर्मभेदमात्रं, मानान्तरगम्यस्य हि भेदो मानान्तरायत्तः अप्रत्यभिज्ञानं च प्रकरणान्तरत्वे तन्त्रम्। तच्चेह नास्तीति सर्वफलानुबन्धं सर्वगुणानुबन्धं सर्ववेदवेद्यमेकमपूर्वमिति सिद्धमिति भावः। नन्वेकमपूर्वं कथमनेकफलजनकमित्यत्राह— तच्चेति। एकस्यापूर्वस्य सर्वफलत्वे न्यायतः स्थिते यदा यत्कामोऽनुतिष्ठति तदा तस्य फलस्य तेनापूर्वेण सिद्धिः योगसिद्धिनयात् सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ यष्टव्यावितिवत्। इयांस्तु विशेषः। तत्र हि एकमेव दर्शपूर्णमासाख्यं कर्म क्रमेण तत्तत्फलशिरस्कापूर्वसाधकं इह तु एकमेवापूर्वं क्रमेण तत्तत्फलजनकमिति भावः। प्रकाशेन तु एकस्मिन्नियोगे एक एव नियोज्योऽपेक्षित इत्यपेक्षाबलात् तत्रैकनियोज्ये स्थिते जातेष्टिन्यायेन मिलितं स्वर्गादिफलं काम्यं मिलितानामेककामनासम्भवात् संस्थाद्वयसमावेशे षोडशिवत्। अतः सर्वफलकामस्य एकस्यैव नियोज्यत्वमित्युक्तं तदाह—ये त्विति। तद्दूषयति—तन्मत इति। स्वर्गकामः पशुकाम इत्येवं भेदेन या कामनान्वितपुरुषश्रुतिः वेदे सा एकनियोज्यत्वपक्षे परित्यक्तैव स्यात्। न च फलमात्रदर्शनपरा श्रुतिः, तथापि श्रुतहानस्य तदवस्थत्वादित्यर्थः। नन्वेवमपि कथमनुष्ठानं सकलवेदविहितानन्तकरणेतिकर्तव्यतात्मककर्मकलापस्य एकेन नियोज्येन समुच्चयेनोपसंहाराशक्तेः। न चैकदेशहानं, कामाधिकारे तदयोगात्। प्रधानानामेव चानन्त्यात् दूरे त्यागकथेत्यत्राह—एवं चेति। सत्यमेवं तथापि नियोग एवोपदेशत्वकार्यत्वयोः सिद्धयर्थं विकल्पेनैवानुष्ठानमाक्षिपति। न चैवमव्यवस्था। सामर्थ्यानुगृहीतनियोगादेव व्यवस्थासिद्धेरित्यर्थः।

यदप्यनुष्ठानाशक्तेरप्रामाण्यं कैश्चिदुक्तम् अत एव तदयुक्तम्। यच्चोक्तं भागतो विद्योपदेशोऽयमिति, तदयुक्तम्। यदि हि सर्वं सर्वस्य चोदितं तदा स स्यात्। इह तु कतिपयस्वर्गकामादिविशेषसम्बन्धेन चोदनेयमित्यनुसन्धेयमिति पूर्वः पक्षः।

---

अत्र दृष्टान्तः—षोडशीति। यथा षोडशिग्रहणाग्रहणयोः एकपात्रस्थतया युगपदुपसंहारासामर्थ्यात् विकल्पो ग्राहकापादितः। तद्वदत्रापि। इयांस्तु विशेषः तत्र सर्वपुरुषप्रयोग एक एव विकल्पितः। इह तु नानानियोज्यकेऽपूर्वे नानारूपत्वात् पुरुषशक्तीनां नानारूपतया विकल्पोऽपि विध्यनुमत एव। अन्यथा विधेः कार्यत्वोपदेशत्वयोरनिर्वाहात्। अत एव काम्येनापि सौर्यनियोगेन किञ्चिदङ्गाभावेपि स्वसिद्धिर्ज्ञापिता। न चैवं राद्धान्तेपि सामर्थ्यतो विकल्पापातः, विषयान्वयपूर्वकत्वात् करणान्वयप्रकारस्य। तत्र यथाश्रुतहाने विषयाप्रत्यभिज्ञामूलकव्यवस्थासिद्धिरित्यर्थः।

अत्र पूर्वपक्षावस्थायां कैश्चित् अननुष्ठानलक्षणमप्रामाण्यमाशङ्क्य एतदध्यायार्थशास्त्रभेदेनैव तन्निरासात् अत्रैवेयं चिन्तेत्युक्तम्। तदाह—यदपीति। दूषयति—अत एवेति। प्रामाण्येन पूर्वपक्षनिर्वाहोपपत्तौ अप्रामाण्याङ्गीकारायोगात्। तथाऽत्र शास्त्रभेदेन तन्निरासादप्रामाण्येपि यद्यत्र सङ्गतिः तर्हि अनेकशास्त्रेण निरासे विधिवन्निगदचिन्ताप्यत्रैव स्यादिति पूर्वोक्तैव विधेत्यर्थः।

अपरे पुनः एकस्य सर्वकर्मानुष्ठानाशक्तेः कर्मोपदेशभागेनापि आत्मैक्यरूपविद्योपदेश इत्यूचुः। तदनुभाषते—यच्चेति। तदयुक्तमिति। षष्ठाद्यपूर्वपक्षवत् यदि सर्वं सर्वनरानुष्ठेयमिति चोदितं स्यात् तदा तदन्यथानुपपत्तिबलात् आत्मैक्योपदेशः स्यात्। इह तु न तथा। किन्तु कतिपयस्वर्गकामादिविशेषान्वयेन चोदना। ततश्च स्वर्गकामादेरनुष्ठातृत्वात् तदात्मैक्यानुपादाने किमनुपपन्नं चोदनाया इत्यर्थः। ननु एकापूर्वत्वे सकलकर्मकलापसमुच्चयेपि नाननुष्ठानलक्षणाप्रामाण्यं कुलकल्पानुष्ठानात्। कुलकल्पानुष्ठानं नाम एकस्याधिकृतत्वेन यावच्छक्त्यनुष्ठिते तत्पुत्रपौत्रादिसन्ततिपरम्परया शेषानुष्ठानसमाप्तिः अतो न विकल्प इति केचिदूचुः। तदयुक्तमिति मनसि कृत्वा आह—इत्यनुसन्धेयमिति।

अयं भावः पुत्रपौत्रादिसन्ततेर्नराणां किमेकतया तदधिकारनिर्वर्तकत्वं नानात्मतया वा। नाद्यः विद्योपदेशलक्षणस्य पूर्वमेव निराकृतत्वात्। न द्वितीयः। अत्रापि किमधिकृततया ऋत्विक्तया वा? नाद्यः कूटस्थस्यैवाधिकारात् नह्यन्याधिकृते कर्मण्यन्याधिकारः। अधिकारे वा कथं कूटस्थस्य फलसिद्धिः शास्त्रफलं प्रयोक्तरीति न्यायात्। न द्वितीयः, अवृतत्वात्। न चावृतत्वेपि अनुग्रहादिना

सत्यम् कृतिसाध्यं प्रति साधनतां गच्छन् यागादिः स्वद्वारेण कृतेः स्वसाध्यसंसर्गं घटयति, तथापि कृतितत्साध्यसंसर्गघटनानुगुणं साधनत्वं कार्यशरीरप्रतीतिप्रविष्टम् । कार्यरूपे च सङ्कुटिताकारे करणा-

---

तत्फलसिद्ध्यर्थं पुत्रादिना तदनुष्ठानं, तस्य शास्त्राननुमतत्वात् । न सर्वस्वारे मरणाङ्गके ब्राह्मणाः समापयत शेषं मे यज्ञं इति ऋत्विगनुमत्यर्थं प्रैषविधानात् शास्त्रानुमतिसिद्धिरिति न सर्वत्र कुलकल्पानुष्ठानगन्ध इति ।

नन्वेकनियोगतया एकशास्त्रत्वे किं स नियोगः सर्वैर्वाक्यैः सम्भूय प्रतिपाद्यः किं वा केनचित् गुणः केनचित् भावार्थ इति । नाद्यः । प्रत्येकमेव शक्तत्वात् । समुदायस्य च शक्त्यभावात् । न द्वितीयः । विनिगमने कारणाभावात् । तथाऽस्मिन् पूर्वपक्षे एको नियोगः नियोज्यास्तु भिन्ना इति । तच्चायुक्तम् । यतः एकस्यैव नियोगस्य नियोज्यापेक्षया एको नियोज्यो युक्तः अन्यथा नियोगाकाङ्क्षाया अव्यवस्थानापत्तेरित्यत्राह—इति पूर्वपक्ष इति । अयं भावः—वेदे श्रुतसमस्तपदानां नियोगान्वितस्वार्थाभिधानव्युत्पत्तेः श्रुतनियोज्यपदानां निरपेक्षकामनायुक्ततया श्रुतानां पृथक् नियोज्यार्पकतया नियोगाकाङ्क्षा स्वतो भवति । तत्र यद्यप्येकनियोगस्य एकनियोज्याकाङ्क्षा स्वतः तथापि रक्तपटन्यायादाकाङ्क्षामत्थाप्य अनेकनियोज्यताऽङ्गीकार्योपेया । अन्यथा श्रुतहानापत्तेः । अतो यावच्छ्रवणं नियोज्यभेद एव युक्तः । तथा एक एव नियोगः सर्वैर्वाक्यैः प्रत्येकं प्रतिपाद्यते । परं तु एक एवायमिति प्रत्यभिज्ञायते शाखान्तराधिकरणनयात् । न चैकस्यां शाखायां प्रतिपादितस्यैव वाक्यान्तरेण पुनः प्रतिपादनमन्याय्यमिति वाच्यम् । युगपत्प्रतिपादनात् । न च सह प्रतिपादिते प्रतिपादितत्वविरोधः, एवं शङ्कापनयायैव पूर्वपक्षस्तु इत्युपक्रमोक्तेऽपि पुनः पूर्वपक्ष इत्युपसंहारः कृत इति ।

राद्धान्तमाह - सत्यमिति । यागादेरपूर्वं प्रति प्रथमं विषयतयाऽन्वयः न करणतया । घटकत्वं विषयत्वमिति राद्धान्तप्रतिज्ञां हृदि कृत्वा तत्रान्वयमपूर्वसाधनस्यैव कृत्यपूर्वसंसर्गघटकत्वम् । साधनत्वं घटकत्वमिति न करणत्वातिरेकिघटकत्वं विषयत्वमिति पूर्वपक्षोक्तामाशङ्कामनुभाषते परिहर्तुं—कृतीति । परिहरति—तथापीति । सत्यं तद्दशायामपि साधनत्वमस्ति यागादेरपूर्वं प्रति । तच्च साधनत्वं न करणत्वं । कृतितत्साध्यसंसर्गघटनाननुगुणत्वात् । कृतितत्साध्ययोर्या संसर्गप्रतीतिः तस्या अनर्हत्वशङ्कायां तन्निर्वाहार्थं यत् साधनत्वमभिधीयते । तत्तदनुगुणत्वात् । तत्कार्यशरीरप्रतीतिप्रविष्टं कार्यप्रतीतावेव पर्यवसितं नोत्पत्तौ । अतः कार्यस्य प्रतीतिपर्यवसाय्यभिधानम् ।

यत्तु तत्साधनत्वं घटकत्वं तदेव विषयत्वं तत्सिद्ध्यर्थं तु यत्साधनत्वं विधिना आक्षिप्यते तदेव करणत्वम् । कथमयं विवेक इति चेत् । उच्यते ।

न्वयावसर इति विषयत्वान्वयः करणत्वान्वयातिरेकी सिद्धः।

एवञ्च कार्यबोधकावयवस्य लिङादेरेकत्वेप्य[1]वयवान्तरभूतयागादि-भेदे बोधकसमुदायभेदात् तदर्थभूतापूर्वभेदसिद्धिरिति अनुबन्धभेदा-च्छास्त्रभेदसिद्धिः। यत्र तु यागादेस्तन्त्राभिधानं मिलितस्यैव तत्र तत्रानु-बन्धत्वम्। युक्तञ्च तत्रैकशास्त्रत्वम्। व्यवहितकृतिसाध्ये फले प्रमाणा-

---

करणत्वं हि क्रियायां भवति। न चापूर्वं क्रिया। अतोऽपूर्वे साधनत्वमेव। तच्च कार्यप्रतीतावेव पर्यवसितमेवेत्यर्थः। कदा तर्हि यागादेः करणतयाऽन्वयः? कथं चापूर्वकरणत्वमुच्यते इत्यत्राह—कार्यरूपे चेति। विषयान्वयेन कृत्यपूर्वसंसर्गघटकेन कार्थरूपे घटिताकारे प्रतिपन्ने सति पश्चात् कार्यस्य करणापेक्षायां करणत्वे-नान्वयस्यावसर इति प्रथमं घटकत्वेनान्वितस्य यागादेरपूर्वभावनायां करणत्वं कृतेर्भावनायाः क्रियारूपत्वात्। तदेवापूर्वकरणत्वमुच्यते न साक्षाद्भावनाकरणत्वं चोपपादितमपूर्वाधिकरणे परशुग्रन्थे। अतो विषयत्वान्वयः करणत्वान्वयातिरेक इति सिद्ध इत्यर्थः।

ननु अस्त्वेवं करणत्वातिरेकि विषयत्वं तथापि कथं तद्भेदाच्छास्त्रभेद इत्याह—एवं च कार्येति। यद्यपि यागादेः पदान्तरोपस्थाप्यस्य विषयतया अपूर्वेण सहान्वितस्य न तद्बोधकतार्हता। किन्तु लिङादेरेव तद्बोधकतार्हता तथापि भव्यरूपयागान्तर्भावं विना लिङादिना कृतिसाध्यत्वरूपेण अपूर्वप्रतीत्यनिर्वाहात् अन्वितोऽपि यागादिःलिङ्वत् लिङर्थधीहेतुतया अपूर्वबोधक एवेति भव्यरूप-यागादिलिङ्समुदाय एवापूर्वबोधक इति बोधकावयव लिङाद्येकत्वेपि अवयवान्तर-यागादिभेदः। एकत्र यजतिलिङ्समुदायः अन्यत्र जुहोतीति लिङ्समुदायः अन्यत्र [ ददाति ] लिङ्समुदाय इति बोधकसमुदायभेदात्। अन्यायश्चानेकशब्दत्वमिति न्यायात् बोध्यरूपापूर्वभेदसिद्धिद्वारा शास्त्रभेदसिद्धिरित्यर्थः। नन्वेवमनुबन्ध-भूताग्नेयादियागभेदात् दर्शपूर्णमासाधिकारापूर्वभेदः स्यादित्यत्राह—यत्र त्विति। सत्यमाग्नेयादियागस्वरूपभेदःतथाप्यधिकारवाक्यस्थयजिना तन्त्रेण सर्वेषां यागानां विषयतयाऽभिधानात् मिलितानामेकमनुबन्धत्वमित्यनुबन्धभेदाभावात् युक्तं तत्र दर्शपूर्णमासादौ एकशास्त्रत्वं इह तु न तथेति भेद इत्यर्थः।

नन्वेवं यद्यपूर्वस्य साक्षात् कृतिसाध्यत्वाभावेन घटकापेक्षायां यागादेः तत्र घटकतयान्वयः तर्हि फलेपि तथैव यागाद्यन्वयः स्यात् तस्याप्यव्यापाररूपतया कृतिसाध्यत्वानर्हत्वादित्युक्तमेवे.यत्राह—व्यवहितेति। फलस्य हि यत्कृतिसाध्यत्वं तत् प्रमाणान्तरेणावगम्यते तद्व्यवहितकृतिसाध्यतयाऽवगतमिति न तत्रानुप-

---

१. B अत एवान्तर।

न्तरतोऽपि तथैव कृतिसाध्यत्वावगतेः न काप्यनुपपत्तिः । शब्दावगम्ये तु साध्ये यदि व्यवधायकान्तर्भावः शब्दान्नावगतः स्यात् तदा [1]प्रमाणान्तराप्रचारात् साध्यत्वावगतिरेव न स्यादित्यनुसन्धेयमिति राद्धान्तः ।

कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
कार्ये सङ्घटिताकारे करणत्वेन सम्मतः ॥

पत्तिरिति तेन सह यज्यादिः यागादिघटकत्वेनान्वयं न बोधयतीत्यर्थः । नन्वेवं तर्हि अपूर्वस्यापि किमिति घटकापेक्षेत्यत्राह—शब्दावगम्येत्विति । शब्दैकसमधिगम्येत्वपूर्वरूपे साध्ये शब्दादेव व्यवधायकान्तर्भावः घटकानुप्रवेशो बोधनीयः । अन्यथा तत्र मानान्तराप्रचारात् कृतितत्साध्ययोः साध्यसाधनताऽनुपपन्नेति युक्ता अपूर्वे घटकापेक्षा न फल इत्यर्थः । ननु फलस्य स्वर्गस्य लोकावगतप्रीतिस्वभावविपरीतप्रीतिस्वभावत्वेन तत्कृतिसाध्यत्वे व्यवहिते मानान्तराप्रचारात् तत्र शब्दादेव व्यवधायकान्तर्भावोऽवश्यं वाच्य इति न कथं तत्र घटकतया शब्दान्वयाङ्गीकार इत्यत्राह —इत्यनुसन्धेयमिति ।

अयं भावः—स्यादेवं यदि लोकविपरीतता स्वर्गस्य स्यात् सा तु स्वर्गाख्यप्रीतेः अवान्तरजातिभेदानङ्गीकारात् नास्त्येवेत्युक्तं षष्ठे । अत एवानुपलब्धचरेपि स्वर्गे कामना । ततो मानान्तरादेव सुखजातीयतया स्वर्गे व्यवहितकृतिसाध्यत्वावगतिरिति न शब्दतो व्यवधायकान्तर्भावापेक्षेति करणत्वेन तत्रान्वयो न घटकत्वेनेति । ननु यद्याग्नेयादीनां तत्राभिधानात् अनुबन्धभावैक्येन दर्शपूर्णमासाधिकारशास्त्रमेकं कथं तर्हि सर्वेभ्यः कामेभ्य इति दर्शपूर्णमासाधिकारशास्त्राणां भेदः तत्रापि तन्त्राभिधानादित्यत्राह—इति राद्धान्त इति ।

अयमाशयः—सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति वाक्यैक्येपि निरपेक्षकामनाविषयतया सर्वेषां फलानामवगमादुद्देश्यकोटितया च बहुत्वाविवक्षणात् सर्वशब्दस्य च यथोक्तसन्निहितवाचित्वात् निरपेक्षतयैव तेषां सन्निधेः नैरपेक्ष्येण तत्तत्कामाधिकारापूर्वविषयतया दर्शपूर्णमासयोः युगपद्विधिरिति युक्तस्तत्र शास्त्रभेदः । न च दर्शपूर्णमासाधिकारशास्त्रेपि अनुबन्धैक्ये आग्नेयाद्युत्पत्तिवाक्यनैरपेक्ष्यम् । निरपेक्षस्वरूपमात्रपरत्वात् तस्य । न हि सापेक्षाणामन्वये स्वरूपेपि सापेक्षता भवतीति । उक्तं विषयत्वकरणत्वभेदं श्लोकेन सङ्गृह्णाति - कृतीति । निगदव्याख्यानमेतत् ।

---

१. B तथा

॥ २ ॥ एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं स्यात् ॥ २ ॥

पञ्चधा पठितेऽपि यजतीत्यत्र प्रकृतिभागाद्याग इत्येव प्रतीयते न भेदः। पञ्चमलकाराच्चापूर्वमित्येवं प्रतीयते, न भेद इत्येकमपूर्वमेकोनुबन्धश्चेति युक्तम्। ननु समिदाद्यर्थान्वयभेदात् तद्भेदो युक्तः; नैतत्, न तावत् गुणतो भेदः, गुणविशिष्टयागविधौ मत्वर्थलक्षणा स्यात्। न च

---

॥२॥ एकस्यवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥२॥

समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति इति वाक्यपञ्चकमाम्नातम्। तत्र चिन्ता—किमेकशास्त्रमुत भिन्नमिति। तदर्थमियं चिन्ता—किं प्रतिवाक्यं यागभेदोऽपूर्वभेदश्च न सम्भवति उत सम्भवतीति। अभ्यासप्रमाणकानुबन्धभेदनिबन्धनशास्त्रभेदव्युत्पत्तेरध्याये पादे च सङ्गतिः।

ननु विधिस्वरसत्वात् सर्वेषां वाक्यानां प्रतिवाक्यं विधिभेदे विधेयभेदो युक्त इति कथं पूर्वपक्ष इत्याशङ्क्य विषयकथनपूर्वकमवान्तरसंगतिं सूचयन् पूर्वपक्षमाह—पञ्चधेति। युक्तं पूर्वत्र यजति ददाति जुहोतीत्यभिधानभेदात् तत्प्रवृत्तिनिमित्तानुबन्धभूतयागादिभेदादपूर्वभेदः। इह तु प्रकृतिभागाद्यागभेदद्वारा नापूर्वभेदः याग इत्येव ततः प्रतीतेरिति न भेदः। यद्यपि यजति यजतीति पञ्चधा पठिता प्रकृतिः यागपञ्चकमेव स्वभावत आह—एकशब्दवाच्यता च देवतोद्देशोपाध्यैक्यात् तथापि सन्निधिपाठे प्रत्यभिज्ञाबलाद्यागैक्यमेव न भेदः ज्योतिष्टोमदर्शपूर्णमासयोस्तु सन्निधानाभावादप्रत्यभिज्ञानादेकस्यापि शब्दस्योच्चारणभेदादर्थदो युक्त इत्यर्थः।

ननु मामूत्प्रकृतिभागाद्यागभेदः प्रत्ययभागादेव यागभेदधीरस्त्वित्यत्राह—पञ्चमेति। यद्यपि यजतीति वर्तमानताधीः तथापि विधिस्वरसत्वाद्वाक्यस्य पञ्चमलकारताधीः पञ्चमलकाराच्चापूर्वमित्येव प्रतीयते न भेदः प्रतीयत इत्यर्थः। नन्व पूर्वमित्येव प्रतीयते नैक्यप्रतिपत्तिरपीति शङ्कामात्रमपनुदति—इत्येकमिति। लाघवात् स्वतः प्राप्तमैक्यमित्येकत्वमपूर्वानुबन्धयोर्युक्तमित्यर्थः।

ननु यजतीति प्रकृतिप्रत्ययाभ्यां भेदाप्रतीतावपि समिदाद्युपपदार्थान्वयभेदवशद्भिदो युक्त इति चोदयति—नन्विति। नैतदिति। सर्वथा उपपदार्थान्वयवशाद्भेदो न युक्तः। कथमयुक्त इत्याशङ्क्य किं गुणतो भेदः किं वा नामत इति विकल्प्य प्रथमपक्षं दूषयति—न तावदिति। गुणतस्तावत् न भेदो युक्तः गुणविधेरेवासम्भवादित्यर्थः। कथमसम्भव इत्याशङ्क्य किं विशिष्टविधिविधया गुणविधित्वं किंवा केवलगुणविधिविधयेति विकल्प्य प्रथमे अनिष्टमाह—गुणविशिष्टेति। न च सोमेन यजेतेतिवत् क्रियाकारकत्वान्वयबलेनैव विशिष्टताप्रतिपत्तेः न मत्वर्थ-

गुणमात्रविधिः, द्रव्यं वा गुणो देवता वा, तच्चोभयमपि यागकर्म। अतो द्वितीयान्तो न गुणविधिः, किञ्च गुणविधिरप्यविशेषात् सर्वत्रैव युक्त इति कस्मिन् यागे गुणविधिः। आग्नेयादावपि गुणान्तरावरोधात् न गुणविधिः। किन्तु लिङाद्यभिधेयकृत्यनीप्सितकर्मत्वाद्यागस्य द्वितीयान्तस्य च

---

लक्षणेति वाच्यम् यतोऽत्र द्वितीयान्ततया समिदादिविशिष्टयागावगतिर्विधेयतया न क्रियाकारकमात्रान्वयेन भवति। न च सक्तून् जुहोतीतिवत् विधेयतया विशिष्टावगतिः तद्वदत्र करणार्थे द्वितीयास्मरणाभावात्। अतः समिदादिमन्तं यागं कुर्यादिति मत्वर्थलक्षणयैव विशिष्टावगतिः गुणविशिष्टकर्मविधौ दुर्वारेत्यर्थः। न द्वितीयः कल्प इत्याह—न चेति। कथं सगुणमात्रविधिरित्याशङ्क्य दूषयितुं विकल्पयति—द्रव्यं चेति। दूषयति—तच्चेति। देवतात्वे चतुर्थी द्रव्यत्वे च तृतीया स्यादिति द्रव्यदेवतात्मकमुभयमपि न यागे कर्मकारकमिति समिध इत्येतत् द्वितीयान्तं पदं सर्वथाऽनन्वय्येव स्यात्। एतच्च विशिष्टविधिपक्षेपि समानमेव दूषणं तथापि तत्र दूषणान्तरस्य स्फुटत्वात् तदेवोक्तमिति भावः।

ननु विष्णुं यजतीति देवतायामपि द्वितीया दृष्टेति कथं देवतायां चतुर्थीति नियमः इति शङ्कां उपसंहरन्नपनुदति - अत इति। युक्तं विष्णुं यजतीति द्वितीया अनुवादपरत्वाद्वाक्यस्य। अनुवादे च यथाप्राप्ति तात्पर्यमित्युद्देश्यकर्मतया कथञ्चित् द्वितीयानुवादः। इह तु विधिपरे वाक्ये विधेयत्वात् देवतागुणस्य अवश्यंभाविनी चतुर्थीत्यर्थः। आश्रयाभावादपि केवलगुणविधिरेव युक्त इत्याह—किञ्चेति। समिदादिवाक्यानामप्येकगुणयुक्तत्वेनाविशेषात् सर्वत्र गुणविधिर्युक्त इति यागविधानाभावात् कस्मिन् यागे गुणविधिः न क्वापीत्यर्थः। ननु सन्निहिते आग्नेयादियागे गुणविधिरस्त्वित्यत्राह—आग्नेयादाविति। उत्पत्तिशिष्टाग्न्याद्यष्टाकपालादिगुणान्तरावरोधात् न तत्रापि गुणविधिः विकल्पापत्तेश्च। अत एवानुत्पत्तिशिष्टगुणकेप्युपांशुयाजे न गुणविधिः विधीयमानानां समिदादीनां अन्योन्यविकल्पापत्तेरिति भावः। नन्वेवं यदि गुणान्वयोऽनुपपन्नः कथं तर्हि उपपदाद्यन्वय इत्यत्राह—किन्त्विति। समिध इत्यादेः द्वितीयान्तस्योपपदस्य यागसामानाधिकरण्यात् तन्नामतयैवान्वयः। कथं पुनर्यागस्य कर्मत्वमाख्याताभिधेयस्य येन द्वितीयान्तपदेन समानाधिकरणता स्यादित्यत्राह—कृतीति। यद्यपि कृतेरपूर्वमीप्सितकर्म तथापि तदर्थत्वेन यागादेरनीप्सितता। ननु समभिव्याहृतपदानुपादानात् कृतेस्तत्र यागस्य कथं कर्मतेत्यत्राह—लिङादीति। धात्वनुपादानेपि कृतेर्लिङाद्यभिधेयत्वात् तां प्रति यागादेः अनीप्सितकर्मता युक्तेति कृत्यनीप्सितकर्मयागसामानाधिकरण्यात् द्वितीयान्तस्य तन्नामता युक्तेत्यर्थः।

यागसामानाधिकरण्यात् नामता युक्ता। न च यजिसहितं तत्परतन्त्रं नाम यागभेदकं यजिवियुक्तं हि श्रुतं ज्योतिरादिकं यागभेदकं अतो न गुणतो न नामतो यागभेद इत्येकोऽनुबन्धः। स च समिद्वाक्येन विधीयते प्राथम्यात्। तत्प्राप्तमन्यत्रानूद्यते विधानविकल्पो वा क्रयवाक्यवदिति[1] पूर्वः पक्षः।

---

पूर्वतमे विकल्पे द्वितीयं कल्पं दूषयति—न चेति। समिधो यजतीति यजिसामानाधिकरण्यात् प्रवर्त्यं यजिसहितनाम न यागभेदकं यजिपरतन्त्रत्वात् यजेश्च प्रत्यभिज्ञया ऐक्यावगमादित्यर्थः। कीदृशं तर्हिनाम भेदकमित्यत्राह—यजिवियुक्तं हीति। यजिवियुक्तं नाम श्रुतं अथैषज्योतिरथैष विश्वज्योतिरित्यादिकम्। पश्चाच्च यजिसंयुक्तं तस्यैव यजिभेदकत्वं यजिपरतन्त्रत्वाभादित्यर्थः। अत इति निगमनम् स चैको यागः केन वाक्येन विधीयत इत्याशङ्क्याह—स चेति। प्रत्यभिज्ञाबलात् यागैक्ये सति अनुबन्धैक्ये स्थिते एकत्रविधिः अपरत्रानुवाद इति तात्पर्येऽवधृते कुत्र विधिरिति जिज्ञासायां प्राथम्यात् समिद्वाक्यमेव विधायकं अन्यदनुवादकमित्यर्थः। ननु तनूनपातं यजतीत्यादिवाक्यैः कथं समिद्यागानुवादः तस्मिन् तनूनपादाद्युपपदार्थाप्राप्तेरित्यत्राह—तत्प्राप्तमिति। समिद्वाक्ये यागविधौ तनूनपादग्न आज्यस्य वेतु इत्यादिसर्वमन्त्रान्वयात् सर्वदेवतानां समिद्यागे प्राप्तौ तदनुवादो वाक्यान्तरे युक्त इत्यर्थः। ननु पाठतः प्राथम्यादध्ययनमात्रोपपत्तिः न तद्विध्युपयोगी इत्यरुच्या पक्षान्तरमाह—विधानेति। समिदादिवाक्येषु विधानविकल्पो भवतु सोमक्रयवाक्ये विषमतया एकस्यैव विधायकत्वमितरेषामनुवादकत्वमिवेत्यर्थः।

ननु समिदादिवाक्यानां पञ्चानामपि प्रकृताग्नेयादियागानुवादकत्वमस्तु किमेकस्यापि विधित्वाश्रयणेनेत्यत्राह - इति पूर्वपक्ष इति। अयं भावः—प्रकृताग्नेयाद्यनुवादकत्वं न सम्भवति सर्वथा उपपदानामनन्वयापत्तेः। न तावन्नामतयान्वयः प्रवृत्तिनिमित्तानवगमात्। न चाग्नेयादावेव समिधो अग्न इत्यादिमन्त्रान्वये तद्बलात् समिदादिदेवतात्वकल्पने प्रवृत्तिनिमित्तलाभः उत्पत्तिशिष्टदेवतान्तरावरोधात्। न चोत्पत्तिवाक्ये देवताऽश्रुत्या उपांशुयाजे मन्त्रान्वयात् तद्देवतायां तदनुवादः। विनियोगापेक्षमन्त्रात् देवताधियो विलम्बात् अर्थवादावगतदेवतान्वयस्यैवोपांशुयाजनये वक्ष्यमाणत्वात् अतः समिदादिवाक्येष्वेवान्यतमस्य विधायकत्वेन विहितानुवादकत्वमन्येषाम्। न च तत्रावरोधदोषः मान्त्रवर्णिकत्वाद्देवतालाभस्येति।

---

१. क्रयवदिति

सत्यमेवं किन्तु लिङाद्यर्थो विधिः कार्यत्वेनावगम्यते विधिश्च स्वभावतो विधेयं भिनत्तीति प्रतिविधि यागभेदः । इदमत्राभिप्रेतं कार्यत्वाकारेण लिङादिः स्वार्थं बोधयति, कार्यावगतेश्च कार्ये प्रवृत्तिः । सैव चा-

---

राद्धान्तमाह—सत्यमेवमिति । सत्यं न लिङादितोऽपूर्वभेदधीः, सत्यं न च प्रकृतिभागाद्यागभेदधीः, सत्यं च गुणनामभ्यामपि न यागभेदधीरित्यर्थः । कथं तर्हि भेद इत्याशङ्क्याह—किन्त्विति । समिधो यजतीत्येवमादिषु लिङादिभिर्विध्यर्थः कार्यतयाऽवगम्यते भेदेन । ततः किमित्यत्राह—विधिश्चेति । विधिर्हि भेदेनावगम्यमानः स्वभावतः स्वसामर्थ्यात् स्वविषयमपि विधेयं भिनत्ति । अतः पुनः प्रतिविधि एकैकस्मिन् विधौ एकैको यागो विषय इति यागभेद इत्यर्थः । नन्वत्र विधिभेद एव नास्ति मानाभावात् लिङादेरेकत्वात् । न चैकस्य शब्दस्यानेकार्थत्वं अन्याय्यत्वात् । न चोच्चारणभेदाद्भेदः । शतकृत्व उच्चारितोऽपि स एवायं शब्द इति प्रत्यभिज्ञानात् न च विधेयभेदाद्भेदः, उक्तरीत्या तस्यैवासिद्धेः । सति विधिभेदे विधेयभेदः । तस्मिन् सति विधिभेद इति अन्योन्याश्रयापत्तेश्च । अतोऽनुवादकतया एकस्य विधायकत्वं नेतरेषामिति कथं राद्धान्त इत्यत्राह—इदमत्राभिप्रेतमिति ।

न तावदन्यतमस्य विधायकत्वमितरेषानुवादकत्वं अगृह्यमाणविशेषत्वेन तदध्यवसायायोगात् । नापि प्राथम्यात् तदध्यवसायः प्राथम्यस्याध्ययनमात्रोपयोगितया विधानानुपयोगात् । तथा अध्ययनविध्यापादितं यत् सर्वेषामध्येतृ प्रयुक्तं विधिरूपार्थपरत्वं तादृशं न स्यादनुवादकत्वे । तथाऽनुवादपक्षे उपपदान्वयोऽपि प्रवृत्तिनिमित्ताभावात् । समिद्वाक्ये हि विधौ सहि ( न च ) किं समिन्मन्त्रस्य तत्रान्वयः, तनूनपान्मन्त्रस्य वा ? नाद्यः । तनूनपादिति वाक्येन उपपदानन्वयादनुवादानुपपत्तेः । नापि द्वितीयः, विधिवाक्येन समिद्रूपस्योपपदस्यानन्वयापत्तेः । नापि सर्वमन्त्रान्वयः, विकल्पापत्तेः । न च मन्त्राणां समुच्चयः असम्प्रतिपन्नदेवताकत्वात् ततश्च समित् तनूनपाद्यनेकाधिष्ठिनमेकं देवतात्वमिति वाच्यम् । पृथक्त्वेन वाक्योपनीतविषये तदयोगात् । न च नित्यवच्छ्रुतस्य नाम्नः पाक्षिकं प्रवृत्तिनिमित्तं युक्तम् । अतोऽगृह्यमाणविशेषत्वात् सर्वत्राविधिः स्यात् विधिर्वा । तत्राविधिपक्षे वाक्यानां बोधकत्वाभावः विध्यन्तरशेषत्वाभावेनानर्थवादत्वात् । अभियुक्तोपदेशाभावेनाविनियुक्तत्वेन चामन्त्रत्वात् व्युत्पत्तिसिद्धार्थपरत्वहानिरिति सर्वत्रविधिपरतैव । अतः समिधो यजतीत्यादिषु पञ्चस्वपि वाक्येषु लिङादिः कृतिसाध्यत्वाकारेण स्वार्थं विधिं भेदेन बोधयति । न च लिङादियुक्तानि पञ्चापि वाक्यानि लिङादेरेकत्वात् तं विधिं युगपद्बोधयन्तीति वाच्यम् । एकस्मादेव तद्बोधनसम्भवे इतरेषामानर्थक्यस्य

पूर्वे कार्ये प्रवृत्तिः या तत्कार्यानुप्रविष्टे प्रवृत्तिः न तु साक्षात् । प्रवृत्तिश्च, यदप्राप्तं तत्र भवतीति । तदेवं अनन्यप्राप्तमेव [2]विधेयमिति प्रतीतेः विधेयं विध्यन्तरविषयाद्यागादन्यदेवावगम्यते ।

ननु प्राप्तयागान्वितोऽपि विधिः पौर्णमासीं यजत इत्यत्र दृष्टम् । नैवम् । तत्र विषयान्तरानिर्वाहात्पूर्वविषयमपूर्वकार्यमेवानुवदति कार्यावस्थामति-

दुर्वारत्वात् । गुणभूतपदतात्पर्यमनपेक्ष्यैव प्रधानभूतवाक्यतात्पर्यस्य विधित्वे ज्ञातत्वात ततो भेदेनैव विधिप्रतीतिरित्यर्थः ।

ननु भवत्वेवं विधिभेदः तथापि कथं यागभेद इत्यत्राह—कार्यावगतेश्चेति । कार्यज्ञानबलात् कार्यरूपविधौ तावत् पुरुषस्य प्रवृत्तिरविवादा । एतच्च पातनिकामात्रम् । ननु अव्यापाररूपेऽपूर्वे कथं साक्षात् पुरुषस्य प्रवृत्तिरिति तत्राह–सैव चेति । सत्यमपूर्वकार्ये न साक्षात् पुरुषप्रवृत्तिः । किन्तु साधनभूते यागे तत्कार्यानुप्रविष्टे कार्यशरीरप्रतीतिप्रविष्टे या प्रवृत्तिः सैव कार्ये प्रवृत्तिः । अन्यत्रापि सुखादिष्वप्येवमेव । यो हि यदिच्छतीति न्यायात् । ननु भवत्वेवं यागे प्रवृत्तिरेव विधौ प्रवृत्तिः तथापि किमित्यत्राह—प्रवृत्तिरिति । सापि प्रवृत्तिर्यदप्राप्तं तत्र भवति नान्यत्र । अप्राप्तगोचरस्वभावत्वात्तस्या इत्यर्थः । ननु भवत्वेवं अप्राप्तगोचरत्वं प्रवृत्तेः तथापि कथं विधिभेदाद्यागभेद इत्यत्राह—तदेवमिति । यस्मादेवमप्राप्त एव साधने विधिः पुरुषं प्रवर्तयति तस्माद्विधेयं विधिविषयोऽनन्यप्राप्त एव, अप्रवृत्तप्रवर्तनात्मकत्वाद्विधेरिति प्रतीतेर्भिन्नो विधिः स्वप्रवृत्तिद्वारा विधेयमपि यागादि स्वतो भिनत्तीति विधेयं विध्यन्तरविषयाद्यागादन्यदेव तावदवगम्यते, प्रवर्तककार्याभिधायित्वाल्लिङः । प्रवृत्तेश्च स्वतोऽप्रवृत्तविषयत्वात् । अप्रवृत्तप्रवर्तको लिङाद्यर्थ इत्युक्तं षष्ठाद्ये ग्रन्थकारेण । अतोऽविशेषपुनः श्रुतेः विधिभेदे विधेयस्वभावाद्विधेययागभेद इत्यर्थः । ननु पौर्णमासीं यजत इत्यादौ विद्वद्वाक्ये प्राप्तयागान्वितो विधिः दृष्ट इति कथमयं विधेरप्राप्तगोचरत्वं स्वभावत इति चोदयति–नन्विति । नैवमिति । अप्रवृत्तप्रवर्तकत्वाद्विधेः सर्वत्राप्राप्तगोचरतैव स्वभाव इति । एवं औत्सर्गिकोऽर्थः यत्रापवादस्तत्रापवादान्न भवतीत्यर्थः । विद्वद्वाक्ये तु अपवादान्न तथैवेत्याह—तत्र विषयेति । तत्र विद्वद्वाक्ये द्रव्यदेवताख्यरूपाभावेन विधिविषयतया यागान्तरानिर्वाहात् निर्वाहितपूर्वविषयमेवापूर्वकार्यमेव लिङादिर्वदतीत्यर्थः ।

नन्वेवमप्रवृत्तप्रवर्तनात्मककार्यावस्थानभिधाने लिङादेरत्र तदर्थताहानिरित्यत्राह-कार्यावस्थामिति । स्यादेवं यदि कार्यावस्थानभिधानं स्यात् । इह लिङादि-

२. विधिविषय B

क्रान्तामनुवदतीति नतु तदवस्थामुपस्थापयतीत्यनुसन्धेयम् । इह तु लिङादेः प्रत्युच्चारणं विधिरूपार्थभेदात् विधेयभेदोऽप्यवगम्यते । स च निर्वहतीति अनुबन्धभेदाच्छास्त्रभेद इति सिद्धान्तः । एवञ्चाभिधानान्तरे विशेषादपि भेदः । अभ्यासे त्वविशेषादिति न्यायद्वयम् ।

---

कार्यावस्थामतिक्रान्तामाग्नेयादिवाक्यवर्तिनीं अवगतरूपामनुवदति । नत्वनवगतरूपामेतद्वाक्यवर्तिनीमुपस्थापयतीति कार्यावस्थाया अहानात् न तदर्थतापायः । सर्वत्रैव हि अनुवादे तद्देशकालावस्थायितयैवावगमात् नैतद्देशकालास्थायितयेत्यर्थः। ननु सर्वाङ्गविधीनामनुवादकत्वात् प्रयाजादिविधीनामपि अनुवादकत्वैवेति को विशेषो विद्वद्वाक्यात् । किञ्चानुवादे स्मृतिरेवेयं स्यात् न प्रमितिरिति प्रामाण्यं वा कथमित्यत्राह—इत्यनुसन्धेयमिति ।

अयं भावः अङ्गविधिषु निरधिकारतया अनुवादशङ्काकुण्ठितशक्तितया प्रथमं विध्यनवगमात । साधिकारविधिपरतन्त्रतया तत्प्रेरणाशक्तेः अत्रावतारात् कार्यांशेऽनुवादतोक्तिः । विषयांशे तु अज्ञातज्ञापनमस्त्येव । विद्वद्वाक्ये तु विषयांशेप्यनुवादतेति भेदः । अनुवादत्वेपि न प्रमितिताहानिः मानान्तरनिरपेक्षत्वात् वैदिकानुवादे सर्वत्रैवमेवेति । इह तु समिदादिवाक्ये विद्वद्वाक्यवन्नानुवाद इत्याह—इह तु लिङादेरिति । प्रत्युच्चारणं विधिरूपार्थभेदः सिद्धान्तोपक्रमदशायामुपपादितः । तद्भेदाच्च विधेयभूतयागभेदः । स च निर्वहति । जौहवाज्यद्रव्यलाभात् मान्त्रवर्णिकदेवतालाभाच्चेत्यर्थः । निगमयति— इत्यनुबन्धेति । अविशिष्टपुनः श्रुतिरूपाभ्यासात विधिभेदद्वारेण विधेयतयागादिभेदे अनुबन्धभेदाच्छास्त्रभेदः सिद्ध्यतीत्यर्थः । नन्वेवं क्रयव क्येपि भूअभ्यासाद्भेदापत्तिः । तथा समिधो यजतीत्यत्र नामगतबहुत्वसङ्ख्यापाः समिद्यागस्यैव किमिति न भेदः इत्यत्राह— इति राद्धान्त इति ।

अयं भावः—न तावत् क्रयस्य भेदः गुणकर्मत्वात् । गुणकर्मणां हि कार्यभेदादेव भेदो नान्यथा । कार्यं च तत्रैकमेव सोमाख्यं अजादिद्रव्याणामेकस्मिन्नेव क्रये यथा समुच्चयः तथा द्वादशे वक्ष्यते । तथा समिद्यागस्य न नामगतसङ्ख्यया भेदः यजिपरतन्त्रनामगतत्वात् । यजेश्च स्वरसादेकत्रैव वृत्तिः । अतो बहुवचनस्वरूपमेवेदमेकस्यैव नाम । अतएव पञ्चप्रयाजान् यजतीत्यनुवादोपपत्तिरपि । अन्यथा पञ्चत्वानुपपत्तेरित्यनुसन्धेयम् ।

नन्वेवं पूर्वाधिकरणं व्यर्थं व्युत्पाद्यन्यायभेदाभावादित्याशङ्क्याह—एवं चेति । नन्वेवं पूर्वन्यायस्य निष्फलत्वं दुष्परिहरं दण्डापूपनयहतत्वादित्यत्राह—

अत्रेदमनुसन्धेयम्—शब्दान्तराधिकरणे अनुबन्धभेदव्युत्पादनमुखेन शास्त्रभेदः । व्युत्पन्ने च तस्मिन् भावार्थभेद[1]प्रसाधनमुखेन त्वभ्यासादिषु शास्त्रभेदः कथ्यत इति ।

॥ ३ ॥ प्रकरणन्तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

पौर्णमासीं यजते" "अमावास्यां यजत" इत्यभ्यासात् कर्मचोदना युक्ता ।

---

अत्रेदमिति । शब्दान्तराधिकरणे गुणत्वातिरिक्तविषयत्वप्रसाधनादनुबन्धभेदव्युत्पादनमुखेन शास्त्रभेदव्युत्पाद्यता । व्युत्पन्ने च तस्मिन् करणत्वातिरेकिविषयत्वे अभ्यासाद्यधिकरणे भाधार्थभेदप्रसाधनमुखेनानुबन्धभेदाच्छास्त्रभेदः कथ्यत इति स्थूलसूक्ष्मन्यायेन प्रतीतीनां क्रमेण जायमानत्वाद्वा न गतार्थतादोष इत्यर्थः ।

॥ ३ ॥ प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

दर्शपूर्णमासयोः यदाग्नेयोऽष्टाकपाल इत्यारभ्य ऐन्द्रं पयोऽमावास्यायामित्यन्तैर्वाक्यैः आग्नेयादिपयोऽन्तं कर्म विहितम् । तथा आघारमाघारयतीत्युपक्रम्य ध्रुवया समिष्टयजुर्जुहोतीत्यन्तैः आघारादीनि समिष्टयजुरन्तान्यङ्गानि । तथा य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इति वाक्यद्वयमाम्नातम् । तत्र चिन्ता—किमाग्नेयादीनामाघारादीनां च सर्वेषां समप्राधान्यं उताग्नेयादिपयोऽन्तानि प्रधानानि । आघारादीनि समिष्टयजुरन्तान्यङ्गानीति तदर्थमियं चिन्ता—किं य एवं विद्वानिति वाक्यद्वयं कर्मद्वयस्य विधायकमुत प्रकृतकर्मत्रयानुवादकमिति । तत्राद्या प्रयोजनचिन्ता । सा च साक्षात्सङ्गतेति वक्ष्यते । तत्र पूर्वपक्षेपि यद्यपि इतरेषां हन्त्यादीनामङ्गत्वमस्ति तथापि सिद्धान्त्यभिमतमाघारादेरङ्गत्वं नास्ति । द्वितीया तु मूलचिन्ता । सा च शास्त्रभेदापवादकतया च सङ्गता अध्याये । तत्रावान्तरसङ्गतिं सूचयन् मूलचिन्तापूर्वपक्षमाह—पौर्णमासीमिति ।

यद्यपि यजत इति वर्तमाननिर्देशात् अनुवादसरूपता तथापि विधिस्वरसत्वात् सर्ववाक्यानां विधौ सम्भवति अनुवादत्वायोगात् पञ्चमलकारकल्पनाच्च पौर्णमासीं यजत इत्यादिवाक्यद्वयेन पूर्वाधिकरणन्यायेन अभ्यासादाग्नेयादिभ्यः

---

१. प्रतिपादन B

ननु कथमत्रोपपदान्वयः न तावत् नामता, 'पौर्णमास्यां पौर्णमास्ये'ति वाक्येन कालविधिमादाय प्रवृत्तिनिमित्तलाभान्नामता; इतरेतराश्रयप्रसङ्गात् कालविधेरेवासंभवात्। न चोपपदार्थविशिष्टयागविधिः। पौर्णमासी हि कालत्वेन वा देवतात्वेन वा विधेया। न चोभयत्रापि

---

कर्मान्तरचोदनैव युक्तेत्यर्थः। ननु कर्मान्तरविधौ पौर्णमासीमित्युपपदमनन्वितार्थमेव स्यादिति चोदयति—नन्विति। न कथमपीत्यर्थः। कथमनन्वय इत्याशङ्क्य किं नामतयोपपदमन्वयि किं वा गुणविधितयेति विकल्प्य नामपक्षं दूषयति—न तावदिति। न नामता प्रवृत्तिनिमित्ताभावादिति शेषः। आज्यादौ तु रूढिशब्देऽर्थवादावगतयागबलात् कथञ्चित् प्रवृत्तिनिमित्तलाभान्नामता युक्ता। नेह तथेत्यर्थः ननु यथा अग्निहोत्रमित्यत्र यदग्नये चेति भाविनीं देवतामादाय भाविप्रवृत्ति निमित्तापेक्षया नामता तथाऽत्रापि पौर्णमास्यां पौर्णमास्या यजेतेत्यादिवाक्येन भाविकालविधिमादाय प्रवृत्तिनिमित्तलाभान्नामता युक्तेत्याशङ्क्याह—पौर्णमास्यामिति। पूर्वं नेति पदमत्रापि सम्बध्यते। तत्र हेतुः इतरेतराश्रयप्रसङ्गादिति। सति नामत्वे नाम्ना कर्मोद्दिश्य कालविधिः तद्विधौ च नामतेत्यन्योन्याश्रयप्रसङ्गात् विधीयमानकर्मद्वये कालविधेरसम्भवात्। यदग्नयेचेत्यत्र तु न नाम्ना कर्मोद्दिश्य देवताविधिः। किन्तु जुहोतिनैव। न चात्रापि यजिपदेनैवोद्देशः प्रयोगाङ्गत्वात् कालविधेः।

प्रयोगश्चानुष्ठानरूपा कृतिः सा च साङ्गप्रधानाश्रिता। तस्य प्रयोगस्य कालापेक्षित्वात् अपेक्षितविधेः प्रयोगशेषतयैव कालविधिः न यागस्वरूपशेषतया। अतो न यजतिपदमुद्देशकं प्रयोगावस्थोद्देशश्च पौर्णमासीनाम्न एव प्रयोज्यस्वरूपे कालस्य प्राप्तत्वात्। न चाप्राप्तकालाङ्गरूपप्रयोज्यशेषतया विधिः नामानन्वयादेव। अतोऽप्राप्तकालप्रयोगावस्थं कर्म नाम्नोद्दिश्य प्रयोगशेषतया कालविधिः तथा च प्राप्ताप्राप्तविवेकेन नाम्नोऽङ्गान्वितावस्थप्रयोगे साधनत्वेन कालविधिः न चाङ्गानां मुख्यकालत्वमिति न्यायबलादेवाङ्गानां प्रधानकालत्वेन पौर्णमास्यादिसम्बन्धः प्राप्त एवेति विधिवैयर्थ्यं स्यादेवेति वाच्यम्। यतो न्यायाद्वचनस्य शीघ्रत्वात् अज्ञातज्ञापनताऽस्त्येव। न्यायाच्च प्रधानप्रचितिलक्षणकालप्राप्तिः न ग्रहक्रियाप्रचितिरूपः पौर्णमास्यादिकालः। तत्र वचनेन पौर्णमासीकाले षष्टिघटिकापरिमिते प्राप्ते तत्रापि विशेषापेक्षायां प्रधानप्रचितौ सत्यां अङ्गानीति अङ्गादीनां प्रधानकालतान्यायात्। एतच्चैकादशे निपुणतरं वक्ष्यामः अतो विधीयमानकर्मद्वये पौर्णमास्यादिवाक्येन न कालविधिः सम्भवतीति भावः। गुणविधितया वाऽन्वय इति यो द्वितीयः कल्पः तं दूषयति—न चेति। उपपदार्थ-

द्वितीयान्वयः। काले हि सप्तमी स्यात् देवतायां चतुर्थीति। मैवम्। अभ्यासात्कर्मविधौ स्थिते कालविशिष्टविधाने च द्वितीया, कालाध्वनोरिति सूत्रेण मासमग्निहोत्रमितिवद्युक्ता।

केचित् तु पौर्णमासीं ज्ञात्वेत्यध्याहारं व्यत्ययं वा कर्मत्वत्यागेनैकत्वपरं वा वदन्ति। तत्त्वतिप्रौढवादेन। ननु रूपान्तररहिततया कर्मान्तर-

---

विशिष्टयागविधिरपि न सम्भवति कथमित्याशङ्क्य विशेषणभावेन सम्भावितं प्रकारद्वयमाह—पौर्णमासीति। दूषयति—न चेति। द्वितीयान्तोपपदस्य प्रकारद्वयेऽप्यनन्वय एव। तत्र हेतुः—काले हीति। विष्णुं यजतीति त्वनुवादकं वाक्यमिति निर्वाह उक्तः। विधायकत्वेपि अगत्या उद्देशक्रियाकर्मतया तत्र द्वितीया। इह त्वनुवादकत्वेन नामत्वाद्भावनाकर्मतया द्वितीयान्तस्य समिदादिवदस्ति गतिरित्यनुवादकतैव युक्तेत्यर्थः।

मैवमिति। सर्ववाक्यानां विधिपरत्वात् विधौ तात्पर्येऽवधृते अभ्यासन्यायात् कर्मविधौ च स्थिते उपपदान्वयार्थं कालविशिष्टकर्मविधाने तात्पर्येऽवधृते द्वितीया कालाध्वनोरत्यन्तसंयोग इति सूत्रेण मासमग्निहोत्रं जुहोतीतिवद्युक्ता। न च विशिष्टविधौ गौरवापत्तेर्वरं प्रकृतेषु सर्वकर्मसु केवलकालविधिः। कालात्यन्तसंयोगयोरेकपदार्थत्वान्न गौरवापत्तिरिति वाच्यम्। यतः तथासति विधिवैषम्यापत्तेः आग्नेयादित्रये कालस्य प्राप्तत्वादनुवादः। अत्यन्तसंयोगस्य तु विधिः। प्रयाजादौ तु कालस्यापि विधिरिति। न च प्रयाजादावपि प्रयोगाङ्गकालविधित एव कालप्राप्तेः अत्यन्तसंयोगमात्रविधेर्न वैषम्यमिति वाच्यम्। पदार्थैकदेशस्य विधानायोगात्। अत एव त्र्यङ्गैः स्विष्टकृतमित्यत्र अपूर्वत्र्यङ्गविधिरुक्तः। अतो गौरवेऽपि कालविशिष्टकर्मविधिरेव युक्त इति भावः। प्रकाशादयस्तु। कालोपपदान्वयनिर्वाहमेवं वदन्ति। पौर्णमासीं ज्ञात्वेत्यध्याहारोऽस्तु। अथातोऽग्निमग्निष्टोमेनानुयजन्तीत्यत्र अग्निं चित्वेत्यध्याहारवत्। यद्वा न प्रयाजशेषादिवत् विभक्तिव्यत्ययोऽस्ति पौर्णमास्यामित्यर्थे पौर्णमासीमिति। अथवा ग्रहं सम्मार्ष्टीति यथा एकत्वत्यागेन कर्मत्वपरता तथा कर्मत्वत्यागेनैकत्वपरतास्त्वति तदाह—केचित्त्विति।

दूषयति—तत्त्विति। अयं भावः—अथातोऽग्निमग्निष्टोमेनानुयजन्तीत्यत्र युक्तोऽध्याहारः अन्यथाऽग्निपदस्य मुख्यार्थस्य सर्वथाऽनन्वयात्। इह त्वध्याहारं विनापि द्वितीयान्तपदस्योपपदविभक्तिस्वीकारेणाप्यन्वयोपपत्तौ तत्कल्पनायोगात्। अत

विधेरनिर्वाहः । मैवम् । ध्रौवाज्यमस्त्येव द्रव्यं वार्त्रघ्नीमन्त्रविधेः तन्मन्त्रवर्णतो देवतालाभात् रूपवत्ता । ननु पौर्णमासीनामत्वे सति 'पौर्णमास्यामनूच्येते' इति मन्त्रविधिः । अन्यथा क्रमादाज्यभागयोरेव स्यात् । मैवम् । अपेक्षितविधेः पौर्णमास्यामित्यनेन लक्षणया पौर्णमासीकालयुक्तं कर्मोपस्थाप्य मन्त्रविधिरदोषः । आज्यभागयोस्तु 'यस्यै कस्यैचित्' इति पुराकल्पसरूपेण वाक्येन अपेक्षया अग्नीषोमयोः प्राप्ते रूपवत्ता । अथवा अव्यक्तत्वेन सौमिकधर्मप्राप्ते रूपवत्ता ।

---

एवोत्तरं पक्षद्वयमप्ययुक्तम् । यथाश्रुतान्वयहानापत्तेः प्रयाजशेषादौ तु यथा तत् तथा तत्र वक्ष्यामः । न च पौर्णमासीं विद्वानित्येवमन्वयात् यथाश्रुतान्वयो वाच्यः एवमिति पूर्वप्रकृतस्यैव वेत्तिकर्मत्वात् तदन्वयनिराकाङ्क्षस्य विद्वानित्यस्य चरमश्रुतपौर्णमासीमित्यनेनान्वयाभावात् आख्यातसम्बन्धस्य चाभ्यर्हितत्वात् यजत इत्यनेनैवान्वय इति पूर्वोक्तैवरीतिरिति । नन्वेवमपि विधीयमानस्य कर्मान्तरस्य द्रव्यदेवताख्यरूपान्तराभावादनिर्वाह इति प्रकृतरूपवद्यागानुवादतैव युक्तेति चोदयति—नन्विति । मैवमिति । सर्वस्मैवाक्यविहितध्रौवाज्यस्य विद्यमानत्वात् द्रव्यलाभः । एवमपि कथं देवतालाभ इत्यत्राह—वार्त्रघ्नीति । वार्त्रघ्नी पौर्णमास्यामनूच्येते इत्यनेनास्मिन् कर्मणि वार्त्रघ्नीमन्त्रविधेर्मान्त्रवर्णिक देवतालाभात् कर्मद्वयस्यापि रूपवत्तेत्यर्थः । ननु वार्त्रघ्नीमन्त्रविधिरेवायुक्तः विद्वद्वाक्यस्थपौर्णमासीपदस्य नामत्वाभावात् तद्भावे च पौर्णमास्यामनूच्येते इति मन्त्रविधिः स्यात्। तदभावे क्रमादाज्यभागयोरेव मन्त्रविधिः स्यादिति चोदयति—नन्विति ।

मैवमिति । सत्यमेवं तथापि पौर्णमास्यामिति कालवाचिनैव पदेनापेक्षितविधिबलात् लक्षणया कालयुक्तं कर्मोपस्थाप्य मन्त्रविधिः नतु दुर्बलात् क्रमादाज्यभागान्वयः इत्यर्थः । ननु आज्यभागयोरपि देवतापेक्षाविद्यत इति कथं तद्व्यावृत्तिरित्यत्राह—आज्येति । आज्यभागयोस्तु यस्यैकस्यैचित् देवतायै हविर्निर्वपन्नाज्यस्य नौपुरस्ताद्यजन् इति पुराकल्परूपेण वाक्यशेषेण देवताया अग्नीषोमयोः प्राप्तेरस्त्येव रूपवत्ता । न च वार्त्रघ्नी अनूच्येते इति द्विवचनबलादाज्यभागयोर्विधिः । अपेक्षितविधिबलात् तत्रैव विधौ स्थिते मन्त्रयोर्विकल्पात् देवताविकल्पोऽस्तु । न च वार्त्रघ्नीनयविरोधः । एतत्सिद्धान्तसिद्धौ तदवतारात् । अतोऽत्रैव मन्त्रविधेः तल्लिङ्गाद्देवतालाभात् कर्मान्तरनिर्वाह इत्यर्थः । परेषां पक्षमाह—अथवेति । अभिधानप्रसिद्धचा विहितयागनिर्वाहार्थं देवताकाङ्क्षायां अव्यक्तानां तु सोमस्य इति न्यायेन अव्यक्तद्रव्यदेवताकत्वेन चोदनालिङ्गेन सौमिकधर्मप्राप्तेः देवतालाभादुपपत्तेरित्यर्थः ।

यद्यपि अधिकारविधेरितरकरणार्थमाकाङ्क्षा नास्ति तथाप्येतद्यागस्य रूपलाभार्थं युक्ता। एतच्च प्रौढिवादमात्रमिति मूलचिन्तामात्रमिति—

पूर्वः पक्षः—राद्धान्तस्तु कालसम्बन्धा हीयं चोदनेति कालयुक्तानामाग्नेयादीनां पुनःश्रुतिरिति विशेषावगमात् तेषामेवानुवादः।

ननु कालविशिष्टयागविधिरुक्तः। न युक्तो द्वितीयासंयोगे काल-

---

ननु दर्शपूर्णमासाधिकारविधेः सम्पूर्णोपदेशतया अन्यतो धर्मानाकाङ्क्षित्वात् अधिकारविधेरेवातिदेशकत्वात् कथं सौमिकधर्मातिदेशोऽत्रेत्याह—यद्यपीति। सत्यमधिकारविधेः सम्पूर्णोपदेशकत्वात् आग्नेयादीनां करणानामन्यतो धर्माकाङ्क्षा नास्ति तथापि विद्वद्वाक्यद्वयविहितयागद्वयस्य द्रव्यदेवतार्थमाकाङ्क्षित्वं युक्तमित्यर्थः। दूषयति—एतच्चेति। अयं भावः—नात्र सौमिकोपकारमुखेन तद्धर्मप्राप्तिर्युक्ता। सोमे हि दार्शपूर्णमासिकाङ्गप्राप्तिपूर्विकैवोपकारक्लृप्तिः। तत्र यदि सोमाङ्गैः प्राप्तेरत्रोपकारक्लृप्तिरुच्येत तदा आत्माश्रयः, अन्योन्याश्रयो वा स्यात्। दीक्षणीयादिकं प्रति तस्यैवोपकारकत्वापत्तेः। तथा चानुष्ठानानुपरमः स्यात। उपरतौ वा कस्यचिदङ्गस्य लोपेन वैगुण्यं स्यात्, आरम्भणीयापूर्वपक्षवत्। तथा आष्टमिकमूलचिन्ताविरोधश्च। सर्वमेतत् गत्यन्तरे सति न युक्तमिति पूर्वोक्तैव रीतिः पञ्चिकोक्तत्वाच्च युक्तेति। ननु य एवं विद्वानिति वाक्यस्य कथं विधायकत्वं यदुपबन्धेन विधिप्रतिबन्धादित्यत्राह—इति पूर्वपक्ष इति। प्रधानवाक्यस्वरससिद्धं यजिपदस्वरससिद्धं च विधित्वं न बहिरङ्गो यच्छब्दोऽपहर्तुमलं यदाग्नेयवदित्यर्थः।

राद्धान्तस्त्विति। कालसंयुक्ता हीयं चोदना पौर्णमासीं यजत इति पौर्णमासीपदात् कालस्मृतेः। अतः किमित्यत्राह—इति कालेति। कालयुक्तत्वाद्धेतोः सन्निहितवाक्येषु कर्मत्रयं कालयुक्ततयैव प्रतीतमिति तत्कालयुक्तानामग्नेयादीनां प्रत्यभिज्ञानात् तेषामेवेयं पुनः श्रुतिरिति विशेषावगमादविशेषपुनः श्रुतित्वाभावेनाभ्यासन्यायान्न विधिभेद इति तेषामनुवाद इत्यर्थः। नन्वाग्नेयादिवाक्येषु कालसम्बन्धिष्वपि कालविशिष्टकर्मान्तरविधेः यथा नान्योन्यमनुवादः तथाऽत्रापि कालविशिष्टयागविधिः पूर्वपक्षे उक्त इति चोदयति—नन्विति। न युक्त इति। सत्यमुक्तः द्वितीयासंयोगात् कालविधौ हि सप्तमी स्यात् आग्नेयादिवाक्यवत्। द्वितीयातश्च समभिव्याहृतक्रियाकर्मत्वं प्रतीयते। न च कालः कर्मणि साक्षात्कर्मेति मुख्यार्थस्यान्वयायोग्यत्वात् द्वितीयान्तपदेन सम्बन्धात् कालयुक्तं कर्म प्रकृतं

विधिः । ननु कालाध्वनोरिति सूत्रेण कालेऽपि द्वितीयेत्युक्तम् । अयुक्तमिदं उपपदविभक्तिर्हि सा । सा च परिहृता भवति अनुवादत्व इत्ययमेव विशेषोऽनुवादत्वे हेतुः । एवञ्च कथञ्चिद्वार्त्रघ्नीमन्त्रविधिमाश्रित्य रूपवत्ता

---

लक्षणयोपस्थाप्यते यजतिरपि तदनुसारात् तदनुवादक एव न कर्मान्तरविधायकः तस्य विनियोगतः अन्यतो वा इतः पूर्वं कालसम्बन्धाप्रतीतेः उपपदानन्वये प्रतीयमानविनियोगभङ्गावगतेः । अतः कालविशिष्टकर्मविधिर्युक्त इत्यर्थः । ननु विधेयेपि काले द्वितीयोपपन्नैव मासमितिवत् कालाध्वनोरिति विधानादित्युक्तमिति चोदयति—न्विति । अयुक्तमिति । कालाध्वनोरिति द्वितीयावर्णनमयुक्तं अगतितया मासादौ तदाश्रयणम् । कथं द्वितीयाया अगतिकागतित्वमित्यत्राह—उपपदेति । यस्मात् सोपपदविभक्तिः तस्मान्न युक्ता, उपपदविभक्तेः कारकविभक्तितो दुर्बलत्वात् ।

ननु कारकविभक्त्यसम्भवे उपपदविभक्तिरप्याश्रयणीयेत्यत्राह—सा चेति । अनुवादकत्वेऽङ्गीक्रियमाणे कालयुक्तकर्मनामतया द्वितीयान्तकर्मणश्च कृत्यनीप्सिततया कारकविभक्तित्वोपपत्तेः उपपदविभक्तिः परिहृता भवति । चकारोऽनुक्तसमुच्चये । प्रत्यभिज्ञाबाधे च परिहृता भवतीत्यर्थः । नन्वनुवादकत्वे प्रथमोच्चारिते प्रधाने प्रातिपदिके लक्षणा स्यात् कालयुक्तकर्मपरत्वात् । तद्वरं जघन्यस्य प्रत्ययस्य उपपदविभक्तितया वर्णनम्, विधित्वानुसारात् यथा पाशानिति व्यत्यय इत्यत्राह --इत्ययमेवेति । योऽसौ कारकविभक्तिद्वितीयान्तविध्यनर्हपौर्णमासीपदयोगो वाक्यस्य अयमेव विशेषोऽस्य वाक्यस्यानुवादकत्वे हेतुः । अयं भावः । यद्यपि प्राथम्यं प्राधान्यं च प्रातिपदिकस्य प्रत्ययस्य जघन्यता गुणता च तथापि प्रातिपदिकलक्षणैव न्याय्या । अन्यथा प्रत्ययस्योपपदविभक्तित्वे हि कालविशिष्टकर्मविधौ अत्यन्तसंयोगो विधेयः । तथा यजिनाऽभ्यासो लक्षणीयः न हि अनभ्यस्तस्य कृत्स्नपौर्णमासीसंयोगः सम्भवति । न चासौ लक्षणा युक्ता यजेः प्रधानत्वात् । विधायकत्वाच्च विधौ लक्षणापत्तेः । अतः प्रातिपदिकलक्षणापि अनुवादकवाक्यवर्तितया न दोषाय । तथाऽनुवादपक्षे पौर्णमासीपदस्य यजिना सह सामानाधिकरण्येनान्वयः । विधौ तु वैयधिकरण्येन अतोऽपि नैव युक्ता । पाशादौ तु नैवंविधदोषान्तरमस्तीति । अनुवादकत्वे चायमपरो लाभ इत्याह—एवं चेति । वार्त्रघ्नी अनूच्येते इति द्विवचनपरतया द्वन्द्वोत्पन्नतया नित्यद्वित्वाज्यभागान्वय्यनूवचनप्रतीतेः तद्विहाय एतदेककर्मसम्बन्धितया मन्त्रविकल्पदेवताविकल्पाङ्गीकारेण वार्त्रघ्नीमन्त्रविधेराश्रित्य देवतारूपवत्ता न कल्पिता भवति । अत्रापि चकारोऽनुक्तसमुच्चयार्थः । ततश्च

न कल्पिता भविष्यति । न चाग्नेयादिवाक्यानि देवताविधिपराणि वाक्यभेदप्रसङ्गादिति प्रपञ्चितं भाष्ये । एवञ्च सत्यनुवादत्वे आग्नेयादिषु प्रवृत्तिनिमित्तसम्भवात् नामता ।

नन्वनुवादेऽपि प्रकृतानां रूपवतां सर्वयागानामेवानुवादो युक्तः; मैवम् , न हि रूपवत्त्वार्थोऽनुवादः किन्तु उपपदार्थभूतकालान्वयोपपत्तये । अतः कालयुक्तानामेवाग्नेयादीनामनुवादः ।

---

वार्त्रघ्नीनयविरोधश्च परिहृतो भवति इति । तत्र वार्त्रघ्नीमन्त्रयोः आज्यभागसम्बन्धप्रतिपादनादित्यर्थः । ननु विद्वद्वाक्यं कर्मविधायकमस्तु । आग्नेयादिवाक्यैः तत्र गुणविधिरस्तु । पौर्णमासीपदमत्र विधेयकर्मनामास्तु आग्नेयादिवाक्यैः कालप्राप्तेः प्रवृत्तिनिमित्तसम्भवात् । रूपवत्ता च एतैरेव द्रव्यदेवतालाभादित्यत्राह— न चेति । तत्र हेतुः - वाक्यभेदेति । उद्दिश्यानेकगुणविधाने वाक्यभेदः नानावचनव्यक्त्युद्बोधनतन्निरसनमुखेन भगवता भाष्यकारेण प्रपञ्चित इति विस्तरभयान्न लिख्यत इत्यर्थः । प्रकृताग्नेयाद्यनुवादकत्वे तु तत्र कालसंयोगस्य प्रवृत्तिनिमित्तस्य सम्भवात् नामतयोपपदान्वयोऽप्यविरुद्ध इत्याह—एवं चेति ।

ननु अनुवादकत्वेपि प्रकृतरूपवत्सर्वयागानुवादो युक्तः न केवलमाग्नेयादिषड्यागानुवाद इति चोदयति—नन्विति मैवमिति । स्यादेतदेवं यदि विधीयमानकर्मणो रूपाभावात् रूपवद्यागाभिधानार्थमनुवादः स्यात् । न चेह रूपाभावो ऽनुवादे मूलयुक्तिः किन्तूपपदार्थभूतकालान्वयोपपत्तये । ततः किमित्यत्राह— अत इति । यत एवोपपदार्थकालान्वयोपपत्तयेऽनुवादः अतः कालयुक्तानामेवानुवादो न सर्वप्रकृतयागानां, यद्यपि यजिः स्वतः सर्वप्रकृतवर्ती तथापि कांस्यभोजिनयात् विध्यनर्हद्वितीयान्तकालार्थोपपदानुसारात् कालयुक्तपर एव यजिर्युक्तः तत्रैव नाम्नः प्रवृत्तिनिमित्तलाभात् । वैश्वदेवपदे तु तृतीयान्ते तद्धितात् द्रव्यप्रतीतेः तस्य विधेयत्वं युक्तमिति मुख्य एवार्थो द्रव्यं विधेयतयाऽवगम्यते न कर्मपरत्वम् । अतश्च वैयधिकरण्येन वैश्वदेवेन यागं साधयेदिति गुणविधिबुद्ध्या यागस्यानुवाद्यत्वे ज्ञाते प्राप्तिप्रतिसन्धानसमये यदि शब्दात् सन्निधानाविशेषात् सर्वेषु प्रकृतेषु यागेषु प्रतीतेः तत्सम्बन्धिनस्तस्यान्यतमयागे गुणस्य प्रतीतेः गुणविध्ययोगात् विशिष्टविधौ च मत्वर्थलक्षणापत्तेः प्रत्यभिज्ञाहानिप्रसङ्गाच्च गुणविध्ययोगात् नामत्वे येष्वेव प्रतीतेषु गुणविधेरसम्भवः तेषां सर्वेषामेव नामान्वय इति यजिपरतन्त्रत्वान्न कांस्यभोजिनय इति यजिसङ्कोचकत्वम् ।

ननु पौर्णमास्यां पौर्णमास्येति कालयोगः यस्य तस्यानुवादो भवतु। मैवम्। अनुवादे हि सति पौर्णमासीनामप्रवृत्तौ आग्नेयादिषु साङ्गेषु कालविधिरिति न तत्कालयोगापेक्षोऽनुवाद इति। आग्नेयादेः पौर्णमासीयुक्तस्य पौर्णमासीवाक्यमनुवादः। अमावास्यायुक्तस्याग्नेयादेः अमावास्यावाक्यमनुवाद इति युक्तम्[1]। प्रयोजनं तु अनुवादद्वये समुदायद्वयापत्तेः

---

एतच्च त्रिपाद्यां वैश्वदेवाधिकरण एव प्रपञ्चितम्। अत एव पौर्णमासी यजिः कालयुक्तानामाग्नेयादीनामनुवाद इत्यर्थः।

ननु कालयुक्तानामनुवादेऽपि पौर्णमास्या यजेतेति यस्य कालयोगस्तस्यानुवादोऽस्तु। तथा च साङ्गप्रधानानुवादः स्यात्। न चोत्पत्तिकालयोगिनामेवानुवादो निरपेक्षत्वादिति नियमः उपांशुयाजे तदभावेन तदनुवादाभावापत्तेरिति चोदयति—नन्विति। मैवमिति। विद्वद्वाक्यस्यानुवादत्वे निश्चिते प्रकृतेषु यागेषु पौर्णमासीनामप्रवृत्तौ तेन नाम्नोद्दिश्य आग्नेयादिषु पौर्णमास्यामिति वाक्येन कालविधिः न तु यजिनोद्दिश्य कालविधिः तथा सति सर्वेषां पौर्णमास्यमावास्याकालविधौ सर्वेषां नामद्वयं स्यात्। तच्चायुक्तम्। अन्याय्यश्चानेकशब्दत्वमिति न्यायात् एकस्यानेकशब्दत्वानुपपत्तेः। अनुवादप्रयोजनं च समुदायद्वयाभावान्न स्यात्। तथा चतुर्होत्रा पौर्णमासीमित्यादिमन्त्रद्वयव्यवस्था च न स्यात्। अतोऽनुवादपूर्वकनामप्रवृत्तिसापेक्षणात् पौर्णमास्यामिति विधिः न तद्विहितकालयोगापेक्षानुवादो युक्तः, अन्योन्याश्रयापत्तेः किन्तूत्पत्तिकालयोगापेक्षयैव। एवमुपांशुयाजाननुवादापत्तिर्नास्ति उपांशु पौर्णमास्यां यजन् इति वाक्यान्तरविहितस्य पौर्णमासीकालस्योत्पत्तिकालतैव। उत्पत्तिकालान्तरशास्त्रेणैकशास्त्रत्वात्।

यद्वा आग्नेयाग्नीषोमीययोरुत्पत्तिमध्यमकाले उपांशुयाजस्योत्पत्तेः शीघ्रप्रतिपत्तितया उत्पत्तिकालता। यद्वा उत्पत्तिकालशब्देन प्रयोज्याङ्गकालोऽभिमतः पौर्णमास्यां पौर्णमास्येति कालः प्रयोगाङ्गम्। आग्नेयादौ तु कालः प्रयोज्याङ्गम्। पौर्णमास्यां यजन्निति कालः प्रयोज्याङ्गम्। यजन्निति यागस्वरूपोद्देशेन विधेः प्रयोज्याङ्गकालमध्यपाताच्च। अतएवोत्तराधिकरणे उपांशु पौर्णमास्यां यजन्निति वाक्यान्तरविहितकालयोगमाश्रित्याग्र्यप्रायलिङ्गमुक्तमिति भावः। ननु पौर्णमासीमित्येकवचनान्ते, कथं त्रयाणामनुवादकत्वमित्यत्राह— इत्याग्नेयादेरिति। पौर्णमासीकालयोगोपाधिरेकीकृत्य समुदायकल्पनया पौर्णमासीवाक्यं आग्नेयादित्रयानुवादकम्। अमावास्यावाक्यमपि तथेत्यर्थः। नन्वेवं कल्पनैव दोष इत्यत्राह— इति युक्तमिति। वाक्यस्यानन्यगतिकतया समुदायकल्प-

---

१. त्युक्तम् R

दर्शपूर्णमासाभ्यामिति प्रवृत्तं नामद्वयं सद्द्विवचनान्तं यद्वदति तदनुरोधेन यजेरपि तत्रैव तन्त्रद्वयकल्पनया प्रवृत्तिरिति न राजसूयवत् प्रकृतसर्वयागपरत्वम् । साक्षात् सर्वस्य कार्यान्वयादनानुगुण्यमपि उपपदार्थविनियोगानुरोधात् नियोगस्यापेक्षितमिति अधिकारचोदनानुप्रवेशात् आग्नेयादीनां

---

नयाप्यनुवादकत्वकल्पनमेव युक्तमित्यर्थः । नन्वनुवादकत्वेपि दर्शपूर्णमासपदस्याधिकारवाक्यस्थस्य यजिनामतया तत्परतन्त्रस्य राजसूयपदवत् सर्वयागपरत्वं किमिति न भवति यजेः स्वतः सर्वप्रकृतवर्तित्वात् ततश्चानुवादप्रयोजनं न स्यादित्याशङ्क्य प्रयोजनविचारराद्धान्तमाह—प्रयोजनं त्विति । अनुवादद्वये सति समुदायद्वयापत्तेः समुदायद्वयलाभात् अनुवादवाक्ये प्रवृत्तं दर्शपूर्णमासाभ्यामिति द्विवचनान्तं नामद्वयं प्रवृत्तनामतया कांस्यभोजिनयात् यजिनाऽनुरोध्यं सत् यद्वदति तदनुरोधाद्यजेरपि तत्रैव समुदायद्वये तन्त्रद्वयकल्पनया तन्त्रेण वर्तमानयजिशब्दद्वयकल्पनया वृत्तिरिति न राजसूयवत् प्रकृतसर्वयागपरत्वम् । राजसूयपदस्य तु प्रवृत्तनामताभावाद्युक्तं, प्रकृतसर्वपरत्वं इदं तु प्रवृत्तं नाम ।

केचित्तु तन्त्रद्वयकल्पनयेति विद्वद्वाक्यस्थतन्त्रद्वयादिति व्याचक्षते । न च विद्वद्वाक्ययोः पौर्णमासीपदममावास्यापदं च यागनामतया प्रवृत्तं दर्शपदं पौर्णमासपदं चाधिकारवाक्ये श्रूयते । तत्कथं तयोः प्रवृत्तनामत्वमिति वाच्यम् । यतोऽन्वारम्भणीयावाक्यशेषे दर्शो वा एतयोः पूर्वः पौर्णमास उत्तर इत्युपक्रम्य दर्शशब्देन अमावास्या वै सरस्वती पूर्णमासस्सरस्वान् इत्यमावास्याशब्देनोपसंहारात् दर्शशब्दस्यामावास्यायागनामताऽवगता । तत्समभिव्याहारात् पौर्णमासीयागनामता पूर्णमासपदस्य । अतस्ताभ्यां प्रवृत्तनामप्रत्यभिज्ञानम् । एतच्च चतुर्थोपान्त्याधिकरणे स्पष्टयिष्यते अतः प्रवृत्तनामानुरोधात् अधिकारवाक्यस्थयजेः विद्वद्वाक्यद्वयानूदितसमुदायद्वयवृत्तित एव तन्त्रद्वयकल्पना युक्तेत्यर्थः, । ननु प्रकरणस्थसर्वयागानां साक्षादधिकारवाक्यान्वयस्यापेक्षितत्वात् तद्बलाद्यजेरपि सर्वत्र प्रवृत्तिर्युक्तेत्यत्राह—साक्षादिति । सत्यं द्वये सर्वस्य साक्षान्नियोगान्वयोऽपेक्षितः तथापि विनियोगानुसारान्नियोगस्य उपपदार्थविनियोगानुरोधादनानुगुण्यमपि साक्षादन्वये विध्यपेक्षितमेवेति नाधिकारयजेः सर्वत्र वृत्तिरित्यर्थः ।

ननु भवत्वेवं समुदायद्वय एवाधिकारयजेर्वृत्तिः न प्रकृतसर्वयागे तथापि कथं प्रयोजनसिद्धिरित्यत आह—इत्यधिकारेति । इति उक्तप्रकारेण अधिकारयजिना आग्नेयादीनामेव विषयतया अधिकारचोदनानुप्रवेशात् विषयीभूतानामेव

---

१—प्रवृत्तैवेति B । २—नन्वितश्व B ।

प्रधानता, तद्बहिर्भावादाघारादीन्यङ्गानि इति। एतच्च फलवदफलन्यायापेक्षमप्येतत्सिद्धान्तायत्तमित्यस्यैव प्रयोजनम्। अङ्गत्वे च विकृतिषु प्रवृत्तिरित्यनुष्ठानपर्यन्तं प्रयोजनम्। ननु कर्मान्तरविधानेपि दर्शपूर्णमासोपपदस्य विहितकर्मद्वयनामत्वात् द्विवचनोपपत्तेश्च तत्रैव यजेः प्रवृत्तिरित्याघारादीन्यङ्गान्येव। मैवम्। कर्मान्तरत्वेपि प्रवृत्तिनिमित्तरहितं[1] तदुपपदं न नामतयाऽन्वितं किन्तु गुणत्वेनेत्युक्तम्।

ननु तथापि कालयोगावच्छेदेनाष्टानामेवाधिकारवाक्येऽनुप्रवेशोऽस्तु; मैवम्। अप्रवृत्तनामतया हि तदा यजिपरतन्त्रता। तथा च वैश्वदेववत्

---

करणत्वात् तेषामेव प्रधानता। आघारादीनां तु तद्बहिर्भावात् विषयत्वबहिर्भावात्, करणत्वाभावात् तान्यङ्गान्येवेति अङ्गप्रधानभावप्रयोजनसिद्धिरित्यर्थः। ननु फलवत्सन्निधावफलं तदङ्गमिति न्यायेनैतस्याङ्गाङ्गिभावस्य सिद्धेः कथं मूलविचारप्रयोजनताऽस्येत्यत्राह—एतच्चेति। सत्यमेतदेवं तथापि फलवत्त्वाफलवत्त्वभेदस्यैतन्मूलविचारसिद्धान्तायत्तत्वात् तस्यैवेदं प्रयोजनमित्यर्थः। ननु अङ्गत्वे प्रधानत्वे वा अनुष्ठाने विशेषाभावात् कथं प्रयोजनस्यानुष्ठानविशेषपर्यन्तत्वमित्यत्राह- अङ्गत्वे चेति। अङ्गत्वेप्रयाजादेर्विकृतिषु प्रवृत्तिरतिदेशतः अन्यथा नेत्यनुष्ठानविशेषपर्यन्तत्वं प्रयोजनस्येत्यर्थः। ननु विद्वद्वाक्ययोः विधायकत्वेपि प्रयोजनसिद्धिरस्त्येव दर्शपूर्णमासपदस्य विहितकर्मद्वयनामत्वात् द्विवचनोपपत्तेश्च तत्रैव यजेः वृत्तेः तद्बहिर्भावेनाघारादीनामङ्गत्वादिति चोदयति – नन्विति। मैवमिति। कर्मविधायकपक्षेपि यदि पौर्णमास्यमावास्यापदयोः नामतयाऽन्वयः स्यात् स्यादेतदेवं नत्वेतदस्ति। किन्तु गुणत्वेनेत्युक्तमित्यर्थः। न चैवमपि कालविशिष्टयागयोर्विधीयमानयोः आग्नेयादीनां कालयुक्तानां षण्णां यागानां चाष्टानां अधिकारवाक्ये विषयतया यजिनानुप्रवेशात् तेषामेव प्रधानत्वं आघारादीनामङ्गत्वेति विधिपक्षेपि प्रयोजनसिद्धिरिति चोदयति—नन्विति।

मैवमिति। विधिपक्षे पौर्णमास्यमावास्यापदयोरनामत्वे अधिकारवाक्यस्थदर्शपूर्णमासशब्दयोः न प्रवृत्तनामता। वाक्यान्तरप्रवृत्तत्वाभावात् किन्त्वत्रैव यजिसामानाधिकरण्यात् प्रवर्त्यम्, ततश्च यजिपरतन्त्रत्वमेव नाम्नो न नामपरन्त्रता यजेरित्यर्थः। ततः किमित्यत्राह—तथाचेति। तथा च सति यजेः स्वतः सर्वप्रकृतवर्तित्वात् तत्परतन्त्रनामापि वैश्वदेवपदवत् सर्वयजि-

---

१. रहितत्वेन

सर्वयजिनामता। दर्शशब्दस्य पूर्णमासशब्दस्य च दण्डिन्यायेनातत्काल-योगिनामपि लक्ष्यमाणत्वात्। तथा च समुदायद्वयाभावात् द्विवचनानुपपत्तिः।

न च लक्षणाद्वयात् लक्ष्यभूतसमुदायद्वयं युक्तम्। लक्ष्यगतञ्चेदं द्विवचनमिति द्विवचनं विधिपक्षे न युक्तम्। अतो विधिपक्षे अधिकार-वाक्ये यजेः यावत्प्रकृतयजिपरत्वमिति द्विवचनमनुपपन्नम्। एवं द्विवचन-

---

परं स्यात् न यजिसङ्कोचकम्। ततश्च दर्शपदस्यापि सर्वयागनाम्ना पूर्णमास-पदस्यापि।

ननु कथमतत्कालयोगिषु तच्छब्दप्रवृत्तिरित्यत्राह—दण्डीति। ततः किमित्यत्राह—तथा चेति। यथा दर्शशब्दः पूर्णमासशब्दश्च प्रत्येकं दण्डिन्यायेन प्रकृतसर्वयागपरौ तथा प्रकृतेषु यागेषु समुदायद्वयाभावात् दर्शाश्च ते पौर्णमासाश्चेति समासे दर्शपूर्णमासाभ्यामिति द्विवचनमनुपपन्नम्।

ननु लक्षकभूतकालद्वित्वात् लक्ष्यभूतसमुदायद्वये द्वित्वं भवत्वित्यत्राह—न चेति। तत्र हेतुमाह—लक्ष्येति। दर्शपूर्णमासाभ्यां यजेतेति यागसामाधिकरण्यात् लक्ष्यगतमेव द्विवचनं वाच्यं, तच्चाशक्यम्, विधिपक्षे यजेः सर्वप्रकृतवर्तितया समुदायद्वयाभावात्। अतो द्विवचनं विधिपक्षेऽनुपपन्नमेवेत्यर्थः।

ननु यथा विद्वद्वाक्यस्यानुवादकत्वपक्षे पौर्णमासीनाम्नः तद्वाक्ये प्रवर्त्य-त्वेपि तदनुरोधात् तत्कालयोगितोपाधिनैकीकृत्य आग्नेयादियागत्रयं तद्वाक्यस्थ-यजिराह। तथा अधिकारवाक्यस्थयजिरपि नाम्नः प्रवर्त्यत्वेपि तदनुरोधात् चतुष्टय पर एवास्तु विधिपक्षेपि। ततश्च समुदायलाभात् द्विवचनोपपत्तिरित्यत्राह—अतो विधीति। अधिकारवाक्ये हि यजिर्न विधेयतया यागार्पणपरः। किन्तु अधिकारसम्बन्धविधानार्थं प्रकृतयागार्पणपरः। स च स्वतो यावत्प्रकृतयागपरः तत्परतन्त्रस्य नाम्नो न तत्सङ्कोचकत्वमिति दण्डिन्यायेन प्रधानयज्यनुरोधात् प्रकृतसर्वपरत्वमेवेति न समुदायद्वयानुवादकत्वमिति द्विवचनमनुपपन्नमेव विधि-पक्षे। विद्वद्वाक्ये तु निरधिकारे कर्मस्वरूपविधिस्वरसमाख्यातमिति तस्य यदनु-वादकत्वं तत्समभिव्याहृतकालोपपदानुरोधादेवेति तद्बलात् कालयुक्तानामेवानु-वाद इति युक्ता तत्रैकवचनानुरोधात् समुदायकल्पनेति नाम्नस्तत्र यजिसङ्कोच-कत्वं युक्तमित्यर्थः। एवं च तदन्वयार्थं द्विवचनप्रतिरूपकबहुवचनकल्पनमा-पद्येतेत्याह—एवमिति।

प्रतिरूपकं बहुवचनं च बलादापद्यते। एवमुक्तरीत्या प्रसाध्यं प्रयोजनमिति तत्पुरस्सरमधिकरणं कृतम्। एतच्च करणेतिकर्तव्यतासाध्यभेदेन शास्त्रभेदान्तररूपमिति साक्षात्सङ्गतमध्यायेन।

नन्वितिकर्तव्यतासाध्यं करणोपकाररूपं करणसाध्यापेक्षं कुतश्शास्त्रं भिनत्ति। मैवम्। आराद्रुपकारकाणां हि व्यतिरिक्त एव करणोपकारस्साध्यः

---

नन्वेवमस्याङ्गप्रधानभावस्य प्रयोजनरूपत्वात् इतराधिकरणप्रयोजननवदन्त एवोक्तिर्युक्तेति किमिति तत्संशयपुरस्सरं मूलसंशयोपन्यासः कृतो भाष्ये इत्यत्राह—एवमिति। अविचारितमिदं प्रयोजनं न सिद्ध्यतीति न राद्धान्ते तदुपन्यासः किन्तु न्यायसाध्यत्वात् स्वतोजिज्ञासितत्वाच्च तत्पुरस्सरमिदमधिकरणं कृतमित्यर्थः। कथं तस्य स्वतो जिज्ञासितत्वमित्यत्राह—एतच्चेति। तच्चाङ्गप्रधानचिन्तारूपमधिकरणं करणेतिकर्तव्यतासाध्यभेदनिबन्धनशास्त्रभेदलक्षणे साक्षात्सङ्गतमिति स्वतो जिज्ञासितम्।

एतेनेदं निरस्तं यत् विध्यनुवादचिन्ताप्रयोजनत्वेपि अङ्गाङ्गिचिन्ता साक्षात्सङ्गततया चतुर्थ एवोचिता स्तुतशस्त्रप्रयोजनचिन्तेव दशमे इति। अत्रापि साक्षात्सङ्गतत्वात्। स्तुतशस्त्रप्रयोजनचिन्ता तु द्वितीये न साक्षात्सङ्गतेति भावः। ननु करणेतिकर्तव्यताशास्त्रयोर्न भेदः सम्भवति अन्योन्यनिरपेक्षसाध्यत्वाभावात् इतिकर्तव्यतासाध्यस्य हन्त्यादिसाध्यस्यैव करणसाध्यापेक्षत्वादिति चोदयति—नन्विति। मैवमिति। स्यादेतदेवं यदि करणशास्त्रापेक्षमितिकर्तव्यताशास्त्रं स्यात्। न चेह तथा। यद्धि शास्त्रं यच्छास्त्राननुप्रविष्टं स्वसाध्यं प्रतिपादयति तत्ततो भिद्यते आराद्रुपकारिणामपि यद्यपि करणैदसमर्थापन्नतया करणापेक्षिता साध्यसिद्धौ तथापि तेषां व्यतिरिक्त एव करणसाध्यात् पृथग्भूत एव करणोपकारः साध्यः। नासौ करणावान्तरकार्यप्रविष्टः करणावान्तरापूर्वाश्रितः आत्माश्रितत्वात्। न च यस्य तत्प्रत्यैदमर्थ्यं तत्साध्यस्य तत्प्रविष्टत्वनियमः परमापूर्वाधीनानामपि करणानां साध्यस्य तदनाश्रितत्वात्। किन्तु यस्य साध्यस्य यदाश्रितत्वेन प्रमाणादवगतिः तस्य तदाश्रितता। न च तस्य करणोपकारस्य करणावान्तरापूर्वाश्रितत्वे प्रमाणमस्ति। तज्जन्यानां करणसम्बन्धित्वेन करणीयसम्बन्धित्वेन वा श्रवणाभावात्। प्रत्युतादृष्टरूपतया करणोपकारस्यात्माश्रिततैव प्रमाणान्तरादवगम्यत इति करणावान्तरापूर्वानाश्रितता करणोपकारलक्षणसाध्यस्य। न च तच्छासकप्रयाजादीतिकर्तव्यताशास्त्रं करणावान्तरापूर्वशासकाग्नेयादिशास्त्रापेक्षं किन्तु यत्कार्याधीना यस्य कार्यता तत् तत्सापेक्षम्।

नासौ करणावान्तरकार्यानुप्रविष्टः। सन्निपातिनामेव तत्प्रविष्टत्वात् न तत्साध्यभेदात् शास्त्रभेदः इति। कथं तर्हि सम्भूयोपकारजनकत्वमुक्तम् ?

---

न च करणोपकार[1]कार्यता करणावान्तरापूर्वकार्यताधीना किन्तु परमापूर्वकार्यताधीनैव परमापूर्वप्रसूतत्वादाकाङ्क्षाणाम्। करणार्थतातूपकारस्य तत्कार्यसहायत्वात्। अतः करणशास्त्रादितिकर्तव्यताशास्त्रस्यानपेक्षतया भेद इत्यर्थः।

नन्वेवं सन्निपातीतिकर्तव्यताशास्त्रस्यापि करणशास्त्राद्भेदः स्यादित्यत्राह—सन्निपातिनामिति। सन्निपातिनां हन्तिप्रोक्षणादीनां यत्साध्यं तदेव करणावान्तरापूर्वाश्रितं करणीयान्वयित्वश्रुतेः। अतस्तदाश्रिततया तत्सापेक्षतायां न तत्साध्यभेदाच्छास्त्रभेदः। एतेनेदं निरस्तम्—यदुक्तं वैतुष्यादेर्दृष्टस्य न करणकार्यानुप्रविष्टतेति नियमादृष्टानुविद्धस्य तस्य करणीयसम्बन्धद्वारा करणकार्यानुप्रवेशात्। न च तदाश्रितत्वानाश्रितत्वे अप्रयोजके इति वाच्यम। तस्य सर्वत्र व्यभिचाराभावात्। यागनिर्वृत्त्युत्तरकालीनानां प्रतिपत्तिरूपसन्निपातिनां साध्यस्यापि करणकार्यानुप्रवेशित्वस्य "अनाद्यहङ्कारसनाथस्य" इत्यादिचतुर्थसाधितत्वादित्यर्थः।

ननु यद्यारादुपकारकाणां व्यतिरिक्तकार्यजनकत्वं सन्निपातिनां तु अव्यतिरिक्तकार्यजनकत्वं कथं तर्हि सन्निपातिनामारादुपकारिणामपि सम्भूयोपकारजनकत्वमेकादशे अङ्गाधिकरणे उक्तं तदभावे उपकारमुखतः सन्निपातिनामतिदेशायोगादिति चोदयति—कथं तर्हीति। परिहरति—उक्तमिति। प्रकरणपञ्चिकायामिति शेषः। अस्यार्थः—उपकारो हि लोके उपकार्यनिरूप्योऽवगतः। करणोपकारोऽपि करणविशेषनिरूप्य एव। आरादुपकारिजन्यस्यादृष्टस्यातिशयस्य करणोपकार इत्येव निरूपणम्, नान्यथा। करणविशेषसिद्धिश्च सन्निपातिवर्गनिबन्धना। तस्मादारादुपकारिभिरुपकारशरीरे निर्वर्तितेऽपि तस्य करणनिरूप्यत्वरूपं करणद्वारा सन्निपात्यधीनमिति करणोपकारसिद्धिः सन्निपात्यारादुपकाराधीनेति सम्भूय करणोपकारजनकता। एतच्च चतुर्थाद्ये प्रपञ्चयिष्यते। अतो नाङ्गाधिकरणविरोधोऽपि।

नन्वेवं सन्निपातिनामुपकारशरीराजनकत्वे कथं तन्मुखेन तेषां विकृतावतिदेशः तथा किमुपकारोऽनेककरणके दर्शपूर्णमासादौ प्रतिकरणं भिन्नः किं वा सर्वेषामेकः ? नाद्यः, सर्वैरेक उपकार इति मतहानापत्तेः। न द्वितीयः, तत्तद्विकृतिविशेषेषु तत्तद्देवतात्वादिचोदनालिङ्गैः तत्तदाग्नेयाद्युपकारस्यातिदेशतः प्राप्तिः।

---

१. साध्यता।

उक्तमुपकार्यविशेषायत्तत्वात् उपकारसिद्धेरित्यनुसन्धेयम् । मूलचिन्ता प्रयोजनचिन्तापर्यन्तेति तत्प्रसाधनमपि तत्प्रविष्टमिति नाधिकरणभेदः ॥

केचित्तु निष्प्रयोजनतया दूषितेऽनुवादे सम्यक् सिद्धान्तेन प्रयोजनसद्भावेन समाधातुं प्रयोजनान्तोऽनुवादो वाच्य इति एकाधिकरणत्वं वदन्ति । तदयुक्तं । निष्प्रयोजनोऽप्यनुवाद इत्यव्यापितया न सम्यक् समाधानमुचितमिति । शेषं सुगमम् ॥

---

तथा करणशास्त्रमितिकर्तव्यताशास्त्रं च[1] किं तत्तदुत्पत्तिवाक्यापेक्षया किं वा उपादानप्रकरणापेक्षया ? नाद्यः करणत्वोपकारयोः उत्पत्तिवाक्यमेयत्वाभावात् । न द्वितीयः । सौर्यादौ करणेतिकर्तव्यताशास्त्रयोर्भेदाभावापत्तेः विकृतौ करणत्वोपकारयोरुपादानैकगम्यत्वादित्यत्राह—इत्यनुसन्धेयमिति । अयं भावः—करणोपकारशास्त्रं उपादानमेवास्तु आग्नेयाद्युत्पत्तिवाक्यं वा । उभयथापि प्रकरणपञ्चिकायामुक्तेः तत्रोभयथापि न दोषः । उत्पत्तिवाक्यस्यापि उपादानप्रकरणसहायस्य करणत्वोपकारकादेकशास्त्रत्वात् । उपकारैकत्वं च प्राच्योदीच्यसन्निपात्यारादुपकारकरूपजनकपदार्थापेक्षया, न पुनः प्रकरणापेक्षया करणत्वभेदे तदुपकारिशास्त्रभेदस्य लोकसिद्धत्वात् । तथा उपकारशरीराजनकत्वेपि[1] सन्निपातिनां तस्य यत्करणनिरूपणीयत्वं रूपं तदाधायकतया करणोपकारजनकत्वमेवेति करणोपकारमुखतो विकृतावतिदेशे तदतिदेशो युक्तः । ननु मूलचिन्ताप्रयोजनचिन्तयोर्व्युत्पाद्यभेदादधिकरणभेदः स्यादित्याशङ्क्याह—मूलचिन्तेति । मूलचिन्ता हि पञ्चावयवतया प्रयोजनचिन्तापर्यन्ता तत्समाप्तावेव समाप्यते, नान्यथेति प्रयोजनप्रसाधनमपि मूलानुप्रविष्टमेवेति नाधिकरणभेद इत्यर्थः ।

प्रकाशस्तु एकाधिकरणत्वमन्यथा वर्णितवान् । निष्प्रयोजनतापि ह्यनुवादस्य दूषणं, साप्यत्र नास्तीति सम्यक् सिद्धान्तेन वक्तुं प्रयोजनान्तोऽनुवाद इत्युक्त इति । तदाह – केचित्त्विति । तदयुक्तमिति । न ह्यनुवादस्य निष्प्रयोजनत्वं दूषणं निष्प्रयोजनस्यापि [अनुवादो] दृष्टः । अतो न सम्यक् सिद्धान्तेन तत्समाधानमुचितमिति पूर्वोक्तैव रीतिरित्यर्थः । अत्र सवषट्काराहवनीयाहुतीनां चतुर्दशत्वादिलिङ्गदर्शनमुक्तम् । तद्भाष्य एव व्यक्तमित्याह—शेषमिति ।

---

१. B शरीरजनक ।

## ॥ ४ ॥ पौर्णमासीवदुपांशुयाजः स्यात् ॥ ६ ॥

अत्र पञ्चिकायामुपांशुयाजाद्यधिकरणत्रयस्यापवादकतया सङ्गतिः उक्ता। तत्र केचित् 'पौर्णमास्यपवादकतोक्तेत्याहुः। तदयुक्तम्। पौर्णमास्यपवादकत्वे हि पेटिकासङ्गतिमात्रं नाध्याये इति। अतोऽयमत्रार्थः। शास्त्रभेदापवादकतया लक्षणसङ्गतिः। पौर्णमास्यपवादकत्वात् पेटिका-सङ्गतिः इति उभयविवक्षया अपवादकतामात्रमुक्तमित्यनुसन्धेयम्।

---

## पौर्णमासीवदुपांशुयाजः स्यात्

दर्शपूर्णमासयोः श्रुत—जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावु-पांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्ट-व्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति, तत्र चिन्ता—किं विष्ण्वादिवाक्यविहितयागत्रयस्य उपांशुयाजमन्तरा यजतीति वाक्यमनुवादः, किं वा उपांशुयाजवाक्यं विधायकं विष्ण्वादिश्रवणमर्थवादः इति। ननु विध्यनुवाद-शङ्कायाः कथमध्याये शास्त्रभेदे सङ्गतिः इत्याशङ्क्य ननु यद्यपवादकतयेत्यादि पञ्चिकोक्तां सङ्गतिमाह—अत्र पञ्चिकायामिति। अत्र प्रकाशेन पौर्णमास्यधिकरण-मूलचिन्तायां य एवं विद्वान् इत्येवञ्जातीयवाक्यानां यत्समुदायानुवादकत्वमुक्तं तदुपांशुयाजमन्तरा यजतीत्यस्य न सम्भवतीत्यत्र साध्यं; तथा आघाराग्निहोत्रनये त्वग्निहोत्राघारवाक्ययोः। पशुसोमे तु अग्नीषोमीयं पशुमालभेत सोमेन यजेतेत्य-नयोरित्युपांशुयाजाद्यधिकरणत्रयस्यापि पौर्णमास्यपवादकतया सङ्गतिः पञ्चिको-क्तेत्युक्तम् तदाह—तत्र केचिदिति। तदयुक्तमिति। पौर्णमास्यपवादकत्वे पेटिका-सङ्गतिमात्रमुक्तम् स्यात् नाध्यायसङ्गतिः सैव वक्तव्येति नायं पञ्चिकाग्रन्थार्थ इत्यर्थः। कस्तर्हि अर्थ इत्यत्राह—अतोऽयमिति। पञ्चिकायां अपवादकत्ववाचा अध्यायसङ्गतिः पेटिकासङ्गतिश्चोभयं क्रोडीकृतम्। तत्र शास्त्रभेदापवादकतया ऽध्यायसङ्गतिः। पौर्णमास्यपवादकतया पेटिकासङ्गतिरित्यर्थः। ननु सकृदुच्चरित-वाक्येन कथमुभयोरुक्तिरित्यत्राह इत्युभयेति। विवक्षापरतन्त्रत्वात्पुंवाक्यानामु-भयविवक्षयाऽपवादकत्वमुक्तं पञ्चिकायाम्। तद्विवक्षाज्ञानं चापवादकत्वमात्रोक्तेः। अन्यथा पौर्णमास्यपवादकतयेत्युच्येत। अतोऽयमेव पञ्चिकार्थ इत्यर्थः। ननु शास्त्रभेदापवादकत्वमात्रमाघाराग्निहोत्रनयस्य न सिद्धयति उत्पत्त्यादिचतुष्टय-भेदेन शास्त्रभेदस्य तत्र व्युत्पाद्यत्वात्। अन्यथा कथमाद्ये उत्पत्त्यादिचतुष्टयसाध्य-भेदाच्छास्त्रभेद आघाराग्निहोत्राधिकरण इत्युक्तमित्यत्राह—इत्यनुसन्धेयमिति।

---

१. A पौर्णमास्यामप।

अत्र 'विष्णुरुपांशु यष्टव्य' इत्यादौ विध्यर्थकृत्यप्रत्ययश्रुतेः विष्ण्वादिरूपावगतेश्च यागविधिः उपांशुयाजमन्तरा यजतीति तु रूपविरहात् वर्तमानापदेशाच्च न द्राग्विधिरित्यनुवादः ।

ननु कृत्याद्विष्ण्वादिनिष्ठतावगतेः न यजेर्विधिविषयत्वम् । मैवम् । कार्यान्तराननुप्रवेशाद्विष्ण्वादेर्न तन्निष्ठता यजेः ।

ननु जामितादोषोपक्रमं तन्निबर्हणान्तमेकं वाक्यं प्रतीयते,

---

सत्यमेवं सतु आर्थः तात्पर्यतस्तु अनुबन्धभेदाच्छास्त्रभेदकतैव तस्यैव स्फुटत्वात् । अतस्तस्याप्यपवादकतैव । अपोदितादितरत्र व्यवस्थापनार्थत्वाल्लक्षणे सङ्गतिरिति भावः । ननु भवत्वेवमध्याये पेटिकायां च सङ्गतिः तथापि कथमवान्तरसङ्गतिरित्यत्राह—अत्रेति । विष्णुर्यष्टव्य इति विष्ण्वादिवाक्येष्वेव यागविधिः । यष्टव्य इति तव्यप्रत्ययरूपकृत्यप्रत्ययश्रुतितः कृत्यानां "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इति विध्यर्थतया स्मृतेः । विष्ण्वादिवाक्ये झटिति विधिस्मृतेः विष्ण्वादिरूपदेवतालाभाच्च । न च विष्णुर्यष्टव्य इति तद्धितचतुर्थ्यभावात् न देवताप्रतीतिरिति वाच्यम् । विष्ण्वादीनां प्रकारान्तरेणान्वयाभावात् । अपेक्षितविधिबलाद्देवतात्वेनैवान्वयः । अन्यथा समभिव्याहृतयजिश्रुतेरपर्यवसानादित्यर्थः । उपांशुयाजवाक्ये तु सर्वमेतद्विपरीतमित्याह—उपांश्विति । ननु समिधो यजतीत्यादिवत वर्तमानापदेशेऽपि पञ्चमलकारकल्पनया किमिति न विधिरित्यत्राह—न द्रागिति । अन्तरा यजतीत्यत्र कल्पनापेक्षतया यागरूपाभावाच्च यागविधिर्न द्रागिति तन्निरपेक्षरूपयुक्तविष्ण्वादिवाक्य एव यागविधिः । समिदादौ तु अगत्या कल्पनमिति भावः । नन्वेवमविधायकत्वे उपांशुयाजवाक्यस्य कथं कार्यान्वितार्थत्वमित्यत्राह—इत्यनुवाद इति । विद्वद्वाक्यवदनुवादतया कार्यान्वितत्वमित्यर्थः ।

ननु कर्मार्थकृत्यप्रत्ययात् विष्ण्वादिनिष्ठत्वावगतेः न यजेर्विषयत्वं युक्तम् अनन्यसाध्यकस्य विषयत्वनियमादिति चोदयति—नन्विति । मैवमिति । प्रकरणे च कार्यान्तरसाधनतया विनियोगाभावान्न तच्चिकीर्षितार्थतेति न विष्ण्वादिनिष्ठता यजेः । अतो हिरण्यभरणवत स्वाध्यायाध्ययनवत् सक्तुहोमवत् नियोगविषयतैव यजेरित्यर्थः । ननु विष्ण्वादिवाक्यानां यागविधायकत्वे प्रतीयमानैकवाक्यताभङ्गः स्यात् । जामिवा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजतीत्युपक्रमे हि पुरोडाशसाधनकयागद्वयनिरन्तरकरणनिबन्धनजामितान्द्राख्ये दोषे जाते तन्निरसनप्रयोजनार्थान्तरज्ञानं विना न जिज्ञासाशान्तिरिति जामितादोषोपक्रमं अजामित्वायेति तन्निबर्हणान्तमेकं वाक्यं प्रतीयते । अतः प्रतीतैक-

तद्बाध्येत, विष्ण्वादियुक्तयागविधौ । मैवम्; स्पष्टे विधिभेदे उपक्रमोपसंहारपदान्येकवाक्यतापन्नानि साधारणानीत्युक्तं तनूर्वर्षिष्ठेतिवत् ।

नन्वन्तरा यजतीत्यन्तरालकालो रूपम्, मैवम्, न यागस्य तद्रूपम् प्रयोगस्य हि तत् । ननु उपांशुयाजपदान्तर्गतमुपांशुत्वं रूपं; मैवम्, उपांशुयजनमुपांशुयाज इत्यवयवार्थस्वीकारेण ह्युपांशुत्वविधेस्तद्रूपं, तदा कुत्वं स्यात् । न चेह कुत्वापवादस्मरणम् यथा प्रयाजानूयाजयोः । अतोऽखण्डमेवेदमुपांशुयाजपदं यजिनाम । ननु प्रवृत्तिनिमित्तशून्यं नाम; मैवम्,

---

वाक्यतानिर्वाहायान्तरावाक्य एव यागविधिर्युक्त इति चोदयति—नन्विति । मैवमिति । अन्तरावाक्ये रूपशून्यतया अनुवादसरूपतया द्राक् विध्यप्रतीतेश्च विष्ण्वादिवाक्ये च तत्सम्पूर्तेर्विधित्वेऽवधृते विधिभेदप्रतीतेः दृढत्वात् एकवाक्यताप्रतीतेराभासतैव स्योनं ते मन्त्रवत् एतस्यैव रेवतीष्विवतिवद्वा । अतः स्पष्टवाक्यत्रये उपक्रमोपसंहारपदान्येकवाक्यतापन्नानि वाक्यत्रये साधारणानि याते अग्नेऽयाशयेत्यादिवाक्यत्रये तनूर्वर्षिष्ठेत्यादिवाक्यशेष इवेत्युक्तं ग्रन्थे ।

ननु अन्तरा यजतीत्यन्तरालकालः श्रूयते । स यागस्य रूपं भविष्यति इति कथमरूपतेति मन्दाशयश्चोदयति—नन्वन्तरेति । मैवमिति । तदन्तरालकालो न यागस्य रूपं किन्तु प्रयोगस्येति रूपशून्यतैवेत्यर्थः । ननु माभूदन्तरालत्वं रूपं उपांशुयाजं इत्युपांशुपदान्तर्गतं उपांशुत्वं तद्रूपमस्त्विति पुनर्मन्दाशयश्चोदयति—नन्विति । मैवमिति । उपांशुत्वमुच्चारणधर्मतया कर्त्रर्थमिति कर्तृद्वारा प्रयोगाङ्गतया प्रयोगस्यैव रूपं तथापि प्रयोज्ययागरूपत्वमङ्गीकृत्य दूषणान्तरमुच्यते । उपांशुत्वविधेरेव हि यागं प्रत्युपांशुत्वरूपता । तद्विधेश्चोपांशुयजनमुपांशुयाज इत्येवमवयवार्थस्वीकारेणोपांशुयाजपदस्य सखण्डत्वं स्यात् । तच्चाशक्यं यजनं यजतीत्यनन्वयापत्तेः । भवतु वा तत्स्वीकारः तथाप्यशक्तिता अनिष्टरूपापत्तेः । यजनं याज इति यजेर्घञ् । चजोःकुघिण्यतोरिति कवर्गादेशे उपांशुयाग इत्यनिष्टरूपं स्यात् । उपांशुत्वगुणविधिपक्षेहि यज्यर्थो यजिः न यज्यर्थावयवः यज्यर्थयजेः कुत्वस्मरणं अङ्गस्य कुत्वस्मरणात् । यस्माच्च प्रत्ययस्तदङ्गसंज्ञकम्, धातोश्च प्रत्ययविधिरिति यज्यर्थयजेः कुत्वम्, अतोऽनिष्टरूपापत्तेः न सखण्डतया उपांशुत्वविधेस्तद्रूपतेत्यर्थः ।

ननु यज्यर्थयजित्वे यथा प्रयाजादिपदे न कुत्वं तथाऽत्रापि किमिति न भवतीत्यत्राह—न चेति । युक्तं प्रयाजादौ कुत्वस्याभावः "प्रयाजानूयाजौ यज्ञाङ्गे" इति तदपवादस्मरणात् । न चेह तथाऽपवादस्मृतिरित्यर्थः । ननु माभूदेवमनिष्टा-

कुत्वाभावेऽप्युपांशुयाज इत्युच्चरिते उपांशुत्वगुणको याग इति बुद्धिरेकवर्णविकारेऽप्यस्ति। अनन्यगतिकतया नामत्वे स्थिते अशब्दार्थत्वेऽपि बुद्धिस्थतामात्रेण नामत्वं युक्तमाज्यादिवत्। एवञ्चोपांशुयाजद्वयवृद्धौ चतुर्दशपौर्णमास्यामाहुतय इति पूर्वोक्ताक्षेपादवान्तरसङ्गतिः, इत्युक्तरीत्या च कृतः पूर्वः पक्षः।

---

पत्तेर्गुणविधितया तद्रूपता। नामत्वेपि कथं [1]तदनिष्टं न भवतीत्याशङ्क्याह—अत इति। यत एव सखण्डत्वे दोषः अतोऽखण्डमेवोपांशुयाजपदं यजिनाम। ततश्चोपांशुयाजपदस्यैव यजिनामत्वात् यज्यर्थावयव एव यजिः न यज्यर्थः न च यज्यर्थावयवयजेः कुत्वस्मरणमित्युक्तम्। अतोऽखण्डत्वान्नामत्वे न कुत्वापत्तिरित्यर्थः। ननु यद्यखण्डमुपांशुयाजपदं तर्हि प्रवृत्तिनिमित्तशून्यतया नामत्वमपि न स्यात्। उपांशुत्वगुणयोगो हि तत्पदप्रवृत्तिहेतुः। न च कुत्वाभावे तद्गुणयोग[2]विधिः शब्दात् इति चोदयति—नन्विति। मैवमिति। सत्यमखण्डत्वं सत्यं च कुत्वाभावः तथापि उपांशुयाज इत्युच्चारिते पदे एकवर्णविकारेपि उपांशुगुणको याग इत्यनिरूपितशब्दनिष्पत्तेः प्रतीतिरुदेतीति सर्वजनीनम्। नन्वेवमुपांशुत्वगुणकस्य बुद्धिस्थस्यैवोपांशुशब्दार्थत्वाभावात् कथं प्रवृत्तिनिमित्ततेत्यत्राह— अनयेति। गुणविधित्वासम्भवेन प्रकारान्तरेणान्वयासम्भवात् यजिसामानाधिकरण्यान्नामत्वेऽवधृते निरवयवत्वेनाशब्दार्थत्वेपि बुद्धिस्थतामात्रेण प्रवृत्तिनिमित्तत्वसम्भवान्नामत्वं युक्तम्। यथा आज्यादिशब्दानां रूढत्वेपि 'यदाजिमीयुः' इत्याद्यर्थवादबुद्धिस्थतामात्रेण आजियानादिप्रवृत्तिनिमित्तान्नामत्वमित्यर्थः। ननु भवत्वेवं विष्ण्वादिवाक्येषु यागत्रयविधिः तथापि न पूर्वाधिकरणेनास्यावान्तरसङ्गतिरित्याह—एवं चेति। उक्तप्रकारेण विष्ण्वादिवाक्ये यागत्रयविधौ तस्य चोपांशुयाजवाक्येनानुवादात् उपांशुयाजवृद्धौ चतुर्दश पौर्णमास्यामाहुतय इति पूर्वाधिकरणोक्तलिङ्गदर्शनमनुपपन्नम् षोडशत्वापातादिति पूर्वोक्तलिङ्गदर्शनाक्षेपेणोत्थानादवान्तरसङ्गतिरित्यर्थः।

ननु विष्ण्वादेः कार्यान्तरसाधनतया तस्य अन्यनिष्ठता न युक्तेत्येवमन्यनिष्ठतानिराकरणापेक्षतया विधिधीर्विलम्बेनेति कथं द्रागधीबलात्पूर्वपक्ष इत्यत्राह—इत्युक्तनीत्येति। विष्णुर्यष्टव्य इति विध्यर्थकृत्यप्रत्ययेनैव रूपलाभेन चोक्तन्यायेन द्रागविधिबलेन पूर्वपक्ष उक्तः। अन्यनिष्ठत्वशङ्कानिराकरणसापेक्षता तु अन्तरा-

---

१. R तथानिष्टं।

२. A योगधीः।

राद्धान्तस्तु विष्णुर्यष्टव्य इत्यादावापाततोऽन्यनिष्ठत्वशङ्का, तन्निराकरणसापेक्षं विधिविषयत्वम्। अन्तरा यजतीति तु तन्निरपेक्षम्। अप्राप्ते यागे पञ्चमलकारः सिद्ध एवेत्यत्रैव विधिः। एवं एकवाक्यताप्रतीतिरनुगृहीता। वाक्यशेषतन्त्रता च न कल्पिता भवति।

इदमत्राभिप्रेतम्—पुरोडाशनिरन्तरत्वे यद्दोषकीर्तनं तत्समाधानार्थं

---

वाक्येपि समाना। तत्राप्युपांशुयाजमिति द्वितीयान्तत्वेन समभिव्याहृतयज्यर्थापेक्षकर्मत्वावगमात्। निमित्तानुसारेषु न क्वापीति न वाक्यद्वयेऽपि विशेष इति भावः।

राद्धान्तस्त्विति। उपांशुयाजमन्तरा यजतीत्यत्रैव अन्तरालकालविशिष्टयागविधिः विष्णुर्यष्टव्य इत्यादिरर्थवादः। ननु विष्णुर्यष्टव्य इति विध्यर्थतव्यप्रत्ययोगात् विष्ण्वादिरूपलाभाच्च द्रागिविधिर्युक्त इत्यत्राह—विष्णुर्यष्टव्य इत्यादाविति। विषयत्वयोग्यार्थज्ञाननिबन्धनो यागविधिः। इह विष्णुर्यष्टव्य इत्यादौ [1]स्वपदे स्फुटकर्मार्थतव्यप्रत्ययश्रुतेः द्वितीयाश्रुतार्थताहविष्ण्वादिज्ञाने यज्यर्थोऽन्यनिष्ठ एव ज्ञायत इत्यापाततोऽन्यनिष्ठताज्ञानं तावच्छीघ्रं जायते। पश्चात् कार्यान्तरानुपयोगाकलनया तन्निराकरणसापेक्षतया [2]अन्यविधिविषयत्वज्ञानं विलम्बितम्। तथोपपदश्रवणात् रक्तपटवत् तत्परत्वप्रतीतेर्न यागस्य विधेयताधीः शीघ्रमित्यर्थः। ननूपांशुयाजमन्तरा यजतीत्यत्रापि द्वितीयाश्रुतेरन्यनिष्ठताशङ्कानिराकरणसापेक्षत्वं समानमित्यत्राह—अन्तरेति। उपांशुयाजस्य क्रियारूपत्वात् क्रियायाश्च संस्कार्यत्वायोग्यत्वात् द्वितीयाश्रुत्यापि नान्यनिष्ठताप्रतीतिरिति न तन्निराकरणसापेक्षत्वं अन्तरावाक्यस्येत्यर्थः। नन्वन्तरा यजतीति वर्तमानापदेशत्वान्न विधिरित्यत्राह—अप्राप्त इति। वचनानित्वपूर्वत्वादिति नयात् अप्राप्ते यागे विबुधे द्विस्थत्वात् तत्सिद्धचर्थं पञ्चमलकारस्वीकारोऽपि युक्तः। अप्राप्ततापर्यालोचनं तु सर्वत्राविशिष्टमिति न तत्सापेक्षत्वं विलम्बावहमित्यर्थः। एवं च वाक्यशेषस्य सकृच्छ्रवणादेकत्रैव विधिर्युक्त इति प्रतीयमानैकवाक्यत्वानुग्रहो भवतीत्याह—एवमिति। तथा वाक्यशेषस्यायुक्तं तन्त्रकल्पनमपि नाश्रितं भवति। वाक्यभेदस्य साधारण्ये क्लृप्ते विधिभेदः विधिभेदे च साधारण्यकल्पनेत्यन्योन्याश्रयापत्तेरयुक्तता। अतस्तदनाश्रयोऽपि लाभ इत्याह—वाक्यशेषेति।

ननु विष्णुर्यष्टव्यः प्रजापतिर्यष्टव्य इत्यन्योन्यनिरपेक्षप्रतीतेः कथमेकवाक्यता यदनुग्रहायान्तरावाक्ये यागविध्यङ्गीकार इत्यत्राह—इदमत्राभिप्रेतमिति। पुरोडाशद्वये निरन्तरं क्रियमाणे जामिताख्यदोषकीर्तनमुपक्रमे जामि वा एतदिति। तद्दोष-

---

१. स्फुटकार्यार्थं A   २. अस्य B।

तावदेकार्थं पदजातम् । तत्समाधानञ्चान्तरालगुणयुक्तयागविध्यधीनं न तु विष्ण्वादिगुणकयागमात्रविध्यधीनम् । अतोऽन्तरायजतीति गृहीत्वोपक्रमोपसंहारावेकवाक्यतां गतौ । न च तद्बाधो युक्तः विनियोगानुसारित्वाद्विधेरिति दर्शनरहस्यम् ।

नन्वन्तरा यजतीत्याज्यप्राप्तावपि देवताविरहान्न निर्वाहः । न च विष्ण्वादीनां प्राप्तिः येनार्थवादावलम्बनम् । मैवम्, शाखान्तरे प्राप्ता विष्ण्वादय इत्येके । अथ शाखान्तरे न प्राप्तिः, तथापि सिद्धे यागविधौ

---

समाधानार्थं अजामित्वायेत्यन्तं पदजातमेकार्थम् । अतः परस्परानन्वितगुणभूतार्थभेदेऽपि प्रतिपिपादयिषितप्रधानभूतार्थैक्यादेकवाक्यताप्रतीतिरुचितैवेत्यर्थः । ननु दोषसमाधानार्थतया एकवाक्यत्वेपि कथमन्तरावाक्य एव यागविधिः विष्णवादियागविधानेपि तत्समाधानसंभवादित्यत्राह—तत्समाधानं चेति । निरन्तरत्वकृतदोषस्य समाधानमन्तरात्वगुणयुक्तयागविध्यधीनं न तु विष्णवादिमात्रयागविध्यधीनम् । यत एवान्तरालगुणयुक्तयागविध्यधीनं नैरन्तर्यप्रयुक्तदोषसमाधानं अत एव अन्तरायजति इत्यन्तरालगुणयुक्तयागविधिं गृहीत्वा उपक्रमोपसंहारयोरेकवाक्यतावगतिरनुग्राह्या, न तु विष्णवादियागविधावन्तरा यजतीत्यन्तरालगुणविधिं गृहीत्वा । तथासति प्रतीतैकवाक्यताहानापत्तेः अत आह—अतोऽन्तरेपि । ननु विधित्वार्थमेकवाक्यताबाधोऽस्त्वित्यत्राह—न चेति । तत्र हेतुः—विनियोगेति । ननु विधिप्रतीत्यर्थत्वाद्विनियोगस्य प्रधानभूतविधिस्वारस्याय विनियोगबाधो युक्त इत्यत्राह—इति दर्शनेति । विनियोगबाधे हि विधिप्रतीतिरेव न शब्दादिति गुणभूतमपि विनियोगं स्वनिमित्तभूतं प्रधानभूतोऽपि विधिरनुरुध्यत इति न विधिबलात् क्वापि विनियोगबाध इति दर्शनरहस्यमित्यर्थः ।

ननु अन्तरा यजतीति कथं यागविधिः रूपाभावात् । यागस्य द्रव्यदेवते हि रूपं तत्र सर्वस्मै वा एतद्यज्ञायेत्यनेन ध्रौवाज्यप्राप्तावपि न देवतायाः केनापि प्राप्तिरिति देवताविरहान्न विधेययागदिर्वाह इति चोदयति—नन्विति । नचार्थवादाद्देवतालाभः अर्थवादस्य स्वतः प्रापकत्वाभावात् । किञ्च स्तुतिरपि अर्थवादान्नोपयुज्यते निरालम्बनत्वात् । विधेयतया प्राप्तस्य ह्यर्थवादात् स्तुतिः । न च विष्णवादीनां प्राप्तिः तदाह—न चेति । मैवमिति । शाखान्तरे हि उपांशुयाजसन्निधौ विष्णादिप्रापकं वाक्यमाम्नातम् । न च तत् कर्मान्तरम्, सर्वशाखाप्रत्ययमेकं कर्मेति शाखान्तरनयात् । अतो विष्णवादयो देवतात्वेन प्राप्ता इति वृद्धाः केचिद्-

देवतापेक्षायां अर्थवादबलेन विष्ण्वादिप्राप्तिः ।

नन्वस्मिन्नेव वाक्ये विष्ण्वादयः श्रूयन्ते अतो नोपांशुत्वधर्मद्वारेण विष्णुप्रजापत्योः प्राप्तिर्युक्ता—न चाग्नीषोमयोः वाक्यशेषान्तरतः[1] प्राप्तिः—मैवम्—[2]अन्यतः अप्राप्तौ विष्ण्वादियुक्तयागविधिरापतीति तन्निवृत्तये अन्यतः प्राप्तिरुक्ता ।

नन्वेवं देवतासमर्पणपरशब्दाभावात् न शब्दैकगम्यदेवताप्राप्तिः । मैवम् । उक्तं पञ्चिकायां "यागे चोदिते देवतायां चा श्रूयमाणायां

चुरित्यर्थः । भाष्यकारेण तु तादृशवाक्यान्तरसद्भाववैमत्येनान्यथा निर्वाह उक्तः तदाह—अथेति । शाखान्तरे विष्ण्वादीनां न प्राप्तिरिति निश्चितम् । तथापि निर्वाहो वक्तुं शक्यः प्रतीतैकवाक्यतो विनियोगबाधपरिहाराय अन्तरावाक्ये यागविधौ सिद्धे पश्चाद्देवतापेक्षायां अर्थवादबलेन विष्ण्वादीनां देवतात्वेन प्राप्तिः । अर्थवादे हि नित्यवदुपांशुत्वकीर्तनात् कर्मणो नित्यमुपांशुधर्मकत्वमाक्षिप्यते । तदुपांशुत्वद्वारा च तद्धर्मतया वाक्यान्तरे ज्ञातानां विष्ण्वादीनां बुद्धिस्थतया प्राप्तिः । एवमेवोपांशुत्वधर्मद्वारेण प्राप्तिमभिप्रेत्य दशमे अर्थवादेन देवतालाभ उक्तः । नतु साक्षादित्यर्थः ।

नन्वस्मिन्नेव वाक्ये विष्णुर्यष्टव्य इत्याद्यर्थवादे विष्ण्वादयः श्रुता इति तद्बलेनैव तत्प्राप्तिर्युक्तेति कथमुपांशुत्वधर्ममुखेन देवताप्राप्तिरिति चोदयति—नन्विति । न चाग्नीषोमयोर्वाक्यान्तरे उपांशुत्वधर्मकत्वमवगतं येन तन्मुखेन प्राप्तिः स्यादिति तदाह—न चाग्नीषोमयोरिति, वाक्यशेषान्तरतः वाक्यशेषादन्यत इत्यर्थः,—मैवमिति । नैवात्र देवतार्थमर्थवादापेक्षा । अन्यतो विष्ण्वादीनामप्राप्तौ देवतार्थमवश्यमर्थवादापेक्षायामत्रैव विष्ण्वादिरूपश्रुतेः विष्ण्वादियुक्तयागविधिरेव शीघ्रमापततीति । वाक्यभेदो वाक्यशेषतन्त्रता—आपद्येतेति । तन्निवृत्तये यत्नेनान्यतः उपांशुत्वधर्मद्वारतः प्राप्तिरुक्ता । अग्नीषोमयोस्तु यथाप्राप्तिः तथोत्तरत्र वक्ष्यते । अत उपांशुत्वार्थमेवार्थवादापेक्षा न देवताप्राप्त्यर्थमित्यर्थः ।

ननु देवतायाः प्राप्तिरेव न युक्ता, शब्दैकसमधिगम्यत्वाद्देवतायाः । न चात्र देवतासमर्पणपरश्शब्दोऽस्तीति चोदयति—नन्विति । मैवमिति । अन्तरा यजतीत्यभिधानप्रसिद्ध्या यागे चोदिते यागस्य देवतासाध्यत्वात् तस्याश्च मानान्तरानुपस्था-

१. R वाक्यान्तरतः २. R अनन्यतः

तत्साध्यत्वाद्यागस्य तस्याश्चालौकिकत्वात् तद्विशेषापेक्षायां वाक्यशेष-बलेनोपस्थितदेवतान्वितं यजिरेव स्वार्थं वदती"ति ।

इदमत्राभिप्रेतम्—देवतारूपकारकव्यापारे हि यजेर्वृत्तिरिति सम्बन्धि-शब्दोऽयम् । स च सम्बन्ध्यन्तरान्तर्भावात् स्वार्थे पर्यवस्यतीत्यन्यपरा-

प्यत्वात् शब्दैकवेद्यायां तस्यामश्रुतायां तद्विशेषापेक्षया वाक्यशेषबलेनोपांशुत्व-धर्मद्वारा उपस्थापितया विष्ण्वादिदेवतयाऽन्वितं स्वार्थं यजिरेव वक्तीति शब्दा-र्पितत्वं पञ्चिकायामुक्तमित्यर्थः । ननु यागक्रियावचनत्वाद्यजिशब्दस्य कथं देवतया विना तदभिधानापर्यवसानम् । न च साधनं विना साध्यवाचिनः पदस्याभिधाना-पर्यवसानं व्युत्पन्नम् । किञ्च यद्यभिधानापर्यवसानतया विष्ण्वादीनामस्मिन् यागे देवतात्वं कल्प्यते तर्हि औपादानिकत्वं देवताया उक्तं स्यात् यागविध्यन्यथानुप-पत्तिनिबन्धनत्वात् । तच्चायुक्तम् । अभिधानोपस्थाप्याया देवताया कल्पनोप-स्थाप्यत्वायोगात् तत्राह—इदमत्राभिप्रेतमिति । स्यादेवं सर्वं यदि सम्बन्धिशब्दोऽयं यजिर्न स्यात् । सर्वे हि धातवः कारकव्यापारे वर्तन्ते । अयं च यजिः देवतारूप-कारकव्यापारे वर्तते । यजदेवपूजेति स्मृतेः देवतोद्देशेन द्रव्यत्यागोऽयं यागः तस्यैव यज्यर्थत्वात् । अतः सम्बन्धिशब्दोऽयम् । ततः किं ? तत्राह—सचेति । सम्बन्धि-शब्दश्च सम्बन्ध्यन्तरान्तर्भावादेव स्वार्थमाह नान्यार्थम् । ननु स्वसन्निधापक-शब्दाभावे कथं सम्बन्धिरूपदेवतान्तर्भाव इत्यत्राह—इत्यन्यपरादपीति । सत्यं स्वपद-सन्निधिर्नास्ति तथापि अन्यपरादपि शब्दात् अवगतां सम्बन्ध्यन्तररूपां देवता-मन्तर्भाव्यैव सम्बन्धिशब्दोऽयं यजिः स्वार्थं वक्ति ।

ननु अनभिधेयाया देवतायाः कथं यजिशब्दार्थत्वमित्यत्राह—इति यजीति । सत्यं यजेरनभिधेया देवता तथापि सम्बन्धितया तदन्तर्भावेनैव स्वार्थाभिधानपर्य-वसानात् यजिश्रुतिगम्यत्वमेव देवताया नौपादानिकत्वम् यथा सप्तमंपदमध्वर्यु-रञ्जलिना गृह्णातीत्यत्र कस्य पदमित्यपेक्षायां क्रयार्थं नीयमानैकहायनीरूपपदि-पर्यवसानम् तद्वदत्रापि चातुर्थपदिन्यायेनैव स्थित[1]मित्यर्थः ।

नन्वेवं यथा एकहायन्याः पदहोमे न शेषता तथा उपांशुयाजेपि विष्ण्वादि-देवताया अपि शेषता न स्यात् । किञ्च युक्तं पदादेः सम्बन्धिशब्दत्वं अवयव-वचनत्वात् । यजिस्तु न अवयववचन इति कथं सम्बन्धिशब्दता ? किञ्च देवतायाः स्वसाध्ययागान्वितनियोगाभिधानापर्यवसानात् उपादानगम्यतया औपादानि-कत्वस्यैव युक्तत्वादधिकारलिङादिश्रुतिगम्यत्वमेव न यजिगम्यत्वमित्यत्राह—इत्यनुसन्धेयमिति ।

१. भासितमि ।

दप्यवगतां सम्बन्ध्यन्तररूपां देवतामादाय स्वार्थं वक्तीति यजिश्रुत्यर्थत्वा-न्नौपादानिकत्वमिति पदिन्यायेन व्याख्यातमित्यनुसन्धेयम्। अत एव यजिश्रुतितः सर्वेषां देवतात्वमिति मन्त्रवर्णाद्विष्ण्ववगतिर्जघन्या। स्ववाक्य-शेषलब्धोपांशुद्वारकविष्णुप्रजापत्योः कालविधायकवाक्यशेषावगताग्नीषो-

---

अयं भावः न तावदेकहायनीपदशेषता, उपांशुयाजयागे देवताया ग्राहक-सम्बन्धस्यान्यतो निर्वाहाभावात्। अत औपादानिकशेषता। एकहायन्यास्तु क्रयद्वारा निर्वाह इति न पदहोमे शेषता। अत एवारुण्यस्य न लिङ्गादेक-हायनीशेषता। नाप्युपादानात्। श्रौतक्रयशेषतयैव ग्राहकसम्बन्धस्य निरूढत्वात्। तथा नावयववचनत्वं सम्बन्धिशब्दत्वे तन्त्रम्। पितृपुत्रादीनामसम्बन्धिशब्दत्वा-पत्तेः। किन्तु अर्थान्तरं विना यस्याभिधानापर्यवसानं स सम्बन्धिशब्दः, तच्च यजिशब्देऽप्यविशिष्टमिति युक्ता यजेः सम्बन्धिशब्दता। तथा सम्बन्धियजिश्रुत्यर्थ-तयैव देवताया आभिधानिकत्वोपपत्तौ न प्रधानविधेरायासाङ्गीकारो युक्त इति औपादानिकत्वाभावान्नाधिकारलिङः श्रुतिगम्यतेति यजिश्रुतिरेवोपांशुयाज-देवतायां मानम्। एतदननुसन्धायैव पञ्चमाद्ये उपादानतोक्तिः न वस्तुवृत्त्येति। ननु यथा समिदादियागेषु मन्त्रवर्णाद्देवतालाभः तथाऽत्रापि मन्त्रवर्णाद्विष्णोरेव देवतात्वमस्तु इत्यत्राह—अत एवेति। यत एव यजिश्रुतिगम्याऽत्र देवता अत एव यजिश्रुतितः सर्वेषां विष्णुप्रजापत्यग्नीषोमाणां देवतात्वं यजिश्रुत्यधीनसर्वदेवताव-गतितो मन्त्रलिङ्गकल्पनाधीनविष्णुमात्रदेवतावगतेर्जघन्यत्वादित्यर्थः।

ननु विष्णुप्रजापत्योः यागविधिवाक्यमेवार्थवादबललब्धतया शीघ्रभावित्वात् कथं कालविधिवाक्यावगताग्नीषोमयोरतुल्यबुद्धिस्थयोः तुल्यवद्यजिश्रुत्यनुप्रवेशि-त्वमित्यत्राह—स्ववाक्यशेषेति। स्ववाक्यशेषबललब्धयोरपि विष्णुप्रजापत्यो-रुपांशुत्वधर्मद्वारा स्मृतिस्थतया विलम्बितत्वात् तयोः कालविधिवाक्यात् ताव-ब्रूतामग्नीषोमौ इत्यादिकादवगतयोरग्नीषोमयोश्च तुल्यकालं धीस्थतेति यजि-श्रुत्यनुप्रवेशोऽपि तुल्य एवेति विष्णुप्रजापत्यग्नीषोमाः सर्वा देवताः तासां च विकल्पः एकयैव देवतया यागनिर्वृत्तेः युगपदुपस्थितेश्च। न च स्वाहाकारवत् सापेक्षाणां देवतात्वं विष्णुप्रजापत्योस्तावत् अर्थवादावगतोपांशुत्वान्वयस्यान-पेक्षतयैव श्रुतेः। तन्मुखेन तयोः पृथगेवोपस्थानात्। अग्नीषोमयोस्तु कालविधायक-वाक्यान्तरादेवोपस्थितेर्नैरपेक्ष्यम्। न चैवमग्नीषोमयोरन्योन्यमपि नैरपेक्ष्यम्। द्वन्द्वेनेतरेतरयुक्ततयैवोपस्थितेः। अतो विष्ण्वादेः विकल्प एव। न च तावब्रूता-मग्नीषोमौ आज्यस्य नावुपांशु पौर्णमास्यां यजत् इति कर्मान्तरविधिरेवास्तु किमिति कालविधायकतेति वाच्यम्। यजन्निति श्रुतौ द्राग्यागविध्यनवगमात्।

मयोश्च तुल्यकालं बुद्धिस्थतेति यजिश्रुत्यनुप्रवेशस्तुल्य एव ।

ननु मन्त्रवर्णबुद्धिस्थविष्णुना यजिश्रुतेः पर्यवसानं युक्तम्; मैवम्, विनियोगपूर्विका हि मन्त्रवर्णपदार्थबुद्धिस्थता। तन्निरपेक्षता तु वाक्यशेषपदार्थबुद्धिस्थतेति वाक्यशेषबुद्धिस्थेन यजिश्रुतिपर्यवसानं युक्तम् । विष्णु-

---

न च देवताविधिः चतुर्थ्यभावात् । न च द्रव्यविधिः षष्ठ्यन्तत्वात् । किन्तु पौर्णमास्यां यजन्निति कालविधिरेव तदनुकूलसप्तमीश्रुतेः । इतरत्तु पदजातमर्थवादः । न च पौर्णमास्यामेव पुरोडाशद्वयमित्यन्तरा यजतीति तन्मध्यताविधावर्थप्राप्तपौर्णमासी न विधेयेति वाच्यम् । असोमयाजिपक्षे अमावास्यायामपि पुरोडाशद्वयसम्भवेन पौर्णमास्या अप्राप्तेः ।

अथ नैमित्तिकं नित्यवच्छतमध्यत्वान्वयानर्हमिति चेत् । एवमपि यावदेवं विमृश्यते तावच्छीघ्रं पौर्णमासीविधिरेव युक्तः । किञ्च अन्तराविधावपि न पौर्णमासीत्वेन प्राप्तिः अन्तरात्वपौर्णमासीत्वयोर्भेदात् । अतोऽप्राप्तत्वात् तद्रूपेण विधिः । न च तस्य प्रयोजनशून्यता, पौर्णमासीत्वेन विधौ तद्युक्तस्य पौर्णमासीवाक्येनानुवादे प्राधान्यसिद्धेः । अन्तरात्वविधेश्च जामितानिर्हरणं प्रयोजनम् । अतः प्रयोजनद्वयार्थं कालद्वयविधाने कृते दैवात् तयोरेकत्वेन विधिद्वयस्य व्यर्थता, विधेयरूपनानात्वात् । एतत्सर्वमभिसन्धायोक्तं कालविधायकवाक्यावगतेति ।

ननु यजिश्रुतिपर्यवसानमपि मन्त्रवर्णबुद्धिस्थविष्णुमात्रे किमिति न भवतीति चोदयति—नन्विति । मैवमिति । विनियोगसव्यपेक्षा हि मन्त्रवर्णाद्देवतावगतिः । तन्निरपेक्षा तु वाक्यशेषाद्देवतावगतिः । अतः सापेक्षनिरपेक्षन्यायात् वाक्यशेषबुद्धिस्थेन विष्णवादिना यजिपर्यवसानं युक्तमित्यर्थः । ननु कथं विष्णुप्रजापत्योः उपांशुत्वधर्मकत्वं येन तन्मुखेन तयोर्बुद्धिस्थतेत्यत्राह—विष्णुप्रजापत्योरिति । आप्ततमभाष्यकारवाक्यात् उपांशुत्वधर्मकत्वे मूलभूतमानानुमानादित्यर्थः । अत्र भाष्ये अग्रप्रायदर्शनं लिङ्गमित्यादिना उपांशुयाजस्य प्रधानप्रायदर्शनं सिद्धान्ते लिङ्गत्वेनोक्तं, तदयुक्तम् । विष्णवादिवाक्यैः यागविधावन्तरावाक्यस्यानुवादकत्वेपि विष्णवादियागानां पौर्णमास्यां यजन्निति विहितकालयोगस्यैव सम्भवात् । य एवं विद्वानित्यनुवादेऽनूदितानां अधिकारविधिसम्बन्धात् प्राधान्योपपत्तेः । न च तावन्नूतामग्नीषोमावित्यनुवादर्शनादेकस्याग्नीषोमयागस्यैव कालयोगो नेतरयोरिति वाच्यम् । एक[1] यागद्वारापि प्रायदर्शनोपपत्तेः ।

---

१. योग ।

प्रजापत्योस्तूपांशुत्वधर्मकत्वे प्रमाणं भाष्यकृद्वाक्यसाक्षिकमेव । अग्र्यप्रायलिङ्गञ्चेत्थं—यष्टव्य इति तव्यात् गुणकर्मधीः कार्यान्तरानुपयोगाकलनया तु प्रधानकर्मतेति शीघ्रावगताग्नेयादिप्रधानकर्मणामेवाधिकारवाक्येऽनुप्रवेशो नान्यस्येति । शेषं सुगमम् ॥

## ॥ ५ ॥ आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥

पूर्वत्र पौर्णमास्यां यजन्निति कालाख्यगुणविधानादग्र्यप्रायदर्शनमुक्तं; तदयुक्तम्, गुणविधेरेवासम्भवात् इत्युत्थानादेवावान्तरसङ्गतिः । पूर्वपक्षस्तु

---

किञ्च उपांशुयजन्निति सर्वयागानुवादेन कालविधिः, अग्नीषोमानुवादार्थवादस्य च दण्डिन्यायेनाप्युपपत्तेः । अतः कथमग्र्यप्रायदर्शनं सिद्धान्तलिङ्गं भवतीत्यत्राह—अग्र्यप्रायेति । विष्णुर्यष्टव्य इत्यादौ यागे कर्मणि विहिततव्यप्रत्यययोगात् द्राग्गुणकर्मत्वधीः । पश्चाद्विष्ण्वादीनां कार्यान्तरानुपयोगाकलनया प्रधानकर्मताधीः । अतः शीघ्रावगतप्रधानकर्मणामेवाग्नेयादीनामधिकारानुप्रवेशो न विलम्बावगतप्रधानकर्मणः उपांशुयाजस्येति पूर्वपक्षे प्राधान्यं न स्यात् । सिद्धान्ते तु अन्तराविहितयागस्य न गुणकर्मता शङ्कितेति शीघ्रावगतप्रधानकर्मतया अधिकारानुप्रवेशे प्राधान्यसिद्धिरिति भवति सिद्धान्ते लिङ्गमग्र्यप्रायदर्शनमित्यर्थः । चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते इत्याहुतिचतुर्दशत्वदर्शनमपि पूर्वपक्षेऽनुपपन्नम् । विष्ण्वादियागानां त्रित्वादुपांशुद्वयवृद्धौ षोडशत्वापातादिति चतुर्दशत्वाभावादिति सिद्धान्ते यल्लिङ्गदर्शनं तदपि भाष्ये व्यक्तमित्याह—शेषमिति ।

## ॥ आघाराग्निहोत्रमरूपत्वात् ॥

अग्निहोत्रं जुहोतीति प्रकृत्य दध्ना जुहोति पयसा जुहोति इति श्रूयते । तथा आघारमाघारयतीति प्रकृत्य 'सन्ततमाघारयती'ति श्रुतम् । तत्र चिन्ता-किं दध्यादिवाक्यैः सन्ततादिवाक्यैश्च कर्मविधिः अग्निहोत्रवाक्यं आघारवाक्यं च समुदायानुवादकं किं वा अग्निहोत्रवाक्येन आघारवाक्येन च कर्मविधिः । तत्र द्रव्यादिवाक्यानि सन्ततादिवाक्यानि च गुणविधायकानीति । तत्रानुबन्धभेदनिबन्धनशास्त्रभेदापवादादध्याये सङ्गतिः । पौर्णमास्यपवादकत्वेन पेटिकासङ्गतिः । अवान्तरसङ्गतिमाह—पूर्वेति । पूर्वाधिकरणे हि पौर्णमास्यां यजन् इति कालाख्यगुणविधानात् अन्तरावाक्यविहितयागस्य तत्कालयोगादधिकारानुप्रवेशेन प्राधान्यादग्र्यप्रायदर्शनमुक्तम् । इह गुणविध्ययोगात् तदेवायुक्तमित्याक्षेपेणोत्थानादवान्तरसङ्गतिरित्यर्थः । ननु विधित्वे सति अनुवादा-

स्वभावतः साध्यस्यैव कृत्याश्रयतया भावार्थस्यैव विधिविषयतोक्ता। न तु व्यापारयोगितया साध्यस्य द्रव्यादेः। अतो न गुणविधिः।

ननु विहिते स्वतस्साध्ये व्यापारोपाधिना साध्यस्य विधानं युक्तम्; मैवम्, उपाधितस्साध्यत्वमुपाधिगतमेव तत्वत इति व्यापारस्यैव विधेयत्वमापततीति।

ननु द्रव्यादेरेव धर्मः कारकत्वं नाम साध्यम्; मैवम्, यदि क्रिया-

---

योगात् अग्निहोत्रवाक्ये यागविधिः दध्यादिवाक्येन च उपपदाकृष्टतात्पर्यबलात् लाघवाच्च तत्र गुणमात्रविधिरेव युक्त इति कथं पूर्वपक्ष इत्यत्राह – पूर्वपक्षस्त्विति।

स्यादेवं द्रव्यादेः यदि विधिविषयत्वयोग्यता स्यात् भावार्थाधिकरणे हि स्वतः साध्यस्यैव कृत्याश्रयत्वात् कृतिव्याप्यत्वात् भावार्थस्य च तथात्वात् तस्य विधिविषयतोक्ता न पुनः क्रियायोग्यता साध्यस्य द्रव्यादेः साध्यत्वस्यैवाभावादिति भावः। भवतु अविषयत्वेपि विधेयत्वं किं बाधकमिति तत्राह—अत इति। यतो विषयत्वं द्रव्यादेर्नास्ति अतो न गुणविधिः न द्रव्यादिविधेयता। विधिसाधनं हि विधिकर्मतया विधेयम् तत्साधनता च विषयस्यैव कृतिविशेषकतया कृतिसाध्यत्वदशायामनुरञ्जकत्वात्, अतः क्रियाया एव विधायकत्वं न द्रव्यादेः। अत्र गुणशब्दः द्रव्यगुणजातिसङ्ख्यासादृश्याद्यभावार्थोपलक्षणार्थः। तत्राग्निहोत्रवाक्ये-यथा होमः तथा दध्यादिवाक्यैः दध्यादि न विधेयम्। असाध्यत्वेनाभावार्थतया विधिविषयत्वाभावेन विधिकर्मत्वानर्हत्वात्। नापि होमादिक्रिया, वाक्यान्तरप्राप्तत्वादिति विधिशून्यं दध्यादिवाक्यं स्यात्। अतो दध्यादिवाक्येन गुणश्रुतावपि भावार्थस्यैव विधेयत्वम्। रक्तपटवाक्ये त्वविधिपरे गुणमात्रज्ञानपरत्वेपि न हानिरित्यर्थः।

ननु स्वतः साध्यभावार्थस्य वाक्यान्तरेण विहितत्वात् व्यापारोपाधिना साध्यस्यापि द्रव्यादेर्विधानं युक्तम्, द्रव्यदेवतासम्बन्धवत्। एवं च वाक्यद्वयस्यापि विधिपरत्वलाभ इति चोदयति—नन्विति। मैवमिति। स्फटिकलौहित्यादिवत् उपहितसाध्यस्योपाधावेव तात्विकत्वात् उपाधिभूतव्यापारस्य विधेयत्वमापतति न तूपहितस्य द्रव्यादेरित्यर्थः। ननु कारकत्वं नाम द्रव्यादेर्धर्मः तस्य च साध्यत्वात् तेन रूपेण द्रव्यादेर्विधेयताऽस्त्विति चोदयति—नन्विति। मैवमिति। यद्यपि कारकत्वं साध्यं तथापि न दधिस्वरूपं साध्यं स्यात् किन्तु तद्धर्म एवेति न दध्नो विधेयतोपपादिता भवतीति भावः। तथापि किं तत्कारकत्वं द्रव्यादेः? क्रियाजननशक्तियोगः क्रियायोगो वा। तत्राद्यं कल्पमाह—यदीति। दूषयति—न तर्हीति। तच्छक्ति-

जननशक्तियोगः कारकत्वं न तर्हि साध्यता तस्य । अथ क्रियायोगः तर्हि क्रियैव साध्या । ननु कथं तर्हि निबन्धनमते द्रव्यदेवतासम्बन्धो विधिविषय इति । उच्यते । यागसाध्यत्वात्तस्य यागसाध्यतयैव तस्य साध्यता व्यवहितापि शब्दबलेन स्वीकृता । द्रव्यादेस्तु यागसाधनस्य व्यवधानेनापि न साध्यतेति न गुणविधिः । किन्तु गुणान्वितं यत्कर्म तत्स्वरूपविधिः । तच्च स्वरूपं यदि केवलमुपादीयते तदा तत्प्रत्यभिज्ञानं न स्यादिति

---

योगित्वस्य द्रव्योत्पत्तिकारणैरेव सिद्धत्वान्न साध्यत्वमिति न विधेयमित्यर्थः । द्वितीयं कल्पमाह—अथेति । दूषयति—तर्हीति । क्रियायोगस्य कारकत्वे वस्तुतः क्रियाया एव साध्यता न दध्यादेरिति पूर्वमेवोक्तमित्यर्थः । ननु कथं तर्हि निबन्धनमते द्रव्यदेवतासम्बन्धस्य विधिविषयतया विधेयता तस्याक्रियारूपत्वादिति चोदयति—कथं तर्हीति । उच्यत इति । द्रव्यदेवतासम्बन्धस्य यागसाध्यतया यागद्वारा कृतिसाध्यत्वात् व्यवहितकृतिसाध्यस्यापि तस्य शब्दबलेन विषयताऽङ्गीकृतेत्यर्थः । ननु तथैव द्रव्यादेरस्त्वित्यत्राह—द्रव्यादेस्त्विति । द्रव्यादेस्तु यागं प्रति साधनत्वान्न यागद्वारा व्यवधानेनापि साध्यतेति न गुणस्य द्रव्यादेर्विधिः ।

एतेनेदं निरस्तम् । कारकत्वस्यापि सम्बन्धवत्साध्यत्वादिति दध्ना जुहोतीति यतः कारकेण क्रिया साध्यतयाऽवगम्यते न क्रियासाध्यतया कारकावगतिरिति । एवं च द्रव्यादिविध्यभावात् दध्यादेः कृतिसाध्यस्यापि न संस्काररूपेण विधिः । किन्तु नियोगविषयतयैवेति नोत्पत्त्यादिचतुष्टयसाध्यसिद्धिः । अतस्तद्भेदनिबन्धनः शास्त्रभेदाभावः पूर्वपक्षे । न चैवं साक्षादेवास्याध्यायसङ्गतिरिति वाच्यम् । साध्यभेदनिबन्धनशास्त्रभेदाभावस्य द्रव्यविध्यभावोन्नेयतया सूक्ष्मत्वात् स्फुटतरानुबन्धभेदनिबन्धनशास्त्रभेदापवादकतयैव सङ्गतिर्ग्रन्थोक्तेति भावः । नन्वेवं भावार्थमात्रे विधेयगुणश्रवणमनर्थकम । अतः तदानर्थक्यपरिहाराय गुणवत्कर्मविधिर्वाच्यः । ततश्च गुणस्यापि विधिस्पर्शो दुर्वार इति कथं द्रव्यादेर्न विधेयतेत्यत्राह—किन्त्विति । दध्ना जुहोतीत्यादौ गुणान्वितं यत्कर्म गुणविशिष्टो होमः प्रतीतः तत्स्वरूपस्यैव विधेयत्वं न च विशेषणरूपगुणांशस्यापि तस्य तद्विशेषकत्वादेव नियोगसम्बन्धोपपत्तेः न विधेयता गुणस्येत्यर्थः । नन्वविधेयत्वे गुणस्य नियमेनोपादानं न स्यादिति गुणश्रवणमनर्थकं न स्यादित्यत्राह—तच्चेति । गुणान्विततयाऽवगतस्य कर्मणो यत्स्वरूपं तद्यदि केवलमुपादीयेत तदा गुणान्वितरूपप्रत्यभिज्ञा न स्यादिति स्वसाधनानुष्ठानमाक्षिपता नियोगेन स्वसाधनसिद्ध्यर्थं

गुणोऽप्युपादानशेष इति नानर्थकं गुणश्रवणम् । अतो दध्ना जुहोतीति गुणवत्कर्मविधिरुच्यते अग्निहोत्रं जुहोतीति निर्गुणा तस्य पुनः श्रुतिः ।

ननु यद्यप्यग्निहोत्रं जुहोतीति द्वितीयान्तं नाम युक्तं; अग्नये होत्रमित्येवं हविर्मात्रपरत्वे तृतीयान्तं स्यात् तथापि नामान्तर्गतगुणश्रुतेः तुल्यश्रुतिता । मैवम्—अग्निहोत्रपदमेव हि गुणवत्कर्मवचनं तस्य जुहोतीत्यन्वये गुणपरत्वेन गुणवद्धोमयुक्तो होम इति स्यात् ।

न चात्मनैव आत्मनोऽन्वय इति । अस्मिन्नेव विषये शाब्दैरुक्तं न

---

कारकमुपादापयता आकाङ्क्षितः प्रतीतश्च गुणोऽप्युपादानशेषः कृतः उपादेयतयाऽङ्गीकृत एवेत्यविधेयार्थत्वेऽप्युपादेयार्थतया नानर्थकं गुणश्रवणमित्यर्थः ।

नन्वेवं गुणवाक्येपि भावार्थस्यैव विधेयत्वे अग्निहोत्रवाक्य एव तत्कर्मविधिरस्तु । दध्यादिवाक्यमेवानुवादोऽस्तु इति वैपरीत्यं किमिति न भवतीत्यत्राह—अत इति । यत एवं प्रतीतगुणस्योपादानशेषता अतो दध्ना जुहोतीति गुणवाक्य एव कर्मविधिरूच्यते । गुणांशस्यान्यथाऽनवकल्पनात् । निर्गुणवाक्यमेव पुनः श्रुतिरनुवादः अन्यथा गुणपदानर्थक्यापत्तेरेवेत्यर्थः । नन्वग्निहोत्रवाक्यस्यापि सगुणश्रुतितया दध्यादिवाक्यैः तुल्यश्रुतितया गुणान्वितकर्मस्वरूपविधायकतैव नानुवादकतेति चोदयति—नन्विति । ननु गुणान्वितप्रतीतिरेव नास्ति अग्निहोत्रमिति द्वितीयान्तस्य कर्मनामतयैवान्वययोग्यत्वात् अन्यथा तृतीया स्यादित्यत्राह—यद्यपीति । सत्यं द्वितीयान्तं कर्मनामैव युक्तं तथापि अग्नये होत्रमस्मिन् कर्मणीति नामान्तर्गताग्निगुणश्रुतेः तुल्यश्रुतितेत्यर्थः । मैवमिति । तथाहि—अग्निहोत्रपदमेव जुहोतिपदनिरपेक्षं गुणवद्धोमकर्मवचनं तस्य जुहोतिनान्वये दध्यादिपदस्येव जुहोतिपदार्थगुणभूतार्थपरत्वेन गुणवद्धोमान्वितो होमः कर्तव्य इति जुहोतिपदाद्विधिः स्यात स चायुक्तः । आत्मनैवात्मनोऽनन्वयात् । अयमर्थः शाब्दैरप्युक्त इत्याह—अस्मिन्नेवेति ।

नन्वग्निहोत्रमिति नामपदमेव गुणान्वितहोमविधायकमस्तु । जुहोतिपदं तु अनुवादः प्रत्ययोच्चारणार्थ इति शङ्कामपनुदन्नुपसंहरति—अत इति । यतः सिद्धार्थनाम्नो विधेयार्थसमर्पकत्वाभावात् अग्निहोत्रपदस्य न विधायकता । अतो नाग्निहोत्रवाक्ये गुणान्वितकर्मविधिः गुणस्यापि विधिना उपादानशेषतयाऽङ्गीकारात् गुणविधिरित्युक्तिः । न चोपसर्जनगुणान्वितहोमविधिर्जुहोतिना, उपसर्जनस्य जुहोतिपदार्थं प्रत्यन्वयानुपपत्तेः, पदार्थस्य हि पदार्थान्तरेणान्वयो न पदार्थावयवस्य । न च सामान्यविशेषतयाऽन्वयः । अनुवादे हि तथा स्यात् । न च हिरण्य-

मतुबन्तान्मतुबिति । अतो नात्र गुणवत्कर्मविधिः[1] । अतो वैश्वदेववत् प्रकृतहोमानुवादः ।

ननु यदग्नये चेत्यपि वाक्याद्धोमान्तरविधिरिति दधिहोमस्य देवताभावान्न निर्वाहः । मैवम् । अनिर्वाहेऽपि गौणो होमः सगुणश्रुतेः । निर्गुणा पुनः श्रुतिरनुवाद एवेति न निर्वाहचिन्ता ग्रन्थे कृता । निर्वाहोऽपि च शक्यः ।

यद्यप्यग्नये स्वाहेति मन्त्रस्य लिङ्गात् अग्निप्रजापतिदेवताकहोम एवाङ्गत्वधीः । तथाप्यपेक्षितविधेः दध्यादिहोमेष्वङ्गताऽस्तु, मान्त्रवर्णिकदेवताभिधानलिङ्गात् देवतास्तु ।

---

व्रज इतिवद्विधिः, गुणभागविधेः पूर्वपक्षावस्थायामनङ्गीकारात । न चैतत्पूर्वपक्षे तत्प्रख्यशास्त्राभावान्न नामताऽग्निहोत्रपदस्येति वाच्यम् । तत्प्रख्याधिकरणपूर्वपक्षस्य एतत्सिद्धान्तोत्तरत्वात् । अतोऽग्निहोत्रवाक्ये न गुणविधिरित्यर्थः । नन्वग्निहोत्रपदस्य दध्यादिहोमानुवादकत्वमनुपपन्नं दध्यादिहोमानामग्न्यसम्बन्धादित्यत्राह—अतो वैश्वदेवेति । अग्निदेवताकानग्निदेवताकहोमानां प्रकृतानामग्निहोत्रपदं वैश्वदेववद्दण्डिन्यायेनानुवादकमित्यर्थः । ननु कथं दध्यादिहोमे देवताया अभावे अग्निमद्धोमनिर्वाहः । न च यदग्नये चेति वाक्याद्देवतालाभः । अस्मिन् पूर्वपक्षे तस्यापि देवतान्वितकर्मान्तरविधायकत्वात् । न च कर्मान्तरे द्रव्याभावेनानिर्वाहः द्रव्यान्तराश्रुतावाक्षेपतो द्रव्यविधिसम्भवात् । न च देवताया आक्षेपतः प्राप्तिः अविहिताया देवतात्वाभावादिति चोदयति—नन्विति । मैवमिति । यदि सर्वथा देवताविरहादनिर्वाहः तर्हि गौणो होमः त्यागमात्रमत्रापि विधेयम् । जुहोतिपदेन लक्षणया त्यागोपस्थितौ लक्षणैव गौणोक्त्या उक्ता ।

ननु तर्हि ग्रन्थे निर्वाहचिन्ता कथं न कृतेत्यत्राह—सगुणेति । सर्वथा तावद्गुणविधिर्नास्ति । किन्तु सगुणेन वाक्येन गुणान्वितकर्मविधौ निर्गुणश्रुतिरनुवाद एवेत्यत्र पूर्वपक्षिणस्तात्पर्यमिति ग्रन्थे निर्वाहचिन्ता न कृतेत्यर्थः, एवं सम्यक्परिहारमुक्त्वा प्रौढ्या परिहारान्तरमाह—निर्वाहोऽपीति । दध्यादिहोमस्य देवताकाङ्क्षायां उपांशुयाजयजेरिव जुहोतेरेध सन्निहितकर्मान्तरसम्बन्ध्यग्निप्रजापत्यादिदेवतान्तर्भावात् स्वार्थपर्यवसानात् अग्निर्ज्योतिरिति मन्त्रलिङ्गाद्वा देवतालाभान्निर्वाहोऽपि वक्तुं शक्यत इति भावः । ननु मन्त्रलिङ्गाद्देवतालाभो न शक्यः दध्यादिहोमे अङ्गभूतमन्त्राभावात् अग्नये स्वाहेति मन्त्रस्य लिङ्गादग्निप्रजापतिहोम एवाङ्गत्वादिति शङ्कामनुवदति—यद्यपीति । उत्तरं—तथापीति । अग्निर्ज्योतिरित्येत-

---

१. B गुणविधिः

यत्तून्नीतं दण्डिन्यायादेतत्पूर्वपक्षावस्थायाञ्चेदग्निहोत्रपदं नाम न तर्हि नैयमिके मुख्यं, कौण्डपायिनामयनीय एव कथञ्चिन्मुख्यत्वान्न तद्धर्मातिदेशः शक्यत इति गावामयनिकधर्मकता। तद्धर्माकाङ्क्षायां च स्वरसामवत् तुल्यनामत्वचोदनालिङ्गात् तद्धर्मप्राप्तौ देवतालाभ इति।

---

देवाग्नये स्वाहेत्युक्तम्। अस्य च मन्त्रस्य यद्यपि लिङ्गादग्निप्रजापतिहोमेऽङ्गताधीः तथापि दध्यादिहोमानां देवतापेक्षायां अपेक्षितविधिबलात् मन्त्रस्य दध्यादिहोमेष्वङ्गतास्तु।

ननु दध्यादिहोमे मन्त्रस्य विनियोजकाभावात् कथं अङ्गतेत्यत्राह— मान्त्रवर्णिकेति। अपेक्षितविध्यापादिते मन्त्रान्वये मन्त्रवर्णलब्धदेवताभिधानसामर्थ्यरूपाल्लिङ्गात् दध्यादिहोमे मन्त्रस्याङ्गतया विनियोगोऽस्तु। न च मन्त्रान्वये सिद्धे तद्बलाद्देवतालाभः देवतायां तदभिधानलिङ्गात् मन्त्रान्वयसिद्धिरित्यन्योन्याश्रयतेति वाच्यम्। अपेक्षितविधिबलात् देवतान्वयस्य परामृष्टत्वात्। अग्निप्रजापतिहोमे च अग्नये स्वाहेति मन्त्रस्यात्यन्तमुख्यत्वाभावात्। न च लिङ्गविनियोज्यत्वे मन्त्रस्य न ततो देवतालाभः वचनविनियोज्यादेव मन्त्रात् मन्त्रार्थप्राप्तिर्नान्यत इति वाच्यम्। उक्तनीत्या अपेक्षितविधेः वचनस्थानीयत्वमित्यर्थः। अत्र प्रकाशेन देवतालाभोऽन्यथोपपादितः तदाह – यत्तून्नीतमिति। एतत्पूर्वपक्षावस्थायां विवरीतं कुण्डपायिनामयने यदग्निहोत्रं न तत्र नैयमिकाग्निहोत्रधर्मातिदेशः नैयमिके नित्यदध्यादिहोमे अग्निहोत्रपदस्य मुख्यत्वाभावात् दण्डिन्यायेन दध्यादिहोमेषु अग्निहोत्रपदप्रवृत्तेः प्रत्युत कौण्डपायिनामयनीय एव नामान्तर्गताग्निविधानादपि कथञ्चिन्मुख्यत्वम्। अतस्तत्र परशब्दत्वाभावान्न तदग्निहोत्रपदं धर्मातिदेशकम्। कुण्डपायिनामयनीय इति सम्यक् न तु कौण्डपाय्ययनीय इति। यदि नाम न धर्मातिदेशकं कथं तर्हि धर्मप्राप्तिरित्यत्राह—इति गावामयनिकेति। साप्तमिकाग्निहोत्राधिकरणपूर्वपक्षवत् धर्माकाङ्क्षायां अहर्गणत्वचोदनालिङ्गादयनीयत्वचोदनालिङ्गाद्वा गावामयनिकधर्मकता, गवामयनसम्बन्धिनो गावामयनिकाः गावामयनिका धर्मा अस्येति गावामयनिकधर्मकः तस्य भावस्तत्ता गवामयनधर्मास्तत्रातिदिश्यन्ते इति यावत्। भवत्वेवं तथापि कथं दध्यादिहोमे देवतालाभ इत्यत्राह—तद्धर्मेति। ततश्च दध्यादिहोमे द्रव्याकाङ्क्षायां स्वरसामवत् यथा त्रयः स्वरसामानः द्वौ स्वरसामानौ इत्यत्र अधर्मकसधर्मकयोर्धर्मः, तुल्यनामत्वचोदनालिङ्गात् प्राप्यते। तद्वदग्निहोत्रमिति तुल्यनामत्वचोदनालिङ्गात् तद्धर्मप्राप्तौ कौण्डपायिनामयनीयधर्मप्राप्तौ देवतालाभाद्धोमनिर्वाह इत्यर्थः—तन्नेति। एतत्पूर्वपक्षावस्थायामपि न वैपरीत्यम्। नैयमिक एवह्यग्निहोत्रपदं मुख्यं प्रवृत्तमित्यर्थः।

तन्न, अग्न्यन्वयाद्दण्डिवत् प्रवृत्तमस्यैव नाम, तत्राग्न्यन्वयासिद्धेः गौणमेव । यदि च तत्राप्यग्निरस्ति तर्हि राद्धान्तेपि गौणता न स्यात् । यदि च तत्राप्यग्निरस्ति इह तर्हि सर्वत्रैवाग्न्यन्वयात् न दण्डिवन्नामतेति समुदायानुवादसिद्धिः । समुदायानुवादे चाग्निहोत्रमिति होमेष्ववगतेषु तत्समुदायप्रतिपत्तिरिति होमसाध्यस्समुदाय इति होमापेक्षयैव द्वितीया । अन्यथा

---

कुण्डपायिनामयने तु नैवमित्याह—तत्रेति । तत्र कौण्डपायिनामयनीये साहश्यतः प्राप्तिः व्यतिरेकेण अन्यतः अग्न्यन्वयासिद्धौ गौण एव अग्निहोत्रशब्दः धर्मसाहश्यादेव प्रवर्त्य इत्यर्थः ।

ननु साध्यधर्मसाहश्यतोऽतिदेशात् प्रवृत्तेः तत्पूर्वं अग्नये होत्रमस्मिन् कर्मणीति समासान्तर्गतदेवतारूपाग्निविधितोऽग्न्यन्वयात् कुण्डपायिनामयनेपि नाम प्रवृत्तं भवतीति नैयमिकवत्तत्रापि नाम अग्न्यन्वयात् प्रवृत्तमेवेति शङ्कामनुवदति—यदि चेति । दूषयति—तर्हीति । एतद्राद्धान्तावस्थायामपि कौण्डपायिनामयनीयस्याग्निहोत्रपदस्य गौणता न स्यात् । ततश्च धर्मातिदेशकत्वं न स्यादित्यर्थः, अथाग्नौ होत्रमस्मिन् कर्मणीति अग्निहोत्रपदस्य यदाहवनीये जुहोतीति विधितः प्राप्ताधारभूताग्न्यन्वयात् प्रवृत्ततेति शङ्कते—यदिचेति । दूषयति—तर्हीति । यद्याधाराग्न्यन्वयात् प्रवृत्तता तर्हि एतत्पूर्वपक्षावस्थायां दध्यादिहोमेपि तत्सम्भवान्न दण्डिवन्नाम्नः प्रवृत्ततेति दण्डिन्यायेन समुदायलक्षणत्वमिति यद्ग्रन्थान्तरेण स्वेन चोक्तं तन्न स्यादिति पूर्वोक्तैव रीतिरित्यर्थ, ।

पूर्वपक्षेऽभ्युच्चयमाह—समुदायेति । अग्निहोत्रवाक्यस्य विहितहोमसमुदायानुवादत्वे अग्निहोत्रमिति येयं कर्मत्वाभिधायिनी द्वितीयाविभक्तिः सा धातूपात्तहोमापेक्षयैवोपपन्ना भवतीति समुदायप्रतीतेः समुदायहोमप्रतीतिसाध्यत्वात् प्रतीतिद्वारा समुदायस्य होमसाध्यत्वात् । सिद्धान्ते तु नैवमित्याह—अन्यथेति । सिद्धान्ते ह्यग्निहोत्रपदस्य विधेयैकहोमवचनत्वं तस्य च न धातूपात्तव्यापारान्तरापेक्षया साध्यता किन्तु प्रत्ययार्थकृत्यपेक्षयैव । सा चायुक्ता । द्वितीयाया असामञ्जस्यापत्तेरित्यर्थः ।

नन्वेतदभ्युच्चयकथनमयुक्तं एकहोमवचनत्वे समदायवचनत्वे च प्रयत्नापेक्षयैव कर्मत्वात् । अग्निहोत्रपदस्य समुदायवचनत्वे जुहोतेरपि समुदायवचनत्वेन धात्वर्थापेक्षया समुदायस्य साध्यत्वाभावात् । तथा द्रव्यादीनामविधाने वैनियोगिकशेषत्वाभावात् द्रव्यादिश्रुतिहीनासूद्भिदादिविकृतिषु तदतिदेशो न स्यात् अनङ्ग-

एकहोमविधौ एकहोमवचनत्वे प्रयत्नापेक्षतया होमस्य साध्यत्वेन[1] कथञ्चित् द्वितीया स्यात् । अतोऽप्यनुवादोऽयम् । न त्वनेन विहिते गुणविधिरिति स्थितम् ।

राद्धान्तस्तु कारकव्यापारविशेषे एव हि धातवो वर्तन्ते अविभागतः, कारकविशेषश्रवणे तु तद्विभक्तेन रूपेणावगम्यते । तच्च तादृशं कर्मरूपं

---

त्वेनानुपकारकत्वात् । किञ्च द्रव्यविध्यभावे तत्संस्काराणामप्यविधिः ततश्च सन्निपात्यङ्गकोटेरभावात् द्वैविध्यमितिकर्तव्यताया लोकसिद्धं न स्यादित्यत्राह— इति स्थितमिति ।

अयं भावः द्रव्यादीनां वैनियोगिकाङ्गत्वाभावे प्रकृतानुपादानमात्रशेषतया अवगतानुष्ठानत्वात् अवगतपरित्यागे कारणाभावात् अनवक्लृप्तावपि आक्षेपात्प्राप्तिरस्तु मास्त्वतिदेशत एव प्राप्तिरिति निर्बन्धः । यद्वा विकृतौ द्रव्याद्यश्रुतौ क्रियासामर्थ्यादेव यत्किञ्चिद्द्रव्याक्षेपादनुष्ठानमस्तु । मास्तु प्रकृतिद्रव्यनिर्बन्धः । तथा इतिकर्तव्यताद्वैविध्यनियमोऽपि । एतत्सिद्धान्तोत्तरकालमेव लोके तु दृष्टादृष्टसाधनभेदविवक्षया द्वैविध्यव्यवहारः । वेदे तु विनियोगाधीनत्वात् साधननियमस्य न तथा । यदप्युक्तं जुहोतेरपि समुदायवचनत्वेन अग्निहोत्रमिति द्वितीया न धात्वर्थापेक्षयेति । तदप्ययुक्तम् । समुदायावस्थायां न धात्वर्थवचनो जुहोतिः । किन्तु समुदायव्यवस्थावचनः आख्यातत्वात् । अग्निहोत्रपदं तु नामत्वाद्धोमसमुदायावस्थवचनमिति अवगतिद्वारा समुदायिसाध्यता समुदायस्य युक्ता । न च प्रयोजनशून्यतया अनुवादो न युक्तः । अनुवादतया कार्यान्वये सिद्धे प्रयोजनाभावेपि न हानिः वैश्वदेवानुवादवदिति ।

राद्धान्तस्त्विति । वाक्यद्वयस्यापि विधिपरत्वार्थमग्निहोत्रवाक्ये कर्मस्वरूपविधिः दध्यादिवाक्ये तु गुणविभक्तावस्थकर्मविधिरित्यर्थः । ननु कथं विभक्तिधीः येन तद्विधिः स्यात् । न तावत् दध्यादिपदेन, तस्य द्रव्यादिमात्रवाचित्वात् । नापि जुहोतीत्यादिना, तस्य होममात्रवाचित्वात् । अतो विभक्तप्रापकपदाभावात् कथं विभक्तावस्थकर्मविधिरिति तत्राह—कारकव्यापार इति । सर्वे हि धातवः कारकविशेषश्रवणहीने वाक्ये क्रियापदमात्रश्रुतौ अविभागतः सामान्येन कारकव्यापारत्वेन स्वार्थं वदन्ति । अस्ति च क्रियाया जुहोतित्वं रूपम् । तत्राग्निहोत्रवाक्ये सामान्येन जुहोतित्वं रूपं जुहोतिपदेन गम्यते । दध्यादिवाक्यात्तु नैवमित्याह—कारकविशेषेति । दध्यादिकारकविशेषश्रवणे तु क्रियाकारकपदयोरन्यो-

---

१. A कार्यत्वेन

कारकसम्बन्धित्वेनैव अवगन्तुं शक्यं नान्यथेति विभागश्रवणे विभक्तरूपमेव विधेयम्। धात्वर्थमात्रस्य विहितत्वात्। अतो गुणस्यापि विधिसंस्पर्शेऽपि ऐदमर्थ्यलक्षणः गुणानुरागाधीनत्वाद्विभक्तरूपस्य। अत एव कर्मणि किञ्चित्करत्वात् कर्मैदमर्थ्यं गुणस्य। अत्र चैक एव विधिः विभक्ताऽविभक्तरूपद्वयानुबद्धस्य भावार्थस्य एकस्यैव विधिविषयत्वात्। एवञ्च गुणवाक्ये

---

न्यसन्निधानादन्विताभिधानवशेन तद्विभक्तेन रूपेण तद्विशिष्टेन रूपेण तद्व्यापारत्वेन विशेषरूपेणावगम्यते जुहोतिना पदेन न सामान्येन जुहोतिस्वरूपेणेत्यर्थः। नन्वेवमपि स्वतः साध्यकर्मस्वरूपस्यैव विधेयत्वं न सिद्धरूपस्य दध्यादिगुणस्येत्यत्राह—तच्चेति। स्यादेवं यदि गुण उपलक्षणमात्रं स्यात् क्रमवत्। इह तु तत्कर्मरूपं तादृशं विभक्तं कारकसम्बन्धित्वेनैव वक्तुमवगन्तुं शक्यं नान्यथा। अतो विशेषणतयैव गुणस्य कार्यान्वयसम्भवादिति विभागश्रवणे कारकविशेषश्रवणे जुहोतिपदं होमक्रियाया दध्यादिव्यापारत्वेनैव प्रतिपादनपरमिति यथा प्रतिपादनमवगतेर्यथावगति विधानमिति विभक्तरूपमेव दध्यादि व्यापारलक्षणविशेषणरूपमेव विधेयम्, न जुहोतित्वलक्षणं सामान्यरूपम्। तस्य धात्वर्थमात्रस्य अग्निहोत्रवाक्यप्राप्तत्वेन प्रत्यभिज्ञानात्। यत्र तु सामान्याकार[1] प्रत्यभिज्ञानं यथा सोमेन यजेतेति तत्र कारकविशेषश्रवणेऽपि सामान्यरूपे विशेषे च स्वार्थे धातोस्तात्पर्यमिति विशिष्ट एव तात्पर्यम्। प्रत्यभिज्ञानेन तु प्राप्ताप्राप्तविवेकेन विभागांश एव विधितात्पर्यमिति भावः। यत एवं विशेषणता गुणस्य नोपलक्षणमात्रता अतो गुणानुरागाधीनत्वाद्विधेयकर्मविभक्ततारूपस्य गुणस्यापि विधिसंस्पर्शः ऐदमर्थ्यलक्षणः प्रयोजनिप्रयोजनभावेन ग्राहकविधिग्रहणमैदमर्थ्यं न [2]क्रमवत्प्रतीततया विध्याक्षेपमात्रं तदाह—अतो गुणस्यापीति। एवं ग्राहकैदमर्थ्यमुक्त्वा तन्निर्वाहकं द्वारैदमर्थ्यमप्यस्तीत्याह—अत एवेति। यत एव कर्मणो विभक्तरूपं दध्यादिव्यापारनिर्वर्त्यतया गुणानुरागाधीनं अत एव कर्मणि किञ्चित्करत्वात् कर्मैदमर्थ्यमप्युपपन्नं गुणस्य, तत्र विभक्तांशस्य कारकविशेषपदश्रवणाधीनत्वात् जुहोतिपदमुद्देशकं भवतीति पदद्वयश्रुतिरूपवाक्यात् कर्मैदमर्थ्यमित्यर्थः।

नन्वेवं दध्यादिवाक्ये विभक्तभावार्थविधिः अग्निहोत्रे तु अविभक्तभावार्थविधिरिति विधिभेदाद्विधेयभेदे अनुबन्धभेदाच्छास्त्रभेदः स्यात्। ततश्चापवादकतया सङ्गतिरित्युक्तिविरोधः स्यादित्यत्राह—अत्र चैक एवेति। तत्र हेतुः विभक्तीति। विषयभेदे हि विधिभेदः विभक्ताविभक्तरूपद्वयानुबद्धस्य। विभक्तं

---

१. कारापरस्य     २. क्रतुवत्।

विस्तीर्णावस्थितभावार्थे शास्त्रस्य विधेश्च व्यापारात् द्व्यंशव्यापारो विधिः वाक्यद्वये विभक्ताविभक्तांशस्य द्व्यंशत्वं गुणानुरक्तकर्मरूपपरत्वात्। अतस्तथाभूतकर्मविधौ तु गुणोऽपि कर्मविभक्तो विधीयते नतु हीयते विधिसंस्पर्शनात् गुणांशोऽपि विनियोज्य इति दर्शनरहस्यम्। गुणस्यैव

---

चाविभक्तं च विभक्ताविभक्तं जुहोतित्वादिसामान्यं दध्यादिव्यापारत्वादि-विशेषश्च तदेव रूपद्वयं विभक्तरूपद्वयं तदनुबन्धो यस्य सः तथोक्तः विभक्ता-विभक्तरूपद्वयानुबन्धः तस्यैव भावार्थस्य वाक्यद्वयेपि विधिविषयत्वावगमात् न विधिभेदावगतिरित्यर्थः। नन्वेवं भावार्थ एव केवलो वाक्यद्वयेपि विधिविषयत्वेन प्रतिपाद्यत इति वाक्यद्वयस्य वैयर्थ्यं स्यात्। न चाप्राप्तांशोऽपि कश्चिद्भावार्थो विद्यत इति सार्थकता तदा विधेयभेदाद्विधिभेदापत्तेरित्यत्राह—एवं चेति। एवं च पूर्वशास्त्रार्थस्य प्रत्यभिज्ञानादेकविधित्वे निश्चिते गुणवाक्ये पदद्वयात्मक-वाक्यशास्त्रस्य विधेर्लिङशब्दस्य च विस्तीर्णावस्थे भावार्थे व्यापारात् विस्तीर्णा-वस्थभावार्थोपस्थापने व्यापारादेक एव विधिर्वाक्यद्वयेपि द्व्यंशव्यापारः द्व्यंशा-वस्यैति द्व्यंशः व्याप्रियतेऽस्मिन्निति व्यापारः विषयः द्व्यंशव्यापारो यस्येति बहुव्रीहिः। अतो द्व्यंशव्यापारविधिप्रतिपादकत्वात् वाक्यस्य न वैयर्थ्यमित्यर्थः।

द्व्यंशतामेवाह—विभक्तीति। निगदव्याख्यातमेतत्। तत्र हेतुः विभक्ति-गुणानुरक्तरूपत्वात् अविभक्तकेवलकर्मरूपत्वात्। गुणानुरक्तं कर्मरूपं चेति द्वन्द्वः तत्त्वादित्यर्थः। नन्वेवं गुणानुरक्तभावार्थस्य विधेयत्वेपि भावार्थस्यैव विधेयत्वं स्यात्। न गुणांशस्य न कर्मप्रविनियोज्यत्वं स्यादित्याशङ्क्याह—अतस्तथाभूतेति। गुणानुरक्तकर्मविधेः गुणांशं विनाऽनुपपन्नत्वात् गुणांशोऽपि कर्मविभक्तः कर्मणा सहित एव विधीयते न तु विधितो हीयते विधिसंस्पर्शात् गुणांशोऽपि विनियोज्य एव कर्मणीत्यर्थः। नन्वेवं दध्नेन्द्रियकामस्य जुहुयादित्यत्रापि दध्ना जुहोतीत्यादि-वद्विधिभेदो न स्यात् दध्यनुरक्तस्यैव फले विधेः प्रकृतस्यैव भावार्थस्य विस्तीर्णा-वस्थस्य विधेर्विषयत्वात्। यद्यत्र विषयभेदः दध्ना जुहोतीत्यादौ को वारयेत् प्रत्यभिज्ञा तु सर्वत्र तुल्या। न च नियोगभेद एव नास्तीति साहसं युक्तं निबन्धन-कारेण नियोगभेदस्य स्पष्टमङ्गीकृतत्वादित्याशङ्क्याह—इति दर्शनरहस्यमिति। अयं भावः गुणफलविषये हि साधिकारत्वाद्वाक्यस्य अधिकारान्तरान्नियोगान्तरप्रतीति-बलात् विधेर्विस्तीर्णावस्थभावार्थस्य विषयत्वे व्यापारः न तु गुणविभक्तत्वोप-स्थितिमात्रे, प्रकृतप्रत्यभिज्ञायां विस्तीर्णावस्थता न कर्मान्तरता। प्राप्ताप्राप्त-विवेकेन तु गुणांशस्यैव विधिविषयता शब्दबलात् स्वीकृता दध्यादिवाक्ये नैवमिति भेदः।

तद्गुणादिशृङ्खलाविधिसिद्धिः। शेषं सुगमम्।

॥ ६ ॥ द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन ॥ १७ ॥

यदि सोमेन यजेतेति यागविधिरिष्यते तदैन्द्रवायवादिवाक्यैः तत्र

---

ननु शुक्लानां व्रीहीणामित्यादौ द्रव्यगतशुक्लादिगुणानां द्रव्यवत् भावार्थानाश्रितत्वात् कथं तद्विधिसिद्धिरित्यत्राह—गुणस्येवेति। यथा द्रव्यश्रुतेः तद्विभक्तधीः तथा द्रव्यस्य यो गुणादिः तद्विभक्ततापि श्रुतिबलात् परम्परयाऽवगम्यत एव। आदिशब्दात् सङ्ख्यापरिमाणादिग्रहणम्। अतः परम्परया भावार्थाश्रितायाः तद्गुणशृङ्खलाया अपि विधिसिद्धिः तच्छङ्खलानुरक्तभावार्थविधेः तद्विधिं विनाऽनुपपत्तेः। एतेनेदमपि प्रदर्शितं यदुक्तं प्रतिपदाधिकरणे उत्पत्त्यादिसाध्यभेदेन शास्त्रस्य भिन्नत्वमाघाराग्निहोत्राधिकरणे वक्ष्यत इति। यथाहि पुरोडाशादिद्रव्यस्य विधिसंस्पर्शस्तथा तस्यैव तद्गुणानां प्रोक्षणसंयवनसंस्काराणां तद्गुणानां प्रणयनादीनां तद्गुणानां च परिमाणादीनां परम्परया तद्द्वारा विधिसंस्पर्शात् नियमादृष्टानुविद्धोत्पत्त्यादिसाध्यभेदाच्छास्त्रभेदो वक्तुं शक्यते नान्यथा। एतच्चाध्यायादावेव प्रपञ्चितमस्माभिः।

## द्रव्यसंयोगाच्चोदनापशुसोमयोः प्रकरणेप्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन

ज्योतिष्टोमे श्रूयते—'सोमेन यजेत' 'ऐन्द्रवायवं गृह्णाति इति' तथेदमपरं श्रूयते 'यो दीक्षितो यदग्नीषोमीयं पशुमालभत' इत्यादि। तत्रेदमाम्नातम्-हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस' इति। तत्र चिन्ता—किमैन्द्रवायवादिवाक्यैः हृदयादिवाक्यैश्च यागविधिः सोमवाक्यं अग्नीषोमवाक्यं च यागसमुदायस्य हृदयाद्यवदानसमुदायस्य चानुवादकं, किं वा सोमवाक्यमग्नीषोमवाक्यं च यागविधायकं ऐन्द्रवायवादिवाक्यैः हृदयादिवाक्यैश्च ग्रहणविधिरवदानविधिश्चेति। यदा ऐन्द्रवायवादिवाक्यैः यागविधिः तदाप्यनुबन्धभेदाच्छास्त्रभेदः यदा तु सोमवाक्ये यागविधिः तदा नेति शास्त्रभेदापवादादध्यायसङ्गतिः। पौर्णमास्यपवादकत्वेपि पेटिकायां, अवान्तरे तु पूर्वत्र गुणविधौ दध्यादिविकल्पेऽपि न कश्चिच्छ्रुतिबाधदोषः। इह तु गुणविधौ देवताविकल्पक्रमसमुच्चयश्रुतिबाध इत्युत्थानात्। पारिशेष्याद्वा उपांशुयागाद्यधिकरणत्रयस्योपक्रान्तत्वात्। प्रयोजनं तु पूर्वपक्षे

देवताविधिर्भवेत् । ततश्च देवता विकल्पः स्यात्। ततश्च क्रमदर्शनं समुच्चयदर्शनं च नोपपद्यते। तस्मादैन्द्रवायवादिवाक्यैः यागविधिः सोमेन यजेतेत्यनुवादः ।

नन्वत्रैव साक्षाद्यजतिश्रुतेर्यागविधिर्युक्तः । तत्र तु गृह्णीयादिति श्रुतेस्तद्विधिर्युक्तः । तच्च यागार्थद्रव्यसंस्काररूपं ग्रहणमिति यद्यङ्गीक्रियते तदा ग्रहणस्य यत्स्वभावाद्ग्राह्यद्वारकत्वमुपनयनस्येवोपनेयद्वारकत्वम् यच्च

---

नोद्भिदादिषु सौमिकधर्मप्राप्तिः अव्यक्तत्वाभावात् । सिद्धान्ते तु तत्प्राप्तिरिति । ननु विधौ सति अनुवादत्वायोगात् वाक्यद्वयस्यापि विधिपरत्वार्थं सोमवाक्येन यागविधिः ऐन्द्रवायवादिवाक्यैः तत्र ग्रहणविधिरेव युक्त इति कथं पूर्वपक्ष इत्यत्राह—यदिसोमेनेति। सोमवाक्येन यागविधौ ऐन्द्रवायवादिवाक्यैस्तत्र देवताविधिरेव भवेत् न ग्रहणविधिः अपेक्षितविधेर्ग्रहणविधौ ऐन्द्रवायवमिति देवतातद्धितस्यान्वयानर्हत्वात् । ततश्च देवतानां यागे विकल्पः स्यात्, बन्धने खदिरादीनामिव। यद्यपि राद्धान्तिना देवताविधानं न स्वीकृतं तथापि पूर्वपक्षिणा बलादापाद्यते। भवतु देवताविकल्पः का क्षतिरित्यत्राह—ततश्चेति । क्रमसमुच्चयश्रुतेर्बाध एव क्षतिरित्यर्थः । यस्माद्देवताविधौ विकल्पापत्त्या क्रमसमुच्चयदर्शनानुपपत्तिः तस्मादैन्द्रवायवादिवाक्यैः यागविधिः सोमवाक्येन तु तत्प्राप्तयागसमुदायानुवाद इत्यर्थः ।

ननु सोमेन यजेतेत्यत्रैव यागविधिर्युक्तः यजेतेति विधेययागस्य साक्षाच्छ्रुतेः ऐन्द्रवायवादिवाक्यैः द्रव्यदेवतासम्बन्धान्यथानुपपत्त्या यागः कल्प्यः । न च श्रुतयागविधौ सम्भवति कल्प्ययागविधिर्युक्तः प्रत्युत ऐन्द्रवायवादिवाक्ये गृह्णातीति ग्रहणस्य साक्षाच्छ्रुतेः तद्विधिरेव युक्तः न देवताविधिरिति चोदयति—नन्विति । श्रुतेः समानपदोपादानश्रुतेरिति वा योजना ।

नन्वेवं यद्यैन्द्रवायवादिवाक्यैर्न देवताविधिः तर्हि कथमिन्द्रवाय्वादीनां सोमयागे देवतात्वं ? कथं वा तदभावे यागनिर्वाहः ? ग्रहणविधौ च कथमैन्द्रवायवमिति देवतातद्धितपदस्यान्वयः इत्यत्राह—तच्चेति । तद्विधीयमानं ग्रहणं स्वभावात् संस्काररूपतया यागीयद्रव्यसंस्काररूपमेव विधीयते । तच्च ऐन्द्रवायवमिति समभिव्याहारादिन्द्रवायूद्देशेन कर्तव्यमिति विधीयते ऐन्द्रवायवमिति तस्येदमिति सम्बन्धसामान्यमात्रे तद्धितोऽयम् । स च उद्देश्यतया सम्बन्धेपि न हीयत इति प्रकृतयागीयद्रव्यस्य इन्द्रवायूद्देशेन ग्रहणम् । तदुद्देशेन ग्रहणस्य यत्स्वभावादिन्द्रवायुसम्बन्धे ग्राह्यद्वारत्वं उपनयनस्येवोपनेयद्वारकत्वं यथा उपनीयाध्यापयेदित्यत्र उपनयनस्याध्यापनान्वये उपनेयमाणवकस्यापि तत्सम्बन्धात् तद्वारकत्वं तथा ग्रहणस्येन्द्रवायुसम्बन्धे ग्राह्यस्यापि तत्सम्बन्धात् तदद्वारकत्वं यत् तदा

ग्राह्यस्य यागार्थत्वं इन्द्रवाय्वोश्चोद्देश्यत्वं त्रयमिदं इन्द्रवाय्वोर्देवतात्वे सति घटते। इत्थञ्च देवताभावे न विकल्पः स्यात्। मैवम्। न हि इन्द्रवाय्वोरुद्देश्यत्वं श्रुतं किन्तु तद्धितादिन्द्रवाय्वोर्देवतात्वम्। अतः कथं त्रयानुरोधात् देवतात्वं वाक्यान्तरविहिते यागे चोद्यते।

किञ्च यथा देवताविधिपक्षे विकल्पस्तथा तत्कल्पनापक्षेपि युक्त इत्यैन्द्रवायवमित्यादिभिः यागविधिः। गृह्णातिस्त्वर्थप्राप्तानुवादः। अतो यागभेदात् क्रमसमुच्चयसिद्धिः। प्रकृतेषु च यागेषु सोमेन

---

ग्राह्यस्य यागार्थत्वं यत् तथेन्द्रवाय्वोरुद्देश्यत्वं च यत् त्रयमिदं इन्द्रवाय्वोर्यागे देवतात्वे सति घटते नान्यथेति सोमयागे इन्द्रवाय्वादीनां देवतात्वात् यागनिर्वाह इत्यर्थः।

नन्वेवमेकस्मिन् यागेऽनेकेषां देवतात्वे विकल्पः स्यादित्यत्राह—इत्थं चेति। विधाने हि विकल्पो न कल्पनायामितिभावः। मैवमिति। स्यादेतदेवं यदि इन्द्रवाय्वादीनामुद्देश्यत्वं ग्रहणे श्रुतं स्यात्। न ह्यैन्द्रवायवमिति सम्बन्धसामान्ये तद्धितोऽयम्। किन्तु देवतातद्धितः। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तं बलीय इति शाब्दोक्तन्यायात्। प्रतिपदोक्तदेवतातद्धितस्यैव सामान्यतद्धिताच्छीघ्रावगतेः इन्द्रवाय्वादीनां वाक्यान्तरविहिते यागे देवतात्वेन चोदना। न पुनरत्रोद्दिश्यग्रहणस्य विधिः ग्रहणविधौ देवतानन्वयप्रसङ्गात्। यागे हि देवतान्वयो न ग्रहणे। अतो वाक्यान्तरविहितस्य यागस्य देवतापेक्षत्वात् अपेक्षितविधेर्देवताविधिरेव ऐन्द्रवायवादिवाक्ये। ततो विकल्पापत्तिर्दुर्वारेत्यर्थः। ग्रहणविधिमङ्गीकृत्यापि यागे देवताविकल्पो दुर्वार इत्याह—किञ्चेति। एककार्यत्वं हि विकल्पप्रयोजकं न विधानं कल्पना वेति भावः। ननु कथमैन्द्रवायवादिवाक्ये यागविधिः यजिश्रुत्यभावादिति शङ्कामात्रमपनुदति—इत्यैन्द्रवायवमिति। यजिश्रुत्यभावेपि द्रव्यदेवतासम्बन्धाद्यागविधिः सौर्यं चरुं निर्वपेदित्यादिवदित्यर्थः। ननु ग्रहणविध्यभावे कथं गृह्णात्यन्वय इत्यत्राह—गृह्णातिस्त्विति। सौर्यवाक्ये निर्वपतिरिव गृह्णातिरप्यर्थप्राप्तग्रहणानुवाद इत्यर्थः। ननु ऐन्द्रवायवादिवाक्यानां यागविधायकत्वेपि कथं समुच्चयसिद्धिरित्यत्राह—अत इति। मैत्रावरुणवाक्यस्यापि समानन्यायेन यागविधायकत्वाद्यागभेदः। ननु क्रमसमुच्चयोपपत्त्यर्थं ऐन्द्रवायवादिवाक्यानां यागविधायकत्वेपि सोमवाक्यमपि यागान्तरं विधत्तां विधित्वे सम्भवत्यनुवादत्वासम्भवादित्यत्राह—प्रकृतेषु चेति। विहितेषु यागेषु प्रत्यभिज्ञायमानेषु न यागान्तरविधिर्युक्त इति रूपशून्यं सोमवाक्यमनुवा-

यजेतेत्यनुवादो युक्तः।

नन्वैन्द्रवायवश्रुतिः प्रकरणबलेन सोमरसे प्रवृत्तेति लक्ष्यते। सोमेन यजेतेति तु लतावचनः। तां नानुवदितुमर्हतीति नानुवादः। मैवम्। अनुवादपरत्वे अवधारिते लक्षणया रसानुवादः।

नन्वनुवादो लक्षणा चेति द्वयमयुक्तमिति वरं क्रमसमुच्चययोरन्यथा वर्णनं दशैतानीति हि दशश्रुतिः समुच्चयाधीनेति समुच्चयश्रुतिरित्युच्यते। तृतीयं जुहतीति तृतीयं सन्तं दशमे स्थाने जुहतीति तृतीयतानुवादः दशमो गृह्यत इति दशमानुवादः क्रमाधीन इति क्रमश्रुतिरुच्यते। एते च श्रुतिपाठादपि सम्भवतः। किञ्च देवताविधावर्थप्राप्तस्य ग्रहणस्यानुवादेन

---

दकमेव। विधायकत्वासम्भवादित्यर्थः। ननु सोमवाक्यस्यानुवादकत्वमपि न सम्भवति। सोमेन यजेतेति हि सोमशब्दो लतावचनः ऐन्द्रवायवादिवाक्यैस्तु सोमरसद्रव्यका यागा विहिताः अतो द्रव्यभेदान्नानुवाद इति चोदयति—नन्विति। ऐन्द्रवायवादिवाक्येपि न सोमरसः श्रुत इति कथं द्रव्यभेदः न च ग्रहणश्रुतेः रसप्रतीतिः उपादानमात्रार्थत्वाद्गृह्णातेरित्यत्राह—प्रकरणबलेनेति। ऐन्द्रवायवमिति तद्धितश्रुतिस्तावत् द्रव्यपर्यवसिता वाच्या। तत्र स्ववाक्ये द्रव्याश्रुतौ प्रकरणबलेन तद्धित श्रुतिः सोमरसे प्रवृत्तेति लक्ष्यते न्यायात् अतो द्रव्यभेद इत्यर्थः।

मैवमिति। अनुवादतात्पर्ये निश्चिते पदवृत्तेस्तात्पर्यस्य बलवत्त्वात् लक्षणया रसानुवादः। न चानुवादे लक्षणा दोष इत्यर्थः। ननु विधित्वं विहायानुवादो मुख्यार्थत्यागेन लक्षणा चेति द्वयमप्ययुक्तमिति क्रमसमुच्चयश्रुत्योरन्यथावर्णनमात्रं युक्तमिति चोदयति—नन्विति। ननु दशैतानध्वर्युरिति न समुच्चयश्रुतिः तद्वाचकशब्दाभावात् दशसङ्ख्याश्रुतिरिति कथं समुच्चयश्रुतित्वेनोक्तमित्यत्राह—दशैतानिति। तदधीनत्वात्तद्व्यपदेश इत्यर्थः। क्रमश्रुतेरप्येवमेव निर्वाह इत्याह- तृतीयमिति। किन्तु यद्यप्याश्विनस्य वस्तुतस्तृतीस्थानता नास्ति तथापि पाठतस्तृतीयस्य सतः दशमताविधानेपि अस्त्यन्वयेन तृतीयतानुवादो युक्त इत्यर्थः। अन्यथावर्णनप्रकारमाह—एतच्चेति। अन्यपरवाक्यस्थक्रमसमुच्चयश्रुत्योः पाठक्रमापेक्षया अन्यथावर्णनेपि न तावदतीवदोष इति भावः। सोमवाक्यस्यानुवादपक्षेपि गृह्णातीति श्रुतेरनुवादकतया कथञ्चिदन्यथावर्णनमयुक्तमेवेत्याह—किञ्चेति। स्वारसिकदेवतातद्धितबलात् देव-

कथंचिद्वर्णनं न युक्तम्; मैवम्, दशमो गृह्यत इति पाठतः तृतीयस्य दशमताविधिरपि यः स न पाठापेक्षयाऽन्वितः। दशमताविधानादेव ग्रहणस्य दशमस्थाने होमः। स विकल्पे न स्यादित्यनुवादो लक्षणा चेति। यद्वा पाठान्तरे बहिः पवमानोत्तरकालभावित्वादाश्विनस्य दशमता या प्राप्ता सा विकल्पेन स्यादिति अनुवादो लक्षणा चेति सोमोदाहरणे कृतः पूर्वपक्षः। पशावपि हृदयादिवाक्यैर्यागविधिः अग्नीषोमीयवाक्येन समुदायानुवादः।

ताविधानेन विकल्पापातात् तत्परिहाराय द्रव्यदेवतासम्बन्धविधावर्थप्राप्तस्य ग्रहणस्य अनुवादेन कथञ्चिद्वर्णनं भवत्पक्षेपि समानमिति भावः।

मैवमिति। भवत्वेवं तृतीयताऽनुवादस्य कथञ्चित्त्वादन्यथा वर्णनम् दशमो गृह्यत इति पाठतस्तृतीयस्याश्विनस्य यो दशमताविधिः तस्य पाठापेक्षयाऽन्वितत्वं वक्तुं न शक्यते तत्र हेतुर्दशमेति। पाठतस्तृतीयग्रहस्य दशमत्वविधानादेव दशमस्थाने ग्रहहोमः। स न पाठमात्रापेक्षया सिद्ध्यति। किन्तु विधानपूर्वकानुष्ठानापेक्षया। समुच्चये च तदुपपत्तिः न विकल्पे इति स्वतोऽयुक्तमप्यनुवादो लक्षणा चेति द्वयमपि युक्तमिति भावः।

ननु सोमवाक्यस्यानुवादकत्वेपि किमिति सोमपदस्य स्वरसलक्षकता। यावता रूढत्वेपि आज्यादिवत् यागनामतैवास्तु। न चानुवादे न नामतेति वाच्यम्। वैश्वदेवादिषु दर्शनात्। तथा सोमवाक्य एव यागविधिरस्तु ऐन्द्रवायवादिवाक्यैस्तु तस्मिन्नेव यागे देवताविधिरस्तु क्रमसमुच्चयश्रुतिबलात् देवतासमुच्चयोऽस्तु मास्त्वैन्द्रवायवादिवाक्यैः यागविधिः। निरर्थकानुवादश्च सति गत्यन्तरे न युक्त इत्यत्राह—इति सोमेति। अयमाशयः। न तावदनुवादपक्षे सोमशब्दो नाम, प्रवृत्तिनिमित्ताभावात। न च दर्शादिवत् तद्युक्तकर्मोपस्थापकता, सोमशब्दो हि लतावचनः, न लतायुक्तं कर्मास्ति। न च सोमरसयुक्तकर्मोपस्थापकता लक्षितलक्षणापत्तेः तस्माल्लक्षणया रसद्रव्यानुवादकतैव न कर्मनामता। न च क्रमसमुच्चयश्रुतिवशात् निरपेक्षाणां देवतानां समुच्चयः ऐन्द्रवायवादिवाक्यैः यागविधानेपि तदुपपत्तेः। न च निष्प्रयोजनता अनुवादे दोषः वैश्वदेववाक्यवदिति। पशूदाहरणेपि पूर्वपक्षमाह—पशावपीति। हृदयस्याग्रेऽवद्यतीत्यादिवाक्यैः यागविधिः अग्नीषोमीयं पशुमालभेतेत्यादिवाक्येन आलम्भसमुदायानुवाद इत्यर्थः। ननु हृदयादिवाक्येषु न तावद्यजिश्रुतिः नापि देवतान्वयः प्रतीयत इति कथं यागविधिरिति चोदयति—नन्विति।

1. B चिद्वर्णनाद्विकल्पापत्तेर्द्रव्यदेवतासंबन्धविधौ च युक्ता

ननु हृदयादेर्देवतान्वयाश्रुतेः न यागविधिर्युक्तः । अत्रैकदेशी अवदानश्रुतेस्तस्य च यागसाधनसंस्कारकता दृष्टेति यागकल्पनां मन्यते । तदयुक्तम् । इहावदाने विहिते नावदानकार्यमतिदिश्यते इति न यागविधिः । फलचमसपूतीकयोस्तु सन्निहितभक्षणाद्यन्वयात् युक्तो यागान्वयः । इहत्ववदानकार्यस्य कार्यान्तररहितहृदयाद्यन्वितस्य भावार्थत्वेन विधिविषयता हृदयादि च तत्साधनमिति युक्तम् ।

परमपूर्वपक्षे तु क्रमसमुच्चयश्रुतिबलादेवात्र हृदयादिद्रव्यका यागा

---

अत्र परोक्तं यागविधिप्रकारमाह – अत्रेति । सत्यं न यजिश्रुतिः नापि देवतासम्बन्धश्रुतिः तथाप्यवदानश्रुतिवशादेव यागः कल्प्यते । कथमित्यत्राह—तस्य चेति । इदमवदानं सान्नाय्यादौ विहितमिति अवदानं प्राकृतिकं, प्रकृतौ च तस्यावदानस्य यागसाधनद्रव्यसंस्कारः कार्यं दृष्टमिति अस्यापि तदेव कार्यमिति अवदानसम्बन्धिहृदयादेः हविष्ट्वयागसाधनतायुक्तेति यागकल्पना यदा यागसाधनसंस्कारभक्षणाभिषवसम्बन्धात् फलचमसपूतीकयोर्यागसाधनत्वमित्यर्थः । तदयुक्तमिति । न तावत् प्राकृतमेवेदमवदानं, किन्तु प्रकरणान्तरादप्राप्तमवदानान्तरं विधीयत इति दशमे स्थितम् । ततश्चेहावदानान्तरे विहिते तस्य गुणकर्मत्वेनानाकाङ्क्षितत्वात् स्वतो नातिदेशः । अतिदेशेऽपि नावदानकार्यमतिदिश्यते, किन्तु तत्साधनमेव । अतोऽन्यतो यागान्वयानवगतेः न यागविधिरित्यर्थः ।

कथं तर्हि फलचमसपूतीकयोः भक्षणाभिषवान्वयमुखेनैव यागान्वय इत्यत्राह—फलचमसेति । यागसाधनद्रव्यसंस्कारकत्वेन पूर्वमवगतं सन्निहितं भक्षणमभिषवश्च [1]तत्सम्बन्धित्वेन फलचमसपूतीकौ ज्ञाप्येते इति सन्निहितभक्षणाभिषवान्वयबलाद्युक्तस्तयोः यागान्वय इत्यर्थः । नन्वत्रापि हृदयादीनामवदानकर्मताऽवसीयते । अवदानं च स्वभावादेवावदेयसंस्काररूपं संस्कारश्च यागसाधनद्रव्यस्यैव दृष्ट इति यागसाधनता हृदयादेः कल्प्यत इत्यत्राह—इहत्विति । भावार्थस्य स्वतः प्राप्तनियोगविषयता क्लृप्तेनोपयुक्तोपयोक्ष्यमाणान्यतरनिष्ठत्वेनापोद्यते न कल्प्येन । इह तु न तथेति हिरण्यभरणवद्विधिविषयत्वमेवेत्यर्थः । कथं तर्हि हृदयादेरन्वय इत्यत्राह—हृदयादि चेति । विषयत्वे सिद्धे तृतीयार्थे षष्ठी । हृदयेनावद्यतीति भावः । कथं तर्हि हृदयादिवाक्येषु यागविधिरित्यत्राह—परमेति । अत्र सोमोदाहरणवत् पशूदाहरणेऽपि क्रमसमुच्चयश्रुत्यन्यथानुपपत्तिबलादेव हृदयादिद्रव्यका यागा विधेया इति तात्पर्ये स्थिते अग्नीषोमीयं पशुमिति द्वितीयान्तेन

---

१. सन्निहितत्वेन ।

इति स्थिते तदुपपत्तये पशुशब्दो हृदयादीन्लक्षणयोद्दिशति। अग्नीषोमीयपदन्तु प्रत्येकमग्नीषोमीयतां विधत्त इत्यनुसन्धत्ते। तथाहि—एकादशावदानश्रुतिः समुच्चयाधीनेति समुच्चयश्रुतिरुच्यते। अग्रे, अथ, श्रुतिस्तु क्रमश्रुतिरेव। तदुभयमपि यागभेदे प्रतियागमवदानभेदे च तत्समुच्चये च घटते। यदा चाग्नीषोमीयवाक्ये यागविधिः तदैकस्मिन् यागे हृदयादिवाक्यैः हृदयाद्यवदानविधावपि अवदेयेनैकेन पशुयागसिद्धेः हृदयाद्यवदानविकल्पः स्यात्।

ननु स्ववाक्ये द्रव्यदेवतयोर्योगात् तद्युक्तयागविधौ सति तद्विहायान्यत्र देवताविधिपरता हृदयादिलक्षणया पशुशब्दं व्यवस्थाप्याग्नीषोमीयवाक्यस्य न युक्ता। वरं पाठतः एवैकादशता अग्र इत्यग्रदेशता युक्ता। मैवम्; अथशब्दस्तावत् क्रमपरः तत्समभिव्याहाराच्चाग्र-

---

पशुशब्देन हृदयादीन् लक्षणया उद्दिश्य अग्नीषोमीयपदेन तेषां प्रत्येकमग्नीषोमीयता विधीयते। एवं च अवद्यतेः संस्कारतैव। सौर्यं चरुं निर्वपेदित्यत्र निर्वपतेरिवेति। कर्मण्येव षष्ठी न तृतीयार्थ इति परमपूर्वपक्ष्यनुसन्धत्त इत्यर्थः।

ननु एकादशावदानान्यवद्यतीति समुच्चयश्रुतिरित्युक्तम्। सङ्ख्याश्रुतिरेवेयं न समुच्चयश्रुतिः तद्वाचकपदाभावादित्याशङ्क्योपपादयति—तथाहीति। कथं तयोरन्यथानुपपत्तिरित्यत्राह— तदुभयमपीति। हृदयादिवाक्यैरग्नीषोमीयपदैकवाक्यतापन्नैः प्रति हृदयादिवाक्यभेदेन यागे विहिते प्रतियागं अवदाने च भेदेन सिद्धे अवदानसमुच्चये क्रमसमुच्चयश्रुतिर्घटते नान्यथेत्यर्थः। कथमित्यत्राह—यदा चेति। यदा पुनरग्नीषोमीयवाक्ये यागविधिः तदा हृदयादिवाक्यैः तत्रावदानानि विधातव्यानि। तत्रैकस्मिन् यागे अनेकावदानविधावेकेन अवदेयेन यागस्य सिद्धेर्हृदयाद्यवदानानां विकल्पः स्यात् न च यागावृत्तिः। गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात्। तथा च क्रमसमुच्चयानुपपत्तिरित्यर्थः। नन्वग्नीषोमीयवाक्ये यागविधानं भाति स्ववाक्ये द्रव्यदेवतयोः श्रुतत्वात्। तदेव युक्तं तद्विहायाग्नीषोमीयवाक्यस्य वाक्यान्तरविहिते यागे देवताविधिपरता न युक्ता। तथा पशुशब्दस्य हृदयादिलक्षणा न युक्तेति चोदयति—नन्विति। कथं तर्हि क्रमसमुच्चयश्रुतिवर्णनमित्यत्राह—वरमिति। पाठक्रमापेक्षया एकादशतास्तु। अग्रशब्दः अग्रदेशपरोऽस्तु मास्त्वयुक्तलक्षणादिस्वीकार इत्यर्थः। मैवमिति। अथ जिह्वाया इत्यथशब्दस्तावत्क्रमपर एव,

शब्दोऽपि । किञ्चाग्रादिति[1] प्रदेशपरत्वे स्यात् । अतः क्रम एव श्रुतः । समुच्चयोऽपि न पाठतः कथंचिन्नेत्य इति विभक्तेनाग्नीषोमीयपदेन हृदयादीन्यग्नीषोमीयाणीत्येव देवताविधिः । पशुमालभेतेति चालम्भसमुदायानुवादः ।

यद्वा पशुशब्देन हृदयादि लक्षयित्वाऽग्नीषोमीयविधिः तस्मिन्नेव च वाक्ये आलभेतेति च आलम्भसमुदायानुवाद इत्युभयथापि देवताविधिर्लक्षणा चेति उदाहरणद्वयेपि क्रमसमुच्चयतः पूर्वपक्षकरणादैकाधिकरण्यं सिद्धम् ।

---

आनन्तर्यार्थत्वात् । अग्रशब्दोऽप्यथशब्दसमभिव्याहारात् क्रमपर एव युक्तो न प्रदेशपर इत्यर्थः । अग्र इति सप्तमीश्रुतिबलादपि क्रमपर एव न प्रदेशपरः । तथात्वे अग्रादिति पञ्चमी स्यादित्याह—किञ्चेति । समुच्चयोऽपि न पाठापेक्षया कथञ्चिन्नेय इत्याह—समुच्चयोऽपीति ।

नन्वग्नीषोमीयमिति वाक्ये हृदयादीनामनुपादानात् भिन्नविभक्तित्वाच्च कथं हृदयादीनामग्नीषोमीयताविधिरित्यत्राह—इति विभक्तेनेति । पशुवाक्याद्विच्छिन्नेनाग्नीषोमीयपदेन सन्निहिततया बुद्धिस्थेषु हृदयादिषु अग्नीषोमीयताविधिः खदिरादिष्विव छेदनविधिरित्यर्थः । का तर्हि पशुमालभेतेत्यस्य गतिरित्यत्राह पशुमिति पशुमालभेतेति च हृदयादिवाक्यविहितयागेष्वर्थप्राप्तहृदयाद्यालम्भसमुदायस्यानुवादः अस्पृष्टानां हृदयादीनां देवतोद्देशेन त्यागायोगात् पशुमिति व्यत्ययेन षष्ठयर्थे द्वितीयां कृत्वा लक्षणया वा हृदयाद्यनुवाद इत्यर्थः । ननु व्यत्यय एव दोष इत्यरुच्या पक्षान्तरमाह—अथवेति । अग्नीषोमीयं पशुमालभेतेति पदत्रयमेकं वाक्यं, तत्र पशुशब्देन हृदयादिप्रकृतिपशुव्यक्त्यर्थेन तद्विकारान् हृदयादीन् लक्षणयोद्दिश्याग्नीषोमीयपदेन देवताविधिः प्रत्युद्देशं वाक्यपरिसमाप्त्या यागभेदः । तस्मिन्नेव वाक्ये आलभेतेति आलम्भनसमुदायानुवाद इति प्रकारद्वयेपि देवताविधिर्लक्षणा चेत्यर्थः ।

ननु सोमोदाहरणे सोमवाक्ये पूर्वपक्षे अनुवादमात्रं पशूदाहरणेतु अग्नीषोमीयवाक्ये देवताविधिरनुवादश्चेति पूर्वपक्षप्रकारभेदात् कथमैकाधिकरण्यमित्यत्राह—इत्युदाहरणेति । उदाहरणद्वयेपि क्रमसमुच्चयाख्यपूर्वपक्षे युक्तेरेकत्वात् अनुवादलक्षणासाम्याच्चैकाधिकरण्यमित्यर्थः ।

---

१. ग्रतः स्थितिः

राद्धान्तस्तु क्रमसमुच्चयोपपत्तये हि लक्षणा वाक्यभेदः अनुवादश्चाङ्गीक्रियते ।

तदयुक्तम् । सोमेन यजेतेति विधावपि यदा ऐन्द्रवायवादिभिरपि यागविधिः तदा क्रमसमुच्चयोपपत्तिरस्त्येव । तथा पशुमालभेतेति पशुसाधनकालम्भविधावपि हृदयादिष्वग्नीषोमीयानुप्रवेशात् यागभेदे क्रमसमुच्चयोपपत्तिः । किन्तु यदा सोमेन यजेतेति विधिः तदैन्द्रवायवादिवाक्येषु न यागविधिः, न च देवताविधिः, किन्तु ग्रहणविधिः । तथा यदा पशुमालभेतेति विधिः तदाऽग्नीषोमीयपदमस्मिन्नेव देवताविधायकमित्यत्रैव यागविधिः । हृदयादिवाक्यैश्चावदानविधिः अवदानक्रमसमुच्चयौ च हृदयादिसमुच्चयात् । तत्समुच्चयश्च दशमे वक्ष्यते, "हविर्भेदात् कर्मणोभ्यास" इत्यत्र । तच्चाधिकरणं तत्सिध्यर्थमेव । तथाहि—पशोस्सा-

---

राद्धान्तस्त्विति । क्रमसमुच्चयार्थश्चैन्द्रवायवादिवाक्येषु हृदयादिवाक्येषु च यागविधिः । सोमवाक्ये चानुवादो लक्षणा चेति द्वयमङ्गीक्रियते । अग्नीषोमीयवाक्ये तु एकस्मिन् पक्षे तद्द्वयं पक्षान्तरे तद्द्वयं वाक्यभेदश्चाधिकोऽङ्गीक्रियते। तदयुक्तम् । अन्यथाप्युपपन्नत्वात् क्रमसमुच्चययोरित्यर्थः । कथमित्यत्राह - सोमेनेति । यस्मात् स्ववाक्ये विधित्वार्थं यजेतेति सोमविशिष्टयागविधावपि ऐन्द्रवायवादिवाक्यैः यागान्तराणां विधावपि क्रमसमुच्चयोपपत्तिरस्त्येवेत्यर्थः । पशूदाहरणेप्यन्यथोपपत्तिमाह—तथेति । पशुमालभेतेत्येतावता वाक्यभेदमङ्गीकृत्य पशुसाधनकालम्भनमात्रविधावपि हृदयादिवाक्येष्वग्नीषोमीयपदसन्निहितेषु यागानां विधावपि क्रमसमुच्चयोपपत्तिरस्त्येवेति वृथाऽनुवादो लक्षणा चेति द्वयमङ्गीक्रियत इत्यर्थः ।

किमेतत्तत्त्वं नेत्याह—किन्त्विति । यदा सोमेन यजेतेति वाक्ये अवश्यंभावित्वाद्यजिश्रुतेश्च यागविधिः तदा ऐन्द्रवायवादिवाक्येषु सोमवाक्यविहितयागार्थरसप्रत्यभिज्ञानान्न तद्द्रव्यकयागान्तरविधिः । नापि देवताविधिः पाक्षिकवाक्यार्थविधे. गत्यन्तरे सत्ययुक्तत्वात् । अतो न विकल्प इत्यर्थः । कस्य तर्हि विधिरित्यत्राह—किन्त्विति । समानपदोपादानश्रुत्या इतरसंस्कारसाहचर्याच्च ग्रहणविधेरित्यर्थः । उदाहरणान्तरेप्याह—तथेति । अग्नीषोमीयवाक्ये सति सम्भवे सम्भूयकारित्वव्युत्पत्तिबलात् श्रुतसमस्तपदानामेकवाक्यतया यागविधौ हृदयादिवाक्यैस्तत्रावदानसंस्कारविधिरेवेत्यर्थः । कथं तर्हि अवदानक्रमसमुच्चयोपपत्तिरित्यत्राह—अवदानेति । हृदयादिसमुच्चय एव कथमित्यत्राह—तत्समुच्चयश्चेति । अत्रैव किमिति तदनुक्तिरित्यत्राह—तच्चेति । दशमे हि समुच्चयः प्रतिपाद्यत्वेन प्रतिज्ञातः अतस्तत्र

धनत्वं तदवच्छिन्नहविर्भूताङ्गद्वारकं; तच्च हविर्भूताङ्गसाकल्ये पशोः साधनत्वं सिध्यति। यदि तु पशोरेव हविष्ट्वं स्यात्तदा तदवच्छिन्नमांसराशेरवदाय सकृद्यागनिवृत्तौ पशोर्हविष्ट्वसिद्धिरिति तत्रैव प्रपञ्चितम्।

नन्वेवं पशूदाहरणमिहानर्थकम्। मैवम्। प्रतिहृदयादि यागभेदे

---

साक्षात्सङ्गतत्वात् तदधिकरणं हृदयादिसमुच्चयसिद्ध्यर्थमेवेत्यर्थः। ननु पशुना यजेतेति पशोरेव यागं प्रति हविष्ट्वेन श्रुतिः। हृदयादयस्तु पुरोडाशे पूर्वार्धादिवत् अवदानप्रदेशोपलक्षणार्थाः। ततश्च यथा पुरोडाशस्य द्व्यवदानद्वारा व्यापारः तथा पशोरपि हृदयादिद्वारा साधनत्वोपपत्तिरित्याशङ्क्योपपादयति—तथाहीति।

पशोर्हि विशसनादिवाक्यपर्यालोचनया न साक्षाद्धविष्ट्वम्। किन्तु प्राकृतावदानकार्यकावदानसम्बन्धात् अन्योन्यनिरपेक्षस्य हृदयादेरेव। पशोस्तु तत्प्रकृतितया साधनमात्रत्वम्। तच्च पश्ववच्छिन्नहविर्भूतहृदयाद्यङ्गद्वारकमेव। ततः किमित्यत्राह—तच्चेति। तच्च पशोः साधनत्वं हविर्भूताङ्गसाकल्ये सति भवति नान्यथा। अतः पशोः साधनत्वं हृदयादिषूपसंहृतम्। तत्रावदानानां नित्यत्वादगृह्यमाणविशेषत्वात् सर्वाङ्गेषूपसंहृतम्। पुरोडाशे तु न शास्त्रान्तरपर्यालोचनया अवयवेषु साधनत्वोपसंहृतिः। किन्तु व्यापारोपसंहृतिमात्रम्। एतच्च सर्वप्रदाने वक्ष्यामः। पशोर्हविष्टवे तु विकल्प एव स्यात् न समुच्चय इत्याह—यदि त्विति। पशोर्हविष्टवे तदवच्छिन्नमांसराशेः सकृदवदानेन यागसिद्धौ पशोर्हविष्ट्वसिद्धेः न यागसमुच्चयः नावृत्तिरिति विकल्प एव स्यादित्यर्थः। ननु यथा पुरोडाशस्य हविष्ट्वेपि मध्यार्धपूर्वार्धावदानसमुच्चयः तथा हृदयाद्यवदानसमुच्चयः तत्कथं विकल्प इत्याह—तत्रैवेति। दाशमिकषष्ठपादप्रथमाधिकरणन्यायेन हृदयादीनामेव हविष्ट्वे सिद्धे तदवदानविधेः वैकृततया प्राकृतावदानसंस्कारकार्ये पाते प्रकृतौ च मध्याद्यवदानद्वयस्यैकपदार्थतया संस्कारकत्वात् अवदानसम्बन्धित्वस्य हविष्ट्वेन दर्शनात् तत्कार्ये च हृदयाद्यवदानानामेकैकस्य विधेः हृदयादेर्हविष्ट्वेन यागावृत्तिः हविर्भेदात्। पशोर्हविष्ट्वे तु हृदयादीनां प्रदेशपरतया तत्तदवदानस्य प्राकृतावदानकार्या[1]पातादेकावदानेन कार्यसिद्धेः विकल्पो दुर्वार इत्येवमादि तत्रैव दशमे प्रपञ्चितमित्यर्थः। ननु यदि पशूदाहरणे क्रमसमुच्चयोपपत्तिः दशमसिद्धा तर्हि पशूदाहरणमिहानर्थकमिति चोदयति—नन्विति। मैवमिति। हृदयादीनां हविष्ट्वे प्रतिहृदयादि यागभेदे समुच्चयः सिद्ध्यति एकयागत्वे तु एकेनैव हविषा निरपेक्षश्रुतेन एकस्य यागस्य सिद्धिरित्युक्तनीत्या विकल्पः स्यात्। अतः समुच्चय

---

१. B कार्यपातादे।

समुच्चयः। एकयागत्वे तूक्तरीत्या विकल्पः स्यादिति पशुरप्युदाहृतः। सिद्धान्ते तु लक्षणावाक्यभेदपरिहाराय वरं समुच्चयकल्पनेत्यनुसन्धेयम्। सोमोदाहरणे तु क्रमसमुच्चयोपपादनमत्रैव। तथाहि—सोमेनेति लतायाः साधनत्वमभिषवादिसंस्कारात् रसद्वारेण, न साक्षात्। यागार्थस्य च रसस्य ग्रहणं संस्काररूपं श्रुत्या विधीयते। ग्रहणञ्चेदं कुतश्चिदुपादानरूपं पुंसां आत्मार्थं वा क्रियते परोद्देशेन वा क्रियते। ग्रहणस्य चेन्द्रवायुदेवताकत्वं

---

सिद्ध्यर्थं यागभेदोऽवश्याश्रयणीय इति शङ्कान्तरनिराकरणार्थं पशूदाहरणमिहेत्यर्थः।

कथं तर्हि निरास इत्यत्राह—सिद्धान्ते त्विति। वाक्यभेदादिदोषपरिहारार्थं अग्नीषोमीयवाक्ये तावद्यागविधिरवश्यं वाच्यः। तथा च एक एव यागः अथ च न विकल्पः हृदयादीनामेव हविष्ट्वात्। तच्च हृदयादीनां न साक्षाच्छ्रुतम्। किन्तु विशसनादिवाक्यपर्यालोचनापादितम् अवदानसम्बन्धाच्च कल्प्यम्। कल्प्यमानं च तत् पशुना यजेतेति साक्षाच्छ्रुतपशुसाधनत्वसामञ्जस्याय परं समुच्चयेनैव कल्प्यमित्यर्थः। ननु न श्रुतत्वं कल्प्यत्ववाचि कल्प्ये तन्त्रम्। किन्तु निरपेक्षतया कार्यसम्बन्धित्वं, एतच्च हृदयादिष्वविशिष्टमिति कथं समुच्चयेनैव कल्पनमित्यत्राह—इत्यनुसन्धेयमिति। पशुना यजेतेति तावत् कृत्स्नस्यैव पशोः साधनत्वमवगम्यते। तच्च न साक्षात्। किन्तु हवीरूपहृदयादिप्रकृतितया हृदयादेश्च न मिलितस्य हविष्ट्वं किन्तु भेदेनैव। भेदेनावदानसम्बन्धात्। तेनैकस्यापि यागस्यावृत्तिः कल्प्या। ततः कृत्स्नपशुसाधनत्वसिद्ध्यर्थं सर्वस्य हृदयादेस्तदावृत्तिद्वारेण एकयागनिवेशे निरपेक्षत्वेपि समुच्चयसिद्धिरित्यवहितेनानुसन्धेयमित्यर्थः। कथं तर्हि सोमोदाहरणे क्रमसमुच्चयोपपत्तिरिति तत्राह—सोमेति। स्थानान्तरे तदनुक्तेरत्रैव सोच्यत इत्यर्थः। कथमित्यत्राह—तथाहीति। सोमेन यजेतेति यदिदं लतायाः साधनत्वं श्रुतं तदभिषवादिविधिपर्यालोचनया रसद्वारेणैव न साक्षात्। अतो रसस्य यागार्थतेत्यर्थः। ततः किं तत्राह—यागार्थस्येति। यागार्थस्य रसस्य ऐन्द्रवायवादिवाक्यैः संस्काररूपं ग्रहणं समानपदोपादानश्रुत्या विधीयते न यागान्तरम् प्रकृतयागप्रत्यभिज्ञानादित्यर्थः।

नन्वेवं ग्रहणे देवतातद्धितस्यान्वयः कथमित्यत्राह—ग्रहणं चेति। ग्रह उपादान इति स्मृतेः ग्रहणमिदं कुतश्चिदुपादानरूपतया लोके प्रसिद्धम्। तच्च ग्रहणमात्मार्थं परोद्देशेन वा पुंसा क्रियते उभयथापि लोके दर्शनात्। भवत्वेवं तथापि किमित्यत्राह—ग्रहणस्य चेति। ऐन्द्रवायवं गृह्णातीति ग्रहणस्य यदिन्द्रवायुदेवताकत्वं

श्रूयते । ननु ग्रहणविधौ देवताविधानमर्हति । तत्रैष विमर्शो जायते । यदीन्द्रवायूद्देशेन ग्रहणमिदं तदा दृष्टार्थत्वादुद्देशस्य तदुद्देशेन ग्राह्यं त्याज्यम् । तच्च ग्राह्यं यागार्थत्वात् देवतोद्देशेन त्याज्यम् । यच्च देवतोद्देशेन त्याज्यं तदेवेन्द्रवायूद्देशेन त्याज्यमिति तदोपपद्यते यदीन्द्रवायू देवते इति, एवञ्च देवतातद्धितोपपत्तिः । तदेवं ग्राह्यग्रहणयोः कार्यविमर्शाद्देवतात्वे विकल्पो न युक्तः ।

इदमभिसंहितम्—लताहि स्वप्रभवं सकलमेव रसं साधनीकरोतीति

---

श्रुतं तत् ग्रहणं प्रत्युद्देश्यतामात्रेण इन्द्रवाय्वादीनामन्वयपरं न देवताविशिष्टद्रव्यचोदनापरं ग्रहणे देवताया अकारकतया तद्विधौ देवताया अविधानार्हत्वादित्यर्थः । नन्वेवमपि कथं देवतातद्धितस्य निर्वाह इत्यत्राह—अत्रैष इति । इन्द्रवायूद्देशेन विशिष्टस्य यागीयरससम्बन्धिनो ग्रहणस्य विधावेव विमर्शो जायते यदीन्द्रवायूद्देशेन ग्रहणमिदं क्रियते तर्हि तदुद्देशेन ग्रहणस्य दृष्टार्थत्वाय यद्यदुद्देशेन गृहीतं तत्तदुद्देशेन त्याज्यं अन्यथा तदुद्देशांशस्यादृष्टार्थत्वापत्तेरित्यर्थः । नन्वेवमपि कथमिन्द्रवाय्वादीनां देवतात्वमिति तत्राह—तच्चेति । तच्च ग्राह्यं यागार्थमिति देवतोद्देशेनैव त्यागः यागार्थस्य द्रव्यस्य देवतोद्देशेनैव त्याज्यत्वात्, देवतोद्देशेन त्यागात्मकत्वाद्यागस्येत्यर्थः । तथापि किमित्यत्राह—यच्च देवतेति । ऐन्द्रवायवमिति श्रुतेः यत् देवतोद्देशेन गृह्यते तत् देवतोद्देशेन त्याज्यमिति गम्यत इत्यर्थः । नन्वेवमपि कथं प्रकृतयागे देवतात्वमिन्द्रवाय्वादीनां तत्राश्रुतेरित्यत्राह—इति तदेति । यच्च ग्रहणस्य यागार्थद्रव्यसम्बन्धः यच्च तस्यैव ऐन्द्रवायवमिति इन्द्रवायुसंबंधः तदुभयमपि तयोर्देवतात्वे घटते । नान्यथा-अतो देवतातद्धितस्य विशेषानुवादकतया उपपत्तिरित्यर्थः ।

नन्वेकस्मिन् यागे अनेकदेवतान्वये विकल्पः स्यात् इत्यत्राह—तदेवमिति । इत्थं प्रकारेण ग्राह्यग्रहणकार्यपरामर्शवशात् देवतात्वे कल्प्ये विकल्पो न युक्त इत्यर्थः, ननु विधाने कल्पनायां वा न विशेषो विकल्पस्येत्युक्तम् । तथा ग्रहणानां च कथं समुच्चयः रसैकदेशे गृहीते यागीयसंस्कारस्य सिद्धत्वाद् । कथं वा लताप्रभवस्य सर्वरसस्य यागसाधनत्वं ? कथं च भेदेन गृहीतस्य भेदेन त्यागः ? पृथक् गृहीतानामपि पुनरेकीकरणेन युगपत् त्यागसम्भवादित्यत्राह—इदमभिसंहितमिति । सोमेन यजेतेति साधनत्वेन विधीयमाना लतास्वप्रभवं सकलरसं यागसाधनीकरोति नैकदेशं स्वतः प्रतीतसर्वसाधनत्वासामञ्जस्यापत्तेः । अतो ग्रहणरूपसंस्कारोऽपि सकलस्य सोमरसस्य युक्तः । नन्वेवमपि अल्पपरिमाणत्वात्पात्राणां कथंतरां

ग्रहणाख्यसंस्कारोऽपि सकलस्य युक्तः । शक्यते चाल्पपात्राणामपि ग्रहणानां युगपदाम्नानात् अवयवशस्तदुद्देशेन ग्रहणैस्सर्वसंस्कार इति ग्रहणानि तावत् समुच्चेतव्यानि। तथा च तत्तद्ग्रहणवर्तिनः तत्तदुद्दे-शस्य दृष्टार्थत्वाद्यदुद्देशेन गृहीतं तदुद्देशेनैव त्याज्यमिति देवतालाभः अर्थाद्यागावृत्तिश्च सिद्धा।

ननु द्वारकार्यतो देवतात्वं कार्यषट्के स्यात्; मैवम्, कार्यतोऽपि[1] देवतीयोपदेशार्थव्यवस्थापनादिह सङ्गतम्। स्थिते त्वौपदेशिके यदपरमपि कार्यतः[2] कल्प्यते तत्तत्रैवेत्यनुसन्धेयम्। अथ ऐन्द्रवायवादिष्वित्यादि-

सकलरसस्य ग्रहणसंस्कार इति तत्राह—शक्यते चेति। ऐन्द्रवायवादिग्रहणपात्राणां अल्पपरिमाणत्वेपि तेषां युगपदाम्नानवशात् तत्तदिन्द्रवाय्वाद्युद्देशेन ग्रहणैः सर्वस्य रसस्य संस्कारः शक्यत एवेति ग्रहणानि तावत् समुच्चेतव्यानि। अन्यथा कृत्स्न-रससंस्कारानुपपत्तेः। ननु ग्रहणकाले पृथक् गृहीतस्यापि प्रदानकाले पुनरेकीकृत्य-विकल्पेन एकदेवतोद्देशेन त्यागोऽस्तु। अन्यथा गुणभूतग्रहणानुरोधेन प्रधानभूत-यागावृत्तेरित्यत्राह—तथाचेति। तत्तद्ग्रहणवर्त्युद्देशांशस्य दृष्टार्थत्वात् यत् यदुद्देशेन गृहीतं तत तदुद्देशेन त्याज्यं अन्यथा विभागेन गृहीतस्य पुनरेकीकरणे विभक्त-ग्रहणस्यादृष्टार्थत्वप्रसङ्गात्। एवं च देवतालाभे विकल्पकथा दूरापास्तैव। एकस्यापि यागस्यावृत्तेः सिद्धत्वात्। तत्तदावृत्तिद्वारा तत्तद्देवतोद्देशेन ग्रहणानां च समुच्चयः सिद्ध इत्यर्थः।

ननु कार्यतो देवतात्वचिन्ता कार्यप्रमाणार्थविषया उत्तरषट्क एव युक्ता, नोपदेशषट्केऽस्मिन्नित्यसङ्गतिं चोदयति—नन्विति। मैवमिति। उपदेशतोऽर्थे व्यवस्थिते पश्चात् कार्यतो योऽर्थश्चिन्त्यः स उत्तरषट्कार्थम्। इदं तु देवतातद्धित-व्यवस्थित्यर्थमेव कार्यानुरोधादुच्यत इत्यौपदेशिकत्वादत्रैव सङ्गतमित्यर्थः। नन्वेवं सति अतिदेशादेरपि वैकृतोपदेशव्यवस्थापनार्थत्वात् षट्कव्यवस्थाऽनुपपन्नेति शङ्कानिराकरणं सप्तमाद्योक्तरीत्या अनुसन्धेयमित्याह—इत्यनुसन्धेयमिति। अन्यत्रो-पदेशव्यवस्थितिपूर्वकं तत्सापेक्षकरणोपकारादिकार्यप्रमाणकं यदर्थान्तरवर्णनं तदुत्तरषट्कार्थः। इदं तु न तथेत्यनुसन्धेयमित्यर्थः। अत ऐन्द्रवायवादिषु प्रकृतेषु लता विधीयत इत्युच्यते न सा शक्या वाक्येन ऐन्द्रवायवीति ज्ञातुम्। श्रुतो हि रसः ऐन्द्रवायव इति भाष्यं परैर्भग्नम्। तदनुभाषते—अथेति। यद्यपि शङ्काभाष्ये

१. द्वितीयया उप B

२. कथ्यते

भाष्येण हविष्ट्वेन लताविधानमाशङ्कितमिति लक्ष्यते श्रुतिवाक्योपन्यासेन परिहारात् । न च तदाशङ्कितुं युक्तम्; प्रसिद्धपरिहारत्वात्; न हि श्रुतिसमर्पिते हविषि रसे वाक्येन लताया हविष्ट्वेन विधानं सम्भवति । यच्च सम्भवति रसप्रकृतितया लताविधानं तन्नाशङ्कितम् । एतच्च दुष्परिहरम्; तथाहि—यथा श्रुतिसम्बन्धे पुरोडाशे वाक्येन प्रकृतिभूतव्रीह्यादिविधानं तथा श्रौतेऽपि रसे वाक्याल्लताविधानं युक्तमिति भाष्यभङ्गः । मैवम् । नात्र व्रीहिमुद्रा सम्भवति तत्र ह्याग्नेयोऽष्टाकपाल इत्यस्मिन् वाक्ये अष्टाकपालद्रव्यमनिरूपितप्रकृतिद्रव्यकं प्रतीयत इति युक्तं प्रकृतिद्रव्यविधानम्; इह तु ऐन्द्रवायवादिश्रुत्यानिरूपितप्रकृतिकं द्रव्यमर्पितमिति न प्रकृतिद्रव्यविधानं संभवतीति नाशङ्कितम् । हविष्ट्वेन तु विधानं

---

हविष्ट्वेन विधिरिति न कण्ठोक्ता । तथाप्युत्तरवाक्ये श्रुतिवाक्योपन्यासेन परिहारोक्तेस्तथैव शङ्कितव्यमिति लक्ष्यते । तच्चायुक्तम्, स्पष्टपरिहारत्वेन अनाशङ्कनीयत्वादित्यर्थः । कथं स्पष्टपरिहारतेत्यत्राह—न चेति । तद्धितश्रुतिबलादुत्पत्तिशिष्टे रसे हविषि सति न वाक्येन लताविधानं भवति श्रुतितो वाक्यस्य दुर्बलत्वादित्यर्थः । प्रकृतिद्रव्यतया तु विधानशङ्का दुष्परिहारा । सा तु न कृतेत्याह— रसेति ।

ननूत्पत्तिशिष्टावरोधस्य प्रकृतिद्रव्यतया विधानेपि तुल्यत्वात् कथं दुष्परिहरतेत्याशङ्क्य दृष्टान्तेनोपपादयति –तथाहीति । यथा उत्पत्तिशिष्टपुरोडाशावरुद्धेपि यागे प्रकृतित्वेन द्रव्यादिविधानं तथा उत्पत्तिशिष्टश्रौतरसावरुद्धेपि यागे प्रकृतित्वेन लताविधानं युक्तमेव । प्रकृतिद्रव्यस्य हविरनुगुणतया विरोधाभावात् । अतोऽनाशङ्कनीयशङ्कनाच्च भाष्यं हेयमित्यर्थः । समाधत्ते—मैवमिति । नात्र व्रीहिमुद्रा व्रीहिसाम्यं सम्भवति । तत्र हेतुः—तत्र हीति । तत्र व्रीह्यादौ युक्तं प्रकृतिद्रव्यतया विधानम् । आग्नेयोऽष्टाकपाल इत्यस्मिन् वाक्ये पुरोडाशस्यानिरूपितप्रकृतिकस्य प्रतीतेः किंप्रकृतिकोऽयमिति प्रकृतिद्रव्यस्याकाङ्क्षितत्वात । सोमे तु नैवमित्याह— इह त्विति । ऐन्द्रवायवं गृह्णातीत्यत्र तद्धितश्रुत्या अनिरूपितप्रकृतिकं सोमरसरूपं द्रव्यमर्पितमिति न प्रकृत्याकाङ्क्षेति न प्रकृतितया विधानं सम्भवतीत्यनाशङ्कनीयत्वादेव भाष्यकारेण नाशङ्कितमित्यर्थः । ननु हविष्ट्वेन विधानमपि नाशङ्कनीयमेव स्पष्टपरिहारत्वादित्युक्तमित्यत्राह—हविष्ट्वेन त्विति । हविष्ट्वेन विधानं तु दुष्परिहारमिति तदाशङ्कितमित्यर्थः । तत्र हेतुः –ऐन्द्रवायवमिति । ऐन्द्रवायवं गृह्णातीति यथावस्थितवाक्ये हविर्द्रव्यविशेषाश्रुतेः यागमात्रविधौ तदुद्देशेन सोम-

संभवतीत्याशङ्कितम्। ऐन्द्रवायवमिति हि हविर्द्रव्यविशेषाश्रुतेर्वाक्यमेव लतां हविर्द्रव्यविशेषभूतां विदधाति। ननु जघन्यं प्रकरणं द्रव्यविशेषणार्थमपेक्षणीयमिति शङ्का। सा चैवं निराकृता—वाक्यं हि यागोद्देशेन लतां विधत्ते। द्रव्यदेवतासम्बन्धबलेन चैन्द्रवायवश्रुतौ यागकल्पना। द्रव्यविशेषे चावगते श्रुतिपर्यवसानं युक्तम्। ततो यागकल्पना द्रव्यविशेषलाभश्च तदा प्रकरणात्। अतः प्रकरणस्थितिकृतश्रुतितो रसे अवगते वाक्याल्लताविधानं न युक्तम्।

ननु च रसमात्रे प्रकरणवशाच्छ्रुतिः न निरूपितप्रकृतिके। अतः प्रकृतित्वेन लताविधानं युक्तमेव। तथाहि—"अण्व्या धारया गृह्णाती"ति

---

वाक्यमेव लतां हविर्द्रव्यविशेषभूतां विधत्ते अपेक्षितविधेरित्यर्थः।

ननु प्रकरणपर्यालोचनयैव द्रव्यविशेषावगतेर्वाक्येन तद्विधिर्व्यर्थ इत्यत्राह—न तु जघन्यमिति। प्रकरणाद्वाक्यस्य बलीयस्त्वादित्यर्थः। कथं तर्हि तन्निरास इति तत्राह—सा चैवमिति। सोमेन यजेतेति प्राप्तयागोद्देशेन लता विधेया। प्राप्तिश्च ऐन्द्रवायवमिति श्रुतौ द्रव्यदेवतासम्बन्धबलेन कल्पनया। तत्कल्पना च द्रव्यविशेषावगतिपूर्वकश्रुतिपर्यवसाने सति। द्रव्यविशेषावगतिश्च प्रकरणबलेन, एतत्समये वाक्यानुन्मेषात्। यत एव प्रकरणमेवानुसरणीयं द्रव्यविशेषावगमे अतो वाक्यात् प्रकरणमेव बलीय इति प्रकरणस्थितिकृततद्धितबलात् सोमरसे हविषि अवगते वाक्याल्लतया न हविष्ट्वेन विधिः। न च भाविन्यैव प्राप्त्या वादसम्भवात् हविष्ट्वेन लताविधिः अग्निहोत्रनामवदिति वाच्यम्। सति यागे तदनुवादेन लताविधिः लताविधाने च सति श्रुतिपर्यवसानाद्यागप्राप्तिरित्यन्योन्याश्रयापत्तेः। अग्निहोत्रे तु न नाम्नोद्दिश्याग्निविधिरिति भेद इति भावः। ननु प्रकरणात् रसमात्रं द्रव्यमवगम्यते न निरूपितप्रकृतिकम्। अतः प्रकृत्याकाङ्क्षायां प्रकृतित्वेन लताविधानं युक्तमिति चोदयति—न्विति। कथं पुनः प्रकरणाद्रसमात्रावगतिरित्यत्राह—तथाहीति। अण्व्या धारया गृह्णातीति ग्रहणेषु प्रकृतेषु धारारूपगणविधिपरे वाक्ये ग्राह्यद्रव्यस्याश्रुतत्वात् अध्याहारे प्राप्ते विधीयमानधाराबलात् अन्वयार्हद्रवद्रव्यं ग्राह्यतयाऽवगतमिति तत्पर्यालोचनया ग्रहणवाक्येष्वपि तदेव द्रव्यमवगतमिति तत्प्रकृत्यपेक्षायां लताविधिर्युक्त एवेत्यर्थः। ननु अरुणयैकहायन्येतिवत् अनेकगुणविशिष्टक्रियाश्रुतेः विशिष्टविधिरेवेति ग्रहणान्तरमिदमेवेति न प्रकृतेषु

ग्रहणेषु धारागुणविधिपरे वाक्ये धारार्हं द्रवद्रव्यं ग्राह्यम्। योग्यतया ग्रहणेष्ववगतमिति लताविधिर्युक्तः। अथ "अणव्याधारया गृह्णाती"त्यनेकगुणश्रुतेर्ग्रहणान्तरविधिः तथाप्येकग्रहणे दृष्टं ग्रहणान्तरेषु बुद्धिस्थं द्रवद्रव्यमेव युक्तम्। अनन्तरपठितञ्च धारावाक्यमिति ततोऽपि तद्गतमेव द्रव्यं द्रव्यग्रहणेष्वपि युक्तम्। अभिक्रमणमिवानन्तरभूतप्रयाजजुहोतौ। न च धारार्हं द्रव्यं धान्यादि शङ्कनीयम् निरुपपदं हि धारापदं द्रवद्रव्यविषयमेव युक्तम्। न चोदकमपि द्रवद्रव्यं सम्भवतीति कथं लताविधिरिति वाच्यम्। यतो लताविधानादेव रसान्तरस्येव उदकस्यापि निवृत्तिः।

किञ्च यथा यत्र तावद्योग्यतया लब्धे हविषि 'त्रेधा तण्डुलानि'ति

---

ग्रहणेषु धाराविधिबलात् द्रवद्रव्यप्राप्तिरिति शङ्कते—अथाण्व्येति। उत्तरं—तथापीति। अत्र धारावाक्ये पात्रमुखेनावर्जनप्रसक्तौ धाराविधिरिव तत्राणुत्वमर्थप्राप्तमनूद्यते। अर्थप्राप्तिश्च तस्यानेकपात्रपूरणस्यान्यथाऽसम्भवात् अणुत्वान्वययोग्यधाराविधिः भवतु वाक्यभेदभीत्या विशिष्टग्रहणविधिः तथाप्येकत्र ग्रहणे दृष्टं द्रव्यमन्यत्रापि सजातीयतया बुद्धिस्थमन्वेतीति तदेव द्रव्यं युक्तमित्यर्थः। ननु सोमं पावयतीत्यादि वाक्यान्तरबलात् सोमरसस्यापि प्रतीतेः कथं द्रवद्रव्यमात्रे तद्धितपर्यवसानमित्यत्राह—अनन्तरेति। अतिसन्निहितत्वाद्धारावाक्यस्य तद्गतमेव द्रव्यं ग्रहणेषु युक्तं न व्यवहितवाक्यस्थं द्रव्यमित्यर्थः। अत्र दृष्टान्तः अभिक्रमणमिति। यथा अभिक्रामं जुहोतीति स्ववाक्ये शेषीभूतहोमविशेषाश्रवणेपि सन्निहितत्वात प्रयाजे जुहोतिना अभिक्रमणस्य सम्बन्धः तद्वदिहापीति सन्निधानात् पदार्थावगतिमात्रे दृष्टान्तः।

ननु धारार्हत्वं न द्रवद्रव्यस्यैव किन्तु धान्यादेरपीति कथं द्रवद्रव्यावगतिनियम इति नाशङ्कनीयमित्याह—न चेति। तत्र हेतुः—निरुपपदेति। निरुपपदस्य धारापदस्य द्रवद्रव्यविषयतयैव लोके व्युत्पत्तिः अन्यत्र धूल्यादौ सोपपदस्य प्रयोगात्। अतोऽत्र धारापदं द्रवद्रव्यविषयमेव युक्तमिति लाघवादभिषवाद्यनेकवाक्यापेक्षितसोमरसद्रव्यादेकवाक्यापेक्षिद्रवद्रव्यमात्रं युक्तमित्यर्थः। ननूदकमपि द्रवद्रव्यं भवतीति न प्रकृतित्वेन लताविधिर्युक्तमित्याह—न चेति यत इति। प्रकृततया लताविधानमहिम्नैव लतान्तरस्येव उदकस्यापि निवृत्तिरित्यर्थः। ननु धारावाक्याद्योग्यतया ग्रहणेषु रसमात्रावगतावपि किं तदित्यपेक्षायां प्रकृतेन सोमरसेन किमिति न विशेष्यत इत्यत्राह—किञ्चेति। यथा अभ्युदितेष्टौ यस्य हविर्निरुप्तमिति देवतातो विभागविधिपरे वाक्ये योग्यतया हविषि लब्धे श्रुतमपि तण्डुलत्व-

---

१. निष्ट B

तण्डुलश्रुतिरविवक्षिता । यथा च योग्यतया लब्धे नवमे भागे त्र्यनीकाया-महः श्रुतिरविवक्षिता । तत्र का कथा एवं योग्यतया लब्धे रसे प्रकरणतः सोमरसस्याविवक्षा । अतः प्रकृतित्वेन लता विधीयताम्; मैवम्, धारावाक्ये हि यावद्धारायोग्यं गृह्णीयादिति कल्पयितुमिष्यते तावत् प्रकृतस्सोमरस एवास्तीति स एव स्वीक्रियते । अतस्तदालोचनयापि सोमरसावगतेः न लताविधिः ।

न च धाराशब्दो द्रवद्रव्यवृत्तिः द्रवद्रव्यबिन्दुसन्ततेरविच्छिन्नप्रवाहे धाराशब्दः प्रवाहमाहेति द्रवद्रव्यधीर्न शब्दात् ¹किन्त्वाक्षेपादिति कल्प-

विशेषणमविवक्षितम् । यथा वा त्र्यनीकायां त्रिः परिवृत्तायामग्रतायां ऐन्द्रवायवाग्रं प्रथमेऽहः अथ शुक्राग्रं अथाग्रयणाग्रं इत्येवं च त्रिः पाठेन नवत्वापन्नायां योग्यतया नवमभागे लब्धे श्रुतमप्यहरिति विशेषणमविवक्षितं तथात्रापि योग्यतया लब्धेरनेकप्रकरणावगतसोमरसरूपविशेषणस्याविवक्षैव युक्ता । साक्षाच्छ्रुतस्यापि अविवक्षायां प्रकरणावगतस्य विवक्षा दूरापेतैवेति वक्तुं यत्र यावत् तत्र का कथेति सोत्प्रासोक्तिः । अत इह प्रकरणात् सोमरसावगतिरेव नास्ति तदवगतावपि तद-विवक्षायां प्रकृतित्वेन लताविधानं युक्तमित्यर्थः ।

मैवमिति । धारावाक्येपि न साक्षात् द्रव्यश्रुतिः । किन्तु धाराश्रुत्यन्यथानुपपत्त्या द्रवद्रव्यं कल्प्यम् । तत्र यावत् धारायोग्यं गृह्णीयादिति कल्पयितुमिष्यते तावत् ततः पूर्वमेव प्रकृते सोमरसोऽस्तीति स एव ग्राह्यतया स्वीक्रियते । क्लृप्त-सन्निधिसोमरसमपहाय द्रव्यान्तरसन्निधेः कल्पयितुमशक्यत्वात् । न च गृह्णातिर्द्रव्य-माक्षेप्तुं शक्तः अनुवाद्यत्वाद्ग्रहणस्य । न ह्यनुवाद्यं ग्रहणं द्रव्यमाक्षिपति । सामिधेन्यनुवचनमिव कार्यारम । न च ग्रहणेन द्रव्याक्षेपः गृह्णातेरुपादानमात्रार्थ-त्वात् । सन्निधेस्तावल्लाभे तत एव सोमरसावगतेः तदेव ग्राह्यतया स्वीकार्य-मित्यर्थः । अत इति निगमनम् । यत एव धारावाक्ये सोमरसावगतिः अतोऽति-सन्निधिबलात् ऐन्द्रवायवादितद्धितपर्यवसानाय तथालोचनेपि सोमरसस्यैवावगतेः न प्रकृतित्वेन लताविधिः शक्यत इत्यर्थः । ननु धारावाक्ये द्रवद्रव्यं श्रुतं धारा-शब्दस्य द्रवद्रव्यवृत्तित्वादिति साहसं न वाच्यमित्याह—न चेति । तत्र हेतुः—द्रवद्रव्येति । धाराशब्दो हि द्रवद्रव्यबिन्दुसन्ततावविच्छिन्नप्रवाहे अनादिप्रयोगवृद्ध-व्यवहारेऽवधृतः प्रवाह एव शक्तो न द्रवद्रव्ये उपाधिरूपत्वात् तस्य धेनुवत्सवृषादौ

१. किन्त्वौपाधिकत्वे शक्तिः B

नोक्तिः । देवतातस्तु विभागविधौ हविष्ट्वेनैव देवतान्वयात् विभागोऽपि तेनैव रूपेणेति न तण्डुलत्वरूपं योग्यं विभागे । अथ तण्डुलाधिष्ठानं तद्धविरिति विशेष्यते तदा वाक्यभेदः स्यादिति श्रुतस्याप्यविवक्षा । तथा त्रिःपरिवृत्ता त्र्यनीकापि नवतां गता नवभिरेव भागैर्भागत्वेनान्वययोग्या नाहस्तया । भागत्वेनान्वयेऽपि यद्यहरधिष्ठानतया भागो विशेष्यते तदा वाक्यभेदः स्यात् । अतोऽहरविवक्षा युक्ता । इह तु क्लृप्तप्रकृतिकसोमरसेनापि धाराविधेरन्वय इति न कल्पनावकाश इति धारावाक्यालोचनयापि सोमरस एवेति न लताविधिसम्भवः ।

---

गोत्ववत् । अन्यथा शक्तिकल्पनागौरवापत्तेः । अतो न द्रव्यस्य श्रुतिरित्यर्थः । ननु यदि धाराशब्दान्न द्रव्यलाभः तर्हि विभागादावपि न स्यादिति यत्प्रतिबन्दिदूषणमुक्तं तद्वैषम्यमाह -देवतातस्त्विति । त्रेधा तण्डुलान विभजेदिति न तण्डुलविधिः किन्तु देवतातो विभागविधिः । ये मध्यमाः स्युरित्यादिवाक्ये प्रकृतहविषोदेवतान्तरसम्बन्धविधेः पूर्वदेवताविभागं विना तदयोगात् विभागविधिरेवेति षष्ठेऽभ्युदयनये वक्ष्यते । तत्र तण्डुलादेर्हविष्ट्वेन रूपेण देवतान्वयाद्विभागोऽपि तेनैव रूपेणेति तण्डुलरूपं विभागे नापेक्षितमयोग्यमिति श्रुतमप्यविवक्षितमेवेत्यर्थः । विवक्षायां वाक्यभेदः स्यादित्याह - अथेत्यादिना । त्र्यनीकोदाहरणेपि श्रुतस्याप्यविवक्षायां कारणमाह-तथेति । त्र्यनीका त्रयाणामनीकानां समाहारः प्राथम्यत्रयमिति यावत् । सापि त्रिः परिवृत्ता त्रिरावृत्ता तदाऽऽवृत्तिस्वभावान्नवतां गता । ऐन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रं अथाग्रयणाग्रमिति त्रिः पाठात् नवभिरेव भागैः भागत्वेनान्वययोग्या नाहस्तया तद्रूपस्यानपेक्षितत्वात् । अतः श्रुतस्याप्यहस्त्वस्याविवक्षेत्यर्थः । न च भागोऽहोरूप इत्येव विवक्षायां वाक्यभेदः स्यादित्याह— भागत्वेनेति । एतच्च दशमे त्र्यनीकाधिकरणे स्पष्टयिष्यामः । इह पुनः प्रकरणावगतसोमरसाविवक्षायां न हेतुरित्याह—इह त्विति ।

यद्यपि धारावाक्ये धारा द्रवद्रव्यमात्रापेक्षा तथापि तस्याश्रुतत्वात् कल्पनायां प्रसक्तायां क्लृप्तसन्निहितसोमरसहानेन कल्पनानवकाश इति धारावाक्यालोचनेपि सोमरस एवावगम्यत इति ज्ञातप्रकृतिकस्य न प्रकृत्याकाङ्क्षेति न प्रकृतितयालताविधिसम्भवः । किञ्चास्मिन् पक्षे ऐन्द्रवायवादिवाक्ये ऐन्द्रवायवादेरुपादयसमर्पकप्रकरणापेक्षायां प्रकृतसकलविशेषणविशिष्टत्वं युक्तमिति सोमो विवक्षित एव । अन्यथा वाक्येनापि तद्विधिर्नस्यादिति भावः । ननु यथा दर्शपूर्णमासयोः अविहितपशुकयोः पत्नीसंयाजे जाघन्या पत्नीः संयाजयन्तीति क्रीताया अपि जाघन्याः

ननु सोमरसलाभेऽपि जाघनीवत् क्रीतमपि हविः स्यादिति लताविधि-र्युक्तः; तद्विधौ हि लतामुत्पाद्याभिषवादि कृत्वा हविरुत्पादनं सम्भवति। मैवम्। सोमरसे हविषि तत्प्रकृतिद्रव्यविधावपि तत्प्रकृतिकरसक्रयेऽपि शास्त्रार्थसिद्धेर्न लतोपादानार्थो विधिः। किन्तु लताक्रयादिविधानादेव न क्रीतरसो हविरिति सिद्धम्।

नन्वेवं पुरोडाशेऽपि व्रीहिविधिरनर्थकः स्यात्; तन्न, न तत्र व्रीह्युपा-दानार्थः स विधिः; किन्तु व्रीहिप्रकृतिकपुरोडाशहविष्कयागोपादानार्थः व्रीहिनिर्वापावघातादिविधानादेव व्रीह्युपादाननियमः।

---

हविष्ट्वं तथेह सोमरसालाभे आपणक्रीतमपि सोमरसद्रव्यं हविः स्यात्। अतस्तन्नि-वृत्तये लतावस्थायामुपादातुं प्रकृतित्वेन लताविधिर्युक्त इति चोदयति—नन्विति। ननु लताविधावपि कथं क्रयादिनिवृत्तिरित्यत्राह—तद्विधौहीति। प्रकृतित्वेन लता-विधाने हि लतावस्थायामुपादाय अभिषवादि कृत्वा सोमरसरूपहविरुपादानं सम्भवति नान्यथेत्यर्थः। मैवमिति। हवीरूपसोमरसप्रकृतित्वेन लताविधावपि न लतोपदाननियमः। लताप्रकृतिकरसक्रयेपि लताशास्त्रार्थसिद्धेः। यद्यपि सोमेन यजेतेति यागे करणतया लता विधीयते। करणता च यागकर्तृप्रयत्नगोचरत्वे भवति। सोमरसक्रये च न लतायाः प्रयत्नगोचरतेति करणत्वार्थं लतावस्थाया-मेवोपादानात्। तथापि सोमविक्रयिणो रसोपादानार्थं यल्लतोपादानं तत्र याग-कर्तुरपि प्रयोजकत्वमस्त्येव। सोमरसेन यस्य कस्यचिद्यागकरणाभावे सोमविक्र-यिणः तदायासायोगात् खड्गकारादीनां घातुकत्ववत्। अतो विक्रय्युपात्तापि लता यजमानेनाप्युपात्तैवेति करणत्वसिद्धिरिति भावः। ननु यदि लताविधिना न लतो-पादाननियमः कुतस्तर्हि तन्नियम इत्यत्राह—किन्त्विति। क्रयादिसंस्कारविधानादेव लतावस्थायामुपादाय अभिषवादिनिर्वृत्तो रसो हविर्न क्रीत इति सिद्धम्। विना लतां क्रयादि कर्तुमशक्यमिति ततस्तदुपादानसिद्धिरित्यर्थः। ननु यदि संस्कारविधेरेव सोमोपादानं न सोमविधितः तर्हि पुरोडाशेपि व्रीहिभिर्यजेतेति व्रीहिविधिरनर्थकः स्यात् निर्वापादिसंस्कारविधानादेव व्रीह्युपादानसिद्धेरिति चोदयति—नन्विति तन्नेति। तत्रापि न व्रीह्युपादानार्थो विधिः किन्तु व्रीहिप्रकृतिकपुरोडाशहविष्कयागोपादा-नार्थः। व्रीह्युपादानं तु संस्कारविधानादेव। न च सोमेपि तथा वक्तुं शक्यम् प्रकरणानुगृहीततद्धितश्रुत्यैव सोमप्रकृतिकरसहविष्कयागोपादानसिद्धेरित्यर्थः। ननु यदि द्रव्यविधेर्न द्रव्योपादानं क्रीतद्रव्येणापि शास्त्रार्थसिद्धेः तर्हि संस्कार-विधितोऽपि तन्न स्यात् संस्कृतपुरोडाशक्रयेपि शास्त्रार्थसिद्धेरिति चोदयति—

ननु द्रव्यविधेर्यदि न द्रव्योपादानं संभवति संस्कारविधेरपि तन्न स्यात्, तन्न। द्रव्यं हि कारकतयाऽनुष्ठीयते, क्रिया तु स्वरूपतः। यत्रापि द्रव्यस्वरूपविधिः, तत्रापि द्रव्योत्पत्त्यादिक्रियाविधिः। न च लतादेरुत्पत्तिविधिः। अतः क्रयादिविधेरेव तदुपादानसिद्धिः।

नन्वविहिता लता क्रयादिसंस्कार्यैव न युक्ता; तन्न, एवं तर्हि तण्डु-

---

ननु द्रव्येति। तन्नेति। पुरोडाशक्रये पुरोडाशशास्त्रार्थसिद्धिरस्ति प्रोक्षितक्रये न प्रोक्षितशास्त्रार्थसिद्धिरित्यर्थः। कुत इत्यत्राह—द्रव्यं हीति। यस्मात् द्रव्यं कारकत्वेनानुष्ठीयते उपादीयते। क्रिया तु स्वरूपत एवोत्पाद्यमानतया तत्रान्यकृतस्यापि पुरोडाशस्य कारकत्वेनोपादानं शक्यं, न पुनरन्यकृता क्रिया अन्येनोत्पाद्यतयोपादातुं शक्या उत्पन्नस्योत्पादायोगात् किन्तु स्वेनैव कर्तव्येत्यर्थः।

इदं त्विह वक्तव्यम्। यद्यपि द्रव्यगतातिशयजननार्थत्वात् प्रोक्षणादेरनुष्ठानस्यान्यकृतेनाप्यतिशयजननसिद्धिरिति न यजमानेन तदनुष्ठेयं स्यात् तथापि सोऽन्यः किमनधिकृतः अधिकृतो वा? आद्ये संस्कारत्वासिद्धिः। नियोगीयत्वाभावात्। द्वितीयेपि किमधिकृतो विक्रयी अवीतेच्छः वीतेच्छो वा? आद्ये विक्रयासिद्धिः स्वयागार्थं स्थाप्यत्वात्। न च निर्हविष्केण यागानुष्ठानं, शिष्टाचारविरोधात्। द्वितीये अधिकारनाशात् संस्कारनाशे संस्कृतत्वाभावापत्तेः। अधिकारपूर्वकप्रयोगमध्योत्पन्नस्य तदधिकारप्रयोगापवर्गित्वात्। यत्रापि बहिःक्रतुप्रयोगं उत्पाद्यता आधानादिसंस्कारे तत्राप्यात्मनेपदबलात् स्वसम्बन्धितयैवोत्पत्तेर्नान्यकृतस्वीकारावकाश इति।

ननु यदि द्रव्यस्य न स्वरूपतोऽनुष्ठानं कथं तर्हि पुरोडाशं संयौतीति संयवनेन पुरोडाशं कुर्यादिति पुरोडाशविधिरित्यत्राह—यत्रापीति। तत्रापि द्रव्योत्पत्तिक्रियाविधिरेव न द्रव्यस्वरूपविधिरित्यर्थः। नन्वेवं लतायानुत्पत्तिविधिरस्तु इत्यत्राह न चेति। न हि बीजावापादिना लतोत्पादनं शास्त्रबोध्यं, किन्तु लतायाः करणत्वमात्रमित्यर्थः। अत इति निगमनम्। ननु लताया अविहितायाः कथं क्रयादितत्संस्कारविधिः। कथं वा तद्बलात् लतोपादानसिद्धिरिति चोदयति—नन्विति एवं तर्हीति। यद्यविहितस्य न संस्कारः तर्हि तण्डुलान् पिनष्टीत्यादौ तण्डुलादेः पेषणादिसंस्कार्यता न स्यात् तेषां विधानाभावादित्यर्थः। ननु विहितद्रव्योपयोगिना अर्थाक्षिप्तस्यापि परम्परयाविधिसंस्पर्शात् संस्कारान्वयित्वमविरुद्धमिति शङ्कते—अथेति। तर्हि अत्रापि समानमित्युत्तरयति—एवं तर्हीति। एवं तावदर्थोपयोगिनोऽपि संस्कार इत्युक्तम्। अधुना लताया विहितत्वमप्यस्तीत्याह—विहितैवेति। ऐन्द्रवाय-

लादेरपि पेषणादिसंस्कार्यता न स्यात्। अथ विहितपुरोडाशाद्युपयोगिनः संस्कारः, एवं तर्हि विहितसोमरसोपयोगिनी लतापि संस्कार्या युक्ता विहितैव वा लता। तद्धितश्रुत्या लताप्रभवरसार्थतयैकयत्नतो विधानात्। अतो विहिता लता।

केचित्तु यवैर्यजेतेति श्रुतेः संस्कारतोऽवगतव्रीहिबाधो माभूदिति व्रीहिविधानमर्थवदित्याहुः; तन्न, यत्र तर्हि प्रकृतिद्रव्यान्तराविधिः तत्र प्रकृतिद्रव्यविधिर्न स्यात्। पक्षे च यवविधानेन व्रीहिविधेर्बाधोऽयं स्यात् न प्रसङ्गः।

---

वमिति तद्धितश्रुत्या प्रकरणबलेन सोमरसे पर्यवसितया सोमरसद्रव्यविधानात् एकयत्नाल्लता विहितैव तदविधाने तद्रसविधानानुपपत्तेरित्यर्थः। ननु पुरोडाशेऽपि संस्कारचोदनयैव व्रीह्युपादानसिद्धेः व्रीहिविधिर्व्यर्थ इति चोद्यं प्रकाशेनान्यथा परिहृतम्।

तदाह—केचित्त्विति। न हि व्रीहिविधेर्व्यर्थता यवैर्यजेतेति साक्षाच्छ्रुतविधिविहितैर्यवैः संस्कारावगतव्रीहीणां बाधः स्यात्। तेषां जघन्यत्वात्। ततस्स माभूदिति व्रीहिविधानमर्थवदेवेत्यर्थः। तन्नेति। सर्वप्रकृतिद्रव्यविषयव्यापित्वाभावान्नायं परिहार इत्यर्थः। किञ्च यवविधिना संस्कारावगतव्रीहिबाधपरिहारार्थं व्रीहिविध्यङ्गीकारे यवविधानात् व्रीहिविधेः पक्षे बाधोऽयं स्यात्। न प्रसङ्गः। नि[२]त्यवद्बाधपरिहाराय पक्षे बाधार्थ[३]त्वाद्विधेः। ततश्च व्रीहियवयोः नित्यसंस्कारावगतत्वेन प्रसङ्गात् कार्यसिद्धिरिति सिद्धान्तभङ्गापत्तिरित्याह—पक्षे चेति न च यवानां संस्कारविधिचोदनाभावात् न तद्बलादुपादानसिद्धिरिति वाच्यम्। यदा तु यवैर्यजेतेति यवप्रकृतिकपुरोडाशहविष्कयागोपादानार्थोविधिः तदा नानाप्रकृतिकत्वात्पुरोडाशस्य व्रीहीनवहन्तीत्यादिसंस्कारचोदनासु व्रीहिपदस्य प्रदेयप्रकृतिद्रव्योपादानार्थत्वात् पुरोडाशोपयोगिषु यवेष्वप्यवघातादयः संस्कारशास्त्रादेव प्राप्ता इति नवमसिद्धत्वात्।

नन्वेवमपि व्रीहिविधिर्व्यर्थ एव। अवघातादीन्यर्थकर्माणि भवन्तु माभवन्तु संस्कारकर्माणि। अतो निर्वापावघातादेः संस्कारकर्मत्वस्याद्याप्यसिद्धत्वात् अर्थकर्मत्वेपि संस्कारप्रवृत्त्यर्थोपादानस्य विद्यमानत्वादर्थोपात्तव्रीहिभिरेव प्रसङ्गात् व्रीहिप्रकृतिकपुरोडाशसिद्धेः व्रीहिविधिर्व्यर्थ एवेति चोदयति—नन्विति।

---

१. A पिष्ट्यादि २. A नित्यवद्भावं। ३. A भावार्थत्वात्।

ननु व्रीहिविधिर्व्यर्थ एव । अवघातार्थोपात्तव्रीहिभिः प्रसङ्गाद्व्रीहिप्रकृतिकपुरोडाशहविस्सिद्धेः । तन्न । उपात्तापचारेपि व्रीह्युपादाननियमार्थो विधिः । न चापचारे तदनुपादानमेव; शास्त्रप्रसङ्गे हि तथा स्यात् । स च न श्रुत्यपर्यवसाने युक्तः । न च पुरोडाशश्रुतेर्व्रीहिभिर्विना अपर्यवसानम् । पुरोडाशाकृतेरसम्बन्धिरूपत्वात् । पदस्य तु सम्बन्धिरूपत्वात् अन्यार्थोपात्तपदिपर्यवसानार्थं शास्त्रप्रसङ्गो युक्तः ।

ननु प्रकरणेऽपि सोमरसवाचकशब्दाभावात् तत्रापि कल्पनेति कथं क्लृप्तिरित्युच्यते । मैवम् । क्रयादिवाक्येषु हि सोमनिर्देशे लता श्रौती । उत्पवनादिवाक्येषु च रसीभूतसोमनिर्देशो लाक्षणिक इति सोमरसे शाब्दीधीः प्रकरणानुसन्धानाद्विश्रान्तेति । तदेवं रसस्य प्रकरणे शाब्दत्वात् न कल्पनेति सूक्तम् इह सोमरस एवावगम्यत इति । न चेदं वाच्यं, संस्कारचोदनात्वे सति सोमरसप्राप्तिः सोमरसे हविषि संस्कारचोदना-

तन्नेति । सन्निपातित्वे सम्भवत्यारादुपकारकता न युक्तैव । अभ्युपेत्यापि परिहारः अवघाताद्यर्थोपात्तव्रीहीणामचारे विहितपुरोडाशसिद्ध्यर्थमनियतद्रव्योपादाने प्राप्ते व्रीहय एव पुनरुपादेया इति व्रीह्युपादाननियमार्थत्वाद्विधेः नानर्थक्यम् । सोमे तु नैवं द्रव्यान्तरप्रसक्तिररिति न विधानावकाश इति भावः । नन्वेवमपचारे पुरोडाशशास्त्रस्य हानमेव । यथा सप्तमं पदमित्यत्र पदाभावे पदशास्त्रार्थस्येत्यत्राह—न चेति । तत्र हेतुः शास्त्रेति । नन्वत्रापि शास्त्रप्रसङ्गोऽस्त्वित्यत्राह— स च नेति । अत्र न तथा श्रुत्यपर्यवसानमित्याह—न चेति । पदेतु अपर्यवसानमस्तीत्याह —पदस्यत्विति । ननु न प्रकरणादपि सोमरसावगतिः अत्र सोमरसवाचकशब्दाभावात्, सोममभिषुणोति सोमं क्रीणातीत्यादौ सोमशब्दस्य लतावचनत्वात् । अतः सोमरसस्य कल्प्यस्य सन्निधानात् कथं क्लृप्तोक्तिररिति चोदयति—नन्विति । मैवमिति । सत्यं क्रयादिवाक्ये सोमशब्दोलतावचनः तथापि सोममुत्पुनाति सोमं पावयतीत्यादिवाक्येषु सोमशब्देन लक्षणया रस उपस्थाप्यते तत्रैव पवनादेः सम्भवादित्यर्थः । नन्वेवं लाक्षणिकसन्निधिरेवायं नाभिधानिकः स चायुक्त इत्यत्राह—इति सोमेति । तद्धितपर्यवसानाय हि शब्दसन्निधिरपेक्षितः नाभिधानिक एव । ततोऽपेक्षितशाब्दधीः सोमरसे लक्षणया प्रकरणाद्युक्तैवेत्यर्थः । अत एवोक्तं ग्रन्थ इत्याह—इति सूक्तमिति । ननु प्रकृतिद्रव्यविध्यभावे तद्धितात्सोम-

त्वमिति; यस्मादनिरूपितसंस्कारत्वेऽपि पदार्थान्वयावगममात्रादेव सोमरसप्रतीतिः। अथवा संस्कारपूर्वकावगमिष्यमाणकार्यान्तरप्रवेशादपि संस्कारदर्शनादाहवनीयादिषु न सङ्कटं किञ्चित्। वाक्यशेष एव तु पुरोडाशं कूर्मं भूतं सर्पन्तमित्यप्रकृतिकावगम इति भेदः।

"नन्वग्नयेऽग्नियस्वे"त्याग्नेये अस्तु पुरोडाशप्राप्तिः, अग्नीषोमीये ऐन्द्राग्ने च न स्यात्; मैवम्, अग्नीषोमीये तावदुपांशुयाजविधौ अन्वञ्चौ

---

रसेऽभिहिते संस्कारविधिः तत्रसंस्कारविधेश्च तद्धितपर्यवसानमिति इतरेतराश्रयत्वमिति न वाच्यमित्याह—न चेति। हेतुर्यस्मादिति। पावनादेः संस्कारकर्मत्वमस्तु मा भूद्वा। सर्वथा तावत् पावनकर्मत्वं योग्यतया सोमरसस्यैवावगम्यते। तद्धितपर्यवसानाय चावगतिमात्रसन्निधिरपेक्षितो न संस्कार्यतयाप्यवगतिः तस्मात् अनिरूपितसंस्कारत्वे पदार्थान्वयावगतिमात्रादेव च सोमरसप्रतीतिरित्यर्थः।

आहवनीयाद्याधानादिवत् भाविप्रतिसन्धानाद्वा संस्कारकर्मत्वसिद्धिरित्याह—अथवेति। ननु ऐन्द्रवायवमिति स्ववाक्ये द्रव्यविशेषाश्रुतौ प्राकरणिकपावनादिपर्यालोचनया सोमरसस्यैवावगतेः तत्रैव तद्धितपर्यवसानात् यथा न प्रकृतितया लताविधिः तथा आग्नेयवाक्येऽपि द्रव्यविशेषाप्रतीतेः कोऽसावाग्नेय इत्यपेक्षायां पुरोडाशं संयौतीति संयवनादिवाक्यपर्यालोचनया व्रीहिप्रकृतिकपुरोडाशावगतौ प्रकरणात् सप्रकृतिकस्यैव पुरोडाशद्रव्यस्यैवावगतेः न प्रकृत्याकाङ्क्षेति व्रीहिभिर्यजेतेति न प्रकृतितया व्रीहिविधानं स्यादित्याशङ्क्याह—वाक्यशेष एवेति। स्यादेतदेवं ऐन्द्रवायवतद्धितसाम्यं आग्नेयतद्धितस्य यदि तत्रैव वाक्ये पुरोडाशप्रतीतिर्न स्यात् आग्नेयवाक्यशेष एव तु पुरोडाशं कूर्ममिति प्रकृतिद्रव्यविशेषशून्यस्य पुरोडाशद्रव्यस्यैव स्वरूपतो ज्ञानमिति तत्रैवतद्धितपर्यवसानमित्यर्थः। ननु वाक्यशेषसन्निधिरन्यपरः स्तुतिपरत्वात् प्राकरणिकविधिवाक्यसन्निधिरेवादेय इति कथं वैषम्यमित्यत्राह—इति भेद इति। अन्यपरत्वेऽपि आर्थवादिकसन्निधिरेव शीघ्रं प्राकरणिकवाक्यसन्निधेः पदैकवाक्यतया एकवाक्यताप्रतीतेरित्यर्थः।

नन्वेवमाग्नेयवाक्ये पुरोडाशप्रतीतिरस्तु अग्नीषोमीये ऐन्द्राग्ने चार्थवादिकपुरोडाशप्रतीत्यभावात् कथं पर्यवसानमिति चोदयति नन्विति। मैवमिति। अग्नीषोमीये तावत्पुरोडाशप्रतीतिरस्ति यदन्वञ्चौ पुरोडाशाविति उपांशुयाजवाक्यशेषे सिद्धवदनुवादात्। न च वाक्यान्तरसन्निधित्वाविशेषे किमित्युपांशुयाजवाक्यशेषावगतेः पर्यवसानं न संस्कारवाक्यावगतेः। तथा च सप्रकृतिकावगतौ न प्रकृतिद्रव्यविधानमिति वाच्यम् उपांशुयाजवाक्यशेषस्यातिसन्निधेरित्यर्थः। ऐन्द्राग्नेप्य-

पुरोडाशाविति सिद्धवदनुवादात् साक्षात्पुरोडाशधीः । ऐन्द्राग्ने तु "पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् यावेतावाग्नेयश्चैन्द्राग्नश्चे"ति श्रुतेः पुरोडाशधीः न प्रकरणापेक्षा । अथवा यद्यपि सङ्ख्यायुक्तकपालसंस्कृतमात्रेऽनुशासनं, तथापि तत्प्रयोगनियमात् पुरोडाशविषयमेवानुशासनम् ।

ननु प्रकरणे पशुपुरोडाशादिद्रव्यं वातादिकश्च कथं सोमरस एव धीः; मैवम्, पशुपुरोडाशादि तावत् द्रव्यं कर्मान्तरहविष्ट्वादिहायोग्यम् । वातादेश्च हविष्ट्वानर्हत्वम् । अतः सोमरस एवावगम्यत इत्युक्तम् ।

ये त्वाहुः "तं द्रोणकलशाद्गृह्णाती"ति श्रुतेः द्रोणकलशे च सोमरसस्यैवावस्थानात् सोमरस एवावगम्यत इति । तन्न । तत्रापि न शाब्दी

---

प्रकृतिकपुरोडाशधीरित्याह—ऐन्द्राग्नेत्विति । एवं स्ववाक्यशेषे प्रधानान्तरवाक्यशेषे चातिसन्निधेरवगते अप्रकृतिके पुरोडाशे पर्यवसानं युक्तम् । न प्रकरणापेक्षया सप्रकृतिक इत्युक्तम् । इदानीं तत्तद्विध्युद्देश एवाष्टाकपालादिपदात् पुरोडाशप्रतीतिरस्तीत्याह - अथवेति । अष्टाकपालादिना संस्कृतोत्पन्नतद्धितानां सङ्ख्यायुक्तकपालशब्दानां पुरोडाशवाचकत्वात् पुरोडाशधीः स्ववाक्य एवास्ति । ननु संस्कृतं भक्षा इति सङ्ख्यायुक्तकपालशब्दस्य संस्कृतभक्षमात्रे अनुशासनं न पुरोडाश इति कथं तद्धीरिति शङ्कामात्रमनूद्य परिहरति—यद्यपीति । सत्यं सामान्येनानुशासनं तथापि प्रयोगनियमात् पुरोडाशविषयमेव तदनुशासनं लाघविकतया सामान्यस्मृतिः सान्नाय्यस्मृतिवदित्यर्थः ।

ननु प्रकृतत्वाविशेषादैन्द्रवायवादितद्धितस्य किमिति सोमरस एव पर्यवसानं यावता पुरोडाशादिके प्राकरणिके वातादिके वा द्रव्यान्तरे पर्यवसानं भवत्येवेति चोदयति—नन्विति । मैवमिति । पुरोडाशादौ आदिशब्दात् दानादिकं च हविरात्मकं तावदन्यदीयत्वादन्वयानर्हं वातादिकं चानदनीयतया शिष्टाचारविरोधात् हविष्ट्वानर्हमिति पारिशेष्यात् सोमरस एव धीरित्यभिसन्धाय ग्रन्थ उक्तम्—सोमरस एवावगम्यते—इति ।

प्रकाशादयस्तु सोमरस एवावगम्यत इति ग्रन्थस्यान्यथाभावमूचुः ऐन्द्रवायवादिवाक्यसन्निधौ द्रोणकलशाद्गृह्णातीति श्रुतेः द्रोणकलशे च सोमरसस्यैव स्थितत्वादिति ; तदाह—ये त्विति । दूषयति—तन्नेति । एवमपि न शाब्दी सोमरसधीः

सोमरसप्रतीतिः । द्रोणकलशावस्थितत्वात् कल्प्येत्य"एत्या धारये"त्यनेन तुल्यमेवेत्यलमतिप्रसङ्गेन ।

## ॥ ७ ॥ पृथक्त्वनिवेशात्सङ्ख्यया कर्मभेदः स्यात् ॥ २१ ॥

प्राजापत्यानिति बहुवचनादेकशेषकल्पना । सा च प्रधानभूतप्रत्ययार्थमात्रे एव युक्तेति प्रजापतिर्देवतैषामित्यन्वयः । अतः प्रजापत्यन्वितत-

---

किन्तु द्रोणकलशावस्थितत्वबलेन कल्प्येति धारावाक्यसाम्यमेव स्यादित्यर्थः । ननु भवदुक्तपारिशेष्यमसम्भवि पुरोडाशकपालवत तद्रूपतिरोधानेन अन्यत्र हविष्ट्वसम्भवात् पुरोडाशान्तरस्य वा तत्सजातीयस्य प्रतीतिसम्भवादित्याशङ्क्याह—इत्यलमतिप्रसङ्गेनेति । न तावत् पुरोडाशान्यत्वधीः अप्रकृतत्वात्, नाप्यन्यदीयत्वतिरोधानं लक्षणात्तेः । न च तद्धितपर्यवसानाय द्रव्यप्रतीतिमात्रमपेक्षितम्, तच्च द्रव्यमन्यदीयं वा भवतु मा वा न काचित् क्षतिरिति वाच्यम्, यतः सोमरसव्यतिरेकेण द्रव्यान्तरपर्यवसाने पावनादेः सन्निधिप्रमाम्नातस्य संस्कारस्यान्वयानुपपत्तेः द्रवद्रव्यविषयत्वात्तस्येति ।

## ॥ ७ ॥ पृथक्त्वनिवेशात सङ्ख्यया कर्मभेदः स्यात् ॥ २१ ॥

वाजपेये सप्तदश प्राजापत्यान् पशूनालभत इति श्रुतम् । तत्र चिन्ता—किं सप्तदशपशुक एको यागः किं सप्तदश यागा इति । तदर्थमियं चिन्ता—प्राजापत्यानिति किं निरुपसर्जनस्य बहुत्वान्वयः उत सोपसर्जनस्येति । अत्र निबन्धनेऽध्यायसङ्गतिः प्रसङ्गाच्छास्त्रभेदहेतुत्वात् कर्मभेदस्यापि चिन्त्यतया प्रसक्तिः, विवरणे तु अनुबन्धभेदनिबन्धनशास्त्रभेदव्युत्पत्तेः साक्षात् । अवान्तरसङ्गतिस्तु पूर्वत्र यथा एकादशावदानकोऽप्येको यागः तथाऽनेकपशुकोऽपीति । तथा पूर्वत्र इन्द्रवाय्वादिभेदादगत्या यागव्यक्तिभेदः । इह एकैव देवतेति । प्रयोजनं तु पूर्वपक्षे एकपशुदोषे पुनः सप्तदशपशूनुपादाय यागः कर्तव्यः । सिद्धान्ते त्वेकमेव पशुमिति । ननु प्राजापत्यानिति बहुवचनात् द्रव्यदेवताबहुत्वमवगम्यते । तच्चैकशेषकल्पनया, अतस्तदाक्षिप्ता यागा अपि बहव एवेति कथमेकयागत्वेन पूर्वपक्ष इत्यत्राह—प्राजापत्यानिति । सत्यं बहुवचनादेकशेषत्वकल्पना । सा तु प्रधानीभूतप्रत्ययार्थद्रव्यमात्र एव युक्ता, नोपसर्जनीभूतप्रकृत्यर्थप्रजापतावपीति प्रजापतिर्देवता येषामित्यन्वयः । उपसर्जनेन सहान्वये तु प्रजापतिर्देवता अस्येति । एतदुक्तं भवति—बहुत्वान्वितानां प्रजापतिसम्बन्धः न प्रजापतिसम्बन्धानां पशूनां बहुत्वान्वयः । एवं च प्रत्ययमात्रे तन्त्राभिधानं कल्पितं न प्रकृतिभागेऽपीति लाभ इति । ततः

यैक्यादेक एव द्रव्यदेवतासम्बन्ध इत्येको यागः। एवञ्चानेकयागकल्पना परिहृता भवति।

ननु तद्धितान्तबहुवचनेन सोपसर्जनस्यैव बहुत्वं युक्तम्। मैवम्।

पश्वन्वयितयाऽस्त्येव प्रजापतेरपि बहुत्वम्। स्वतस्तु नेष्यते कल्पनागौरवात्। तच्च बहुत्वं सप्तदशत्वावस्थितमिति सप्तदशपशुक एको याग इति पूर्वः पक्षः।

अत्रैकदेशिसिद्धान्तः—नैकस्मिन्यागे सर्वपशूनां साधनत्वं घटते हविषो

---

किमित्यत्राह—अत इति। यद्यपि द्रव्यभेदः तथापि तेषां प्रजापत्यन्विततया ऐक्यात् द्रव्यदेवतासम्बन्ध एक एवेति तत्कल्पितो यागोऽपि एक एवेत्यर्थः। ननु यथा देवतैक्यात् सम्बन्धैक्यं तथा द्रव्यभेदाद्भेदोऽपीति किमिति न भवतीत्यत्राह—एवं चेति। कल्पनागौरवपरिहाराय न तथाऽङ्गीकार इत्यर्थः। ननु विभक्त्यर्थो बहुत्वं विभक्तिश्च तद्धितान्तात् प्रातिपदिकादिति सोपसर्जनस्यैव बहुत्वं युक्तम् विभक्तेः प्रातिपदिकार्थगतस्वार्थाभिधायित्वनियमादिति चोदयति—नन्विति। मैवमिति। सत्यं प्रातिपदिकार्थगतं विभक्त्यर्थबहुत्वं तत्तु पश्वन्विततत्वाकारेण प्रजापतेरप्यस्ति स्वरूपतस्तु नास्ति कल्पनागौरवापत्तेरित्यर्थः। समभिव्याहृतसप्तदशपदान्वयफलमाह—तच्चेति। सप्तदशपदान्वयबलात् तावत्यां सङ्ख्यायां विभक्त्यर्थबहुत्वस्य व्यवस्थितिरित्यर्थः।

ननु यथा सारस्वतौ भवत इत्यत्र यागभेदः तथाऽत्रापि किमिति न भवतीत्यत्राह—इति पूर्वः पक्ष इति। युक्तस्तत्र यागभेदः मन्त्रवर्णात् देवताभेदावगतेः एकत्र सरस्वान् अन्यत्र सरस्वतीति। इह तु न तथा हेत्वन्तराद्देवताभेदावगतिरिति न यागभेद इति भावः। आचार्यपादीयं राद्धान्तमाह—अत्रैकदेशेति। एकयागे अनेकेषां साधनत्वं न युक्तम्। तत्र हेतुः—हविष इति। तत्र पशोर्हविष्ट्वोक्तेरनास्थया हृदयादीनामेव हविष्ट्वात् पशोर्यागसाधनत्वं तद्धविर्भूतहृदयाद्येकादशावदानगणद्वारेण प्रकृतावगतम। अतोऽत्रापि तथैव साधनत्वेन भाव्यम् नान्यथेत्यर्थः। ततः किमित्यत्राह—एकयागेति। एकयागपक्षे च पशूनामेकं हविरिति एकत्वात् करणस्य सकृदेव चोदकप्रवृत्तेरवदानगणस्य च एकस्मिन् हविषि आवृत्त्ययोगात् एकस्यैव पशोरेकादशावदानद्वारेण साधनत्वं स्यात् न सर्वेषाम्। अतः पश्वन्तराणां प्राजापत्यत्वं न स्यात्। न च हृदयावदानमेकपशुसम्बन्धि जिह्वावदानमन्यपशु-

हि पशोरेकादशावदानद्वारेण साधनत्वं प्रकृतावावगतम्। एकयागपक्षे च पशुगणः एकं हविरिति सकृदेव चोदकप्रवृत्तेरेकहविषि चावृत्तेरनुपपत्तेरेकस्यैव पशोरेकादशावदानद्वारेण साधनत्वं स्यात्। ततश्च पश्वन्तराणां प्राजापत्यत्वं न स्यात्। यागभेदे तु प्रतियागं चोदकप्रवृत्तेः प्रतिपश्ववदानगणप्राप्तिः। अतश्चोदकानुरोधात् सोपसर्जनस्य प्रत्ययार्थस्य बहुत्वमिति निर्णयः। तदुक्तम्—

एकयागत्वपक्षे स्यादेक एवात्र चोदकः।
ततश्चैकगणप्राप्त्या न सर्वपशुसङ्ग्रहः॥ इति। ( तन्त्रवा )

तदयुक्तम्, निरूपिते ह्युपदेशतः करणे तदुपकाराकाङ्क्षायां चोदकः न तु तत एव निर्णयः।

ननूपदेशतो निर्णयासम्भवे चोदकपरामर्शादपि निर्णयो युक्तः; मैवम्, उपदेशतो ह्युक्तरीत्या यागैकत्वनिर्णयस्सिद्ध एवेति। यदि चोदक-

---

सम्बन्धि वक्षोऽवदानमन्यपशुसम्बन्धीत्येवं सर्वपशुसङ्ग्रहो वाच्यः। एवमपि न सप्तदशपशुसङ्ग्रहः। प्रकृतौ च एकपशुव्यक्तिसम्बन्ध्येकादशावदानगणो दृष्ट इतीहापि तथैव युक्तः न व्यक्त्यन्तरसम्बन्ध्यवयवरूपाणां, हृदयादीनां समुच्चारणे स्वत एकव्यक्तिसम्बन्ध एव भाति नावयव्यन्तरसम्बन्ध इति एकयागपक्षे सर्वेषां प्राजापत्यत्वं न स्यादित्यर्थः। यागभेदे वा कथं तदुपपत्तिरित्यत्राह—यागभेदेत्विति। यागभेदे तु प्रतियागं भेदेन करणत्वात् प्रतिकरणं भेदेन चोदकप्रवृत्तौ प्रतिपशु भेदेनावदानगणप्राप्तिः। ततः किं तत्राह—अतश्चोदकेति।

किं सोपसर्जनस्य सङ्ख्यान्वयः निरुपसर्जनस्य वेति सन्देह उपदेशमात्रान्निर्णयासम्भवे चोदकानुरोधात् सोपसर्जनस्य प्रत्ययार्थस्य वैभक्तिकबहुत्वान्वय इति निर्णयो युक्त इत्यर्थः। तत्साक्षित्वेन तदुक्तं श्लोकमाह—तदुक्तमिति। दूषयति—तदयुक्तमिति। निरूपिते करणे तदुपकारार्थं चोदकापेक्षा पश्वादावित्यर्थः। ननूपदेशतोऽर्थनिर्णयासम्भवात तदर्थं चोदकानुरोधोऽपि युक्त एवेति चोदयति—नन्विति। मैवमिति। नातिदेशत उपदेशार्थनिर्णयो युक्तः। चोदकतोऽपि प्रथमं उपदेशादेव। पूर्वपक्षे च युक्त्या एकयागत्वनिर्णयस्य सिद्धत्वादित्यर्थः। नन्वेकयागत्वनिर्णये चोदकावगतावदानविरोधः स्यादिशङ्क्याह—यदि चोदकेति। उपदेशनिर्णीतार्थविरोधाद्यद्यावृत्त्याऽनावृत्त्या वाऽवदानगणो न युक्तः तदाऽसौ

प्राप्तावदानगुणो नावृत्त्या संभवति, बाध्यतां कृष्णलचराविवावघातः ।

परमसिद्धान्ती त्वाह—प्रकृतिप्रत्ययसमुदायात् विभक्त्युत्पत्तेः समुदायार्थमेव सोपसर्जनं प्रधानं देवतायुक्तद्रव्यं विभक्तिर्भिनत्ति । ननु कल्पनालाघवात् स्वतो भेदो नेष्यत इत्युक्तम् । उच्यते । सोपसर्जनस्य प्रधानस्य विभक्तिश्रुतितः स्वतो भेदावगतेः तद्बलादुपसर्जनस्याप्येकशेषकल्पना नानायागकल्पना च युक्ता । एवं च चोदकाबाध इत्यभ्युच्चयः । एवं च नेयं सङ्ख्या कर्मणि विधीयते । येन कर्मसाधनतां द्रव्यावच्छेदद्वारेण गच्छन्ती द्रव्यगता स्यात् । किन्तु कर्मगतैषा । अत एव न विधीयते । ननु यथा कर्म द्रव्यादियुक्तं विधीयते यथा वा द्रव्यादिकं संख्यायुक्तं तथा कर्मापि सङ्ख्यायुक्तं विधीयताम् । मैवम् । यदि सङ्ख्यायुक्तमिति सङ्ख्यासाधनकमित्यर्थः सङ्ख्यासाधनत्वे च सङ्ख्या साधनान्तरावच्छेदात् साधनगता स्यात् न कर्मगतेत्युक्तम् ।

---

बाध्यताम कृष्णलेष्ववहन्तिवत् अन्यथा कृष्णलयागेपि कृष्णलैः क्रीतो व्रीहिरेव द्रव्यं स्यादिति भावः । कथं तर्हि उपदेशमात्राद्भिन्नयागत्वावगम इत्यत्राह—परमसिद्धान्तीति । यतो विभक्तय उत्पद्यन्ते तदर्थगतां सङ्ख्यामाहुः । अत्र च तद्धितान्ताद्विभक्त्युत्पत्तिः न तद्धितमात्रात् । तस्यैव प्रातिपदिकत्वात् । अतः प्राजापत्यानां सतां बहुत्वं न स्वरूपतः पशूनां तथैव प्रातिपदिकार्थत्वात् । अतः समुदायार्थमे । तद्धितान्तार्थमेव सोपसर्जनं प्रधानं देवतायुक्तं द्रव्यदेवतासम्बन्धमिति यावत् विभक्तिर्भिनत्ति । ततश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या इत्येवमेकशेष इत्यर्थः ।

ननूपसर्जनस्य यद्विभक्त्यवगतं बहुत्वं तत् स्वतो नेष्यते कल्पनागौरवापत्तेरिति पूर्वोक्तं स्मारयति— न्विति । उच्यत इति । श्रुतसिद्ध्यर्थमश्रुतानेककल्पनापि युक्तेत्यर्थः । भाष्ये तु यच्चोदकाबाधः सिद्धान्तहेतुत्वेनोक्तः सोऽभ्युच्चय इत्याह—एवं चोदकेति । ननु सप्तदश प्राजापत्यानित्यत्र सप्तदशसङ्ख्या किमनुवाद्या । किं वा विधेया ? नाद्यः अप्राप्तत्वात् । द्वितीये साधनत्वेन विधेया, न चामूर्तायाः सङ्ख्यायाः स्वतः साधनत्वं किन्तु द्रव्यावच्छेदद्वारेण तु वक्तव्यम् । तथा सति द्रव्यगतत्वापत्त्या कर्मगतत्वाभावेन कर्मभेदो न स्यादित्यत्राह—एवं चेति । ननु यथा सोमेन यजेतेति द्रव्यादियुक्तकर्मविधिः तथाऽत्रापि कर्म सङ्ख्यायुक्तं विधीयतामिति चोदयति– न्विति । मैवमिति । सङ्ख्यायुक्तमित्यत्र भवदुक्तसङ्ख्यायुक्त-

अथ आश्रितसङ्ख्यान्वितं सङ्ख्यायुक्तमभिप्रेतं तदा पूर्वमाश्रय-प्राप्तिर्वाच्या। प्राप्तं ह्याश्रयतया प्राप्तेऽन्वेति प्रणयनमिव गोदोहने। यदाश्रित्य हि यत्सिद्धमनूद्यान्यद्विधीयते तत्तदाश्रय[1] इत्यर्थात् कर्माग्रतो विधेयम्। तच्च सङ्ख्यासमभिव्याहारात् सङ्ख्यान्वययोग्यं विधेयम्। तद्विधौ च सङ्ख्या प्राप्तेति न विधेया। द्रव्यादियुक्तन्तु कर्म द्रव्यादि-

---

शब्दस्य कोऽर्थः ? किं सङ्ख्यासाधनकत्वं किं वा स्वाश्रितसङ्ख्यान्वितत्वं, नाद्यः, अमूर्तायाः सङ्ख्यायाः द्रव्यवत् साक्षात् कर्मसाधनत्वाभावात्। नापि द्रव्यावच्छेद-द्वारा, कर्मगतत्वविरोधापत्तेरिति पूर्वमेवोक्तमित्यर्थः। द्वितीयं पक्षमाह—अथेति। दूषयति—तदेति। तथा सति आश्रयभूतकर्मणः पूर्वमेव प्राप्तिर्वाच्या। न च साऽस्तीति भावः। तत्र हेतुः—प्राप्तमिति। यस्मात् प्राप्तमेवाश्रयत्वेनान्वीयते यथा गोदोहनेन प्रणयेत् एकादशप्रयाजानित्यादौ प्रणयनं गोदोहने, प्रयाजाश्च सङ्ख्या-यां तदेवोपपादयति – यदाश्रित्य हीति। नन्वेतेनैव वाक्येन कर्माश्रयभूतं विधीयतां तदा-श्रिता च सङ्ख्या विधीयतामिति शङ्कामात्रमपनुदति—इत्यर्थादिति। तथात्वे वाक्य-भेदः स्यादिति भावः। ननु भवत्पक्षे कथमवाक्यभेदेन सङ्ख्याप्राप्तिरित्यत्राह—तच्च सङ्ख्येति। विधेयं च तत कर्म सङ्ख्यासमभिव्याहारात् सङ्ख्यान्वययोग्यमेव विधेयम्। विनियोगपूर्वको हि विधिः। प्रथमं च सङ्ख्यासङ्ख्येयस्वरूपसम्बन्धाव-गमात् सङ्ख्यान्वययोग्यतावत् पृथक्त्वाधिष्ठानकर्मावगतौ तेषां विधाने तावत् पृथक्त्वानिवेशिनी सङ्ख्या प्रथमप्राप्तैवेति न तद्विधिः। अप्रवृत्तप्रवर्तनाभावादि-त्यर्थः। सोमादिद्रव्यविशिष्टकर्मविधौ तु नेत्थं साक्षात्साधनत्वादित्याह—द्रव्यादि-युक्तमिति। तथा द्रव्यादिसङ्ख्याविधावपि द्रव्यावच्छेदद्वारा परम्परया कर्मसाधन-त्वाविरोध इत्याह—तथेति। ननु यथा सङ्ख्यान्वययोग्यकर्मविधौ सङ्ख्याप्राप्तिर्न-विधिः तथा सोमेन यजेतेत्यपि सोमान्वययोग्यकर्मविधौ च सोमस्य प्राप्तिर्न तद्विधिः स्यात् पशुना यजेतेत्यादौ पश्वेकत्वादेश्च। तथा सप्तदश प्राजापत्यान् पशूनिति पशुना सामानाधिकरण्यात् पशुगतैवेयं सङ्ख्या न कर्मगतेत्याशङ्क्याह—इत्यनु-सन्धेयमिति।

अयं भावः न सोमेन यजेतेत्यत्र यागस्य सोमान्वययोग्यमसाधारणं रूपान्तर-मस्ति यथाऽत्र सप्तदशसङ्ख्यान्वययोग्यं तावत् पृथक्त्वयुक्तत्वं कर्मणः। अतो न सोमस्योपलक्षकता। [2]अत्रत्यसङ्ख्यावत् किन्तु विधेयतैव। किञ्च रूपान्तरे विद्य-मानेपि तस्य यजिपदानुपस्थाप्यत्वात् न तद्विधेर्नान्तरीयकतया प्राप्तिः, किन्तु पदान्तरोपस्थाप्यतया विधेयत्वमेव। सप्तदशसङ्ख्या तु कर्मस्वरूपं भिनत्ति।

---

१. A आत्मसंख्यावत्    २. A श्रितः

साधनकं विधीयत इत्यविरोधः। तथा द्रव्यादिसङ्ख्या च द्रव्यादिद्वारेण कर्मसाधनतयैव विधीयत इति तत्राप्यविरोध इत्यनुसन्धेयम्।

अत्र च निबन्धनमते सम्बन्धस्यैव शब्दबलेन विधिविषयत्वं यागद्वारेण च प्रयत्नगोचरत्वं जघन्यमपि। विवरणमते तु वस्तुस्वभावेन यागस्य [1]प्रयत्नसाध्यतया तस्यैव विधिविषयत्वं शाब्दसम्बन्धाक्षिप्तस्य। करणत्वन्तु मतद्वयेऽपि यागस्यैव अन्यार्थप्रवृत्तकृतिगोचरत्वात्। सम्बन्ध-

---

एकमिवानेकमपि कर्म प्राजापत्यपदेन बोधयितुं शक्यते तन्त्रेणेति कर्मविधिनान्तरीयकतया 'संख्यायाः' प्राप्तिः। किन्तु पदान्तरोपस्थाप्यतया विधेयत्वमेव। सप्तदशसङ्ख्यायाः प्राप्तिः प्राजापत्यानिति द्रव्यदेवतासम्बन्धगतवैभक्तिकबहुत्वे व्यवस्थापनार्थत्वात् सप्तदशपदस्य सम्बन्धसामानाधिकरण्यम् तदाक्षिप्तयागसामानाधिकरण्यं[2] वेति न पशुसामानाधिकरण्यम् शाब्दम्, ननु निबन्धनमते शब्दबलेन शास्त्रभेदः अतः प्रसङ्गात् सङ्गतिर्न साक्षात्। विवरणे तु शास्त्रभेदात् सङ्गतिरित्युक्तम् तत्कथमित्यत्राह—अत्र चेति। निबन्धनमते हि शब्दबलेन शाब्दस्य न सम्बन्धस्यैव विधिविषयत्वम्। ननु साक्षात् कृतिगोचरत्वाभावात् कथं सम्बन्धस्य विधिविषयत्वमित्यत्राह—यागद्वारेणेति। सत्यं सम्बन्धस्य न स्वारसिकं कृतिगोचरत्वं तथापि यागद्वारेण जघन्यकृतिगोचरत्वमप्यस्तीति हेतोरस्मिन् वाक्ये स्वारसिककृतिगोचरस्य श्रुतत्वात् जघन्यकृतिगोचरस्यापि सम्बन्धस्य विधिविषयत्वमित्यर्थः।

नन्वेवं विवरणमतेऽप्यस्त्वित्यत्राह विवरणे त्विति। तन्मते वस्तुबलात् साक्षात् कृतिगोचरतया वस्तुतः साध्यायाः क्रियाया एव विधिविषयत्वम्। ननु अशब्दो[3]पात्तस्याशब्दार्थत्वात् कथं विधिविषयतयाऽन्वय इत्यत्राह—शाब्देति। शब्दाभिहितसम्बन्धाक्षिप्तस्यापि शाब्दत्वमस्त्येवेत्यर्थः। नन्वेवं निबन्धनमते सम्बन्धस्य विधिविषयत्वे तस्यैव करणत्वं स्यात्। तथा च सकृदेव चोदकप्राप्तिः स्यादित्यत्राह—करणत्वं त्विति। मतद्वयेऽपि करणत्वं यागस्यैव, तस्यान्यार्थप्रवृत्तकृतिगोचरत्वात्, न सम्बन्धस्य तस्यातथात्वात्। करणत्वं हि उपादानात् कल्प्यम्। कृतिव्याप्यतार्हस्यैव कृतिकरणत्वम्। तच्च साक्षात् कृतिव्याप्यस्यैव कल्पयितुं युक्तमिति भेदेनैव तत्कल्प्यत इति चोदकप्रवृत्तिरपि भेदेनेत्यर्थः। ननु निबन्धने भवतु सम्बन्धस्यैव विधिविषयत्वं तथापि कथं न शास्त्रभेदः सम्बन्धभेदादिति तत्राह—सम्बन्धस्य त्विति। सम्बन्धस्य विधिविषयत्वे तेषां प्राजापत्यशब्देन

---

१. प्रयत्नान्वयात् २. B एवे च व्यावृत्तपशु ३. B स्वशब्दो।

स्यैव तु विधिविषयत्वे तस्य तन्त्राभिधानात् सकृदेवान्वयात् एकानुबन्धता एकशास्त्रता च । आक्षिप्तयागस्य तु विषयत्वे आक्षेपस्य वस्त्वनुसाराद्भेदेन प्रवृत्तेः भेदेनानुबन्धतेति शास्त्रभेदः । भेदाभेदयोश्चानुष्ठानेऽनतिभेदात् नैकं मतं निर्णीतम् । सम्बन्धविषयपक्षेऽपि आक्षिप्तयागान्तर्भावादेव विधिविषयतेति सौर्यादावपि करणीभूतस्यैव विषयतेति मतस्थितिः । शेषं सुगमम् ।

## ॥ ८ ॥ संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

अथैषज्ज्योतिरित्यादि—स्वतन्त्रसंज्ञान्तरश्रवणेत्येतेन यजेतेति

---

तन्त्रेणाभिधानात् आग्नेयादियागषट्कस्यैव सकृदेव विषयतयाऽन्वयात एकमनुबन्धत्वमपि शास्त्रमप्येकमेवेत्यर्थः । नन्वेवं विवरणमतेपि शास्त्रभेद इदि तत्राह—आक्षिप्तेति । तन्मते न सम्बन्धो विधिविषयः, किन्तु तदाक्षिप्तो यागः तस्य न तन्त्राभिधानमिति न सापेक्षत्वे मानमस्ति । ननु तन्त्राभिहितसम्बन्धसमुदायेन एक एव याग आक्षिप्त इति तत्राह - आक्षेपस्येति । आक्षेपो हि वस्त्वनुसारि नाभिधानानुसारि ।

वस्तुतस्तु न सम्बन्धसमुदायस्य साध्यवं किन्त्वेकैकस्येति एकैकेन सम्बन्धेन नैरपेक्ष्यादेकैको यागो भेदेनाक्षिप्यत इति भेदेनैव विषयतेति अनुबन्धभेदाच्छास्त्रभेदः नचैकवाक्यत्वान्न शास्त्रभेदः, न वाक्यभेदः शास्त्रभेदे तन्त्रम् । निरपेक्षभिन्नालौकिकार्थप्रतिपादनक्षमत्वमेव । तच्चेहाप्यस्तीत्यर्थः । नन्वनयोः किं बलीय इत्यत्राह—भेदाभेदयोश्चेति । अनुष्ठाने विशेषाभावात् नैकमतनिर्णयः कृत इत्यर्थः । नन्वेवं निबन्धने सम्बन्धस्य विषयत्वे यागस्य करणत्वे सौर्यादौ करणीभूतस्य विषयतेति मतं हीयेतेत्यत्राह—सम्बन्धेति । सम्बन्धविषयत्वपक्षेपि न सम्बन्धमात्रस्य विधिविषयता, किन्त्वाक्षिप्तयागान्तर्भावादेव नान्यथा अन्यथा तद्विषयत्वानुपपत्तेः । सा च शब्दबलात् सम्बन्धपुरस्कारेणेति न करणीभूतस्य विषयतेति मतहानिरित्यर्थः । इतरत् भाष्यव्याख्यादिकयोरेव व्यक्तेत्याह—शेषमिति ।

## ॥ ८ ॥ संज्ञा चोदत्पत्तिसंयोगात् ॥ २२ ॥

"अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः एतेन सहस्रदक्षिणेन यजेत" इति ज्योतिष्टोमे समाम्नातम् । तत्र चिन्ता—किं ज्योतिरादिनामभिः वृत्तस्यैव कर्मणः उपस्थितेरेकानुबन्धतया एकशास्त्रत्वं उत संज्ञाभेदे अनुबन्ध-

सामानाधिकरण्याद्यजिनामत्वेऽधिगते यजेश्च प्रकृतविषयत्वावगतेः प्रकृत-पुनः श्रुतितेति नामापि तत्रैव प्रवृत्तम् ।

नन्वनेकशब्दत्वस्यान्याय्यत्वात् संज्ञान्यत्वे अर्थान्यता युक्ता । मैवम् । सहस्रदक्षिणादियुक्तस्वरूपेण संज्ञान्तरप्रवृत्तेः, प्रकृतपरत्वेऽप्यर्थ-भेदः साकंप्रस्थायीयवत् आत्यन्तिकार्थभेदस्तु यजिपरतन्त्रत्वादेव न युक्त इति पूर्व पक्षः ।

---

भेदाच्छास्त्रभेदः इति । अत्रानुबन्धभेदनिबन्धनशास्त्रभेदव्युत्पत्तेरध्याये पादे च सङ्गतिः । अवान्तरं तु युक्तं द्वित्वादिसङ्ख्यायाः पृथक्त्वनिवेशात् कर्मभेदकत्वं संज्ञाभेदस्तु एकस्यापि पिकः कोकिल इति दृष्ट इति न कर्मभेद इत्युत्थानात् । प्रयोजनं तु पूर्वपक्षोक्तमेव । ननु अथैषज्योतिरित्यादेः यजिसामानाधिकरण्याभावा-द्यागनामतैव नास्ति कथमियं चिन्त्येत्यत्राह — अथैष इति । सत्यं स्वतन्त्रतयैव ज्योति-रादिकं श्रुतं न कर्मसमानाधिकरणतया तथापि एतेन सहस्रदक्षिणेन यजेतेति गुणविधिपरे वाक्यान्तरे प्रकृतिज्योतिरादिवाचिना एतच्छब्देन यजिसामाना-धिकरण्यसिद्धौ यागनामत्वं सिद्धमित्यर्थः । ननु विधिपरत्वे सम्भवति अनुवाद-परत्वायोगात् अथैष इत्यादिवाक्यत्रयेपि कर्मान्तरविधिरेव युक्त इति कथं पूर्व-पक्ष इत्यत्राह—यजेश्चेति । एवमुक्तेन प्रकारेण यदि यजिसामानाधिकरण्यात् कर्मनामता न तर्हि इद प्रवृत्तनामेति समिदादिवद्यजिपरतन्त्रमेव । यजेश्च प्रकृत-विषयता व्यक्तिवाचितया अवगतेति प्रकृतज्योतिष्टोमयागे पुनः श्रुतिरेव । न च कर्मान्तरतेति ज्योतिरादिनामापि तत्रैव ज्योतिष्टोमे प्रवृत्तमित्यर्थः ।

ननु अन्यायोऽनेकशब्दत्वमिति सज्ञाभेदादर्थभेदो युक्त इति चोदयति— नन्विति । मैवमिति । सत्यं संज्ञान्यत्वेनार्थान्यत्वं युक्तं तत्तु यजेः रूपशून्यत्वेन प्रकृता-भिधायित्वप्रतीतिबलात् सहस्रदक्षिणत्वादिविशिष्टकर्मान्तरविधौ गौरवप्रत्य-भिज्ञाहान्यादिदोषापत्तेः गुणमात्रविधौ लाघवाच्च प्रकृतपरत्वे दृढे तत्रापि सहस्र-दक्षिणादिरूपेण संज्ञाप्रवृत्तेरौपाधिकमेव युक्तमित्यर्थः । ननु किमित्यात्यन्तिकभेदो नेष्यते इत्यत्राह—इत्यात्यन्तिकेति । ननु प्रकृताभिधायितैव न युक्ता, ज्योतिरादि-शब्देन ज्योतिष्टोमाभिधानाशक्तेः । तथा प्रकृते सहस्रदक्षिणाख्यगुणविधिरप्य-सम्भवी द्वादशशतगुणान्तरेणावरुद्धत्वादित्यत्राह—इति पूर्वः पक्ष इति । ज्योतिश्शब्द-स्तावत् प्रकृतस्य ज्योतीरूपस्तोत्रसम्बन्धित्वात् प्रतीकेन वा लक्षणया ज्योतिष्टोम-प्रतिपादको युक्तः त्रिवृदादीनि सर्वाणि ज्योतींषि अस्य इति सर्वज्योतिश्शब्दोऽपि तथा विश्वज्योतिश्शब्दश्चेति न प्रवृत्तत्वविरोधः । तथा न्यायबलेन प्रकृतौ गुणविधौ तात्पर्येऽवधृते सहस्रद्वादशशतयोः उभयोरपि वाक्यशिष्टत्वादगत्या

शब्दान्तरोच्चारणे तावदर्थान्तरावगतेः तदनुरोधाद्यजिनामत्वेऽपि यज्यन्तरनामत्वं युक्तम्। प्रथमं स्वातन्त्र्यादन्यत्र प्रवृत्तानां परतन्त्रतैव यजेर्युक्ता निर्वहति च यागान्तरं सहस्रदक्षिणादिविशेषान्तरश्रुतेः। अतः कर्मान्तरत्वादनुबन्धभेदात् शास्त्रभेदः। शेषं सुगमम्।

---

विकल्पोऽपि युक्त इत्यर्थः—राद्धान्तस्त्विति। क्वचित्कोशेषु न लिखितम्। अयंभावः वक्ष्यमाणस्यार्थस्य राद्धान्तता स्पष्टेति। ननु प्रकृतप्रत्याभिज्ञाबलात् ज्योतिरादेस्तत्परतैव युक्तेति कथं राद्धान्त इति तत्राह—शब्दान्तरेति।

अथैष ज्योतिरिति प्रथमान्ततया स्वतन्त्रात् ज्योतिरादिशब्दात् कर्मसमानाधिकरण्यं विनैव प्रथममर्थान्तरे तावदवगतिर्भवति व्यवहारार्थत्वाच्छब्दप्रयोगस्य। एकेनैव शब्देन व्यवहारसिद्धेरनेकशब्दत्वमन्याय्यमिति न्यायात्। तच्चार्थान्तरं न गार्हपत्यादि, प्रकृतत्वेपि तस्य यावत् प्रकरणाद्गार्हपत्यादिप्रतिसन्धानं तावत् श्रुतयागसामानाधिकरण्यात् याग एव प्रतीयते। अथैष इति पुंलिङ्गाच्च न ज्योतीरूपगार्हपत्यवचनता। अतो यागद्वयमध्यस्थतया यागपरतैव। तत्र यद्यपि पूर्वयागपरत्वाद्वा यागपरतया वा यागपरताऽवभाति। तत्रार्थान्तरावगत्यनुरोधात् यजिनामत्वेपि यज्यन्तरनामत्वमेव युक्तमित्यर्थः। ननु एतेनैव यजेतेति समानाधिकृतयजिपदस्य प्रकृतवाचित्वलोभान्न यागान्तरपरता युक्तेत्यत्राह—प्रथममिति। अथैष ज्योतिरित्यत्र क्रियापदस्याश्रुतेः अव्यतिरिक्तप्रथमान्तत्वाच्च अस्ति वर्तत इत्याद्यध्याहर्तव्यम्। तथा च न यागपारतन्त्र्यमिति स्वतन्त्रत्वान्नाम्नोऽर्थान्तरबुद्धौ किं तदर्थान्तरमिति जिज्ञासायां अरूपेऽपि यागे पश्चात् प्रतीयमाने यागान्तरबुद्धिरेव भवति। अर्थान्तरस्यैव जिज्ञासितत्वात्। अतः स्वातन्त्र्यात् प्रथममन्यत्र प्रवृत्तनामपरतन्त्रतैव यजेर्युक्ता साकंप्रस्थायीयादिसंज्ञावैषम्यं तदधिकरणे वक्ष्यत इत्यर्थः। ननु कर्मान्तरपक्षे विश्वजिन्न्यायात् स्वर्गकामोऽधिकारो कल्प्यः। ततश्च प्रकृते योऽधिकारी यदेव द्रव्यदेवतं यानि चाङ्गानि यानि च तदुपकारकाणि तान्येव सर्वाण्यत्राव्यक्तचोदनालिङ्गादतिदिश्यन्त इति न यागान्तरनिर्वाह इत्यत्राह—निर्वहति चेति।

यद्यपि द्रव्यदेवतमेव यागरूपतया यागान्तरनिर्वाहयोग्यं यद्यपि दक्षिणयोः प्रयोगाङ्गतया प्रयोगभेदनिर्वाहकतैव, तथापि प्रयोगभेदस्य प्रयोज्यभेदे स्फुटतया दक्षिणाभेदप्रतीतप्रयोज्यभेदो निर्वहत्येवेति भावः। अत इत्यधिकरणरणार्थनिगमनम्। अनेन चाध्यायसङ्गतिस्सूचिता। उत्पत्तिसंयोगादिति पूर्वसूत्रभाष्याक्षरयोजना भाष्यव्याख्यया च टीकयोः स्फुटमित्याह—शेषमिति। एतच्छब्दस्य वक्ष्यमाणयागपरत्वेपि अविरोधः सन्निधानाविशेषादिति भावः।

---

१, B नविशेषाभावादि।

## ॥ ६ ॥ गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

वाजिभ्य इत्यनेन सन्निहितामिक्षाख्यवाजयोगिनो विश्वेदेवा उच्यन्त इति तदन्वय एव वाजिनस्येत्येकदेवतान्वयादामिक्षावाजिनोभयहविष्कमेककर्म ।

ननु रुढिबलीयस्त्वात् हयावगतिर्युक्ता । मैवम् । बहुवचनान्तात् द्राग् अतिनिरूढबहुत्वसन्निहितविश्वेदेवप्रतीतेः योगस्यैवेह बलवत्ता । किंच रूढितया हयाद्यन्वये, किं भक्ष्यत्वेनान्वयः, उत हविष्ट्वेनेति

---

## ॥ ६ ॥ गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

चातुर्मास्ये प्रथमपर्वणि श्रुतम् तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्–इति । तत्र चिन्ता-किं वाजिभ्यो वाजिनमिति प्रकृते आमिक्षागुणके कर्मणि वाजिनरूपगुणविधिः उत कर्मान्तरविधिरिति । अत आरभ्य गुणतो भेदनिरूपणपेटिका । तत्रास्य गुणप्रमाणकानुबन्धभेदनिबन्धनशास्त्रभेदव्युत्पत्तेरध्याये पादे च सङ्गतिः । अवान्तरे तु युक्तं पूर्वत्र एतेनेति वक्ष्यमाणपरमपि । वाजिभ्य इति तु वैश्वदेवविषयमेवेत्युत्थानात् । प्रयोजनं तु पूर्वपक्षोक्तमेव । ननु वाजिभ्यो वाजिनमिति द्रव्यदेवतासम्बन्धान्तरश्रुतेः यागान्तरविधिरेव युक्त इति कथं पूर्वपक्ष इत्यत्राह—वाजिभ्य इति । स्यादेतदेवं यदि देवतान्तरसम्बन्धः स्यात् । इह तु एकदेवतान्वयादामिक्षावाजिनयोः तदुभयहविष्कमेकं कर्म । कथमेकदेवतान्वयः उच्यते । वाजिभ्य इति वाजमन्नं अदनीयं येषामिति यौगिकेनवाजिशब्देन सन्निहितपरेण सन्निहितामिक्षाख्यवाजयोगिनो विश्वेदेवा उच्यन्त इति वाजिनस्य तदन्वय एव प्रकृतविश्वदेवान्वय इत्यर्थः ।

ननु रूढिर्योगमपहरतीति न्यायात् रूढ्या बलवत्या अश्वानामेव देवतात्वेनावगतिर्युक्ता नतु वाजाख्यान्नरूपआमिक्षायोगिनां विश्वेषां देवानाम् । न च वाजिशब्दस्याश्वजातिवचनत्वे जातेरेकत्वात् कथं बहुवचनमिति वाच्यम् । तल्लक्षितव्यक्तीनामेकशेषकल्पनया बहुवचनोपपत्तेः । रूढिपूर्वकलक्षणायाश्च प्रोद्गातृवन्न्याय्यत्वादिति चोदयति – नन्विति । मैवमिति । विश्वेषां देवानामपेक्षाबुद्धिं विना नित्यबहुत्वं मरुतामिव गणत्वप्रसिद्धेः । अश्वेषु तु नैवमिति बहुवचनान्तात् सन्निहिता निरूढविश्वेदेवबुद्धिरेव झटितीति इह योगस्यैव बलवत्तेत्यर्थः ।

संशयेन चतुर्थीतो निर्णयः स्यादिति यौगिकत्वं युक्तम् ।

नतु वाजिशब्दार्थत्वेन देवतात्वान्नैकदेवतान्वयः । मैवम् । वाजयोगिता हि विश्वदेवशब्दार्थतयेति तच्छब्दाभिधेयतयैव प्रतीतिर्यौगिकादित्येकदेवतात्वम् ।

नन्वेकदेवतात्वेऽप्यैन्द्रदधिपयोन्यायेन निरपेक्षतयान्वयात् नैककर्मता मैवम् । तत्र हि तुल्यतयेन्द्रान्वयात् भेदः । इह त्वामिक्षान्वयोल्लेखात् प्रत्यभिज्ञा युक्ता ।

ननु वैश्वदेवीति श्रुत्या आमिक्षान्वयः अतिसन्निधेः स्त्रीत्वयोगाच्च;

---

ननु रूढार्थहानाय परं विभक्त्यर्थस्य बहुत्वेनैव व्यक्तिपरत्वेनैव कथञ्चिद्वर्णनं युक्तमित्याशङ्क्य युक्त्यन्तरमाह—किञ्चेति । हयाद्यन्वय इत्यादिशब्दः प्रमादलिखितः । रूढपक्षे हयान्वये वाक्यार्थसन्देहः स्यात् किं भक्ष्यत्वेन वाजिनान्वयो हविष्ट्वेन वेति । न च चतुर्थीतो निर्णयः तस्याः साधारणत्वात् । अतो निर्णयहेतोरेव शब्दार्थत्वात् रूढितोऽपि यौगिकत्वमेव युक्तमित्यर्थः । नन्वामिक्षायां विश्वेदेवशब्दोपस्थाप्यतया देवतात्वं, वाजिने तु वाजिशब्दार्थतयेति नैकदेवतान्वयः अर्थो वा शब्दोपहितः शब्दो वाऽर्थोपहितो देवतात्वेनामिक्षासम्बन्धार्हः । अतो यथा सौर्ये चरौ आदित्ये चार्थैक्येपि शब्दभेदाद्देवताभेदः तथाऽत्रापीति चोदयति—नन्विति ।

मैवमिति । युक्तस्सौर्यादित्यचर्वोर्देवताभेदः तच्छब्दाभिधेयतया प्रतीत्यभावात् । इह वाजिशब्दात् वाजयोगितयैव धीः तद्योगिता च विश्वेदेवशब्दाभिधेयतयैवेति यौगिकाद्वाजिशब्दात् विश्वेदेवपदाभिधेयतयैव विश्वेदेवप्रतीतिरिति एकदेवतात्वमेवेत्यर्थः । नन्वेवमपि ऐन्द्रदधिपयोन्यायेन निरपेक्षश्रुतेः वाक्यभेदाच्च कर्मभेद एव युक्त इति चोदयति—नन्विति । मैवमिति । युक्तो दधिपयसोः कर्मभेदः तुल्यवदेवेन्द्रान्वयात् । इह तु भिन्नवाक्यत्वेपि आमिक्षायागोल्लेखात् प्रकृतकर्मप्रत्यभिज्ञानात् कर्मैक्यमेव युक्तमित्यर्थः । ननु दधिमधुघृतमाप इति दध्यादीनां तत्संसृष्टं प्राजापत्यमिति मिलितानामेव प्रजापत्यन्वयाद्युक्तं मिलितानामेकहविष्ट्वं, इह तु वैश्वदेव्यामिक्षेति तद्धितश्रुत्या स्त्रीलिङ्गादतिसन्निधेश्च शीघ्रमामिक्षान्वयो विश्वदेवैः, वाजिनं तु वाक्यात् कल्पनापेक्षया चतुर्थ्या च विश्वेदेवान्वितत्वम् । वाक्यं च तद्वाजयोगापेक्षमित्येवमतिविलम्बान्वयान्न वाजिनं प्रथमावगतामिक्षान्वयावरुद्धे कर्मणि विधातुं योग्यमिति कर्मान्तरत्वमेवेति चोदयति—नन्विति ।

वाजिनन्तु वाक्यात् चतुर्थीतश्च वाजयोगापेक्षमतिविलम्बितमिति विलम्बितान्वयान्नामिक्षावरुद्धे कर्मणि गुणान्तरं युक्तम्। मैवम्, यौगिकस्य तदेकविषयत्वात् अनन्यगतितया तत्रैव निवेश इति पूर्वः पक्षः—

राद्धान्तस्तु न तावदन्योपसर्जनभूता विश्वेदेवा अन्यत्राऽन्वीयन्ते, अथ वाक्यान्तरेण वाजिभ्य इति निर्देशात् अनुपसर्जनता, तत्रापि विलम्बहेतवो वर्णिताः। अथानन्यगतितया तन्निवेशित्वं; तदयुक्तम्, यौगिकत्वेनैव

---

मैवमिति। यद्यप्यामिक्षामात्रस्य शीघ्रं विश्वेदेवसम्बन्धो ज्ञातः तथापि नामिक्षायागहविष्कयागकल्पना युक्ता वाजिनवाक्यविरोधात्। यौगिकस्य वाजिशब्दस्य आमिक्षायोगिविश्वेदेवैकविषयत्वात् श्रुतसकलवाक्यानुकूलैव कल्पना युक्ता। न तु श्रुतविरोधिनीति यौगिकवाजिशब्दस्यानन्यगतितया वाजिनस्य तत्रैवामिक्षायागे निवेश इत्युभयहविष्कमेकं कर्म वाक्यद्वयात् कल्प्यमित्यर्थः।

नन्वेवं सति विषमशिष्टविकल्पः स्यात्। तथावाजिनस्यापि दध्यानयनप्रयोजकत्वं स्यात्। ततः चातुर्थामिक्षाधिकरणविरोधः स्यादित्यत्राह—इति पूर्वः पक्ष इति। न तावदामिक्षाधिकरणविरोधः तस्यैतन्नयपूर्वकत्वात्। नापि विषमशिष्टविकल्पदोषः गत्यन्तराभावादिति भावः। राद्धान्तस्त्विति।

किं वैश्वदेवीपदमेव वाजिनस्य विश्वेदेवान्वयमापादयति किं वाक्यान्तरस्थं वाजिनपदं न तावदाद्य इत्याह—न तावदिति। सकृदुच्चरितवैश्वदेवीपदस्यामिक्षोपसर्जनतया विश्वेदेवान् प्रतिपाद्य पुनरन्योपसर्जनतया प्रतिपादनसामर्थ्याभावान्नोपसर्जनमन्वयीति नयात्। न चानुषङ्गाद्देवतान्वयः पदैकदेशस्यानुषङ्गानर्हत्वात्। वाजिपदवैयर्थ्यापत्तेश्च। अतो न वैश्वदेवीपदाद्वाजिनस्य विश्वेदेवसम्बन्ध इत्यर्थः। द्वितीयं कल्पमाह—अथेति। वाक्यान्तरेण वाजिनस्य विश्वेदेवसम्बन्धः। तत्र वाजिभ्य इति निर्देशान्नान्योपसर्जनतेत्यर्थः। दूषयति—तत्रापीति। वस्तुतस्तु वाक्यान्तरे वाजपदान्नानुपसर्जनविश्वेदेवान्वयः। वाजिपदाद्धि वाजिरूपद्रव्यान्तरसम्बन्धितयैव विश्वेदेवधीः न तु स्वरूपेण। तत्सम्बन्धित्वं च देवतात्वेनोपसर्जनतयेति पूर्वोक्तदोषापत्तिः। अभ्युपेत्यापि दूषणमुच्यते तत्रापि वाजिनिर्देशात्तदन्वये श्रुतिवाक्ययोः वाच्यैक्येपि देवताभेदः, विलिङ्गत्वमित्यादयो विलम्बहेतवो वर्णिता इत्यर्थः। ननु योगिकशब्दस्यानन्यगतितया तन्निवेशित्वमुक्तमिति पूर्वोक्तं स्मारयति - अथेति। तदयुक्तमिति। वाजिशब्दस्य यौगिकत्वेन वाजिनान्वयाभिधानेपि विश्वेदेवशब्दाभिधेयपरत्वं मास्तु। केवलमधिष्ठानैक्यमेवास्तु देवतात्वं तु वाजिशब्दार्थत्वेनैवास्त्वित्यर्थः। ननु यौगिकत्वे वाजिशब्दस्य वाजिभ्यः केभ्य इति विशेष्यानुपादानान्न

वाजिनान्वय उच्यतां, किं विश्वेदेवपदाभिधेयपरत्वाश्रयणेनेति, विश्वदेववद्वाजिनोऽपि युक्ताः। न च योगहानिरिति गुणान्तरात् सजातीयाद्विलम्बितार्पितात् कर्मभेदात् शास्त्रभेदः। शेषं सुगमम्।

## ॥ १० ॥ अधिकरणान्तरं वा ॥ २४ ॥

अगुणकर्मसन्निधौ गुणवच्छ्रुतिर्गुणार्थेत्युक्तेऽपि गुणवच्छ्रुतिभेदे तत्तद्गुणकर्मभेदो युक्तः सजातीयगुणान्तरावरुद्धे गुणान्तरानुप्रवेशात्। तथा निर्गुणस्य सगुणा न पुनः श्रुतिर्युक्तेति पूर्वः पक्षः। तुल्यप्रमाणार्पित-

---

देवतात्वेनान्वय इत्यत्राह - विश्वेदेववदिति। शब्देन हि देवतोपकरोति इति शब्दमात्रेण देवतात्व्या.रात् एकस्मै स्वाहेतिवत् विशेष्यानुपादानेपि विश्वेदेववद्वाजिनोऽपि देवता युक्तेत्यर्थः।

यौगिकप्रतीतेरपि न विरोध इत्याह—न चेति। वाजयोगभागिना केनचिदर्थेनोपहितस्य वाजिशब्दस्य देवतात्वान्न योगहानिरित्यर्थः। नन्वेवं दध्नाजुहोति पयसा जुहोतीत्यत्रापि गुणभेदात् कर्मभेद इत्याशङ्क्य अनुबन्धभेदकं गुणं विशिनष्टि—इति गुणान्तरादिति। न तु गुणभेदमात्रमनुबन्धभेदकं द्रव्यदेवतयोर्गुणयोर्भेदे भेदापत्तेः। नापि सजातीयगुणमात्रभेदात्। दधिपयसोरपि होमभेदकत्वापत्तेः। किन्तु एकेन प्रकारेण गुणान्तरात्सजातीयाद्विलम्बितार्पितादनुबन्धभूतकर्मभेदे शास्त्रभेद इत्यर्थः। पूर्वपक्षभाष्यस्थलक्षणोक्तिनिर्वाहो भाष्यव्याख्या च टीकयोः स्फुटेत्याह—शेषमिति। अधिकरणान्तरं वा।

## ॥ १० ॥ अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥

दर्शपूर्णमासयोः श्रुतम्—व्रीहिभिर्यजेत यवैर्यजेतेति। तथा अग्निहोत्रे श्रुतम्—दध्ना जुहोति पयसा जुहोतीति। तत्र चिन्ता—किं कर्मान्तरचोदना एताः उत प्रकृते कर्मणि गुणविधिरिति। उक्तापवादात् सङ्गतिः। प्रयोजनं तु पूर्वपक्षे तत्तद्गुणकर्मणां भेदेनानुष्ठानम्। सिद्धान्ते तु एकमेव कर्म दध्यादिभिर्विकल्प्यानुष्ठेयमिति।

ननु आघाराग्निहोत्राधिकरणे निर्गुणकर्मसन्निधौ गुणश्रुतेर्गुणविधानार्थतेत्युक्तम्। तत्कथमत्र गुणविशिष्टकर्मान्तरविधिना पूर्वपक्ष इत्यत्राह—अगुणकर्मेति। सत्यमुक्तं सगुणश्रुत्योर्भेदे तत्तद्गुणकर्मान्तरविधिरेव युक्तः। यत्र तु सगुणश्रुतेर्भेदो नास्ति तत्र तदधिकरणन्यायेन गुणमात्रविधिरस्त्वित्यर्थः। तत्र हेतुः—सजातीयेति। उपसर्जनस्येव प्रधानस्यापि सहप्रक्रमेण पाठादनपेक्षगुणद्वयसम्बन्धस्य बोद्धुम-

नानागुणता निर्गुणावगतस्य नावरोधनिरुद्धा । निर्गुणस्य च सगुणश्रुतावपि स्वरूपतः प्रत्यभिज्ञा युक्ता । गुणांशतस्त्वप्रत्यभिज्ञातस्तत्र विधेय इति राद्धान्तः । तदुक्तम्—

अन्योन्यानवरुद्धे तु गुणो यत्र विधीयते ।
तस्मिन्गुणविधिश्शक्य इति कर्म न भिद्यते ॥

## ॥११॥ फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मसंयोगात् ॥२५॥

होमादेव फलं न गुणात् । फलं प्रति करणीभूतो हि फलपर्यन्ताधिकारापूर्वविषय इति ततः फलम् । विषयता च कर्मण एव युक्ता । यत्रापि

---

शक्यत्वात् एकस्य च कर्मणः एकेनैव द्रव्येण निराकाङ्क्षत्वादित्यर्थः । विवरणमतमाह—तथा निर्गुणस्येति । दध्यादिवाक्ये कर्मान्तरविधौ कथमग्निहोत्रवाक्ये होमनिर्वाह इत्यत्राह—इति पूर्वपक्ष इति । न गुणवाक्ये गुणवत्कर्मविधौ तात्पर्येऽवधृते निर्गुणवाक्यं यथा तथा वा भवतु किं तेनेति पूर्वपक्षिणो गर्वः । वस्तुतस्तु अव्यक्तन्यायात् तन्निर्वाहोऽपि शक्य इति भावः । राद्धान्तमाह—तुल्यप्रमाणेति । यत्रापि गुणान्तरावरोधान्न गुणान्तरानुप्रवेशः तत्र गुणात् कर्मभेदः । इह तुल्यप्रमाणार्पितनानागुणान्निर्गुणोत्पन्नस्य कर्मणः नावरोधः विरुध्यत इति न कर्मान्तरतेत्यर्थः । अथ निर्गुणोत्पन्नस्य कर्मणः सगुणवाक्येऽनुवादो न शक्यत इति यदुक्तं विवरणे तदप्ययुक्तमित्याह—निर्गुणस्येति ।सगुणवाक्ये तु निर्गुणस्य स्वरूपेणैव प्रत्यभिज्ञा युक्तैवेति विभक्ताकारेण त्वप्रत्यभिज्ञानात्तद्विधिर्युक्त इत्यर्थः । नन्वेवं सति गुणानां विकल्पः स्यादित्यत्राह—इति राद्धान्त इति । प्रमाणायातविकल्पोऽपि युक्त इति भावः । अनवरुद्धविषये न गुणात्कर्मभेद इत्यत्र परोक्तं साक्षित्वेनाह - तदुक्तमिति ।

## ॥११॥ फलश्रुतेस्तु कर्मस्यात् फलस्य कर्मयोगित्वात् ॥२५॥

अग्निहोत्रं प्रकृत्यैतदाम्नातं-दध्नेन्द्रियकामस्य जुहुयादिति । तत्र चिन्ता-किं प्रकृताद्धोमात् होमान्तरविधिः किं वा प्रकृतहोमाश्रितो गुणः फले विधीयत इति । ननु विधानप्रभेदचिन्तायाः कथमध्यायसङ्गतिः कथं वा पूर्वपक्षः । प्रकृतकर्मप्रत्यभिज्ञानात् तदाश्रितगुणविधेरेव युक्तत्वादित्यत्राह—होमादेवेति । दध्नेन्द्रियकामस्य जुहुयादिति होमादेव फलं भवितुमर्हति न गुणात्, तत्र हेतुः फलं प्रतीति । हि यस्मात् फलपर्यन्ताधिकारापूर्वविषयतापि होमस्यैव । तस्मात् तत एव फलम् । फलकरणीभूतस्यैवापूर्वविषयत्वात् । अतो यस्यैव विषयताऽर्हता तस्यैव फलकरणत्वमिति ततो होमादेव फलमित्यर्थः । नन्वपूर्वविषयतापि गुणस्यैव भवित्-

गुणविधिः तत्रापि गुणविभक्तस्य कर्मण एव विधिविषयतोक्तेति विधीयमानं प्रकृताद्धोमात् होमान्तरम् । तच्च दधिविशिष्टं विधीयते ।

ननु विशिष्टविधौ गौरवम् मत्वर्थलक्षणा, प्रत्यभिज्ञा बाधश्च स्यात् । तद्वरं प्रकृतमेव कर्म गुणविभक्तरूपं फले विधीयताम् । मैवम् । गुणविभक्तता अप्राप्ता फलसंबन्धोऽपीति वाक्यभेदः स्यात् । स माभूदिति गौरवादिः स्वीकृतः । ननु लोकसिद्धक्रियाकारकादिरूपेण दध्यन्वितो होमः फले विधीयताम् । मैवम् । दधि न विहितमिति फलार्थी नियमेन

---

त्यत्राह—विषयता चेति । भावार्थनयादिति शेषः । नन्वेवं दध्ना जुहोतीत्यादौ कथं गुणस्य विधिरित्यत्राह—यत्रापीति । अन्यत्र गुणविधावपि गुणविभक्तस्यैव कर्मणो विधेयत्वं, फलतो गुणविधिव्यवहारः । नन्वेवं प्रकृतहोमः फले विधीयतामिति शङ्कामात्रमपनुदति—विधीयमानमिति । होमस्य विधेयत्वे प्रकृतहोमाद्धोमान्तरमेव विधेयम् अन्यथा गुणश्रुतिवैयर्थ्यापत्तेः । ननु कर्मान्तरविधौ वा कथं गुणश्रुतेः सार्थकतेत्यत्राह—तच्चेति । विधीयमानहोमविशेषणतया गुणश्रुतेः सार्थकतेत्यर्थः । ननु गौरवादिदोषपरिहारार्थं प्रकृतस्यैव कर्मणो गुणानुरक्ततया विधिरस्त्विति चोदयति—नन्विति ।

मैवमिति । गुणानुरक्तस्य प्रकृतस्य कर्मणः फले विधाने गुणानुरागोऽप्यप्राप्तो विधातव्यो भवति । ततश्च विधेयभेदे वाक्यभेदः स्यादित्यर्थः । ननु गौरवादिदोषपरिहारार्थं प्रकृतस्यैव कर्मणो गुणानुरक्ततया विधिरस्त्विति चोदयति—नन्विति मैवमिति । गुणानुरक्तस्य प्रकृतस्य कर्मणः फले विधाने गुणानुरागोऽप्यप्राप्तोविधातव्यो भवति । ततश्च विधेयभेदे वाक्यभेदः स्यादित्यर्थः । ननु गौरवादिदोषत्रयस्वीकारात् वाक्यभेदस्यैकस्याङ्गीकारो युक्त इति तत्राह—स माभूदिति । वाक्यभेदमहादोषात् गौरवादित्रयस्वीकारोऽपि वरम् । गौरवं हि श्रुतवैशिष्ट्यसिद्ध्यर्थत्वान्न दोषः । लक्षणापि वाक्यभेदाद्वरमिति प्रकरणान्तरनयसिद्धम् । अवच्छेदकान्तरश्रुतौ न प्रकृतप्रत्यभिज्ञा । एकवाक्यताधीस्तु स्वत एव भवतीति भावः । ननु गोदोहनप्रणयनवत् लोकसिद्धक्रियाकारकत्वरूपेण दधिहोमसम्बन्धमाश्रित्य फलसम्बन्धमात्रविधिरस्त्विति राद्धान्ताशयेन चोदयति—नन्विति । मैवमिति । तथासति कर्मणि गुणस्य विधानाभावात् तादर्थ्याभावे फलार्थी दधि नियमेन नोपाददीत । अङ्गे हि व्यापन्ने वैगुण्यं नानङ्गे । ततश्च दधिश्रुतेरानर्थक्यं स्यात् । अत्रोपाददीतेति सम्यक् 'आङो दोनास्य विहरणे (पा. सू) इति आत्मनेपदस्मृतेः गोदोहनादेरप्यत्र उदाहरणत्वमपीति भावः ।

---

१. A त्वमात्रेण ।

न दध्युपादद्यादिति दधिश्रुतिरनर्थिका स्यात् । न च [1]क्रत्वर्थदधिविधिमादाय फलान्वयमात्रार्थता वाच्या । फलार्थत्वे हि दधिविधेः क्रत्वर्थताबाधः स्यात् ।

किञ्च गुणफलविधौ प्रकृत[2]क्रतुप्रयुक्त्युपजीविता । तत्प्रयुक्तिश्च क्रत्वर्थगुणगतेति कथं फलार्था गुणप्रयुक्तिः । अतो गुणात् प्रकरणान्तराद्वा कर्मभेदात् सहकर्मप्रयुक्त्या स्फुटः शास्त्रभेदश्चेति सङ्गतिः पूर्वपक्षश्च कृतः । न च मत्वर्थलक्षणा[3]पत्तिपरिहारार्थं दध्नेति श्रुतेर्नामधेयत्वं युक्तम् । प्रवृत्तिनिमित्ताभावात् । न च लोकतः पक्षप्राप्तदध्यन्वयात् नामता ।

---

ननु दध्ना जुहोतीति विधिना प्राप्तं दधिहोमसम्बन्धमाश्रित्य फलसम्बन्धविधिरस्तु न वाक्यभेद इति शङ्का न वाच्येत्याह—न चेति । तत्र हेतुः - फलार्थत्वे हीति । वाक्यभेदाभावेऽपि दधिविधेः प्रकरणात क्रत्वर्थत्वप्रतीतौ फलसम्बन्धविधौ तस्य बाधापत्तेः । न च एकस्यतूभयत्व इति नयादुभयार्थता । गुणफलाधिकारस्य प्रकृताधिकारापेक्षित्वेन तुल्यवदुपस्थापितत्वाभावादित्यर्थः । गुणफलविधौ दोषान्तरमाह—किञ्चेति । गुणफलविधिर्हि प्रकृताधिकारविधिप्रयुक्तिमुपजीवति न स्वतः प्रयुङ्क्ते । ततः किमिति तत्राह—तत्प्रयुक्तिश्चेति । प्रकृताधिकारविधिप्रयुक्तिश्च क्रत्वर्थचमसादिगुणनिष्ठेति फलार्थस्य गोदोहनादिगुणस्य कथं प्रयुक्तिः गुणफलविधेरप्रयोजकत्वादित्यर्थः । अत इति निगमनम् । गुणात् प्रकरणान्तराद्वाऽनुबन्धभूतकर्मभेदात् शास्त्रभेदः पूर्वपक्षे । राद्धान्ते तदपवादात् सङ्गतिः । ननु सिद्धान्तेऽपि अधिकारसाध्यभेदाच्छास्त्रभेदोऽस्त्वेवेति कथमेवं सङ्गतिरित्यत्राह—सहकर्मेति । सत्यं पक्षद्वयेऽपि शास्त्रभेदः स तु पूर्वपक्षे कर्मणा सह गुणस्य प्रयुक्तेः स्फुटतरः । सिद्धान्ते तु कर्मप्रयुक्तत्वाभावादस्फुट इति तदपवादकतया चाध्यायसङ्गतिः । अवान्तरसङ्गतिस्तु पूर्वत्र गुणमात्रविधिः प्रकृते कर्मणि युक्तः गुणमात्रश्रुतेः । इह गुणफलोभयश्रुतौ गुणफलोभयसम्बन्धे विधीयमाने वाक्यभेद इति कर्मान्तरविधिरेव युक्त इति पूर्वपक्षोत्थानादिति भावः । ननु कर्मान्तरविधिपक्षेऽपि दधिपदस्य नामतयाऽन्वयोऽस्तु । मास्तु मत्वर्थलक्षणादिकरो विशिष्टविधिरित्यत्राह— न चेति । तत्र हेतुः प्रवृत्तेति ।

ननु लोकतः क्रियाक्षेपात् पक्षप्राप्तदध्यन्वयात् प्रवृत्तिनिमित्तसम्भवान्नामतास्त्वित्यत्राह—न च लोकत इति । तत्र हेतुः—विशेषतोहीति । यस्मात्तत्र विधीय-

---

१. R दधिक्रत्वर्थत्व २. R प्रकृतप्रयुक्त्युप ३. R लक्षणापरि

विशेषतो हि तत्र दधिप्राप्तौ तन्नामता स्यादिति न नामता। गुणफलसंबन्धपक्षेऽपि न नामता। प्रवृत्तिनिमित्तसंभवेपि मत्वर्थलक्षणाया अप्रसक्तेः अनेकनामतानुपपत्तेश्च प्रकृतकर्मणो न नाम। अत्र भाष्ये होम एव फलवान् कर्मत्वात् कृषिवदिति सामान्यतो दृष्टमुक्तम् तत्पूर्वपक्षाभास इति दर्शयितुम्। यद्धि फलं प्रति करणीभूतस्य नियोगविषयताधीनं फलवत्त्वं न तदनुमानस्य विषयः किन्तु अभिधानविनियोगसा[1]मग्रीकमेव।

नन्वभिधानविनियोगयोर्लोकव्युत्पत्त्यायत्तत्वात्प्रमाणान्तरविषयताऽ-

---

माने कर्मणि विशेषतो दधिप्राप्तौ दध्न एव होमे विधितः प्राप्तौ विशेषणतया तन्नामता स्यात्। अन्यथा लौकिकेन रूपेण सर्वद्रव्याणामपि प्राप्तौ सर्वनामकतया न नाम्नो विशेषकता स्यादिति न नामतेत्यर्थः। ननु यदि विधितः प्राप्त्याभावान्न प्रवृत्तिनिमित्ताभावेन विधीयमानकर्मनामता तर्हि गुणफलसम्बन्धे नामताऽस्तु। प्रकृते कर्मणि दध्नो विहितत्वेन प्रवृत्तिनिमित्तत्वसम्भवात्। न च नित्यवच्छ्रुतस्य नाम्नः पाक्षिकदध्यन्वयो न प्रवृत्तिनिमित्तं, नित्यवच्छ्रुताग्निहोत्रनाम्नः कादाचित्कसायङ्कालाग्न्यन्वयस्य प्रवृत्तिनिमितत्वदर्शनात्। न च नामत्वे लक्षणेति वाच्यम्। तस्याः श्रुतितुल्यतया मत्वर्थलक्षणातोऽभ्यर्हितत्वात्। प्रकृतनामत्वे च तन्नामकस्य फलोपबन्धात् अर्थादगुणफलसम्बन्धोऽपि दाक्षायणयज्ञादिवत् सिद्धयतीति न प्रकृतप्रतीतिबाधो युक्त इति इयमपि पार्श्वस्थाशङ्का तत्राह गुणफलेति। तत्र हेतुः प्रवृत्तीति। मत्वर्थलक्षणाप्रसङ्गस्यापि नामत्वे युक्तित्वात् तदभावान्न नामतेत्यर्थः।

किञ्च प्रकृते कर्मणि नामान्तरस्य श्रुतत्वात् अन्यायोऽनेकशब्दत्वमिति नयादनेकत्वानुपपत्तेः न प्रकृतकर्मणो नामधेयं दधिपदं दाक्षायणयज्ञादौ यथानेकत्वं तथोत्तरपादे वक्ष्यत इत्यर्थः। अत्राधिकरणे भाष्यकारेण तत्कर्मेत्यादिना होम एव फलवान् कर्मत्वात् कृषिवदिति होमस्यैव फलवत्त्वे सामान्यतो दृष्टं प्रमाणतयोपन्यस्तम्। तदनुपपन्नम्। पूर्वपक्षिणापि अनुबन्धभेदाच्छास्त्रभेदो वाच्यः स व शब्दान्तरादिसमधिगम्य एव। किं तत्रानुमानेनेत्याशङ्क्याह—अत्र भाष्य इति। पूर्वपक्षाभासतया तदुक्तिः न सम्यक् पूर्वपक्षतयेत्यर्थः। तत्र हेतुः यद्धीति। होमादेः फलं प्रति करणीभूतस्य नियोगविषयत्वपूर्वकविनियोगापेक्षाधीनं यत् फलवत्त्वं तस्याभिधानविनियोगसामग्रीकत्वेनानुमानगोचरत्वाभावादित्यर्थः। ननु अभिधानविनियोगयोः लोकव्युत्पत्तिपूर्वकत्वात् तस्याश्च मानान्तराधीनत्वात् तत्पूर्वकं होमादेः फलवत्त्वमपि मानान्तरगोचर एवेति चोदयति—नन्विति।

---

१. सामग्र्या एव।

स्त्येव । मैवम् । लोकव्युत्पत्त्यपेक्षत्वेऽपि तयोर्वेदवाक्यतो नियोगार्थ[1]त्वावगमात् नियोगाधीनत्वाच्च फलवत्त्वावगतेः नानुमानविषयतेति दर्शयितुं सामान्यतो दृष्टानुमानमुक्तम् । शब्दबलेन तु पूर्वपक्षिमतम् । अतोऽस्यानुमानस्य सम्यक् दूषणे सत्यप्यनास्थया विकल्पसमाद्या जातयोऽप्युक्ताः । ताश्च प्रपञ्चिता ऋजुविमलायाम् ।

तथा सादृश्यस्यागमकत्वादेव दूषणे स्थि[2]ते प्रौढवादतया नास्तितताप्युक्ता । तथा व्रीहिफलतापत्तिं अदृढामादाय गुणकर्मतया विध्यविषयतया न फलं स्यादिति विरुद्धतोक्ता अनास्थयैव । सप्रतिसाधनता अनैकान्तिकता च सुव्यक्ता नोक्तेत्यनुसन्धेयम् ।

---

मैवमिति । तयोरभिधानविनियोगयोः कार्यपरत्वात् लौकिकव्युत्पत्त्यपेक्षायामपि कार्यविशेषस्थायिनियोगार्थत्वं वेदवाक्यादेव स्वर्गकामादिनियोज्यसमभिव्याहारोपोद्बलितादिति न नियोगाधीनफलवत्त्वस्य मानान्तराधीनतेत्यर्थः । निगमयति—इति दर्शयितुमिति । न पूर्वपक्षतयेति शेषः । कथं तर्हि अभिधानविनियोगबलात् पूर्वपक्षकरणमित्यत्राह –शब्देनत्विति । नन्वनुमानागोचरत्वे सम्यग्दूषणे सत्यपि किमिति विकल्पसम–उत्कर्षसम–अपकर्षसमा जातय उक्ता इत्यत्राह—अत इति । ननु तत्प्रपञ्चो भवता किमिति न क्रियत इत्यत्राह—ताश्चेति । आभासत्वादेव साहचर्यमात्रस्यागमकत्वलक्षणदूषणे सत्यप्यसिद्ध्यादिदूषणं किमित्युक्तमित्यत्राह—तथा सादृश्यस्येति । तथोत्कर्षसमजात्या होमाद्धि व्रीहिफलप्राप्तिमदृढामङ्गीकृत्य गुणकर्मत्वापत्त्या नियोगविषयत्वात् फलवत्त्वमेव होमस्य न स्यादिति इष्टविघातकत्वविरुद्धमपि भाष्ये उक्तं तदनास्थयेत्याह—तथा व्रीहीति । सप्रतिसाधनता अनैकान्तिकता च भाष्ये अनास्थयोक्तेत्याह—सप्रतिसाधनतेति । सा च त्वया किमिति नोक्तेत्यत्राह—सुव्यक्तेति । तत्स्वरूपं तु द्रव्यगुणावपि फलवन्तौ द्रव्यत्वात् गुणत्वात् अवयववत् तत्संयोगवच्चेत्यनुमानद्वयम् । ननु अनुमानदूषणान्यसिद्ध्यादीनि विनैव यद्यनुमानाविषयत्वं तर्हि वन्ह्यनुमानस्य प्रसिद्धस्यापि निर्विषयतापातः । सन्ति चेद् दूषणानि तर्हि तान्यपि वक्तव्यानि किमविषयत्वेनेत्यत्राह—इत्यनुसन्धेयमिति । अयं भावः–क्रियात्वहेतोः फलविशेषानुमानं फलसामान्यानुमानं वा? नाद्यः अप्राप्तेः । न द्वितीयः । फलविशेषकामिनामनुपयोगात् । न च पक्षधर्मताबलाद्विशेषलाभः होमविशेषस्य फलविशेषाजनकत्वेऽनुपपत्त्यभावात् फलविशेषश्रवणमनुपपन्नमिति चेत् सिद्धं तर्हि शब्दैकसमधिगम्यत्वं नानुमानगोचरत्वमिति ।

---

१. R त्वानवगमात् २. B सिद्धे

राद्धान्तस्तु विधिगौरवमत्वर्थलक्षणाप्रत्यभिज्ञाहानिदोषाभ्युपगमोऽनन्यगतिकतया स्यात् । इह चास्ति गतिः । लोकसिद्धरूपेण दधिविभक्तो होमः फलवद्विधिविषयो युक्तः । ननूक्तं न चेद्दधिपरत्वं न नियमेन दध्युपादानमिति; मैवम्, दधिविभक्तरूपस्यैव फलविधिविषयत्वात् तद्रूपसिद्धये दध्युपादाननियमसिद्धिः ।

ननु क्रतुप्रयुक्तगुणबाधोदोषोऽस्मिन् पक्षे । मैवम् । अस्मिन् विधौ हि क्रतुप्रयुक्तिः कर्मण्येवापेक्षिता । गुणफलविधेरेव हि स्वगुणप्रयुक्तिर्युक्ता क्रतुगुणबाधोऽप्यर्थाद्युक्त एव ।

ननु गुणफलाधिकारनियोगे करणस्येतिकर्तव्यता उपदेशतो नित्या-

---

राद्धान्तस्त्विति । प्रकृतप्रत्यभिज्ञानात् तदाश्रितगुणस्यैव फले विधिर्युक्तः न पुनर्विशिष्टकर्मान्तरविधिः गौरवादिदोषापत्तेरित्यर्थः । ननु गुणफलविधौ वाक्यभेदापत्तेः गत्यन्तराभावात् गौरवादिस्वीकारोऽपि युक्त एवेत्युक्तमित्यत्राह—विधिगौरवेति । कथमवाक्यभेदेन गतिरित्यत्राह—लोकसिद्धेति । गुणविभागांशस्य क्रियाकारकभावेन लोकप्राप्तत्वात् तमादाय गुणविभक्तकर्मणः फलविधिविषयतया विधेर्न वाक्यभेद इत्यर्थः ।

नन्वेवं गुणविभागाविधाने कर्मणि गुणविध्यभावात् न नियमेन गुणोपादानमिति पूर्वोक्तं स्मारयति—नन्विति । मैवमिति । गुणविभक्तरूपस्यैव फलविधिविषयत्वात् गुणं विना तद्रूपासिद्धेः गुणस्य नियमेनोपादानसिद्धिरित्यर्थः । नन्वेवं क्रतुप्रयुक्तचमसादिबाधोऽस्मिन् मते स्यादिति चोदयति—नन्विति । मैवमिति । अस्मिन् गुणफलविधौ सति यस्मात् क्रतुविधेः कर्मण्येव प्रयुक्तिरपेक्षिता न स्वगुणेपीति क्रतुप्रयुक्तगुणबाध इत्यर्थः । ननु तर्हि स्वगुणे प्रयुक्तिरनपेक्षितेत्यत्राह—गुणफलेति । गुणफलाधिकारतया गुणफलविधेः शीघ्रभावित्वात् तत एव स्वगुणप्रयुक्तिर्युक्ता न क्रतुविधितो विलम्बितादित्यर्थः । नन्वेवमप्येकहोमविषयतया अर्थाद्बाधो दुर्वार इत्यत्राह—क्रतुगुणेति । शीघ्रभाविकाम्यनियोगप्रयुक्तगुणेन कार्यसिद्धौ प्रासङ्गिक्यां कृतकार्यः क्रतुविधिः स्वगुणबाधमप्यनुमन्यत एवेति अर्थात् क्रतुगुणबाधोऽपि युक्त एवेत्यर्थः ।

नन्वेवं गुणफलाधिकारनियोगः साध्यः; साध्यस्य किं केन कथमित्याकाङ्क्षात्रयमस्ति । अत्राधिकारपदेन विभक्तभावार्थपदेन च किं केनेत्याकाङ्क्षापरिपूरणात कथमाकाङ्क्षाहि स्वकरणार्थमितिकर्तव्यताकाङ्क्षा । सा चेतिकर्तव्यताऽत्र नसम्भवति तस्योपदेशादतिदेशाद्वाऽलाभतः । तस्य नोपदेशत इति कर्तव्यता नित्यानित्यसंयोगविरोधात् नित्यार्थत्वे नित्यमनुष्ठानं अनित्यार्थत्वे चानित्यम् न चैक उपदेशो

नित्यसंयोगविरोधान्नास्ति। अतिदेशोऽपि प्रकृताधिकारनियोगप्रयुक्तेति-कर्तव्यताया न सम्भवति। मैवम्। अन्यप्रयुक्तेत्यन्यार्थताऽभिमता। अन्यार्थतापि च कार्यतः प्राप्यत एव। प्रसङ्गाच्चोपकारसिद्धिरिति प्रपञ्चितं निबन्धने।

विवरणे तु एक एव नियोगः फलभूयस्त्वन्तु विशेष इति नियोगा-भेदान्नेतिकर्तव्यतापेक्षा, क्रियाविषयो हि नियोगविधिरिति इति वस्तुबलवादी। होमांशस्यैव गुणरूपितत्वेऽपि हंसक्षीरोदकन्यायेन विषय-त्वेन प्रत्यभिज्ञानात् एको नियोग इत्याह।

---

युगपदुभयं चोदयितुं समर्थ इति संस्थाधिकरणे वक्ष्यते। नाप्यतिदेशतः प्रकृता-धिकारनियोगप्रयुक्तेतिकर्तव्यतायाः तदयोगात्। गुणफलविधेर्हि प्रकृतप्रयुक्त्याश्रय-तया विकृत्यन्तरवत् पृथक् प्रयोगो नास्ति। तत्सद्भावे चातिदेश इति चोदयति — नन्विति। मैवमिति। अन्याक्षिप्तानुष्ठानमपि अङ्गमन्योपकारजनकं पशुपुरोडाशादौ दृष्टमिति चोदयितुरन्यप्रयुक्तोक्तेः अन्यार्थतैवाभिप्रेता नाक्षिप्तानुष्ठानता। ननु भवत्वेवं तथापि कथमन्यार्थाया अन्यार्थतयाऽतिदेशः विनियुक्तविरोधादित्यत्राह अन्यार्थतापि चेति। विनियुक्तविरोधो हि धीविरोधः। स च मुखान्तरात् प्राप्तौ नास्त्येव। इह च प्रकृतावुपदेशतो व्यवस्थितस्य धर्मजातस्य करणोपकारमुखान्तर-प्राप्तिरविरुद्धेति विध्यन्तराधिकरण एवोक्तमित्यर्थः।

नन्वेवमतिदेशे पृथक् प्रयोगापत्तिरित्यत्राह—प्रसङ्गाच्चेति। नित्यार्थानुष्ठि-तैरङ्गैः प्रसङ्गात् गुणफलाधिकारविध्युपकारसिद्धेः पशुपुरोडाशवन्न पृथगनुष्ठानं तत्र गुणांशे प्रकृतापूर्वं प्रसङ्गि इतरांशे गुणफलापूर्वमिति भावः। ननु चोदना-लिङ्गाद्यभावे कथमतिदेश इत्यत्राह—इति प्रपञ्चितमिति। निर्वपतिवत् जुहोतिः चोदनालिङ्गम्। न च दर्विहोमनयविरोधः, जुहोतेरत्राविधेयार्थत्वात्। यद्वा स्वतः सन्निधौ न सन्निधानसिद्ध्यर्थं चोदनालिङ्गाद्यपेक्षा अकिञ्चित्करत्वादिति प्रपञ्चितं निबन्धनटीकायामित्यर्थः।

विवरणे त्विति। तन्मते हि वस्तुबलादभेदान्न नियोगभेदः। अतो नियोगान्तर-स्यासाध्यत्वात् व स्वकरणार्थमितिकर्तव्यतापेक्षेति न तत्प्राप्तौ यत्न उक्त इत्यर्थः। ननु कथं नियोगैक्यमित्यत्राह—नियोगेति। क्रियाया एव कृतिव्याप्यत्वं वास्तवमिति सैव नियोगविषय इति वस्तुबलमतं युक्तम्। ननु प्रकृतौ नियोगोऽननु-रक्तभावविषयकः इह तु अनुरक्तभावविषयतया अवगतेरप्रत्यभिज्ञानान्नियोगान्तर-विषयतैव युक्तेत्यत्राह—होमांशस्यैवेति। यद्यपि गुणरूपे तत्त्वेनैव शब्दात्प्रतीतिः तथापि हंसक्षीरोदकन्यायेन विवक्षितविवेकात् होमांशस्यैव प्रकृतस्य विषयत्व-

शब्दबलवादी तु गुणविभक्ताकारतया क्रिया विषयत्वेन प्रतीयत इति पूर्वाकारादाकारान्तरेण विषयत्वान्न प्रत्यभिज्ञेत्यनुसन्धत्ते । शेषं सुगमम् ।

## ॥ १२ ॥ समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

रेवत्याधारवारवन्तीयसामसाधनकाग्निष्टोमस्तोत्रानुबन्धात् प्रकृतयागाश्रितात् फलं युक्तं; नो चेत् प्रकृतप्रतीतिहानं स्यात् । विशेषण-

---

प्रत्यभिज्ञया नियोगैक्यमेव । न चैवं नित्यकाम्यविषयेपि एकनियोगापत्तिः; परस्परनिरपेक्षत्वेन अन्यविषयप्रत्यभिज्ञानाभावात् । इह तु अन्यप्रयुक्ताश्रयतयाऽन्यविषयप्रत्यभिज्ञासापेक्षत्वादिति भेद इति भावः । नन्वेवं निबन्धनकारोऽपि कथंनियोगभेदमनुसंहितवान् इत्यत्राह—शब्दबलवादीत्विति । शब्दबलवादी हि शब्दोपस्थापिततयैव विषयत्वं मन्वानः क्रियाया गुणविभक्तत्वाकारेणैव शब्दैःविषयत्वेनोपस्थितेरविभक्तात् पूर्वाकारात् विभक्तेनाकारान्तरेण न विषयप्रत्यभिज्ञेति नियोगान्तरमनुसन्धत्ते । न चैवं मध्ये स्वगुणप्रयुक्तिपर्यन्तफलान्तरकामनोत्पादे स्वर्गकामनाहानेः नाधिकृतकर्तृकं प्रणयनादीति वाच्यम् । मध्ये फलान्तरकामनोत्पादेपि हि बुध्यन्तरोत्पादनवत् न स्वर्गकामनाहानिः कामनानां पौर्वापर्ये स्वर्गकामनाया वर्तमानत्वात् विश्रम्य विश्रम्यगच्छतीतिवत् कृतिसम्बन्धदशायां कामनायाः सर्वमतेपि सत्त्वात् । स्वर्गकामत्वावस्थायामिव कृतिवत् कामनान्तरमुत्पन्नम् । गुणफलाधिकारे तु हेतुर्भवत्येव । अपूर्वकामनानां पौर्वापर्यानुवृत्तिस्तु पश्चादपि सजातीयकामनान्तरदर्शनात् । विवरणमते तु अनवयवे फलवत्त्वं गुणफलस्य । किन्तु तदन्वाचयत्वं च प्रकृतोपजीवित्वादिति न सङ्कटं किञ्चिदिति भावः । भाष्यान्तरव्याख्या तु टीकयोरेव सुगमेत्याह—शेषमिति ।

## ॥ १२ ॥ समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोम साम कृत्वा ब्रह्मवर्चसकामो यजेत इत्यग्निष्टुत् संज्ञको यागो विहितः। तत्र वारवन्तीयमग्निष्टोमस्तोत्रसाधनं साम वार्तिकोक्तेः । तत्राग्निष्टोमसाम्नः एकविंशत्यावृत्तिमत्त्वं इतरेषां तु त्रिवृत्त्वमेव । तस्य वायुदेवताका न ऋच आम्नाताः । तत्राग्निष्टुत्संज्ञकस्य यागस्य सन्निधाविदमाम्नातं "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति । तत्र चिन्ता—किं प्रकृते कर्मणि गुणफलविधिः उत विशिष्टकर्मान्तरविधिरिति । तत्र पूर्ववदत्रापि गुणफलविधिरिति पूर्वपक्षोत्थानादवान्तरसङ्गतिः । अध्यायसङ्गतिस्तु वक्ष्यते । प्रयोजनं पूर्वविपरीतम्—पूर्वत्र पूर्वपक्षे पृथक् प्रयोगः । सिद्धान्ते तु प्राकृतप्रयोगोपजीविता । नन्वत्र किमाश्रितो गुणः

शृङ्खलाविधाने चातिगौरवं स्यात् । एतस्यैवेति च नाञ्जस्यं स्यात् । ननु प्रकृतं वायव्याधारवारवन्तीयसामसाधनकस्तोत्रानुबन्धं तत्रापूर्वा रेवत्यः फलार्थतया यागानुबन्धतया वाच्याः । न च तास्साक्षात् यागानुबन्धभूताः किन्तु यागाङ्गस्तोत्रार्थसामसंस्कार्यतया सामानुबन्धभूताः स्तोत्रानुबन्धभूता वेति कथं यागानुबन्धात् फलम् ?

अथ परम्परया यागानुबन्धता सा तर्हि न लोकतः प्राप्ता यागस्तोत्रान्वयस्य विधानाधीनत्वात् । तद्द्वारकत्वाच्च यागे रेवतीवारवन्तीयान्वय-

---

फलाय बोध्यते न तावत् प्रणयनाश्रितगोदोहनादिवत् वारवन्तीयाख्या गीतिक्रियाश्रितात् रेवतीगुणात् । रेवत्यनुरक्तगीतेः फलसम्बन्धस्याश्रुतेः । यागस्य फलं श्रुतं पशुकामो यजेतेति । अत एव न रेवत्या वारन्तीयात् स्तोत्राश्रितात् । नापि यागाश्रितात् स्तोत्रात् तस्य; तस्य दधिवत् क्रत्वङ्गत्वेन फलान्वयायोग्यत्वात् । अतोऽनुपपन्नैवेयं चिन्तेत्यत्राह—रेवत्याधारेति । स्तोत्रानुबन्धात् स्तोत्ररूपानुबन्धात् गुणात् विशिष्टाधारसामसाधनविशेषान्वितस्तोत्राख्यो गुणः प्रकृतयागाश्रितः फले विधीयत इत्यर्थः । विपक्षे बाधकमाह—नो चेदिति । यजिशब्दस्य व्यक्तिवाचितया सन्निहितव्यक्तिपरत्वात् या प्रकृतप्रतीतिः तस्याबाधः विशेषणपरम्पराविधाने चातिगौरवम् । एतच्छब्दस्य धर्मलक्षकतया नाञ्जस्यमित्यनेकदोषाः स्युः कर्मान्तरविधावित्यर्थः, पूर्वपक्षमाक्षिपति—नन्विति । प्रकृतमग्निष्टुदाख्यमत्र कर्म, तत्राग्निष्टोमस्तोत्रं वारवन्तीयाख्यं साम च प्राप्तमेव । रेवत्य एव परमप्राप्ताः । तत्र गुणफलसम्बन्धपक्षे अप्राप्ता रेवत्य एव गुणः यागानुसबन्धभूत एव फलाय विधेयो वाच्य । यजेत पशुकाम इति यागसम्बन्धितयैव फलश्रुतेरित्यर्थः । ननु भवत्वेवंयागानुबन्धभूतानां रेवतीनां फले विधानमित्यत्राह—न चेता इति । रेवत्यो द्रव्यदेवतात्मकत्वाभावान्न साक्षाद्यागानुबन्धभूता इति कथं यागानुबन्धात् फलमित्युत्तरेण सम्बन्धः ? न कथञ्चिदित्यर्थः ।

नन्वत्र द्रव्यदेवतात्मकत्वेपि यागतत्कारकप्रकाशकयाज्यावत् यागानुबन्धता रेवतीनामस्त्वित्यत्राह—किन्त्विति । यागेति । यागाङ्गस्तोत्रसाधनसामाश्रयतया सामान्वयात् सामानुबन्धता । तद्द्वारा स्तोत्रान्वयात् स्तोत्रानुबन्धता वा, न तु यागानुबन्धता । स्तोत्रस्य च प्रधानकर्मतया यागतत्कारकप्रकाशकत्वाभावात् पशुपुरोडाशयागवैषम्यं स्तुतशस्त्रनय एवोक्तमिति भावः ।

ननु स्तोत्रानुबन्धानामपि परम्परया यागानुबन्धताप्यस्ति स्तोत्रस्य यागाङ्गत्वात् । तथा सामानुबन्धत्वेपि परम्परया यागानुबन्धताप्यस्ति । यागाङ्गस्तोत्रसाधनसामाश्रयत्वाद्रेवतीनामिति शङ्कते—अथेति । उत्तरं—सा तर्हीति ।

प्राप्तेः। अङ्गभूतस्तोत्रद्वारकश्च रेवतीवारवन्तीयान्वयोऽपि विधानादेवेति वाक्यभेदः स्यादिति। मैवम्। प्रकृते अग्निष्टोमस्तोत्रस्याङ्गता प्राप्तैव। तत्र वारवन्तीयं प्राप्तमेव। रेवत्याधारता परं वारवन्तीयस्य न प्राप्ता। तत्र[1] लौकिकेन रूपेण स्तोत्रे साध्ये रेवत्याधारतां प्राप्तामादाय पूर्वप्राप्तपरम्परया यागानुबन्धतां गृहीत्वा गुणफलविधिः। रेवत्याधारताविधौ रेवत्याक्षेपः। रेवत्य एव वा वारवन्तीयादिपरम्परया यागानुबन्धभूता[2]

---

त्वदुक्तया परम्परया यागानुबन्धता सा व न लोकतः प्राप्तेति न तामादाय गुणफलविधिः शक्य इत्यर्थः। तत्र हेतुः—यागेति। यागस्य स्तोत्रस्य च यः सम्बन्धः स विधानादेव भवति न लोकतः क्रियाकारकतानवगमात्। नाप्युपकार्योपकारकता लोकसिद्धा। तत्र यागस्तोत्रविषयाया अदृष्टरूपाया लोकाप्रसिद्धेः। विध्यधीनत्वे च तस्मिन् विधेये फलसम्बन्धोऽप्यपरो विधेय इति वाक्यभेदः स्यादित्युत्तरेण सम्बन्धः। ननु स्तोत्रयागसम्बन्धस्य विध्यधीनत्वेपि किमायातं रेवतीवारवन्तीययागसम्बन्धस्य तदाधारवारवन्तीययागसम्बन्धस्य वा इत्यत्राह—तद्द्वारत्वाच्चेति। विध्यधीनस्तोत्रान्वयद्वारत्वात् तयोः विध्यधीनत्वमेवेत्यर्थः। मैवमिति। स्यादेवं वाक्यभेदः यद्यत्र विधानभेदः स्यात् अत्र तु प्रकृते अग्निष्टोमस्तोत्रमङ्गतया प्राप्तमेव। अग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेति वचनात्। ननु तर्हि वारवन्तीयमग्निष्टोमसाम विधेयं स्यादित्यत्राह—तत्रचेति। तत्राग्निष्टो साम वारवन्तीयमपि वार्तिकोक्तवचनान्तरात् प्राप्तमेव। अप्राप्तं रेवत्याधारत्वं वारवन्तीयस्य प्रकृते तस्य वाय्व्याधारत्वात् तदाह—रेवत्याधारेति। परं केवलम्।

नन्वेवं रेवत्याधारवारवन्यीयस्याप्राप्तत्वात् स्तोत्रे तदपि विधेयम् स्तोत्रस्य च फलसम्बन्ध इति वाक्यभेदस्तदवस्थ एवेति तत्राह—तत्र लौकिकेति। यद्यपि क्रत्वङ्गस्तोत्रसाधनावस्थस्य वारवन्तीयस्य रेवत्याधारता लोकतो न प्राप्ता तथापि लौकिकेन रूपेण क्रियाकारकादिस्वरूपेण स्तोत्रे साध्ये साम प्राप्तम्। तत्र रेवत्याधारता च प्राप्ता। तामादाय वारवन्तीयस्य पूर्वप्राप्तां परम्परया यागानुबन्धतां गृहीत्वा रेवत्याधारता फलाय विधीयत इति युक्तो गुणफलविधिरित्यर्थः। नन्वेवमपि रेवतीनामपि विधेयत्वापत्तिः इत्यत्राह—रेवत्याधारेति। पृष्ठगतसर्वताविधौ पृष्ठानामाक्षेपतो लाभवत् रेवत्याधारविधौ रेवतीनामाक्षेपतः प्राप्तिरित्यर्थः, यद्वा विवरणमतेन रेवतीरूपगुणात् फलसिद्धिः तासां च वारवन्तीयादिपरम्परया यागानुबन्धता तदाह—रेवत्य एवेति। ननु विध्यधीनयागाङ्गभावे स्तोत्रे रेवत्याधारवारवन्तीयस्य तदाधाररेवतीनां वा कथं लौकिकेन रूपेण प्राप्तिरित्याशङ्क्य दृष्टान्तेनोपपादयति—यथेति। यथा दध्नेन्द्रियकामस्य जुहुयादित्येवमादौ विध्यधीन-

---

१. A तत्रालौकि २. B न्धरूपा

इति रेवतीगुणानुबन्धभेदादेव [1]फलम् । यथा विध्यधीनापूर्वसाधनीभूतेऽपि होमे लौकिकेन रूपेण दध्यनुबन्धात् फलमिति कृतः पूर्वपक्षः ।

स्यादेवं लौकिकेन रूपेण रेवतीवारवन्तीयस्तोत्रान्वयः । स्तोत्रस्य तु यागान्वयो न लोकतः । किन्तु विधानादेव । विधानं च क्रत्वर्थम् । अतो न रेवत्यनुबन्धता तदाधारवारवन्तीयानुबन्धता वा यागस्य सिध्यतीति कर्मान्तरविधिरेव युक्तः । यागान्तरे च विशेषणपरम्पराधीनमभिधानत्रिनि-

---

नियोगसाधनत्वे होमे दध्नोऽलौकिकरूपेण प्राप्त्यभावेपि होमस्वरूपे प्राप्तिमादाय यथा गुणफलविधिः तथाऽत्रापि युक्तमित्यर्थः । एवं पूर्वपक्षाक्षेपसमाधानव्याजेन पूर्वपक्षोऽप्युक्त इत्याह—इति कृत इति ।

राद्धान्तमाह—स्यादेवमिति । अस्तु नाम स्तोत्रे लौकिकरूपेण वारवन्तीय-सम्बन्धः साम्ना स्तुवीतेति कारकतयैव स्तोत्रान्वयात् । तथा वारवन्तीयस्य रेवतीसम्बन्धोऽपि रेवतीषु इत्यधिकरणकारकतया निर्देशात् तथापि स्तोत्रस्य यागान्वयो न लोकतः प्राप्तः किन्तु विधानादेव यस्मात् स्तोत्रयागयोरङ्गप्रधान-तयैव सम्बन्धो न क्रियाकारकभावेन । अतो विधानाधीनत्वे सोऽपि विधेयः फलसम्बन्धोऽपीति वाक्यभेदो दुष्परिहर इत्यर्थः । ननु प्रकृते यागे वाक्यान्तरेण स्तोत्रान्वयविधानमादाय गुणफलसम्बन्धविधिरस्त्वित्यत्राह—विधानं चेति । तच्च विधानं क्रत्वर्थं न च तेन पुरुषार्थगुणफलविधिघटनोपपत्तिः क्रत्वर्थबाधापत्तेरित्यर्थः ।

ननु वाक्यान्तरावगतान्वयस्य क्रत्वर्थत्वं प्रकरणाद्वाक्यात् फलान्वयार्थ-तैवास्त्विति शङ्कामपनुदन्नुपसंहरति—अत इति । यतः प्रकृते यागे स्तोत्रान्वयोऽपि न प्रकरणात् किन्तु वाक्यात् तस्य वायव्यास्वेकविंशमग्निष्टोम साम कृत्वा ब्रह्म-वर्चसकामो यजेतेति वाक्यावगतक्रत्वर्थबाधो न युक्तः । अतो न यागस्य प्रकृतस्य रेवत्यनुबन्धता विवरणमते तदाधारवारवन्तीयानुबन्धता वा निबन्धनमते न सिद्ध्यति, प्रकृतस्याग्निष्टोमस्य वायव्याधारवारवन्तीयसाधनसामकत्वात् । अतः साप्यनेनैव वाक्येन विधेया फलसम्बन्धोऽपीति वाक्यभेदो दुर्वार इत्यर्थः । नन्वेवं स्तोत्रमेवाश्रित्य रेवत्याधारवारवारवन्तीयं फले विधीयतां तत्सम्बन्धस्य लोकतः प्राप्तेः गोदोहनमिव प्रणयनमाश्रित्येत्यत्राह—इति कर्मेति । युक्तं तत्र प्रणयन-मात्रश्रुतौ । इह तु यजेन पशुकाम इति यजिरूपभावान्तरश्रुतेः तस्य चानर्थक्यापत्तेः न स्तोत्राश्रिताद्गुणात् फलविधिरिति समानपदोपादानश्रुत्या यागान्तरविधिरेव फले युक्त इत्यर्थः ।

ननु यागान्तरविधिपक्षेऽपि यागस्तावत्फले विधेयः तत्र स्तोत्रं तत्रापि वार-

---

१. B नुबन्धादेव

योगपर्यवसानमिति सर्वमेकवाक्येन विधीयते। तदा चैतस्येति तद्धर्माकाङ्क्षायां एतद्धर्मकस्येति लक्षणया वर्ण्यते। अव्यक्तत्वेन सौमिकधर्मप्राप्तौ तु विधीयमाने कर्मणि मुख्यार्थमेवेति राद्धान्त इति।

ननु सवनद्वये स्तोत्रात् पूर्वं यागः। तृतीयसवने तु स्तोत्रात्परत इति यागमध्यस्थत्वात् स्तोत्रस्य कथं तस्य क्त्वा पूर्वकालतामाह कर्मविधौ।

---

वन्तीयं तस्मिंश्च रेवत्य इति बहुविधे येषु बहूनि वाक्यानि स्युरित्यत्राह—यागान्तरे चेति। विभागे साकाङ्क्षत्वेनाभिधानविनियोगयोरपर्यवसानात् सर्वमेव वाक्याश्रयपदजातं विशेषणशृङ्खलाविशिष्टैकार्थप्रतिपादनपरमिति सर्वविशेषणविशिष्टयागान्तरमनेन वाक्येन विधीयत इति न वाक्यशेषः। एतच्च भाष्ये च ग्रन्थे च प्रपञ्चितम्। ननु यागान्तरविधौ एतस्यैवेति प्रकृतपरं सर्वनामपदमनन्वितं स्यादित्यत्राह—तदा चेति। विधीयमानस्य यागान्तरस्य फलापूर्वकरणार्थमुपकारापेक्षायां एतस्यैवेति पदं प्रकृतवाचि सत् प्रकृताग्निष्टुदुपकारं लक्षणयाऽवस्थापयति फलतो धर्मलक्षणोक्तेः। अतो लक्षणया एतच्छब्दो वाक्यान्वित एवेत्यर्थः। नन्वेवं अथैष ज्योतिरित्यादावपि धर्मलक्षणार्थ एवैतच्छब्दः स्यादित्यत्राह—अव्यक्तेति। युक्तं तत्र विधीयमान एव कर्मणि मुख्यार्थत्वमेतच्छब्दस्य अव्यक्तत्वेनैव सौमिकविध्यन्तप्राप्तेः। लोके प्रकृतपरत्ववत विधेयपरत्वमपि सर्वनाम्नो बहुशो दृष्टम्। इह तु धर्मलक्षणां विना एतच्छब्दस्य नाग्निष्टुद्धर्मप्राप्तिः। अतो धर्मलक्षणयैवात्र वर्णनं युक्तम्। तथा च नातीवैतच्छब्दस्य प्रकृतपरत्वत्यागः। न चात्राव्यक्तत्वेन सौमिकविध्यन्त एव, चोदनालिङ्गतः वचनप्रभेदैतच्छब्दस्यैव प्रबलत्वात्। तत्रतु एतच्छब्दादव्यक्तचोदनालिङ्गाच्च सौमिकधर्म एवेति वृथा लक्षणाङ्गीकारः। अतो नात्र विधीयमाने कर्मणि मुख्यतेत्यर्थः।

ननु विशिष्टकर्मान्तरविधिपक्षे अतिगौरवं लक्षणाप्रत्यभिज्ञाहानिश्च। तथा विशिष्टविधौ विशेषणस्य विशेष्यं प्रति शेषत्वं वाच्यम्। तच्चायुक्तम्। वारवन्तीयसामसंस्कार्याणामृचां रेवतीनां प्राधान्यात् सामशेषत्वानुपपत्तेः। अतोऽनेकविधदोषदुष्टत्वाद्विशिष्टविधेः कथं राद्धान्त इत्यत्राह—इति राद्धान्त इति।

अयं भावः—न तावद्विशेषणस्य विशेष्यं प्रति शेषतापातः। राजपुरुषादिवत् प्राधान्याहानादेव विशेष्यधीरञ्जतात् गौरवादि च वाक्यभेदे प्रत्यर्थिनि न दोषायेति पूर्वाधिकरणपूर्वपक्षे प्रपञ्चितम्। अतोऽत्र विशिष्टयागान्तरविधिरेव युक्त इति।

ननु कर्मान्तरविधिपक्षे रेवतीवाक्ये शब्दार्थयोः विप्रतिपत्तिः स्यात्। तथाहि-अग्निष्टो साम कृत्वा यजेतेति क्त्वाप्रत्ययः स्तोत्रस्य यागात्पूर्वकालतामाह। न च सा सम्भवति। प्रातस्सवनमाध्यन्दिनसवनयोर्हि स्तोत्रात्पूर्वो यागः

गुणफलविधौ त्वनुवादः स च परभूतयागापेक्षयापि युक्त एव । मैवम्, न क्त्वा पूर्वकालतामाह किन्तु समानकर्तृकताम् । तथा हि—समानकर्तृकयोः पूर्वकाल इति स्मरणम् । तस्यार्थः समानकर्तृकयोः पूर्वकाले न तु पूर्वकालतामात्रे ततः क्त्वा भवतीति । सा चैककर्तृकता न लोके धात्वर्थद्वयस्य स्वरूपतः । धात्वर्थभेदे कर्तृभेदापत्तेः । अत एव एकफलावच्छिन्नयोः एकप्रवृत्त्याऽनुपरत्याऽनुष्ठाने तमुपाधिमाश्रित्यैककर्तृकता द्वयोः

---

अग्निष्टोमस्तोत्रस्य तृतीयसवनकालत्वात् । न च तार्तीयसवनिककृत्स्नाभ्यस्तयागापेक्षया पूर्वकालता । तथा सति हि परतापि स्यात् । न च सा युक्तापि । असाधारणेन व्यपदेशस्य युक्तत्वात् । किञ्च यागमात्रापेक्षया पूर्वकालताधीर्न तृतीयसवनयागापेक्षया । अतो यागमध्यस्थत्वात् स्तोत्रस्य क्त्वाप्रत्ययः कथं पूर्वकालतामाह । यागान्तरविधिपक्षे शब्दस्वरसावगतहानेरयुक्तत्वादिति चोदयति—नन्विति । गुणफलविधौतु नैवमित्याह—गुणफलेति । गुणफलविधिपक्षे तु अनुवादः क्त्वार्थः । अनुवादस्य प्राप्तिपरतन्त्रत्वात् न च शब्दस्वरसहानिर्दोषायेत्यर्थः । परभूतयागाभ्यासापेक्षयापि पूर्वकालता युक्तेति गुणफलविधिपक्ष एव युक्त इत्यर्थः । एतच्च तृतीयसवने अग्निष्टोमस्तोत्रात्परो याग इत्युपेत्य यथाग्रन्थमुक्तम् । परमार्थतस्तु स्तोत्रात्पूर्वमेव तत्रापि यागः । तथा च दूरे पूर्वकालता । तथा चानुदाहरणमेव चोद्यवादिनोऽभिप्रेतम् । मैवमिति । स्यादेतदेवं यदि पूर्वकालता प्रत्ययस्यार्थः स तु न पूर्वकालतामाह किन्तु समानकर्तृकताम् । ननु समानकर्तृकयोः पूर्वकाल इति द्वयोः श्रवणे समानकर्तृकत्वमेव प्रत्ययार्थो न पूर्वकालोऽर्थ इति कथमवगत इत्याशङ्क्य उपपादयितुं क्त्वाप्रत्ययविधायकपाणिनिसूत्रमनुभाष्य तस्यार्थमाह—तथाहीति । यद्यपि पूर्वकाल इति सप्तमीनिर्देशात्तदर्थधीः शब्दशास्त्रे सप्तमीनिर्देशस्य प्रायेणार्थत्वात् । तथापि न पूर्वकालतामात्रे क्त्वाविधीयते । किन्तु समानकर्तृकयोः पूर्वकाले । एवं चायमर्थः सूत्रस्य—समानः एकः कर्ता ययोः धात्वर्थयोः तत्र वर्तमानयोर्धात्वोर्मध्ये यः पूर्वं प्रयुज्यते ततः क्त्वाभवतीति । एतच्चोत्तरत्र व्यक्तयिष्यते ।

नन्वेवमपि समानकर्तृकत्वविशिष्टं पूर्वकालत्वमेवार्थोऽस्तु तत्राह—सा चेति । स्यादेतदेवं यद्यर्थगतत्वेन तयोर्विशेषणविशेष्यतया मेलनं सम्भवति । न तु तत्सम्भवति अन्योन्यविरोधात् । न हि धात्वर्थद्वयस्य लोके स्वरूपत एककर्तृकता धात्वर्थभेदे कर्तृभेदस्यापत्तेः प्राप्तत्वात् युक्तत्वादिति यावत् । कर्तृत्वं नाम न जात्यादि किञ्चिदस्ति किन्तु क्रियान्वयसमये पदार्थस्य तत्प्रतियोगिकमवस्थाभेदमात्रं तत्प्रतियोगिभेदे हि भिन्नमेव । अतो धात्वर्थद्वयस्य न स्वरूपत एककर्तृत्वमित्यर्थः । ननु कथं तर्हि सूत्रं समानकर्तृकयोरिति द्विवचनानुपपत्तेरित्यत्राह

तत्रैकं पूर्वकालमित्यर्थगतं न पूर्वकालत्वम् विच्छेदापत्तेर्नैककर्तृकतेति पूर्वकाले प्रतीयमाने धात्वर्थे वर्तमानाद्धातोः क्त्वाप्रत्ययो भवतीति सूत्रार्थः। एवं समानकर्तृकत्वमर्थगतं क्त्वातः प्रतीयते। पूर्वप्रतीयमानता तु पूर्वप्रयोगादेव प्रायेणावगम्यते। यत्र कुतश्चित्कारणात् परतः प्रयोगः तत्र क्त्वान्तार्थं पूर्वं प्रतीत्य प्रयुक्तव्यत्ययेन धात्वन्तरार्थान्वयं प्रत्येति। क्त्वान्तार्थो हि धात्वर्थान्तरसम्बन्धिरूपः सम्बन्ध्यन्तरान्तर्भावपर्यवसायी भवति। अतोऽग्रतो धात्वर्थान्तरं प्रतीत्यापि क्त्वान्तादर्थप्रतीतिसमये

---

अत एवेति। यत एव स्वरूपतो न सम्भवति अतः एकफलवशीकारेण एकप्रयोजनतया प्रवृत्त्यनुपरत्या अनुष्ठाने अविच्छिन्नानुष्ठाने सति तमुपाधिमाश्रित्य द्वयोर्धात्वर्थयोरेककर्तृकता द्वयोः क्रिययोरेकप्रयोगगततया ऐक्यादेककर्तृकतेत्यर्थः। नन्वेवमपि एककर्तृकयोरेकस्य पूर्वकालता क्त्वार्थोऽस्त्वित्यत्राह—तत्रैकमिति। स्यादेवं पूर्वकालत्वं वाच्यम् यद्यर्थगतं स्यात्। तत्तु न तथा। अविच्छिन्नानुष्ठानोपाधिना एककर्तृकयोर्धात्वर्थयोर्मध्ये एकधात्वर्थस्वरूपं पूर्वकालमित्येवं पूर्वकालत्वमर्थगतं नाङ्गीकर्तव्यम्। अर्थगतं अनुष्ठानसिद्धार्थस्वरूपगतं, तथासति अनुष्ठानविच्छेदप्राप्तेरेककर्तृकस्यैव बाधापत्तेः। अतो न पूर्वकालत्वमर्थगतमित्यर्थः। किंगतं तर्हीत्याशङ्क्य सूत्रार्थकथनमुखेन प्रतीतिगतं तदित्याह—पूर्वकाल इति। ननु प्रतीतिगतत्वेपि किमिति न क्त्वार्थतेत्यत्राह—एवमिति। एकानुष्ठानोपाधिकं धात्वर्थगतं समानकर्तृकत्वमेव धातोः परप्रयुक्तेन क्त्वाप्रत्ययेन बोध्यते न प्रतीतिगता कार्यपूर्वकालतेत्यर्थः।

नन्वेकस्य धात्वर्थस्य पूर्वप्रतीतिरेव कथं पूर्वानुष्ठानाभावे सिद्ध्यतीत्यत्राह-पूर्वेति। क्त्वाप्रत्ययान्तस्य पूर्वमेवोच्चारणादेव तत्प्रकृतिभूतधात्वर्थस्य पूर्वप्रतीयमानता न पूर्वानुष्ठानानामपि क्त्वार्थतयेत्यर्थः। प्रायेणेति वदता स्वारसिकं क्त्वान्तस्य पूर्वोच्चारणमिति दर्शितम्। व्रजति भुक्त्वेत्यादौ यत्रापि क्वचित् पश्चात्प्रयोगः तत्रापि न्यायतः पूर्वावगतिरित्याह—यत्र त्विति। कुतश्चित्कारणात् छन्दोभङ्गादिरूपात् यत्र विपरीतः क्त्वान्तप्रयोगः तत्रापि प्रयुक्तप्रत्ययेन क्त्वार्थं प्रथमं प्रतीत्य पश्चात् पदार्थान्वयं प्रत्येति श्रोता। कुत एवं नियम्यत इत्यत्राह—क्त्वान्तेति। हि यस्मात् क्त्वान्तार्थः समानकर्तृकत्वं तच्च धात्वर्थान्तरसम्बन्धिरूपं, तच्च सम्बन्ध्यन्तरान्तर्भावादेव पर्यवस्यति नान्यथा।

ननु तदर्थान्तरं पूर्वोच्चरितादेव शब्दादवगतमिति कथं क्त्वान्तार्थस्य पूर्वप्रतीतिरित्यत्राह—अत इति। यत एवं क्त्वार्थस्य समानकर्तृत्वस्य धात्वर्थान्तरसाकाङ्क्षता अतो यद्यपि पूर्वोच्चरितादाख्यातात् धात्वर्थान्तरं प्रतीतं तथापि क्त्वान्तादर्थप्रतीतिसमये पुनरपि धात्वर्थान्तरं प्रत्येतव्यमेव, अन्यथा क्त्वान्तार्थ-

पुनर्धात्वर्थान्तरं प्रत्येतव्यं इत्यनुसन्धायोक्तं पूर्वं प्रतीयते इति ।

अत एव विवरणे पूर्वकाले प्रयोगे प्रयोगार्हे पूर्वं प्रतीयमान इत्येवाभिप्रेतम् । एवं च पूर्वप्रतीतेर्युक्तिसिद्धत्वात् विस्पष्टार्थं पूर्वकाल इति सूत्रितम् । एवञ्च समानकर्तृकता क्त्वार्थो यत्र नास्ति तत्राज्ञातानुष्ठानस्य यथाप्रतीत्यनुष्ठानं युक्तमित्यनुष्ठानगतापि परम्परया पूर्वकालता क्त्वातः[1] स्वीक्रियत इति क्त्वार्थताभ्रान्तिः । किञ्च समानकर्तृकत्वपूर्वकालत्वयोः विरोधे समानकर्तृकताप्रतीतिगता प्रयोगगता वा न शक्येत्यर्थगतैव ग्राह्येति युक्तम् ।

---

पर्यवसानाभावात् अतः क्त्वान्तार्थस्य पूर्वकालता न्यायलब्धैवेत्यर्थः । यत एवं पूर्वप्रतीतिरेव तन्त्रं न पूर्वप्रयोगः अत एव टीकाकारेणाप्येवमुक्तमित्याह—इत्यनुसन्धायेति । कथं तर्हि विवरणटीकायां पूर्वप्रयोग एवोक्त इत्याशङ्क्य तत्रापि पूर्वकालप्रयोगार्हतया पूर्वप्रतीतिरेवाभिप्रेतेत्याह—अत एवेति । यत एव प्रतीतिरेव तन्त्रं अत एवेत्यर्थः । प्रयुज्यत इति प्रयोगं क्त्वान्तपदम् । ननु न्यायत एव पूर्वकालत्वसिद्धेः किमिति पाणिनिना क्त्वाविधौ पूर्वकालत्वं सूत्रितमित्याशङ्क्याह—एवं चेति । न्यायबललभ्यमेव पूर्वकालत्वं पाणिनिना स्मृतं न वाच्यम् अनन्यलभ्यस्य शब्दार्थत्वात् । अतो न्यायमूलत्वे सम्भवति न मूलान्तरकल्पना युक्तेत्यर्थः । नन्वेवं समानकर्तृकत्वे वाच्ये दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति कथं क्त्वाप्रयोगः प्रयोगभेदेन समानकर्तृकत्वाभावात् पूर्वकालतैव वाच्योपेया । अतो यथा शाब्दप्रसिद्ध पूर्वकालतैव क्त्वार्थ इति तत्राह—एवं चेति । यत्र दर्शपूर्णमासाभ्यामित्यादौ क्त्वार्थसमानकर्तृकत्वं न सम्भवति तत्राज्ञातानुष्ठानस्य प्रतीत्यनुरोधेनैवानुष्ठानं युक्तमिति कृतदर्शपूर्णमासस्य सोमेऽधिकारप्रतीत्यर्थं परम्परयाऽनुष्ठानगतापि पूर्वकालतालक्षणयापि यथाप्रतीति क्त्वार्थः स्वीक्रियते । कथं तर्हि पूर्वकालत्वं क्त्वार्थ इति शाब्दप्रसिद्धिरिति तत्राह—क्त्वार्थेति । एवंविधं विवेकमननुसन्दधतां पूर्वकालत्वं क्त्वार्थ इति भ्रान्तिरित्यर्थः ।

एवं तावत् न्यायलभ्यत्वान्न पूर्वकालत्वं शब्दार्थ इत्युक्तं तदिदानीं समानकर्तृकत्वस्यान्यथोपपत्त्यभावादप्यर्थगतत्वमेतस्यैवेत्याह—किञ्चेति । प्रतीतिगता प्रयोगगता वेति मतद्वयानुरोधादुक्तं, यथा समानकर्तृकस्यैव प्रतीतिगतत्वासम्भवः तथा प्रपञ्चितं चतुर्थे । प्रकाशादयस्तु धातुसम्बन्धे प्रत्यया इत्यधिकारे क्त्वाविधानात् यस्मिन्नर्थे स्वीकृते धात्वर्थसम्बन्धो भवति सोऽर्थो न्याय्यः समानकर्तृकत्वे च तद्भावो न पूर्वकालतायामिति समानकर्तृकत्वमेव क्त्वार्थ इत्याहुः तदाह—केचि-

---

१. क्त्वार्थः

केचित्तु धातुसम्बन्धाधिकारे विहितः प्रत्ययः तदनुगुणार्थो युक्तः तदनुगुणञ्च समानकर्तृकत्वम्। तत्र हि धात्वर्थसम्बन्धः न पूर्वकालतायामिति तेन समानकर्तृकतावाचकतां वदन्ति। तच्चिन्त्यम्। प्रस्तुते कर्मविधावपि अनुष्ठानक्रमस्यान्यतोऽवगतेः न क्त्वातस्तदादर इति समानकर्तृकत्वमात्रे एव युक्तमग्निष्टोमसाम कृत्वा यजेतेति वचनम्। स्फुटास्फुटशास्त्रभेदचिन्तेयमिति सङ्गतिर्निबन्धने। विवरणे तु किं साध्यमात्रभेदात् उतानुबन्धभेदादिति चिन्तेयमिति सङ्गतिः।

॥ १३ ॥ सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥

हीषादेः निधनाश्रितस्य वृष्टिकामाद्यन्वयमात्रात्[1] गुणफलसम्बन्धेन विधिः। ननु सौभरस्य स्तुत्याश्रितस्य वृष्ट्यादिफलसंबन्धोऽवगत एव।

---

त्विति। तच्चिन्त्यमिति। सूत्रवाक्यपर्यालोचनयैव सुकरे वाच्यनिर्णये न प्रकरणरूपाधिकारापेक्षस्तन्निर्णयो युक्तः। अधिकारानुगुणत्वमभ्युच्चय इति भावः। ननु विशिष्टविधिपक्षे विशेषणभूतस्तोत्रस्य पूर्वप्रतीतत्वात् यथाप्रतीति पूर्वमेवानुष्ठानं युक्तमिति पूर्वकालत्ववाच्यत्वस्य निराकरणं व्यर्थमिति तत्राह—प्रस्तुतेति। प्रस्तुते विशिष्टविधिकर्मपक्षेपि न शब्दार्थयोर्विप्रतिपत्तिः अग्निष्टोमसामकृत्वा यजेतेति वचनस्य क्त्वान्तस्य समानकर्तृकत्वार्थतया युक्तत्वात्। न च क्त्वाक्रमादरार्थं पूर्वकालविहितत्वं वाच्यम्; अनुष्ठानक्रमस्यान्यतः प्रकृतित एवावगतेरित्यर्थः। ननु विधानप्रभेदचिन्तायाः कथमध्याये सङ्गतिरित्याशङ्क्य मतद्वयेपि भेदेन सङ्गतिप्रकारमाह—स्फुटास्फुटेति। प्रयोगभेदाभ्यां स्फुटास्फुटतानिबन्धने। विवरणे तु अनुबन्धभेदनिबन्धनशास्त्रभेदव्युत्पत्तेरिध्याये पादे च सङ्गतिः।

॥ १३ ॥ सौभरे पुनः श्रुतेर्निबन्धनेन कामसंयोगात् ॥ २८ ॥

यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत सर्वे वै कामाः सौभरमाश्रयन्ते' इति सौभरं विधाय तत्सन्निधाविदमाम्नातं "हीषिति वृष्टिकामस्य निधनं कुर्यात् ऊर्गित्यन्नाद्यकामस्य ऊ इति स्वर्गकामस्येति। तत्र चिन्ता–किं हीषादेः प्रकृतवृष्टिकामादिव्यतिरिक्तवृष्टिकामाद्यन्तरान्वयात् तस्य निधनमाश्रितस्य वृष्ट्यादिफले विधिः, उत प्रकृतवृष्टिकामादीनां हीषादिविधिर्निधनव्यवस्थार्थ इति। ननु हीषादेर्निधनेन दध्यादिहोमवत् क्रियाकारकभावेन नान्वया-

---

१. B नुबन्धतोऽत्र

अतः तद्वृष्टिकामादिसंबन्धसौभरगतनानाशाखावगतानियतानेकहीषादि-रूपनिधनव्यवस्थार्थं वचनं युक्तम् ; मैवम् । वृष्टिकामाय सौभरमिति विशिष्टानुवादे वाक्यभेदः स्यात् । अतो वृष्टिकामाय निधनाश्रितहीषादिविधिर्युक्त इति पूर्वः पक्षः । मैवम् । प्रकृतवृष्टिकामादिप्रत्यभिज्ञानात् तन्निधनहीषादिप्रतीतेः तद्व्यवस्थार्थं वचनम् । न च विशिष्टानुवादः

---

वगम इति कथं तदाश्रयणेन गुणफलविधितया पूर्वपक्ष इति तत्राह—हीषादेरिति । निधनं नाम उद्गीथादिपञ्चभक्तिकस्य साम्नः परिसमाप्तिरूपा अन्तिमा भक्तिः । तस्याः क्रियारूपतया हीषादेरिति शब्देन करणतया निर्देशात् दध्यादिवत् लौकिकेन रूपेण प्राप्तिः सम्भविनी । यद्वा विधनस्य स्वाध्यायदशायामेव हीषाद्याश्रयत्वं प्रतीतम् । अतो हीषादेर्निधनाश्रितस्य निधनान्वितस्य वृष्टिकामाद्यन्वयमात्रेण गुणफलसम्बन्धेन गुणफलान्वयेन विधिः फले गुणविधिरिति यावत् । वृष्टिकामादिश्रुतेः स्वतोनियोज्यान्तरप्रतीतेः नियोगान्तरस्यैव युक्तत्वादित्यर्थः । ननु दध्नेन्द्रियकामादौ गुणफलविधिर्युक्तः पूर्वमिन्द्रियादिफलस्य प्रकृतकर्मसम्बन्धित्वेनाप्रतीतेः । इह तु यो वृष्टिकाम इति वाक्येन स्तुत्याश्रितस्य सौभरस्य प्रकृतस्य वृष्ट्यादिसम्बन्धोऽवगत एव । ततश्च हीषेति वृष्टिकामस्येत्यादिषु वाक्येषु वृष्टिकामादिपदैः यौगिकैः प्रकृतवृष्टिकामादिप्रतीतेः तेषु न फलान्तरविधिरिति न गुणफलविधिर्युक्त इति चोदयति— नन्विति । ननु गुणफलविध्यभावे किमनेन वचनेन क्रियत इत्यत्राह—अत इति । यत एवात्र प्रकृतवृष्टिकामादिप्रतीतिः अतः तद्वृष्टिकामादिसम्बन्धसौभरगतनिधनव्यवस्थार्थं वचनमित्यर्थः ।

ननु अनियमप्राप्तौ नियमफलो हि विधिः सैव कुत इत्यत्राह -- नानाशाखेति । क्वचिच्छाखायां हीषिति निधनेन युक्तं सौभरमाम्नातं, क्वचिदूर्गिति निधनेन क्वचिद् ऊ इति निधनेन । ततश्च सर्वशाखान्यायेन सौभरस्य सर्वनिधनत्वं, ततश्च कथं वा व्यवस्थितिरिति जिज्ञासायां अपेक्षितविधेर्व्यवस्थार्थं वचनं युक्तमित्यर्थः । मैवमिति । प्रकृतसौभरोद्देशेन व्यवस्थार्थं हीषादिविधौ वृष्टिकामायेति सौभरविशेषणं स्यात् । ततश्च वृष्टिकामाय सौभरमिति विशिष्टानुवादलक्षणो वाक्यभेदः स्यादित्यर्थः । वृष्टिकामपदं विशेषणभूतं वृष्टिकामत्वमभिधयाऽर्पयति । तद्विशिष्टं सौभरं लक्षणयाऽनुवादः सकृदुच्चरितस्य वृत्तिद्वये वाक्यभेदः । ननु वाक्यभेदपरिहारार्थं वृष्टिकामपदेन स्वसम्बन्धितया लक्षिते सौभरे हीषादिविधिरस्तु इत्यत्राह—अत इति । यत एव वाक्यभेदो लक्षणा वा भवति अतः एकवाक्यत्वार्थं वृष्टिकामपदमुख्यत्वार्थं च वृष्टिकामोद्देशेन निधनाश्रितहीषादिविधिः गुणफलविधिविधयेत्यर्थः । नन्वेवं गुणफलविधौ वृष्टिकामादिपदैर्यौगिकैः यत् प्रकृतवृष्टिकामादिप्रत्यभिज्ञानं तद्बाध्येत तथा गुणफलविधौ नियोगान्तरस्य

वृष्टिकाममात्रोद्देशेन हीषादिव्यवस्थाविधेः। वृष्टिकामस्तु प्रकृतसौभर-निधनानियतहीषाद्यन्वित एवेति तथाभूतलाभ इति राद्धान्तः।

गुणफलपरत्वे च साध्यभेदाच्छास्त्रभेदः; सिद्धान्ते तु तदपवादात्संगतिः।

---

तन्नियोगस्य गुणान्तरे प्रयुक्त्यन्तरस्यैव साध्यतया नियोगान्तराविनियोज्यस्य गुणान्तरस्य प्रयुक्त्यन्तरकल्पनं स्यादित्यत्राह—इति पूर्वः पक्ष इति।

अयं भावः—न तावत् प्रकृतधीबाधदोषः कर्मयुक्तफलश्रवणे फलान्तर-स्यैव साध्यतया स्वतोऽवगमात्। प्रत्युत व्यवस्थाविधिपक्षे प्रकृतधीबाधः। एकेन वाक्येन सकलार्थतया सौभरविधावनेकार्थतयैव प्राप्तिः तथैव प्रत्यभिज्ञाव्यवस्थायां च तद्बाधापत्तेः। तथा च गुणफलविधौ तात्पर्येऽवधृते नियोगान्तरे च गुणान्तरे प्रयुक्तिकल्पना न दोषाय। अन्यथापि क्रतुविधेस्तत्र प्रयुक्त्यङ्गीकारात्। किञ्च कुर्यादिति विध्यन्तरश्रवणाच्च नियोगान्तरं स्वारसिकम्। व्यवस्थाविधिपक्षे तु अनुवादमात्रतैव प्रकृताधिकारविधितैव विधेरिति।

राद्धान्तमाह—प्रकृतेति। यथा दध्ना जुहोतीतिविहितसन्निहितहोमप्रत्यभि-ज्ञानात् तथाऽत्रापि सन्निहितसौभरसम्बन्धिवृष्टिकामाद्यधिकारप्रत्यभिज्ञानात् नाधिकारान्तरधीः कर्मयुक्तेऽपि फल इति गुणाकृष्टतात्पर्यको ऽपदान्तरायोगाच्च प्रकृतवृष्टिकामादिसौभरनिधनहीषादिप्रतीतेस्तस्य व्यवस्थाविधानार्थं वचनम्। न चैकेन वाक्येन सकलफलयुक्ततया सौभरविधाने सापेक्षसकलफलता पृथक् कर्मश्रुतेः। अतो योगसिद्धिनयात् सकलफलत्वमिति एकैकफलसौभरनिधनव्यवस्था-विधावपि न सकलफलत्वप्रतीतिबाध इत्यर्थः। नन्वेवं विशिष्टानुवादलक्षणो वाक्यभेदः स्यादित्युक्तमिति तत्राह—न चेति। तत्र हेतुः—वृष्टिकामेति। नन्वेवं वृष्टि-काममात्रस्य उद्देश्यत्वे कथं प्रकृतसौभरनिधनाश्रितानियतहीषाद्यन्वयलाभ इति तत्राह—वृष्टिकामस्त्विति। वृष्टिकामादिस्वभावपर्यालोचनया स्वत एव तदवगतौ न विशेषणतया तत्स्वीकार इत्यर्थः।

नन्वेवं पृथग्विधिश्रुतेर्वैयर्थ्यं स्यात्। तथा गुणफलविध्यभावे विधिशून्यं वचनं स्यात्। न च तत्तद्वृष्टिकामादिसम्बन्धविधिः, प्राप्तत्वात्। नापि हीषादि-विधिः प्राप्तत्वादेव। अत एव न निधनगततया हीषादिविधिः। न च व्यवस्था-विधिः तस्याश्रुतत्वादित्यत्राह—इति। राद्धान्त इति। अयं भावः। न तावद्विधि-शून्यता, हीषादेरनियततया प्राप्तस्य व्यवस्थार्थं विधिः। व्यवस्था तु प्रयोजन-मात्रम्। अत एवार्थशब्दप्रयोगः। निधनपदं तु अनुवादमात्रम्। हीषादेर्निधन-तयैव प्राप्तिः। न च पृथग्विधिवैयर्थ्यदोषः, निरधिकारतया प्रथमं विध्यन्तरा-प्रतीतेः अनुवादपरत्वस्यैव स्वतोऽवगमात्। इह च नाधिकारान्तरप्रतीतिरित्युक्त-

कैश्चित् क्रत्वर्थसौभरनिधने हीषादिश्रुतेः वृष्टिकामान्तरान्वयात् गुणफलसंबन्ध इति पूर्वपक्षयित्वा कामार्थसौभरे प्रयुक्तितारतम्यात् तत्प्रयुक्तसौभरगतहीषादिश्रुतितो व्यवस्थेति राद्धान्तितम्। तच्चिन्त्यम्।

इति नयविवेके द्वितीयाध्यायस्य द्वितीयः पादः।

---

मेवेति। ननु विधानप्रभेदचिन्तायाः कथमध्यायसङ्गतिरित्यत्राह—गुणफलपरत्वे चेति। साध्यभेदनिबन्धनशास्त्रभेदापवादादध्यायसङ्गतिः अवान्तरे तु पूर्वत्र रेवतीवाक्ये युक्तो गुणफलविध्यभावः वाक्यभेदापत्तेः। इह तु गुणफलविधौ न वाक्यभेदः प्रत्युत व्यवस्थाविधावेव वाक्यभेदः इत्युक्तम्। एवं पूर्वपक्षोत्थानात् गुणफलसम्बन्धः सापवाद उक्तः। इह तु तद्भेदाभेदचिन्तया अवान्तरसङ्गतिः। प्रयोजनं तु पूर्वपक्षे वृष्ट्यन्तरकामनायां प्रकृतसौभरे हीषादेरव्यवस्थया प्रयोगः। सिद्धान्ते तु व्यवस्थयेति।

अत्र प्रकाशेनान्यथा पूर्वोत्तरपक्षौ वर्णितौ। तदाह—कैश्चिदिति। यथैव सौभरं फलार्थतया विधेयं तथा क्रत्वर्थसौभरनिधनाश्रितं हीषादिकमप्यविशेषात् फले विधीयते। न पुनः पुरुषार्थसौभरविध्यपेक्षा येन प्रकृतवृष्टिकामप्रत्यभिज्ञा स्यात् ततः क्रत्वर्थसौभरनिधने हीषादिश्रुतेः वृष्टिकामान्तरान्वयात् गुणफलसम्बन्धविधिरिति पूर्वपक्षं कृत्वा कामार्थसौभरे रागतः प्रवृत्तेः शीघ्रत्वात् तदपेक्षैवोचितेति रागतः प्रयुक्तसौभरहीषादिश्रुतिबलात् प्रकृतवृष्टिकामप्रत्यभिज्ञायां निधनव्यवस्थार्थतैव युक्तेति प्रकाशेन राद्धान्तितम्। तच्चिन्त्यमिति। न हि सौभरं क्रत्वर्थमित्यत्र प्रमाणमस्ति। भाष्यकारेण कामनायुक्तस्यैवोदाहृतत्वात्। अस्तु वा क्रत्वर्थत्वं तथापि भाष्योदाहृतपुरुषार्थसौभराश्रयणेनोक्तनित्याविशिष्टानुवादबलेनैव पूर्वपक्षे सिद्धे भाष्यानाञ्जस्यापत्तेः। तथा प्रकृतवृष्टिकामादिपदार्थप्रतीतौ चरमभाविप्रयुक्तितारतम्यस्य नियामकत्वायोगात् नियामकत्वे च व्रीह्यादिपदार्थस्य नित्यकाम्योभयार्थता न स्यात्। बर्हिरादेश्चाङ्गप्रधानार्थत्वं न स्यात्। कपिञ्जलादौ तु यथा प्रयुक्तिनियमः तथा कपिञ्जलनये वक्ष्यातः। इति पूर्वोक्तैव रीतिरिति।

इत्यात्रेयसुदर्शनाचार्यशिष्यस्य श्रीरङ्गनाथसूनोः वरदराजस्य

कृतौ मीमांसानयविवेकदीपिकायां द्वितीयाध्यायस्य

द्वितीयः पादः।

# श्री नयविवेके द्वितीयाध्यायस्य

## तृतीयः पादः

॥ १ ॥ गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत् ॥ १ ॥

रथन्तरमेवास्य सामेत्येवं सामान्तरनिवृत्त्या विशेषणत्वं स्वरसत इति

---

## तृतीयः पादः ।

॥ १ ॥ गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत् ॥ १ ॥

ज्योतिष्टोमे श्रूयते "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामा आग्रयणाग्रान्" इति। तत्र जगत्सामवाक्यं कर्मान्तरविधायकमित्युभयवादिसम्मतम्। तच्च पूर्वपक्षे दृष्टान्ततयोदाहृतम्। यदि रथन्तरसामेत्यादिवाक्यद्वये चिन्ता—किं रथन्तरसामकं ज्योतिष्टोमात् कर्मान्तरं विधीयते, उत तत्रैव निमित्ते गुणविधिरिति। अत्र पादे शास्त्रभेदापवादो व्युत्पाद्यः। अपवादस्याप्यापादितादितरद्रव्यव्यवस्थापनार्थतया शास्त्रभेदपरत्वेन नार्थान्तरतेति नाध्यायभेदः। मुखभेदात् पादभेदः। आनन्तर्यम्। अवान्तरसङ्गतिस्तु पादाद्यतया अस्याधिकरणस्य पूर्वाधिकरणस्य च तत्पादान्ततया पृथङ्न वाच्या। अत्र पादे शास्त्रभेदापवादात् प्रसक्तानुप्रसक्त्याऽवान्तरसङ्गत्या शास्त्रभेदः प्रतिपाद्यः यथा प्रकरणाद्यधिकरणान्तरेषु। ननु रथन्तरसामा इति क्लृप्तसोमसम्बन्धः प्रकृत एव शाब्दं सोमशब्दात् प्रतीयते, न कल्प्यसोमसम्बन्धं कर्मान्तरम्। न च प्रकृतपरत्वे रथन्तरसामपदमनन्वयि रथन्तरं साम यस्येत्ययोगव्यावृत्त्या प्रकृतयागपरत्वव्युत्पत्तेः अतः कथं पूर्वपक्ष इत्यत्राह—रथन्तरमेवास्येति। सत्यमयोगव्यावृत्त्यापि विशेषणतोपपत्तिः मानान्तरपूर्वकविषये, तथापीह शब्दैकसमधिगम्यविषये रथन्तरमेवास्येति साममात्रनिवृत्त्या विशेषणत्वं स्वरसतो युक्तम्। इतरबहुव्यावृत्तिर्हि विशेषणस्य स्वरसतः। अत एवान्ययोगव्यवच्छेदो विशेषणस्वारस्यात्। तत्रायोगान्ययोगयोरपि व्यावृत्तिसिद्धेः।

सामर्थ्यादियमेव समासार्थ इति प्रकृतस्य क्रतोः नायं वाचकः तस्यानेकसामसंयोगात् । अतस्तदेकसामकयागान्तरविधिः; सोमशब्दात् सोमवतो यागस्य लक्षणया प्रतीतेः तद्विधिः । सोमशब्दार्थस्य द्रव्यमात्रस्य विध्यनुपपत्तेर्भावार्थस्य च यागरूपस्य सोमान्वयावगतेः ग्रहाग्रतायाश्च याग एवान्वयात् लक्षणा युक्ता ।

ननु यद्यन्वयात् प्रसिद्धार्थतावगतेः कथं कर्मान्तरविधिः; मैवम्, रथन्तरसामेति प्रकृतेऽनन्वयात् । यदिशब्दस्य च निपातत्वेन पदान्तरार्थपरतन्त्रत्वाद्रथन्तरसामपदसामर्थ्यानुरोधात् अर्थशून्यतापि युक्ता । अथ नार्थशून्यता तदा त्रयः प्रकारास्सन्ति स्वर्गफलरुच्यर्थाध्याहारः यदि

---

ननु प्रकृतप्रतीतिबलात् स्वारस्यहानं युक्तमित्यत्राह—इति सामर्थ्यादिति । लिङ्गविनियोगस्वारस्यानुरोधे हि नियोगः तत्र 'समर्थः पदविधि' रित्यनुशासनात् । सामर्थ्ये सत्येव समासः। सामर्थ्यं च विशेषणविशेष्यतयान्वये सति । सा चान्ययोगव्यावृत्त्या स्वरसत इति सामर्थ्यात् रथन्तरमेवास्य सामेत्ययमेव समासार्थः । न रथन्तरं साम यस्येति रथन्तरसामशब्दः प्रकृतस्य क्रतोरवाचक इति प्रकृतप्रतीतिरेवात्र नास्तीत्यर्थः । तत्र हेतुः—तस्येति । तस्य प्रकृतस्य क्रतोः आज्याद्यनेकसामयोगित्वादित्यर्थः। नन्वेवं यागान्तरविधावपि कथंविशेषणता, तस्यापि चोदकादनेकसामयोगित्वादित्यत्राह—अतस्तदेवेति । तदेकसामकयागान्तरविधौ औपदेशिकैकसामकत्वविरोधात् चोदकावगतानामपि सामान्तराणां निवृत्तिरित्यर्थः । नन्वत्र यज्यश्रुतेः कथं यागान्तरविधिरित्यत्राह—सोमशब्दादिति । नन्वेवं लक्षणैव विधौ दोष इत्यत्राह—सोमशब्दार्थस्येति । मुख्यार्थस्य द्रव्यस्य विधेयत्वानुपपत्तेः तद्युक्तकर्मलक्षणा युक्तेत्यर्थः। नन्वेवं विधियोग्यभावार्थमात्रलक्षणाऽस्तु किमिति विशेषयागलक्षणेत्यत्राह—भावार्थस्येति । समभिव्याहृतग्रहार्थतान्वयानुरोधात् सोमद्रव्यान्वयार्हतया च सोमशब्दात् यागलक्षणैव युक्तेत्यर्थः । ननु यदि रथन्तरसामेति यदियोगात् प्रसिद्धार्थतावगतेः विधिप्रतिबन्धात् निमित्तार्थतैव युक्तेति चोदयति—नन्विति। मैवमिति । उक्तनीत्या रथन्तरसामशब्दस्य प्रकृतेऽनन्वयात् । ननु अप्रकृतपरत्ववत् यदिशब्दात् प्रकृतपरत्वमपि प्रतीयत इति को विशेष इत्यत्राह—यदिशब्दस्य चेति । निपातत्वात् यदिशब्दस्य द्योतकत्वं पदार्थान्तरपरतन्त्रत्वात् रथन्तरसामपदं त्वभिधायकम् । द्योतकाच्च वाचकं बलवदिति वाचकरथन्तरसामपदसामर्थ्यानुरोधात् प्रलम्बत इत्यादिवत् अर्थशून्यतापि यदिशब्दस्य निपातस्य युक्तेत्यर्थः । ननु सति सम्भवे पदानर्थक्यमेव दोष इत्यरुच्या अर्थसम्भवे पक्षत्रयं भाष्यकारेणोक्तमित्याह– अथ नार्थेति । तत्र प्रथमं पक्षमाह—सफलेति । तत्र सफलरुच्यध्या-

रोचते स्वर्गो मे स्यादिति तदा रथन्तरसामानं क्रतुं कुर्यादित्येकः प्रकारः। तत्र चैन्द्रवायवाग्रानिति वाक्यभेदः। अपरोऽपि—यद्यैन्द्रवायवाग्रान्ग्रहीतुमिच्छेत् तदा रथन्तरसामानं क्रतुं कुर्यादिति। अत्र च व्यवहितान्वयः। तदा च न यदियोगे लिङ्; साहि धात्वर्थयोगे। अत्र तु यदियोगः ऐन्द्रवायवाग्रताया इति कामप्रवेदन एवैका लिङ्। अपरा तु विधत्ते। अपरोऽपि प्रकारः—यदि रथन्तरसामहेतुकत्वेनैन्द्रवायवाग्राणां ग्रहणं तदाऽसौ

---

हारे वेदवाक्यस्य वचनव्यक्तिप्रकारमाह—यदीति। नन्वस्मिन् पक्षे रथन्तरसामा सोमः स्यादिति सविधिकं पदजातं परिपूर्णमिति आख्यातान्तरयुक्तं ऐन्द्रवायवाग्रान् गृह्णीयादिति पदजातं कथमन्वेतीत्यत्राह—तत्र चेति। वाक्यभेदेन च तस्मिश्च विधीयमाने यागान्तरे ग्रहाग्रताविशेषगुणविधायकत्वमित्यर्थः। नन्वस्मिन् पक्षे वाक्यभेदोऽध्याहारश्च दोष इति पक्षान्तरमाह—अपरोऽपीति। अस्मिन् पक्षे व्यवहितान्वयमात्रं न वाक्यभेद इत्याह—तत्र चेति। यदि ऐन्द्रवायवाग्रान् ग्रहीतुमिच्छेत् तदा रथन्तरसामानं क्रतुं कुर्यादित्येकवाक्यत्वमस्मिन् पक्षे। ननु यदिशब्दस्य तस्मिन्नेव वाक्ये श्रुतत्वात् विधिप्रतिबन्धः स्यादित्यत्राह - तदा चेति। न हि वाक्ये यदिशब्दसत्तामात्रं विधिप्रतिबन्धकं राद्धान्तेपि विध्यभावापत्तेः किन्तु त्रिधायिकया लिङा तद्योगः। न च व्यवहितान्वयपक्षे यदियोगे लिङ्। अतो न विधिप्रतिबन्ध इत्यर्थः। कथं पुनरत्र यदियोगे लिङ् न भवतीत्यत्राह—सा हीति। हिर्हेतौ। यस्माल्लिङ् प्रकृतिभूतधात्वर्थस्य यदियोगे सति सा भवति यथा यदि यजेदिति। साक्षाल्लिङः तद्योगसम्भवात्। इह तु न तथेत्याह—अत्रेति। ऐन्द्रवायवाग्रतयैवात्र यदियोगो न लिङ्प्रकृतिधात्वर्थेनेत्यर्थः।

नन्वस्मिन् पक्षे विधायकलिङ्प्रत्ययद्वयश्रवणे वाक्यभेदः स्यादित्यत्राह—इति कामेति। कामप्रवेदनेऽकच्चिचति कामप्रवेदने एका लिङ्। कामप्रवेदनमिच्छाद्योतनम्। अपराविधायिकेति न वाक्यभेदः। न चैवं वचोऽन्तरेण निमित्ततैवोक्तेति वाच्यम्। यतो वचोभङ्ग्या विशिष्टविधिः स्वर्गकामादिवदैन्द्रवायवाग्रग्रहणे चान्यतः प्राप्त्यभावादित्यर्थः। नन्वस्मिन् पक्षे व्यवहितान्वयो दोष इत्यरुच्या पक्षान्तरमाह—अपरोऽपीति। तमेव वचनव्यक्तिपुरस्सरं दर्शयति—यदीति। यदि रथन्तरसामहेतुकमैन्द्रवायवाग्रग्रहणं तथा हेतुभूतो रथन्तरसामा सोमः कर्तव्यः तत्रापि वचोभङ्ग्या विशिष्टविधिरेव। इयान् विशेषः एका हेतुहेतुमतोर्लिङिति विहितालिङ्। अपरा विधायिका प्रधानस्याङ्गानुष्ठाने निमित्तत्वात्। रथन्तरसाम्नः क्रतोः ऐन्द्रवायवग्रहाग्रतां प्रति हेतुत्वम्। अतः सर्वथा विशिष्टयागान्तरविधिरेवेति निगमयति—

कर्तव्य इत्येका हेतुहेतुमतोर्लिङ् अपरा तु विधत्त इति कर्मान्तरविधिरेव। तदुक्तम्—

यदिशब्दपरित्यागो रुच्यध्याहारकल्पनम्।
व्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङ्॥ इति।

ननु विरोधिसामान्तरनिवृत्त्यापि रथन्तरविशेषणं युक्तं; मैवम्, पृष्ठे हि प्रयोगावस्थायां विरोधात् बृहतो निवृत्तिर्युक्ता। रथन्तरसामेति तु क्रतौ

---

इति कर्मान्तरेति। ननु सर्वसामनिवृत्त्यभावेपि विरोधिसामान्तरनिवृत्त्यापि रथन्तरस्य विशेषणत्वं प्रकृत एव सम्भवति विरोधिनिमित्तत्वान्निवृत्तिरिति चोदयति-नन्विति।

मैवमिति। हि यस्मात् विरोधिसामान्तरनिवृत्त्या विशेषणत्वं रथन्तरस्य पृष्ठस्तोत्र एवोपपद्यते। न क्रतौ। बृहद्रथन्तरयोश्च पृष्ठस्तोत्र एवान्वयः साम्ना स्तुवीतेति साम्नां स्तोत्रापूर्व एवाङ्गत्वात्। अतो न क्रतौ बृहन्निवृत्त्या विशेषणत्वं युक्तमित्यर्थः। ननु तर्हि पृष्ठ एव विशेषणत्वमस्त्वित्यत्राह—रथन्तरेति। रथन्तरसामपदस्य सामसमानाधिकृतत्वात् क्रतावेव सामवति विशेषणत्वं वाच्यम् न पृष्ठ इत्यर्थः। प्रकृते च क्रतावनेकसामके स्वारसिकं विशेषणत्वं न सम्भवति इति पूर्वमेवोक्तमित्याह—क्रतौ त्विति। नन्वेवं यागान्तरविधिपक्षे प्रयुक्त्यन्तरपर्यन्ताधिकारान्तरकल्पनेति गौरवं स्यात्। तथा रथन्तरैकसामकत्वे ग्रहाग्रत्वविशेषणविशिष्टयागान्तरविधिर्वाच्यः। स चानुपपन्नः रथन्तरसाम्नः क्रतुसम्बन्धायोगात्। स्तोत्राङ्गत्वात् अग्रतायाश्च ग्रहणविशेषणत्वमेव न क्रतुविशेषणत्वं अतः कथं विशिष्टयागान्तरविधितया पूर्वपक्ष इत्याह—इति पूर्वपक्ष इति। अयं भावः—विनियोगसामर्थ्याधीननियोगान्तरावगतिबलात् प्रयुक्त्यन्तरपर्यन्ताधिकारान्तरकल्पनमपि न दोषः विश्वजिदादिवत्। रथन्तरसाम्नश्च क्रतुविशेषणत्वं स्तोत्रद्वारा परम्परया युक्तमेव। अग्रतायाश्च स्वाश्रयग्रहणद्वारा विशेषणता। अतो न सङ्कटं किञ्चित्।

राद्धान्तमाह—प्रकृतेति। कर्मान्तरविधिपक्षेपि यदि परम्परया रथन्तरस्य यागविशेषणता स्तोत्रवतो यागस्य सामसम्बन्धात् तर्हि प्रकृतप्रत्यभिज्ञाबलात् प्रकृत एव यागे पृष्ठप्रयोगं प्रति रथन्तरमेव पृष्ठप्रयोगवतः सामाऽस्येति विग्रहे समासाङ्गीकारात् रथन्तरसामपदस्यान्वयो युक्तः। कथं तर्हि विशेषणत्वमित्यत्राह—पृष्ठप्रयोग इति। किञ्च यदिपदान्वयार्थं प्रकृतपरतैव युक्तेत्याह—यदिपदेति।

---

१. B एकैव

प्रयुक्तः, न पृष्ठे। क्रतौ तु सर्वसामनिवृत्त्यैव विशेषणता युक्तेति पूर्वः पक्षः।

प्रकृतक्रतुप्रत्यभिज्ञानात् यदिपदार्थान्वयार्थं तत्परित्यागकल्पनादेश्च गत्यन्तरे सत्ययुक्तत्वात् प्रकृत एव पृष्ठप्रयोगगतविरोधिबृहन्निवृत्त्या विशेषणत्वोपपत्तेः रथन्तरमेव पृष्ठप्रयोगवतः क्रतोः साम यस्येत्यन्वयः।

ननु पृष्ठप्रयोगापेक्षं विशेषणमसमर्थम्; मैवम्, एवंभूतैव हि प्रकृतक्रतौ अन्यनिवृत्तिरवगतेति गमकत्वात् सामर्थ्यमिति राद्धान्तः। शास्त्रभेदापवादात् सङ्गतिः।

॥ २ ॥ अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ॥ ३ ॥

आन्ध्राणां क्षत्रिये राजशब्दः, पालनादिकर्तर्यार्याणाम्। आर्यप्रयोगश्च

---

ननु निपातत्वात्तस्य परित्यागादिकल्पनोक्तेत्याह—तत्परित्यागेति। प्रलम्बत इत्यादौ तु गत्यन्तराभावादानर्थक्यं प्रशब्दस्य युक्तं इह तु गत्यन्तरमस्तीत्यर्थः। ननु पृष्ठप्रयोगापेक्षित्वे सापेक्षत्वादसामर्थ्ये समासो न स्यादिति चोदयति—नन्विति। मैवमिति। राद्धान्ते हि रथन्तरसामशब्दो यदि सहितो गुणविधानार्थं प्राप्तानुवादः। प्राप्तिश्च प्रकृते यागे रथन्तरस्य पृष्ठप्रयोगावस्थायामेवेति तत्रैव विरोधिबृहन्निवृत्त्याऽन्यनिवृत्तिरवगतेति तदवस्थरथन्तरविशिष्टक्रतुगमकत्वात् सामर्थ्यमिति समासोपपत्तिरित्यर्थः। ननु प्रधानभूतवाचकरथन्तरसामपदस्य स्वारस्यहानिः परतन्त्रनिपातयदिपदानुरोधान्न युक्ता। प्रत्युत जगत्सामवाक्यसाहचर्यात् कर्मान्तरविधिरेव युक्त इत्यत्राह—इति राद्धान्त इति।

अयमाशयः यदिपदानन्वयविशिष्टविधिगौरवप्रकृतप्रत्यभिज्ञाबाधप्रयुक्तयन्तरपर्यन्ताधिकारकल्पनादिबहुदोषपरिहारार्थं प्रधानस्य स्वारस्यहानिमात्रं युक्तम्। एतच्चासमर्थसमासमङ्गीकृत्योक्तम्। परमार्थतस्तु रथन्तरं साम यस्येति अयोगव्यावृत्त्या वाजपेयस्येतिवत् परम्परासम्बन्धेऽपि मुख्यैव षष्ठी रथन्तरसम्बन्धिपृष्ठसम्बन्ध इति नासमर्थसमासता। अतो रथन्तरसामके क्रतौ निमित्ते ग्रहाग्रतारूपगुणमात्रविधिरेव। निमित्तत्वं च क्रतोः पृष्ठप्रयोगविभक्ततया जगत्सामवाक्येने ह्यगत्यन्तरमस्तीति कर्मान्तरविधिरेवेति। ननु राद्धान्ते शास्त्रभेदासाधनात् कथमध्याये सङ्गतिरित्यत्राह—शास्त्रभेदेति।

॥ २ ॥ अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ॥ ३ ॥

अस्ति राजसूयः राजसूयेन स्वाराज्यकामो यजेतेति। तत्रावेष्टिर्नामेष्टिः श्रुता—आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा ऐन्द्रमेकादशकपालमृषभो दक्षिणा

विरोधे बलवानिति यववराहादिषु दर्शितम्। अतो ब्राह्मणवैश्ययोरपि राजसूयावेष्टेः सम्भवाद्यदि ब्राह्मणो यजेतेत्यादि निमित्तार्थम्।

नन्वार्यवरपाणिनिना राज्ञः कर्म राज्यमित्यर्थे राजाऽसे इति विशेषस्मृतेः पूर्वसिद्धो राजेत्यान्ध्रप्रसिद्धिनिबन्धनेति क्षत्रिय एव राजा। स्मृतितो ह्यर्थविशेषेऽपि शब्दस्य साधुतानियमोऽस्त्र्यंगोण्यादौ दर्शितः;

---

बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा इत्यादि। तत्सन्निधाविदमपरं श्रुतम् - यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये कृत्वा आहुतिमाहुतिं हुत्वा तमभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवं इति। तत्र चिन्ता—किं यदिब्राह्मण इत्यादिश्रवणं निमित्तार्थतया न शास्त्रान्तरं उत कर्मान्तरविधायकतया शास्त्रान्तरं इति। तदर्थमियं चिन्ता। किं राजसूयवाक्ये राजशब्दः परिपालनादिकर्तृवाचकः उत क्षत्रियजातिवाचक इति। अस्य च पादे अपवादापवादात् सङ्गतिः। अध्यायेऽवान्तरे च भवनाथेनोत्तरत्र स्वयमेव वक्ष्यते। ननु राजशब्दस्य क्षत्रियजातौ परिपालनादिकर्तरि च प्रयोगाविशेषात् कथं पालनादिवाचित्वनिर्णयेन पूर्वपक्ष इत्यत्राह—अन्ध्राणामिति। स्यादेतदेवं यदि प्रयोगद्वये विशेषो न स्यात् अस्ति च विशेषो जातौ राजशब्दोऽन्ध्राणां म्लेच्छानां प्रसिद्धः म्लेच्छैस्तत्र प्रयुज्यत इति यावत्। पालनादिकर्तर्यार्याणाम्[1]। भवत्वेवं विशेषः तथापि किमित्यत्राह - आर्यप्रयोगश्चेति। यद्यपि पिकनेमनये म्लेच्छव्यवहारस्यापि शक्तिकल्पकत्वमुक्तं तत्रार्यव्यवहारेण सहविरोधाभावे। तद्भावे तु यववराहनयात् आर्यव्यवहारस्य बलवत्त्वमुक्तम्। ततश्च पालनादिकर्तर्येव राजशब्दस्य शक्तिनिश्चयात् ब्राह्मणवैश्ययोरपि राजत्वात् राजसूयेऽधिकारात् तदन्तर्गतावेष्टावपि तयोः प्राप्तेः यदिब्राह्मण इत्यादि निमित्तार्थमेव तदाह—अतो ब्राह्मेति।

नन्वार्यवर्येण पणिनिना पत्यन्तपुरोहितादिभ्यो यगिति सूत्रे कर्मार्थे पुरोहितादिगणे पाठे राज्ञः कर्म राज्यमित्यर्थे राज्यशब्दात् असमासविषये राजाऽसे इति यत्प्रत्ययस्मृतेः पालनादिराज्ययोगात् पूर्वमेव प्रसिद्धो राजशब्दार्थं उपेय इति म्लेच्छप्रसिद्धिरेव स्मृतिसङ्गृहीतेति क्षत्रियजातिरेव राजशब्दार्थं इति ब्राह्मणवैश्ययोरप्राप्तिरेवेति चोदयति—नन्वार्येति। असिद्धसमासे निबन्धा सङ्ग्रहीता। ननु शाब्दस्मृतेः शब्दसाधुत्वमात्रे नियामकत्वं नार्थविशेष इति कथं ततो वाच्यनिर्णय इत्यत्राह—स्मृतीति। मैवमिति। शाब्दस्मृतितो वाच्यविशेषं मामंस्थाः; प्रयोगमूला हि शाब्दस्मृतिः अतस्तदनुसारादत्र प्रकृतिप्रत्ययविभागेन साधुत्वमात्रार्थतया

---

1. प्रत्व B

मैवम् । आर्यानार्यविप्रतिपत्तौ आर्यप्रयोगो बलवान् वाक्यशेषादिति निर्णीतम् । अतः स्मृतिरप्यार्यप्रयोगमूलैव युक्तेति साधुत्वमात्रार्था स्मृतिः । पालनादिकर्तैव तु राजार्थः । पालयितर्यप्यान्ध्राणां प्रयोगात् सार्वभौमत्वादपि बलवत्त्वम् ।

न चार्याणां क्षत्रियेऽपि प्रयोगो लोकसिद्धः किन्त्वेतदधिकरणसिद्ध एव । एवञ्च क्षत्रियस्य विहितं पालनादीति तदर्हत्वाद्विशेषेण प्रयोगो-

---

वर्णनीया । तच्च ब्रह्मः खः क्रतौ इत्यहीनादावप्येवमेवेत्यर्थः । ननु स्मृतेरनार्यप्रयोगमूलत्वेन तस्य ज जातौ दर्शनात् मूलप्रयोगविरोधाभावात् समूलायाः स्मृतेः साधुतामात्रार्थतया अन्यथावर्णनं न युक्तमित्यत्राह—आर्यानार्येति । स्यादेतदेवं यदि मूलत्वमनार्यप्रयोगस्य भवति तत्तु नास्ति आर्यानार्यप्रयोगयोरन्योन्यविरोधे वाक्यशेषानुगृहीततया आर्यप्रयोगस्य बलवत्त्वात् अनार्यप्रयोगो बाधित एवेति यवादौ दर्शितत्वादित्यर्थः ।

ननु टीकादौ वाच्यनिर्णायकत्वमनार्यप्रयोगस्योक्तम् । अतोऽत्रापि तथेति युक्तं तन्मूलत्वं स्मृतेरित्यत्राह—अतः स्मृतिरपीति । युक्तमविरोधे टीकादिषु तथा । इह तु विरोधान्न तथेति शाब्दस्मृतिरपि प्रबलार्यप्रयोगमूलैव युक्तेत्यर्थः ।

नन्वेवं सति कथं स्मृतिरित्यत्राह—साधुत्वेति । निगदव्याख्यानमेतत् । ननु युक्तं यवादौ आर्यप्रयोगस्य बलवत्त्वं वाक्यशेषानुग्रहात् इह तु न वाक्यशेष इति नार्यप्रयोगस्य बलवत्त्वमिति । ततः कथं पालनादिकर्तृवाच्यत्वनिर्णय इत्यत्राह—पालनादीति । सत्यमत्र वाक्यशेषो नास्ति तथाप्यत्र आर्यव्यवहारस्य यवादिवत् वेदानुगृहीतत्वमस्त्येव यदियोगाद्धि यदिब्राह्मण इत्यादिवाक्यानां निमित्तार्थता स्वरसतो भाति अन्यथा विशिष्टविधौ गौरवं यदिशब्दार्थहानादिकं च स्यात् । अतो यत्रार्थवादस्वरसानुरोधान्निर्णयः तत्र विधिवाक्यस्वरसानुरोधान्नभवतीति को नु खलु न्यायविद्ब्रूयात् । अतोऽत्रापि वाक्ये वेदस्वरसानुगृहीतार्यप्रयोगबलवत्त्वात् पालनादिकर्तैव राजशब्दार्थ इत्यर्थः । किञ्च सार्वभौमत्वेन बहुतराविवादादपि पालनादिकर्तृप्रयोगस्य बलवत्त्वमित्याह—पालयितर्यपीति । जातौ प्रयोगस्तु न तथेत्याह—न चेति । आर्याणां तु जातौ प्रयोग एतत्सिद्धान्ताधीन एव न वृद्धव्यवहारमात्रसिद्ध इत्यर्थः । कथं तर्हि जातौ प्रचुरप्रयोग इत्याशङ्क्य सालम्बनं तदुपपादयति—एवं चेति । जात्यर्थतया विहितपालनाद्यर्हतया जातौ विशेषप्रयोगोपपत्तिरित्यर्थः ।

पालनादिकर्तृवाचित्वे राजशब्दस्य स्मृत्यन्तरविरोधेन प्रयोगनियमानुपपत्तिं चोदयति—नन्विति । राज्ञोऽपत्यमित्यर्थे राजश्वशुराद्यदिति यदन्ततया

पपत्तिः । ननु राजापत्ये राजन्यशब्दः स्मृतः । स च क्षत्रियार्पकः; पालके च राजनि पालकभूतब्राह्मणापत्येपि राजन्यशब्दः स्यात् । मैवम्—राजापत्यमित्यत्र राजशब्दो नाञ्जस एव गौण एव आर्यप्रयोगबलवत्त्वात् ।

विवरणेत्वधिकमुक्तम्-राज्यं सत्क्षत्रियस्य धर्मः स्मृतिविहितमिति पूर्वं राज्यशब्दः पालनादौ प्रसिद्धो वाच्यः । तदा च राज्यकर्तृतोपाधिक एव राजशब्दोऽवयवार्थाभावेऽपि इष्यते । अतः क्षत्रियमात्रे राजशब्दो राज्यार्हत्वादेवेति "यदि ब्राह्मणो यजेते"त्यादि निमित्तार्थमेवेति पूर्वः

---

राजन्यशब्दः स्मृतः । स च क्षत्रियजातिपरतयैव लोके नियतं प्रयुक्तः । ततः किमित्यत्राह—पालकेति । पालनादिकर्तुः राजशब्दार्थत्वे ब्राह्मणादेरपि तच्छब्दवाच्यतया तदपत्येऽपि राजन्यशब्दः स्यात् । न च तथा वृद्धव्यवहारे प्रयोग इत्यर्थः मैवमिति । राजश्वशुराद्यदित्यत्र सूत्रे यत्प्रत्ययप्रकृतिभूतो राजशब्दो राज्यार्हतया जातौ गौण एव । गौणार्थाज्जातिवाचिनो राजशब्दात् यत्प्रत्ययस्मृतेः राजन्यशब्दस्य तत्रैव नियतप्रयोगोपपत्तिरित्यर्थः । कुत एवमङ्गीकार इत्यत्राह—आर्येति । लब्धयां चाधिको हेतुरुक्त इत्याह—विवरणे त्विति । तत्र हि भाष्यानुसारादेव चिन्ता—किं राज्ययोगाद्राजा उत राजयोगाद्राज्यमिति । तदर्थमियं चिन्ता किं धर्मस्मृतिवशेन शब्दस्मृतिवर्णनं उत विपरीतं इति तत्र पूर्वपक्षमाह—राज्यं सदिति । साक्षादनुष्ठेयपरतया धर्मस्मृतिः शाब्दस्मृतेरन्तरङ्गेति धर्मस्मृतिर्विरोधे ग्राह्या । तत्र हि राज्यं सत्क्षत्रियस्य विहितमिति तदन्वयात्पूर्वमेव पालनादौ राज्यशब्दः प्रसिद्धो वाच्यः । ततो राज्ययोगाद्राजेत्यर्थः । ननु राजशब्दात् यकि कृते राज्यशब्दनिष्पत्तिः नतु राज्यशब्दात् राजशब्दनिष्पत्तिः प्रत्ययादिषु लुगनुशासनाभावात् । अतोऽवयवार्थाभावात् राजशब्दस्य कथं राज्ययोगाद्राजेत्यत्राह—तदा चेति । सत्यमवयवार्थाभावः तथापि यथा धर्मस्मृतिबलात् राज्यस्य पूर्वसिद्धता तथा तत्कर्तृतोपाधिक एव राजशब्दः अत्रोपाधियोगनिबन्धनत्वाद्यौगिकत्वं न पङ्कजादिवत् सावयवत्वेन यौगिकत्वम् । अतो धर्मस्मृतिवशात् शाब्दस्मृतिः राज्ञः कर्म राज्यमित्युक्ते कथं तत्कर्ता राजा प्रतीयतामित्येतदर्था उन्नेया । औदमेघिः पिता उदमेघ इतिवत् ।

नन्वेवं राज्ययोगाद्राजत्वे तद्योगविधुरजातिमात्रे प्रयोगो न स्यादित्यत्राह—अत इति । तदर्हतया स प्रयोगो गौण इत्यर्थः । कर्तृवाचित्वात् । फलितमुपसंहरति—इति यदीति । ननु रूढेर्बलीयस्त्वे जातौ रूढित्वे सति न पालनाद्युपाध्यधीनत्वं युक्तम् । तथा ब्राह्मणादेरपि राजपदवाच्यतया राजसूयाधिकारे वाक्ये राजपदं व्यर्थं व्यावर्त्याभावादित्यत्राह—इति पूर्व पक्षः इति । अयं भावः न तावत् रूढिरत्र

पक्षः। वाक्यशेषबलाद्धि आर्यप्रयोगस्य बलवत्त्वमुक्तम्। तदत्र विपरीतं राज्ञः कर्म राज्यमिति स्मृतिनिबन्धनबलात् अनार्यप्रयोगस्यैव बलवत्त्वम्। समूला च स्मृतिर्न कथंचिद्व्याख्यानमर्हतीति बाधिते आर्यप्रयोगे अप्रतिपक्षो ऽनार्यप्रयोगः पिकादिष्विव ग्राह्यः।

यच्च राज्यं सत् क्षत्रियस्य विहितमिति पूर्वसिद्धं राज्यमित्युक्तम्

---

'सम्भवति। क्षत्रियजातेरभावात्। सिद्धान्तेपि विशिष्टमातापितृजन्यतया क्रियाविशेषोपाधिकत्वाद्राजपदस्य तथा उक्तन्यायेन पूर्वपक्ष एव दृढ इति राजपदमधिकारवाक्यगतमुपलक्षणार्थं भवतु तथापि कार्यान्वियस्याहानादिति।

राद्धान्तमाह—वाक्यशेषेति। क्षत्रियजातिवचनो राजशब्दः न पालनादिकर्तृवचनः अनार्याणां जातौ प्रयोगात्। न चार्यप्रयोगस्य बलवत्त्वात् ऋत्वर्थता। न हि आर्यप्रयोगत्वं बलवत्त्वे हेतुः। किन्तु वाक्यशेषादिसहकृतत्वं, तदिह नास्ति प्रत्युत विपरीतम्। अनार्यप्रयोगस्यैव राज्ञः कर्म राज्यमिति आर्यवर्यपाणिनिस्मृतिसङ्गृहीतत्वेन बलवत्त्वं गवादिविषयप्रयोगवत्। तत्सङ्गृहीतत्वं च राज्ञः कर्म राज्यमित्यत्र कोऽसौ पूर्वसिद्धो राजेत्यपेक्षायां अनार्यप्रयोग एव दृष्टार्थः तन्मूलत्वेन ज्ञायते। अतोऽनादिस्मृतिमूलतया तस्यैव शक्तिनिश्चायकता। न च विध्युद्देश स्वारस्यानुरोधात आर्यप्रयोगस्य बलवत्ता। न हि विधिगौरवाधीनोऽभिधाननिश्चयः। विधेरभिधाननिश्चयोत्तरकालीनत्वात्। न ह्यत्र विध्युद्देशे कर्तृवाच्यताधीः वराहं गावोऽनुधावन्तीत्यादिवाक्यशेषेष्वेव तदर्थताधीः। न च जातिवाचकत्वे राजशब्दस्य कस्यचिदप्यशक्यानुष्ठानतैतत्सम्बन्धिनः राजशब्दस्य न च स्मृतिसङ्गृहीतव्यवहारापादितार्थनिमित्तकश्च वेदार्थावगम इति स्वनिमित्तविधातायालम्। अतोऽत्र स्मृतिसङ्ग्रहबलात् अनार्यप्रयोगस्य बलवत्त्वमित्यर्थः।

ननु प्रकृतिप्रत्ययविभागमात्रार्थतया स्मृतिरन्यथासिद्धा अश्वकर्णादाविवेत्यत्राह—समूला चेति। मूलासम्भवाद्धि स्मृतेर्बाधः अन्यथा वर्णनं वा। इह तु आन्ध्रप्रयोगस्यैव मूलत्वमुक्तमिति न साऽन्यथाव्याख्येयेत्यर्थः। नन्वेवमपि न स्मृतिरन्यथासिद्धा अश्वकर्णादाविवेत्यत्राह—समूले चेति। मूलासम्भवाद्धि स्मृतेर्बाधः अन्यथावर्णनं वा। इह त्वान्ध्रप्रयोगस्यैव मूलत्वमुक्तमिति न सा अन्यथा व्याख्येयेत्यर्थः। नन्वेवमपि न स्मृतिः शक्तिनिश्चायिकेति कुतस्तन्निश्चय इत्यत्राह—इति बाधित इति। स्मृत्यसङ्ग्रहदोषादार्यप्रयोगे गाव्यादिप्रयोगवद्बाधिते प्रतिपक्षशून्योऽनार्यव्यवहारः पिकादिष्विव शक्तिनिश्चायक इत्यर्थः। विवरणोक्तं पूर्वपक्षमनुभाषते—यच्चेति। तदयुक्तमिति। शब्दार्थविषये शाब्दस्मृतेरधिकारादुपजीव्यत्वाच्च

तदयुक्तम् । शाब्दस्मृतिवशेन हि शब्दार्थविषये धर्मस्मृतिवर्णनं युक्तमिति राज्यशब्दः परिपालनादावपि इति गृहीत्वा निमित्तमनालोच्य धर्मस्मृतिषु व्यवहार उपपन्नः । असार्वभौमोऽपि हि स्मृतिबलात् बलवान् प्रोक्षणीवत् । अतः क्षत्रियस्यैव राजसूयावेष्टावधिकारात् ब्राह्मणादेर्यागविधायकानि वचनानीति राद्धान्तः ।

नन्वन्नाद्यकामाधिकारबलादवेष्टेः ब्राह्मणादिसम्भवान्निमित्तार्थता युक्ता । मैवम् । अधिकारान्तरमवेष्टेर्नास्तीति कृत्वा चिन्तेयम् ।

---

बलवत्त्वम् । धर्मस्मृतेस्तु अनुष्ठेयनिष्ठत्वात् तच्छाब्दस्मृतेरप्युपजीवकत्वाच्च दुर्बलत्वम् । अतः शाब्दस्मृतिवशेनैव धर्मस्मृतिवर्णनं युक्तम् । राजशब्दस्य नानेकेषु पालनादिषु समुदायशक्तिर्युक्ता, अनेकशक्तिकल्पनापत्तेः । तद्वर्णनप्रकारमाह— इति राज्यशब्द इति ।

यस्मात् शब्दार्थविषये धर्मस्मृतेः शाब्दस्मृतिर्बलवती अतो राज्यशब्दः परिपालनादिष्वपि दृष्ट इत्येतावन्मात्रेण कथं निवृत्त इति निमित्तमनालोच्यैव धर्मस्मृतिषु व्यवहारः । मन्वादयो हि पदार्थस्य कर्तव्यताबोधमात्र एव प्रवृत्ताः नतु शब्दार्थबोधने । अतस्तेषां तत्राभियोगाभावात् इदमौपाधिकं इदं मुख्यमित्येवं शब्दप्रवृत्तिनिमित्तमनालोच्यापि व्यवहारो न विरुद्धः । पाणिन्यादयस्तु शब्दार्थनिर्णयायैव प्रवृत्ता इति तेषां तत्राभिधेये अभियोगविशेषोऽस्ति तत्स्मृतिवशाद्राज्यशब्दो राज्ञः कर्म राज्यमिति यौगिकः ब्राह्मण्यादिशब्दवत् प्रकृतिप्रत्ययशक्तेरवश्यकल्प्यत्वात् । अतस्तदवयवभूतराजशब्दार्थश्च अनार्यव्यवहारात् क्षत्रिय एवेति तदवगमपूर्वक एव राज्यशब्दार्थबोध इत्यर्थः । ननु अनार्यप्रयोगोऽसार्वभौम इत्युक्तमित्यत्राह—असार्वेति । असार्वभौमोऽपि प्रयोगः प्रोक्षणीशब्दवत् स्मृतिबलात् बलवानित्यर्थः । राजशब्दस्य जातिवाचित्वे यत्फलितं तदुपसंहरन्नाह— अत इति । अतो राजसूये राजशब्दपदार्थस्य क्षत्रियस्यैवाधिकारात् ब्राह्मणवैश्ययोः अप्राप्तेः निमित्तार्थत्वाभावात् यदि ब्राह्मण इत्यादिवाक्यानि यागान्तरविधायकानीत्यर्थः । नन्वेवं यागान्तरविधौ प्रकृतप्रत्यभिज्ञाबाधः । प्रयुक्तिपर्यन्ताधिकारान्तरकल्पनं यदिपदस्यानर्थक्यकल्पनं च स्यादित्यत्राह— इति राद्धान्त इति । विनियोगबलादवगतनियोगान्तरवशात् सर्वमिदं युक्तमित्यर्थः ।

ननु क्षत्रियवाचित्वेपि राजशब्दस्य एतयाऽन्नाद्यकामं याजयेत् इति अवेष्टेरन्नाद्यकामश्रुतेः तद्बलात्तत्र ब्राह्मणादिप्राप्तौ निमित्तार्थता युक्तेति विफला चिन्तेति चोदयति—नन्विति । मैवमिति । एतदेव वाक्यमवेष्टेर्नास्तीत्युपेत्य चिन्तेत्यर्थः ।

ननु राजशब्दार्थनिरूपणं राजसूयेऽपि शक्यते तत्कथमवेष्टौ कृत्वा चिन्ता; मैवम्, नहि राजसूये राजशब्दार्थविशेषनिबन्धनः शास्त्रभेदः। राजसूयावेष्टौ यदि ब्राह्मणो यजेतेत्येवमादौ क्षत्रिये राजनि ब्राह्मणादेर्यागान्तरविधेःशास्त्रभेदः। अतो लक्षणसङ्गतिः। पूर्वाधिकरणपूर्वपक्षनयेन चेह सिद्धान्ते यदिशब्दसमर्थनादवान्तरसङ्गतिरवेष्टावेवेति सूक्ता कृत्वाचिन्ता।

नन्वन्तर्गतावेष्टियागद्वये दक्षिणाद्वयात् प्रयोगभेद उक्तः एकादशे प्रयोगैक्ये च मध्यस्थता। सा कथम्? एवं, यागद्वयमध्यतयापि मध्ये निधायेति समाधेयम्। परमते तु बहिरवेष्टावप्येषा चिन्ता। राजकर्तृता

---

ननु कृत्वाचिन्तां विनापि राजशब्दार्थनिरूपणं राजसूयवाक्ये शक्यमिति सा व्यर्थेति चोदयति—नन्विति। मैवमिति। सत्यं शक्यं तथापि तत्फलवच्छास्त्रभेदस्तत्र नास्ति। तदभावे चात्रासङ्गतिः केवलाधिकारचिन्ताया अत्रासङ्गतत्वात् अवेष्टौ तु निरूपणे नास्तीत्याह—राजसूयेति। अतोऽध्यायसङ्गतिरवेष्टौ उपेत्य चिन्तायां सिद्ध्यतीति कृत्वाचिन्तैव पञ्चिकायामुक्तेत्याह—अत इति। पूर्वाधिकरणेनावान्तरसङ्गतिलाभादपि कृत्वाचिन्तैवोचितेत्याह—पूर्वेति। ननु राजसूयाधिकारानुप्रविष्टावेष्टियागद्वये दक्षिणाभेदात् प्रयोगभेद एकादशोक्तः प्रयोगैक्ये च मध्यस्थता तत्कथं मध्येनिधायेति मध्यश्रुतिरिति कश्चिच्चोदयति—नन्विति। अन्तर्गतं राजसूयाधिकरणानुप्रविष्टम्। परिहरति—मैवमिति। यागद्वयमध्यतामात्रेण मध्यश्रुतिनिर्वाह इत्यर्थः। परैस्तु कृत्वाचिन्तां विनैवान्नाद्यकामाधिकारेऽप्येषा चिन्ता कृता तदाह—परमते त्विति। बहिरवेष्टिः अन्नाद्यकामाधिकारा।

ननु तत्र राजशब्दाश्रुतेः कथं तदर्थविषया चिन्ता तत्राह—राजेति। तत्र हेतुरनेकेति। सत्यमन्नाद्यकामवाक्ये राजश्रुतिर्नास्ति तथापि राजसूयवाक्यस्थयजिना अवेष्ट्यभिधानात् यज्यवस्थितयागानां च प्रयोगावस्थायां राजविधेरवेष्टिप्रयोगेपि राजविधिः। सा चावेष्टिरुत्पत्त्युपस्थिता। तदुत्पत्तिश्च अन्नाद्यकामाधिकारार्थतयापीति वाङ्नियमवत् उत्पत्त्यपूर्वनिविष्टा राजविधिबलात् बहिरवेष्टावपि शाखान्तरीयाङ्गवत् राजेति तत्रापि राजकर्तृकतैवेत्यर्थः।

दूषयति—तन्मतेति। ननु सन्निहितप्रयोज्यावस्थयजिना राजकर्तृकत्वविधिः। सन्निधिश्चाधिकारद्वयार्थं इत्युभयावस्थस्यैव राजकर्तृकत्वं युक्तमिति यत्पूर्वं निपुणंमन्येन समर्थितं तत्राह—नहीति। यद्युत्पत्तिवाक्ये राजश्रुतिरियं स्यात् स्यादयं मनोरथः। तस्याः सर्वाधिकारार्थत्वात्। इह तु राजा स्वाराज्यकामो

च बहिरन्तश्चावेष्टेः अनेकाधिकारावेष्टिप्रयोगे राजविधेः अस्ति। तत्तन्मतज्ञेनैव कृत्वा चि[1]न्तोपगमाद्गमनम्। नहि राजसूयावेष्ट्यधिकारवाक्ये राजश्रुतिरधिकारान्तरेऽपि क्षमेति कारकद्वयान्वयस्य च क्रियापेक्षत्वात् समभिव्याहृतातिनिपुणंमन्यसमर्थनमयुक्तमिति दिक्। शेषं सुगमम्।

## ॥ ३ ॥ आधानेऽसर्वशेषत्वात् ॥ ४ ॥

गुणश्रुतौ हि तद्विधिपरत्वं युक्तम्। तन्मात्रविधौ च लाघवम्। अतो

---

राजसूयेन यजेतेति अधिकारवाक्ये राजश्रुतिः। सा च नाधिकारान्तरेपि राजविधित्वमाह अन्योन्यनिरपेक्षत्वात्। अन्यथा बहिरवेष्टेरपि राजसूयप्रकृत्यपेक्षस्वाराज्याधिकारसिद्ध्यर्थता स्यात्। तथा च वाक्यविरोधः प्रकरणविरोधश्च स्यादिति निपुणंमन्यैः समर्थनमयुक्तमेवेत्यर्थः। ननु अन्नाद्यकामनियोगो राजसूयप्रयुक्त्यपेक्षः गुणफलनियोगवत् प्रयुक्त्यन्तरकल्पनाभीरुत्वात् राजसूयाधिकार विधेः सन्निधिसमाम्नानार्थवत्त्वाच्च। अतो न तत्र ब्राह्मणादिप्राप्तिः। एतयेत्येतच्छब्दाच्च सन्निहितपरात् यादृश्यवेष्टिस्सन्निहिता तादृश्युपस्थाप्या। सा च राजकर्तृकैवेति तत्राह—इति दिगिति। अयं भावः युक्तं फलविधावन्यप्रयुक्त्यपेक्षत्वं अन्वयप्रयुक्ताश्रयरूपविधेयान्तरसम्भवात्। इह तु अविशेषादधिकारद्वयं युगपदेकावेष्ट्युत्पत्तिमपेक्षते। अतो नान्यप्रयुक्त्यपेक्षा। एतच्छब्दोऽपि सन्निहितोत्पत्तिमपेक्षते अधिकारिसम्बन्धाय नाधिकारान्तरान्वितावस्थाम् विरोधात्। अधिकारवाक्ये च राजश्रुतिरिति पूर्वमेवोक्तम्। अतएवैकादशे बहिरवेष्टौ ब्राह्मणादिसत्ता सूत्रे भाष्ये चोक्ता—इति।

## ॥ ३ ॥ आधानेऽसर्वशेषत्वात् ॥ ४ ॥

अनारभ्य श्रुतम्—वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति। तत्र चिन्ता-किं वसन्तादिवाक्यानि निमित्तगुणविधिपराणि उत विशिष्टाधानविधायकानि इति। अत्राध्यायसङ्गतिप्रयोजने उत्तरत्र स्वयमेव वक्ष्यति। अवान्तरसङ्गतिस्तु युक्तं पूर्वत्राप्राप्तेः कर्मविधिः इह प्राप्तेः गुणविधिरस्त्वित्युत्थानात्।

ननु वसन्ते ब्राह्मण आदधीतेति गुणद्वयश्रुतेः आधानस्य चाप्राप्तेः विशिष्टाधानविधिरेव श्रुत्येति कथं पूर्वपक्षः इत्यत्राह—गुणश्रुतौ हीति। यस्माद्गुणश्रुतौ गुण-

---

१. चिन्तावगमात्

वसन्तादिवाक्यैः वसन्तादिब्राह्मणाधिकारद्वयान्वयस्यैकस्यैव विधिर्युक्तः। कारकद्वयान्वयस्य च क्रियापेक्षत्वात् समभिव्याहृताधान[1]गतत्वाधिगतिरित्याधाने वसन्तादिब्राह्मणाद्युभयनियमः। नियमस्य चाधाने तत्प्राप्त्यपेक्षत्वात् संभारविधिवाक्यात् भिन्नं अग्निमाधत्त इति आधानविधानम्।

अथ वा काम्यश्रुतीनामलौकिकाहवनीयापेक्षायां वसन्तादिवाक्ये चाधानस्याग्निकर्मकस्य चाभिधानादाहवनीयादीनां च वाक्यशेषे अग्नि-

---

परं वाक्यं रक्तः पटो भवतीतिवत्। तत्र कर्मविधौ गुणश्रुतिर्व्यर्था। गुणविधौ तु कर्मश्रुतिः आश्रयसमर्पकतयाऽर्थवती। अतः श्रुतिद्वयार्थवत्त्वाय गुणविधिपरत्वं युक्तमित्यर्थः। नन्वेवमपि विशिष्टविधिः किमिति न भवतीत्यत्राह—तन्मात्रेति। नन्वेवमपि गुणद्वयविधौ वाक्यभेदः स्यादित्यत्राह—अत इति। वसन्तादिब्राह्मणाधिकारद्वयान्वयस्यैकस्य विधौ न वाक्यभेद इति तद्विधिर्युक्त इत्यर्थः। ननु कारकद्वयान्वयविधिरनुपपन्नः कारकयोः द्वयोर्मिथोऽन्वयाभावात् तत्राह—कारकद्वयेति। सत्यं साक्षात्कारकयोर्मिथोऽन्वयो न घटते एकक्रियागततया तु घटत एव, प्राकाशावध्वर्यवे ददातीतिवत्। स च समभिव्याहृताधानगततया, न त्वाधानोद्देशेन गुणद्वयविधिः येन वाक्यभेदः स्यादित्यर्थः।

ननु कारकद्वयान्वयविधेः किं वसन्तनियमः फलं किं वा ब्राह्मणनियमः अन्यतरत्रान्यतरश्रुतिवैयर्थ्यं स्यादित्यत्राह—इत्याधानेति। अगृह्यमाणविशेषणत्वादाधानस्येत्युभयनियम इत्यर्थः। नन्वाधाननियमविधिः आधानप्राप्त्यपेक्षः। नान्यत आधानप्राप्तिः अनेन चेद्वाक्यभेदः इत्यत्राह—नियमस्य चेति। विधिबलादुभयनियमफलकान्वयविधौ तात्पर्ये स्थिते तदुपपत्त्यपेक्षया सम्भारविधिवाक्यात् "यदूबाः पुष्ट्यामेव प्रजननेऽग्निमाधत्ते" इत्यादिकादभेदमाश्रित्य अग्निमाधत्त इति इत्यनेनाधानविधेस्तत्प्राप्तिरित्यर्थः। पूर्वपक्षनिर्वाहप्रकारान्तरमाह—अथ वेति। काम्यनियोगाक्षेपाद्वा आधानप्राप्तिः। तथाहि-काम्यश्रुतीनां श्रूयत इति व्युत्पत्त्या श्रुतिर्नियोगः काम्यनियोगानामाहवनीयसाध्यत्वात् तदपेक्षायां तदुत्पादकतया आधानमाक्षिपन्ति। ननु किमिति तदुत्पत्त्याक्षेपः व्रीह्यादिवत् सिद्धस्याहवनीयस्य किमिति नोपादानमित्यत्राह—अलौकिकेति। नन्वलौकिकतया उत्पत्त्यपेक्षायामपि कथमाधानापेक्षेत्यत्राह—वसन्तादीति।

नन्वाधानस्याग्न्युपायत्वावगतावपि कथमाहवनीयोपायताविधिः इत्यत्राह—आहवनीयेति। पञ्चधाग्नीनित्यादिर्वाक्यशेषः। यद्यपि नित्यनियोगस्यापि प्रयुक्ति-

---

1. B गतत्वादधिगतरीत्या

विशेषरूप[1]ताधिगतेः आधानोपायसाध्यतामग्नीनां कामश्रुतय आक्षिपन्तीति वसन्तादिवाक्यानि नियमार्थान्येवेति पूर्वः पक्षः ।

वसन्तादिवाक्येषु हि श्रुतेराधानविधिर्युक्तः । न तावत् आक्षेपात्तत्प्राप्तिः, अश्रुते हि आक्षेपः न श्रुतिमनादृत्य । न च संभारविधिवाक्यात् भेदमाश्रित्य आधत्त इति वर्तमाननिर्देशादपि आधानविधिर्युक्तः । किञ्च आक्षेपे आत्मनेपदाविवक्षायां[2] क्रयादिप्रसङ्गात् आधानश्रुतिरनित्या-

---

शान्तिः तथापि शीघ्रभावित्वेन काम्यनियोगात् प्रयुक्तौ नित्यनियोगः उदास्ते। शीघ्रतापि तस्य लिप्सासूत्रे निपुणतरमुपपादिता । अतः कामश्रुत्याक्षेपात् आधानप्राप्तिरित्यर्थः । उपसंहरति—इतीति । ननु अन्यपरत्वादाधानवाक्यानां कथं काम्यनियोगेन तस्योपायतयाऽऽक्षेपः कथं वा श्रुत्यर्थाधाने विधिमपि परित्यज्य वाक्यार्थान्वयविधिरित्यत्राह— इति पूर्वः पक्ष इति । अयं भावः—अन्यपरादपि वाक्यादवगतामाधानसाध्यतामग्नीनामादाय आधेयतयाऽपेक्षिताहवनीयसिद्धयर्थं तदुपायतया आधानाक्षेपो युक्तः काम्यविधेः । यदा स्तुतिपरादर्थवादादवगता प्रतिष्ठा नियोज्यविशेषणतया रात्रिसत्रे तदा गौरवदोषपरिहाराय वाक्यार्थान्वयविधिरपि युक्त एवेत्यर्थः ।

राद्धान्तमाह—वसन्तादीति । वसन्तादिवाक्येषु स्वतो वस्तुतः साध्यत्वात् श्रौतत्वात् शीघ्रमाधानविधिर्युक्त इत्यर्थः । श्रौतत्वं च विधिसमानपदोपात्तत्वम् । ननु पूर्वपक्षे आधानप्राप्तिरुक्तैवेत्याशङ्क्य किमाक्षेपात् उत एतद्वाक्यादिति विकल्प्याक्षेपपक्षं दूषयति—न तावदिति । तत्र हेतुः—अश्रुते हीति । यस्मात् श्रुतसिद्धयर्थमश्रुताक्षेपो न श्रुतिमनादृत्यैव । अन्यथा सर्वत्राक्षेपात्प्राप्तौ विधानोच्छेदापत्तेः । न चात्राक्षेपोऽपि सम्भवति अलौकिकाहवनीयाधानोपायोपेयभावस्य विधिं विनाऽन्यतोऽनवगमादित्यर्थः । द्वितीयं पक्षं दूषयति—न च सम्भारेति । वर्तमाननिर्देशस्य सम्भारविध्येकवाक्यतापन्नस्य अग्निमाधत्त इत्याधानविधायकत्वं न युज्यते । तथा सति वाक्यभेदप्रसङ्गात् पञ्चमलकारकल्पनं च वसन्तादिवाक्येषु श्रौतार्थविधिहानिरित्याद्यनेकदोषापत्तेः न विद्वद्वाक्यादाधानप्राप्तिरित्यर्थः ।

आक्षेपपक्षे दोषान्तरमाह—किञ्चेति । आक्षेपे हि आदधीतेति श्रुतेरनुवादकतया विधानाभावादात्मनेपदाविवक्षायां क्रयेण वा याचनेन वा अग्न्युपादानप्रसङ्गात् न नियमादग्निनिष्पादनार्थमाधानानुष्ठानमित्याधानश्रुतिरनित्या स्यादित्यर्थः । नन्वाधानविधौ गुणश्रुतिर्व्यर्थेत्युक्तमित्यत्राह—इति ब्राह्मणेति । गुणद्वयविशिष्टाधानविधेर्न किञ्चिदपि व्यर्थं पदमित्यर्थः । नन्वेवं विशिष्टविधौ गौरवं

---

१. B विशेषविशेषताधिगतेः २. A दाविवक्षाया क्रिमादि B वक्षयाकृते समादि

स्यादिति ब्राह्मणादिवसन्तादिविशिष्टाधानविधिरेव युक्त इति राद्धान्तः ।

तत्तद्ब्राह्मणादिकारकानुबद्धं चाधानं भिन्नमेव ।

ननु गुणक्रियाकर्मैकत्वप्रत्यभिज्ञानादभिन्नेति क्रये दर्शितम् । मैवं, युक्तं हि अजादिगुणभेदेऽपि कर्मभूतसोमस्याभेदात् । इह तु तत्तत्कर्तृकाधाने तत्तदाहवनीयाद्युत्पत्तेः प्रतिकारकं कर्मभेदात् न कर्मतः प्रत्यभिज्ञानमित्याधानभेदः । क्रियाभेदमात्रश्च प्रसङ्गात् सङ्गतम् ।

ननु ब्राह्मणाद्याहवनीयादिभेदे साध्यभेदादस्त्येव शास्त्रभेदः । मैवम् ।

---

स्यात् । तथा उभयविशिष्टाधानविधौ उभयनियमः आधाने न स्यात् अन्योन्यान्वयाविधानादित्यत्राह—इति राद्धान्त इति । उभयविशिष्टाधानविधौ हि अर्थादुभयनियम आधाने अरुणैकहायन्योरिव क्रये । अप्राप्तौ विशिष्टविधिरपि न दोषः सोमेन यजेतेत्यादिवदित्यर्थः ।

ननु अस्याधिकरणस्य कथमध्याये सङ्गतिः शास्त्रभेदाभेदचिन्तानात्मकत्वादित्याशङ्क्य सङ्गतिं वक्तुं आधानभेदं साधयति—तत्तद्ब्राह्मणादीति । यद्यप्याधानस्य स्वरूपमेकं तथापि यथा विषयरूपानुबन्धभेदात् नियोगभेदः तथा आधानक्रियापि स्वानुबन्धभूत ब्राह्मणादि कर्तृभेदाद्भिन्नैवेत्यर्थः ।

ननु यथा करणकारकभेदेऽपि सोमाख्यकर्मकारकैक्यात् गुणकर्मणः क्रयस्य प्रत्यभिज्ञानादभेदः तस्य कार्यनिबन्धनत्वात् तथाऽऽधाने कर्तृकारकभेदेऽपि अग्निरूपकर्मैक्यादाधानभेदो न युक्त इति चोदयति—नन्विति । मैवमिति । युक्तः क्रये कर्माभेदादभेदः क्रयस्वरूपस्य वस्तुतः करणभेदेऽपि क्रेतृविक्रेत्रोरभेदात् । न हि क्रीतस्य क्रयान्तरं सम्भवति स्वाम्योत्पत्तिपर्यन्तत्वाद्व्यापारस्य, तत्फलनिरूप्यमेकमेव क्रयणं करणभेदस्य भिन्नानतिद्वारेण सम्भवात् । न चैकदेशक्रयः [1]अचोदनात् । इह तु न तथेति भावः । नन्वाधानेप्याहवनीयस्य सर्वत्रैककस्य साध्यत्वात् कथं कर्मभेद इत्यत्राह—इह तत्तदिति । इहाधानविधावात्मनेपदविवक्षायां ब्राह्मणकर्तृकाधाने ब्राह्मणसम्बन्ध्याहवनीयोत्पत्तिः क्षत्रियकर्तृके च क्षत्रियसम्बन्ध्याहवनीयोत्पत्तिरिति प्रतिकर्तृकारकं कर्मभेदान्न कर्मतः आधानप्रत्यभिज्ञेत्याधानभेद एवेत्यर्थः ।

नन्वेवं आधानभेदेपि कथमध्याये सङ्गतिरित्यत्राह—क्रियेति । आधानभेदमात्रव्युत्पत्तिपरमपीदमधिकरणं इह सङ्ख्याधिकरणमिव प्रसङ्गात् सङ्गतमित्यर्थः। नन्वेवमाधानत्रये तु तत्तद्ब्राह्मणादिसम्बन्धादाहवनीयस्य भेदे साध्यभेदादस्त्येव ।

---

१, B चोदनात् ।

पूर्वपक्षप्रकारभेदे 'अग्निमाधत्ते' इति विधावात्मनेपदादस्त्येव शास्त्रभेदः[१] आधानभेदस्तु नास्तीति राद्धान्त एव तद्भेदः[२] ।

नन्वाधानवाक्यगतलिङा न नियोगानुवादः, सन्निहितनियोगाभावात् अतो विध्यनुबन्धभेदात्[३] शास्त्रभेद एव । मैवम् । अग्नीनां भाव्युपयोगाकलनादीप्सितता युक्ता, न च क्रियाफलस्य नियोगानु[४]गुण्यात् साध्यतेति

---

शास्त्रभेद इति साक्षात्सङ्गतिः कथं नोक्तेति चोदयति—नन्विति । मैवमिति । सत्यं शास्त्रभेदो राद्धान्ते तथापि न साक्षात्सङ्गतिर्वक्तुं युक्तेत्यर्थः । तत्र हेतुः पूर्वपक्षेति । कस्मिंश्चित्पूर्वपक्षप्रकारे राद्धान्ते च शास्त्रभेदस्य समत्वात् न तेन सङ्गतिर्वक्तुं युक्ता । न च पूर्वपक्षप्रकारान्तरे नास्तीति युक्तता, अनेकान्तत्वादिति भावः । नन्वेवं सति पूर्वपक्षप्रकारभेदे साध्यभेदादाहवनीयभेदः तर्हि आधानभेदोऽपि किं न स्यादिति तत्राह—आधानभेदस्त्विति । अग्निमाधत्त इति स्वतस्तावदाधानभेदो न प्रतीयते प्राजापत्यादिवत् सङ्ख्याविशेषाश्रवणात् । एकस्यापि ब्राह्मणादिकर्तृभेदेन (तत्तद्ब्राह्मणादिसम्बन्धित्वमेव तत्तद्रूपं) तत्तद्रूपयोग्याहवनीयजनकत्वोपपत्तेर्नाधानभेद इत्यर्थः। कथं तर्हि राद्धान्तेऽप्याधानभेद इत्यत्राह—इति राद्धान्त एवेति । तत्तदाधानोत्पत्तिवाक्यानां भिन्नत्वात् राद्धान्त एवाधानभेद इत्यर्थः । कथं तर्हि ? एतच्चोपेत्योक्तम् ।

परमार्थतस्तु गुणविधिपक्षे आक्षेपरूपपूर्वपक्षप्रकारेपि ब्राह्मणादिशास्त्राणां एकाधानगतत्वेपि दधिपयोन्यायेन भेदः स्फुट एवेति न साक्षात्सङ्गतिरुक्तेत्यर्थः । यदाहवनीयादिसाध्याभेदान्न शास्त्रभेद इति पञ्चिकाग्रन्थेन विरुद्धत्वमापादितं तत् सङ्गत्याक्षेपपरत्वात् पञ्चिकाग्रन्थस्य आपाततः प्रतीयमानाहवनीयसाध्याभेदं मत्वा तथोक्तम्, वस्तुगत्या उक्तन्यायेन साध्यभेदे पूर्वोक्तनीत्या न साक्षात्सङ्गतिरित्येवाभिप्रेतमिति निरस्तम् । नन्वाधानवाक्यत्रयाधीतलिङा पृथक्पृथगपूर्वान्तरप्रतीतेः नियोगानुबन्धभेदाच्छास्त्रभेदो युक्तः । न च लिङादेर्नियोगानुवादकत्वशङ्का प्रकृतनियोगाभावात् । अतः साक्षादेव सङ्गतिर्युक्तेति चोदयति—नन्विति ।

मैवमिति । स्यादेवात्रापि नियोगान्तरावगमो लिङा यदि विषयलाभः स्यात । आधानस्य तु अग्निनिष्ठस्य विषयत्वायोगात् । न चाग्नीनामलौकिकतया आधानोत्पत्तेः [४]पूर्वं विनियोगाभावादनिरूढत्वात् ईप्सितगतत्वाभावात नाग्निनिष्ठतानिर्वाह इति वाच्यम् । अग्नीनां हि यावदापाततः प्रतीतमन्यनिष्ठत्वं न निराक्रियते

---

१. B साध्यभेदः २. A एवं तद्भेदः ३. A भेदाभावात् ४. गुणसाध्यता युक्तेति B

न नियोगान्तरम्। अतः प्रयोजकत्वेनापि सन्निहितकामश्रुतिनियोगानुवादो युक्तः।

नन्वपशूद्राधिकरणेऽप्येवं पूर्वोत्तरपक्षाविति पुनरुक्तिः; मैवम्, तत्र हि प्रापकत्वेऽपि वसन्तादिवाक्यानां अधिकारश्रुत्या शूद्रस्यापि गृहीतत्वादाधानप्रयुक्तिपूर्वकत्वाच्चाहवनीयादिविनियोगस्य प्रयुक्तेश्चाधिकारपूर्वकत्वादवगतशूद्राधिकारानुसारेणाधानप्रयुक्तिविरहादनग्नेः शूद्रस्यापि प्रयोग इति पूर्वः पक्षः।

ननु तत्र पूर्वपक्षे निमित्तार्थतैवोक्ता; मैवम्—शूद्राधिकारेऽनग्नेः प्रयोगे पाक्षिकमङ्गत्वमग्नेः स्यादिति यो मन्यते तं प्रत्युक्तम् परं निमित्तार्थानि वसन्तादिवाक्यानीति। निश्चिते च निमित्तार्थत्वे[1] वरं वाक्यभेदादाक्षेपा-

न तावदाधानस्य विषयत्वम्। परामर्शे च भाविविनियोगप्रतिसन्धानादीप्सितता युक्तेति निर्वहत्येवान्यनिष्ठत्वम्, यस्य च साध्यान्तरं न तस्य नियोगोऽपि साध्यः वाक्यभेदापत्तेरित्यसकृदुक्तमित्यर्थः। न च स्वर्गपदानुगुण्येन साध्यान्तरशङ्का, क्रियाफलस्यातथात्वादित्याह—न चेति। अतो न नियोगान्तरम्। कथं तर्हि लिङ्गो निर्वाह्य इत्यत्राह—अत इति। यद्यपि ग्राहकसन्निधिर्नास्ति तथापि प्रयोजकत्वेनापि सन्निहितकाम्यवाक्यगतनियोगानुवादो युक्त इत्यर्थः। ननु षाष्ठिकापशूद्राधिकरणे त्वधिकारसिद्ध्यर्थमेव पूर्वोत्तरपक्षावुक्ताविति तेन पुनरुक्तिः। न च तत्र शूद्राधिकारो वारितः, अत्र तु आधानभेदः साधित इत्यपुनरुक्तिः। एकस्यैव न्यायस्य फलद्वयात्। न च फलभेदेन न्यायभेद इति चोदयति—नन्विति। मैवमिति। एतदधिकरणोत्तरकालमपि तत्रत्यपूर्वपक्षो वक्तुं शक्यत इत्यर्थः। एतदेवोपपादयति—तत्र हीति। तत्र अपशूद्रनये। अत्रत्यन्यायेन वसन्तादिवाक्यानां प्रापकत्वेपि शूद्राधिकारो वारयितुं न शक्यः स्वर्गकामाधिकारश्रुत्या तस्याप्यविशेषेण सङ्ग्रहात्।

ननु विनियुक्ताहवनीयाद्युपसंहारासमर्थस्य कथमधिकार इत्यत्राह—आधानप्रयुक्तीति। अधिकारपूर्वं हि आधानप्रयुक्तिज्ञानं तत्पूर्वं चाहवनीयादिविनियोगज्ञानं, अतः पूर्वमवगतशूद्राधिकारावगमानुसारेण शूद्रस्याधानप्रयुक्तिविरहादनग्नेरेव शूद्रस्यानुष्ठानं भवत्विति पूर्वपक्ष इत्यर्थः। ननु किमिति तर्हि अपशूद्रनयपूर्वपक्षे वसन्तादिवाक्यानां निमित्तार्थतोक्तेति चोदयति—नन्विति। मैवमिति। शूद्राधिकारे अनग्नेः प्रयोगे नित्यवच्छ्रुतमङ्गत्वमग्नेः त्यक्तं स्यादिति च यदि कश्चिन्मन्यते

१. A वसन्ताद्यर्थत्वे

द्वाऽऽधानप्राप्तिर्युक्तेति । न पुनर्निमित्तार्थतया तत्र पूर्वः पक्षः । स्वतस्ताववाक्यभेदाक्षेपयोः अन्याय्यत्वात् शूद्राधिकार[1]बलात्तु [2]तदापत्तिर्वाच्या । स्वतस्तु प्रापकत्वं, तत्र च नित्यविहिताहवनीयाद्यङ्गविरोधादधिकारश्रुत्यैव[3] शूद्रपरिग्रहो न युक्तः । यद्यप्यधिकारवतः प्रयुक्तिज्ञानपूर्वकमाहवनीयाद्यङ्गज्ञानं तथाप्यधिकारवत्तामात्रात् प्रयुक्तिज्ञानं; तेन तत्पुरस्सरमधिकारव्यवस्थापनं अपशूद्रकं युक्तमिति तत्र राद्धान्तितमित्यपुनरुक्तिः ।

आधानभेदाभेदस्य च प्रयोजनमुक्तम् । वसन्तादिवाक्यानां प्रापकत्वे तत्प्राप्ताधान एव कृत्तिकादिगुणविधिः स्यात् । गुणविधिश्चाथमाधानप्राप्तावेकगुणश्रुतेः । एवञ्च वसन्तादिगतकृत्तिकादिषु ब्राह्मणादीनामाधानम् ।

---

तं प्रति वसन्तादिवाक्यानि निमित्तार्थानि सन्त्वित्युक्तं तत्र, न पुनस्तथैव पूर्वपक्षे नाभिमत इत्युत्तरेण सम्बन्धः । निमित्तार्थत्वं च सर्वथा नानुपपन्नम् वाक्यभेदात् आक्षेपाद्वा आधानप्राप्तिसम्भवादित्यपि तत्रोक्तमित्याह—निश्चिते चेति । एवं पूर्वपक्षेऽपि भेदमुक्त्वा राद्धान्तोऽपि भिन्न इत्याह—स्वतस्तावदिति । गुणद्वयश्रुतेः श्रुत्यर्थविधानलोभाच्च वसन्तादिवाक्यानां स्वतः आधानप्रापकत्वम् । यदि परं अन्यत आधानप्राप्त्या तद्भङ्गः सा च वाक्यभेदात् आक्षेपाद्वा । तौ च स्वत एवायुक्तौ । यदि परं शूद्राधिकारबलात् तदापत्तिर्वाच्या । स चाधिकारो न युक्त इत्यर्थः । कथमयुक्त इत्यत्राह—तत्र चेति । नन्वधिकारपूर्विका आधानप्रयुक्तिः तत्पूर्वकश्चाहवनीयविनियोग इति कथं ततोऽधिकारान्यथाभाव इति शङ्कामनूद्य परिहरति—यद्यपीति । साधिकारत्वमात्रात् आधानप्रयुक्तिज्ञानं तदनन्तरमाहवनीयादिविनियोगादधिकारे शूद्रादिहानं न तु विनियोगस्यैव पाक्षिकत्वं युक्तमिति तत्र राद्धान्त इत्यपशूद्रनयेनास्य न पुनरुक्तिः । एतच्चापशूद्रनयोक्ताभ्युच्चययुक्तिमादाय विवरणमतेन पौनरुक्त्यनिरसनम् । वस्तुतस्तु एतदधिकरणोक्ताक्षेपेण तत्र पूर्वपक्षः ।

निबन्धने तु उपनयनाद्यङ्गत्वविशेषतो विद्याभावाभावाभ्यां अन्यैव चिन्तेति दूरे पुनरुक्तिः । अतो न पुनरुक्तिः । एवं चैतन्न्यायस्य तत्र नाभ्युच्चय इत्युक्तं न तस्य तिर्यगधिकरणेन पुनरुक्त्यापादनं युक्तमिति भावः । किं पुनराधानभेदस्य प्रयोजनमित्यत्राह—आधानेति । वसन्तादिवाक्यैराधानत्रयविधौ तत्रैव कृत्तिकास्वादधीतेत्यादिगुणविधिः स्यात् । ननु विपरीतं न कुतः इत्यत्राह—गुणविधिश्चेति ।

---

१. B लाभात्तु २. A तदनगति ३. A अधिकारश्रुतेः शास्त्रस्य परिग्रहो

निमित्तार्थत्वे त्वाधानमात्रे प्राप्ते कृत्तिकादिगुणविधेः वसन्तादिवाक्यनिरपेक्षत्वादवसन्तादावप्याधानं ब्राह्मणादीनां स्यात्। तथा चोभयनियमः वसन्ताद्येव नियतं ब्राह्मणादेः। कृत्तिकादिमात्रेऽप्याधानं कृत्तिकादिविधेः वसन्तादिविधिनिरपेक्षत्वात्। यद्युभयनियममाश्रित्य शूद्रस्य कृत्तिकाधानं प्रयोजनमुच्यते तदाऽपशूद्राधिकरणसापेक्षं प्रयोजनमुक्तं न स्वतन्त्रमिति पूर्ववदनुसन्धेयम्।

---

कृत्तिकादिवाक्य एव गुणविधिः न वसन्तादिवाक्य इत्यर्थः। तत्र हेतुः—आधानेति। एकगुणश्रुतेः कृत्तिकादिवाक्य एव गुणविधिः। वसन्तादिवाक्ये तु विशिष्टविधिः। अन्यथा कृत्तिकादिवाक्ये विशिष्टविधौ वसन्तादिवाक्ये तदाधाने गुणद्वयविधेः वाक्यभेदः स्यादित्यर्थः। नन्वेवमपि कथं प्रयोजनसिद्धिरिति तत्राह—एवं चेति। उत्पत्तिशिष्टत्वाद्वसन्तस्य तन्निरपेक्षकृत्तिकाविध्यसम्भवात् अगत्या वसन्तादिगतकृत्तिकाविधिः भावार्थाश्रितत्वात् गुणविधेः। न चाधानान्तरविधिः विहिताधानप्रत्यभिज्ञानात्। ततश्च वसन्तादिगतकृत्तिकादिषु ब्राह्मणादीनामाधानमित्युभयनियमः प्रयोजनं राद्धान्त इत्यर्थः।

पूर्वपक्षे तु विपरीतमित्याह—निमित्तार्थत्वेत्विति। पूर्वपक्षे तु वाक्यभेदादिना प्राप्ताधानमात्रे वसन्तादिकृत्तिकयोरुभयोरप्यनुत्पत्तिशिष्टतया अन्योन्यनिपेक्षतया वसन्तादाविव कृत्तिकादिमात्रे ब्राह्मणादीनामाधानं स्यात्। व्रीहियवादिवत् शास्त्रार्थद्वयस्य विकल्पितत्वात्। तथा नोभयनियमः वसन्ताद्येव ब्राह्मणादौ नियतं ब्राह्मणादेस्तु कृत्तिकादावप्याधानमिति। यत्तु पूर्वपक्षदशायां उभयनियतत्वमुक्तं तत् कृत्तिकादिवाक्यापर्यालोचनयोक्तं तत्पर्यालोचने तु अन्यतरनियमेनैव पूर्वपक्षस्थितिरिति भावः। कैश्चिदुभयनियममङ्गीकृत्यैव पूर्वपक्षे कृत्तिकाधानं शूद्रस्यैवेति प्रयोजनमुक्तं तदनुभाषते—यद्युभयेति। दूषयति—तदेति। अपशूद्राधिकरणराद्धान्तो नास्तीति कृत्वाचिन्तया तत्पूर्वपक्षे स्थित्वा प्रयोजनमुक्तं, तस्मान्न स्वतन्त्रम्। तच्चायुक्तम् अधिकरणान्तराभङ्गेन स्वातन्त्र्येण मदुक्तरीत्या प्रयोजनसिद्धेः न त्वदुक्तरीत्या। न च सम्भवत्समुच्चययोः अष्टदोषविकल्पाङ्गीकारो न युक्तः।

अष्टदोषता चैवम्—व्रीहियवयोर्वैकल्पिकयोर्यदा व्रीह्यनुष्ठानं तदा यवस्य श्रुतानुष्ठानत्यागः अश्रुताननुष्ठानस्वीकारः। यदा च यवानुष्ठानं तदा स्वीकृतानुष्ठानत्यागः त्यक्तानुष्ठानस्वीकार इत्येकत्र चत्वारो दोषाः। एवमपरत्रापीति। अतो विकल्पपरिहाराय सम्भवत्समुच्चयो युक्त इति वाच्यम्। यत एककार्यतया निरपेक्षश्रुतत्वमेव विकल्पे प्रयोजकं न तु समुच्चयस्य सम्भवासम्भवौ, अन्यथा सर्वत्र विकल्पोच्छेदापत्तेः बाधोच्छेदापत्तेश्च। एतदभिप्रेत्योक्तं पूर्ववदिति।

## ॥ ४ ॥ अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥

साकं प्रस्थायीयादिसंज्ञातः कर्मभेदो युक्तः । ननु यजियुक्तैव संज्ञा श्रुता न भेत्त्रीत्युक्तं अभ्यासाधिकरणे, केवला[1] च श्रुता पश्चाच्च यजियुक्ता सती भेत्त्रीत्युक्तं संज्ञाधिकरणे । तत्कथमेता यजियुक्ता एव श्रुता भेत्त्र्यः । मैवम् । एतदधिकरणसिद्ध एवायं विवेकः । संज्ञा हि भिन्नाभिन्नं संज्ञिनमुपस्थापयति । अन्यायश्चानेकशब्दत्वमिति न्यायात् । तच्च भिन्नत्वं

---

## ॥ ४ ॥ अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥

दर्शपूर्णमासयोः श्रुतं—"साकं प्रस्थायीयेन यजेत पशुकामः" "दाक्षायणयज्ञेन यजेत स्वर्गकाम" इत्यादि । तत्र चिन्ता—किं कर्मान्तरचोदना एताः उत गुणफलविधयः । अत्रानुबन्धनशास्त्रभेदारवादादध्याये सङ्गतिः । अवान्तरसङ्गतिस्तु यथा पूर्वत्राप्राप्तेराधानविधिः तथेहापि साकंप्रस्थायीयादियागानामप्राप्तेर्विधिरित्युत्थानात् । प्रयोजनं तु पूर्वपक्षे प्रयुक्त्यन्तरं राद्धान्ते तु प्रकृतप्रयुक्त्युपजीवितेति । ननु दध्नेन्द्रियकामस्य जुहुयादिति यथा प्रकृतस्यैव होमस्य फलसम्बन्धस्तथाऽत्रापि प्रत्यभिज्ञाबलात् प्रकृतस्यैव यागस्य फलान्तरसम्बन्धोऽस्त्विति कथं पूर्वपक्ष इत्यत्राह—साकं प्रस्थायीयादीति । युक्तं तत्र दध्यादेः नामत्वासम्भवान्न भेदकत्वं, इह तु प्रकृतनामतो नामान्तरश्रुतेर्युक्तं तस्य कर्मभेदकत्वमित्यर्थः । ननु यजियुक्तं श्रुतं नाम न भेदकमित्युक्तमभ्यासनये । अन्यथा तत्रापि नामत एव भेदापत्तेः अतो यजियुक्तं साकंप्रस्थायीयादिनाम न भेदकमिति चोदयति ननु यजेदिति । ननु सर्वत्र नाम्नो यजियोगितैव अन्यथा नामताऽयोगात् अतः संज्ञाधिकरणे कथं नामतो भेदव्युत्पत्तिरिति तत्राह—केवलेति । मैवमिति । यजियुक्तस्य भेदकत्वं नास्तीत्येतन्न व्युत्पाद्यं न तेन पूर्वपक्षभङ्ग इति भावः । तर्हि कियत् संज्ञाधिकरणे व्युत्पाद्यमित्यत्राह—संज्ञा हीति । ननु यजेः प्रकृतवाचित्वात् विभक्तिबलेन तत्सामानाधिकरण्याच्च नाम्नः प्रकृतपरतैवेति कथं भेदकत्वमित्यत्राह—इहापीति । प्रातिपदिकस्य प्रथममुच्चरितत्वात् तद्बलादन्यत्वप्रतीतेः पश्चादुच्चार्यमाणाद्यजिपदादपि यागान्तरमेव प्रतीयत इति किं जघन्यविभक्तिबलायातं सामानाधिकरण्यं करिष्यतीति अन्यायोऽनेकशब्दत्वमिति न्यायात् ज्योतिरादिवत् तद्भेदकत्वमेवेत्यर्थः ।

---

1. B यजिवियुक्ता

निर्वहति गुणान्तरश्रुतेरिति संज्ञाधिकरणे सिद्धम्। इहापि संज्ञातोऽन्यत्वं निर्वहति चाव्यक्तत्वेन सौमिकविध्यन्तप्राप्तेः। एवञ्च संज्ञान्तरं स्ववाक्य एवार्थवत्। इतरथा गुणफलोपबन्धपरत्वे वाक्यान्तरे अर्थवत्ता। अधिकारान्वये च कर्म विधेयं, विध्यभ्यासे च विधानं तच्चैवमाञ्जसं भवति। यत्र यत्र संज्ञान्तरापादितकर्मान्तरनिर्वाहः तत्सर्वमाक्षिप्तमिति पूर्वः पक्षः।

सत्यमन्याय्योऽनेकशब्दत्वमिति किन्तु यजिग्रस्ता संज्ञा तत्परतन्त्रवृत्तिः। यजेश्च गुणान्तररहितश्रुतेः व्यक्तिवचनतया प्रकृतरूपवत्परतेति

---

ननु ज्योतिरादितो भेदो युक्तः सहस्रदक्षिणान्तरश्रुतेः प्रतीतभेदनिर्वाहात् इह तु न तथा गुणश्रुतिरिति कथं भेद इत्यत्राह—निर्वहति चेति। नाम्नः स्ववाक्य एवार्थवत्त्वलाभादपि कर्मान्तरतैव युक्तेत्याह—एवं चेति। कर्मान्तरत्वे हि तदुपस्थापकतया स्ववाक्य एव संज्ञान्तरमर्थवत् अन्यथा गुणफलोपबन्धपरत्वे वाक्यान्तरे प्रकृतदर्शपूर्णमासोत्पत्तिवाक्येऽर्थ परत्वं स्यात्। तच्च नार्जवमित्यर्थः। किञ्च साधिकारयजिश्रुतावपि यागान्तरमेव विधेयमिति विवरणोक्तमाह-अधिकारान्वये चेति ननु यथाऽधिकारान्वयेऽपि दध्नेन्द्रियकामवाक्ये प्रकृतस्यैव कर्मणः फलसम्बन्धविधिः तथाऽत्राप्यस्त्वित्यत्राह—विध्यभ्यासेति। विध्यभ्यासे विधानं भवति। तच्चैवमाञ्जसं भवति यदि यागान्तरविधिः। दध्नेन्द्रियकामवाक्ये तु गुणोपबन्धश्रुतेः प्रकृतप्रत्यभिज्ञाबलात् न यागान्तरम्। इह तु न तथा किन्तु यागान्तरमेव श्रुतमिति भेद इत्यर्थः। नन्वेवं सौमिकधर्मप्राप्त्या निर्वाहः सर्वत्र सुवच इति सर्वसंज्ञानां भेदकत्वं स्यादित्यत्राह—यत्रेति। यत्र निर्वाहसम्भवः तत्सर्वमाक्षिप्यत एव। प्रयाजादौ तु तन्न सम्भवति अन्योन्याश्रयादिदोषावतारादिति भावः। ननु कर्मान्तरपक्षे उत्पत्त्यन्तरकल्पना प्रयुक्त्यन्तरकल्पना च स्यादित्यत्राह—इति पूर्वः पक्ष इति। साधिकारविध्यन्तरप्रतीतिबलात् कल्पनाद्वयं न दोषायेति भावः।

राद्धान्तमाह—सत्यमिति। सत्यमिदं ज्योतिरादिसंज्ञातो भेदमाह यद्यप्यन्याय्योऽनेकशब्दत्वं तथापीह यजिसामानाधिकरण्यश्रुतं नाम यजिपरतन्त्रम्। यत्र यजिर्वर्तते तत्रैव वर्तनमर्हतीति न नामाऽग्रे प्रवृत्तं येन प्रकृततिरोधानं स्यात्। ननु यजिरेवं प्रकृते किमिति वर्तत इत्यत्राह—यजेरिति। व्यक्तिवाचित्वात् यजेः प्रकृतवर्तिता। ननु यजेः स्वतो विधेयपरत्वमेव युक्तमिति तत्राह—प्रकृतेति। स्यादेतदेवं यद्यत्र स्ववाक्ये वाक्यान्तरे वा सन्निहिते रूपं श्रूयते। इह तु न तथेति रूपवत्प्रकृतपरतैव युक्ता। ननु वाजिनयागवत् किमित्यत्र भेदो नास्तीत्यत्राह—गुणान्तरेति। युक्तस्तत्र भेदो गुणान्तरश्रुतेः। इह तु गुणान्तररहिता यजिश्रुतिः।

तदनुसारात् संज्ञापि तत्रैव युक्ता। सिद्धे च कर्मान्तरपरत्वे सौमिकधर्मकल्पनया निर्वाहः। नतु कल्पनैव क्लृप्तप्रकृतपरतामपहन्ति। यत्र तु संज्ञाधीनेऽन्यत्वे पश्चाद्यजियोगस्तत्र प्रवृत्तसंज्ञानुरोधात् यजेरेवार्थान्तरे प्रवृत्तिः। अर्थान्तरत्वं गुणान्तरश्रुतेः क्लृप्तमेवेति मैत्री ज्योतिरादिका संज्ञा। नतु समिदादिषु तथेति न तत्र संज्ञातो भेद इति विवेकः। कृतश्च राद्धान्तः। प्रकृतस्य च सहप्रस्थानादिगुणयोगात् प्रवृत्तिनिमित्तसम्भवात्

---

ननु प्रथमोच्चरितत्वान्नाम्नः अर्थान्तरधीरेवाग्रे जायत इत्युक्तमित्यत्राह—इति तदनुसारादिति। यद्यप्यग्रेऽर्थान्तरमात्रधीः तथाप्यन्यत्र विशेषान्तराश्रुतेः तदनिर्वाहात् व्यक्तिवाचियजिपदात् प्रकृत एव यागोऽवगम्यते शीघ्रमिति तदनुसारात् संज्ञापि तत्रैव वर्तितुं शक्या। न च फलतो विशेषः। तस्यापि प्रकृतपरत्वेऽप्यविरोधात्। उद्भिदादौ तु प्रकृताभावात् फलतो विशेष इत्यर्थः। ननु अव्यक्तत्वेन सौमिकधर्मप्राप्त्या संज्ञावगतभेदनिर्वाह इत्युक्तमित्यत्राह —सिद्धेति। कर्मान्तरत्वे निश्चिते सौमिकधर्मकल्पना। इह स्वतः क्लृप्तप्रकृतपरत्वे सति न तदवकाश इत्यर्थः।

कथं तर्हि अथैष ज्योतिरित्यादौ संज्ञातः कर्मभेद इत्याशङ्क्य सर्वमिदं तत्र विपरीतमित्याह—यत्र त्विति। यत्र अथैष ज्योतिरित्यादौ वाक्यान्तरमेव कर्मोत्पादकं न तु तत्र यजियोग इति तन्निरपेक्षसंज्ञाप्रवृत्तेः स्वतस्तावदर्थान्तरधीः। पश्चात् किं तदित्यपेक्षायां वाक्यान्तरे साधिकारयागसामानाधि करण्यात् यागरूपं तत्कर्मेति धीः। तन्त्रप्रवृत्तनामपरतन्त्रत्वाद्यजेः। तदनुरोधाद्यजेः प्रकृतवृत्तित्वं विहाय कांस्यभोजिनयात् यागान्तरे वर्तत इत्यर्थः। प्रकृतयागाद्यागान्तरनिर्वाहोऽप्यस्तीत्याह—अर्थान्तरं चेति। गुणान्तरश्रुतेः। सहस्रदक्षिणादिश्रुतेः। उपसंहरति—इतीति। समिदादिनाम तु नैवमित्याह—नत्विति। एवं नाम्नां विवेककथनेन राद्धान्तोऽप्युक्त इत्याह—कृतश्चेति। ननु प्रकृतयागपरत्वे कथं तत्रान्यनाम्नां प्रवृत्तिः प्रवृत्तिनिमित्ताप्रसिद्धेरित्यत्राह—प्रकृतस्य चेति। सह कुम्भीभिरभिक्रामं जुहाति इति प्रकृतस्य सहप्रस्थानगुणयोगात् प्रवृत्तिनिमित्तसम्भवात् तत्तन्नामता। नामस्थः साकंशब्दः सहार्थः।

एवं दाक्षायणपदस्यापि प्रकृतनामता। दक्षः उत्साही यजमानः तत्सम्बन्धिनो दाक्षाः आग्नेयादयः, तेषामयनमावृत्तिः। द्वे पौर्णमास्यौ द्वे अमावास्ये यजेतेति श्रुतेः। तथा सङ्क्रमणपदस्यापि सङ्क्रमो लोपः यस्मिन्निति सङ्क्रमणः यज्ञपदेन विशेषणसमासः, पौर्णमासीमेव यजेत भ्रातृव्यवान् नामावास्यामिति श्रुतेः।

नामतैव युक्ता। तस्मिन्नेव नाम्नोऽर्थवत्ता संज्ञायोगोपस्थितस्य प्रकृतस्याधिकारान्वयात्। संज्ञातश्च सहप्रस्थानान्वयितयोपस्थितं कर्म फलान्वितमिति फलतो गुणफलसम्बन्धोक्तिः।

ननु सहप्रस्थानादि क्रत्वर्थं कथं फलार्थम्; मैवम्, वाक्यान्तरविहितं सहप्रस्थानादि प्रवृत्तिनिमित्ततोऽवगतं तदवस्थस्य फलान्वये फलार्थमेव उत्पत्तेः कामसंयोगादिति न्यायात्।

नन्वेतस्यैव रेवतीष्वित्यत्रापि स्तोत्रान्वयः फलार्थो भवतु। तथा च गुणफलान्वयो भवतु—मैवम्, वायव्यानुबन्धत्वस्तोत्रानुबन्धान्वयो यागस्यैव रेवत्यनुबन्धस्य फलार्थता वाच्या। न च सा वाक्यान्तरादस्तीति न गुणफलान्वयः। यत्र तु लौकिकेन रूपेण प्राप्तिर्न तत्र वाक्यान्तरप्राप्तस्य फलार्थतेत्यनुसन्धेयम्।

---

एतत्सर्वं सहप्रस्थानादीत्यादिशब्दात् सङ्गृहीतमित्यर्थः। यत्पुनरुक्तं प्रकृतपरत्वे नाम्नः स्ववाक्येऽर्थपरत्वं नास्तीति तत्राह—तस्मिन्नेवेति। यत्र वाक्ये नाम श्रुतं तस्यैव संज्ञाभेदोपस्थितस्य प्रकृतस्याधिकारान्वयात् स्ववाक्य एव नाम्नोऽर्थवत्ता। अत एव चाधिकारान्वये कर्म विधेयमित्येतदपि परिहृतम्। कर्मण एव फलसम्बन्धितया विधेरिति भावः। ननु यदि साकंप्रस्थायीयादेर्नामत्वं कथं तर्हि गुणफलसम्बन्धोक्तिरिति भष्ये उक्तमित्यत्राह—संज्ञातश्चेति। फलतो गुणफलसम्बन्धोक्तिः न साक्षादित्यर्थः। ननु सहप्रस्थानादेः क्रत्वर्थत्वे तस्य कथं फलार्थतया विधिरिति चोदयति—नन्विति। मैवमिति। उत्पत्तेः कामसंयोगादिति नयात् वाक्यान्तरविहितं सहप्रस्थानादि फलार्थमेव न क्रत्वर्थं प्रवृत्तिनिमित्तबलात् नाम्ना तदवस्थस्यैव फलान्वयविधेरित्यर्थः।

नन्वेवं रेवतीवाक्येऽप्यनेन न्यायेन प्रकृतस्य स्तोत्रस्य फलार्थत्वात् गुणफलसम्बन्धविधिरेव स्यादिति चोदयति—नन्विति। मैवमिति। प्रकृतस्य स्तोत्रस्य न फलार्थता वायव्यानुबन्धतया विधेः, रेवत्यनुबन्धस्य तु फलार्थता वाच्या। न तस्य वाक्यान्तरेण विधिरिति न गुणफलान्वयः। किन्तु कर्मान्तरमात्रचोदनैवेत्यर्थः। नन्वेवं दध्ना जुहोतीति दध्युत्पत्तिरिन्द्रियफलार्थैवोक्तेन न्यायेन स्यादित्यत्राह—यत्रेति। लौकिकरूपेणापि प्राप्तिसम्भवे प्रकरणावगतक्रत्वर्थताबाधो न युक्त इत्यर्थः। नन्वेवमिहापि लौकिकेन रूपेण प्राप्तिरस्तु किं विधेः क्रत्वर्थताबाधेनेत्यत्राह—इत्यनुसन्धेयमिति। न हि सहप्रस्थानादेर्लौकिकेन रूपेण प्राप्तिः क्रियाकारकभावेनानन्वयात। अतस्तत्रापि विधित एव प्राप्तिरनुसन्धेयेति भावः।

## ॥ ५ ॥ संस्कारश्चाप्रकरणे कर्मशब्दत्वात् ॥ १२ ॥

निर्वापालम्भयोस्तु सगुणश्रुतेः गुणविधिपरतया संस्कारस्वभावतया

॥ ५ ॥ संस्कारश्चाप्रकरणे कर्मशब्दत्वात् ॥ १२ ॥

अनारभ्य किञ्चिच्छ्रुतम्। वायव्यं श्वेतमालभेत भूतिकामः सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति। तथा दर्शपूर्णमासयोः श्रुतं "ईषामालभेत" "चतुरो मुष्टीन् निर्वपति" इति। तत्र चिन्ता—किं श्वेतमालभेत चरुं निर्वपेदिति दार्शपौर्णमासिकयोः ईषाचतुर्मुष्टिनिर्वापयोः श्वेतगुणचरुगुणविधिः। उतापूर्वयोरालम्भनिर्वापयोर्विधिः किं वा यागान्तरविधिरिति। अत्राध्यायसङ्गतिं स्वयमेवोत्तरत्र वक्ष्यति। अवान्तरसङ्गतिस्तु युक्तं पूर्वत्र सर्वपदार्थानामन्योन्यान्वयादेकवाक्यत्वं, इह त्वालम्भनिर्वापाभ्यां द्रव्यदेवतापदस्यानन्वय इत्युत्थानात्। प्रयोजनं तु पूर्वपक्षोक्तमेव।

ननु प्रतीतैकवाक्यतानुसारेण नामार्थोऽपि द्रव्यदेवतासम्बन्ध एवाग्नेयवद्विधेयोऽस्तु। निर्वपतिस्तु अनुवादोऽस्तु। मास्तु दुष्टो वाक्यभेद इति कथं पूर्वपक्ष इत्याशङ्क्य प्रथमं प्रथमपूर्वपक्षमाह—निर्वापालम्भयोस्त्विति। श्रुतसकलपदार्थान्वयाविरोध्येव विधेयो वाच्यः। तत्र द्रव्यदेवतासम्बन्धविधौ निर्वपतेरनन्वयः। अन्वयो हि विधेयतया वा अनुवाद्यतया वा। नाद्यः, वाक्यभेदादेव, न द्वितीयः प्राप्त्यभावात्। न चार्थप्राप्तस्यानुवादः विध्यनन्वयापत्तेः विध्यन्वयिन एवानुवादो विधेर्वा। अतः सम्बन्धविध्यसम्भवेन एकवाक्यत्वायोगात् चरुं निर्वपेदित्येकं वाक्यं वाच्यम्। तथा आलम्भवाक्येपि। न च तत्रापि श्रुत्या स्वतः साध्यत्वाच्च निर्वापालम्भयोर्विधिः। चरुं श्वेतमिति गुणश्रुतेः रक्तपटन्यायेन तयोर्गुणविधिपरत्वावधृतेः। न च द्वितीयाश्रुत्यनुरोधात् चरुश्वेतावुद्दिश्य एतत्संस्कारतया निर्वापालम्भविधिः, तयोः कार्यान्तरेऽविनियुक्तत्वात्। न च द्वितीयाविरोधः। अप्रधानस्यापि क्रियाफलभागिनः साध्यतया विधानसम्भवात्। अतो निर्वापालम्भोद्देशेन चरुश्वेतविधिर्युक्त इत्यर्थः। निर्वापालम्भयोरसहिन्नितयोः उद्देश्यत्वाप्रतीतेः कथं तदुद्देशेन विधिरित्यत्राह—संस्कारस्वभावतया चेति।

सत्यमसन्निहितौ तथापीह श्रुतयोः निर्वापालम्भयोः संस्कारस्वभावतया दर्शपूर्णमासयोः संस्काररूपनिर्वापालम्भयोर्दूरस्थावपि तौ स्मृतौ। तदुद्देशेन चरुश्वेतविधिः। न चान्यत्र संस्कारतया निर्वापालम्भौ विहितौ स्तः। सत्त्वेपि दर्शपूर्णमासयोः प्रकृततया निरपेक्षत्वात् तत्सम्बन्ध्यवगम एव। न च विशिष्टविधिः गौरवापत्तेः। तत्र च यथासम्भवं विधीयमानगुणयोः दृष्टेनादृष्टेन वा द्वारेणान्वयो योग्यतयेति भावः। ननु विप्रकृष्टत्वे समाने किमिति न लौकिकयोः गुणविधि-

च दूरस्थसंस्काररूपनिर्वापालम्भयोः श्वेतचरु[1]गुणविधिर्युक्तः। विधेय-गुणान्वयायोग्यतया न लौकिके विधिः। कर्मासन्निधेश्च गुणफलविध्य-भावात् न कामिपदमन्वयि। न च देवतापदम्। अतो वाक्यं भित्वा वायव्यं कुर्यात् भूतिकाम इति सिद्धं विध्यन्तरम्। अथवा कामिपदस्याप्य-न्वयार्थमालम्भविधिः आलम्भस्य कार्यान्तरानुपयोगात् अगुणकर्मतयाऽधि-

रित्यत्राह - विधेयेति। मानान्तरगम्यस्य न विध्येकगम्यगुणान्वयार्हत्वमित्यवगत-त्वात् न तत्र विधिः। अन्यथा सापेक्षतयाऽप्रामाण्यापत्तेरिति भावः। नन्वस्मिन्नपि पक्षे गोदोहनेन पशुकामस्य प्रणयेदितिवत् गुणविधिविधया कामिपदान्वयो घटत एवेति किमिति वाक्यभेदाङ्गीकार इत्यत्राह—कर्मासन्निधेश्चेति। प्रकरणसन्निहित-कर्माश्रितश्च गुणफलविधिः न सन्निधानमात्रात्। अन्यथा उद्भिदादिवाक्या-नामपि गुणफलविधित्वापत्तेः। गुणविधिस्तु सन्निधिमात्रापेक्षः अन्यत एव विनियोगसन्निधिमात्रेण पर्णतादीनां प्राकृतजुह्वाद्युद्देशेन विधिः। अतोऽत्र कर्मणोऽ-सन्निधेः गुणफलविध्यसम्भवान्न कामिपदान्वयित्वम्। न च सर्वेभ्य इति दर्श-पूर्णमासयोरेव पक्षप्राप्तब्रह्मवर्चसभूत्यनुवादः प्रवृत्तिविशेषकरनित्यदेवतान्वये सति तदयोगादित्यर्थः। तथा प्रतिपदविहितदेवताद्धितान्तयोः वायव्यसौर्यपदयोः देवतापरत्वम्। अस्य च निर्वापवाक्यानन्वय इत्याह—न चेति। न चाग्नेयो वै ब्राह्मण इत्यादिवत् सौर्यवायव्यपदयोः अर्थवादतयाऽनुवादोऽस्त्विति वाच्यं, युक्तं तत्राग्निब्राह्मणयोरेकस्थानप्रभवतयाऽर्थवादत्वं सम्बन्धितया। इह तु न तथा श्रुतिरिति भावः।

नन्वेवं द्विपदवाक्यपक्षे वायव्यं भूतिकाम इत्यादि विधिशून्यमेव स्यादिति शङ्कामात्रमपनुदन् निगमयति—अतो वाक्यमिति। वचनानि त्वपूर्वत्वात इति नयात् विधिकल्पना वाऽस्तु अनुवादो वा विधिरिति वायव्यं कुर्याद्भूतिकाम इति वाक्यभेदेन सिद्धं विध्यन्तरमित्यर्थः। निर्वपतिपदं निर्वापमात्रमाह न तु संस्काररूपं नियोगीयम् न च लिङाद्युपबन्धात् विहितोपलक्षणार्थो लिङर्थः। तथा सति लिङो न गुणविधानार्थतेति न गुणविधिः स्यादिति तदुपक्रममात्रं पक्षं विहाय सम्यक् पूर्वपक्षतया त्रिपदवाक्यपक्षमाह — अथवेति।

यावत्सम्भवमेकवाक्यत्वमनुग्राह्यमिति कामिपदान्वयार्थं श्वेतमालभेत भूतिकाम इति त्रिपदवाक्येनालम्भविधिरित्यर्थः। नन्वालम्भस्य गुणकर्मणोऽ-धिकारायोग्यत्वात् कथं कामिपदस्यान्वय इत्यत्राह—आलम्भस्येति। अनारभ्या-धीततया सन्निहितनियोगाप्रतीतेः चरुश्वेतयोश्च जुह्वादिवत् क्रत्वविनाभावा-

१. चरुशेष एव

कारविषयस्य कामिपदान्वयः। अतोऽसम्भवदन्वयस्य देवतापदस्य वाक्यभेदेन वायव्यं कुर्यादिति पूर्वः पक्षः। एकवाक्यताबलेन कथंचित् साध्यस्य सम्बन्धस्य तदाक्षिप्तयागस्य वा विधिर्युक्तः अर्थप्राप्तालभतिनिर्वपत्यनुवादो युक्तः। न चार्थप्राप्तस्य विध्यसंस्पर्शादनन्वयिता, विध्याक्षिप्ततयापि

---

भावात् कार्यान्तरोपयोगाभावेन गुणकर्मत्वाभावात् हिरण्यभरणवन्नियोगविषयत्वोपपत्तेः अधिकारविषयताऽर्हतया कामिपदान्वयो लभ्यत इति चरुश्वेतविशिष्टपुरुषार्थनिर्वापालम्भान्तरविधिः। सम्भवदेकवाक्यतानुग्रहार्थं विशिष्टविधिगौरवमपि न दोषायेत्यर्थः।

नन्वेवमपि सौर्यवायव्यपदयोः कथमन्वय इत्यत्राह—अत इति। यत एवं सम्भवदन्वयपदत्रयमेकवाक्यतायातं ततोऽसम्भवदन्वयस्य देवतादिपदस्यारुणापूर्वपक्ष इवारुणापदमात्रस्य वाक्यभेदं कृत्वा वायुदेवताककर्मान्तरविधिरित्यर्थः। ननु कथं यागान्तरविधिः स्ववाक्ये द्रव्यश्रुत्यभावेन तद्धितपर्यवसानाभावात्। न च कर्मान्तराङ्गं कस्यचित्प्रकरणेऽनधीतत्वात्। नापि स्वतन्त्रं, निरधिकारत्वात्। अतः कथं यागविधिरित्यत्राह—इति पूर्वःपक्ष इति। अत्र हि वाक्यभेदो विमर्शोत्थः। तत्र हि सन्निधानानपायात् चरुश्वेतद्रव्य एव तद्धितपर्यवसानात् यागविधिनिर्वाहः स च यागः सन्निहितफलवन्निर्वापालम्भाङ्गम् आरादुपकारकं विश्वजिन्नयात् अधिकारकल्पनया अनुषङ्गाद्वा साधिकारकल्पनया स्वतन्त्र एवास्त्विति भावः।

राद्धान्तमाह—एकवाक्यतयेति। सति सम्भवे सम्भूयकरणव्युत्पत्तेः प्रतीतैकवाक्यताबलेन नामार्थस्यापि सम्बन्धस्य कथञ्चित्साध्यस्य विषयताऽस्तु निबन्धनमते।

विवरणमते तु तदाक्षिप्तयागस्य सर्वथाऽनन्वये हि वाक्यभेदः प्रविश पिण्डीमितिवत्। इह तु द्रव्यदेवतासम्बन्धस्याधिकारसम्बन्धिनोऽपि विधौ सर्वपदानामन्वयलाभ इति न वाक्यभेदो न्याय्य इत्यर्थः। नन्वत्रापि निर्वपतेः सर्वथाऽनन्वय इत्यत्राह—अर्थप्राप्तेति। नन्वर्थप्राप्तानुवादे विध्यसंस्पर्शात् विध्यन्वयो न स्यादित्युक्तमित्यत्राह—न चेति। तत्र हेतुः विध्याक्षेप्यतयेति। अर्थप्राप्तमपि विध्याक्षिप्ततया विधिसंस्पर्श्येव क्रमवदिति विधावन्वेत्येव। न चैवं विधेयतापातः अर्थादागते विधिव्यापारौदासीन्यात् विध्यनुमततया तु विधिसंस्पर्श इति भावः। नन्वेवमनुवादकत्वे वाक्यभेदः पश्च/द्वादरूपत्वादनुवादस्य। न च सम्भूयकारित्वे युगपत्सम्भवः। सर्वपदानां च विधिस्वरसत्वात् विधेयताबुद्ध्यनुरोधाद्वरं वाक्यभेद इत्यत्राह—इति राद्धान्त इति।

अयं भावः—अनुवादोऽयं स्तुत्यर्थ एव न केवलः। तथासति वाक्यभेदापत्तेः। न च यौगपद्येऽप्यनुवादान्तरवत् सम्भवः विधेयसिद्ध्यर्थत्वाभावात्। अतः स्तुत्यर्थं

विधिसंस्पर्शात् इति राद्धान्तः। वाक्य[1]भेदे चात्र शास्त्रभेद इति तदपवादकतया च सङ्गतिः।

॥ ६ ॥ विशये प्रायदर्शनात् ॥ १६ ॥

विषयः संशयस्वरूपं मूलहेतुरित्यनेन सूत्रेणेदं न सूत्रितम्। यतः श्रुतसिध्यर्थं अश्रुतोपलब्धौ च यत्नवता भवितव्यम्। एवं ह्यवहितः सूक्ष्मन्यायतत्वमवैतीति। वृत्तिकारेण चावहितेन तदुन्नीतम्। आलभतिः प्राणि-

---

एव। न च एकपदान्न स्तुतिधीरिति वाच्यम्। अर्थवादाधिकरणे तस्या उपपादितत्वात्। न च विधेयतावगमानुरोधात् वाक्यभेदः। विनियोगानुरोधित्वाद्विधेरित्यसकृदुक्तम्। वाक्यभेदेन च गुणविधौ चरोरदृष्टार्थता स्यात्। चरुमिति द्वितीया अर्थप्राप्तनिर्वापकर्मतया कथञ्चिन्नेयेति। अत्रातिदेशप्राप्तनिर्वापालम्भानुवाद एव परमार्थतः। अर्थप्राप्तानुवादोक्तिस्तु परिहारविभवादिति केचित्। ननु वाक्यभेदचिन्तायाः कथमध्याये सङ्गतिरित्यत्राह—वाक्यभेदे चेति।

॥ ६ ॥ विशये प्रायदर्शनात् ॥ १६ ॥

वत्समालभेत वत्सनिकान्ता हि पशव इति श्रुतम्। तत्र चिन्ता—किमालभतिर्यागपर्यन्तः उतालम्भमात्रविधिरिति। ननु च अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यत इत्यादिवत् अत्र सूत्रकारेण विषयः संशयः मूलहेतुः किमिति न कीर्तिताः? केवलं प्रायदर्शनं चाप्रकृतं कीर्तितमित्यत्राह—विषय इति। सत्यं न सूत्रिताः। तत्तु शिष्येण श्रुतसिद्धयर्थमश्रुतकल्पनायां यत्नवता भवितव्यमित्येवं शिष्यव्युत्पत्त्यर्थमित्यर्थः। कथमेवं सति शिष्याणां व्युत्पत्तिरित्यत्राह --एवं हीति। युक्तं चैतदित्याह—वृत्तिकारेणेति। तदुन्नीतप्रकारोऽस्माभिरुपन्यासवेलायामुक्तः। तत्र यागपर्यन्तत्वे शास्त्रभेदः संस्कारालम्भविधौ तु नेति पादेऽध्याये सङ्गतिः, अवान्तरसङ्गतिं सूचयन् पूर्वपक्षमाह—आलभतिरिति। पूर्वत्र वायव्यं श्वेतमालभेतेत्यादौ चालभतिः प्राणिद्रव्ययुक्तो यजिमदालम्भाभिधायको दृष्ट इत्येवं व्याप्तिमूलकात् आलभतिर्यजिमान् प्राणियुक्तालभतित्वात् अग्नीषोमीयालत्रतिवत् इत्यनुमानादत्र यागपर्यन्तत्वमवगम्यत इत्यर्थः।

ननु शब्दैकगम्यं विधिविषययागविधानमिति कथमनुमानाद्यजिमत्त्वमुच्यत इत्यत्राह—तस्य चेति। शब्दव्यवहारेपि विरोधाभावेऽनुगुणं मानान्तरं प्रवर्तत

---

१. भेदाच्चात्र B

संयुक्तो यजिमदभिधानो दृष्ट इति अनुमानादत्र यागावगतेः । तस्य च विधिविषयता शब्दावगम्यैवेति अनुमितस्य चाव्यक्तस्य सोमधर्मदेवताप्राप्तेः निर्वाह इति पूर्वः पक्षः । प्राणियुक्तमालभतित्वमप्रयोजकं देवतान्वयो हि प्रयोजको यागविधाने न चात्र देवताश्रुतिरिति आलम्भविधिरिति राद्धान्तः ।

## ॥ ७ ॥ संयुक्तस्त्वर्थशब्देन तदर्थश्रुतिसंयोगात् ॥ १८ ॥

अर्थवादपदं हि परोक्षार्थं माभूदिति बृहस्पतिदेवताकचरुविधेर्याग-

---

एवेति अनुमानोपस्थापितयागस्य विधिविषयता शब्दावगम्यैव । द्रव्यदेवता-सम्बन्धान्यथानुपपत्तिकल्पितयागस्यैवेत्यर्थः । ननु वत्सस्य द्रव्यत्वेपि देवता-शून्यत्वात् कथं यागविधिरित्यत्राह—इत्यनुमितस्य चेति । नन्वेवमव्यक्ततया सौमिक-विध्यन्तप्राप्त्या देवतालाभाद्यागविधिनिर्वाहोऽपि । तस्यानुमितयागस्य कथमनुष्ठानं अधिकारशून्यत्वादित्यत्राह—इति पूर्वःपक्ष इति । विध्यन्तरशेषतया अधिकारान्तर-कल्पनया वाऽनुष्ठानमस्त्येवेति भावः ।

राद्धान्तमाह—प्राणियुक्तेति । द्रव्यदेवतायोगो हि यजिमत्त्वे प्रयोजको हेतुः, न प्राणियुक्तालभतिमत्वम् । अतोऽप्रयोजकत्वाद्धेतोः न ततो यागानुमानमित्यर्थः । ननु देवतागर्भमेव यागानुमानमस्त्वित्ति शङ्कामात्रमपनुदति—न चेति । स्यादेतदेवं यदि मानान्तरगम्या देवता । सा तु चोदनामात्रगम्या यतः । न चात्र देवतायाः श्रुतिरित्यर्थः । नन्वव्यक्तत्वेन देवताप्राप्तेर्देवतावत्त्वमालभतेरित्युक्तमित्यत्राह—इत्यालम्भेति । सति देवतावदालभतित्वे यागत्वं यागत्वे चातिदेशतो देवतावत्त्व-मित्यन्योन्याश्रयत्वादयुक्तमित्यालम्भसंस्कारमात्रविधिरित्यर्थः । तथा संस्कारविधौ वत्सनिकान्ता हि पशव इत्यर्थवादानुगुण्यात् संस्कारगुणविधेरप्याम्नानरूप-प्रायदर्शनविरोधादपि नानुमानोदय इत्याह—इति राद्धान्त इति । वत्सालम्भनेन गवां प्रस्नवनं दृष्टंकार्यं संस्कारस्येत्यर्थः ।

## ॥ ७ ॥ संयुक्तस्त्वर्थशब्देन तदर्थश्रुतिसंयोगात् ॥ १८ ॥

अग्नौ श्रुतं "नैवारश्चरुर्भवती"ति । तत्सन्निधाविदमप्यपरं श्रुतं "यदेष चरुः । यदेतं चरुमुपदधाति" इति । तत्र चिन्ता—किं नैवारश्चरुर्भवतीत्यनेन याग-विधिः द्वितीयवाक्ये इष्टशिष्टचरोरुपधानसंस्कारविधिः । किं वा नैवारवाक्ये चरुमात्रविधिः । उपधानवाक्येन च तस्य विनियोग इति शास्त्रभेदापवादादध्याय-

प्रतीतेः यागविधिर्युक्त इति पूर्वः पक्षः। नार्थवादानां देवतासमर्पकता स्तुत्यर्थत्वात्। किन्तु कल्पनाप्रवृत्तौ अर्थवादप्रतीतं कल्प्यते, नाप्रतीतं, अर्थवादानतिपरोक्षार्थता त्वभ्युच्चयः। न चेह कल्पना युक्ता उपधान-प्रयोजनश्रुतेः। न चोपधानं कार्यान्तरार्थं वस्तुनस्समीपस्थापनं, किन्तु

---

सङ्गतिः। अवान्तरे तु युक्तम् पूर्वत्र देवतायोगाप्रतीतेः संस्कारमात्रविधानं इह तु अर्थवादतो देवताप्रतीतिरस्तीत्युत्थानात्। ननु नैवारश्चरुर्भवतीत्यत्र देवताश्रवणा-भावात् कथं यागविधितया पूर्वपक्ष इत्यत्राह—अर्थवादेति। सत्यं न विध्युद्देशे देवताधीः तथापि बृहस्पतेर्वा एतदन्नं यन्नीवारा इत्यर्थवादे बृहस्पतिकीर्तनात् अर्थवादस्यानतिपरोक्षार्थत्वार्थं बृहस्पतेर्देवतात्वं कल्प्यते। प्रतिष्ठाया इव रात्रिसत्रे नियोज्यविशेषणत्वम्। अतो बृहस्पतिदेवताकचरुप्रतीतेः द्रव्यदेवतासम्बन्धाद्याग-विधिरित्यर्थः। ननु यागविधौ तात्पर्येऽवधृते स्तुतिपदात् देवताकल्पनं भवेत् तदपि नाद्याप्यवधृतमित्यत्राह—इति पूर्वः पक्ष इति। उपादानस्य संस्काररूपत्वात् तस्य च यागसम्बन्धाविनाभावात् यागविधौ तात्पर्यावधृतिरिति भावः।

राद्धान्तमाह नार्थवादानामिति। न तावदर्थवादानां साक्षात् देवतासमर्पण-परता, स्तुतिपरत्वात्। कथं तर्हि रात्रिसत्रे स्तुतिपदात् नियोज्यविशेषणस्वीकार इत्यत्राह—किन्तु कल्पनेति। तत्रापि नार्थवादमात्रात् तत्स्वीकारः किन्तु सविषयस्य नियोगस्य नियोज्याकाङ्क्षायां नियोज्यविशेषणकल्पना प्रवृत्तावर्थवादात् प्रतीतमेव कल्प्यते नाप्रतीतं लाघवादित्यर्थः। कथं तर्हि तत्रार्थवादानतिपरोक्षत्वं हेतुतयोक्त-मित्यत्राह—अर्थवादेति। नन्वेवमत्रापि देवताकाङ्क्षायामर्थवादतो देवतास्त्वि-त्यत्राह—न चेति। स्यादेवात्रापि देवताकल्पना यदि चरोर्देवताकाङ्क्षा। अतो नार्थ-वादतस्तत्कल्पना युक्तेत्यर्थः। तत्र हेतुः—उपधानेति। उत्पन्नस्य चरोरुपधानरूप-प्रयोजनसम्बन्धितया विनियुक्तत्वान्न देवताकाङ्क्षेत्यर्थः। ननूपधानसंस्कारोऽपि यागसम्बन्धं विनाऽनुपपद्यमानो यागसम्बन्धं कल्पयति चरोः, फलचमसस्येव भक्षण-मित्यत्राह—न चोपधानमिति। नह्युपधानमहिम्ना यागकल्पना उपधानस्य संस्कार-स्वभावत्वाभावात्। उपधानं हि प्रयोजनान्तरं प्रत्युदासीनभूतस्य वस्तुनः तत्समीप-स्थापनमात्रमुच्यते वृद्धैः न तु कार्यान्तरोपयोगितया वस्तुनः समीपस्थापनम्। येन प्रयोजनाकाङ्क्षया यागकल्पना स्यात्। समीपस्थापनमात्रं स्थलसंस्कारमात्रमिति यावत्। फलचमसे तु यागीयद्रव्यसंस्कारतया भक्षणं पूर्वप्रतीतं नोपधानं तथा प्रतीतमिति भावः। ननु चरुमिति द्वितीयाश्रुतेः उपधेयस्य चरोरीप्सितत्वं युक्तमि-त्यत्राह—न चेति। पुरुषशीर्षोपधानवत् चरूपधानस्यापि चयनार्थतया स्थलसंस्कार-त्वान्नोपधेयस्य चरोरीप्सितता युक्तेति न कार्यान्तरापेक्षा चरोः स्यात् किन्तु

समीपस्थापनमात्रम् । न चोपधेयमीप्सितं युक्तम् । येनेप्सितस्य कार्यान्तरापेक्षा स्यात् । अतो द्वितीयाप्यत्रोपधानान्वयात् ।

ननु नैवार इति देवतातद्धितोऽयम् । मैवम् । चर्वन्वयात् चरोश्च नित्यं विकारत्वात् विकारतद्धित एवायम् । तद्धितार्थसन्देहे चार्थवादतो नीवारस्यान्नत्वकीर्तनान्न देवतात्वमिति न यागविधिरिति सिद्धान्तः ।

## ॥ ८ ॥ पात्नीवते तु पूर्ववत्त्वादवच्छेदः ॥ १९ ॥

केवलपत्नीवद्देवताश्रुतेः त्वष्टुः पत्नीवतो भेदावगतेरनुषङ्गाच्च पशु-

चरुरेवोपधानार्थ इति भावः । कथं तर्हि चरुमिति द्वितीयेत्यत्राह-अतो द्वितीयापीति । चरोः सक्तुवत् कार्यान्तरोपयोगाभावे हि ईप्सितत्वासम्भवादनीप्सिते द्वितीया उपधानान्वयादिति तु जघन्यत्वपरा स्थापनक्रियाजन्यफलभागित्वसम्भवादित्यर्थः । ननु नैवार इति देवतातद्धितोऽयम् । अतो नीवारदेवताकचरुद्रव्यकयागविधिरेव युक्तः । न च नीवाराणां देवतान्वयासम्भवः । अग्नावेव कस्मिंश्चिद्धोमे श्यामाकाश्चमे नीवाराश्च मे इत्यादौ नीवारादीनां देवतात्वदर्शनात् इति चोदयति—नन्विति । मैवमिति । युक्तं श्यामाकादौ देवतात्वं विरोध्यन्वयाश्रुतेः । प्रत्युत अजाक्षीरस्य द्रव्यस्य तस्मिन् होमश्रुतेः मन्त्रवर्णलब्धश्यामाकानां देवतात्वमेव । इह तु नैवारश्चरुरित्युपधाने करणतया[1] चर्वन्वयः । चरोश्च नित्यविकारद्रव्यरूपत्वात् प्रकृतिद्रव्यापेक्षितयाऽपेक्षितविकारतद्धित एवायं 'तस्य विकार' इति, न तु सास्य देवतेति देवतातद्धितः । नीवाराणां च प्रकृतित्वार्हत्वादित्यर्थः ।

ननु चर्वन्वयेऽपि सौर्यादीनां देवतातद्धितत्वदर्शनात् नीवाराणां देवतार्हत्वात् कथं विकारतद्धित एवायं न देवतातद्धित इति निर्णयः इत्यत्राह—तद्धितार्थेति । तद्धितार्थसन्देहे सन्दिग्धे तु वाक्यशेषादिति नयात् बृहस्पतेरन्नं नीवारा इत्यर्थवादे नीवाराणामन्नत्वकीर्तनात् हविः प्रकृतिपरतैव नीवारपदस्य, न देवतापरतेति न यागविधिरित्यर्थः । किञ्च नीवारविकारतायाश्चरोः लौकिकदृष्टतया शीघ्रावगमादर्थसमवायत्वे, सम्भवति शब्दसमवायत्वायोगाच्च हविस्तद्धित एवायमित्यभिप्रेत्याह—इति राद्धान्त इति ।

## ॥ ८ ॥ पात्नीवते तु पूर्ववत्त्वादवच्छेदः ॥ १९ ॥

त्वाष्ट्रं पात्नीवतं पशुमालभेतेति श्रुतम् । तत्सन्निधौ पर्यग्निकृतं पात्नीवतमुत्सृजतीति । तत्र चिन्ता—किं त्वष्टृसहितपत्नीवद्देवताकात् प्रकृताद्यागाद्यागान्तरं

1. B चरुरिति समानाधिकरणतया

प्रतीतेर्यागान्तरविधिर्युक्तः। इह यागे चोत्सर्गप्राप्तेश्चोदकतश्च पर्यग्नि-करणप्राप्तेः पात्नीवतमात्रविधिः।

ननु पर्यग्निकृतपदस्य यौगिकत्वात् प्रकृतपात्नीवतपरत्वं युक्तम्। श्रुत्या चोत्सर्गविधिर्युक्तः; मैवम्, पात्नीवतपदादप्रकृतप्रतीतेः तद्विषयं पर्यग्निकृतपदं सन्निहितपरम्। उत्सर्गस्तु प्रकृतेऽपि प्राप्तत्वान्न विधेय इति

---

विधीयते उत तस्मिन्नेव यागे पर्यग्निकृतावस्थस्य पशोरुत्सर्गमात्रं विधीयत इति। तत्रानुबन्धभेदनिबन्धनशास्त्रभेदापवादादध्याये सङ्गतिः। अवान्तरसङ्गतिस्तु युक्तं पूर्वत्र देवताशून्यत्वान्न यागान्तरमिति। इह तु देवताश्रुतेर्यागान्तरमित्युत्थानात्। ननु प्रकृतयागप्रत्यभिज्ञानात् स्ववाक्ये द्रव्याश्रुतेश्च कथं यागान्तरविधिरिति पूर्वपक्ष इत्यत्राह—केवलेति। स्यादेतदेवं यद्यत्र प्रत्यभिज्ञा स्यात्। इह हि प्रकृते यागे त्वष्टृपत्नीवतोर्देवतात्वं त्वाष्ट्रं पात्नीवतमिति श्रुतेः अत्र तु पात्नीवतमिति केवलस्य पत्नीवतो देवतात्वेन श्रुतिः। अतो भेदावगतेर्न प्रकृतप्रतीतिः। यथा आग्नेयं चतुर्धा करोतीत्याग्नेयपदेन नैन्द्राग्नस्य। न च द्रव्यशून्यता। अनुषङ्गात् पशुप्रतीतेः। अतो यागान्तरविधिरेव युक्त इत्यर्थः। ननु यागविधौ पर्यग्निकृतोत्सृजतिपदयोः कथमन्वयः। न तावद्विधेयतया, गौरवापत्तेः। नाप्यनुवादतया, अप्राप्तत्वादित्यत्राह—यागे चेति। प्रधानरूपोत्सर्गो यागे प्राप्त एवेत्यनुवादः। पर्यग्निकरणस्यापि चोदकप्राप्तेरनुवादः। ततः पात्नीवतमात्रविधिः पात्नीवतमिति द्रव्यवता सम्बन्धमात्रविधिरित्यर्थः। ननु पर्यग्निकृतपदस्य यौगिकत्वे व्यक्तिवाचितेत्याग्नेयीनयात् पत्नीवत्सहितपरत्वात् तदनुरोधात् पात्नीवतपदमपि प्रकृतद्विदेवत्यपरमस्तु। मनोतामन्त्रवत् विधिसमानपदोपादानश्रुत्या चोत्सर्गमात्रविधिरेव युक्त इति चोदयति—नन्विति।

मैवमिति। युक्तमाग्नेय्यादीनां प्रकृतपरत्वं बाधकाभावात्। इह तु पात्नीवतपदात् अप्रकृतयागान्तरप्रतीतेः पर्यग्निकृतपदमपि सन्निहितपरं स्ववाक्यसन्निहितपरमेव युक्तम्। मनोतायां तु विनियोगबलादगत्याद्विदेवत्यपरत्वम् नेहागतिस्तथेति भावः। ननूत्सर्गविधौ श्रुत्यर्थविधानलाभ इत्युक्तमित्यत्राह—उत्सर्गस्त्विति। प्रकृतेपि कर्मणि नोत्सर्गोविधेयः प्राप्तत्वादिति न श्रुतिविधिलाभ इत्यर्थः।

ननु प्रकृते पर्यग्निकृतावस्थस्य पात्नीवतस्योत्सर्गविधिः तदन्ताङ्गविध्युपदेशविधयाऽस्त्वित्यत्राह—इति पूर्वः पक्ष इति। तथा सति पर्यग्निकृतं पात्नीवतमिति विशिष्टानुवादः स्यात्। तथा पर्यग्निकरणादुत्तरेषां पदार्थानां बाधश्च स्यात। तदुभयमप्ययुक्तमिति भावः।

पूर्वः पक्षः। पर्यग्निकृतपदं हि स्वतः पूर्वसिद्धे प्रकृते वर्तते। प्रकृतश्च पात्नीवतमेव। व्यस्ताच्च तद्धितश्रुतेः तत्प्रतीतेस्त्वाष्ट्रप्रतीतिरपि सिद्धा। समासाद्धि तद्धिते श्रुते अप्रत्यभिज्ञा ऐन्द्राग्न आग्नेयवदिति, प्रकृतपर्यग्निकृतप्रतीतेः पात्नीवतत्वप्राप्तेः विशिष्टानुवादोऽपि नास्ति। पर्यग्निकृतावस्थस्य चोत्सर्गविधेस्तदन्ताङ्गरीत्युपदेशोऽयम् पर्यग्निकृतानारण्यानुत्सृजन्तीतिवत् श्रुत्या विधिरिति राद्धान्तः।

---

राद्धान्तमाह—पर्यग्निकृतेति। पर्यग्निकृतपदात् यौगिकात् प्रकृतप्रतीतेः पात्नीवतपदादपि स एव प्रतीयते। ननु पत्नीवत्पदात् प्रकृतं प्रत्येतुमशक्यं देवताभेदादित्यत्राह—व्यस्ताच्चेति। ननु व्यस्ततद्धितश्रुतावपि कथं पत्नीवत्पदात् त्वाष्ट्रस्यापि प्रतीतिरित्यत्राह—तत्प्रतीतेरिति। पात्नीवतप्रतीते; त्वाष्ट्रप्रतीतिरपि सिद्धा, त्वाष्ट्रं पात्नीवतमिति सामानाधिकरण्यात्। यदेव त्वाष्ट्रं तदेव पात्नीवतमित्येकार्थप्रतीतेः अन्यथा यागान्तरकल्पनायां वाक्यभेदापत्तेः। अत एकदेशद्वारा प्रत्यभिज्ञा युक्ता। यथा अग्नये पथिकृते इति पाथिकृतीये काम्ये कर्मणि केवलाग्नेय्या याज्यया देवता प्रत्यभिज्ञानं तथेहापीत्यर्थः। चतुर्धाकरणवाक्ये तु नैवमिन्द्राग्निप्रतीतिरित्याह—समासाद्धीति। नन्वेवं पात्नीवतस्योत्सर्गो विधेयः। न च पर्यग्निकृतस्येति विशिष्टानुवादलक्षणो वाक्यभेदः स्यादित्यत्राह—इति पर्यग्निकृतस्येति। स्यादेवं यदि पात्नीवतमित्युद्देश्ये उत्सर्गविधिः। इह तु पर्यग्निकृतपदमेवोद्देशकं तस्य प्रकृतपरतया प्रकृतपर्यग्निकृतप्रतीतेः। तत्र च पात्नीवतत्वस्य स्वत एव प्राप्तेरविवक्षायामपि न दोषः। अनुवादतया वाक्येऽनन्वयादिति न विशिष्टानुवादलक्षणदोष इत्यर्थः। ननु प्रकृतपर्यग्निकृतस्योत्सर्गः प्राप्त एवेति कथं तद्विधिरित्यत्राह—पर्यग्निकृतावस्थस्येति। सत्यमुत्सर्गः स्वरूपतः प्राप्तः। तथाहि पर्यग्निकृततावस्थस्योत्सर्गविधेः तदन्ताङ्गरीत्युपदेशोऽयम्। तदन्ताङ्गरीतिः तदन्ताङ्गानामनुष्ठानम्। ततश्च पर्यग्निकरणान्ताङ्गकलापं कृत्वा उत्स्रष्टव्यम्। ततः परेषामननुष्ठानमित्यर्थः। अत्र दृष्टान्तः पर्यग्निकृतानिति। ननु तदन्ताङ्गरीतेरशब्दोपस्थितत्वात् कथं तदुपदेशोऽयम्। तथा उत्तरेषां पदार्थानां अनुष्ठानबाधोऽप्यस्मिन् पक्षे स्यादित्यत्राह—श्रुत्या विधिरिति।

राद्धान्त इति। श्रुत्या उत्सर्गमात्रस्यैव विधिः। तदन्ताङ्गरीत्युपदेशः फलनियमवत्। तथाविधिबलेनानुष्ठानबाधोऽपि न दोषाय। अन्यथा यागकल्पना अनुषङ्गः प्रत्यभिज्ञाहानिश्च स्यादिति भावः।

## ॥ ६ ॥ अद्रव्यत्वात्तु केवले कर्मशेषः स्यात् ॥ २० ॥

ग्रहणं संस्काररूपं कार्यान्तरापेक्षम् । अतः स्ववाक्यश्रुतयागविधावपेक्षितविधेर्ग्रहणयुक्तयागविधिरदाभ्यं गृहीत्वेति । अंशुं गृह्णातीत्यंशावपि कार्यान्तरापेक्षायां प्रकृते च यागावगतेः तत्साहचर्याद्यागविधिः ।

ननु यदुपबन्धाद्वर्तमाननिर्देशाच्च सोमाय यजत इत्यनुवाद एव । मैवम् । विधिपरत्वकल्पना निरपेक्षतया युक्ता । नन्वप्रकृतोऽपि सोमयुक्ततया सोमयागः प्रतीत एवेति तत्रैव ग्रहणविधिर्युक्तः; मैवम्, सोमायेति

---

## ॥ ६ ॥ अद्रव्यत्वात्तु केवले कर्मशेषः स्यात्॥ २० ॥

अनारभ्य किञ्चिच्छ्रुतम—योऽदाभ्यं गृहीत्वा सोमाय यजत इति । तथा अंशुं गृह्णातीति । तत्र चिन्ता—किं यागान्तरविधिः, उत ज्योतिष्टोम एव ग्रहणान्तरविधिरिति । तत्र शास्त्रभेदापवादादध्यायसङ्गतिः । अवान्तरे तु यथा पूर्वत्रोत्सर्गविधिः तथाऽत्रापि यागविधिरस्त्वित्युत्थानात् । ननु वत्समालभेत इतिवत् देवताशून्यत्वात् ग्रहणसंस्कारमात्रविधिरेव युक्त इति कथं पूर्वपक्ष इत्यत्राह—ग्रहणमिति । संस्कारो हि नाम कार्यान्तरयोग्यता । सा कार्यान्तरापेक्षिणी । ग्रहणं चेदं संस्काररूपं कार्यान्तरापेक्षमित्यपेक्षित विधेः सोमाय यजत इति स्ववाक्यश्रुतस्याभिधानतः प्रसिद्धस्य यागस्य विधौ तात्पर्येऽवधृते विधिकल्पनया ग्रहणयुक्तयागविधिः न तु सोमयागे ग्रहणमात्रविधिः । अप्रकृतत्वेन तस्याप्रतीतेः । वत्सवाक्ये तु नैवं यजेः श्रुतिरित्यर्थः । ननु अंशुवाक्ये यजिश्रुत्यभावात् कथं यागान्तरविधिरित्यत्राह—अंशुं गृह्णातीत्यंशावपीति । अदाभ्येन नित्यसाहचर्यात् तत्र च यागविधेः अत्रापि तत्प्रतीतेः यागविधिरेव युक्त इत्यर्थः । ननु यः सोमाय यजत इत्यन्वयात् यदुपबन्धात् यजत इति वर्तमानापदेशाच्च यागविध्ययोगात् सोमाय यजत इत्यनुवादतैव युक्तेचोदयति—नन्विति ।

मैवमिति । स्वतस्तावत् सोमयागस्य विप्रकृष्टत्वान्न प्रतीतिः । किन्तु अनुवादोपपत्तये सोमसम्बन्धानुपपत्त्या तत्सन्निधिः कल्प्यः । तत्कल्पनायां तुल्यायां निरपेक्षबोधकत्वसिद्ध्यर्थं विधित्वकल्पनैव युक्ता । अनुवादे सापेक्षबोधकत्वं वाक्यस्वभावेन विधितात्पर्येऽवधृते यच्छब्दो न विधिप्रतिबन्धकः य एता रात्रीरुपयन्तीतिवदित्यर्थः । नन्वत्र सोमाय यजत इति सोमयुक्तयागप्रतीतेः विप्रकृष्टोऽपि सोमयागः सोमयुक्ततया प्रतीयत एव दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत इतिवत् । अतस्तत्र ग्रहणान्तररूपसंस्कारविधिरेव युक्त इति चोदयति—नन्विति ।

चतुर्थ्यन्तत्वान्न सोमयागप्रत्यभिज्ञेति यागविधिरेव। यागविधौ च ग्रहणस्य सोमद्रव्यार्थत्वात् सोमायेत्यन्वयः। अदाभ्यस्य च ग्राह्यस्याप्रसिद्धेर्गुणकर्मणश्च द्वितीयान्तनामासंभवात् अदाभ्यपदं विधेययागनाम। अव्यक्तत्वेन च सौमिकधर्मलाभाद्यागनिर्वाहः। गृह्णातिस्तु ग्रहणानुवादः ससोमशब्दः। ग्रहणान्तरविधेर्वा प्रकृतितो विधिभेदः। प्रवृत्तिनिमित्तञ्च कथञ्चिदनुसरणीयम्। एतच्च ग्रहणनामत्वेऽप्यविशिष्टम्। अंशावप्येतत्तुल्यमिति पूर्वः पक्षः।

---

नैवमिति। युक्तं सोमेन यजेतेत्यत्र दूरस्थसोमयागप्रत्यभिज्ञानं सोमस्योभयत्र करणतयाऽन्वयात्। इह तु सोमस्य चतुर्थ्यन्तत्वात् सोमप्राधान्यावगतेः न सोमगुणकयागप्रत्यभिज्ञेति यागान्तरविधिरेव युक्त इत्यर्थः। ननु यागविधिपक्षे सोमद्रव्यस्य तत्र करणत्वात् कथं सोमायेति चतुर्थीत्यत्राह—यागविधौ चेति। यागविधिपक्षे ग्रहणस्य सोमार्थत्वात् सोमायेति तादर्थ्ये चतुर्थीत्वादन्वयः। तथा च सोमाय गृहीत्वा अदाभ्यं यजत इत्यन्वयः। ननु यथाश्रुतान्वयं विहाय व्यत्यासेनान्वयो न युक्त इत्यदाभ्यं गृहीत्वेत्येवान्वयो युक्त इति सोमाय गृहीत्वेत्यन्वयाभावात् कथं सोमार्थता ग्रहणस्येत्यत्राह—अदाभ्यस्य चेति। स्यादेतदेवं यदि ग्रहणे अदाभ्यस्यान्वययोग्यता। न तावत् ग्राह्यतयाऽन्वयः, अदाभ्यसंज्ञकस्य ग्राह्यस्याप्रसिद्धेः। न चापि ग्रहणनामतयाऽन्वयः गुणकर्मणो ग्रहणस्य द्वितीयान्तनामासम्भवात् साध्यभूतकारकार्थत्वादित्यर्थः। केन तर्हि अदाभ्यपदस्य द्वितीयान्तस्यान्वयः इत्यत्राह—अदाभ्यपदमिति। विधेययागस्य साध्यत्वात् द्वितीयान्तमदाभ्यपदं यागनामैवेत्यर्थः। नन्वेवं यागान्तरविधौ कथं तन्निर्वाह इत्यत्राह—अव्यक्तत्वेन चेति। नन्वेकस्मिन् वाक्ये यागो विधेयः सोमसंस्काररूपग्रहणमपीति वाक्यभेदः स्यादित्यत्राह—गृह्णातिस्त्विति। नन्वेवं प्रकृतितोऽस्य न सर्वथा भेद इति कर्मान्तरविधेरेवानिर्वाहः। उद्भिदादिषु अधिकारभेदान्निर्वाहः। इह तु अश्रुताधिकारे विश्वजिन्न्यायात् स्वर्गकामेऽधिकारिणि न ततो भेद इत्यरुच्या पक्षान्तरमाह—ग्रहणान्तरेति। तच्च पूर्वपक्षोपक्रमवेलायामुक्तम्।

ननु यागनामत्वे अदाभ्यपदस्य कथं प्रवृत्तिनिमित्तमित्यत्राह—प्रवृत्तीति। धातुप्रत्ययविभागोन्नयनेन प्रवृत्तिनिमित्तं कथञ्चिदनुसरणीयमित्यर्थः। एतञ्च कथञ्चिद्वर्णनं राद्धान्ते ग्रहणनामत्वेपि समानमित्यत्राह—एतच्चेति। अंशूदाहरणेप्येवमेवेत्याह— अंशावपीति। ननु ग्रहणान्तरविधौ वाक्यभेदः स्यादित्यत्राह—इति पूर्वः पक्ष इति। क्त्वाप्रत्ययेनैकवाक्यतावगमात्। अंशौ तु यष्टुमित्यध्याहार इति भावः।

ज्योतिष्टोमेऽपि सोमद्रव्यार्थत्वाद्ग्रहणस्य सोमायेति निर्देशान्वयात्। अनुवादे च प्राप्त्यनुसारात्तस्यैव प्रतीतेः, उपदेशतस्तस्य सोमान्वयात्। अतोऽनुवादे न विधिकल्पनेति ज्योतिष्टोम एव अदाभ्याख्यग्रहणविधिः। अंशावप्येवम्। गुणकर्मणोऽपि द्वितीयान्तं नाम युक्तम्। प्रयत्नकर्मत्वादिति राद्धान्तः।

---

राद्धान्तमाह— ज्योतिष्टोमेऽपीति। स्वतस्तावत् बर्तमानापदेशात् यदुपबन्धाच्च न विधिः। किन्तु सोमयागानुवादतैव। न च विप्रकृष्टतया तदप्रत्यभिज्ञा। सोमद्रव्यमुखेन तत्प्रत्यभिज्ञोपपत्तेः। न च तस्य सोमकरणतया सोमायेति चतुर्थ्यन्तानन्वयः। ज्योतिष्टोमे सोमस्य ग्रहणसंस्कार्यतया तदर्थत्वाद्ग्रहणस्य सोमायेति चतुर्थ्यन्ततयाऽनुवादोपपत्तिरित्यर्थः। ननु सोमाय यजत इति सोमस्यात्र यागसम्बन्धः प्रतीतो न ग्रहणसम्बन्धः येन ग्रहणापेक्षया प्राधान्यात् चतुर्थ्यनुवाद इत्यत्राह—अनुवादे चेति। अनुवादे तात्पर्येऽवधृते तस्य प्राप्तिगवेषणे ज्योतिष्टोमे सोमस्य तदर्थग्रहणस्य च प्राप्तेः तस्यैव प्रतीतिः। अन्यापेक्षयापि प्रधानभूतसोमसम्बन्धावगतेः। सोमाय यजत इति तस्यैवानुवाद इत्यर्थः। ननु सोमसम्बन्धिनः उद्भिदादयोऽपि यागाः सन्तीति कथं तस्यैव प्रतीतिरित्यत्राह—उपदेशत इति। सापेक्षनिरपेक्षन्यायादिति भावः। ननु निरर्थकानुवादाद्वरं विधिकल्पनेति शङ्कामात्रं निगमयन् अपनुदति—अत इति। कल्प्यो विधिः स तु न यागस्य तस्य प्रत्यभिज्ञानात्। किन्तु ग्रहणमात्रविधिःन तु ग्रहणस्य कार्यान्तरापेक्षस्य यागविधिः ज्योतिष्टोम एव ग्रहणविधेः कार्याकाङ्क्षापूर्तेः। अतो नानुवादे यागविधिकल्पना। न च ज्योतिष्टोमे ग्रहणस्यापि प्राप्तेः तद्विधिरनर्थकः अदाभ्यसंज्ञकग्रहणान्तरविधेरित्यर्थः।

ननु अदाभ्यपदस्य ग्रहणनामताऽयुक्ता द्वितीयान्तत्वादित्यत्राह—गुणकर्मणोऽपीति। रथन्तरं गायति [इति] रथन्तरादिवद्गुणकर्मणोऽपि द्वितीयान्तनाम युक्तं प्रयत्नकर्मत्वात्। यागनामत्वेऽप्यस्य तुल्यत्वादित्यर्थः। ननु अनारभ्याधीतस्य हिरण्यभरणादिवत् नियोगविषयतैव युक्तेति ग्रहणस्य कथं संस्कारता कथं वा अंशुवाक्ये राद्धान्तः? सोमयागाप्रतीतेरित्यत्राह—इति राद्धान्त इति। यत्र मुखान्तरतोऽपि न प्रत्यभिज्ञा तत्र हिरण्यभरणन्यायः इह तु स्ववाक्य एव ज्योतिष्टोमप्रत्यभिज्ञानम्। तथा अंशुं गृह्णातीति श्रुत्यर्थविधानबलात् ग्रहणमात्रविधिभानम्। अन्यथाऽध्याहारापत्तेः। अदाभ्यसाहचर्याच्च ज्योतिष्टोम एव तद्विधिरिति भावः।

॥१०॥ अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥२१॥

रूढोऽपि ज्वलने अग्निशब्दो द्वितीयान्तोऽपि यज्यन्वितो यजिनामेति स्थिते स्तोत्रविशिष्टयागविधौ मत्वर्थलक्षणागौरवञ्च माभूदिति अग्निं चिनुत इत्यत्राग्निनाऽग्ना साध्यत्वलक्षणया यागविधिः चिनुत इति ग्रहसङ्घातानुवादः अथातोऽग्निमिति वाक्येनाग्नियागे स्तोत्रविधिः।

---

॥१०॥ अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ॥२१॥

अस्त्यग्निः य एवं विद्वानग्निं चिनुत इति। तत्र चिन्ता—किमग्निं चिनुत इति वाक्येन यागविधिः अथातोऽग्निमिति वाक्ये तस्मिन् यागे स्तोत्रगुणविधिः। उताग्निवाक्ये चयनविधिः उत्तरवाक्ये स्तोत्रविशिष्टयागविधिरिति शास्त्रभेदाभेदचिन्तयाऽध्याये सङ्गतिः। पूर्वत्र प्राप्तयागप्रत्यभिज्ञानात् तत्र न यागविधिः इह तु न तथेति। तथा पूर्वत्र ग्रहणविधाने वाक्यान्तरे न कश्चिद्दोषः। इह तु चयनविधौ अथातोऽग्निमिति वाक्ये विधिगौरवाद्यनेकदोष इत्युत्थानाद्वान्तरसङ्गतिः। नन्वग्निशब्दो ज्वलने रूढतया न यागवचनः। न च पदान्तरेण यागोपादानमिति कथं यागविधितया पूर्वपक्ष इत्यत्राह—रूढोऽपीति। सत्यमग्निशब्दो ज्वलने रूढः तथाप्युत्तरवाक्ये अग्निं यजतीति द्वितीयान्तो यजिसामानाधिकरण्येनान्वितो यागनामैव तेन पूर्ववाक्येपि यजिनामैवाग्निशब्द इति स्थिते अग्निं चिनुत इत्यत्रैवाग्निसंज्ञकं यागं कुर्यादिति यागविधिरित्युत्तरेण सम्बन्धः। ननूत्तरवाक्य एव यजिविधिरस्तु। अग्निवाक्ये तु चयनमात्रविधिरस्त्वित्यत्राह—स्तोत्रेति। विधिगौरवमत्वर्थलक्षणाद्यनेकदोषापत्तेस्तथा न युक्तमित्यर्थः।

ननु अग्निपदान्न साध्यावस्थायाः प्रतीतिः कथं तद्विधिरित्यत्राह—अग्निनाम्नेति। यद्यपि नाम सिद्धावस्थावाचकं तथापि साध्यावस्थालक्षणया यागविधिः। न च विधौ लक्षणेति वाच्यम्। सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति वत् गत्यन्तराभावेनाङ्गीकार्यत्वात्। राद्धान्तेपि तस्याः समत्वादिति भावः।

ननु यागविधौ कथं चितुत इत्यस्यान्वय इत्यत्राह—चिनुत इति। विधेययागेऽतिदेशतः प्राप्तानां ग्रहणानां सङ्घातः प्रचयपरेण चिनोतिनाऽनूद्यते। अनुवादे यथाप्राप्ति तात्पर्यादित्यर्थः। नन्वेवमुत्तरवाक्ये किं क्रियत इत्यत्राह—अथात इति। प्रकृतेऽग्नियागे स्तोत्रमात्रविधावति लाघवमित्यर्थः। ननु ज्वलनशब्दस्य रूढ्यनुग्रहाय अग्निं यजतीत्यग्निं चयनेन संस्कृत्य यजतीति ज्वलनस्यैव यागान्वय इति शङ्कते—नन्विति। मैवमिति। चयनेन संस्कृत्येत्यनेकाध्याहारात् रूढिं विहायापि वरं यजिनामतैवेत्यर्थः।

नन्वग्निं यो यजतीत्यग्निं चयनेन संस्कृत्येत्यध्याहारे ज्वलनस्यैव यागान्वयः। मैवम्। अनेकाध्याहाराद्वरं यजिनामत्वमिति पूर्वः पक्षः।

ज्वलने रूढस्याग्नेः कर्मश्रुत्या चयनविधिरेव युक्तः। तत्पूर्वकमथातोऽग्निं चित्वेत्यध्याहाराङ्गीकारात् स्तोत्रान्वितयागविधिर्युक्तः। प्रसिद्धार्थहानमप्रसिद्धार्थकल्पनञ्च पूर्ववाक्यावगतार्थहानञ्च, नाम्ना लक्षणयापि यागविधानं चिनुत इति कथञ्चिदनुवाद इति सर्वमन्याय्यम्। वरमध्याहारो गौरवं मत्वर्थलक्षणा चेति राद्धान्तः। ज्योतिष्टोमविकाराणाञ्च तत्पूर्वकत्वा-

---

ननु वाक्यद्वयवर्त्यग्निशब्दरूढ्यनुग्रहार्थं वाक्यद्वयेऽपि श्रुत्यर्थविधिलाभार्थं च एकत्र चयनविधिः अपरत्र विशिष्टयागविधिरेव युक्त इत्यत्राह—इति पूर्वःपक्ष इति। स्यादेवं यदि विशिष्टविधिः सम्भवति। न च तत्सम्भवः। विशिष्टक्रियाप्रतीत्ययोगात्। न च रेवतीवत् कर्तृद्वारा क्रियाद्वयस्य विशेषणविशेष्यताधीः तद्बोधकश्रुत्यभावात्। नापि लक्षणा, विशेषणविशेष्यभावस्य मानान्तरतोऽनवगमात्, अतो रूढिपरित्याग एवात्र श्रेयानिति भावः।

राद्धान्तमाह—ज्वलन इति। अग्निं चिनुत इति प्रथमपठिते वाक्ये द्राग् ज्वलनप्रतीतेरीप्सितकर्मश्रुत्या तस्यासमानपदोपात्तचयनसंस्कारविधिरेव युक्त इति वाक्यार्थप्रतीतौ सत्यां पश्चात् तत्पूर्वक—'अथातोऽग्नि'वाक्ये द्वितीयान्तादग्निबुद्धौ संस्कार[२]वाचित्वाच्चयनकर्मतयैवाग्नेर्धीरित्यग्निं चित्वेत्यध्याहार एव युक्तः। उत्पत्तिवाक्ये पूर्वस्मिन् स्वतो ज्वलनधीरिति तदनुरोधेन विनियोगवाक्येऽप्युत्पत्त्यपेक्षेति तथैव धीरिति श्रुतसिद्ध्यर्थमश्रुताध्याहारो युक्त इति विवरणोक्तरीत्याप्यध्याहार एवात्र युक्त इति स्तोत्रविशिष्टयागविधिरेव युक्त इत्यर्थः। ननु विशिष्टविधौ गौरवं मत्वर्थलक्षणाध्याहारश्चेत्यनेकदोषापत्तिरित्याशङ्क्य पूर्वपक्षे दोषषट्कापत्तिं प्रदर्श्य ततो वरं दोषत्रयाङ्गीकार इत्याह—प्रसिद्धेति। प्रसिद्धज्वलनहानिः अप्रसिद्धयागार्थकल्पना चयनवाक्यावगतार्थहानं, नाम्ना साध्यावस्थालक्षणा विधौ च लक्षणा। चिनुत इति कथञ्चित् ग्रहादिसङ्घातानुवादः इत्येवं दोषषट्कमित्यर्थः। ननु राद्धान्ते विधौ लक्षणा दुष्टा। अध्याहारे चानेकपदाध्याहारदोषान्तरं मानान्तराप्रसिद्धक्रियाद्वयविशेषणविशेष्यतास्वीकारश्चेति दोषत्रयमपि पूर्वोक्तेन दोषषट्केन सममेवेत्यत्राह—इति राद्धान्त इति।

न तावदनेकपदाध्याहारः चित्वेत्येकस्यैवाध्याहारात्। नाप्यप्रसिद्धता विशेषणविशेष्यभावस्य अग्निष्टोमेन यजतीति तृतीयया सम्बन्धावगतेः। केवलं

---

१. A क्त्वाश्रुतेः।  २. B पाठवात्।

दन्वर्थप्राप्तिः इत्युक्तम् । अग्नेः स्तोत्रमग्नेः शस्त्रमिति लक्षणयाऽन्वयः ।

## ॥११॥ प्रकरणान्तरे प्रयोजनान्यत्वम् ॥२४॥

नन्वप्रकृते होमे जुहोतीति श्रुतेः होमविधिर्युक्तः । न च मासगुणश्रुतेः तन्मात्रविधिः युक्तः, कर्मणोऽप्यप्राप्तत्वात् । अनेकगुणश्रुतेश्च गुणवद्विधिर्युक्तः । अत्र समाधिः । नियतहोमे प्रसिद्धनाम्नाऽग्निहोत्रपदेनाप्रकृतहोमावगतेः तत्र गुणविधिर्युक्तः ।

---

विधौ लक्षणामात्रं तथापि दोषबाहुल्यं पूर्वपक्षे तथा वाक्यद्वये श्रुत्यर्थविधानलाभः । द्वितीयायाश्चोपात्तधात्वर्थापेक्षया ईप्सितत्वं, अन्यथा कृत्यनीप्सितकर्मत्वमेवेत्याद्यूहनीयमिति भावः । ननु चित्वेत्यध्याहारेऽनुशब्दोऽनर्थकः स्यात क्त्वासामर्थ्यादेव पश्चात्त्वसिद्धेः तत्राह—ज्योतिष्टोमेति । अन्यत एवान्वर्थप्राप्तेरनुवाद एवानुशब्दः अनुशब्दस्य कथञ्चिद्वर्णनं पूर्वपक्षेऽपि समानमिति भावः । ननु अग्नेः स्तोत्रं अग्नेः शस्त्रमिति लिङ्गदर्शनं राद्धान्तेऽनुपपन्नं, अग्निशब्दस्य यागनामत्वं हि तद्यागसम्बन्धत्वात् स्तोत्रशस्त्रयोरित्याह—अग्नेःस्तोत्रमिति । लक्षणया लिङ्गदर्शनोपपत्तिः । सा च तस्मिन्नेव वाक्ये नान्यत्रापीति भावः ।

## ॥ ११ ॥ प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

कुण्डपायिनामयने श्रूयते "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजेत इति । तत्र चिन्ता—किं नित्येऽग्निहोत्रे नित्यदर्शपूर्णमासयोश्च गुणविधिः उत कर्मान्तरविधिरिति । अध्यायसङ्गतिरुत्तरत्र वक्ष्यते । पूर्वत्राग्निशब्दवदत्रापि अग्निहोत्रशब्दमुख्यार्थत्वाय न यागान्तरविधिरित्युत्थानात् अवान्तरसङ्गतिः । अतः प्रभृति प्रकरणान्तरप्रमाणस्य पेटिकापूर्वपक्षमाक्षिपति—नन्वप्रकृत इति । असन्निहिते कर्मणि कर्मश्रुतेः विधिसमानपदोपादानश्रुत्या तद्विधिपरतैव युक्ता स्वतःसाध्यत्वात् कर्मण इत्यर्थः । ननु सगुणकर्मश्रुतौ रक्तपटन्यायेन गुणविधिपरतैव, गुणमात्रविधौ लाघवादित्यत्राह—न चेति । तत्र हेतुः—कर्मणोऽपीति । यत्र प्राप्तं कर्म सन्निहितं न प्रत्यभिज्ञायते तत्रोद्भिदादिवत् कर्मविधिरेव युक्त इत्यर्थः । अत्र चायमपरो विशेष इत्याह—अनेकेति । इह मासोपसद्रूपगुणद्वयश्रुतेः गुणविधिरेव युक्त इत्यर्थः । उच्यत इति । सत्यमप्रकृतं कर्म तथापि नियतहोमप्रसिद्धनाम्ना अग्निहोत्रपदेन नित्यस्य होमस्य यत्प्रसिद्धं नाम अग्निहोत्रपदं तद्बलेन विप्रकृष्टोऽपि होमः प्रत्यभिज्ञायत एव अग्निष्टोमे प्रवृणक्तीतिवत् । अतस्तदुद्देशेन गुणविधिर्युक्त इत्यर्थः । ननूद्दिश्यानेकगुणविधौ वाक्यभेदः स्यादिति पूर्वाक्षेपा-

नन्वनेकगुणविधेर्वाक्यभेदः—मैवम् । इदमेवात्र चिन्त्यते—किमग्निहोत्रश्रुतिबलेन वाक्यभेदोऽङ्गीक्रियतां उतैकवाक्यताबलेन लक्षणेति । अत्र श्रुतसिध्यर्थमश्रुतवाक्यद्वयकल्पना युक्ता, पदार्थान्वयानुसारित्वात् वाक्यार्थस्य । लोके तु वक्त्रभिप्रायात् गङ्गायां घोष इत्यादौ लक्षणेति पूर्व पक्षः ।

समुच्चरितपदानामेकार्थताव्युत्पत्तेः तात्पर्याधीनञ्च पदार्थत्वमिति लक्षणैव युक्ता । लोकेऽपि व्युत्पत्तित एव लक्षणेति । गुणद्वययुक्त-होमान्तरविधिरिति राद्धान्तः ।

---

भिप्रायमाह—नन्विति । मैवमिति । भेदमात्रं दोषत्वेन मा वादीरित्यर्थः । तत्र हेतुः किमिति । यद्यप्येकवाक्यत्वमपि श्रुतं तद्धाने श्रुतहानमेव तथापि पदार्थानुसारित्वाद्वाक्यार्थस्य न तदुन्मेषः । ज्ञाते हि पदार्थेऽनेकपदार्थान्वयप्रतिसन्धानपूर्विका एकवाक्यताबुद्धिः नैमित्तिकी विलम्बिता बुद्धिः । न निमित्तं पदार्थज्ञानं शीघ्रभावि बाधितुमलम् । प्रत्युत स्वयमेव तेन बाध्यत एवेति भावः । कथं तर्हि गङ्गाघोषादिषु लोके लक्षणेत्यत्राह—लोके त्विति । पुंवाक्ये तु वक्त्रभिप्रायादिना लक्षणा वेदे तु न तथेत्यर्थः । नन्वेवं वेदे सर्वत्र मुख्यार्थतालाभेन लक्षणाहाने तत्र तत्र स्थितानां तन्त्रन्यायानां लक्षणामूलानामुच्छेदः स्यादित्यत्राह—इति पूर्वःपक्ष इति । न्यायबलात् सर्वाक्षेपेपि किं नः छिन्नमिति पूर्वपक्षिणो भावः ।

राद्धान्तमाह—सत्यमिति । सत्यं निमित्तपदार्थज्ञानाधीनं नैमित्तिकवाक्यार्थज्ञानम् । तत्तु व्युत्पन्नस्य प्रतीतिसमये आद्ये व्युत्पत्तिसमये समभिव्याहृतसकलपदानां विशिष्टार्थबुद्धौ निमित्ततामवधार्य पश्चात् तदानुगुण्येन पदार्थत्वं स्वीकृतमिति सर्वपदार्थसन्दर्भश्रवणे विशिष्टैकार्थबुद्धिनिमित्तत्वं पदानामवगम्यत इति प्रधानता विशिष्टैकार्थबुद्धेः तद्गुणतैव पदार्थानाम् । तथाऽनेकार्थेषु पदेषु नियतबुद्धिराकाङ्क्षादिना । तच्चान्योन्यान्वयविमर्शादिवेत्यन्योन्यान्वयबुद्ध्यभावेनैव पदार्थानां तात्पर्यज्ञानमिति मुख्यार्थत्वादेकवाक्यता बलीयसीति तदनुरोधात् लक्षणैवेह युक्तेत्यर्थः । गङ्गाघोषादावपि व्युत्पत्तित एव लक्षणा न वक्त्रभिप्रायादित्याह—लोकेऽपीति ।

उपसंहरति—गुणद्वयेति । नन्वेतत् पूर्वापरविरुद्धम् साप्तमिकाग्निहोत्राधिकरणे तु अग्निहोत्रपदस्य साध्यसादृश्यतात्पर्यात् गौणत्वं वक्ष्यते । इह तु लक्षणेति तत्राह—इति राद्धान्त इति । जघन्यवृत्त्यभिप्राया लक्षणोक्तिः । न च विशिष्टकर्मान्तरविधिपक्षे मत्वर्थलक्षणापत्तिः क्त्वाबलादेव विशिष्टावगतेरिति भावः ।

नन्वेवं गुणादेव भेदो न प्रकरणान्तरात्। मैवम्—अप्रकृतत्वं हि प्रकरणान्तरत्वं तदस्त्येव। तत्तु नाम्नाऽऽक्षिप्तं नामापि गुणद्वयश्रुतेः निरस्तम्। अतः प्रकरणान्तरमेव भेदकं मूलभूतम्।

ननु गुणद्वयादपि शक्यं कर्मविधानम्। किं प्रकरणान्तरेण। मैवम्। न ह्यनधिगतार्थगन्तृ प्रमाणम्। किन्त्वनपेक्षम्। अस्ति च गुणद्वयश्रुत्यभावेऽपि फलश्रुतावप्रकृतत्वात् कर्मभेददर्शनम्। अतः प्रकरणान्तरसिद्धिः।

ननु मासं दर्शपूर्णमासाभ्यामित्यत्र गुणद्वयाश्रुतेः न सिद्धान्तः।

---

नन्वेवं तर्हि गुणद्वयादेवात्र कर्मभेदो न प्रकरणान्तराख्यात् प्रमाणादिति चोदयति—नन्विति। मैवमिति। प्रकरणान्तराख्यं हि नाम प्रमाणं अप्रकृतत्वे अप्रत्यभिज्ञानं, तदत्रास्त्येवेति तत एव भेदः। ननु तर्हि गुणद्वयोपन्यासः किमर्थ इत्यत्राह—तन्नाम्नेति। तदपि अप्रत्यभिज्ञाख्यं प्रकरणान्तरं नामत एवात्रापि नैयमिकाग्निहोत्रप्रत्यभिज्ञाऽस्तीत्याक्षिप्तम्। कथं तर्हि तत्समाधिरित्यत्राह—नामापीति। तच्च नामापि गुणश्रुतिबलात् न प्रत्यभिज्ञापरमिति निरस्तम्। एतदुक्तं भवति—आख्यातात्तावत विधिस्वरसात् भेदोपस्थितिः। प्रसिद्धार्थनाम्ना भेदोपस्थितिरपि। सा तु विरोधिनी गुणद्वयविध्यसम्भवान्निराक्रियते। अतोऽत्र गुणद्वयश्रुत्या विरोधिनिवृत्तिरेव केवलं क्रियते। नतु कर्मान्तरत्वं तत् प्रकरणान्तरादेव क्रियत इति। अत इति निगमनम्। ननु चात्र गुणद्वयादेव भेदोऽस्तु किं प्रकरणान्तराख्यप्रमाणान्तरकल्पनया व्यतिरेकाभावादिति चोदयति—नन्विति। मैवमिति। माभून्नाम व्यतिरेकः तथापि प्रकरणान्तरप्रमाणस्य न विहतिरित्यर्थः। तत्र हेतुः—न हीति। ननु अनपेक्षत्वमेवासिद्धं व्यतिरेकाभावादित्यत्राह—अस्ति चेति। अकर्मसन्निधिविषये गुणद्वयश्रुत्यभावेऽपि प्रकरणान्तरादेव कर्मभेदो वाच्यः। न च तत्रापि फलश्रुतेः तस्य भेदकत्वं वाच्यम्, अनुग्राहकत्वात्तस्य। अतः फलगुणद्वयश्रुत्योः अन्योन्यव्यतिरेकादुभयत्रानुवृत्तं प्रकरणान्तरमेव प्रमाणम्। गुणद्वयश्रवणं फलश्रवणं चानुग्राहकमात्रं अतः प्रकरणान्तरसिद्धिरित्यर्थः।

ननु मासं दर्शपूर्णमासाभ्यामित्यत्र गुणद्वयश्रुत्यभावात् विरोधिनिरसनाभावान्न सिद्धान्तसिद्धिः स्यादिति चोदयति—ननु मासमिति। मैवमिति। अग्निहोत्रवाक्योक्तरीत्या दर्शपूर्णमासवाक्येपि पूर्वपक्षे वाक्यभेदोपादानसम्भवात् राद्धान्तसिद्धिरित्यर्थः। तदुपपादयितुमग्निहोत्रवाक्येऽपि विधीयमानमासाख्यकालस्य

मैवम्। मासमुपसद्भिश्चरित्वेत्यन्वयात् मासविशिष्टोपसद्विशिष्टहोमविधिः शीघ्रविहितप्रातराद्यवरोधात् मासस्य न होमान्वयः। अत उपसदन्वयो युक्तः। एवं यागेऽपि पौर्णमास्यादेः शीघ्रविहितत्वान्न मासविधिरित्यनुषङ्गात् उपसदान्वयात्। तत्रापि गुणद्वयादेव सिद्धान्तः। मासमिति चात्यन्तसंयोगे द्वितीया। अतः पौर्णमास्यादिविरोधिता। अत्र च मास-

---

उपसदन्वय एव न होमान्वय इत्यत्राह—मासमिति। मासमुपसद्भिश्चरित्वेत्यन्वयो न मासं जुहोतीति। अतो मासमुपसद्भिश्चरित्वा जुहोतीत्यन्वये पूर्वपक्षे उपसत्सु मासविधिः, ताश्चाग्निहोत्र इति वाक्यभेदः। अतः तत्परिहाराय मासयुक्तोपसद्विशिष्टहोमान्तरविधिरेवेत्यर्थः। ननु मासं जुहोतीति होमान्वय एव किमिति न भवतीत्यत्राह—शीघ्रविहितेति। प्रातर्जुहोति सायंजुहोति इत्येताभ्यां शीघ्रं कालविधिः प्रकरणाम्नानात् विधेयान्तराशङ्कायाश्चाभावात्। उपसद्वाक्येन तु प्रतीतैकवाक्यतानिराकरणाक्षेपेण दूराम्नानेन अभ्यासाक्षेपेण विधेयान्तरं निरस्य विलम्बाद्वाच्य इति शीघ्रविहितप्रातराद्यवरोधान्न होमान्वय इत्यर्थः।

ननूपसदः क्त्वान्तार्थसापेक्षाः। आख्यातार्थस्तु निरपेक्षः। अतो होमान्वय एव युक्त इति शङ्कामात्रमपनुदन् निगमयति—अत इति। यत एव सर्वथा निरपेक्षहोमान्वयासम्भवः अतः सापेक्षाभिः उपसद्भिरेवान्वयो युक्त इति भावः। एवं दर्शपूर्णमासाभ्यां यजेतेत्यत्र यागेऽपि शीघ्रविहितपौर्णमास्यवरोधान्न तेन मासान्वयः किन्तु उपसद्भिरेवेत्याह—एवं च यागेऽपीति। ननु तत्रोपसदामश्रुतेः कथं तदन्वय इत्यत्राह—अनुषङ्गादिति। मासान्वयार्थं आकाङ्क्षावशादनुषङ्गात् सन्निहितोपसदन्वयेन तत्रैव मासविधिरिति तत्रापि गुणद्वयं विद्यत इति पूर्ववत् सम्बन्धद्वयविधेर्वाक्यभेदापत्तेः तत्परिहाराय विशिष्टकर्मान्तरविधिरिति तत्र गुणद्वयादेव राद्धान्त इत्यर्थः। ननु मासान्तर्गतपौर्णमास्यादिसम्बन्धेऽपि मासं दर्शपूर्णमासाभ्यामिति यथाश्रुतान्वयोऽप्यविरुद्ध इति किमित्यनुषङ्गादुपसदन्वय इत्यत्राह—मासमिति। यतः कालाध्वनोरत्यन्तसंयोग इति द्वितीयास्मरणात् मासमित्यत्यन्तसंयोगे द्वितीया अतः पौर्णमास्यादिविरोधः। न चात्यन्तसंयोगाविवक्षा, मासविधेर्निष्फलत्वापत्तेः पौर्णमास्यादेः मासान्तर्गतत्वादेव। अत एव नाधाने वसन्तकृत्तिकादिवत् समुच्चयोऽपि। न च मासमेवेति नियमः, यावज्जीवादिचोदनाविरोधापत्तेः, अतो विरोधादुपसदन्वय एवेत्यर्थः। ननु गुणविधिपक्षे कर्मविधिपक्षे च शास्त्रभेदाविशेषात् कथमध्यायसङ्गतिरित्याशङ्क्य ग्रन्थोक्तं गुणविधौ शास्त्रैक्यमाह—अत्र चेति। भावार्थसाध्यसापेक्षसाध्यकशास्त्रत्वान्न गुणविधौ शास्त्रभेदः किन्तु वाक्यभेद इत्यर्थः।

विधेः भावार्थविध्येकशास्त्रतोक्ता नियमादृष्टानुविद्धभावार्थो हि साध्यो मासादेः। भावार्थश्च स्वनियोगसाध्यताधीनसाध्यभाव इति भावार्थ-साध्यान्न भिन्नं मासादि साध्यमिति न साध्यभेदतो भावार्थशास्त्रात् भेदः। तुल्यकार्यगुणान्तरशास्त्रात्तु भेदः। इह चाधिकरणे भावार्थशास्त्रभेद-प्रसाधनात् सङ्गतिः।

॥१२॥ फलं चाकर्मसन्निधौ ॥२५॥

नैकस्य वाक्यस्य कर्मस्वरूपपरता अधिकारान्वयपरता च गत्यन्तर-

---

ननु यागादिस्वरूपस्यापूर्वनिरपेक्षस्य साध्यत्वसम्भवात् गुणशास्त्रस्य भावार्थशास्त्रानपेक्षसाध्यकता विद्यत एवेति कथमेकशास्त्रत्वमित्यत्राह—नियमादृष्टेति। स्यादेतदेवं यदि भावार्थः स्वरूपेण साध्यः स्यात् स तु नियमादृष्टानुविद्ध एव साध्यो मासादिगुणात्। ततः किमित्यत्राह—भावार्थश्चेति। स च नियमादृष्टानुविद्धो भावार्थः स्वापूर्वसाध्यत्वाधीनसाध्यभाव इति भावार्थसाध्याधीनं मासादिगुण-साध्यमिति नानपेक्षसाध्यभेद इति न साध्यभेदतो भावार्थशास्त्रात् गुणशास्त्रस्य भेद इत्यर्थः। नन्वेवं नियोगीयभावार्थरूपसाध्याविशेषात् दधिपयोरूपगुणद्वय-शास्त्रमप्यन्योन्यमभिन्नमित्यत्राह—तुल्येति। नियोगीयत्वेनाभेदेऽपि तत्तद्गुणसाध्य-नियमादृष्टानुविद्धरूपं भिन्नमेवेति समानकार्यं व्रीह्यादिगुणशास्त्रं समानकार्यात् गुणान्तरयवादिशास्त्राद्भिन्नमेवेत्यर्थः। नन्वत्र भाष्ये कर्मभेदमात्रं प्रतिपाद्यमिव भाति। तच्चासङ्गतं शास्त्रभेदलक्षणे इत्यत्राह—इह चेति। शास्त्रभेद एव तात्पर्यं तेन सङ्गतिरित्यर्थः।

॥ १२ ॥ फलं चाकर्मसन्निधौ ॥ २५ ॥

अनारभ्य श्रूयते—आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इति। तत्र चिन्ता—किं दार्शपौर्णमासिकाग्नेयादीनामेव फलान्तरसम्बन्धो विधेयः, उत कर्मान्तरविधिरिति। अत्रानुबन्धभेदनिबन्धनशास्त्रभेदस्य प्रकरणान्तरात् प्रतिपादनात् अध्याये सङ्गतिः। पेटिकायां च सङ्गतिः पूर्वत्र विधिलाघवासम्भवात् विशिष्टविधिगौरवं, इह तु उत्पन्नस्याधिकारमात्रपरत्वे लाघवमित्युत्थानात् अवान्तरसङ्गतिः। ननु पूर्ववद-त्रापि कर्मसन्निध्यभावात् कर्मान्तरमेवात्रापि विधातुं युक्तमिति कथं पूर्वपक्ष इत्यत्राह—नैकस्येति। युक्तं पूर्वत्राकर्मसन्निधौ कर्मान्तरविधानं अधिकारपरत्वा-भावात्तस्य वाक्यस्य इदं त्वधिकारपरं रुक्कामाद्यधिकारश्रुतेः। न चैकस्य वाक्यस्य कर्मस्वरूपपरता अधिकारान्वयपरता च युक्ता गौरवापत्तेः। यद्यप्युद्भिदादि-

सम्भवे युक्तेत्यधिकारपरत्वम्। तत्परत्वे चोत्पत्त्यपेक्षत्वं युक्तम्। द्रव्यदेवताद्वारेणाप्रकृताऽप्युत्पत्तिः प्रत्यभिज्ञातेत्यधिकारान्वयमात्रपरं युक्तम् वाक्यम्। युक्तञ्चाधिकारान्तरान्वितस्यापि अधिकारान्तरान्वयित्वं "एकस्य तु उभयार्थत्वे संयोगपृथक्त्व"मिति न्यायादिति पूर्वं पक्षः॥

अप्रकृततया नियोगाप्रत्यभिज्ञानात् विधेयं कर्मेति स्थिते द्रव्यदेवतयोश्च समश्रुतित्वात् समकाल एवान्वयः। कर्मस्वरूपन्तु न विधेय-

---

वाक्यानां उभयपरता दृष्टा सा तु गत्यन्तराभावात्। इह तु सति गत्यन्तरे सा न युक्तेति अधिकारपरत्वमेवेत्यर्थः। नन्वधिकारस्योत्पत्त्यपेक्षत्वात् उत्पत्तेश्चात्रासन्निधानात् उभयपरत्वमेव युक्तमित्यत्राह—तत्परत्वं चेति। सत्यमुत्पत्त्यपेक्षमधिकारपरत्वं सत्यंचोत्पत्तिरप्रकृता तथापि दूरस्थाप्युत्पत्तिः द्रव्यदेवताभ्यां प्रत्यभिज्ञायते। अतस्तस्या एवाधिकारान्वयमात्रपरं वाक्यं लाघवाद्युक्तमित्यर्थः।

ननूत्पत्तेरधिकारान्तरान्वितत्वात् कथमधिकारान्तरान्वय इति तत्राह—अधिकारान्तरेति। क्लृप्तोत्पत्तिसम्भवे नोत्पत्त्यन्तरकल्पना युक्तेत्येकस्य तूभयत्वमिति न्यायात् अधिकारान्तरान्वितस्याप्यधिकारान्तरान्वयो युक्त एव। यथाऽग्निहोत्रोत्पत्तेः स्वर्गकामाधिकारान्वितायाः अपि जीवनाधिकारान्वय इत्यर्थः। ननु नित्यकामाधिकारान्वयो युगपद्युक्तः उभयोरपि वाक्ययोरुत्पत्तौ सन्निधानात् अस्य तु न तथा सन्निधिरिति अधिकारान्तरावरुद्धे नाधिकारान्तरनिवेश इत्यत्राह—इति पूर्वः पक्ष इति। गुणो हि कर्मणि नियतो गुणान्तरावरोधकः नाधिकारः सर्वेभ्यो दर्शपूर्णमासाविति वदिति भावः।

राद्धान्तमाह—अप्रकृततयेति। नहि कर्मस्वरूपमात्रज्ञानं विधिप्रतिबन्धकं प्रत्युतानुगुणमेव। अप्रतीतस्य विधानायोगात्। किन्तु कार्यतया ज्ञानं तच्चात्र नास्ति। अप्रकृततया[1] कार्यताबोधकनियोगस्याप्यप्रतिज्ञाततया कार्यतया यागाप्रत्यभिज्ञानादित्यत्र यागरूपं कर्मविधेयमेवेत्यर्थः। ननु द्रव्यदेवतामुखेन सकार्यको यागः किमिति न प्रत्यभिज्ञायते दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र कर्मप्रत्यभिज्ञा सोमद्रव्यमुखेनेवेत्यत्राह—इति स्थित इति। युक्तं सोमेन कार्यप्रत्यभिज्ञानं, अविधेयत्वात्सोमस्य। इह तु द्रव्यदेवतयोः समश्रुतित्वात् समकालमेवोभयत्र विधेयतयाऽन्वय इति नान्योन्यप्रत्यभिज्ञा। न च प्रकृतिविकृतितया स्वार्थबोधे तात्पर्यं, धर्मग्रहे हि तत्। अतो विधिविधेययोरप्रत्यभिज्ञानात् कर्मान्तरतैवेत्यर्थः।

---

१. अप्रवृत्ततया

मित्यभिहितमात्रमधिकारार्थं विधीयत इति नोभयपरतेत्यप्रकृतत्वादेवानुबन्धभेदात् शास्त्रभेदः ।

न च फलं नाम प्रमाणान्तरं अनुग्राहकं तदिति राद्धान्तः । प्रयोजनम्

---

नन्वेवं कर्मस्वरूपमपि विधेयं अधिकारान्वयोऽपीति विधिगौरवं स्यादित्यत्राह—कर्मेति । स्यादेतदेवं यदि कर्मस्वरूपमपि विधेयं स्यात् । तत्तु नास्तीत्यर्थः । कथं तर्हि अविहितस्याधिकारार्थतया विधानमित्यत्राह—इत्यभिहितमात्रमिति । अभिधानप्रसिद्धमात्रस्यैवाधिकारनियोगान्वयितया विधिः । उत्पत्त्यपूर्वस्यौपादानिकताऽन्यतः सिद्धेः न तत्परतापि वाक्यस्योपेयेत्यर्थः । नन्वत्र फलं चाकर्मसन्निधाविति सूत्रभाष्ययोः फलस्य भेदकत्वमुक्तमिव भाति । तच्चानुपपन्नम् । अभिधानान्तरादिप्रमाणषट्कभेदकत्वप्रतिज्ञाविरोधादित्यत्राह—इत्यप्रकृतेति । अत्रापि प्रकरणान्तरादेवानुबन्धभेदाच्छास्त्रभेदः न फलादिति न प्रतिज्ञाविरोध इत्यर्थः । त्रत हेतुः - न च फलमिति । न हि फलस्य प्रमाणान्तरत्वं दाक्षायणयज्ञादावननुगमात् । किन्तु प्रकरणान्तराख्यप्रमाणस्यानुग्राहकत्वमेव । तदनुग्रहश्चैवम्—कर्मासन्निधौ हि यजिशब्दस्य यागमात्रवचनत्वात् विधिस्वरसादेव यागान्यत्वं प्राप्तं यथा नामतः प्रत्यभिज्ञया अन्यबाधे प्राप्ते यथा गुणद्वयात् स्थिरीकृतं पूर्वत्र । द्रव्यदेवताद्वारा कथञ्चित् प्रत्यभिज्ञायामन्यत्वबाधे प्राप्ते फलस्य विधेयतानर्हत्वात् द्रव्यदेवतयोश्च समश्रुतितया अप्रत्यभिज्ञाहेतुत्वात् अप्रकृतत्वप्राप्तेः कर्मान्यत्वं स्थिरमिति भावः । नन्वेवं पूर्वोत्तरपक्षकरणं ग्रन्थविरुद्धम् । ग्रन्थे हि फलस्यैव विधेयत्वं पूर्वपक्ष उक्त्वा फलस्याविधेयत्वेन राद्धान्तितमित्यत्राह–इति राद्धान्त इति ।

एवमेव पूर्वपक्षो राद्धान्तश्च यथा पूर्वोक्ता । अन्यथा फलस्य विधेयत्वे एकादशाद्याधिकरणविरोधापत्तेः । न च तस्याक्षेपोऽत्र । अधिकयुक्त्यनुक्तेः । न च नियोज्यस्याधिकारिणो वा प्रधानस्य आर्थिककर्तृद्वारा कर्मसम्बन्धितया विधेयतापि षष्ठाद्यैकादशाद्याधिकरणविरोधादेव । अतो ग्रन्थेऽपि विधेयोक्तिरधिकारान्वयविधिपरैव । राद्धान्ते च यत्फलस्याविधेयत्वमुक्तं तत्फलस्य प्रकरणान्तराख्यप्रमाणानुग्राहकं वक्तुम् । न तु यथाश्रुताभिप्रायेणेति भावः । नन्वेवं निष्प्रयोजना स्यात् यागान्यत्वेपि दार्शपौर्णमासिकाग्नेयधर्माणामतिदेशादनुष्ठाने विशेषाभावादित्याशङ्क्याह—प्रयोजनमिति । पूर्वपक्षे प्रकरणाधीताधिकारान्वयस्य शीघ्रं प्राप्तत्वात् तदधीनप्रयुक्तेरपि शीघ्रावगतत्वात् तत्प्रयुक्तस्य सतः आग्नेयादेः पश्चात् दूरस्थाधिकारन्वयो वाच्यः इति पूर्वाधिकारप्रयुक्तकर्मस्वरूपस्यैवाधिकारान्वयात् तत्प्रयुक्त्युजीवित्वात् प्रयुक्तस्यैव स्वीकारो न तु प्रयुक्त्यन्तरम् ।

राद्धान्ते तु स्वतन्त्रस्य कर्मान्तरस्य विधानात् प्रयुक्त्यन्तरमिति प्रयोजनं

पूर्वपक्षे प्रकृताधिकारान्वितस्याग्नेयादे रुक्कामाधिकारान्वयात् तत्प्रयुक्तस्याग्नेयादेरेव स्वीकारः । सिद्धान्ते तु स्वतन्त्रस्येत्यनुसन्धेयम् ।

## ॥१३॥ सन्निधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥२६॥

कर्मोत्पत्तिसन्निधावपि अधिकारविधिविषयत्वेन कर्म चेद्विधेयं कर्मान्तरमेव युक्तम् । विधित्सित एव सन्निहित एतच्छब्दो, न त्ववेष्टिधर्म-

---

पूर्वोत्तरपक्षयोरित्यर्थः । नन्वेवमुत्पत्तितुल्यतामात्रात् प्रकृतप्रयुक्त्युपजीविता यदि स्यात् तदा कामाधिकारपूर्वकस्य नित्याधिकारस्य तत्प्रयुक्त्युपजीविता स्यात् तत्राह—इत्यनुसन्धेयमिति । न तावन्नित्यस्य प्रयुक्त्युपजीवित्वं नित्यत्वबाधापत्तेः । न च कामाधिकारपूर्वकता येन तत्प्रयुक्त्युपजीविता । अधिकारवाक्यद्वयस्याप्युत्पत्तौ सन्निधानाविशेषाद्युगपदन्वयावगतेः नास्याधिकारान्वयपूर्वप्रयुक्त्यपेक्षा । इह तु न तथा सन्निधिरिति न युगपदन्वय इति भेदः । किञ्च पूर्वपक्षे प्रकृताया एवोत्पत्तेर्ग्रहात् तत्र द्व्यहकालेनावरोधादाग्नेये द्व्यहकालता । सिद्धान्ते तु विकृतितयाऽस्य सद्यस्कालतेत्याद्यनुसन्धेयमिति भावः ।

॥१३॥ सन्निधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥२६॥

राजसूये आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्याद्यवेष्ट्युत्पत्तिः श्रुता । तत्सन्निधौ एतयाऽन्नाद्यकामं याजयेदिति श्रुतम् । तत्र चिन्ता—किं कर्मान्तरविधिः उत नेति शास्त्रभेदापवादादध्यायसङ्गतिः पूर्वनयप्रत्युदाहरणतयाऽवान्तरसङ्गतिः । नन्वसन्निधानं कर्मभेदकमुक्तम् इह तु सन्निधानात् कथं कर्मभेद इति पूर्वपक्ष इत्यत्राह—कर्मोत्पत्तीति । सत्यं कर्मोत्पत्तिसन्निधिः तथापि एतया अन्नाद्यकामं याजयेत् इत्यधिकारापूर्वविषयतया यद्युत्पन्नस्यापि यागस्य विधिः तर्हि विधिस्वरसप्राप्तान्यता नैव त्याज्येति कर्मान्तराशङ्केत्यर्थः । नन्वन्यत्वे यजिसमानाधिकरणस्यैतच्छब्दस्य कथमन्वय इत्यत्राह—विधित्सित इति । अथैष ज्योतिरित्यादिवत् विधित्सितसन्निहितयागपर एवैतच्छब्द इत्यर्थः ।

ननु रेवतीवाक्ये एतच्छब्दवत् सन्निहितावेष्टिधर्मलक्षणार्थं किमिति न भवतीत्यत्राह - नत्विति । तत्र हेतुः तदा हीति । विधिस्वारस्यावगतयागान्तरताहानापत्तेरित्यर्थः । कथं तर्हि भेदनिर्वाह इत्यत्राह—अतोऽव्यक्ततयेति । ननु विहितकर्मसन्निधाने तस्य प्रत्यभिज्ञानात् विहितस्य विधानायोगात् न कर्मान्तरविधिता शङ्कार्हा । तथा साधिकारकार्यमुत्पत्त्यसन्निधान एव तदाक्षेपकम् । सन्निहिते तु

लक्षणापरः तदा ह्यत्रगतभेदो न स्यात् । अतोऽव्यक्तसौमिकधर्मलाभात् भेदसिद्धिरिति पूर्वपक्षः । पूर्वप्रत्युदाहरणमिदम् । सन्निधौ तूत्पत्तिप्रत्यभिज्ञानात् उत्पत्त्यन्तराक्षेपो न युक्तः । अधिकारविषयत्वेनैव विधेरप्राप्तप्रापकतोपपत्तेः नोत्पत्त्यन्यतयैवेति राद्धान्तः । पूर्वपक्षे च सोमधर्मत्वादन्यद्धविरिति प्रयोजनसिद्धिः ।

---

तदेव स्वीकरोतीति पूर्वपक्षाभाव एवेत्याशङ्क्य उपक्रम एवात्र पूर्वपक्षः । वस्तुतः प्रत्युदाहरणमात्रमेतत् इत्याह - इति पूर्वः पक्ष इति ।

प्रत्युदाहरणतोपपादनं—सन्निधौ त्विति । अलसो विधिरसन्निधान एवोत्पत्त्याक्षेपको न सन्निधानेऽपीत्यर्थः । कर्मविध्यभावे विधेरज्ञातज्ञापकता न स्यादित्यत्राह—अधिकारेति । अधिकारान्तरान्वयस्याज्ञातस्यैव ज्ञापनादित्यर्थः । ननु प्रकृतोत्पत्तिरेवाधिकारान्तरान्वयेऽपि किमित्यवेष्टियागस्यैवाधिकारान्वयः सर्वेषामनुमत्यादीनामपि प्रकृतित्वाविशेषात् । एतच्छब्दः प्रकृतपरः सर्वत्राप्यविशिष्टः यजिरपि तथेति नावेष्टिमात्रस्याधिकारान्तरसम्बन्धः । न चाधिकारान्तरान्वये सन्निधिविशेषोविशेषाल्हः अन्यथा अनेककरणकेऽधिकारे एकस्यैवातिसन्निहितस्य स्यात् न सर्वेषाम् । न च एतयेति स्त्रीलिङ्गात् अवेष्टिमात्रपरता, अनुमत्यादीनामपि प्रयोगसाधुस्त्रीत्वसद्भावादित्यत्राह—इति राद्धान्त इति ।

अयं भावः—राजसूयप्रकरणे हि सर्वासामुत्पत्तीनां स्वाराज्यकामाधिकारान्वयेनैवाधिकाराकाङ्क्षा शान्ता । तत्रैव चान्नाद्यकामाधिकारवाक्यं तद्बलेन च पुनः पुरुत्पत्तीनामधिकाराकाङ्क्षोत्थापनं तत्र च एतयाऽन्नाद्यकामं याजयेदित्येतच्छब्द एकवचनान्त एकमेव यागमधिकारसम्बन्धितया बोधयेत् । सन्निहिते विशेषे तस्यैवाकाङ्क्षामुत्थाप्य तमेव बोधयति । न पुनरन्येषामप्याकाङ्क्षोत्थापनपुरस्सरमवगतिः । उत्पत्तीनामधिकाराकाङ्क्षायामत्यन्तसन्निधिहानं, न चेह साऽस्तीत्युक्तम् । अतो न सर्वयागपरताऽन्नाद्यकामयजेः । यद्वा अभिषेचनीयाद्याम्नाय राजसूयवाक्यमाम्नात् । ततोऽवेष्टिः, ततोऽन्नाद्यकामवाक्यम् । अतो मध्यस्थावेष्टियागस्याधिकारद्वयसम्बन्धः । इतरेषां च राजसूयाधिकारमात्रसम्बन्ध इति । एतच्च दशमे निपुणतरं वक्ष्यामः । पूर्वोत्तरपक्षयोर्हविर्भेदादनुष्ठानभेद इति प्रयोजनमाह— पूर्वपक्ष इति ।

## ॥१४॥ आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेते ॥२८॥

पुनः श्रुतेरविशेषात् आग्नेयान्तरविधिः। ननु कालद्वययुक्तवाक्येन विहितमेककालयुक्तेनानूद्यत इति विशेषादनुवादोयुक्तः। मैवम्—सत्यमनुवादोऽपि शक्यते विधानमपि शक्यते रूपवत्त्वेनोत्पत्तिविधिस्वरसत्वात् सर्ववाक्यानां विधिरेव युक्त इति पूर्वः पक्षः। अविशेषस्तावन्नास्तीत्युक्तं कालद्वययुक्ते विधेरसन्देहात् प्रतीताव्यवहितप्रत्यभिज्ञानाच्च न

---

## ॥१४॥ आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥२८॥

दर्शपूर्णमासयोः यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति इति विधाय तत्सन्निधावेवमाम्नातम्—'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति। तत्र चिन्ता—किं यागान्तरं विधीयते उतानुवादमात्रं, उतार्थवाद इति। शास्त्रभेदापवादादध्याये पादे च सङ्गतिः। पूर्वत्र कर्मान्तराविधानेप्युत्पन्नस्य कर्मणः अज्ञाताधिकारान्वयज्ञापनान्न विधित्वहानिः। इह तु कर्मान्तराविधाने तद्धाने वाक्यवैयर्थ्यमित्येवं पूर्वपक्षोत्थानादबान्तरसङ्गतिः। ननु पूर्ववदत्रापि सन्निधानाविशेषान्न यागान्तरविधिर्युक्त इति कथं पूर्वपक्ष इत्यत्राह—पुनः श्रुतेरिति। अविशेषात्पुनः श्रुतेरभ्यासनयात् यागान्तरविधिरेव युक्त इत्यर्थः। ननु नात्राविशेषपुनः श्रुतिः कालद्वययुक्तवाक्येन विहितं कर्म एककालयुक्तेनानूद्यते। न च विपरीतं कालान्तरास्वारस्यादिति चोदयति—नन्विति।

मैवमिति। सत्यमपवादोऽपि सम्भवति तथापि सर्ववाक्यानां विधिस्वरसत्वात् विधानमपि सम्भवति। यदि परं रूपशून्यता तदा विधित्वहानम्। सा चात्र नास्ति। स्ववाक्ये द्रव्यदेवताश्रुतेः। यद्वा अन्यनिरपेक्षत्वाद्विधिरेव युक्त इति पूर्वपक्षिणोऽभिमान इति भावः। ननु अनुष्ठानविशेषाभावात् कथं कर्मभेदनिर्वाहः। कथं वा कर्मभेदे अमावास्यायामाहुतित्रयोदशत्वलिङ्गोपपत्तिः इत्यत्राह—इति पूर्वः पक्ष इति। न तावदनुष्ठानाभेदः अमावास्यायामाग्नेयपुरोडाशस्य द्विरभ्यासात्। न च लिङ्गानुपपत्तिः सम्प्रतिपन्नदेवताकयागतया ऐन्द्रदधिपयोवत् तन्त्राहुतित्वादिति भावः।

राद्धान्तमाह अविशेषेति। कालद्वययुक्तविधेरविवादान्नाविशेषपुनः श्रुतितेति एककालवाक्यमनुवाद एवेत्यर्थः। ननु विधिस्वरसं सर्ववाक्यमित्युक्तमित्यत्राह—अव्यवहितेति। सकार्यकस्य विहितस्य यागस्य प्रत्यभिज्ञानात् चकारोऽनुक्तसमुच्च-

विध्यन्तरहानम् । अतः प्रयोजनरहितोऽप्यनुवादः प्रतीतिबलात् । अथ वैन्द्राग्नविधिः प्रयोजनमस्य तत्स्तुत्यर्थत्वसम्भवादिति राद्धान्तः ।

इति श्रीमहोपाध्यायभवनाथमिश्रकृतौ
नयविवेके द्वितीयस्याध्यायस्य
तृतीयः पादः ।



यार्थः । ततश्च रूपान्तराभावात् वर्तमानापदेशाच्च न विध्यन्तरावगतिरित्यर्थः । नन्वनुवादे निष्प्रयोजनता स्यादित्यत्राह- अतः प्रयोजनेति । प्रयोजनराहित्येऽपि प्रतीति बलादनुवाद एव युक्तः, न प्रयोजनतः प्रमाणमिति बहुश उक्तम् । अतो नान्तरिक्षे न दिवीति वदनुवादता प्रमाणबलाद्युक्तेत्यर्थः । ननु तत्रापि पृथिव्यामग्निचयन-स्तुत्यर्थं अन्यनिन्देति न निष्प्रयोजनतेत्याशङ्क्य तद्वदत्रापि वक्तुं शक्यमित्याह— अथ वेति । अथवा ऐन्द्राग्नस्तुत्यर्थतायाः तद्विध्येकवाक्यत्वादैन्द्राग्नविधिरेवास्य प्रयोजनम् । तत्स्तुतिश्चामावास्यायां केवलमाग्नेयो न साधुः ऐन्द्राग्नस्तु श्रेष्ठ इति । नन्वनुवादत्वे स्तुतित्वे चान्यापेक्षता । विधित्वे तु नेत्युक्तमित्यत्राह— इति राद्धान्त इति । उक्तनीत्या विधित्वासम्भवे सापेक्षतापि न दोषायेति भावः ।

इत्यात्रेय श्रीसुदर्शनाचार्यशिष्यस्य श्रीरङ्गनाथसूनोः
वरदराजस्य कृतौ नयविवेकदीपिकायां
द्वितीयाध्यायस्य तृतीयः पादः



# श्री नयविवेके द्वितीयाध्यायस्य

## चतुर्थः पादः ।

### ॥ १ ॥ यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥

जीवनतत्कालयोः प्राप्तत्वान्न विधिः यावदुपबन्धतया जीवनविधिरिति चेत्; न, तदा हि जीवनं होमव्याप्तम् । न जीवनविधौ होमेन व्याप्तिः ।

---

अथ चतुर्थः पादः

### ॥ १ ॥ यावज्जीविकोऽभ्यासः कर्मधर्मः स्यात् ॥ १ ॥

बह्वृचब्राह्मणे दर्शपूर्णमासप्रकरणे श्रुतम् यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । तथा तत्रैवाग्निहोत्रप्रकरणे श्रुतम्—यावज्जीवमग्निहोत्रं जुहुयादिति तत्र चिन्ता—किं काम्याग्निहोत्रे काम्ययोर्दर्शपूर्णमासयोः गुणविधिः उताधिकारान्तरचोदनेति । तत्र साध्यभेदनिबन्धनशास्त्रभेदव्युत्पत्तेः पादान्तरता निबन्धने । विवरणे तु स्फुटानुबन्धभेदाच्छास्त्रभेदः सापवादो निरूपितः । इह तु उन्नीयमानानुबन्धभेदाद्भेदः पादान्तरं अनन्तरं च । यथा अधिकारलक्षणसाध्यभेदाच्छास्त्रभेदः तथोत्तरत्र स्फोरयिष्यते । तत्र पञ्चिकायां पूर्वपक्षे यावदुपलब्धि जीवनलक्षितः कालो गुणो विधीयत इत्युक्तम् । तदनुपपन्नम् । विधौ लक्षणापत्तेः । तद्वरं श्रुतं जीवनमेव विधीयताम् । कालविधौ वा जीवनकाल एव किमिति न विधीयत इत्यत्राह—जीवनेति । जीवनकालयोरर्थप्राप्तत्वान्न विधिसम्भवः जीवन्नेव हि सर्वः सर्वमनुतिष्ठतीति न जीवनकालयोर्विधिरित्यर्थः । तर्हि यावच्छब्दार्थविशिष्टजीवनमप्राप्तमिति तद्विधिरस्त्विति शङ्कते—यावदिति । दूषयति—नेति । हि यस्मात् सदा यावदुपबद्धजीवनविधौ जीवनं होमेन व्याप्तं वक्तव्यं यदा यदा जीवनं तदा तदा होम इति । अन्यथा विधिवैफल्यापत्तेरिति भावः । अस्तु को दोष इत्यत्राह—न च जीवनेति । न च जीवनस्य होमोद्देशेन विधौ तस्य होमेन व्याप्तिः सम्भवति । उद्देश्यं हि प्रधानं विधेयं तु गुणभूतम् । न हि गुणानुविधायि प्रधानं किन्तु प्रधानानुविधायी गुणः प्रत्युद्देशं वाक्यपरिसमाप्तिन्यायात् । अतो होमेन न व्याप्तिसिद्धिरित्यर्थः ।

किन्तु जीवने होमविधौ; स च न युक्त इति यावदुपबन्धसिद्धस्य जीवनलक्षितकालविधिः, न च यावदुपबद्धकालविधिः येन कालस्यापि व्याप्यतया विधिर्न स्यात् । तावता च कालेन होमाभ्यासस्यैवान्वय इत्यभ्यासलक्षणापि । लक्षणाद्वये सत्यपि लिङो मुख्यार्थत्वादन्विताभिधानसिद्धिः ।

---

कीदृशे तर्हि विधिव्याप्तिसिद्धिरित्यत्राह—किन्त्विति । जीवनोद्देशेन होमस्य विधौ व्याप्तिः स्यादित्यर्थः । भवतु तर्हि तथैव विधिरित्यत्राह—न चेति । न हि जीवनोद्देशेन होमविधिर्युक्तः होमस्य प्राप्तत्वात् । तथा फलवत्त्वेन साध्यतया होमस्य प्रयोजनभूतत्वात् जीवनस्य सिद्धत्वादिति भावः । ननु यावदुपबद्धजीवनलक्षितकालविधिरप्ययुक्तः विधौ लक्षणापत्तेरित्युक्तमित्यत्राह—इति यावदुपबद्धेति । प्रकरणबलात् गुणविधौ तात्पर्ये निश्चिते विधान्तराभावात् हेतोर्यावदुपबद्धजीवनलक्षितः कालो विधेय इत्युक्तं पञ्चिकायामित्यर्थः । नन्वेवमपि प्राप्ताप्राप्तविवेकेन जीवनकालस्य प्राप्तत्वात् यावदुपबद्धजीवनकालविधिरेव स्यात् । ततश्च तस्यापि प्राप्तत्वाद्विधिर्न स्यादित्यत्राह—न चेति । स्यादेतदेवं यदि यावदर्थो विधेयकालविशेषणं स्यात् स तु कालोपलक्षणजीवनविशेषणमेव । अतो न कालविशेषणम् । कालस्तु यावदर्थविशिष्टजीवनलक्षित एकोपाधिवशीकृतः तावानेको विधेयः न च तत्र यावदुपबद्धशङ्केत्यर्थः ।

ननु त्रिचतुरघटिकारूपप्रातरादिसाध्यमात्रत्वाद्धोमस्य न विधेयतादृशकालान्वयार्हतेत्यत्राह—तावता चेति । तावता कृत्स्नजीवनसम्बन्धिना कालेनाभ्यस्यमानावस्थहोमस्यैवान्वयार्हतेति जुहोतिनाप्यभ्यासो लक्षित इत्यर्थः । ननु गौणपदं लक्षणापदं च नाभिधायकं अशक्तत्वात् । किन्तु स्वार्थसादृश्यसम्बन्धस्मृत्या अन्विताभिधायिवाचकपदानुग्राहकं अर्थप्रकरणादिवत् । अत्र सर्वपदानाममुख्यार्थत्वे अन्विताभिधानमेव नास्तीत्युक्तं—प्रकरणपञ्चिकायाम् । अतो यावज्जीवं जुहुयादिति लक्षकपदद्वयात्मके वाक्ये कथमन्विताभिधानसिद्धिरित्यत्राह लक्षणाद्वय इति । सत्यं लक्षणाद्वयं तथाप्यत्रान्विताभिधानं सिद्ध्यत्येव लिङो मुख्यार्थत्वादित्यर्थः । ननु यावज्जीवमिति यावति विन्दजीवोरिति णमुलन्तं पदं, अव्ययकृतश्च भावे भवन्तीति भावमात्रमर्थः । अतो यावदुपबद्धजीवनमिह होमसम्बद्धं प्रतीयते । अतो यदा जीवनं तदा होम इति होमेन जीवनस्य व्याप्तिरवगम्यते । सा च तदा स्यात् यदि सति जीवने अवश्यं होम इति व्याप्तिसिद्धये जीवनस्य निमित्तत्वमवगम्यते । निमित्तत्वं चाधिकारिविशेषणत्वमन्तरेण नोपपद्यत इति जीवनवतोऽधिकारान्तरचोदनैव युक्तेति मुधा लक्षणाद्वयस्वीकार इति राद्धान्त्याशयेन चोदयति—नन्विति ।

ननु जीवनस्य निमित्तत्वे जीवनं होमव्याप्तमेव। निमित्तत्वं चाधिकारिविशेषणस्यैव। अतोऽधिकारान्तरं युक्तम्—मैवम्। कामाधिकारविषयतया साक्षाच्छ्रुतेर्व्याप्यतया कल्पितनिमित्ताधिकारावगमस्य विलम्बितत्वात् प्रयुक्तिकल्पनापेक्षया च विलम्बात् न कामनियोगपरतयाऽवगतस्य होमादेर्नियोगान्तरपरता युक्ता। तुल्यरूपाधिकारद्वये हि न विरोध इति जीवनाधिकारासम्भवान्न लक्षणाद्वयं युक्तमिति पूर्वः पक्षः।

श्रुतितस्तावज्जीवनस्य होमव्याप्यताऽधिगता तया निमित्तता। सा

---

मैवमिति। स्यादेतदेवं यद्यधिकारद्वयं तुल्यवदवगम्यते। इह तूत्पन्नस्य होमस्य सन्निहितकामाधिकारविषयत्वं शीघ्रमवगम्यते। स्वर्गकाम इति पुरुषस्य साक्षाच्छ्रुतेः। यावज्जीवमिति तु व्याप्यतया कल्पितनिमित्तत्वेन कल्पितमधिकारान्तरं विलम्बितं व्यवहितं प्रतीयत इति शीघ्रावगतकामाधिकारो विलम्बितमधिकारान्तरं उत्पत्तिशिष्टगुणवत् गुणान्तरमवरुन्ध इत्यर्थः। विलम्बान्तरं चाह-प्रयुक्तेति। कामाधिकारे हि फलरागादेव प्रधाने प्रयुक्तेः न प्रयुक्तिकल्पनाऽपेक्षिता। नित्याधिकारे हि अन्यतः प्रयुक्त्यभावात् प्रयुक्तिकल्पनापेक्षितया विलम्बितत्वात् न तुल्यमधिकारद्वयमिति अग्रतः कामाधिकारनियोगपरतयाऽवगतस्य होमादेः विहितविधानानुपपत्तेः नाधिकारनियोगान्तरपरता युक्तेत्यर्थः। ननु "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" "एतया अन्नाद्यकामं याजयेत्" इत्यादौ कथमधिकारपरतेत्यत्राह—तुल्यरूपेति। तत्र हि अधिकारद्वयमपि तुल्यवज्जातमिति नावरोध इत्यर्थः। यत एवं जीवनाधिकारता न सम्भवति अत एवागत्या लक्षणाद्वयमपि युक्तमित्याह—इति जीवनेति। नन्वेवमेवंविधकाले विहिते प्रातरादिवाक्यानां का गतिः? कथं वा आहारादीनामर्थप्राप्तानां क्रिया तत्राह—इति पूर्वः पक्ष इति। प्रातरादिवाक्यानामवयुत्यानुवादकताऽस्तु। प्रकारान्तरतो वा न तत्रास्था पूर्वपक्षिणः। तथा यावदर्थप्राप्तेन विनाऽधिकारिणः शरीरवृत्तिः शुचिता न संवर्तते तावताप्यत्रधिरगत्या विधिना स्वीकृत इति।

राद्धान्तमाह—श्रुतित इति। यावदर्थान्वितजीवनश्रुतिबलात् तावत् जीवनस्य होमव्याप्यताधीः तया च निमित्तत्वधीः। तथा च अधिकारविशेषणताधीः। तत्प्रकारश्च षष्ठाद्ये व्यक्तयिष्यते। अतो यावज्जीवश्रुत्यनुरोधावगतव्याप्यताधीरधिकारान्तरपर्यन्तेति तत्परित्यागे श्रुतहानमेव स्यादिति न पदद्वयलक्षणा युक्तेति जीवनवतोऽधिकारान्तरचोदनेयमित्यर्थः। नन्वेवं पूर्वभाविकामाधिकारावरुद्धे नाधिकारान्तरं युक्तमित्यत्राह—अत इति। व्याप्तिरूपमुखान्तरेण भवन्ती नियो-

चाधिकारान्तरपर्यन्ता। तद्धाने श्रुतहानादतो नियोगान्तरविषयतापि मुखान्तरेण भवन्ती कामिनियोगमात्रपरतया न बाध्यते।

विवरणे तु विषयाभेदात् नियोगाभेद इति लक्षणाद्वयेन पूर्वपक्षं कृत्वा यथा कृतिभेदद्वारेणानुबन्धभेदो नियोगं भिनत्ति तथा नियोज्योऽपि स्वकृतिद्वारेण स्वकृत्यवच्छिन्नस्य भावार्थस्य नियोज्यान्तरकृत्यवच्छिन्नाद-वान्तरभेदमापाद्य शास्त्रार्थीभूतनियोगभेदमापादयत्येव। अतो नियो-ज्यस्य न साक्षादनुबन्धता। शास्त्रार्थीभूतनियोगभेदापादकता शास्त्र-भेदापादकता च सिद्धा अधिकारलक्षणसाध्यभेदायत्तत्वान्नियोग-

---

गान्तरपरता फलचमसवन्न बाध्या। किञ्च गुणस्य युक्तभवरोधकत्वं गुणान्तर-निवेशे पक्षे प्राप्तस्य नियमनात्। अधिकारस्तु अत्यन्ताप्राप्तो न तथेत्यधिकारान्व-योऽपि ज्ञाप्य एवेति न कामिनियोगमात्रपरतया तद्बाधो युक्त इत्याह—कामिनियोगेति।

विवरणे त्विति। तन्मते हि वस्तुबलात् साक्षादनुबन्धभूतविषयभेदादेव नियोग-भेदद्वारा शास्त्रभेद इति प्रकृतनियोगप्रत्यभिज्ञानात् तत्रैव गुणविधौ तत्रैवावधृते लक्षणाद्वयेन पूर्वपक्षं कृत्वा राद्धान्त उक्त इत्यर्थः। कथमित्यत्राह—यथा कृतीति। यथा विषयभेदः स्वकृतिभेदद्वारेण स्वकृत्यवच्छिन्ननियोगं भिनत्ति तथा नियोज्योऽ-पीत्यर्थः। नन्वेवं विषयवत् नियोज्यस्यापि नियोगे साक्षादनुबन्धता स्यात्। अन्यथा नियोगभेदद्वारा शास्त्रभेदकतापि न स्यादित्यत्राह—स्वकृतिद्वारेणेति। नियोज्यो हि कृत्याश्रयत्वात् स्वकृतिद्वारेण स्वकृत्यवच्छिन्नस्य भावार्थस्य यद्यपि स्वरूपतो भेदो नास्ति तथापि नियोज्यान्तरकृत्यवच्छिन्नरूपेणावान्तरभेदमापाद्य शास्त्रार्थीभूत-नियोगभेदमापादयति। अतो नियोज्योऽप्युन्नीयमानानुबन्धभेदद्वारा नियोगभेदा-पादक इत्यर्थः। अत इति निगमनम्। यत एवं विषयभेदद्वारेणैव नियोगभेदा-पादकता अतो न नियोज्यस्य साक्षादनुबन्धता, किन्तु भावार्थस्यैव। तथा च विषयभेदापादनद्वारा शास्त्रभेदापादकता च सिद्धेत्यर्थः। नन्वेवं नियोज्यभेदो विषय-भेदहेतुः शब्दान्तरादिवत्। अतोऽनुबन्धभेदादेवात्रापि शास्त्रभेदो व्यपदेष्टव्यः नाधिकारलक्षणसाध्यभेदादित्यत्राह—अधिकारेति। न ह्यत्र विषयभेदः स्फुटः शब्दा-न्तरादिवन्नियोज्यस्य विषयशरीरानुबन्धत्वाभावात्। किन्तु यदवष्टंभ एव विषय-शरीरभेदोन्नयनहेतुः अतः शब्दान्तरादिप्रमाणपञ्चकादेव स्फुटो विषयभेद इति तत्रैवानुबन्धभेदाच्छास्त्रभेदव्यवहारः। इह तु नियोगभेदस्याधिकारलक्षणसाध्य-भेदायत्तत्वात् विषयभेदोन्नयनद्वारेण नियोज्यभेदायत्तत्वादित्यधिकारसाध्यभेदा-च्छास्त्रभेदव्यवहार इत्यर्थः।

भेदस्याधिकारलक्षणसाध्यभेदात् शास्त्रभेदव्यवहार इत्यनुसन्धेयम्। लिङ्गानि सुगमानि।

## ॥ २ ॥ नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्म भेदः स्यात्

नानाशाखस्वधीतस्याग्निहोत्रादेरभ्यासात् भेदो युक्तः। नामगुणादि-

---

नन्वेवमपि नियोज्यभेदाच्छास्त्रभेदो व्यपदिश्यतां नाधिकारसाध्यभेदात्। न च बोध्यभेदाद्बोद्धभेदः इत्यत्राह—इत्यनुसन्धेयमिति। अत्र हि यावज्जीवं जुहुयादिति जीवनस्य होमव्याप्यताधीसमायाता निमित्तता। अतोऽनुष्ठानहेतुभूतजीवनतोऽधिकारे तात्पर्यमवगतम्। पश्चादुपपत्तये जीवतो नियोज्यत्वमाश्रितमिति प्रथमप्रतीताधिकारसाध्यभेदाच्छास्त्रभेदव्यपदेशः ग्रन्थे तु नियोज्यत्वं विहायाधिकारेण व्यपदेशः तदधिकारपर्यन्तत्वान्नियोज्यत्वस्य। न च बोद्धृभेदाद्बोध्यभेदः विषयभूतकर्मोन्नियनद्वारा भेदकत्वसम्भवात्। एवं च वस्तुबलमते सर्वेभ्यः कामेभ्य इत्यादावव्याक्षिप्य समाधानमिति भावः।

अत्र भाष्ये पूर्वपक्षलिङ्गं सत्रसंस्तवः। तथा राद्धान्ते लिङ्गानि दर्शपूर्णमासातिपत्तिनिमित्तकोपाधिकृतिदर्शनम्। तथा दर्शपूर्णमासाभ्यामिष्ट्वा समाप्तिदर्शनं तथा अग्निहोत्राकरणनिबन्धनं अनुध्यायतीति वचनदर्शनम्। तथा जरामर्यमित्यादिना जरामरणनिर्मोचनं एतादृशानि लिङ्गानि भाष्य एव व्यक्तानीत्याह—लिङ्गानि चेति। जरामर्यलिङ्गे भाष्ये यत्पुनरुक्तताभानं तत्पूर्वं स्वयमेवाकाङ्क्षावशेनोक्त्वा पुनः सूत्रारूढतया वक्तीति परिहार्यमिति भावः।

## ॥२॥ नामरूपकर्म ॥२॥

इह काठककालपादिनानाशाखाधीताग्निहोत्रादिषु चिन्ता—किं कर्मभेदाच्छास्त्रभेदः उत नेति। उक्तानेकविधानुबन्धादिभेदनिबन्धनशास्त्रभेदापवादोऽत्रेति सर्वाक्षेपतया अन्ते कृता। एकेनैव प्रत्यभिज्ञानेनानेकनिरसनादेकाधिकरणता। नन्वभिन्नविषयनियोज्यकं तदेवेदमिति प्रत्यभिज्ञायत इति कथं कर्मभेदो युक्त इति पूर्वपक्ष इत्यत्राह—ननाशाखेति। अविशेषपुनः श्रुतेः अभ्यासनयात् कर्मभेद इत्यर्थः। ननु यद्यभ्यासात् कर्मभेदः किमिति तर्हि नामरूपादिभेदोपन्यासः सूत्रभाष्ययोरित्यत्राह—नामगुणादीति। अभ्युच्चयतया तदुक्तिः न मूलतया। मूलभूतस्त्वभ्यास एव। नामभेदः काठकं कालापमिति व्यपदेशभेदः, गुणभेदः रूपभेदः एकादशकपालद्वादशकपालादिसङ्ख्यान्यत्वं, धर्मभेदः भूमिभोजनादि, एकस्यैव कर्मणः शाखा-

भेदास्तु कर्मभेदाभ्युच्चयभूताः ।

ननु यो यच्छाखाध्यायी तं प्रति तच्छाखावाक्येनैकस्यापि कर्मणः प्रमितिजननात् सर्ववाक्यानामप्रमितप्रमापरत्वान्नाभ्यासाद्भेदः—मैवम् । कृतस्वशाखाध्ययनस्य परशाखाध्ययनमप्यस्त्येव । स चाध्येता स्वशाखातः प्रमितं परशाखातः प्रत्येति । एवं अध्येत्रन्तरमपीति सर्वशाखावाक्यान्यनुवादकान्येवेति अभ्यासनयात् पूर्वः पक्षः । स्वशाखाध्ययनस्यावश्यकत्वात् तन्मात्राध्यायिनः प्रमितिरेव तं प्रति तावत्प्रमापकत्वम् । अभ्यासे तु न कश्चित् प्रति प्रमापकत्वम् । न च शाखैकदेशाध्ययनमुपदिष्टम् । यस्तु

---

न्तरे पुनर्विधानं पुनरुक्तिः । तथा उदितानुदितहोमनिन्दा । अनन्तशाखाविहिताङ्गकलापानुष्ठानाशक्तिश्च एकस्य पृथक्प्रदेशे अग्निहोत्रपरिसमाप्तिवचनं च उदितानुदितहोमव्यतिक्रमे प्रायश्चित्तविधानभेददीक्षितादीक्षितदर्शनादि कर्मभेदाभ्युच्चयेनोक्त इत्यर्थः। ननु अभ्यासन्यायः आनर्थक्यमूलकः 'अविशेषादनर्थकं हि स्यादिति न चेहानर्थक्यं, योऽध्येता यच्छाखाध्यायी तं प्रति तच्छाखावाक्यं कर्मैकत्वेऽप्यप्रमितप्रमापकम् । एवमितरं प्रति तच्छाखावाक्यम् ।

एवं सर्ववाक्यानां तत्तदध्येतॄन् प्रति अप्रमितप्रमापकत्वमस्त्येवेति नाभ्यासनयात् कर्मभेदो युक्त इति चोदयति—नन्विति । मैवमिति । यद्यपि स्वाध्यायोऽध्येतव्य इति स्वाध्यायपदवाच्यस्वशाखाध्ययनमेव तथापि मतिपाटवकौतुकादिना कृतस्वशाखाध्ययनस्य परशाखाध्ययनमप्यस्त्येव । ततः किमित्यत्राह—स चेति । सोऽध्येता स्वशाखातः पूर्वं प्रमितमेव पुनः परशाखातः प्रत्येति । एवमध्येत्रन्तरमपीति एकस्यैव वाक्यस्य परशाखिनं प्रत्यनुवादता स्वशाखिनं प्रति विधितेति वैरूप्यं विरुद्धं स्यादिति सर्वशाखावाक्यान्यनुवादकान्यनर्थकानि स्युरित्यभ्यासनयात् कर्मभेद इत्यर्थः । ननु कर्मान्यत्वे प्रयुक्त्यन्तरानेककल्पना स्यादित्याशङ्क्य न्यायबलात् सा न दोषायेति पूर्वपक्षाभिप्राय इत्याह—पूर्व पक्ष इति ।

राद्धान्तमाह—स्वशाखेति । स्वाध्यायोऽध्येतव्य इति विहितत्वात् स्वशाखाध्ययनं प्रथमं आवश्यकं चेति तन्मात्राध्यायिनः प्रमितिरेव । यद्यपि कृतस्वशाखाध्ययनस्य पुनः परशाखाध्यायिनः प्रमापकता नास्ति तथापि स्वशाखाध्ययनं प्रति तावत् प्रमापकताऽस्ति तावच्छब्दात् परशाखाध्यायिनोऽपि तद्गताधिकाङ्गविधानादेव प्रमापकताऽस्त्येवेति भावः । अभ्यासविषये तु नैवमित्याह—अभ्यासे त्विति । ननु अभ्यासविषयेऽपि शाखैकदेशाध्यायिनं प्रति प्रमापकताऽस्तीति नानुवादशङ्केत्यत्राह—न चेति । स्यादेतदेवं यदि शाखैकदेशाध्ययनमुपदिष्टं स्यात् । न चैतदस्ति ।

स्वेच्छयैकदेशाध्यायी तं प्रति प्रमापकता न शास्त्रार्थ इति नाभ्यासनया-द्भेदः। अभेदस्तु विषयनियोगप्रत्यभिज्ञानादेवेति राद्धान्तः। अभ्युच्चयास्तु भाष्य एव प्रत्युक्ताः। दीक्षितादीक्षितदर्शनन्तु द्वादशाहस्य ज्योतिष्टोमपूर्वकत्वेऽप्युपपन्नम्। यैरेकदा द्वादशाहः कृतः, ते कर्मण्यारम्भपूर्वकत्वात् इति आरम्भभाव्यत्वनयेन पुनर्द्वादशाहे प्रवृत्ताः ते च प्रथमद्वादशाहप्रयोगापेक्षया दीक्षिताः। ये तु प्रथममेव न ते दीक्षिता द्वादशाह इत्युभयदर्शनम्। सारस्वते तु पुरोडाशसान्नाय दर्शनं द्वादशाहविकृतितया सारस्वतसत्रस्य। द्वादशाहे चेष्टिपूर्वकत्वमपि। सोमधर्मश्चोदकप्राप्तेरुप-

---

स्वाध्यायोऽध्येतव्य इति कृत्स्नशाखाध्ययनविधेरित्यर्थः। ननु मान्द्यादिना पुरुषेच्छया एकदेशाध्ययनं नित्यं सम्भवतीत्यत्राह—यस्त्विति। न तच्छास्त्रार्थ इति तं प्रति प्रमापकतापि न शास्त्रमूलेत्यर्थः।

ननु 'वेदानधीत्य वेदौ वा' इत्यादिना अनेकशाखाध्ययने प्रमितप्रमापकतयाऽऽनर्थक्यं दुर्वारमेवेत्यत्राह—इति नाभ्यासेति। स्वाध्यायपदवाच्यस्वशाखाध्ययनं नित्यं प्रथमभावि च। अकरणे दोषश्रुतेः शाखान्तराध्ययनं तु चरमभावि पाक्षिकं च। अकरणे दोषाभावात्। तस्मान्न पाश्चात्यं शाखान्तराध्ययनं प्रथमभाव्यावश्यकं स्वशाखाध्ययनसिद्धमज्ञातज्ञापकत्वं बाधत इत्यानर्थक्याभावान्नाभ्यासनयात् कर्मभेद इत्यर्थः। कथं वा शाखाभेदे वाक्यभेदे चाभेदप्रतीतिरित्यत्राह—अभेदस्त्विति। विषयादिप्रत्यभिज्ञानादभेद इत्यर्थः। ननु कश्चिदधीतशाखः परशाखामप्यधीते कश्चित्तु स्वशाखामेव। तत्र चैकमेव वाक्यं विधिरनुवादश्चेति वैरूप्यं विरुद्धं स्यादित्यत्राह—इति राद्धान्त इति। इयमेव हि धीर्मौलिकी नियामिका। सा क्वचिदेवेति न हीनेति भावः।

ननु तर्हि नामरूपादिभेदात् भेदोऽस्त्वित्यत्राह—अभ्युच्चयास्त्विति। काठकादिग्रन्थसम्बन्धितया परिहृतः। भोजनादिकर्मनियमास्तु स्वाध्यायशेषतया, कपालसङ्ख्याभेदो विकल्पाश्रयणेन परिहृतो भाष्य इत्यर्थः। यत्तु दुरुपपादं दीक्षितादीक्षितदर्शनं तत्प्रत्याह—दीक्षितेति। यद्यपि द्वादशाहस्य विकृततया ज्योतिष्टोमपूर्वकत्वात् कृतज्योतिष्टोमस्यैवाधिकारात् दीक्षितादीक्षितदर्शनमनुपपन्नं तथापि द्वादशाहापेक्षया दीक्षिताः तदपेक्षया चादीक्षिता इति द्वादशाहे उभयदर्शनमुपपन्नमित्यर्थः। एतदेवोपपादयति—यैरेकदेति। तथा सारस्वतसत्रे ये पुरोडाशिनस्ते उपवसन्ति ये सान्नायिनस्ते वत्सान् धारयन्तीति यत्पुरोडाशिसान्नायिदर्शनं तदेककर्मत्वेऽप्युपपन्नमित्याह—सारस्वतेत्विति। द्वादशाहविकृतित्वात् सारस्वतसत्रस्योभयदर्शनं सम्भवतीत्यर्थः। कथमित्यत्राह—द्वादशाहे चेति। दर्शपूर्णमासाभ्यामिष्ट्वा

दिष्टं ज्योतिष्टोमपूर्वकत्वमपि । उभयं तत् सत्रे चोदकतः प्राप्तम् । तत्रेष्टिपूर्वकत्वपक्षे पुरोडाशदर्शनम् । सोमपूर्वकत्वे सान्नाय्यदर्शनञ्च युक्तमिति ।

इत्युपाध्यायभवनाथमिश्रकृतौ नयविवेके द्वितीयाध्यायस्य चतुर्थः पादः ।

अध्यायश्च समाप्तः ।

शुभं भूयात् ।

---

सोमेन यजेतेति तत्सोमधर्मकतया विहितमिष्टिपूर्वकत्वं द्वादशाहे चोदकतः प्राप्तं तत्रैव एष वाव प्रथमो यज्ञो यज्ञानां इत्यादिवाक्येनोपदिष्टं सोमपूर्वकत्वमपि । ततः किमित्यत्राह—उभयं त्विति । तदुभयमपि सारस्वते सत्रे द्वादशाहचोदकेन प्राप्तम् । तथापि किमित्यत्राह—तत्रेष्टीति ।

इत्थं व्यरीरचदुदग्रमतिप्ररोहः श्रीरङ्गनाथतनयो वरदार्यमिश्रः ।
दुस्सम्प्रदायतिमिरापनयप्रवीणां व्याख्यामुदारभवदेवकृतौ द्वितीये ॥
यद्यपि स्वमतिमान्द्यमहिम्ना व्याकृतौ बहुविधा अपि दोषाः ।
सन्ति सन्त इह तांस्तु सहन्तां गच्छतः स्खलतिरप्युचितेति ॥
एष बाल इति कौतुकबुद्धया मामकीनकृतिमाद्रियमाणाः ।
भूषयन्तु विबुधाः स्वसुतोक्तिर्दोषवत्यपि मतानुगुणैव ॥
यद्ध्यानमङ्गलनिरस्तसमस्तमोहस्वान्तस्तमस्तिरयति त्रिदशेन्द्रद्यवन्म् ।
मूकोऽपि वाजिवदस्य हरेस्सपर्यारूपेण तस्य रचिता नयदीपिकेयम् ॥

यदाचारो मानं श्रुतिपथजुषां वैदिकविधौ यदुक्तिर्व्याकारो निगमवचसां सोपनिषदाम् ।
यदालोको लोके गुरुमतसमासक्ति फलकः स जीयाच्चक्राख्यो गुरुरिह विपश्चित्परिबृढः ॥

इत्यात्रेयसुदर्शनाचार्यशिष्य श्रीरङ्गनाथ सूनोः वरदराजस्य कृतौ नयविवेकदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः समाप्तश्चाध्यायः